(भावदीपः)

सूचितां युक्तिमाह ॥ **तस्येति** ॥ जीवप्राणधारण इति धातोरिति भावेन जीवत्वादेवेत्युक्तिः । प्राणभृच्चेति चशब्दसूचितकोटिं सयुक्तिकं व्यनक्ति ॥ **विषयेति** ॥ **प्रसिद्धेश्चेति** ॥ एवमेवैष प्राण इतरान् प्राणान् पृथक्पृथगेव सन्निधत्त इत्यादावित्यर्थः ॥ **विष्णोरिति** ॥ प्रागुक्तश्रुताविति भावः ॥ **बहुधा जन्मेति** ॥ जीवे तु ज्ञोऽत एवेत्यत्रत्यन्यायेन देहाभिप्रायेण जन्मनो योगेऽपि देहतोऽप्यजायमाने हरौ जन्मायोगादिति भावः । प्रागुक्तदिशा निरवकाशत्वेन प्रबलरुद्र-समाख्याबाधाच्चेत्यपि ज्ञेयम् । भेदसूत्रव्यावर्त्यमाह ॥ **जीवेशेति** ॥ **ब्रह्मगतेति** ॥ तथा च प्रागुक्तहेयत्वावचनादिकं जीवे सम्भवतीति न तेनापि विष्णोरवकाश इति भावः ॥ **अत इति** ॥ उक्तरीत्या निरवकाशसमाख्याऽऽगमप्रामाण्यानुमानजायमानत्वप्राणाधारत्वलिङ्गरूपाणामितर-प्रापकाणां विष्णौ बाधकानां सत्त्वात् । अभेदेन परविद्याविषयत्वादिब्रह्मलिङ्गानां जीवे सम्भवाच्चेत्यर्थः । तयोरित्युपलक्षणं मत्वा चतुर्णामुपसंहारो विष्ण्वितर इति । एवेत्युक्तिस्तु चतुर्णां मध्येऽन्यतमानिर्णयेऽपि पूर्वपक्षस्य न सन्देहादविशेषः । विष्ण्वितर एवेत्यवधारण-सम्भवादिति दर्शयितुम् । उक्तमित्यन्तभाष्यतात्पर्यमाह ॥ **तस्यैवेति** ॥ तमेवेति भाष्यं हेतुसाध्ययोर्वैय्यधिकरण्यनिरासाय व्याचष्टे ॥ **द्युभ्वादीति** ॥ सूत्रविसंवादनिरासाय स्वशब्द-पर्यायात्मशब्दाच्च न प्रकृतिजीवावभिधीयेते इति तत्वनिर्णयोक्तमर्थमाह ॥ **स्वशब्देति** ॥ श्रुतौ स्वशब्दाभावाद्वाचकशब्दान्तरस्याप्यदर्शनादिति तट्टीकोक्तं तात्पर्यं ध्येयम् । अधिकं चन्द्रिकायाम् । तत्त्वित्यनुवृत्तस्यार्थो विष्णुरेवेति ॥

## श्रीमत्सत्यनाथतीर्थयतिविरचिता

## श्रीमत्तत्त्वप्रकाशिकाव्याख्याऽभिनवचन्द्रिका

**एतत्पादप्रतिपाद्यं दर्शयतीति** ॥ 'अध्यायस्यैकार्थत्वात्पादभेदः किंनिबन्धन इत्यतः समन्वयेऽप्यवान्तरभेदेनेति भावेन' इति वर्तते । तस्य 'एतत्पादप्रतिपाद्यं दर्शयति' इत्यनेन सम्बन्धः ॥ **सर्वे वा इति** ॥ **प्राणा** इन्द्रियाणि, **प्राणिनः** देहिनः, **देवाः** प्रसिद्धाः, **दिव्यानि** दिवि भवानि कल्पतरुप्रभृतीनि, **लोकाः** भूरादयः, **तदभिमानिनो** लोकिनः, **आलोकाः** प्रसिद्धालोकविलक्षणा वैकुण्ठादयः **आलोकिनो** मुक्ताः, एते विष्णौ ओताश्च प्रोताश्चेति श्रुत्यर्थः ॥ **उभयत्र प्रसिद्धेति** ॥ विष्णौ, तदन्येषु रुद्रजीववाय्वाकाशशब्दाभिधेयप्रकृतिषु प्रसिद्धद्युभ्वाद्यायतनत्वलिङ्गस्येत्यर्थः ॥ **अदृश्यत्वादिगुणकेति** ॥ परविद्याविषयत्वं

(अभिनवचन्द्रिका)

अदृश्यत्वाधिकरणविषयवाक्ये विष्णोरुक्तमिति ज्ञापनाय अदृश्यत्वादिगुणकाऽक्षरस्येति विष्णोर्विशेषणम् । अनेन अदृश्यत्वाधिकरणतद्विषयवाक्याभ्यामस्याधिकरणस्य परविद्याविषयत्वेन प्रतीयमानार्थप्रतिपादकत्वमेव सङ्गतिरित्युक्तं भवति । ननु अदृश्यत्वाधिकरणप्रतिपाद्यस्य परविद्याविषयत्वाप्रतीतेः कथं पूर्वाधिकरणेन सङ्गतिरित्यत आह ॥ **तत्परविद्याविषयत्वमिति** ॥ अनेन भाष्ये तत्रेत्येतत्तदिति व्याख्यातम् । 'तमैवेकं जानथ आत्मानम्' इत्यतः परं 'आथर्वणे द्युभ्वाद्याश्रयस्योच्यत' इति शेष इति द्रष्टव्यम् । ततश्चैवं भाष्यवाक्ययोजना विष्णोः परविद्याविषयत्वमुक्तं तच्च 'यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः तमैवेकं जानथ आत्मानम्' इति आथर्वणे द्युभ्वाद्याश्रयस्योच्यत इति ।

नन्वस्याधिकरणस्याथर्वणवाक्यमेव विषयवाक्यम्, उत इदमुदाहरणमात्रतयोदाहृतम् 'रुद्रो वाव लोकाधार' इत्यादिसर्वमपि विषयवाक्यम् । नाद्यः । 'रुद्रो वाव लोकाधार' इत्यादिवाक्यानां समन्वयाप्रसिद्धिप्रसङ्गात् । न द्वितीयः तेषामपि वाक्यानां सन्दिग्धत्वेन द्युभ्वाद्यायतनत्वस्याऽन्यत्र प्रसिध्द्यभावेनोभयत्रप्रसिद्धत्वाभावापातात् । किं च । तेषामपि वाक्यानां सन्दिग्धत्वेन एतस्य लिङ्गस्य श्रुत्यादिना तत्र चान्यत्र च प्रसिद्धत्वं स्यात् किं तर्हि तत्र प्रसिद्धिरेव श्रुत्या, अन्यत्र प्रसिद्धिस्तु आपातत इति स्यात् । एवं चापातत प्रतीत्यपेक्षया श्रौतप्रसिद्धेः प्रामाणिकत्वेन बलवत्त्वात् संशयादयो न स्युरिति चेत्, उच्यते । आथर्वणवाक्यमेव विषयवाक्यम् । न चैवं सति 'रुद्रो वाव लोकाधार' इत्यादीनां समन्वयासिद्धिप्रसङ्ग इति वाच्यम् । अनेनाधिकरणेन द्युभ्वाद्यायतनत्वस्य भगवल्लिङ्गत्वे प्रसिद्धे 'अन्तस्तद्धर्मोपदेशात्' इत्यादिना इन्द्रादिनामसमन्वयसिद्धिवत् 'रुद्रो वाव लोकाधार' इत्यादिवाक्यगतरुद्रादिशब्दस्यापि समन्वयसिद्धिसम्भवात् । नन्वथापि नेदं विषयवाक्यं घटते । अस्मिन्वाक्ये हेतुतयोक्तस्वशब्दाभावात् । न च सूत्रकारस्य स्वशब्दो हेतुत्वेन न विवक्षितः, किं तु स्वशब्दपर्यायात्मशब्दो हेतुत्वेन विवक्षित इति वाच्यम् । तथा सति 'द्युभ्वाद्यायतनमात्मशब्दात्' इत्येव सूत्रं विदध्यादिति चेत् । नात्र सूत्रकारस्य आत्मशब्दोपेतमिदमेकमेव वाक्यं विषयवाक्यमित्यभिमतम्, किं तु एवं जातीयकानि बहूनि । न च सर्वत्राप्यात्मशब्दो विद्यते । येन द्युभ्वाद्यायतनमात्मशब्दादिति ब्रूयात् किंतु तत्र प्रसिद्धाः ब्रह्मात्मादयः शब्दाः सर्वेषां सङ्ग्रहाय स्वशब्दादित्युक्तम् । स्वशब्दादित्यभिधाने हि एवं विज्ञायते । नात्र विषयवाक्ये

(अभिनवचन्द्रिका)

स्वशब्दः श्रूयते । अतः स्वशब्दः सूत्रकारस्य हेतुत्वेनानभिमतः किं तु स्वशब्दपर्यायाः शब्दाः विवक्षिता इति । आत्मशब्दादित्यभिधाने तु अयमेक एवात्मशब्दः हेतुत्वेन विवक्षित इति विज्ञायेत । ततश्च भागासिद्धिशङ्का स्यात् । सा मा भूदिति स्वशब्दादित्युक्तम् । अनेनैवाभि-प्रायेण 'आनन्दमयोऽभ्यासात्' इत्यादौ सामान्येन प्रयोगः ।

नन्वथापि 'शब्दादेव प्रमितः' इत्यादाविव 'द्युभ्वाद्यायतनं शब्दात्' इत्येव वक्तव्यं किं स्वशब्दग्रहणेनेति चेत्, न । व्याप्तिसूचनार्थत्वात् । स्वशब्दो हि विष्णुमात्रवाचकत्वात् विष्णुत्वव्याप्त इति सुप्रसिद्धः । नैवमात्मादयः शब्दाः । तेषामन्यत्रापि प्रयोगदर्शनात् । तेषां स्वशब्दपर्यायत्वोक्तौ तु व्याप्तिः प्रसिद्धा भवति । अनयैव दिशा 'शब्दादेव प्रमितः' इत्यादौ व्याप्तिरनुसन्धेया ॥ **पूर्वः पक्ष इति** ॥ अत्र बुध्या विवेकेन रुद्रस्य द्युभ्वाद्यायतनत्व-मित्यादिरूपेण प्रतिज्ञावाक्यचतुष्टयमूह्यम् । भाष्ये अत्र **'प्राणानां ग्रन्थिरसीति ॥** अत्र विषयवाक्ये, तयो रुद्रजीवयोः प्राप्तिरिति सम्बन्धः । प्राणानां ग्रन्थिरसीत्यादिप्रतीतेरित्यन्तं रुद्रप्रापकम् । तत्रापि 'प्राणानां ग्रन्थिरसि रुद्रो माविशांतक' इत्यन्तं रुद्रस्य प्राणाधारत्वसिद्धये समाख्यारूपेण तैत्तिरीयश्रुत्युदाहरणम् । 'प्राणेश्वर' इति प्राणेश्वरशब्दघटितशाखान्तरस्थश्रुतेः प्रतीकेनोदाहरणम्, 'कृत्तिवासा' इति तच्छब्दघटित 'रुद्रो वाव लोकाधार' इति श्रुतेः प्रतीकेनोदाहरणम् । 'पिनाकि' इति तच्छब्दघटित'रुद्रे वै मन ओतं च प्रोतं च' इति श्रुतेः प्रतीकेनोदाहरणम् । 'स एषोऽन्तश्चरत' इत्यादि जीवलिङ्गप्रदर्शनायेति विवेकः । भाष्ये 'प्राणानां ग्रन्थिरसि प्राणेश्वर' इत्यादिना रुद्रस्य प्राणाधारत्वप्रतीतेरिति सम्बन्धमभिप्रेत्याह टीकायाम् ॥ **अत्रोक्तप्राणाधारत्वस्येति** ॥ 'कृत्तिवासा' इति प्रतीकेनोपात्तश्रुतेः साध्यं पूरयन् तमुदाहरति ॥ **मन आयतनत्वं चेति** ॥ एतद्वाक्योपक्रमे यत इति ग्राह्यम् । प्रतीयत इत्यतः परं तस्मादिति ग्राह्यम् । तस्य च 'द्युभ्वाद्यायतनत्वं रुद्रस्येति पूर्वपक्ष' इति बुध्या विविक्तेन पूर्ववाक्येन सम्बन्धः ॥ **नैतच्छ्रुतीनामिति** ॥ 'प्राणानां ग्रन्थिरसि, रुद्रो वाव लोकाधारः, रुद्रे वै मन ओतं च प्रोतं च' इति श्रुतीनामित्यर्थः । 'अन्तक' इति आद्यश्रुतौ अन्तकत्वलिङ्गस्य, द्वितीयश्रुतौ कृत्तिवासस्त्वलिङ्गस्य, तृतीयश्रुतौ पिनाकित्वलिङ्गस्य सद्भावात् न श्रुतीनां विष्णुपरत्वमिति भावः । यद्यपि 'रुद्रो वाव लोकाधारः, रुद्रे वै मन ओतं च प्रोतं च' इति श्रुत्योः शाखान्तरगतत्वात् तत्र कृत्तिवासस्त्व, पिनाकित्व, लिङ्गसद्भावनिर्णयो दुर्घटः, तथापि

(अभिनवचन्द्रिका)

भाष्यकारवचनप्रामाण्यात् तन्निश्चय इति द्रष्टव्यम् ॥ **प्रामाण्यानुमानेन चेति** ॥ वाक्य-प्रामाण्यानुमानेन वाक्यप्रामाण्ये सिद्धे तेन सर्वाश्रयत्वासिद्धिरिति भावः ॥ **अरा इवेति** ॥ नाभ्याश्रयत्वबहुधाजायमानत्वलिङ्गश्रवणेऽपि न जीवस्य द्युभ्वाद्यायतनत्वमङ्गीकार्यम् । असम्भावितत्वात् । सम्भावितस्यैव साधनीयत्वादित्यत उक्तम् ॥ **तद्युक्तमिति** ॥ **तत्** द्युभ्वाद्याश्रयत्वं सम्भावितमिति भावः । कथं सम्भावितमित्यत आह ॥ **तस्येति** ॥ सम्भावितस्य पूर्वोक्तसाधनसमुच्चये चशब्दः । साधकसद्भावात्, सम्भावकसद्भावाच्च जीवस्यैव द्युभ्वाद्याश्रयत्वमिति द्युभ्वाद्येकदेशप्राणाश्रयत्वदर्शनात् द्युभ्वाद्याश्रयत्वं सम्भावितमिति भावः । एतेनैकदेशाश्रयत्त्वस्य समग्राश्रयत्वेन व्याप्त्यभावात् तेन तत्साधनमयुक्तमिति परास्तम् । श्रुतिबलेन वायोर्द्युभ्वाद्याश्रयत्वं प्रसाध्य प्रसिद्धेः प्राणाधारत्वं सिद्धमित्याह **तस्येति** ॥ **बहुधा जन्मबाधादिति** ॥ ननु पूर्वपक्षविषयत्वेनाङ्गीकृतेषु रुद्रप्रधानजीववायुषु बहुधा जन्मास्ति न वा । आद्ये न तेषां द्युभ्वादिसर्वाश्रयत्वम् । एतेषामुत्पत्तेः पूर्वमेतान्विना द्युभ्वादीनां स्थितिवत्, उत्तरत्रापि स्थितिसम्भवात् । नेति पक्षे विष्णोरिव बहुधा जन्मबाधेन द्युभ्वाद्यायतनत्वाभावप्रसङ्ग इति चेत्, उच्यते अस्ति तावत् रुद्रवायुजीवानां बहुधा जन्म । प्रमाणसिद्धत्वात् । न च तदभावदशायां द्युभ्वादिस्थितिवत् अन्यदापि स्थितिसम्भवेन न तेषां द्युभ्वाद्यायतनत्वं स्यादित्युक्तमिति वाच्यम् । तेषां देहलाभस्यैवोत्पत्तित्वात् । स्वरूपसदातनत्वेन तदभाव-दशाभावात् । प्रधानस्य कार्यात्मना परिणामाङ्गीकारेण बहुधा जन्मबाधाभावात् ।

ननु परविद्याविषयत्वबाधेऽपि यथा बहुधा जन्मरूपसाधकबलात् जीवस्य द्युभ्वाद्यायतनत्व-मङ्गीक्रियते, तथा परविद्याविषयत्वलिङ्गबलेन बहुधा जन्मबाधेऽपि विष्णोर्द्युभ्वाद्यायतनत्व-मङ्गीक्रियतामिति शङ्कते ॥ **परविद्येति** ॥ न मया परविद्याविषयत्वलिङ्गबाधेऽपि साधकमात्रेण जीवस्य द्युभ्वाद्याश्रयत्वमभ्युपगम्यते, अपि तु परविद्याविषयत्वं जीवे व्युत्पाद्य लिङ्गबाधं निरस्य साधकबलात् जीवस्य द्युभ्वाद्याश्रयत्वमभ्युपगम्यत इत्याह ॥ **जीवेशाभेदेनेति** ॥ ब्रह्मगतस्य परविद्याविषयत्वालिङ्गस्य जीवे लिङ्गव्यपदेशसम्भवादित्यर्थः । एतेन जीवस्य परविद्यासु प्रतिपाद्यत्वाऽदर्शनेन परविद्याप्रतिपाद्यत्वाऽभिधानमयुक्तमिति परास्तम् । अस्माकमपि परविद्या-विषयत्वव्यपदेशस्यैवाभिलषितत्वेन परविद्याविषयत्वस्यानभिलषितत्वात् । **न च तथा बहुधा जन्मेति** ॥ तथा बहुधा जन्मव्यपदेश ईशे न सम्भवतीत्यर्थः । कुतो नेत्यत आह

(अभिनवचन्द्रिका)

**।। कारणगतस्यैवेति ।।** कारणगतस्य धर्मस्यैव कार्ये व्यपदेशो दृष्टचरः न तु कार्यगतस्य धर्मस्य कारण इति भावः **।। अतः परविद्याविषय इति ।।** परविद्याविषयत्वेनोक्तः द्युभ्वाद्याश्रयः विष्णोरितरत्वेन भवदङ्गीकृतो जीवादिरित्यर्थः ।

एतेन जीवेशाभेदस्य पूर्वपक्षिणाऽनभिधानात् विष्णोरितर एवेति पुनः विष्णोरितरत्वाभिधानमयुक्तमिति परास्तम् ।

## ताम्रपर्णीश्रीनिवासविरचिता वाक्यार्थमुक्तावली

**श्रुत्यादिप्रसिद्धेति ।।** आदिपदेन भूमाक्षरादिनये वक्ष्यमाणदिशोपक्रमसमाख्यासाधारण्येन वा, प्रवृत्तिनिमित्तसाधारण्येन वा, पूर्वोक्तन्यायलोकप्रयोगाभ्यां वा, प्रसिद्धानाम्, एकोपस्थापनदशायाम् अन्यस्याप्युपस्थापकानां ग्रहणम् । न्यायविवरणोदाहृतश्रुत्या द्युभ्वाद्यायतनत्वस्य साधारण्यमाह **।। अत्रेत्यादिना ।।** स्यूतमत्र जगदिति सूत्रं तेन संदब्धानि सङ्गतानि तदाधारकाणीति यावत् **।। आकाश एवेति ।।** तदिति यद्भूतं च भवच्च भविष्यच्चेत्याचक्षत इति पूर्ववाक्योक्तपरामर्शः । प्राणा इन्द्रियाणि । दिवि भवानि कल्पतरुप्रभृतीनि । लोकाभिमानिनो लोकिनः । भूरादिलोकविलक्षणा वैकुण्ठादयोऽलोकाः । मुक्ता अलोकिनः । ओताश्च प्रोताश्चेति सूत्रे कंथापटवदत्यन्तमाश्रिता इत्यर्थः । ननु द्युभ्वाद्यायतनत्वस्योक्तश्रुतिसाधारण्येन रुद्रप्रधानवायुषु विष्णौ च साधारणत्वेऽपि जीवे तत्प्रापकश्रुत्यभावात् कथं जीवसाधारण्येनोभयत्र प्रसिद्धत्वम् । न च जायमानत्वलिङ्गेन विष्णुप्रापकेण चेति जीवविष्णुसाधारण्येनोभयत्रप्रसिद्धिरिति वाच्यम् । तथात्वे सर्वशब्दानामपि पादद्वयसमन्वितानामुभयत्र प्रसिद्धताप्रसङ्गात् । सर्वत्रापि पूर्वपक्षसिद्धान्तप्रापकयोः सत्वादिति चेन्न । लिङ्गपादीयन्यायेन जायमानत्वादितत्प्रसिद्धं जीवे स्वतःप्रसिद्धं चादाय जायमानत्वलिङ्गस्योभयत्र प्रसिद्धत्वेन तत्साहचर्यात् द्युभ्वाद्यायतनत्वस्योभयत्र प्रसिद्ध्युपपत्तेः । अत एव जायमानत्वादिति लिङ्गेन साधारण्येन जीवस्यापि द्युभ्वाद्यायतनत्वमिति पूर्वपक्षोपपत्तेश्च । नन्वस्मिन् पादे उभयत्र प्रसिद्धसाहचर्यं विना स्वत उभयत्र श्रुत्यादिप्रसिद्धशब्दसमन्वयस्य सूत्रभाष्ययोर्विवक्षितत्वादन्यसाहित्येनोभयत्र प्रसिद्धिरनुपयुक्तेति चेन्न । निषेधे कारणाभावात् ।

यद्वा, प्राणित्वादेव मनः प्राणाधारत्वस्यादृष्टद्वारा द्युभ्वाद्यायतनत्वस्य स्वत एव लोके

(वाक्यार्थमुक्तावली)

जीवे प्रसिद्धत्वात् विष्णावेवैताश्च प्रोताश्चेति श्रुत्या विष्णौ प्रसिद्धत्वात्स्वत एवोभयत्र प्रसिद्ध्युपपत्तिः । अत्र जीवपदेन ब्रह्मादीनामपि विवक्षितत्वात्तददृष्टेन सर्वजगद्धारणमुपपद्यते । तेनासदाद्यदृष्टेन कथं सर्वजगदवस्थानादि ऐतरेयभाष्ये 'देवानां कर्मणा चैव जायन्ते सर्वमानुषाः' इत्युक्तत्वादिति निरस्तम् । उत्तमजीवानामदृष्टद्वारा तदविरोधादिति ज्ञेयम् । टीकायां जीवे साधारण्यप्रदर्शनं तु रुद्रादौ तत्र दर्शनमात्रेणोभयत्र प्रसिद्धतोपपत्तेरित्याशयेन न तु जीवे अप्रसिद्धत्वेन, तथात्वे पूर्वपक्षदशायां जीवोक्त्ययोगः । अत एव न्यायविवरणटीकायां प्रकृत्यादिनिष्ठत्वे च प्रमाणमुदाहार्यमित्युक्तमिति ज्ञेयम् ॥ **श्रुत्यादिसङ्गतिमिति** ॥ वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मा, पृथिव्येव पादावित्यादिना द्युभ्वाद्यायतनत्व-मुक्तम् । सुतेज आदिशब्देन द्व्यादीनामुक्तेः तज्जनकत्वेन तदाश्रयत्वेन चाङ्गानां तन्नाम-वाच्यत्वस्योक्तत्वात् । अत एव यस्माद्यज्जायते चाङ्गादिति पूर्वभाष्ये यदाश्रित्य तिष्ठतीति चशब्दार्थ इति तत्वप्रदीपे निरूपितम् । तथा च यदीदं द्युभ्वाद्यायतनमन्यत्स्यात्तदा द्युभ्वाद्यायतनतयोक्तो वैश्वानरोऽप्यन्यः स्यादिति तदाक्षेपेण पूर्वपक्षोत्थानादनन्तरसङ्गतिः । विष्णोरित्यारभ्य विमुञ्चथेत्यन्तभाष्यं सङ्गतिप्रदर्शनपरतया व्याचष्टे ॥ **अदृश्येति** ॥ तत्रेत्यस्यार्थस्तत्परविद्याविषयत्वमिति ॥ तत्रेत्यस्यार्थान्तरम् **आथर्वण इति** । उक्तमित्यस्यावृत्तिं मत्वा कस्येत्यपेक्षायामाह ॥ **यस्मिन्द्यौरित्युक्तस्य द्युभ्वाद्यायतनस्योच्यत इति** ॥ तथा चादृश्यत्वाधिकरणे तदुपात्तश्रुतौ च यत्परविद्याविषयत्वमुक्तं तदेव तस्मिन्नेवाथर्वणे यस्मिन् द्यौरित्युच्यत इत्यर्थः ॥ **किं विष्णोरिति** ॥ द्युभ्वाद्यायतनत्वं किं विष्णोरुत रुद्रादीनामिति चिन्ता । तदर्थम् आत्मशब्दस्य मुक्तोपसृप्यत्वादेर्विष्णुलिङ्गस्य चाभेदेनान्यत्र सावकाशत्वमुत भेदेन निरवकाशत्वमिति । रुद्रप्रधानयोः नानुमानमित्यनेन जीववाय्वोः प्राणभृच्चेत्यनेन क्रमेण व्यावृत्तत्वात्तेन क्रमेण रुद्रप्रधानेत्यादिनिर्देशः । अत एव भाष्ये एकैकसूत्रव्यावृत्तयोर्द्वयो-र्द्वयोर्मध्ये तयोः प्राप्तिरित्येकैकग्रहणम् । लोकप्राणानामनाधारकत्वलक्षणलिङ्गत्रयमध्ये प्राणा-धारत्वमात्रे भाष्ये समाख्योक्ता । न्यायविवरणानुसारेण शिष्टद्वयं स्वयमाह ॥ **तथेति** ॥ **विष्णु-विषयत्वमिति** ॥ अन्तस्तद्धर्मोपदेशादित्यत्र देवतावाचिशब्दसमन्वयस्योक्तत्वान्न्यायेनेति शेषः ।

इदमुक्तं भवति । रुद्रो माऽऽविशान्तक इत्यादौ प्राणाद्याधारतयोच्यमानो रुद्रः प्रसिद्ध एवं तत्र तदसाधारणान्तकत्वादिलिङ्गश्रवणात् । तथा च तत्समाख्यया यस्मिन् द्यौरित्यादावपि

(वाक्यार्थमुक्तावली)
द्युभ्वाद्याश्रयो रुद्र एवेति । नानुमानमिति सूत्रव्याख्यानरूपेण नानुमानात्मकागमकल्पित-रुद्रोऽत्रेति भाष्येण सूचितां युक्तिमाह दृष्टफलेति ॥ **अनुमानेन चेति** ॥ न केवलं प्राणानां ग्रन्थिरसीत्यादिश्रुतिसमाख्यानात् किंत्वनुमानसिद्धप्रामाण्यकपाशुपतागमसमाख्यानाच्चेत्यर्थः ॥ **द्युभ्वादीनामिति** ॥ द्युभ्वादिकं प्रकृत्याश्रितं तदुपादानकत्वात् । यद्यदुपादानकं तत्तदाश्रितं यथा पटस्तन्तुष्वित्यनुमानमनेनोपन्यस्तं भवति ॥ **श्रुतेश्चेति** ॥ श्रुतिसमाख्यानाच्चेत्यर्थः । अत्राकाशशब्दस्य प्रकृतिपरत्वेन निर्णीतत्वादिति भावः ॥ **पूर्ववदिति** ॥ दृष्टफलविधायकं यत्कापि श्रुतिवाक्यं तस्य फलसंवादेन प्रामाण्ये सिद्धे तद्दृष्टान्तेन विमतं प्रधानस्य सर्वाश्रयत्व-प्रतिपादकं वाक्यं प्रमाणं कपिलवाक्यत्वादिति तत्प्रामाण्ये सिद्धे तत्समाख्यानात् द्युभ्वा-द्याश्रयत्वं प्रदानस्य सिद्ध्यतीत्यर्थः । ननु नैव शास्त्रं कुवर्त्म तदिति पाशुपतकापिलाद्यप्रामाण्य-स्योक्तत्वात् कथं तत्समाख्ययेष्टसिद्धिरित्यतोऽनुमानेन तत्प्रामाण्यं साधितं स्मृतिस्तु युक्ति-विरोधादप्रमाणमिति भावः । यद्यपि शास्त्रयोनित्वाधिकरण एवैषा युक्तिराशङ्क्य दूषिता । यथोक्तमनुव्याख्याने ।

'शैवाद्यागमसम्प्राप्तदृष्टगेन फलेन तु ।
तद्वाक्योपमयाऽन्यच्च प्रमाणत्वेऽनुमीयत'

इत्यादिना । तथापि इह सति हेत्वन्तरे पाशुपतादिसमाख्याभ्युच्चयेनोक्तेत्यदोषः । सौत्रप्राणभृत्पदसूचितां युक्तिमाह ॥ **जीवत्वादेवेति** ॥ 'जीव प्राणधारणे' इति धातोरिति भावः ॥ **विषयभूतेति** ॥ विषयवाक्ये लोकाधारकत्वं प्राणधारकत्वं चोक्तम् । तत्र लोका-धारकत्वं वायोः श्रुत्यैव सिद्धमित्यर्थः । प्राणभृत्पदसूचितयुक्तिमप्याह ॥ **तस्य प्राणाधार-त्वेति** ॥ भेदसूत्रव्यावर्त्यमाह ॥ **जीवेशेति** ॥ **कारणगतस्येति** ॥ घटे मृत्वदर्शनेऽपि मृदि घटव्यवहारादर्शनादिति भावः । भाष्यस्य सूत्रविसंवादनिरासाय सूत्रस्य श्रुतिविसंवादनिरासाय च स्वशब्दपर्यायात्मशब्दादिति विष्णुतत्वनिर्णयं मनसि निधाय व्याचष्टे ॥ **स्वशब्देति** ॥ 'सभाराजामनुष्यपूर्वा' इत्यत्र पाणिनीये राजपर्यायपूर्वो अमनुष्यपूर्वश्च सभान्तस्तत्पुरुषो नपुंसकं स्यात् । इनसभमीश्वरसभम् अमनुष्यशब्दो रूढ्या रक्षः पिशाचादीनाह रक्षःसभं पिशाच-सभमिति राजशब्देन तत्पर्यायशब्दग्रहणस्याभियुक्तैर्व्याख्याततत्वात् तद्वत्प्रकृतेऽपि स्वशब्देन तत्पर्यायग्रहणोपपत्तेरिति भावः । ननु शब्दलाघवात्प्रतिपत्तिलाघवस्य परत्वेनात्मशब्दादित्येव

(वाक्यार्थमुक्तावली)

कुतो नोक्तमिति चेन्नैष दोषः । द्युभ्वाद्यायतनत्वपरे सजातीयशाखान्तरे सर्वत्रात्मशब्दाभावाद्भागासिद्धिः स्यात् । स्वशब्दादित्युक्ते तु स्वस्य शब्दः स्वशब्द इति विग्रहोपपत्त्या आत्मब्रह्मादितत्तच्छाखास्थशब्दग्रहणं च कृतं स्यात् । न हि, आत्मनः शब्द इत्यपि विग्रहसम्पत्याऽत्मशब्दादित्युक्तेऽपि विवक्षितसिद्धिरिति वाच्यम् । प्रसिद्धविषयवाक्ये आत्मशब्दश्रवणेनात्मेति शब्द इत्येव भानप्राप्तेः । अत एव आत्मब्रह्मादयः शब्दा इति स्मृत्युदाहरणम् । तत्र शाखान्तरस्थब्रह्मादिशब्दानां तदसाधारणस्य चोक्तेः । अत एव अन्तस्तद्धर्मोपदेशात्, शब्दादेव प्रमितः शब्दविशेषादित्यादौ भागासिद्धिनिवृत्यर्थमेव सामान्यहेतूपादानं निरवकाशत्वप्रदर्शनं च कृतम् । अत्रापि तथोक्तिसम्भवेऽप्युदाहरणनिष्ठतया श्रुतिविशेषसूचनाय ग्रहणमित्यलम् । सूत्रार्थस्तु तत्त्वित्यनुवृत्या टीकायामेव स्पष्टः ।

## पाण्डुरङ्गिश्रीनिवासाचार्यविरचिता तत्त्वसुबोधिनी

न चान्यत्र प्रसिद्धशरीरित्वसाहित्यादन्तर्यामित्वमिवान्यत्र प्रसिद्धजायमानत्वसाहित्यात् द्युभ्वाद्यायतनत्वमपि अन्यत्र प्रसिद्धमिति पादासङ्गतमेतदिति वाच्यम् । अन्यत्र प्रसिद्धिसाहचर्येण परतोऽन्यत्र प्रसिद्धत्ववत् उभयत्र प्रसिद्धिसाहचर्यं विनोभयत्र प्रसिद्धत्वस्यापि सत्त्वात् तेन रूपेण एतत्पादान्तर्भावस्य सूत्रभाष्ययोरभिमतत्वादिति भावः ॥ **श्रुत्यादिप्रसिद्धेति** ॥ अनेन श्रुतिलिङ्गादिभिस्तुल्यत्वमुभयत्र प्रसिद्धत्वमित्युभयत्र प्रसिद्धानां लक्षणम् उक्तं भवति । पूर्वपादद्वय इवात्रापि भिन्नपादयोरेव नामलिङ्गसमन्वयः इति स्यात्तदर्थमाह ॥ **नामलिङ्गात्मकानामिति** ॥ तत्र श्रुतितः साधारण्येन उभयत्र प्रसिद्धत्वं दर्शयति ॥ **अत्रेति** ॥ गौतमेति सम्बुद्धिः । वायुलक्षणेन सूत्रेण 'सर्वाणि भूतानि संदृब्धानि बद्धानि । आकाशे प्रकृता प्राणाः इन्द्रियाः प्राणिनो जीवाः । दिव्यानि दिवि भवानि वस्तूनि । पूर्वत्रेवात्रापि आत्मशब्देन सिद्धान्तादातिदेशिकी अवान्तरसङ्गतिः ॥ **उक्तसाधारण्यमेवेति** ॥ श्रुतिसाधारण्यमित्यर्थः । उपलक्षणं चैतत् । जायमानत्वस्यापि जीवरूपकाद्युपस्थापकत्वेन ग्राह्यत्वात् ।

ननु निर्णीतस्थले समानोक्तिः समाख्या । यस्मिन्द्यौरित्युक्त लोकमनः-प्राणाधारत्वप्रतिपादक 'प्राणानां ग्रन्थिरसि रुद्रो वाव लोकाधारः' [१]इत्यादिषु कथं

१. मनो वै रुद्र ओतं च प्रोतं

(तत्त्वसुबोधिनी)

रुद्रादिप्रतिपादकत्वनिर्णयः । येन तासां समाख्यानत्वरूपत्वेन निर्णायकत्वं स्यात् इत्यतस्तत् साधनार्थं भाष्ये 'रुद्रो मा विशान्तक' इत्यादेः उदाहरणमित्यभिप्रेत्य व्याचष्टे ॥ **अत्रोक्त-प्राणेति** ॥ नन्वत्र सर्वाधारत्वमुच्यते । श्रुत्यन्तरे तु रुद्रस्य प्राणाधारत्वमात्रम् । तथाच कथं सौत्र पूर्वपक्षी क्रियत इत्यत आह ॥ **तथेति** ॥ तथापि मनस आधारत्वं रुद्रे केन प्रमाणेन सिद्धमत आह ॥ **मन इति** ॥ नन्वेतच्छ्रुतयो विष्णुविषया इति कथं ताभिर्निर्णय इत्यत आह ॥ **न चैतदिति** ॥ किं च सर्वाश्रयत्वप्रतिपादकरुद्रवाक्येनापि रुद्रस्य सर्वाश्रयत्वसिद्धिः । न च तत् रुद्रवाक्यं अप्रमाणं दृष्टफलविधायकरुद्रवाक्यदृष्टान्तेन तस्य प्रामाण्यानुमानादित्याह ॥ **दृष्टफलेति** ॥ **द्युभ्वादीनामिति** ॥ उपादानस्योपादेयाश्रयत्वादिति भावः । तत्र श्रुतिमप्याह ॥ **यद्भूतमिति** ॥ कपिलागमेनापि सर्वाश्रयत्वं सिध्यतीत्याह ॥ **पूर्ववदिति** ॥ जीवस्यैव द्युभ्वाद्यायतनत्वमित्याह ॥ **अरा इवेति** ॥ रथनाभौ अराः कीला इव यत्र शरीरे नाड्यः संहताः । तत्र एषः जीवः अन्तः बहुधा जायमानः सन् चरति । ननु तस्य प्राणाधारत्वं कथम् इत्यत आह ॥ **तस्य जीवत्वादेवेति** ॥ जीव प्राणधारण इति धातोरिति भावः । वायोः वैतदित्याह ॥ **विषयभूतेति** ॥ यस्मिन्द्यौरित्यत्र प्रतिपाद्यभूतस्येत्यर्थः । ननु विष्णोरपि द्युभ्वाद्यायतनत्वस्य श्रुत्यादिसिद्धत्वात् स एव द्युभ्वाद्यायतनं किं न स्यादित्यत आह ॥ **विष्णोरिति** ॥ ननु जीवेशाभेदेन परविद्याविषयत्वादिब्रह्मलिङ्गानां जीवे सम्भवा जीवलिङ्ग-स्यापि जायमानत्वस्य विष्णौ सम्भवः किं न स्यादित्यत आह ॥ **न च तथेति** ॥ अत्र सूत्रे स्वेति शब्दः स्वशब्दः इति विग्रहाश्रयणेन विषयवाक्ये स्वशब्दाभावात् तत्पर्यायात्मशब्दा-दित्यर्थकथनत्वेन भाष्यविष्णुतत्वनिर्णयानुसारेण व्याचष्टे ॥ **स्वशब्देति** ॥ यद्यपि आत्मशब्दादित्युक्तौ लाघवं तथापि विष्णावसाधारण्यं तस्य न ज्ञापितं स्यात् । तच्छब्दा-दित्युक्तौ शब्दविशेषेणोपात्तः स्यादतः उभयार्थम् स्वशब्दादित्युक्तम् । एवमुक्तौ स्वस्य शब्द इत्यपि विग्रहस्य विवक्षणीयत्वादसाधारण्यं ज्ञापितं भवति । षष्ठीसमासमात्रविवक्षायान्तु तल्लिङ्गादित्यादाविवात्रापि शब्दविशेषः प्रयुज्येत । अथवा यथा लोके अन्यत्र प्रसिद्धोऽपि स्वशब्दो विष्णोः सकाशात् सम्भूते चतुर्मुखे स्वभूरिति प्रयोगादिवशात् विष्णौ मुख्यः तथा लोके अन्यत्र प्रसिद्धोऽपि आत्मशब्दः चतुर्मुखे आत्मभूरिति प्रयोगात् ब्रह्मात्मभूः स्वभूरिति वचनाच्च विष्णौ मुख्य इत्यभिप्रेत्य सूत्रे स्वशब्दादित्युक्तमिति भावः ।

## श्रीनिवासतीर्थविरचितम् तत्त्वप्रकाशिकावाक्यार्थविवरणम्

॥ **तस्य सर्वाश्रयत्वसिद्धिरिति** ॥ पाशुपतशास्त्रेणेत्यर्थः इति शेषः । तस्याप्रामाण्यात् कथं तेन तत्सिद्धिरित्यत उक्तं **दृष्टफलेत्यादि** ॥ रुद्रवाक्यत्वहेतुनेति शेषः ॥ **पूर्ववदिति** ॥ दृष्टफलविधायककपिलवाक्यदृष्टान्तेन कपिलवाक्यत्वहेतुनेत्यर्थः । तथा च कापिलागमा-दाकाशशब्दवाच्यप्रकृतेः सर्वाश्रयत्वसिद्धिरिति शेषः ।

## शर्कराश्रीनिवासविरचिता वाक्यार्थमञ्जरी

**श्रुत्यादिप्रसिद्धेति** ॥ अनेनोभयश्रुतिलिङ्गादिभिस्तुल्यप्रसिद्धिमत्त्वमुभयत्र प्रसिद्धिमत्त्वमिति सूचितम् । एतेनान्यत्र प्रसिद्धपृथिवीशरीरत्वसाहित्यादन्तर्यामित्वस्यान्यत्र प्रसिद्धत्ववदन्यत्र प्रसिद्धजायमानत्वादिसाहित्यात् द्युभ्वाद्यायतनत्वमप्यन्यत्र प्रसिद्धं स्यादिति निरस्तम् । समाख्याश्रुत्यादितौल्याभावस्यान्यत्र प्रसिद्धलक्षणान्तर्गतत्वेन तत्तौल्यवतोऽस्यान्यत्र प्रसिद्धत्वा-भावात् । उभयत्र प्रसिद्धत्वेनैव विष्णुवाचित्वमपि सिद्धमेवेत्यत उक्तम् ॥ **विष्ण्वेक-वाचित्वमिति** ॥ श्रुत्यादिभिरन्यत्र प्रसिद्धत्वे विष्ण्वेकवाचित्वप्रतिपादनमशक्यमित्यत उक्तम् ॥ **प्रबलहेतुभिरिति** ॥ अत्रास्ति शास्त्रादिसङ्गतिरित्यन्वयः ॥ **रुद्र इति** ॥ रोगद्रावकत्वेन रुद्रनामा भगवान्सर्वलोकाधारो वाव प्रसिद्ध इत्यर्थः ॥ **वायुनेति** ॥ हे गौतम स्यूतमत्र सर्वं जगदिति सूत्रं तेन ज्ञानादिमत्त्वाद्वायुशब्दितेन भगवताऽयं भूलोकः परोऽन्तरिक्षादिलोकः सर्वाणि भूतानि च संदृब्धानि सङ्गतानि धृतानीत्यर्थः ॥ **आकाश इति** ॥ अतीतानागतवर्तमानं यदा चक्षते विद्वांसस्तत्सर्वमाकाशे भगवदाश्रिताकाशाख्यप्रकृतौ ओतं प्रोतं सूत्रे पटवत् अत्यन्तमाश्रितं इत्यर्थः । लोकाः सप्तलोकाः लोकिनस्तदभिमानिनः अलोकाः वैकुण्ठादयः अलोकिनस्तद्गता मुक्ताः । उक्तम् अथ परा ययेत्यनेन । मोक्षाय भगवज्ज्ञानं कुत इत्यत उक्तम् ॥ **अमृतस्येति** ॥ एष भगवानमृतस्य मुक्तवर्गस्य सेतुरिव सेतुराश्रय इत्यर्थः । अत्र द्युभ्वाद्यायतनस्य मोक्षसाधनविद्याविषयत्वोक्त्या परविद्याविषयत्वमुच्यते । मोक्षसाधनविद्याया एव परविद्यात्वादिति भाव इत्यादिना समाख्यावाक्येन ॥ **प्राणानाङ्ग्रन्थिरसीति** ॥ मेत्यस्या-वृत्तिः । हे विष्णो रुद्रशब्दवाच्य त्वं प्राणानामिन्द्रियाणां ग्रन्थिः ग्रथ्यन्ते अस्मिन्निति ग्रन्थिराश्रयोऽसि त्वमन्तकः संहर्ता सन्मा मां मा विश न प्रविशेत्यर्थः ॥ **प्राणेश्वर इति** ॥ प्राणानामिन्द्रियाणामीश्वरः कृत्त्यात्मके चर्मात्मके देहे नियामकतया वसते तिष्ठतीति

(वाक्यार्थमञ्जरी)

कृत्तिवासाः । नाकं सुखं पिबतीति पिनाकाः मुक्ताः ते अस्य सन्तीति पिनाकी मुक्ताश्रय इत्यर्थः ॥ **रुद्रलिङ्गादिति** ॥ संहर्तृत्वगजचर्माम्बरवत्त्वपिनाकचापवत्त्वादीनां तत्रैव प्रसिद्धत्वादिति भावः । किञ्च रुद्रस्य सर्वाधारत्वप्रतिपादकपाशुपताद्यागमेनापि तस्य सर्वाधारत्वं सिद्ध्यति ॥ **न च तस्याप्रामाण्यम्** ॥ विमतं वाक्यं प्रमाणं रुद्रवाक्यत्वात् दृष्टफलविधायकरुद्रवाक्यवदिति तस्य प्रामाण्यानुमानादित्याह ॥ **दृष्टफलेति** ॥ प्रत्यक्षसंवादिफलाभिधायकेत्यर्थः । विमतं प्रमाणं कपिलवाक्यत्वात् दृष्टफलाभिधायककपिलवाक्यवदित्यनुमितप्रामाण्योपेतकापिलागमेनापि प्रधानस्य सर्वाश्रयत्वसिद्धिरित्याह ॥ **पूर्ववदिति** ॥ **अरा इवेति** ॥ रथनाभौ चक्रे अराः दलानीव यत्र शरीरे नाड्यः संहताः संबद्धाः तत्र शरीरे स एषः सर्वजीवनियामकत्वेन सर्वजीवहृदयस्थितो विष्णुः स्वयमेक एव स्वेच्छयैव बहुधा जायमानो विश्वतैजसादिरूपेण बहुधा भगवान् शरीरान्तश्चक्षुरादिस्थानेषु सञ्चरतीत्यर्थः ॥ **जीवत्वादेवेति** ॥ जीव प्राणधारण इति धातोरिति भावः ॥ **प्रसिद्धेरिति** ॥ प्राणान्पृथक् पृथगेव सन्निधत्त इत्यादाविति शेषः ॥ **तथेति** ॥ जीवेशाभेदेन यथेशलिङ्गं जीवे सम्भवति तथेत्यर्थः । कारणम् उपादानम् । व्यावहारिकमात्रस्य ब्रह्मोपादानकत्वं वदतोऽद्वैतिनो मते जीवस्यापि व्यावहारिकत्वान्नानुपपत्तिः । ॐ द्युभ्वाद्यायतनं स्वशब्दात् ॐ । यस्मिन्द्यौरित्यादिद्युभ्वन्तरिक्षाद्याश्रयत्वेनोक्तं ब्रह्मैव न रुद्रादिः कुतः जानथ आत्मानमिति स्वशब्दपर्यायात्मशब्दसद्भावादित्यर्थः । विषयवाक्ये स्वेतिशब्दाभावात् भाष्ये आत्मशब्दादित्युक्तमित्याशयेनाह ॥ **स्वशब्दपर्यायेति** ॥ उभयोरपि साक्षाद्विष्णुस्वरूपवाचकत्वादत एव चतुर्मुखस्यात्मभूः स्वयम्भूरिति नामेति भावः । सूत्रे आत्मशब्दादित्युक्तौ तस्यापि विष्णुपरत्वं पृथग्वक्तव्यं तच्छब्दादित्युक्तौ च शब्दविशेषप्रतीतिर्न स्यादतस्तदुभयलाभाय स्वशब्दादित्युक्तम् । एवमुक्तौ स्वस्य विष्णोरेव शब्दः स्वशब्द इत्यपि विग्रहस्य विवक्षणीयत्वादसाधारण्यं ज्ञापितं न स्यादेतदेवाभिप्रेत्योक्तं तत्त्वप्रदीपे । विष्णोः स्वरूपस्यैव साक्षाद्वाचको ह्यात्मशब्द इति ।

## सूत्रभाष्यम्

### ॥ ॐ मुक्तोपसृप्यव्यपदेशात् ॐ ॥ २ ॥

**'अमृतस्यैष सेतुः'** (मुं.उ.२-२-५) **इति । 'ब्रह्मविदाप्नोति परम्,'** (तै.उ.२-१) **'नारायणं महाज्ञेयं विश्वात्मानं परायणम्'** (म.ना.उ.११) **'मुक्तानां परमा गतिः'**

(सूत्रभाष्यम्)

(वि.स.ना.) 'एतमानन्दमयमात्मानमुपसङ्क्रामति' (तै.उ.२-८) इत्यादिना तस्यैव मुक्तप्राप्यत्वव्यपदेशात् ।

'बहुनाऽत्र किमुक्तेन यावच्छ्वेतं न गच्छति ।
योगी तावन्न मुक्तस्स्यादेष शास्त्रविनिर्णयः' ॥ इत्यादित्यपुराणे ॥ २ ॥

## सत्तर्कदीपावली

'ब्रह्मविदाप्नोति परम्' इत्यादिवचनान्तरैः विष्णुरेव हि मुक्ताश्रयत्वेनोच्यते । तदाह । **मुक्तेत्यादिना ।** पराणां मुक्तानाम् अयनं श्रुतं श्वेतद्वीपाख्यं विष्णुस्थानमित्यर्थः ।

## तत्त्वप्रदीपिका

'अमृतस्यैष सेतुः' इति मुक्तस्याऽश्रयत्वेनोपसृप्यत्वव्यपदेशाच्च विष्णुरेवात्रोच्यते । परायणं पराणां मुक्तानामयनम् ॥

## तत्त्वप्रकाशिका

ननु विष्णौ मुख्योऽप्यात्मशब्दो जीवलिङ्गबलादमुख्यार्थः किं न स्यात् । तथा च न विष्णोर्द्युभ्वाद्यायतनत्वमित्याशङ्कां परिहरत्सूत्रमुपन्यस्य तदुपात्तश्रुतिमेवोदाहरति ॥ **मुक्तेति ॥** नाऽऽत्मशब्दस्यामुख्यार्थत्वं परिकल्प्य द्युभ्वाद्यायतनत्वमन्यत्र नेतुं शक्यम् । द्युभ्वाद्यायतनस्य मुक्तप्राप्यत्वोक्तेर्विष्णुत्वनिश्चयादित्यर्थः । अमृतस्येति जातावेकवचनम् । मुक्तप्राप्यत्वं कुतो विष्णुत्वनिश्चायकमित्यत आह ॥ **ब्रह्मविदिति ॥** पराणां मुक्तानामयनमाश्रयः । एतद्वाक्यै-रस्तु विष्णोर्मुक्तप्राप्यत्वं तदन्यस्यापि किन्न स्यादित्यत आह ॥ **बहुनेति** ॥

## गुर्वर्थदीपिका

'अमृतस्यैव सेतुः' इति भाष्यस्य, 'मुक्तोपसृप्यव्यपदेशात्' भाष्यस्य इति सूत्रेणैवान्वयः । तस्यैवाऽऽवृत्त्या योजनिकान्तरमाह– **ब्रह्मविदित्यादिना ।**

## भावबोधः

ॐ मुक्तोपसृप्यत्वव्यपदेशात् ॐ इति सूत्रे तद्भाष्ये च 'च'शब्दाभावेन तन्न स्वातन्त्र्येण

(भावबोधः)

प्रतिज्ञाहेत्वन्तरप्रतिपादकम्, किन्तु पूर्वसूत्रोक्ताक्षेपसमाधानार्थमित्याशयेनोत्तरसूत्रनिरसनीय-पूर्वपक्षमाह– **ननु विष्णौ मुख्योऽपीत्यादिना** ।। **मुक्तप्राप्यत्वोक्तेरिति** ।। अनेन सूत्रे भावप्रधानो निर्देश इति मुक्तप्राप्यत्वव्यपदेशादिति भाष्यस्याभिप्राय इत्युक्तं भवति । अत्र मुक्तप्राप्यत्वं प्राप्यान्तररहितत्वे सति प्राप्यत्वम्, न त्वर्चिरादिवत् प्राप्यत्वमात्रम् । अत एव भाष्येऽमृतस्यैष सेतुरिति सेतुरिव सेतुराश्रय इति व्युत्पत्त्या अन्यप्राप्यप्रयोजनकप्राप्ति-प्रतिपादकसेतुशब्दोपेतवाक्यमुदाहृतम्; न तु परात्परं पुरुषमुपैतीति वाक्यमिति नातिप्रसङ्गः । अथवा, मुक्तपदेन लिङ्गभङ्गवन्तोऽभिधीयन्ते । तत्प्राप्यत्वं विष्णोरन्यत्र क्वापि न वर्तत इति नातिप्रसङ्गः । अत एव बहुनाऽत्रेति वाक्यमत्र प्रमाणत्वेनोदाहृतम् । अत एव भाष्ये मुक्त-प्राप्यत्वव्यपदेशादित्येवोक्तमिति भावः ।। **पराणां मुक्तानामिति** ।। तथा चैतद्वाक्यं मुक्त-प्राप्यत्वप्रतिपादकमिति भावः ।

## भावदीपः

सूत्रे चशब्दाभावात् पूर्वहेतोरन्यथोपपत्तिनिरासकत्वेनावतारयति ।। **नन्विति** ।। इत्यन्त-भाष्यस्य सूत्रेणान्वयमुपेत्य भावप्राधान्येन योग्यसाध्याध्याहारपूर्वं सूत्रार्थमाह ।। **नाऽऽत्म-शब्दस्येति** ।। मुक्तानामिति वाक्यमनुरुध्याऽऽह ।। **जाताविति** ।। भाष्ये तस्यैवेत्यस्य विष्णोरेवेत्यर्थमुपेत्यावतारयति ।। **मुक्तप्राप्यत्वमिति** ।। प्रकृतोपयोगायार्थमाह ।। **पराणामिति** ।। विश्वात्मानं विश्वस्वामिनम् । द्वितीयान्तानां तद्विश्वमुपजीवतीति पूर्वोक्तकर्तृक्रियाभ्यामन्वयः ।

## वाक्यार्थमुक्तावली

अत्र तत्त्वित्यनुवर्तते । द्युभ्वाद्यायतनमिति च यथा श्रुतप्रथमान्ततया विपरिणामेन षष्ठ्यन्ततया चानुवर्तते ।। **मुक्तेति** ।। द्व्येकयोर्द्विवचनैकवचने इति पाणिनीय इव भावप्रधानम् । भाष्यस्य च सूत्रेणान्वय इति भावेन सूत्रार्थमाह ।। **नात्मशब्दस्येत्यादिना** ।।

ततश्चायमर्थः । द्युभ्वाद्यायतनस्यामृतस्यैष सेतुरिति मुक्तोपसृप्यत्वव्यपदेशात् द्युभ्वाद्यायतनं विष्णुरेव । नात्मशब्दामुख्यार्थो जीव इति । मुक्तप्राप्यत्वं कुतो विष्णुत्वनिश्चायकम् इत्यत आहेति इत्याशङ्कापरिहाराय रीत्यन्तरेण सूत्रार्थमाहेत्यर्थः । ततश्च तस्येति षष्ठ्यन्तमनुवर्तते । मुक्तोपसृप्यत्वमिति योज्यम् । ब्रह्मविदाप्नोतीत्यादौ समाख्यावाक्ये तस्य विष्णोरेव मुक्तप्राप्यत्व-

(वाक्यार्थमुक्तावली)
व्यपदेशात् । तस्यैवात्रोक्तप्राप्यत्वमिति सूत्रार्थ उक्तो ज्ञेयः । नारायणं महाज्ञेयमित्यत्र द्वितीयान्तानां तद्विश्वमुपजीवतीति पूर्वेणान्वयः । यावच्छ्वेतं न गच्छतीत्यत्र श्वेतद्वीपस्थ-भगवत्प्राप्तिं विना लिङ्गभङ्गवतो मुक्तस्यापि मुक्तफलानन्दवैचित्र्यालाभेन मुक्तत्वाभावोक्त्या मुक्तप्राप्यत्वमन्यस्येत्युक्तं भवति ।

## तत्त्वसुबोधिनी

मुक्तेति सूत्रे तद्भाष्ये चशब्दाभावेन तत्र स्वातन्त्र्येण प्रतिज्ञा हेत्वन्तरप्रतिपादकम् । किन्तु पूर्वसूत्रोक्ताक्षेपसमाधानार्थमित्याशयेनोत्तरसूत्रनिरसनीयपूर्वपक्षमाह **॥ ननु विष्णौ मुख्योऽपीत्यादिना ॥ मुक्तप्राप्यत्वोक्तेरिति** । अनेन सूत्रे भावप्रधानो निर्देश इत्युक्तं भवति । अत्र मुक्तप्राप्यत्वं प्राप्यान्तररहितत्वे सति प्राप्यत्वमात्रं न त्वर्चिरादिवत् प्राप्यत्वमात्रम् । अथवा मुक्तपदेन लिङ्गदेहभङ्गवन्तोऽभिधीयन्ते । तत्प्राप्यत्वं विष्णोरन्यत्र क्वापि न वर्तते इति नातिप्रसङ्गः **॥ पराणां मुक्तानामिति ॥** तथाचैतद्वाक्यं मुक्तप्राप्यत्वप्रतिपादकमिति भावः ।

## वाक्यार्थविवरणम्

**बहुनेति ॥** 'नन्वेवं केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचन । केचित्स्वर्गे महर्लोके जने तपसि चापरे । केचित्सत्ये महाज्ञाना गच्छन्ति क्षीरसागरम्' । इति प्रमाणे महाज्ञानिनामेव क्षीरसमुद्रश्वेतद्वीपगमनोक्तेस्तथा च योग्यत्वं चात्रापेक्षितमिति गीताभाष्यविरोधः । श्वेतद्वीप-गमनेऽपि योग्यतापेक्षाया उक्तत्वेन सर्वेषां तदभावादिति चेत् । न । तत्र निवास एव योग्यतापेक्षा न तु गमने । तथोक्तं तट्टीकायामेव निवास इति शेषः इति । तथाऽत्रापि चतुर्थाध्याये सर्वेषां सकृच्छ्वेतद्वीपगमनाङ्गीकारात् योग्यत्वं चात्रापेक्षितमिति तत्र निवासायेति गमयितव्यमिति वक्ष्यति । लिङ्गदेहभङ्गानन्तरं केचित्स्वरूपानन्दं भुञ्जाना भगवदिच्छारूपावरक-सद्भावेन यावत्स्वरूपानन्दमभुञ्जन्तः सन्तः प्रलये भगवदुदरे तिष्ठन्ति । सृष्टिकाले श्वेतद्वीप-व्यक्त्यनन्तरं सर्वेऽपि तत्र गत्वा तत्रत्यं हरिं दृष्ट्वा पश्चात्तदनुज्ञाताः सन्तो भगवदिच्छा-रूपावरणापगमानन्तरं स्वस्वयोग्यसम्पूर्णानन्दं भुञ्जानाः सन्तः स्वस्वयोग्यस्थानं प्रति निवासाय गच्छन्तीति ध्येयम् । यथोक्तम् । 'श्वेतद्वीपं ततो गत्वा दृष्ट्वा विष्णुं च ते ततः । अनुज्ञाताः प्रमोदन्ते निर्दुःखास्तु धरादिषु' इति प्रमाणमप्यवस्थानपरमेवेति व्याख्येयम् । एवं च 'योगी

(वाक्यार्थविवरणम्)

तावन्न मुक्तः स्यात्' इत्यस्य भगवदिच्छारूपावरकापगमानन्तरं स्वस्य योग्यस्वरूपानन्दाविर्भावरूपमुक्तिमान् वा स्यादिति व्याख्येयमिति सम्प्रदायविदः ।

## वाक्यार्थमञ्जरी

भावप्रधानोऽयम् । अमृतस्यैष सेतुः' इति मुक्तेः प्राप्यान्तरशून्यत्वे सति प्राप्यत्वव्यपदेशादात्मशब्दो नामुख्यार्थ इत्यर्थः । मुक्तानां बहुत्वादाह ।। **जाताविति** ।। भाष्ये विश्वात्मानं विश्वस्वामिनं द्वितीयान्तानां तद्विश्वमुपजीवन्तीति पूर्वेणान्वयः । प्रकृतोपयोगादाह ।। **पराणामिति** ।। **अन्यस्यापीति** ।। उदाहृतवाक्येष्वन्यानिषेधादिति भावः ।। **बहुनेति** ।। तत्र श्वेतद्वीपस्थभगवत्प्राप्तिं विना प्रकारान्तरनिषेधात्तस्यैव मुक्तप्राप्यत्वसिद्धिरिति भावः । ननु सर्वेषां श्वेतद्वीपगमनमयुक्तम् ।

केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचन ।
केचित्स्वर्गे महर्लोके जने तपसि चापरे ।।
केचित्सत्ये महाज्ञाना गच्छन्ति क्षीरसागरम् ।।

इत्यत्र महाज्ञानिनामेव क्षीरसागरगतश्वेतद्वीपगमनोक्तेः योग्यत्वं चापेक्षितमिति गीताभाष्ये श्वेतद्वीपगमनेऽपि योग्यत्वोक्त्या सर्वेषां तदभावादिति चेन्न । उदाहृतप्रमाणभाष्ययोः श्वेतद्वीपनिवासे महाज्ञानयोग्यतायाः प्रयोजकत्वोक्त्या सर्वेषां तद्गमनमात्राङ्गीकारेऽपि विरोधाभावात् । स्फुटं चैतत्प्रमेयदीपिकायां वक्ष्यति चात्र चतुर्थाध्याये सकृच्छ्वेतद्वीपगमनाङ्गीकाराद्योग्यत्वं चात्रापेक्षितमिति । एतत्तत्र निवासायेति गमयितव्यमिति ।

## सूत्रभाष्यम्

**।। ॐ नानुमानमतच्छब्दात् ॐ ।। ३ ।।**

**नानुमानात्मकागमपरिकल्पितरुद्रोऽत्र वाच्यः । भस्मधरोग्रत्वादितच्छब्दाभावात् । 'सोऽन्तकः स रुद्रः स प्राणभृत्स प्राणनायकः स ईशो यो हरिर्योऽनन्तो यो विष्णुर्यः परः परोवरीयान्' इत्यादिना प्राणग्रन्थिरुद्रत्वादेर्विष्णोरेवोक्तत्वात् । ब्रह्माण्डे च–**

(सूत्रभाष्यम्)

'रुजं द्रावयते यस्माद्रुद्रस्तस्माज्जनार्दनः ।
ईशानादेव चेशानो महादेवो महत्त्वतः ॥
पिबन्ति ये नरा नाकं मुक्तास्संसारसागरात् ।
तदाधारो यतो विष्णुः पिनाकीति ततः स्मृतः ॥
शिवः सुखात्मकत्वेन शर्वः शंरोधनाद्धरिः ।
कृत्यात्मकमिदं देहं यतो वस्ते प्रवर्तयन् ॥
कृत्तिवासास्ततो देवो विरिञ्चश्च विरेचनात् ।
बृंहणाद्ब्रह्मनामाऽसावैश्वर्यादिन्द्र उच्यते ॥
एवं नानाविधैश्शब्दैरेक एव त्रिविक्रमः ।
वेदेषु सपुराणेषु गीयते पुरुषोत्तम' ॥ इति ।

वामने च–

'न तु नारायणादीनां नाम्नामन्यत्र सम्भवः ।
अन्यनाम्नां गतिर्विष्णुरेक एव प्रकीर्तित' ॥ इति ।

स्कान्दे च–

'ऋते नारायणादीनि नामानि पुरुषोत्तमः ।
प्रादादन्यत्र भगवान् राजेवर्ते स्वकं पुरम्' ॥ इति ।

'चतुर्मुखश्शतानन्दो ब्रह्मणः पद्मभूरिति ।
उग्रो भस्मधरो नग्नः कपालीति शिवस्य च ।
विशेषनामानि ददौ स्वकीयान्यपि केशव' ॥ इति (च) ब्राह्मे ॥ ३ ॥

## सत्तर्कदीपावली

यदुक्तं रुद्रो युम्वाद्याश्रय इति तन्निराकुर्वत्सूत्रं पठित्वा व्याचष्टे । **नानुमानमित्यादिना** । आनुमानमनुमानसम्बन्धीत्यर्थः । यद्वचनं रुद्रप्रापकमुदाहृतं प्राणानां ग्रन्थिरसीति तद्विष्णौ श्रुत्या 'रुजं द्रावयत' इत्यादिपुराणवाक्यैश्च घटयति । **सोऽन्तक इति** । आसुरं शं निरुद्ध्यतीति शर्व इत्यर्थः । न च नारायणं महाज्ञेयम्' इत्यादि श्रुतयो रुद्रादिषु घटन्तामिति वाच्यम् । तेषु नारायणादिशब्दासम्भवात् । तदाह ॥ **नत्विति** ॥ एतदेव विवृणोति । **ऋत इति** ॥

## तत्त्वप्रदीपिका

'आनुमानम्' अनुमानात्मकागमपरिकल्पितं रुद्राख्यं ब्रह्मात्र न वाच्यम् । शैवागमे क्वचिदुक्तसाधनानुष्ठानेन यथोक्तदृष्टफलोदयोपलम्भात्तदृष्टान्तेनेशवाक्यत्वहेतुनाऽन्यत्रापि प्रामाण्यमनुमीयते । एवमनुमानादाप्तप्रामाण्यस्तदागमः 'अनुमानात्मक' उच्यते । न च तेन प्रामाण्यं साधयितुं शक्यते । तेनैव यथोक्तदृष्टफलव्यभिचारिणा वाक्यान्तरेण कृत्स्नस्याप्यप्रामाण्यसाधनसौकर्यात् । अत एव परिकल्पितरुद्र इति समगिरत भगवान् । विस्पष्टमाचष्ट चानुव्याख्याने 'तद्व्यभिचारिणा । अप्रामाण्यानुमा च स्यात्' इति । स्वयं च भगवत्तमः पशुपतेरसामञ्जस्यमसर्वज्ञत्वादिकं च सूत्रयिष्यति । 'परः परो वरीयान्' परा वाग्देवी, परतः परो विरिञ्चः, ततोऽपि वरा प्रकृतिः, वरीयान् विष्णुः । अत्र तरबीयसुनौ तमबिष्ठनर्थौ । 'यत्रोभयोः प्रयोगो न तत्रैकार्थौ तरप्तमपौ' इति च शब्दनिर्णये । 'शर्वश्शंरोधनाद्धरिः' मुक्तिपर्यन्तं स्वरूपभूतमपि शं रुद्ध्वा वर्तते हि ।

## तत्त्वप्रकाशिका

ननु प्रागुक्तरीत्या रुद्रप्रकृत्योः किं न स्याद् द्युभ्वाद्यायतनत्वमित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ **नानुमानमिति** ॥ प्रागुक्तानुमानसिद्धप्रामाण्ये पाशुपताद्यागमे सर्वाश्रयत्वेन परिकल्पिते रुद्रप्रधाने अत्र प्रकरणे सर्वाधारतया प्रतिपाद्ये न भवतः । तच्छ्रुतिलिङ्गाद्यभावादिति भावः । आगमप्रामाण्यसाधकानुमानं तु फलविसंवादिरुद्रादिवाक्यदृष्टान्तेन विप्रतिपन्नवाक्याप्रामाण्यसाधनसम्भवात् प्रतिपक्षग्रस्तमतिप्रसङ्गदुष्टं चेत्युपेक्ष्यम् । अभाषितं प्रधानं किं संयोज्यत इति चेन्न । न प्रकृतिजीवावभिधीयेते इत्यन्यत्रोक्तत्वात् । न च प्रकृतिपदेनापि रुद्रः । पृथगुभयग्रहणे बाधकाभावात् । नन्वत्र रुद्रादिज्ञापकाभावेऽपि श्रुत्यन्तरे 'प्राणानां ग्रन्थिरसि रुद्रः' इत्याद्युक्तेर्द्युभ्वाद्यायतनत्वं रुद्रादेः किं न स्यादित्यत आह ॥ **स इति** ॥ श्रुत्यन्तरोक्तमपि द्युभ्वाद्यायतनत्वं विष्णोरेव । न च रुद्रादिश्रुतिलिङ्गविरोधः । श्रुतिबलेन रुद्रादिश्रुतेरन्तकत्वादिलिङ्गस्य च विष्ण्वेकनिष्ठत्वादिति भावः । ननु रुद्रादिशब्दानां विष्णुपरत्वं किं योगेन रूढ्या वा । नाद्यः । योगस्य दौर्बल्यात् । न द्वितीयः । तदभावात् । उभयत्र रूढिसद्भावे पुनर्निश्चयायोगात् । न हि श्रुत्यन्तरे विष्णुलिङ्गाद्यस्तीत्यत आह ॥ **ब्रह्माण्डे चेति** ॥ रुद्रादिशब्दानां विष्णौ योगमुक्त्वा 'वेदेषु सपुराणेषु गीयते' इति विद्वद्रूढिकथनाद्रूढिमात्रान्महायोगविद्वद्रूढ्योः प्राबल्याद्युक्तः श्रुत्यन्तरेऽपि विष्णोः प्रतिपाद्यत्वनिश्चय इति भावः । ननु यदि रुद्रादिशब्दानां विष्णुपरत्वमुक्त्वा श्रुतीनामनिर्णायकत्वमुच्यते तर्हि नारायणादिनाम्नां

(तत्त्वप्रकाशिका)
रुद्रादिपरत्वे **'नारायणं महाज्ञेयम्'** इत्यादिश्रुतीनामनिर्णायकत्वं स्यादित्यत आह ॥ **वामने चेति** ॥ भगवन्नामत्वाविशेषाद्रुद्रादिनामवन्नारायणादिनाम्नामपि रुद्रादौ वृत्तिः किं न स्यादित्यत आह ॥ **स्कान्दे चेति** ॥ यद्येवं रुद्रादिशब्दा विष्ण्वेकपरास्तर्हि किमुच्यते भस्मधरोग्रत्वादीनां तच्छब्दत्वम् । विष्णुदत्तत्वाभिप्रायेणेति चेत्तर्हि रुद्रादिशब्दा अपि तादृशा इति न कथं तैर्निर्णय इत्यत आह ॥ **चतुर्मुख इति** ॥

## गुर्वर्थदीपिका

'कृत्त्यात्मकमिदं देहम्' इत्यत्र कृत्तिश्चर्म कृत्त्यात्मकं चर्ममयमित्यर्थः ।

## भावबोधः

आगमस्यानुमानात्मकत्वं कीदृशमित्यतस्तद्दर्शयन् रुद्रपदमुपलक्षणपरमित्यभिप्रेत्य नानुमानात्मकेति भाष्यं व्याचष्टे ॥ **प्रागुक्तानुमानसिद्धप्रामाण्य इति** ॥ ननु रुद्रप्रधानयोः स्वरूपतः श्रुत्यादिसिद्धत्वात् न तदागमपरिकल्पितत्वमित्यतः सर्वाश्रयत्वेनेति पूरितम् । सूत्रेऽनुमानमिति पदच्छेदे प्रमाणत्वेनानुमीयत इति व्युत्पत्त्या आगमस्यानुमानशब्दवाच्यत्वम् । रुद्रप्रधानयोः सर्वाश्रयत्वे नानुमानशब्दवाच्यागमप्रतिपाद्यत्वेन तद्वत्त्वविवक्षायाम् अर्शाद्य (अर्श आद्य) जन्तानुमानशब्दवाच्यत्वमिति द्रष्टव्यम् । अनुमानमिति पदच्छेदे उक्तव्युत्पत्त्या आगमपदमनुमानपदाच्छैषिकेऽणि कृते आगमप्रतिपाद्यं रुद्राद्यनुमानमिति ज्ञातव्यम् ॥ **तच्छ्रुतिलिङ्गाद्यभावादिति** ॥ अनेन भस्मधरोग्रत्वादीति भाष्ये भस्मधरपदेन आत्मशब्दप्रतियोगि श्रुतिग्रहणम् । उग्रत्वपदेन मुक्तप्राप्यत्वप्रतियोगिभूतलिङ्गग्रहणमित्युक्तं भवति । तथा च भस्मधरोग्रत्वादिरूपनामलिङ्गात्मकरुद्रसम्बन्धिशब्दाभावादित्यर्थः । आदिपदेन नामलिङ्गात्मकशब्दान्तरस्य ग्रहणमिति भावः । अत्र प्रसज्यप्रतिषेधार्थस्य नञः क्रियासापेक्षत्वेनासामर्थ्येऽपि उग्रलिङ्गप्रतिपादकशब्दान्तरस्य 'असूर्यं पश्या राजदाराः,' 'अश्राद्धभोजी ब्राह्मणः' इत्यादौ समासोऽस्तीति, 'अकर्तरि च कारके संज्ञायाम्' इत्यत्र ज्ञापितत्वाद्वा निर्मक्षिकमित्यादाविव अर्थाभावे यदव्ययीभावसमासाश्रयणाद्वा अतच्छब्दादिति पदं भाष्ये तच्छब्दाभावादिति व्याख्यातम् । अव्ययीभावत्वेऽपि 'अम्' न भवति । 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' इत्युक्तेरुपपादनं सुधाकरीत्या कर्तव्यमिति भावः । एवम् 'अतद्धर्माभिलापात्' इत्यादिसूत्रांशव्याख्यानभाष्येऽपि समाधानमवधातव्यम् ॥ **अन्यत्रेति** ॥ विष्णुतत्त्वनिर्णय इत्यर्थः ।

(भावबोध:)

ननूभयत्र रुद्रादिशब्दस्य रूढिसाम्येऽपि निरवकाशविष्णुलिङ्गादिबलान्निश्चयोपपत्तिरित्यत आह ॥ **न हि श्रुत्यन्तर इति** ॥ प्राणानां ग्रन्थिरसीत्यादिसमाख्यारूपश्रुत्यन्तर इत्यर्थः ॥ **महायोगविद्वद्रूढ्योः प्राबल्यादिति** ॥ अनेन तेषामेव लिङ्गशब्दानां प्राणानां ग्रन्थिरसीत्यादीनां विष्णौ मुख्यवृत्तिरिति बलवत्त्वम् । तस्य रुग्द्रावणादिकर्तृत्वं मुख्यमिति न्यायविवरणमपि उक्ततात्पर्यकं भवति । महायोगविद्वद्रूढिपदाभ्यां वृत्तेर्मुख्यत्वस्य योगे महत्त्वविशेषणेन रुग्द्रावणादिकर्तृत्वरूपप्रवृत्तिनिमित्तमुख्यत्वस्य च प्रतिपादनात् ।

## भावदीपः

भाष्ये रुद्रपदमुपलक्षणं मत्वा रुद्रप्रकृत्यानुगुण्येन भाष्यं व्याचष्टे ॥ **प्रागुक्तेति** ॥ अत्रेत्यनुवादः । भस्मधरेत्यत्रापि त्रिगुणत्वादेर्ग्रहणं मत्वाऽऽह ॥ **तच्छ्रुतीति** ॥ आदिपदेन समाख्याग्रहः । अतद्धर्माभिलापादितिवदयं निर्देशः । तद्व्यभिचारिणा । अप्रामाण्यानुमा च स्यादिति । अतिप्रसङ्गोऽनुमेयदशेति च शास्त्रयोनिसूत्रानुभाष्यमनुरुध्याऽऽह ॥ **फलविसंवादीति** ॥ **अतिप्रसङ्गेति** ॥ बौद्धागमेऽपि किञ्चित्फलोपलम्भदर्शनेन तत्रापि विप्रतिपन्नभागप्रामाण्यानुमानसम्भवादिति भावः । तत्वप्रदीपादिप्राचीनटीकारीत्या शङ्कते ॥ **अभाषितमिति** ॥ भाष्यकृदनुक्तमित्यर्थः । अन्यत्र विष्णुतत्वनिर्णये ॥ **पृथगिति** ॥ तत्र प्रकृतिपदेन प्रकृतेः अत्र रुद्रपदेन रुद्रस्येति पृथगुभयग्रहण इत्यर्थः ॥ **श्रुतिबलेनेति** ॥ सोऽन्तक इत्यादि श्रुतिबलेनेत्यर्थः । नन्वन्तर्नयन्यायेन निर्णयः स्यादित्यत आह ॥ **न हीति** ॥ **श्रुत्यन्तर इति** ॥ रुद्रसमाख्यारूपश्रुत्यन्तर इत्यर्थः । येन निर्णयः स्यादिति भावः । तेषामेव लिङ्गशब्दानां प्राणानां ग्रन्थिरसि इत्यादीनां विष्णौ मुख्यवृत्तिरिति बलवत्त्वं तस्य हि रुग्द्रावणादिकर्तृत्वं मुख्यमिति न्यायविवरणविवरणपरतयोक्तस्मृतेस्तात्पर्यमाह ॥ **रुद्रादीति** ॥ समाख्या सावकाशेति सूचितम् । वामने चेत्यादिभाष्यं विष्णुसमाख्याया निरवकाशत्वोक्तिपरमिति व्यञ्जयन्नाह ॥ **यदि रुद्रादीति** ॥

## अभिनवचन्द्रिका

**प्रागुक्तरीत्येति** ॥ प्रापकबाहुल्येन मुक्तोपसृप्यत्वलिङ्गबाधसम्भवात् रुद्रप्रकृत्योर्द्युभ्वाद्यायतनत्वमिति शङ्कोदय इति भावः । भाष्ये भस्मधरोग्रत्वादितच्छब्दाभावादिति ॥ ननु

(अभिनवचन्द्रिका)

उग्रशब्दस्यैव तच्छब्दत्वेन उग्रत्वशब्दस्य तच्छब्दत्वाभावात् भस्मधरोग्रादितच्छब्दाभावादिति वक्तव्यम्, न तु उग्रत्वादितच्छब्दाभावादिति वक्तव्यमिति चेत्, सत्यम् । उग्रशब्द एव तच्छब्दः, तथापि स्वार्थिकोऽयं त्वप्रत्ययः । ततश्च उग्र इत्यनेन यावदुक्तं भवति तावदेवोग्रत्वं भवतीत्यनेनोक्तं भवतीत्यदोषः । अत एव शाबरभाष्ये 'इतरेषु तथात्वम्' इति सूत्रगततथात्व-शब्दस्य 'तथा' इति यावत् तावत्तथात्वमिति तथाशब्दपर्यायत्वमुक्तम् । समाख्याबलात् द्युभ्वाद्यायतनत्वं रुद्रस्येति शङ्कते **नन्वत्रेति** ॥ ननु अस्तु रुद्रादिशब्दानामुभयत्र रूढिः, तथापि न समाख्याश्रुतेः विष्णुपरत्वनिश्चयाऽयोगः, विष्णुलिङ्गादिना विष्णुपरत्वनिश्चय-सम्भवादित्यत आह **न हीति** ॥ **श्रुत्यन्तरे** समाख्याश्रुतौ । विशिष्टाभेदवादी शङ्कते ॥ **नन्विति** ॥ एतेन चैतन्याऽभेदवादिना ईशस्य जीवरूपाद्विशिष्टात् भेदस्याऽङ्गीकृतत्वेन तस्य शुद्धचैतन्यैक्याऽविरोधात् 'भेदव्यपदेशात्' इति सूत्रे भेदं प्रसाध्य, ऐक्यनिराकरणमयुक्तमिति परास्तम् । अस्य सूत्रस्य विशिष्टैक्यशङ्कानिरासार्थत्वात् ।

## वाक्यार्थमुक्तावली

आगमस्यानुमानात्मकत्वं कीदृशमित्यतस्तद्दर्शयन् व्याचष्टे ॥ **प्रागुक्तेति** ॥ रुद्रप्रधानयोः स्वरूपतः श्रुत्यादिसिद्धत्वात् न तदागमपरिकल्पितत्वमित्यतः सर्वाश्रयत्वेनेति पूरितम् । सूत्रे द्युभ्वाद्यायतनमित्यस्ति । अनुमानमिति पदच्छेदः । अनुमानमिति प्रमाणत्वेनानुमीयत इति व्युत्पत्त्या, आगम उच्यते । अनुमानशब्दाच्छैषिकेऽणिकृते आगमप्रतिपाद्यं रुद्राद्यनुमानम् । अनुमानमिति पदच्छेदे उक्तव्युत्पत्त्यागमपरादनुमानशब्दादनुमानशब्दवाच्यागमप्रतिपाद्यत्वेन तद्वत्वविवक्षायाम् अर्शाद्यच्प्रत्ययादनुमानशब्दवाच्यत्वमिति द्रष्टव्यम् ॥ **तच्छ्रुतिलिङ्गाद्य-भावादिति** ॥ सूत्रे शब्दपदेन लिङ्गनामात्मकोभयग्रहणमिति भावेन तच्छ्रुतिलिङ्गादीत्युक्तम् । आदिपदेन समाख्याप्रकरणादिग्रहः । तेषामपि शब्दरूपत्वात्सौत्रशब्दपदेन ग्रहणं युज्यते । अनेन भाष्ये भस्मधरपदेन आत्मशब्दप्रतियोगिश्रुतिग्रहणम् । उग्रत्वपदेन मुक्तप्राप्यत्व-प्रतियोगिलिङ्गग्रहणम् । उग्रो भस्मधर इत्युग्रपदस्य नामत्वेऽपि भावप्रत्ययान्तोग्रशब्दस्य धर्मवाचकत्वेन लिङ्गत्वमविरुद्धम् । अथवा भाष्ये द्वन्द्वान्ते श्रूयमाणस्त्वप्रत्ययः प्रत्येकमभि-सम्बध्यते । तथा च भाष्ये भस्मधरत्वोग्रत्वप्रवृत्तिनिमित्तकनामात्मकभस्मधरोग्रशब्दाभावादिपदेन तल्लिङ्गाद्यभावादिति विवक्षितम् । तथाच टीकायां श्रुतिपदेन भस्मधरोग्रशब्दग्रहः ।

(वाक्यार्थमुक्तावली)

लिङ्गादिपदेनादिशब्दोक्तग्रहणमित्यवधेयम् । अत्र प्रसज्यप्रतिषेधार्थस्य नञः क्रियासापेक्षत्वेनासामर्थ्येऽपि 'असूर्यं पश्या राजदारा' 'अश्राद्धभोजी अब्राह्मण' इत्यादौ समासोऽति इति कर्तरि च कारके संज्ञायाम्' इत्यत्र ज्ञापितत्वाद्वा निर्मक्षिकमित्यादाविव अर्थाभावे यदव्ययमित्यव्ययीभावसमासाश्रयणाद्वा अतच्छब्दादिति पदं तच्छब्दाभावादिति व्याख्यातम् । अव्ययीभावत्वेऽपि अम् न भवति । 'नाव्ययीभावादतोऽम्त्वपञ्चम्या' इत्युक्तेरित्युपपादनं सुधोक्तरीत्या कर्तव्यम् । एवमतद्धर्माभावादित्यादिकमपि समाधेयम् । पाशुपताद्यागमप्रामाण्यात् द्युभ्वाद्यायतनत्वं रुद्रादेरङ्गीकार्यमिति भावेनानुमानमिति हेतुगर्भविशेषणमुपक्षिप्तम् । अतच्छब्दादित्यनेन तन्न दूषितम् । न्यूनतेत्यतः भाष्यस्थपदतात्पर्यमाह ॥ **आगमप्रामाण्येति** ॥ **अतिप्रसङ्गेति** ॥ बौद्धागमेऽपि कचित्फलसंवाददर्शनात् विप्रतिपन्नभागप्रामाण्यप्रसङ्गादिति भावः । अन्यत्र विष्णुतत्त्वनिर्णये न च प्रकृतिपदेनेति स्पष्टभाष्यबलात् तत्वनिर्णयगतप्रकृतिपदेन 'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा' इति गीतोक्तेः । पृथिव्यादिभूतपञ्चकस्य प्रकृतिशब्दवाच्यत्वात् रुद्रस्याष्टमूर्तित्वेन तदधिष्ठातृत्वात्तदधीनत्वन्यायेन ग्रहणमिति भावः ॥ **पृथगिति** ॥ तत्त्वनिर्णये प्रकृतिपदेन प्रधानस्यात्र रुद्रपदेन रुद्रस्येति पृथगुभयग्रहण इत्यर्थः ।

यद्वा अस्मिन्नधिकरणे पूर्वपक्षत्वेन पृथग्रुद्रप्रधानग्रहे बाधकाभावेन तथा कल्पनायोगादित्यर्थः । न च वाच्यं प्रकृतिपदेन रुद्रस्याग्रहणे तदनुक्तिः स्यादतो रुद्रपदमेवेति । वायोः पृथग्ग्रहणवदुपलक्षणत्वेनोभयोरपि वायुरुद्रयोर्ग्रहणे बाधकाभावात् । उक्तं च तत्त्वनिर्णय टीकायां प्रकृतिजीवावित्युपलक्षणं वायुरुद्रावित्यपि ग्राह्यमिति । पद्मनाभतीर्थभट्टारकैश्च प्रकृतिः प्रधानमिति व्याख्यातम् । प्रकृतिपदेनोभयो रुद्रप्रधानयोर्ग्रहण इति व्याख्याने तट्टीकाविरोधो व्याख्यानान्तरत्वाभिप्रायेण परिहर्तव्यः । सूत्रार्थस्तु स्पष्टः । प्राणानां ग्रन्थिरसि रुद्र इत्यादि समाख्याबलात् द्युभ्वाद्यायतनं रुद्रादिरिति यत्पूर्वपक्षितं तदाशङ्क्य तत्परिहारत्वेन पुनस्तदेव सूत्रे प्रकारान्तरेण व्याकुर्वत्सोऽन्तक इत्यादिभाष्यमवतार्य व्याचष्टे । **नन्वत्र रुद्रादिज्ञापकाभावेऽपीति** । अत्र यस्मिन् द्यौरिति विषयवाक्यभाष्ये इत्यादिनेत्यस्यार्थः श्रुतिबलेनेति । 'सोऽन्तक' इत्यादिश्रुतिबलेनेत्यर्थः ।

ततश्चायं सूत्रार्थः । प्राणानां ग्रन्थिः । आकाश एव तदोतं च प्रोतं चेत्यादिश्रुत्यन्तरोक्तं

(वाक्यार्थमुक्तावली)

द्युभ्वाद्यायतनं नानुमानं रुद्रादिः किं तु तदेव विष्णुरेव । न च रुद्रादिश्रुतिलिङ्गविरोधः । अतच्छब्दात् । ताभ्यां शिवप्रधानाभ्यामन्यद् तत् ब्रह्म तस्य शब्दोऽतच्छब्दः सोऽन्तकः स रुद्र इत्यादिरूपो विष्णोरेव रुद्रत्वादिप्रतिपादकः शब्दः तस्मात् तद्बलात् । समाख्यागतरुद्रादि-श्रुतेरन्तकत्वादिलिङ्गस्य चातच्छब्दत्वात् । प्रसिद्धरुद्रादिशब्दत्वाभावात् । प्रत्युत तद्भिन्नविष्णु-शब्दत्वावगमादिति । नन्वेवं सूत्रस्य वृत्यन्तरं टीकाज्ञापकशून्यमिति चेन्न । प्राणभृच्चेति सूत्रटीकायां च शब्दात्प्रागुक्तहेतूनां नयश्च समाकर्षः । आत्मशब्दो मुक्तोपसृप्यत्वम् अतच्छब्दः तत्प्रापकश्रुतीनां विष्णुपरत्वमित्युक्तहेतव इत्युक्तत्वेनान्यप्रापकश्रुतीनां विष्णुपरत्वस्य प्राक् सूत्रोक्तत्वलाभायैव सूत्रवृत्यन्तरस्य वक्तव्यत्वात् । तच्छिवादि न भवतीत्य तद्ब्रह्म तस्य शब्दो तच्छब्द इति विग्रहस्य सुधायामुक्तत्वान्न तदप्यलौकिकम् ॥ **श्रुत्यन्तरेऽपीति** ॥ प्राणानां ग्रन्थिरसि इत्यादिसमाख्याश्रुतौ । कं सुखं, 'द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत' इति नाकं विशिष्टं सुखं तत्पिबन्तीति पिनाकाः । शर्व इति मुक्तिपर्यन्तं स्वरूपमपि शं रुध्वा वर्तते इति तत्वप्रदीपे । आसुरं शं रुध्वेति सत्तर्कदीपावल्यां, रुधिर् आवरणे कृत्यात्मकं देहं प्रवर्तयन् वस्ते । विरेचनात् सर्जनात् । वामने चेत्यादिभाष्यं विष्णोरेव मुक्तोपसृप्यत्वे समाख्या-त्वेनोदाहृतस्य नारायणं महाज्ञेयमित्यादेर्निरवकाशत्वपरमिति व्यञ्जयन्नाह ॥ **यदि रुद्रादीति** ॥ अतच्छब्दादिति सूत्रांशमाक्षिपति ॥ **यद्येवमिति** ॥

## तत्त्वसुबोधिनी

आगमस्यानुमानात्मकत्वं कीदृशमित्यतः तद्दर्शयन् रुद्रपदमुपलक्षणपरमित्यभिप्रेत्य नानु-मानात्मकेति भाष्यं व्याचष्टे ॥ **प्रागुक्तानुमानेति** ॥ ननु रुद्रप्रधानयोः स्वरूपतः श्रुत्यादि-सिद्धत्वात् न तदागमपरिकल्पितत्वमित्यतः सर्वाश्रयत्वेनेति पूरितम् । सूत्रे अनुमानमिति पदच्छेदे प्रमाणत्वेनानुमीयते इति व्युत्पत्त्या आगमस्यानुमानशब्दवाच्यत्वम् । रुद्रप्रधानयोः सर्वाश्रयत्वे नानुमानशब्दवाच्यागमप्रतिपाद्यत्वेन अनुमानमस्यास्ति प्रतिपादकत्वेनेति विवक्षायाम् अर्शाद्यजन्तानुमानशब्दवाच्यत्वमिति द्रष्टव्यम् । अनुमानमिति पदच्छेदे उक्तव्युत्पत्त्या आगम-पदमनुमानशब्दाच्छैषिके अणि कृते आगमप्रतिपाद्यं रुद्राद्यनुमानमिति ज्ञातव्यम् ॥ **तच्छ्रुति-लिङ्गाद्यभावादिति** ॥ अनेन भस्मधरेति भाष्ये भस्मधरपदेनात्मशब्दप्रतियोगिश्रुतिग्रहणम् । उग्रत्वपदेन मुक्तप्राप्यत्वप्रतियोगिग्रहणम् । तथा च भस्मधरोग्रत्वादिरूपनामलिङ्गात्मकरुद्र-

(तत्त्वसुबोधिनी)

सम्बन्धिशब्दाभावादित्यर्थः । आदिपदेन नामलिङ्गादिप्रतिपादकशब्दान्तरस्य ग्रहणमिति भावः । अत्र प्रसज्यप्रतिषेधार्थस्य नञः क्रियासापेक्षत्वेनासामर्थ्येऽपि उग्रलिङ्गप्रतिपादकशब्दान्तरस्य 'असूर्यं पश्या राजदाराः' इत्यादौ समासोऽस्तीति 'अकर्तरि च' इत्यत्र ज्ञापितत्वाद्वा निर्मक्षिकमित्यादाविवार्थाभावे यदव्ययमित्यव्ययीभावसमासाश्रयणाद्वा अतच्छब्दादिति पदं भाष्ये तच्छब्दाभावादिति व्याख्यातम् । अव्ययीभावत्वे तु अम् न भवति । अपञ्चम्या इत्युक्तेरिति भावः । एवम् अतद्धर्मेत्यत्रापि द्रष्टव्यम् । ननु तर्हि पाशुपताद्यागमेन तस्य सर्वाश्रयत्वादिसिद्धिरिति चेन्न । तस्याप्रामाण्यात् । न च दृष्टविधायकवाक्यदृष्टान्तेन तस्य प्रामाण्यं साध्यते इति वाच्यम् । तदप्रामाण्यस्य फलविसंवादादिना रुद्रादिवाक्यदृष्टान्तेन साधयितुं शक्यत्वात् । एवं सर्वेषामपि स्ववाक्येन सर्वाश्रयत्वादेः सम्भवेनातिप्रसङ्गदुष्टत्वात् उपेक्षणीयमित्याह ॥ **आगमेति** ॥ ननु भाष्ये प्रधानस्यानिराकृतत्वात् भवद्भिः किमिति तन्निरासः क्रियते इति शङ्कते ॥ **अभाषितमिति** ॥ **अन्यत्रेति** ॥ विष्णुतत्वविनिर्णये इत्यर्थः । ननु विष्णुतत्वनिर्णये प्रकृतिपदेन रुद्र एव किं न गृह्यत इत्यत आह ॥ **न चेति** ॥ **पृथगुभयग्रहण इति** ॥ तत्र प्रकृतिपदेन प्रकृतेः, भाष्ये रुद्रशब्देन रुद्रस्यैव ग्रहण इत्यर्थः ॥ **योगस्येति** ॥ तथाचावयवयोगापेक्षया रूढेः बलवत्वात् रूढ्या रुद्रादिरेव ग्राह्य इत्यर्थः ॥ **तदभावादिति** ॥ विष्णौ रूढ्यभावादित्यर्थः । अस्तु उभयत्र रूढिः तथापि विष्णोः द्युभ्वाद्ययतनत्वनिश्चयो नोपपद्यते इत्याह ॥ **उभयत्रेति** ॥ नन्वुभयत्र रुद्रादिशब्दस्य रूढिसाम्येऽपि निरवकाशविष्णुलिङ्गादिबलात् निश्चयोपपत्तिरित्यत आह ॥ **न हि श्रुत्यन्तर इति** । प्राणानां ग्रन्थिरसीत्यादिसमाख्याश्रुत्यन्तर इत्यर्थः ॥ **तादृशा इति** ॥ विष्णुदत्ता इत्यर्थः । सर्वं श्रुणोति हिनस्तीति वा शं रुणद्धि प्रतिबध्नातीति वा शर्वः ।

## वाक्यार्थविवरणम्

अनुमानात्मकत्वमागमस्य बाधितमतो व्याचष्टे ॥ **प्रागुक्तानुमानसिद्धेति** ॥ **अतिप्रसङ्गेति** ॥ स्वस्ववाक्यादेव प्रमेयसिद्ध्यङ्गीकारेऽस्मद्वाक्यादस्माकमपि तत्सिध्येदित्येवंरूप इत्यर्थः । ननु कुतो निश्चयायोगो विष्णुलिङ्गैस्तदुपपत्तेरित्यत आह ॥ **श्रुत्यन्तर इति** ॥ प्राणानां ग्रन्थिरसीत्यत्र विद्यमानैरित्यर्थः । भाष्ये संसारसागरादित्यनन्तरं ते पिनाका इत्युच्यन्त इति शेषः ॥ **तदाधार इति** ॥ तथा च पिनाका अस्य सन्तीति पिनाकीति विग्रहः । कृत्यात्मकं चर्ममयं देहं प्रवर्तयन् सन् । वस्ते वस निवासगत्योरिति धातोर्वसतीत्यर्थः ।

## वाक्यार्थमञ्जरी

अनुमानसिद्धप्रामाण्यकागमकल्पितरुद्रप्रधानाख्यं नात्र सर्वाधारतयोच्यते भस्मधरत्व-त्रिगुणत्वादितदुभयसम्बन्धिशब्दाभावादित्यर्थः ॥ **विप्रतिपन्नेति** ॥ रुद्रादेः सर्वाश्रयत्वाद्यभिधायीत्यर्थः ॥ **प्रतिपक्षेति** ॥ नन्वत्र फलविसंवादिवाक्यत्वं हेतुरुत रुद्रादिवाक्यत्वम् । नाद्यः अन्यतरासिद्धेः । द्वितीये प्रकरणसमत्वेन प्रतिपक्षायोगः । साध्यविपरीतसाधक-हेत्वन्तरस्यैव प्रतिपक्षत्वादिति चेन्न । प्रतिपक्षशब्देन प्रतिरोधिमात्रग्रहणेन प्रकरण-समस्यैवात्रोक्तेः ॥ **अतिप्रसङ्गेति** ॥ दृष्टफलाभिधायिप्रतारकवाक्यदृष्टान्तेन प्रतारकवाक्यत्वेन हेतुना विप्रतिपन्नप्रतारकवाक्यप्रामाण्यसाधनप्रसङ्गरूपेत्यर्थः । अभाषितं भाष्ये अनुक्तम् । अन्यत्र विष्णुतत्वनिर्णये । प्रकृतिपदेन अन्यत्रोक्तेन । ननु रुद्रादिशब्दस्योभयत्र रूढिसाम्येऽपि निरवकाशविष्णुलिङ्गबलान्निश्चयोपपत्तिरित्यत आह ॥ **न हि श्रुत्यन्तरेति** ॥ भाष्ये ईशनान्नियमनात् महत्त्वतः उत्तमत्वात् सागरादित्यनन्तरं पिनाक इत्युच्यत इति शेषः । शंरोधनादैत्यानां सुखनिरोधात् । वस्ते वसति विरेचनात् । प्रलये स्वोदरप्रविष्टजगतः सृष्टौ बहिर्निस्सरणात् बृंहणात् पूर्णत्वात् गतिः वाच्यतयाऽश्रय इत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ प्राणभृच्च ॐ ॥ ४ ॥**

एतैरेव हेतुभिर्न जीवो वायुश्च । 'अजायमानो बहुधा विजायत' (तै.आ.३.१३.१) इति तस्यैव बहुधा जन्मोक्तेः ॥

## सत्तर्कदीपावली

यदुक्तं जीवो द्युभवाद्याश्रय इति तं निराकुर्वत्सूत्रं पठित्वा व्याचष्टे **प्राणेत्यादिना** ॥ उक्तहेतुभिर्यथा द्युभ्वाश्रयो वायुर्न भवति । तथा सुतरां जीवोऽपि । यत्तत्प्रापकं वचनमुक्तं 'स एपोऽन्तश्चरत' इति तद्विष्णोः श्रुत्या घटयति ॥ **अजायमान इति** ॥

## तत्त्वप्रदीपिका

अनन्यसाधारणतया ब्रह्मणस्स्वस्यैव वाचकादात्मशब्दान्मुक्तोपसृप्यव्यपदेशाज्जीववाचक-शब्दाभावाच्च न जीवो द्युभ्वाद्यायतनमित्यभिहितम् ।

## तत्त्वप्रकाशिका

उक्तप्राप्त्या जीववायू किमत्र वाच्यौ न स्यातामित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ **प्राणभृच्चेति** ॥ चशब्दात् प्रागुक्तहेतूनां नञश्च समाकर्षः । आत्मशब्दो मुक्तोपसृप्यत्वमतच्छब्दस्तत्प्रापकश्रुतीनां विष्णुपरत्वमित्युक्तहेतवः । ननु 'वायुना वै गोतमः' इत्यादि श्रुतेर्विष्णुपरत्वेन वायुसाधकत्वाभावेऽपि बहुधा जन्मलिङ्गेन जीवोऽत्र वाच्यः किं न स्यादित्यत आह ॥ **अजायमान इति** ॥

## भावबोधः

शारीरश्चेत्यादाविव 'च'शब्देन नञ्मात्रसमाकर्षे एतैरेव हेतुभिरिति भाष्यमुत्सूत्रितं स्यादित्यत आह– **चशब्दादिति** ॥

## भावदीपः

**उक्तप्राप्त्येति** ॥ लिङ्गसमाख्याभ्यामुक्तप्राप्त्येत्यर्थः । भाष्ये चशब्दस्य वायुसमुच्चायकत्वमात्रभ्रमं वारयति ॥ **चशब्दादिति** ॥ न केवलं वायोः समुच्चयः । किन्तु प्रागुक्तहेतूनां नञश्च समाकर्ष इत्यर्थः । तथैव चन्द्रिकोक्तेः । हेतुभिरिति बहुवचनार्थं व्यनक्ति ॥ **आत्मशब्द इति** ॥ विष्णावेवाऽऽत्मशब्दस्य रूढत्वान्न शिवादिकान् । श्रुतिर्वक्ति इति एतदधिकरणानुव्याख्याने । तथा 'आत्मशब्दं यतो हेतुं कृत्वा जीवं न्यवारयत् । स्वशब्दात् प्राणभृच्चैव नोक्त इत्येव वेदराट् । इति फलाध्यायाद्यपादीयानुव्याख्याने । तथा स्वशब्दपर्यायात्मशब्दादिति तत्वनिर्णये । आत्मशब्दादिति हेतोश्चानुकर्षणार्थ इति सुधायां चाऽऽत्मशब्दमात्रानुकर्षोक्तिस्तु तत्र तन्मात्रोपयोगाद्वा वर्णकान्तराभिप्रायेण वेति ध्येयम् ॥ **तत्प्रापकेति** ॥ अतच्छब्दादित्यस्य रुद्रप्रधानवाचिशब्दाभावादित्यर्थोक्त्या तत्प्रापकरुद्रादिशब्दानां विष्णुपरत्वस्यार्थसिद्धत्वात् सोऽपि सौत्रो हेतुः । अत एवातच्छब्दात् प्राणभृच्चेत्येतद्भाष्य एव रुद्रादिशब्दानां विष्णुपरत्वमुक्तमिति भावः ॥ **इत्यादिश्रुतेरिति** ॥ वायुसमाख्यायाः एवं नानाविधैः शब्दैरिति अन्यनाम्नां गतिर्विष्णुरिति चोक्तदिशा महायोगविद्वद्रूढिभ्यां विष्णुपरत्वेनेत्यर्थः । यद्यपि बृहदारण्यके पञ्चमे 'तच्चेत्वं याज्ञवल्क्यसूत्रमविद्वान् तं चान्तर्यामिणं ब्रह्म गवीरुदजसे इति । वेद वा अहं गोतम सूत्रं तं चान्तर्यामिणमिति' च सूत्रान्तर्यामिणोर्द्वयोरप्युक्त्या स्यूतं जगदिदं यस्मिन् सूत्रं

(भावदीपः)
वायुरसौ स्मृत इति तद्भाष्योक्त्या च वायुशब्दो वायुपर इति प्रतीयते । तथापि तं चापि यमयेद्यस्मादन्तर्यामी हरिः स्मृत इति तद्भाष्योक्त्यैव पादान्त्यप्राणनयन्यायेन वाय्वन्तर्यामिविवक्षया विष्णुपरत्वेनेत्युक्तम् । यथोत्तरनये प्राणपदस्य विष्णुपरत्वं वक्ष्यति । न चैतदर्थद्वयं विरुद्धम् अन्तर्यामिविवक्षयेत्यादि । वक्ष्यते च जीवमुख्यप्राणलिङ्गादिति चेत्तद् व्याख्यातमिति सूत्रेऽपि । आकाश एव तदोतं चेति श्रुतेस्तु आकाशस्य प्रकृतित्वेऽपि अम्बरान्तधृतेरिति अक्षरनये पृथिव्यादिप्रकृत्यन्तमिति स्मृत्या प्रकृतिद्वारा सर्वस्याक्षराख्यविष्ण्वाश्रितत्वस्यैवाग्रेऽभिधानाद्विष्णोर्द्युभ्वाद्यायतनत्वपरत्वेन सावकाशत्वं स्पष्टमिति भावः ॥ **इत्यत आहेति** ॥ अजायमान इति वाक्यं च विष्णुपरं पुरुषसूक्तस्थत्वात्तस्य च वैष्णवत्वं प्रागेव साधितमिति भावः ॥

## वाक्यार्थमुक्तावली

॥ **उक्तप्राप्त्येति** ॥ जीवस्थलिङ्गेन वायोः समाख्ययोक्तप्राप्त्येत्यर्थः । भाष्ये एतैरेवेत्यस्य नञश्चोत्सूत्रितत्वभ्रमं वारयति **चशब्दादिति** ॥ वायुस्तु प्राणभृच्छब्देनैवोक्त इति भावः । अत एव प्राक् टीकायां तस्य प्राणाधारत्वप्रसिद्धेश्चेति वायोर्द्युभ्वाद्यायतनत्वे प्राणभृत्पदसूचिता युक्तिर्दर्शिता । चन्द्रिकायां तु न केवलं चशब्दाद्वायोः समुच्चयः किन्तु हेतूनां नञश्च समाकर्ष इति टीकार्थ उक्तः ॥ **अजायमान इति** ॥ एतच्च वाक्यं विष्णुपरं पुरुषसूक्तगतत्वादिति भावः । सूत्रे द्युभ्वाद्यायतनमित्यनुवर्तते । चशब्दान्नञ् उक्तहेतवश्चानुकृष्यन्ते । तत्र प्राणभृज्जीवो वायुश्च न द्युभ्वाद्यायतनं उक्तहेतुसमुदायादिति सूत्रार्थः । ननु द्युभ्वाद्यायतनमित्यस्येवान्यस्याप्यनुवृत्तिसम्भवाच्चशब्दवैयर्थ्यमिति चेन्न । ॐ प्राणभृच्च, प्राणभृदपीति समुच्चायकशब्देन समुच्चयो हेतुसमुच्चयश्च क्रियत इति टीकाशयाङ्गीकारात् । ननु एतैरेव हेतुभिरिति आत्मशब्दमुक्तोपसृप्यत्वबलेन प्राणभृद्व्यवच्छेदोऽत्र क्रियत इत्युक्तम् । द्युभ्वाद्यायतनं विष्णुरेव नान्यः आत्मशब्दात् मुक्तोपसृप्यव्यपदेशादित्युक्त्यैव तद्व्यवच्छेदेनैतत्सूत्रवैय्यर्थ्यात् । अन्यथा प्रत्यधिकरणमपि एवं पृथक् सूत्रप्रणयनापत्तेरिति चेन्न । स्वपक्षसाधकमेव परपक्षबाधकमिति सर्वत्र द्रष्टव्यमिति दर्शयितुमेतत्सूत्रप्रवृत्यङ्गीकारात् ॥ तदुक्तं सुधायाम् । अन्यत्रापि सिद्धान्तसाधकस्यैव पूर्वपक्षनिरासेऽपि हेतुत्वं द्रष्टव्यम् । तेन न न्यूनता दोष इत्येतत्प्रदर्शयितुं सिद्धान्तसाधकस्यैव पूर्वपक्षनिरासे व्यापारं प्रदर्शयितुमिदं सूत्रद्वयमिति ।

## तत्त्वसुबोधिनी

शारीरश्चेत्यादाविव च शब्देन नञ्मात्रसमाकर्षे एतैरेवेति भाष्यमुत्सूत्रितं स्यादत आह ॥ **चशब्दादिति** ॥

## वाक्यार्थमञ्जरी

आत्मशब्दमुक्तप्राप्यत्वादितच्छब्देभ्यः जीवमुख्यप्राणौ च न सर्वाश्रयावित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ भेदव्यपदेशात् ॐ ॥ ५ ॥**

**न चैक्यं वाच्यम् ॥ 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानम्'** (मुं.उ.३-१-२) इति भेदव्यपदेशात् ॥ ५ ॥

## सत्तर्कदीपावली

**जुष्टं यदा पश्यत्यन्यमीशमिति ॥** जीवात् द्युभ्वाद्याश्रयस्यात्मनो भेदव्यपदेशादपि नासौ जीव इत्याह **॥ भेदेति ॥** अनेन यत्पराभिमतं जीवेशैक्यं तदपि निरस्तं भवति ।

## तत्त्वप्रदीपिका

तथाऽप्यनाद्यविद्यानिबन्धनभ्रमाभिनिवेशपरवशहृदयतया परमपुरुषशारीरयोरभेदमेव तत्त्वं मन्वानास्तदभेदेन शारीरस्य द्युभ्वाद्यायतनत्वमिति शङ्कते । तदपाकरोति 'ॐ भेदव्यपदेशात् ॐ' । न चैक्यं वाच्यम् । अयमर्थः । यदिदं जीवपरयोरैक्यमभिधीयते तत्सत्यं मिथ्या वा? सत्यं चेन्न वाच्यम् । सत्यस्यावाच्यत्वात् । न च लक्ष्यमिति वाच्यम् । वाच्यस्यैव लक्ष्यत्वात् । अथ न तथा, तथाऽपि न वाच्यम् । न ह्यविद्यमानमस्तीति वाच्यमभ्रान्तानाम् । अथ मिथ्याशब्दोऽनिर्वाच्यवाचीति मन्वीथाः, तथाऽपि नैक्यं श्रौतमिति वाच्यम् । अनिर्वाच्यत्वादेव । न ह्यनिर्वाच्यं श्रुतिप्रतिपाद्यं तत्पक्षेऽपि । ऐक्यस्य मिथ्यात्वे भेदस्यैव सत्यत्वात्तस्य च श्रुतौ व्यपदेशाच्च 'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' इति । समाने शरीरे निकृष्टत्वेन स्थितो जीवोऽनीशतया भेदे मुह्यमानः शोचति । जुष्टं देवैः अस्य जीवस्येशमन्यं यदा पश्यति महिमानं

(तत्त्वप्रदीपिका)

**महिमगुणात्मकं तदा तथैव वीतशोको भवति । न दुःखलेशमपि स्पृशति । न तु महिम-गुणविहीनमनन्यमनीशसेवितं पश्यन्वीतशोको भवतीति सतात्पर्यं भेदव्यपदेशाद्भिन्न एव प्राणभृत्परमात्मनः ॥**

## तत्त्वप्रकाशिका

**ननु किं जीवलिङ्गस्य विष्णुपरत्वप्रतिपादनायासेन जीवस्यैव द्युभ्वाद्यायतनत्वं किं न स्यात्। न चोक्तहेतुविरोधः । जीवेशाभेदाभिप्रायेण जीवेऽप्यात्मशब्दाद्युक्तिसम्भवादित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ भेदेति ॥** नैक्याभिप्रायेण जीव एवाऽऽत्मशब्दादिप्रयोगोऽत्रेति वाच्यम् । अत्रैवान्यमीशमिति जीवेशभेदव्यपदेशादित्यर्थः ॥

## भाववोधः

'भेदव्यपदेशात्' इति सूत्रस्य चशब्दरहितत्वेन स्वपक्षसाधने परपक्षदूषणे वा न हेत्वन्तराभिधायकत्वमित्यतस्तन्निवर्तनीयपूर्वपक्षमाह **ननु किमिति** ॥ एवं 'प्रकरणात्' इति सूत्रनिरसनीयपूर्वपक्षप्रतिपादको नन्वत्र जीवस्येति ग्रन्थोऽपि नेयः ॥ **अत्रैवान्यमीशमिति, जीवेशभेदव्यपदेशादित्यर्थः इति** ॥ अत्रान्यमीशमित्यत्र प्रतियोग्याकाङ्क्षायां 'द्वा सुपर्णा' इत्यादिवाक्यबलात् जीवस्यैव तत्त्वेन ग्राह्यत्वात् जीवेशभेदप्रतिपादकमिदं वाक्यमिति भावः । 'विशेषणभेदव्यपदेशाभ्यां च नेतरौ' इत्यत्रान्यो मार्ग इत्युक्ते प्रसिद्धमार्गादन्यत्ववदन्यमीश-मित्युक्ते प्रसिद्धेशाद्रुद्रादन्यत्वप्रतीतेरियं श्रुतिर्व्याख्यानान्तरमभिप्रेत्य रुद्रादन्यत्वे प्रमाणीकृतेत्य-विरोध इति भावः । यद्यप्येतत्सूत्रतद्भाष्ययोः सम्मुग्धत्वेन भेदव्यपदेशाच्चान्य इतिवत् पूर्व-पक्ष्यभिप्रेतरुद्रादिचतुर्णामपि परमात्मभेदप्रतिपादकत्वेन व्याख्यानं कर्तुं शक्यम्, तथाप्ये-तत्साधितैक्याभाव एव हेत्वन्तराभिधायक 'स्थित्यदनाभ्यां च' इति सूत्रे प्रधानस्य सर्वथा ग्रहणासम्भवाद् वायुरुद्रयोरपि वायुत्वादिना ग्रहणायोगात् जीवत्वावच्छिन्नादीश्वरस्य भेदः प्रतिपाद्यत इत्यङ्गीकर्तव्यम् । अत एव च तत्र भाष्ये जीवशब्दः प्रयुक्तः । तथा च तदनुसारेण इदमपि सूत्रभाष्यं तथैव व्याख्यातमित्यवधेयम् ।

## भावदीपः

उक्तहेतूनां सत्त्वात् तद्विरोधेन शङ्कानर्हमेकत्वं कथमाशङ्क्य निरस्यत इत्यतो न

(भावदीपः)
चैकत्वमिति भाष्यं व्याचष्टे ॥ **नैक्येति** ॥ **अत्रैवेति** ॥ एतत्प्रकरण एवेत्यर्थः ॥ **अन्यमीशमिति जीवेशभेदेति** ॥ पश्यतीति सन्निहितो जीव एव यदि न्यायेनान्यत्वप्रतियोगितयाऽन्वेति । जीवादन्यः स्वतन्त्रो य इत्याथर्वणभाष्योक्तेरिति भावः । श्रुत्यर्थस्तु सर्वसेव्यं जीवादन्यं तदेतत्सत्यमित्यादि प्रागुक्तप्रकारेणास्य महिमानं च यदा पश्यति तदा मुक्तो भवतीत्यानन्दमयनय एवोक्त इति भावः । विशेषणभेदेति सूत्रे तु अर्थान्तरमुपेत्य रुद्रादन्यत्वपरत्वेन व्याख्यानं कृतम् ।

## अभिनवचन्द्रिका

**जीवस्यैवेति** ॥ जीवस्यैव द्युभ्वाद्यायतनत्वेऽपि भवदभिमतस्य विष्णोर्द्युभ्वाद्यायतनत्वस्य लाभसम्भवात् । न ह्यभिन्नयोरेकस्य द्युभ्वाद्यायतनत्वप्राप्तौ अपरस्य नेति वक्तुं शक्यमिति भावः । अत्र गुणसूत्रं 'स्थित्यदनाभ्यां च' इति । अस्य न चैक्यं वाच्यमिति पूर्वभाष्येणान्वयः । नन्वत्र स्थितिग्रहणं किमर्थम् । 'अदनेन' इत्येव किं नोच्यते । जीवो नेशाऽभिन्न 'अदनात्' इति प्रयोक्तुं शक्यत्वात् । किं च स्थितिशब्दस्याश्रौतत्वेन तद्ग्रहणं नोपपद्यते । न हि 'द्वासुपर्णा' इति श्रुतौ स्थितिशब्दमीक्षामहे । अपि च स्थितिर्न भेदसाधिका उभयगतत्वात् । न च स्थितिमात्रं न हेतुत्वेन विवक्षितं किन्तु अनशनेन स्थितिः, तस्याश्च ईशमात्रगतत्वेन भेदसाधकत्वमुपपन्नमिति वाच्यम् । तथा सति 'अदनाऽनशनाभ्यां च' इत्येव सूत्रं स्यात् । श्रुत्यनुसारित्वादावश्यकत्वाच्च ।

किं च द्वासुपर्णा' इति श्रुतावन्यपदस्य साक्षादेव भेदाभिधानात् लिङ्गेन साधनायोग इति चेत्, उच्यते । स्यादेतत् यदि जीवेशभेद एक एव स्यात्, तदा अदनेनैव सिद्धत्वात् स्थितिग्रहणं व्यर्थं स्यात् । न चैवं, किंनाम, द्वौ भेदौ । जीवप्रतियोगिक ईशे, ईशप्रतियोगिको जीवे । तत्रोभयत्रापि प्रमाणं वक्तुमुभयग्रहणमिति । न च अदनेनैव जीवप्रतियोगिक ईशप्रतियोगिको भेदः सिध्यति । येन स्थितिग्रहणं व्यर्थं स्यात् । यदत्रोक्तम् अश्रौतत्वेन स्थितिग्रहणं न कर्तव्यम्, किन्तु 'अदनाऽनशनाभ्याम्' इत्येव सूत्रं कर्तव्यम्' इति । तन्न स्थितिपदेनानशनस्यैवोक्तत्वात् । श्रौतानशनपदं विहाय किं स्थितिग्रहणेनेति चेत्, 'अदनाऽनशनाभ्यां च' इत्युक्तेऽसिद्धिशङ्का स्यात् । 'ऋतं पिबन्तौ सुकृतस्य लोके' इति श्रुतौ हरेरपि कर्मफलात्तृत्वाभिधानात् । सा मा भूदिति स्थितिग्रहणम् । स्थितिग्रहणेनापि

(अभिनवचन्द्रिका)
कथमसिद्धिशङ्का परिहृतेति चेत्, इत्थम् यदि जीववदीश्वरस्य कर्मफलात्तृत्वं स्यात्, तर्हि तद्वदेव जननमरणे स्याताम् । तयोरपि कर्मफलत्वात् । न च ते भवतः । किंतु केवला स्थितिरेव । ततश्च जीववददनमपि नेति असिद्धिशङ्का परास्ता भवति ।

## वाक्यार्थमुक्तावली

अत्र तदित्यनुवर्तते । नेति च प्राणभृदिति च अत्रान्यमीशमिति ईशस्य पश्यतीत्युक्त-जीवभेदव्यपदेशात् । तद्ब्रह्म न प्राणभृज्जीवः । अतो नैक्याभिप्रायेण जीव एवात्मादिशब्द इति सूत्रार्थमभिप्रेत्य भाष्यं व्याचष्टे **नैक्येति** ॥ अन्यमीशमित्यत्र प्रतियोग्याकाङ्क्षायां पश्यतीति कर्तृत्वेन सन्निहितजीवस्यैव ग्राह्यत्वादिति भावः । उक्तं चाथर्वणभाष्ये । जीवादन्यः स्वतन्त्रो य इति । विशेषणभेदव्यपदेशाभ्यामित्यत्र तु अन्यो मार्ग इत्युक्ते प्रसिद्धमार्गादन्यत्ववत् अन्यमीशमित्युक्ते प्रसिद्धेशाद्रुद्रादन्यत्वप्रतीतेः इयं श्रुतिः रुद्रादन्यत्वे प्रमाणत्वेन प्रकारान्तरेण व्याख्यातेत्यविरोधः ।

## तत्त्वसुबोधिनी

भेदव्यपदेशादिति सूत्रस्य चशब्दरहितत्वेन स्वपक्षसाधने परपक्षदूषणे वा न हेत्वन्तराभिधायकत्वमित्यतः तन्निवर्तनीयपूर्वपक्षमाह ॥ **ननु किमिति** ॥ एतत्प्रकरणादित्यत्रापि नेयम् ॥ **अत्रैवान्यमीशमितीति** ॥ अन्यमीशमित्यत्र प्रतियोग्याकाङ्क्षायाः द्वासुपर्णेत्यादि-वाक्यबलात् जीवस्यैव तत्वेन ग्राह्यत्वात् जीवेशभेदप्रतिपादकमिदं वाक्यमिति भावः । विशेषणेत्यत्रानुव्याख्यानान्तरमभिप्रेत्य प्रमाणीकृतेत्यविरोध इति भावः । यद्यप्यस्य सूत्रस्य पूर्वपक्ष्यभिप्रेतरुद्रादिचतुर्णामपि परमात्मभेदपरत्वेन व्याख्यानं कर्तुं शक्यं तथापि एतत्साधि-तैक्याभाव एव हेत्वन्तराभिधानं 'स्थित्यदनाभ्यां च' इति सूत्रे प्रधानस्य सर्वथा ग्रहणासम्भवात् वायुरुद्रयोरपि वायुत्वादिना ग्रहणायोगात् जीवत्वावच्छिन्नात् ईश्वरस्य भेदः प्रतिपाद्य इत्यङ्गीकर्तव्यम् । अत एव तत्र भाष्ये जीवशब्दः प्रयुक्त इति भावः ।

## वाक्यार्थमञ्जरी

अन्यमीशमितीहैव जीवब्रह्मभेदव्यपदेशान्न तयोरैक्यमित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ प्रकरणात् ॥ ६ ॥**

'द्वे विद्ये वेदितव्ये' (मुं.उ.१.१.४) इति तस्य ह्येतत्प्रकरणम् ॥

## सत्तर्कदीपावली

'द्वे विद्ये वेदितव्ये परा चैवापरा च' । 'अथ परा यया तदक्षरमधिगम्यत' इति परविद्याविषयस्य विष्णोः प्रक्रान्तत्वात् । तद्बाधाभावात्स एवात्र द्युभ्वाद्याश्रयत्वेनोच्यते नान्य इत्याह **॥ प्रकरणादिति ॥**

## तत्त्वप्रदीपिका

'द्वे विद्ये वेदितव्ये' इत्यारभ्य 'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः' इति जीवेशभेदस्य ह्येतत्प्रकरणम् । अदृश्यत्वापाणिपादत्वसर्वगतत्वभूतकारणत्वादिधर्मैर्जीवाद्भिन्नो हीशोऽत्र प्रकृतः ।

## तत्त्वप्रकाशिका

नन्वत्र जीवस्य कस्माच्चिदीशादन्यत्वमुच्यते न परमात्मनोऽतो न तयोर्भेद इत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे **॥ प्रकरणादिति ॥** नात्र जीवपरमात्मभेदोक्त्यभावः । ईशशब्देनैव परमात्मोक्तेः । तदेव कुतः । 'द्वे विद्ये वेदितव्ये' इति परविद्याविषयवस्तुनोऽत्रारभ्याधीतत्वेनास्य विष्णुप्रकरणत्वादिति भावः ॥

## भाववोधः

**आरभ्याधीतत्वेनेति** ॥ एतत्प्रकरणारम्भे 'द्वे विद्ये' इत्युक्तत्वात् परविद्याविषयत्वस्य च विष्णुलिङ्गत्वात् तद्युक्तस्यैवान्यमीशमिति द्वितीयान्तपदप्रतिपाद्यत्वादित्यर्थः ।

## भावदीपः

**ईशादन्यत्वमिति** ॥ जीवादन्यत्वस्योक्त्या तदन्यत्वं जीवेऽर्थात् सिद्धमित्येवमुक्तिः । एकप्रमेयतात्पर्यकानेकवाक्यात्मकप्रकरणस्य स्वान्तर्गतवाक्यं स्वतात्पर्यविषयपरमित्यनुमितिद्वारा

(भावदीपः).
तदन्तर्गतविप्रतिपन्नशब्दार्थनिर्णायकत्वेन साक्षाज्जीवपरमात्मभेदासाधकत्वात् योग्यसाध्योक्तिपूर्वं परंपरया प्रकरणादिति हेतुं योजयति ॥ **नात्रेति** ॥ **तदेवेति** ॥ परमात्मार्थकत्वमेवेत्यर्थः । श्रुतिलिङ्गादेरुपक्रमादौ श्रुतत्वे तन्निर्णायकत्वेन लिङ्गत्वस्य वक्ष्यमाणत्वात् । इह च परविद्या-विषयत्वलिङ्गस्योपक्रमे श्रवणेनोपक्रमस्य वैष्णवत्वात्तदादिवाक्यसन्दर्भस्योपक्रान्तार्थविष्णु-तात्पर्य-कत्वरूपं तत्प्रकरणत्वमवधार्यत इति भावेन भाष्यं व्याचष्टे ॥ **द्वे विद्ये इति** ॥ प्रतीकग्रहणमेतत् । 'अथ परा यया तदक्षरमधिगम्यत' इत्यनेनेत्यर्थः । आरभ्य उपक्रम्य । परविद्याविषयवस्तूपक्रम्य तस्यैतद्वाक्यसन्दर्भे पठितत्वादस्य वाक्यसन्दर्भस्य तत्प्रकरणत्व-मित्यर्थः । प्राणो ब्रह्म इत्यादौ प्राणस्योपक्रमेऽपि तदुत्तरत्र विष्णुश्रुतिलिङ्गादिना प्राणस्याधी-तत्वाभावेन तत्प्रकरणत्वं नेति व्यभिचारादुपक्रमादित्यनुक्त्वा उपक्रम्याधीतत्वादित्युक्तम् । जायमानत्वादेर्बाधकस्य निरासेन साधकानामुक्त्या चोपक्रान्तविष्णोरेव सर्वत्राधीतत्व-स्योक्तत्वान्नासिद्धिरिति भावः ।

## वाक्यार्थमुक्तावली

ईशादन्यत्वमिति ईशशब्दोऽत्र समर्थपरः । तथा च कश्चनेशः । जुष्टं, वशं सेव्यं प्रियम्, अन्यं स्वान्यम्, ईशं समर्थं, जीवम् अस्य महिमानं सामर्थ्यं च पश्यतीति जीवस्य कस्माचि-दीशादित्यर्थः । न परमात्मन इति जीवादन्यत्वमिति शेषः । 'द्वे विद्ये' इति प्रतीकग्रहण-मेतत् । 'अथ परा यया तदक्षरमधिगम्यत' इत्यनेनेत्यर्थः ॥ **विष्णुप्रकरणत्वादिति** ॥ श्रुतिलिङ्गादेरुपक्रमादौ श्रुतत्वे तन्निर्णायकस्य वक्ष्यमाणत्वादिति भावः । आरभ्याधीतत्वादिति उपक्रम्य तस्यैवोत्तरप्रबन्धेन अधीतत्वादित्यर्थः ! प्राणो ब्रह्म' इत्यादौ प्राणस्योपक्रमेऽपि न तत्प्राणप्रकरणपरमुत्तरत्र वैष्णवश्रुतिसद्भावादतो व्यभिचार इत्यत उपक्रमादित्यनुक्त्वा आरभ्या-धीतत्वादित्युक्तम् । जायमानत्वादिबाधकस्य निरासेन साधकानामुक्त्या चोपक्रान्तविष्णोरेव सर्वत्राधीतत्वान्नासिद्धिः । सूत्रे तत्विति षष्ठ्यन्ततया तस्यैवेत्यनुवर्तते । भेदव्यपदेश इति चानुवर्तते । परविद्याविषयवस्तुनः उपक्रम्य प्रतिपादितत्वेन तत्प्रकरणबलात्तस्य ब्रह्मण एव जीवभेदव्यपदेशो न कस्यचिदीशस्येति सूत्रार्थः ।

## तत्त्वसुबोधिनी

**आरभ्याधीतत्वेनेति** ॥ एतत्प्रकरणारम्भे 'द्वे विद्ये' इत्युक्तत्वात् परविद्याविषयत्वस्य विष्णुलिङ्गत्वात् तद्युक्तस्य वान्यमीशमिति द्वितीयान्तपदप्रतिपाद्यत्वादित्यर्थः ।

## वाक्यार्थमञ्जरी

परविद्याविषयवस्तुन एवात्रारभ्याधीतत्वेनास्य ब्रह्मप्रकरणत्वादत्रत्येशो ब्रह्मैवेत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ स्थित्यदनाभ्यां च ॐ ॥ ७ ॥**

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो अभिचाकशीति' (मु.उ.३.१.१) इति ईश-जीवयोः स्थित्यदनोक्तेः ॥

## सत्तर्कदीपावली

द्वा सुपर्णेत्यनेन पापकर्तुर्जीवात्कर्मफलमनश्नतो दीप्यमानस्य द्युभ्वाद्याश्रयस्य भेदव्यपदेशादपि नासौ जीव इत्याह ॥ **स्थितीति** ॥ अतो द्युभ्वाद्याश्रयो विष्णुरिति सिद्धम् ।

## तत्त्वप्रदीपिका

ईशस्यानश्नतः स्थित्युक्तेर्जीवस्य कर्मफलादनोक्तेश्च न तयोरैक्यं वाच्यम् ।

'सुपर्णावेतौ सयुजौ सखायौ यदृच्छया कृतनीडौ च वृक्षे ।
एकस्तयोः खादति पिप्पलान्नमन्यो निरन्नोऽपि बलेन भूयान् ॥
आत्मानमन्यं च स वेद विद्वानपिप्पलादो न तु पिप्पलादः ।
योऽविद्ययाऽन्धस्स तु नित्यबद्धो विद्यामयो यस्स तु नित्यमुक्तः ॥'

इति च भागवते ।

'अनत्तृत्वं हरेर्दुःखानत्तृत्वादुच्यते सदा ।
विषयान्विनाऽपि पूर्णत्वात्स्वरूपानन्दभोगिनः ॥

(तत्त्वप्रदीपिका)

शुभमत्त्येव हि सदा सर्वत्रावस्थितं विभुः ।
स्वादोरदनवद्ध्यत्ति जीवोऽस्वाद्वपि यत्सदा ।
अनारतं पारवश्यात्स्वाद्वत्तीति ततः श्रुतः' इति भोगनिर्णये ॥

'अस्वादु स्वादुवद्ध्यत्ति जीवो नैव जनार्दनः ।
अतो नास्तीति वचनमश्नतोऽपि शुभं सदा' इति परमभोगे ॥

'साशनानशनत्वेन नरदेवौ यथोदितौ ।
अत्तिं विनाऽप्यदौर्बल्यात्तथाऽनत्तिर्हरेर्भुज' इति स्वाभाव्ये ॥

'सुपर्णौ द्वौ शरीरस्थौ जीवश्च परमस्तथा ।
पारवश्यादनाज्जीवस्तत्रात्तीति श्रुतौ श्रुतः ॥
स्ववशेनादनाद्विष्णुर्नात्तीत्यत्ताऽपि संश्रुतः ।
स एव हि शुभस्यात्ता जीवोऽत्त्यस्यैव वेदनात् ॥' इति कूर्मसंहितायाम् ।

भेदवाक्यमतत्त्वावेदकमिति चेत्तदयुक्तम् । अतत्त्वावेदकं चेन्न प्रमाणम् । प्रमाणं चेन्नातत्त्वावेदकम् । अतत्त्वावेदकत्वाद्धि रजतभ्रान्तिरमानमित्युच्यते । तदापाततो वाध्यते, अस्य तु देशकालादिभिस्सहैव बाधः, अत एतत्प्रमाणमिति चेन्न । गगनतलमलिनतादिज्ञाने व्यभिचारात् । देशकालादीनां वाधश्च नैव भावी, नित्यत्वात्तेषाम् । अन्यथा कुत्र कदा कस्येति पृष्टे किमुत्तरं स्यात् । चेतनस्य स्वात्मनि सर्वगते ज्ञानोत्तरकालमविद्या सविलासा निवर्तते, न च तदा कापि किञ्चिदनिवृत्तमस्तीति चेदेवं तर्हि देशकालादीनां न वाधोऽभ्युपगतः । वाधावधित्वाद्यभ्युपगमात् । न च निरवधिको बाधो युक्तः । तस्मादतत्त्वावेदकप्रमाणवचनवत्तल्लक्षणवाक्यमपि स्वव्याहतम् । अपि चैवंवादिना वादिना कृत्स्नोऽप्यतत्त्वावेदको वेदो ह्यवादि । न हि वेदैकदेशेऽप्यभेदवादं वदन्ति कोविदाः । तदहो महानेष संरम्भो वेदप्रामाण्ये प्रच्छन्नशून्यवादिनः । अस्ति तत्त्वमस्यादिवाक्यं तत्त्वावेदकमिति चेन्न । मुख्यार्थपरित्यागात् । मुख्यार्थो हि शब्दस्यार्थतत्त्वम् । तत्त्यागे कथं तत्त्वावेदकम् । सत्यमेतत् सति सम्भवे, असम्भवे तु स्यादेव तत्त्वं लक्ष्यमपि । तत्पदार्थः परोक्षं सर्वज्ञं सुखरूपं ब्रह्म, त्वंपदार्थोऽपरोक्षोऽल्पज्ञो दुःखी जीवः, तयोरैक्यविवक्षायां मुख्यार्थासम्भवात्, जहदजहल्लक्षणया चैतन्यमात्रं लक्ष्यते 'सोऽयं देवदत्तः' इतिवदिति चेन्न । तत्कालविशिष्टस्यैव देवदत्तस्य पर्यायेणैतत्कालविशिष्टत्वोपपत्तेर्न तत्र लक्षणा, मुख्यार्थसम्भवादित्यदृष्टान्तः । यत्र चासम्भवस्तत्र वाच्यपरित्यागेऽपि तद्विशिष्टमेव लक्ष्यते न स्वरूपमात्रम् । यथा मञ्चाः क्रोशन्तीत्युक्ते मञ्चसम्बद्धाः पुरुषा लक्ष्यन्ते न पुरुषमात्रम् । गङ्गायां

(तत्त्वप्रदीपिका)

कटकमास्त इत्यादौ गङ्गाविशिष्टतीरं लक्ष्यते न तीरमात्रम् । अन्यथा तीरान्तरव्यावृत्तेरलभ्यत्वात् । तस्माद्वाच्यविशिष्टमेव लक्ष्यं तत्त्वं नाविशिष्टम् । अविशिष्टे लक्षणानुपपत्तेश्च । तत्र यद्वाक्यमविशिष्टं लक्षयति, तदतत्त्वावेदकं स्यात् । लक्ष्यतत्त्वस्य विशिष्टानियमात् । अविशिष्टमेव च त्वं लिलक्षयिपसि । अन्यथाऽखण्डार्थासिद्धेः । तस्माल्लक्षणयाप्यतत्त्वावेदकमेव तत्त्वमस्यादि-वाक्यम् । अपि च यदि सर्वज्ञत्वादिगुणविशिष्टं ब्रह्म वेदवाच्यम्, अज्ञानदुःखादिमांश्च जीवः प्रत्यक्षसिद्धः कोऽयमत्रासम्भवस्सम्भाव्यते । कुतश्च महता संरम्भेण तन्निरासे प्रयत्यते । ऐक्यविवक्षायां मुख्यासम्भव इति चेन्न । प्रमाणसिद्धवैलक्षण्ययोरैक्यविवक्षाया एवासम्भवात् । अत एव ह्यादित्यो यूप इत्यादौ स्वरूपैक्यं मुखतः प्रतीतमप्यपहाय गौणैक्यं विवक्षितं विचक्षणास्समाचक्षते । न च वाच्यमतत्त्वावेदकसिद्धत्वेन मानासिद्धत्वाज्जीवपरवैलक्षण्यस्य तत्वमस्यादिवाक्येन मुख्यमैक्यं विवक्ष्यत इति । तत्त्वमस्यादेरतत्त्वावेदकत्वोक्तेः । कथं च भेदप्रमाणस्यातत्त्वावेदकत्वमुच्यते ?

भेदस्यासत्यत्वादिति चेत्तदेव कथं प्रमाणसिद्धस्य न तत्प्रमाणमतत्वावेदकत्वादिति चेत् सेयमितरेतराश्रयता । तस्मान्नैक्यसिद्धिः । न चैतदभेदपरम्, अतत्त्वमसीति भेदपरत्वोपपत्तेः । 'ऐतदात्म्यमिदं सर्वं तत्सत्यम्' इति दुःखादेः सत्यत्वप्रतिज्ञानात् । एतत्सृष्टत्वादेतत्पालितत्वादे-तदात्माधीनमिदं सर्वम् । तस्मात्सत्यम् । एतस्य सत्यस्य सृष्टिक्षमत्वात् । 'अथ हैनमाहुस्सत्यकर्मेति सत्यं ह्येवेदं विश्वमसौ सृजत' इति हि श्रुतिः ।

'मतं हि ज्ञानिनामेतन्मितं त्रातं च विष्णुना ।
तस्मात्सत्यमिति प्रोक्तं परमो हरिरेव तु' इति च ॥

अतो नैव तत्पक्षे तत्त्वमस्यादिवाक्यं तत्त्वावेदकं वेदितव्यम् । तदखिलेऽपि वेदे पाद-प्रसारणन्यायेनाप्रामाण्यप्रतिपादनाभिप्रायः प्रियमायस्य प्रविकसितोऽत्यन्तमन्ततः । अतः श्रेयोऽर्थिभिरत्यन्तहेयं तन्मतमिति मतिमन्तो मन्यन्ते ॥

## तत्त्वप्रकाशिका

न जीवेशाभेदोऽत्र प्रकरणे विवक्षित इत्येतमर्थं हेत्वन्तरेण साधयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **स्थितीति** ॥ संयुक्तौ सखायौ द्वौ सुपर्णरूपौ जीवेशौ देहाख्यं पिप्पलमालिलिङ्गतुः । तयोः सुपर्णयोर्मध्येऽन्यो जीवोऽश्वत्थफलरूपं देहजनितकर्मफलमस्वाद्वेव स्वादुत्वेनात्ति । अन्य ईश्वरस्तदनश्नन्नभितः प्रकाशते । न तु स्वस्थित्यै तदपेक्षत इति जीवेशयोः कर्मफलोपजीवनत-

(तत्त्वप्रकाशिका)

द्रहितावस्थानाभ्यामुक्ताभ्यां च नैक्यं वाच्यमित्यर्थः । अत्र श्रुतिक्रमोल्लङ्घनमीश्वरस्य प्राधान्यज्ञापनार्थम् । स्थितिपदस्याल्पाक्षरत्वाच्च । व्यावहारिकभेदः श्रुत्योच्यत इति चेत् । व्यावहारिक इति सत्यो मिथ्या वा । आद्ये किमनिष्टम् । न द्वितीयः । मिथ्याभिधायकत्वेऽतत्त्वावेदकत्वेन श्रुतेरप्रामाण्यापातात् । तत्त्वावेदकत्वलक्षणप्रामाण्याभावेऽपि व्यावहारिकं तदस्तीति चेन्न । तत्त्वाविषयत्वे प्रामाण्यवाचोयुक्तेरयुक्तत्वात् । मिथ्याभेदानुवादित्वान्न दोष इति चेन्न । वैयर्थ्यात् । निषेधायेति चेन्न । तदभावात् । तत्त्वमसीत्यादिनिषेधोऽस्तीति चेत् । तदनुवादेनायमेव निषेधः किं न स्यात् । अद्वैतस्य प्रमाणान्तरेणासिद्धेर्न तदनुवाद इति चेत् । तत्किं निषेधाय प्रमाणप्राप्त्या भाव्यं प्राप्तिमात्रेण वा । आद्ये निषेधायोगः । द्वितीयेऽस्त्यद्वैतेऽपि तादृशी प्राप्तिः । जीवेशयोः प्रमाणं विनाऽसिद्धेः कथं तदभेदस्य कथञ्चित् प्राप्तिरिति चेत् समं भेदेऽपि । कुतश्चैतत् श्रुतेर्मिथ्याभेदवादित्वं सिद्धम् । जीवेशभेदस्य मिथ्यात्वादेवेति चेत् । तदेव कुतः । न हि भेदमिथ्यात्वे प्रत्यक्षमस्ति । न चानुमानं श्रुतिसिद्धार्थबाधकम् । स्वस्यैव तद्विरोधेनाऽप्रामाण्यात् । श्रुतेर्भेदमात्रपरत्वादनुमानस्य च तद्भेदस्यैव मिथ्यात्वे प्रवृत्तत्वेन भिन्नविषयत्वान्न विरोध इति चेत्तर्हि प्रत्यक्षस्यौष्ण्यमात्रविषयत्वादनुमानस्य च तदौष्ण्यस्यैव मिथ्यात्वसाधकत्वेन भिन्नविषयत्वमिति बाधोच्छेदः स्यात् । न चागमेन भेदमिथ्यात्वसिद्धिः । तदभावादेव । न च तत्सत्यत्वे मानाभावः । स्वरूपाभिधायकस्यैव सत्यत्वे प्रामाण्यात् । अन्यथा तस्य वैयर्थ्यात् । अतो न मिथ्याभेदपरत्वं श्रुतेरित्यलम् । तस्माद्विष्णुरेव युभ्वाद्यायतनं परविद्याविविषयश्चेति सिद्धम् ॥

## गुर्वर्थदीपिका

'तस्येदाहुः पिप्पलं स्वाद्वग्रे' इति श्रुतौ यो जीवः पितरं परमात्मानं न वेद स तत्स्वादु पिप्पलं नोऽनशत् नाश्नादित्युक्तत्वादस्वाद्वेव स्वादुत्वेनात्तीत्युक्तम् । प्रमाणप्रसिद्धौ जीवेशौ तत्त्वम्पदाभ्यामनूद्य श्रुत्यैक्यप्रसक्तेर्मायिभिरेव कथ्यमानत्वान्मन्दाशङ्क्यमिति दूषणे सत्येव दोषान्तरमाह **समं भेदेऽपीति** ॥ विधिनिषेधाववधूय प्रतीतेरवाभावात् 'न सुरां पिबेत्' इत्यादाविव साक्षान्नञ्योगे निषेद्धुं तदभावे विधातुमेव स्वरूपकथनं विधायकपदाभावे 'अस्तिभवत्योः सर्वत्रान्वयः' इति वचनाद्विधायकपदमन्वेतव्यमिति भावेनाऽऽह **स्वरूपाभिधायकस्यैवेति** ॥ द्वौ द्वित्वाख्यभेदकधर्मवन्तौ अन्यः अन्य इति जीवे परमे च अन्यत्वाख्यान्योन्याभाववान् अत एव श्रुत्या पदार्थमर्यादयैव भेदस्य स्थापितत्वाद्वा नार्थिकार्थत्वम् । प्रमाणभूतश्रुत्या स्वरूपमात्रस्य निरूपणेऽपि यदा सत्यत्वसिद्धिः प्रमाणानिषेध्यस्यैव सत्यत्वा-

(गुर्वर्थदीपिका)

त्तदा द्वित्वाख्योपपत्त्या अत्तृत्वानत्तृत्वाख्यविरुद्धधर्मोपपत्त्याऽन्यपदद्वयेन भेदस्याभ्यासाच्च श्रुति-तात्पर्यविषयत्वेन भेदसत्यत्वे श्रुतेस्तात्पर्यात् सुतरां सत्यत्वसिद्धिः । एवं च अन्यत्ववानन्य इति व्युत्पत्तेः सर्वसम्मतत्वान्मतुबर्थभूतास्तित्वस्यापि भेदे शब्दमर्यादयैव लाभात् प्रागुक्ताध्याहारः घटपटादिधर्मिभूतजगतोऽपि सत्यत्वसिध्यै प्रोक्तः धर्मभूतभेदादिप्रपञ्चे तु सूक्ष्मबुद्धिभिरेवमपि सत्यत्वमूह्यम् । अत एव श्रुत्यनुमानयोर्भिन्नविषयत्वमिति प्रागुक्तशङ्का मन्दाशङ्केति ज्ञेयम् ।

## भावबोधः

**जीवेशयोः कर्मफलोपजीवनतद्रहितावस्थानाभ्यामिति ॥** न च 'द्वा सुपर्णा' इत्यादि-मन्त्रोक्ते स्थित्यदने बुद्धिजीवगते, न तु जीवेशगते । तावेतौ सत्त्वक्षेत्रज्ञाविति पैङ्गिरहस्य-ब्राह्मणेनास्य मन्त्रस्य सत्त्वक्षेत्रज्ञशब्दार्थत्वेन प्रसिद्धबुद्धिजीवविषयत्वेन व्याख्यातत्वादिति वाच्यम्; पैङ्गिरहस्यब्राह्मणे सत्त्वशब्दस्य 'ऊनं न सत्त्वेष्वधिको बबाधे' इति प्रयोगात्, 'सत्त्वमस्त्री तु जन्तुषु' इति नामानुशासनात् । 'सत्त्वं जीव इति प्रोक्तम्' इति स्मृतेश्च जीवपरत्वात् । क्षेत्रशब्दस्य च–

'प्रकृतेश्च विकाराणां द्रष्टारमगुणान्वितम् ।
क्षेत्रज्ञमाहुर्जीवन्तु कर्तारं गुणसंहितम् ॥'

इति मोक्षधर्मादिवचनैर्ब्रह्मपरत्वात् । अन्यथा 'द्वा सुपर्णा' इति अस्मादुत्तरत्र 'समाने वृक्षे पुरुषो निमग्नो ह्यनीशया शोचति मुह्यमानम्' इत्यादिकमयुक्तं स्यात् । न हि बुद्धौ पुरुषशब्दो मुह्यमानत्वं वीतशोकत्वादिकं च युक्तमिति भावः । **व्यावहारिकं तदिति** । व्यावहारिका-वेदनलक्षणप्रामाण्यमित्यर्थः । न तु प्रामाण्ये व्यावहारिकत्वं तथात्वे तत्त्वावेदनलक्षण-प्रामाण्यस्यापि व्यावहारिकत्वेनाविशेषापातादिति द्रष्टव्यम् । अत एव तत्त्वाविषयत्व इत्यनूदितम् । तस्य **वैय्यर्थ्यादिति ॥** विषयसत्त्वसिद्धेः प्रमाणफलत्वादिति भावः ।

अत्राद्ये– विषयवाक्येनातिसन्निहितवाक्यगतश्रुतिरूपस्वपक्षसाधकोक्तिः । द्वितीये– आत्मशब्दस्यामुख्यार्थत्वशङ्कानिरासाय तदनन्तरवाक्यगतलिङ्गरूपसाधकोक्तिः । तृतीये– रुद्रविषयसमाख्याश्रुतीनां समन्वीयमानबहुलिङ्गविषयत्वेन तत्साधकश्रुतिलिङ्गबाहुल्योपेतत्वेना-नेकत्वेन च प्राबल्यात् तत्पक्षस्यात्युल्बणत्वेन प्रथमनिरस्यत्वे रुद्रपरानुमानपदेन प्रकृतेरपि

(भावबोधः)

ग्रहणसम्भवाद्युगपत्तदुभयपक्षे साधकाभावोक्तिः । जायमानत्वलिङ्गमात्रस्य जीवपक्षसाधकत्वेन तन्निरासस्य प्रधानादिनिरासानन्तर्याज्जीवब्रह्माभेदस्येव प्रधानब्रह्माभेदस्य शङ्काविषयत्वाभावेन भेदप्रतिपादकपञ्चमसूत्रस्य जीवाभेदनिरासकत्वेनैवान्वयाच्च योगविभागस्यावश्यकत्वे जीव-परप्राणभृच्छब्देन वायोरपि ग्रहणसम्भवात् चतुर्थे– तदुभयपक्षे साधकाभावोक्तिः । पञ्चमे– जीवब्रह्माभेदेन जीवब्रह्मत्वाभावसाधकोभयविरोधेनान्यतरेणान्यतरबाधो न युक्त इति शङ्कानिरासाय जीवब्रह्मभेदे अन्यमीशमिति भेदव्यपदेशरूपसाधकोक्तिः । षष्ठे– भेदव्यपदेश-स्यान्यविषयत्वशङ्कानिरासाय तत्प्रकरणस्य ब्रह्मपरत्वोक्तिः । सप्तमे– जीवेश्वरभेदे लिङ्गरूप-साधकान्तरोक्तिरिति सूत्रक्रमः ॥

## भावदीपः

सूत्रे चशब्दादाह ॥ **हेत्वन्तरेणेति** ॥ कर्मफलोपजीवनतद्रहितावस्थानलक्षणभेदकोक्ति-रूपहेत्वन्तरेणेत्यर्थः ॥ **पिप्पलमिति** ॥ अश्वत्थमित्यर्थः । तस्येदाहुरिति वाक्यशेषविरोध-निरासायाह ॥ **अस्वाद्वेवेति** ॥ एकस्तयोः खादति पिप्पलान्नमन्यो निरन्नोऽपि बलेन भूयानित्येकादशस्कन्धवाक्ये अत्तिं विनाप्यदौर्बल्यादिति तात्पर्योक्तिमनुरुध्यार्थमाह ॥ **अन्य ईश्वर इत्यादिना** ॥ गुहानये शुभं पिबतीति वाक्यानुरोधादर्थान्तरमुक्तम् । भाष्योक्तं सूत्रारूढं दर्शयति ॥ **कर्मेत्यादिना** ॥ अत्र श्रुतेर्बुद्धिजीवपरत्वं चन्द्रिकायां निरस्तम् । विस्तृतं च गुरुपादैः श्रुतितात्पर्यकौमुद्याम् । अत्र श्रुतावदनस्यादित्वेन सूत्रेऽप्यदनस्थितिभ्यामित्युक्त्या भाव्यं अत आह ॥ **श्रुतीति** ॥ सूत्रे श्रुत्युक्तक्रमोल्लङ्घनमित्यर्थः । 'अभ्यर्हितं पूर्वम्' 'अल्पाच्तरं पूर्वम्' इति व्याकरणस्मृतेरिति भावः । श्रुतेर्व्यावहारिकभेदपरत्वेन वा व्यावहारिक प्रामाण्येन मिथ्याभेदपरत्वेन वा मिथ्याभेदानुवादित्वेन वाऽन्यथोपपत्तिमाशङ्क्य निराकरोति ॥ **व्यावहारिक इत्यादिना** ॥ व्यावहारिकम् अतत्वावेदकत्वरूपम् । वाचोयुक्तेरित्येकं पदम् । वाक्यप्रयोगस्येत्यर्थः । वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेष्वित्यलुक्समासः ॥ **वैयर्थ्यादिति** ॥ अप्राप्ते शास्त्रमर्थवदिति न्यायादिति भावः । यद्वा अनुवादो ह्यर्थवादवत् स्तुत्यर्थं वा दध्ना जुहोति इतिवत् कचिद्विधानार्थं वा नेह नानास्ति किञ्चन इत्यत्र किञ्चनेतिवन्निषेधार्थं वा । न पक्षत्रयमपि । अदर्शनादित्यर्थः । शङ्ककः स्वाशयं व्यनक्ति ॥ **निषेधायेति** ॥ **तादृशी प्राप्तिरिति** ॥ आनन्दमयनये उक्तदिशेति भावः । अङ्गीकृत्य चेदमुक्तम् । वस्तुतो

(भावदीपः)
भेदमिथ्यात्वमेव न सिद्धं येन तदनुवाद इत्याह ॥ **कुतश्चेति** ॥ नानुमानमतच्छब्दादिति सूत्रमत्रानुवर्त्य तस्यानुमानं भेदमिथ्यात्वे मानं न । कुतः अतच्छब्दात् । मिथ्यात्वविरुद्धभेदसत्यत्वबोधकशब्दादिति वृत्त्यन्तरं मनसि निधायाह ॥ **न चेति** ॥ अनुमानं भेदो मिथ्या भेदत्वादित्यनुमानमित्यर्थः । एतेन सर्वत्र प्रसिद्धेति नयोक्तं 'द्वा सुपर्णा' इत्यादि श्रुतिविरोधाच्चेत्युक्तं विवृतं ध्येयम् । अतच्छब्दादित्यस्य अनुमानमूलभूतभेदमिथ्यात्वबोधकशब्दस्याभावादित्यप्यर्थान्तरमुपेत्याह ॥ **तदभावादेवेति** ॥ **अत इति** ॥ श्रुतेरप्रामाण्यापत्तेर्मिथ्यात्वसाधकाभावात् स्वतःप्रामाण्येन स्वबोध्यस्य सत्यत्वप्राप्तेश्चेत्यर्थः ॥ **तस्मादिति** ॥ आत्मश्रुत्यमृतसेतुत्वलिङ्गरूपसाधकभावात् तच्छब्दरूपबाधकाभावात् परपक्षे साधकाभावात् भेदभेदकयोरुक्त्याऽभेदायोगाच्चेति सर्वसूत्रहेत्वंशार्थः । विष्णुरेवेत्यादि प्रतिज्ञार्थः । परविद्येति भाष्योपसंहारः । अत्र सूत्राक्षरस्वारस्यादिकं चन्द्रिकायां व्यक्तमुक्तम् । तेन कस्यचिन्नूतनस्य दूषणावकाशो नेति ज्ञेयम् ।

## अभिनवचन्द्रिका

तदिदमुक्तं **न तु स्वस्थित्यै तदपेक्षत इति** ॥ यदपि 'श्रुतौ अन्यपदाभ्यां साक्षादेव भेदाभिधानात् लिङ्गेन साधनायोग' इत्यादि । तन्न अन्यशब्दोऽयं बह्वर्थः भिन्न इत्यर्थे वर्तते । तद्यथा अन्यो देवदत्ताद्यज्ञदत्त इति । तथा सङ्ख्यावाची वर्तते । तद्यथा एकोऽत्र घटोऽस्ति इत्याह ॥ **अन्यस्तु नेति** ॥ तद्यः संख्यावाची तस्येदं ग्रहणम् 'तयोरन्यः पिप्पलं स्वाद्वत्ति, अनश्नन्नन्योऽभिचाकशीति' इति वाक्यात् तयोर्मध्य एकोऽत्ति एको नात्तीत्यर्थप्रतीतेः । यद्यपि द्वित्वसङ्ख्ययापि भेदः साधयितुं शक्यः, तथापि भेदशून्येऽपि हरौ विशेषेणापि द्वित्वसङ्ख्यादर्शनात् तत्परित्यागः । न तु श्रुतिप्रतिपाद्यस्य भेदस्य मिथ्यात्वाङ्गीकारे तत्त्वाऽवेदकत्वलक्षणप्रामाण्याऽभावस्याऽऽपादयितुं शक्यत्वेऽपि व्यावहारिकावेदकत्वलक्षणप्रामाण्या भावस्यापादयितुं शक्यत्वेऽपि व्यावहारिकावेदकत्वलक्षणप्रामाण्याभावो नाऽऽपादयितुं शक्यः । श्रुतिप्रतिपाद्यस्य व्यावहारिकत्वे श्रुतेर्व्यावहारिकावेदकत्वस्यावर्जनीयत्वात् । एवं च वेदे यादृशं प्रामाण्यं न तदभाव आपादायितुं शक्यः, यदभाव आपादायितुं शक्यः नास्त्येव तत्प्रामाण्यं वेद इति अप्रामाण्यापादनमयुक्तमित्याशयेन शङ्कते – **तत्त्वावेदकत्वेति** ॥ तत्वावेदकत्वलक्षणप्रामाण्याभावाऽऽपादनं नायुक्तम् । व्यापकनिवृत्त्या व्याप्यस्य व्यावहारिकावेदकत्वलक्षण-

(अभिनवचन्द्रिका)
प्रामाण्यस्यापि निवृत्तिसूचनोपयुक्तत्वादिति परः परिहर्तुमुत्सहेतापि तत्परिहाराय अनयोः प्रामाण्ययोर्व्याप्यव्यापकभावो नास्तीति ज्ञापनाय तत्वावेदकत्वलक्षणप्रामाण्याभावेऽपि व्यावहारिकं तदस्तीत्युक्तम् । एतेन तत्वावेदकत्वलक्षणं प्रामाण्यं नास्ति व्यावहारिकं तदस्तीत्येव वक्तव्यम्, अपिशब्दो व्यर्थ इति परास्तम् ॥ **तत्त्वमसीत्यादीति** ॥ यद्यपीदं वाक्यं न निषेधः, तथापि भेदप्रतियोगिप्रतिपादकत्वान्निषेधोपचारः कृतः ॥ **तदनुवादेनेति** ॥ तत्त्वमस्यादिवाक्येन तदनुवादेन ऐक्यानुवादेन प्राप्तेन निमित्तेन अयं भेदप्रतिपादकत्वेनाऽभिमतो वाक्यविशेषो निषेधः निषेधकार्यकारी किं न स्यादित्यर्थः । एतेन 'द्वासुपर्णा' इत्यादिवाक्येषु निषेधाभावात् निषेधः किं न स्यादिति परास्तम् । **तदौष्ण्यस्यैव मिथ्यात्वसाधकत्वेनेति** ॥ औष्ण्यं मिथ्या प्रतीतत्वात् शुक्तिरजतवदित्यनुमानस्येति भावः । एतेन अग्निरनुष्णः पदार्थत्वात् इत्यस्य मिथ्यात्वाविषयकत्वात् वैषम्यमिति परास्तम् ।

पूर्वपक्षस्तु – रुद्रस्यैवेदं द्युभ्वाद्यायतनत्वं भवेत् । अत्रोक्तप्राणाधारत्वस्य 'प्राणानां ग्रन्थिरसि, प्राणेश्वर' इत्यादिना रुद्रे प्रतीतेः । तथा द्युभ्वाद्यन्तरिक्षायतनत्वस्य च 'रुद्रो वाव लोकाधार' इति तस्मिन्नुक्तत्वात् । मन आयतनत्वस्यापि तस्मिन् 'रुद्रे वै मन ओतं च प्रोतं च' इति श्रुतेः । 'अन्तकः, कृत्तिवासाः, पिनाकी' इत्यादिरुद्रलिङ्गेन एतच्छ्रुतीनां विष्णुपरत्वस्य कथमप्ययोगात् । दृष्टफलविधायकरुद्रवाक्यदृष्टान्तेन तत्सर्वाश्रयत्वप्रतिपादकवाक्यप्रामाण्यानुमानेन तस्य सर्वाश्रयत्वसिद्धिः । अथवा प्रकृतेर्द्युभ्वाद्यायतनत्वं द्युभ्वादीनां प्रकृतिकार्यत्वेन प्रकृतेरेव तदाश्रयत्वस्योचितत्वात्, 'यद्भूतं च, भवच्च, भविष्यच्चेत्याचक्षते आकाश एव तदोतं प्रोतं च' इति श्रुतेश्च दृष्टफलविधायककपिलवाक्यदृष्टान्तेन प्रकृतेः सर्वाश्रयत्वाभिधायककपिलागमप्रामाण्यानुमानाच्च । जीवस्य वा एतद्द्युभ्वाद्यायतनत्वम् । 'अरा इव रथनाभौ संहता यत्र नद्यः स एषोऽन्तश्चरते बहुधा जायमान' इति जीवलिङ्गात् । तस्य जीवत्वादेव तस्य प्राणित्वप्रसिद्धेर्द्युभ्वाद्यायतनत्वस्य सम्भावितत्वात् । वायोर्वा एतत्द्युभ्वाद्यायनत्वम् । विषयीभूतलोकाधारत्वस्य 'वायुना वै गौतमसूत्रेण' इति वायौ श्रुतिसिद्धत्वात्, तस्य प्राणाधारत्वप्रसिद्धेश्च । विष्णोर्द्युभ्वाद्यायतनत्वप्रसिद्धावपि नासावत्रोच्यते । बहुधा जन्मबाधात् । ननु बहुधा जायमानत्वरूपजीवलिङ्गबाधात् नासौ विष्णुः तर्हि परविद्याविषयत्वाख्यविष्णुलिङ्गबाधात् न जीवादयोऽपि इति चेत्, न जीवेशाऽभेदेन विष्णुलिङ्गस्य

(अभिनवचन्द्रिका)
जीवे व्यपदेशासम्भवात् । अतः परविद्याविषयो द्युभ्वाद्याश्रयो विष्णोरितरत्वेन भवद्भिरङ्गीकृतो जीवादिरेवेति तस्यैव अदृश्यत्वादिगुणत्वमिति ।

सिद्धान्तस्तु – विष्णोरेवेदं द्युभ्वाद्यायनत्वम् । 'तमेवैकं जानथात्मानम्' इति आत्मशब्दात् । 'अमृतस्यैष सेतुः' इति मुक्तोपसृप्यत्वव्यपदेशाच्च । ननु विष्णुप्रापकवत् रुद्रप्रकृत्योरपि प्रापकसद्भावात् तयोर्द्युभ्वाद्यायतनत्वं किं न स्यादिति चेत्, न रुद्रादिशब्दानां सावकाशत्वेन 'प्राणानां ग्रन्थिरसि' इत्यादिवाक्यस्य रुद्रपरत्वाऽनिर्णयेनाऽसाधकत्वात् । निरवकाशानां च भस्मधरोग्रादिशब्दानामभावात् । प्रागुक्तसावकाशसाधकसद्भावेऽपि निरवकाशात्मशब्दाभावादेव न जीवो वायुश्च । तत्प्रापकत्वेनाभिमतस्य बहुधा जन्मादेः 'अजायमानो बहुधा विजायत' इति श्रुतेर्विष्णावेव सम्भवात् । ननु किं जीवलिङ्गस्य विष्णुपरत्वप्रतिपादनाऽऽयासेन । जीवस्यैव द्युभ्वाद्यायतनत्वे विष्णोस्तल्लाभसम्भवात् । न च उक्तहेतुविरोधः । जीवेशाऽभेदाभिप्रायेण जीवेऽप्यात्मशब्दोक्तिसम्भवादिति चेत्, न 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमान' इति भेदव्यपदेशात्, 'द्वासुपर्णा सयुजा सखाया' इति कर्मफलात्तृत्वतदभावरूपविरुद्धधर्मव्यपदेशाच्च । ननु जीवस्य कस्माच्चिदीशादन्यत्वमुच्यते न परमात्मनः । अतो न तयोर्भेद इति चेत्, न 'द्वे विद्ये वेदितव्ये' इत्यस्य विष्णुप्रकरणत्वात् । तस्मात् विष्णुरेव द्युभ्वाद्याश्रयः परविद्याविषयश्चेति सिद्धम् ।

## वाक्यार्थमुक्तावली

॥ **हेत्वन्तरेणेति** ॥ न केवलमन्यत्वश्रुतिबलाद्भेदः किं तु लिङ्गादपीत्यर्थः ॥ **संयुक्ताविति** ॥ बिम्बप्रतिबिम्बरूपेणेति भावः । सखायौ परस्परोपकार्योपकारकभाववन्तौ सुपर्णरूपौ सुष्ठुपरमानन्दरूपौ । तस्येदाहुः पिप्पलं स्वाद्वग्र इति वाक्यशेषविरोधपरिहारायाह ॥ **अस्वाद्वेवेति** ॥ ननु द्वासुपर्णेति श्रुतिः बुद्धिजीवविषयिणी । तावेतौ सत्वक्षेत्रज्ञाविति पैङ्गिरहस्यब्राह्मणे सत्वक्षेत्रज्ञशब्दार्थत्वेन प्रसिद्धबुद्धिजीवविषयत्वेन व्याख्यातत्वादिति चेत् न । सत्वक्षेत्रज्ञशब्दयोर्जीवेश्वरविषयत्वात् । अन्यथा सुपर्णावेतावित्यादिभागवतविरोधात् । आत्मानमन्यं च स वेद विद्वानित्युक्तं तत्र ऊनं न सत्वेष्वधिको ववाधे इति जीवे सत्वशब्दप्रयोगात् । सत्वमस्ति हि जन्तुषु इति नामानुशासनात् । 'सत्वं जीव इति प्रोक्त' इति स्मृतेश्च । क्षेत्रज्ञस्तु विष्णुः–

(वाक्यार्थमुक्तावली)

प्रकृतेस्तु विकाराणां द्रष्टारमगुणान्वितम् ।
क्षेत्रज्ञमाहुर्जीवन्तु कर्तारङ्गुणसंयुतम् ॥ इति मोक्षधर्मोक्तेः ।

अन्यथा 'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः' इत्यादिकमयुक्तं स्यात् । न हि बुद्धौ पुरुषशब्दो मुह्यमानत्वं, शोकवत्वादिकं च युक्तमिति भावः ॥ **न चैक्य-वाच्यमित्यर्थः इति** ॥ स्थित्यदनोक्तेरिति भाष्यस्य न चैक्यं वाच्यमिति पूर्वसूत्रभाष्यानु-वृत्तेनान्वय इति भावः । ततश्च स्थित्यदनाभ्यां प्राणभृतो जीवस्य तस्य विष्णोश्च कर्मफलोप-जीवनतद्रहितावस्थानाभ्यामुक्ताभ्यां न च तद्ब्रह्मप्राणभृदिति सूत्रार्थ इति भावः । ननु श्रुतावत्तीत्यदनस्य पूर्वमुक्तत्वेन सूत्रे कुतो व्यत्यासः कृत इत्यत आह ॥ **अत्रेति** ॥ **स्थिति पदस्येति** ॥ अल्पाच्तरमिति स्मृतेरिति भावः । **सत्यो मिथ्या वेति** ॥ व्यावहारिकत्वं व्यवहारविषयत्वमात्रं न तु सत्यत्वमिति वा । सत्यत्वं वेति वेत्यर्थः । व्यावहारिकमिति व्यावहारिकावेदकत्वलक्षणप्रामाण्यमित्यर्थः । अतत्वेति तत्वावेदकत्वाभावे प्रातिभासिका-वेदकत्ववत् व्यावहारिकावेदकस्यापि तत्वावेदकत्वलक्षणप्रामाण्यवाचो घटनाय । युक्तेरित्यर्थः ॥ **भेदमात्रेति** ॥ भेदमात्रविषयत्वेन तत्सत्यत्वविषयकत्वाभावादित्यर्थः ॥ **मिथ्यात्वेति** ॥ ब्रह्मज्ञानातिरिक्तज्ञानबाध्यत्वसाधकत्वेनेत्यर्थः । एतेनेष्टापत्तिरिति निरस्तं तस्य वैयर्थ्यादिति । विषयसत्वविधेः प्रमाणपूतत्वादिति भावः । अत्राद्ये स्वपक्षे श्रुत्युक्तिः द्वितीये लिङ्गोक्तिः तृतीयचतुर्थाभ्यां परपक्षे साधकाभावोक्तिः । अत्मशब्दादिबाधकोक्तिश्च । तत्रापि रुद्रप्रधानविषये श्रुतिसमाख्यायाः पाशुपताद्यागमसमाख्यायाश्च सत्त्वात् प्रधानविषये मुक्तेश्च सत्त्वात् पूर्वपक्ष-स्यात्युल्बणत्वात्प्रथमं तन्निरासः । वायुविषये, 'वायुना वै गौतमम्' इति श्रुतिसमाख्यामात्रस्य जीवविषये जायमानत्वलिङ्गमात्रस्य श्रवणात्तदानन्तर्यं जीवब्रह्माभेदस्येव प्रधानब्रह्मभेदस्य शङ्काविषयत्वाभावेन भेदप्रतिपादकपञ्चमसूत्रस्य जीवाभेदनिरासकत्वेनैवान्वयाच्च योगविभाग-स्यावश्यकत्वेन पञ्चमसूत्रोपक्षेपाय च तदानन्तर्यम् । पञ्चमे चतुर्थोक्तात्मशब्दादिबाधक-निरासायैक्यमाशङ्क्य भेदश्रुत्युपन्यासः । षष्ठे भेदश्रुतेरन्यविषयत्वशङ्कानिरासाय तत्प्रकरणस्य ब्रह्मपरत्वोक्तिः ॥ सप्तमे जीवेश्वरभेदे, लिङ्गरूपसाधकान्तरोक्तिरिति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

ननु श्रुतावदनस्य प्रथममुक्तत्वात् सूत्रस्य श्रुत्यनुसारित्वात् सूत्रे अदनमेव प्रथमं वक्तव्यं

(तत्त्वसुबोधिनी)
इत्यत आह ॥ **अत्र श्रुतीति** ॥ **व्यावहारिकमिति** ॥ व्यावहारिकवेदनलक्षणं प्रामाण्यमित्यर्थः । न तु प्रामाण्ये व्यावहारिकत्वं तथात्वे तत्वावेदनलक्षणप्रामाण्यस्यापि व्यावहारिकत्वेनाविशेषापातादिति द्रष्टव्यम् । नन्वनुमानमेव मिथ्यात्वे मानमत आह । **नचानुमानमिति** ॥ कुतो नेत्यत आह ॥ **स्वस्यैवेति** ॥ **स्वरूपाभिधायकस्यैवेति** ॥ द्वासुपर्णेत्यादेरित्यर्थः ॥ **अन्यथेति** ॥ स्वरूपाभिधायकस्य सत्यत्वानभिधायकत्वे इत्यर्थः । अत्र चाद्ये सूत्रे सन्निहितश्रुतिरूपस्वपक्षसाधकोक्तिः । द्वितीये आत्मशब्दस्यामुख्यार्थत्वशङ्कानिरासाय तदनन्तरवाक्यगतलिङ्गरूपसाधकोक्तिः । तृतीये रुद्रप्रकृतिपक्षे साधकाभावस्य तत्साधकश्रुत्यादीनामन्यपरत्वस्य चोक्तिः । चतुर्थे जीववायुपक्षे साधकाभावोक्तिः । पञ्चमे जीवब्रह्मभेदं अन्यमीशमिति भेदव्यपदेशरूपसाधकोक्तिः । षष्ठे प्रकरणस्य ब्रह्मपरत्वोक्तिः । सप्तमे तत्रैव लिङ्गरूपसाधकान्तरोक्तिरिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

अत्र सूत्रे युक्त्यन्तरमाह ॥ **स्थितीति** ॥ श्रुत्युक्तक्रमानुसारेण हि 'अदनस्थितिभ्याम्' इति वक्तव्यम् । तथा च 'अल्पाच्तरं पूर्वम्' इति न न्यायातिक्रमः स्यादिति भावः ॥ **व्यावहारिकं तदिति** ॥ अतत्त्वावेदकत्वरूपप्रामाण्यम् । वाचोयुक्तेर्घटनायाः ॥ **तादृशी प्राप्तिरिति** ॥ कुवादिप्राप्तिः श्रुतितात्पर्यापरिज्ञानादिना प्राप्तिरूपा कथञ्चित् प्राप्तिरित्यर्थः ।

## वाक्यार्थमञ्जरी

स्थितिः कर्मफलोपजीवनं विनावस्थानम् अदनन्तदुपजीवनन्ताभ्यां जीवब्रह्मणोर्नैक्यमित्यर्थः । कर्मफलभोगानङ्गीकारे गुहाधिकरणविरोध इत्यत आह ॥ **नन्विति** ॥ **क्रमोल्लङ्घनमिति** ॥ तत्रादनस्यैव प्रथममुक्तेरिति भावः ॥ **सत्यो मिथ्या वेति** ॥ व्यावहारिकत्वस्य व्यवहारनिर्वाहकत्वस्य व्यवहारनिर्वाहकत्वव्यवहारकाले प्रतीयमानत्वसाधारण्यादिति भावः ॥ **व्यावहारिकं तदिति** ॥ व्यावहारिकावेदनलक्षणप्रामाण्यमित्यर्थः । न तु प्रामाण्ये व्यावहारिकत्वं विवक्षितं तथात्वे तत्त्वावेदनलक्षणप्रामाण्यस्यापि व्यावहारिकत्वेनाविशेषप्रसङ्गादिति ध्येयम् । वाचोयुक्तेः वाक्प्रयोगस्य ॥ **न दोष इति** ॥ मिथ्याप्रतिपादकत्वमेवाप्रामाण्ये प्रयोजकमिति भावः । वैय्यर्थादनुवादस्य ॥ **निषेधोऽस्तीति** ॥ भेदाभेदयोरन्यनिषेधरूपत्वादिति

(वाक्यार्थमञ्जरी)

भावः । अयं द्वासुपर्णेत्यनेन क्रियमाणः ॥ **अस्तीति** ॥ आनन्दमयनयरीत्येति भावः । अनुमानं 'भेदो मिथ्या भेदत्वात्' इत्यादिभेदस्य मिथ्यात्वं किं प्रमाणबलादङ्गीक्रियते उत तत्सत्यत्वे प्रमाणाभावात् । आद्यं निराकरोति ॥ **न हीत्यादिना** ॥ द्वितीयं निराकरोति ॥ **न च तत्सत्यत्वे इति** ॥ **स्वरूपेति** ॥ भेदस्वरूपेत्यर्थः ॥ **तस्य वैयर्थ्यादिति** ॥ विषय-सत्यत्वसिद्धेः प्रमाणफलत्वादिति भावः । ननु मायामात्रमिदं द्वैतमित्यादि श्रुतेर्भेदमिथ्यात्व-प्रतिपादकत्वात्कथं तदभाव इति चेन्न । मायेति भगवत्प्रज्ञा सैव मानत्राणकर्त्री यस्य मायामात्रमित्यन्यत्राचार्यैस्तस्याः सम्यग्व्याख्याततत्वात् । तदेतदाह ॥ **अलमिति** ॥

॥ इति युभ्वाद्यधिकरणम् ॥

# २. भूमाधिकरणम्

## सूत्रभाष्यम्

'प्राणो वा आशाया भूयान्' इत्युक्त्वा 'यो वै भूमा तत्सुखम्' (छां.उ.७-२३) इत्युक्तेस्तस्यैव भूमत्वप्राप्तिः । 'उत्क्रान्तप्राणान्' (छां.उ.७-१५-३) इत्यादितल्लिङ्गात्प्राणशब्दश्च वायुवाचीत्यतो वक्ति–

**॥ ॐ भूमा सम्प्रसादादध्युपदेशात् ॐ ॥ ८ ॥**

'सम्प्रसादात्' पूर्णसुखरूपत्वात् 'अध्युपदेशात्' सर्वेपामुपर्युपदेशाच्च विष्णुरेव भूमा ।

'सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम् ।
विश्वं नारायणं देवमक्षरं परमं पदम् ॥

विश्वतः परमां नित्यम्' (म.ना.उ.११) इति हि श्रुतिः ।

'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' (बृ.उ.६-४-२) इत्यादिना नोत्क्रमणादिलिङ्गविरोधोऽपि ॥

## सत्तर्कदीपावली

यो वै भूमा तत्सुखम्' इति श्रूयमाणोऽपि भूमा (पुनर्भूत्वा) विष्णुरित्येतदाक्षिप्य समाधीयते **॥ प्राणो वेत्यादिना ॥** प्राणो वा आशाया भूयानिति सन्निहितवाक्यबलात् प्राणशब्देनोक्तो वायुरेव भूमा इति चेन्मैवम् । प्राणशब्दस्य विष्णावप्युपपन्नत्वेन अत्र वायुप्रापकशब्दाभावात् । नन्वस्य प्राणस्योत्क्रमणं श्रूयते 'अथ यद्यप्येनमुत्क्रान्तप्राणान् शूलेन समासं व्यतिषं दहेत् । न चैनं ब्रूयुः पितृहासीति न मातृहासि' इति । उत्क्रमणं मुख्यप्राणस्यैव लिङ्गमिति चेत् । मैवम् । विष्णोरप्युत्क्रमणसंश्रवणात् 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' इति श्रुत्यन्तरे । अतो 'वाग्वाव नाम्नो भूयसी मनो वाव वाचो भूय' इत्यारभ्य सर्वेषामुपर्युपदेशात् 'तत्सुखं नाल्पे सुखमस्ति' इति पूर्णसुखत्वोपदेशाच्च विष्णुरेव भूमा । पूर्णसुखाश्रयत्वं सर्वोत्तमत्वं चान्यत्र विष्णोरेव श्रूयते । 'सहस्रशीर्षं देवम्' इति । विश्वशम्भुवम् । पूर्णसुखास्पदं परमश्चासावश्चेति परमाम् इत्यर्थः । यो वै भूमा तदमृतं स एवाधस्तात्सोपरिष्टात्' इत्यादिना सर्वगतत्वादिधर्मत्वेन व्यपदेशाच्च भूमा विष्णुः न मुख्यप्राणः । अत्र प्राणशब्दस्य मुख्यतया

(सत्तर्कदीपावली)
मुख्यप्राणपरत्वमङ्गीक्रियते । इयदामननादित्यादौ उत्तरत्र प्रतिपादयिष्यमाणत्वादित्यर्थः इत्यनवद्यम् ॥

## तत्त्वप्रदीपिका

'यो वै भूमा तत्सुखं नाल्पे सुखमस्ति, भूमेव सुखम्' इति श्रूयते । तत्र संशयः । किमयं भूमा प्राण उत परमात्मेति । 'प्राणो वा आशाया भूयान्' इत्युक्त्वा 'यो वै भूमा तत्सुखम्' इत्युक्तेः प्राणस्य भूमत्वप्राप्तिः । 'अथ यद्यप्येतानुत्क्रान्तप्राणान् शूलेन समासं व्यतिषं दहेत्, नैवैनं ब्रूयुः, पितृहाऽसि मातृहासि' इत्युत्क्रमणादिलिङ्गादत्र प्राणशब्दो वायुवाची । नहि विष्णोर्व्याप्तस्य देहोत्क्रमणं समस्ति । अत आह– 'भूमा सम्प्रसादादध्युपदेशात्' । 'सम्प्रसादः' पूर्णसुखं, सम्यक्प्रसीदत्यनेन पुरुष इति । पूर्णमेवात्र सुखं विवक्षितम् । 'नाल्पे सुखमस्ति' इत्युक्तत्वात् । गुणगुण्यैक्याद्भूमा विष्णुरिति च युक्तमेव । विश्वतो दर्शनादिकमस्येति विश्वाक्षम् । विश्वशम्भुवं पूर्णसुखस्थानम् । विश्वं प्रविष्टत्वेन वर्तमानम् । नारायणं मुक्तसङ्गव्यक्तं देवं प्रकाशरूपं, 'द्युप्रकाश' इति धातोः । विश्वतः परमं च तदश्चेति विश्वतःपरमाम् । 'विश्वं' पूर्णं गुणैः ॥

## तत्त्वप्रकाशिका

'अत्र प्राणो वा आशाया भूयान्' इत्युपक्रमेण 'विष्णुर्वै देवेभ्यो भूयांस्तस्माद्भूयान्नाम' इति श्रुत्या च वायुविष्णुसाधारणभूमनाम्नो विष्णौ समन्वयप्रतिपादनादस्ति शास्त्रादिसङ्गतिः । श्रुत्यादिसङ्गतिं विषयादिकं च सूचयन् सयुक्तिकं पूर्वपक्षं दर्शयति ॥ **प्राण इति** ॥ आनन्दमयाधिकरणे पूर्णानन्दत्वं विष्णोरुक्तं तच्छन्दोगश्रुतौ भूम्नः प्रतीयते । 'यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखम्' इति । तस्य च भूम्नो विष्णोरितरत्वे प्रागुक्तानन्दमयत्वं चेतरस्यैव प्रसज्येतेत्यवश्यं निर्णेयत्वम् । स भूमाऽत्र विषयः । किं विष्णुरुत वायुरिति सन्देहः । पूर्वोक्तसाधारण्यं सन्देहबीजम् । मुख्यप्राणोऽयं भूमेति पूर्वः पक्षः । अत्र नामवागादि-तारतम्यमाशावसानमुक्त्वा 'प्राणो वा आशाया भूयान्' इति प्राणस्याशोत्तमत्वं चाभिधाय तदुत्तममनुक्त्वा भूम्न आम्नातत्वात् । न च विष्णोरपि भूमत्वस्य श्रुत्यन्तरे प्रसिद्धत्वादत्र वाच्यत्वमिति वाच्यम् । उपक्रमात्समाख्याया दुर्बलत्वात् । अतो वायोरेव भूमत्वात्तस्यैवानन्द-मयत्वमिति भावः । ननु प्राणो वा आशाया भूयानित्युक्तप्राणशब्दस्य 'अत एव प्राण' इत्युक्तरीत्या विष्णुपरत्वाद् विष्णोरेव भूमत्वमित्यत आह ॥ **उत्क्रान्तेरिति** ॥ नायं प्राणशब्दो

(तत्त्वप्रकाशिका)
विष्णुवाची किन्तु वायुवाच्येव । तत्र 'उत्क्रान्तप्राणान् शूलेन समासं व्यतिषन्दहेत्' इत्यादौ प्राणस्योत्क्रमणादिश्रवणात् । तस्य वायावेव सम्भवात् । सर्वगते हरावसम्भवादित्यर्थः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ विष्णुरेवायं भूमा । 'यो वै भूमा तत्सुखम्' इति भूम्नः पूर्णसुखरूपत्वाभिधानात् । नामादीनां सर्वेषामुपरि तदुत्तमत्वेन व्यपदेशाच्चेत्यर्थः । न च वाच्यमत्र भूम्नः सुखरूपत्वमेवोच्यते न तु पूर्णसुखत्वमिति । निरुपपदसुखशब्दमात्रस्यापि पूर्णसुखार्थत्वात् । पूर्णसुखत्वादिकं च कुतो विष्णुत्वनिश्चायकमित्यत आह ॥ **सहस्रेति** ॥ विश्वशम्भुवं पूर्णसुखाश्रयम् । विश्वतः परमां सर्वतः परममकारवाच्यमित्यर्थः । न च सर्वोत्तमत्वं वायोरपि । विरोधादेव । नापि पूर्णानन्दत्वम् । 'अव्यक्तादितृणान्तास्तु विष्णुडानन्दभागिनः' इत्युक्तत्वात् । उपक्रमे प्राणशब्दश्रवणात् कथं भूमा विष्णुरिति चेन्न । प्राणशब्देनापि विष्ण्वङ्गीकारे प्रागुक्तोत्क्रमणादिविरोध इति तत्राह ॥ **तमिति** ॥ सर्वगतस्यापि विष्णो रूपान्तरविवक्षयोत्क्रमणस्य श्रुतिसिद्धत्वात् प्राणपदेन विष्ण्वङ्गीकारेऽपि न लिङ्गविरोध इति भावः । अस्तु वाऽयं प्राणो वायुरेव तथापि न तस्य भूमत्वप्राप्तिः । 'एष तु वा अतिवदति' इत्यादिना प्रश्नाद्यध्याहारेण प्राणाद्विष्णोर्भूयस्त्वमुक्त्वा भूम्न आम्नानात् । न चैतदर्थद्वयं विरुद्धम् । अन्तर्यामिविवक्षया प्राणपदेन विष्णोरुक्तेः 'आत्मन आकाशः सम्भूतः' इत्यादिवत् ॥

## गुर्वर्थदीपिका

उत्क्रान्तप्राणान्, इत्यादि 'तल्लिङ्गात्' इति भाष्ये आदिपदेन अस्मिन्नेव प्रकरणे प्राणस्योक्तं स्वसन्निधानासन्निधानाभ्यामाविपालगोपालं स्वपितृदेहादौ स्नेहजनकत्वाख्यलिङ्गं गृह्यते । विश्वतः परमश्चासावश्चेति समासे सवर्णदीर्घे कृते द्वितीयान्तपदमध्ये पठितत्वादम्प्रत्यये च कृते सोमपामितिवत्परमामिति पदनिष्पत्तिर्ज्ञेया । पुल्लिङ्गविशेष्यस्य विशेषणत्वान्न स्त्रीलिङ्गतया समाधानम् । यद्यप्यत्र 'विश्वशम्भुवम्' इत्यन्तश्रुत्यैव पूर्णसुखत्वं सिद्धम् । अथाप्यत्रोच्यमानं सर्वोत्तमत्वमपि नारायणस्यैवेति सूचनाय शेषोदाहरणम् । एष तु वा अतिवदतीत्यादि-नेत्यत्राऽदिपदेन यः सत्येनातिवदतीति वाक्यशेषः सङ्गृह्यते । प्रश्नादीत्यादिपदेन प्रतिवचनं सङ्गृह्यते । अयमभिसन्धिः । 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति' इति पूर्ववाक्ये प्राणोपासकस्यातिवादित्वमात्रमुक्त्वा 'एष तु वा अतिवदति यः सत्येनातिवदति इत्युत्तरवाक्ये सत्योपासकस्य विशेषार्थकतुशब्देन' ततोऽप्यतिशयितातिवादित्वमुच्यते ।

(गुर्वर्थदीपिका)
अतोऽर्थात्प्राणादपि सत्यनामकविष्णोर्विशेषेणाधिक्यं लभ्यते । एवं चात्रापि पूर्ववत्प्रश्न-प्रतिवचनयोर्न्यायप्राप्तत्वात् । 'अस्ति भगवो नाम्नो भूय इति नाम्नो वाव भूयोऽस्तीति तन्मे भगवन्ब्रवीत्विति वाग्वाव नाम्नो भूयसि' इत्यादाविव 'अस्ति भगवः प्राणाद्भूय इति प्राणाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति सत्यं वाव प्राणाद्भूयः' इति प्रश्नप्रतिवचनयोरध्याहारे कृते स्पष्टं प्राणाद्विष्णोरेवाधिक्यं सिद्ध्यतीति । नन्वेवमपि सत्यनाम्नो विष्णोरेवाधिक्यं सिद्धम् । न तु भूम्न इति चेन्न । अस्मिन्प्रकरणे सत्यविज्ञानमतिश्रद्धानिष्ठाकृतिसुखभूमाऽहमात्मान्तानां दशानां सह पठितत्वात्तेषां च 'सैव हि सत्यादय' इति सूत्रे परस्परमभेदस्य वक्ष्यमाणत्वात्सत्ये उक्तविशेषातिशयस्य भूम्न्यपि न्यायप्राप्तत्वात् ॥

## भाववोधः

प्राणो वा आशाया भूयान्, विष्णुर्वै देवेभ्यो भूयान्, तस्माद्भूयान्नामेत्यादेर्भूमशब्दो अज्ञानां साधारण इति न्यायविवरणस्याभिप्रायम् उपक्रमश्रुतिपदप्रयोगेण दर्शयन्नेव भूमशब्द-स्योभयत्र प्रसिद्धत्वमाह **अत्र प्राणो वा आशाया इति** ॥ श्रुत्या चेत्यस्य समाख्याश्रुत्येत्यर्थः । अत्र यद्यपि भूमशब्दो बहुशब्दात् 'बहोर्लोपो भू च बहोः' इति भावे निष्पन्नः । बहुत्वसङ्ख्या च लोकतो अन्यत्र प्रसिद्धा । तथापि बह्वन्नमित्यादौ बहुशब्दस्य वैपुल्येऽपि लोकेप्रयोगात् ततो निष्पन्नस्य भूमशब्दस्यात्र श्रुतौ 'यो वै भूमा तदमृतम्' 'यो वै भूमा तत्सुखम्' 'स एवाधस्तात्' इत्यादौ धर्मिणि प्रयोगाद् वैपुल्यविशिष्टधर्मिवाचकत्वं तस्योपपद्यत इत्युभयत्र प्रसिद्धत्वाविरोध इत्यभिप्रेत्य वायुविष्णुसाधारणभूमनाम्न इत्युक्तमित्यवधेयम् ।

ननु प्राणो वा इत्युपक्रमाद् विष्णुर्वा इति समाख्याया दुर्बलत्वात् कथं ततः साधारण्यम्? न च विष्णौ प्राणशब्दसमन्वयस्योक्तत्वेन उपक्रमस्य सम्भावितावकाशत्वात् समाख्यास्थ-विष्णुशब्दस्य प्राणे तदनुक्तेर्न समाख्यादौर्बल्यमिति वाच्यम्; तथात्वे समाख्याया निरवकाश-त्वेन उपक्रमात्प्राबल्यात् पुनः साधारण्यानुपपत्तिरिति चेन्न । अन्तराधिकरणेऽदृश्यत्व-लिङ्गेन्द्रादिश्रुत्योः सन्देहबीजत्ववदिहापि उपक्रमसमाख्ययोः प्राबल्याविवेकेनोभयत्र प्रसिद्धि-हेतुत्वसम्भवात् ।

अत एव न्यायविवरणे अज्ञानामित्यस्य न केवलं पूर्वपक्षसिद्धान्तन्यायाननुसन्धातॄणा-

(भावबोधः)

मित्यर्थः, किन्तूपक्रमसमाख्ययोः प्राबल्याद्यविवेकिनामित्यप्यर्थ इति भावः ॥ **श्रुत्यादि-सङ्गतिमिति** ॥ अव्यवहितपूर्वाधिकरणसङ्गतिस्तु 'ब्रह्मैवेदममृतं पुरस्ताद् ब्रह्म पश्चात् ब्रह्म दक्षिणतश्चोत्तरेण' आत्मक्रीड आत्मरतिः इत्यादिना द्युभ्वाद्यायतने उक्तस्य सर्वगतत्वादेः 'स एवाधस्तात् स उपरिष्टात् एवं विजानन्नात्मरतिरात्मक्रीडः यो वै भूमा तदमृतम्' इत्यादिना भूम्नि श्रवणात् भूम्नो विष्णोरन्यत्वे द्युभ्वाद्यायतनमप्यन्यदेव स्यादित्यपि पूर्वाक्षेपेण पूर्वपक्षोत्थानसम्भवादिति ज्ञातव्यम् ॥ **किं विष्णुरिति** ॥ अत्र 'यो वै भूमा तत्सुखम्' इत्युक्तो भूमा किं मुख्यवायुरुत विष्णुरिति चिन्ता । तदर्थं मुख्यशब्दोपर्युपदेशौ किं सुखमात्रा-शोत्तमत्वमात्रपरौ किं वा पूर्णसुखसर्वोत्तमत्वपराविति । तदर्थं भूम्नो विष्णुत्वे प्राणादुपरि अन्यस्य भूयस्त्वानुक्तिः प्रश्नाद्यध्याहाराभावपक्षो किं न युज्यत उत युज्यते । तदर्थं प्राणो वा आशाया भूयानित्युक्तः प्राणः किं मुख्यवायुरुत विष्णुरिति । तदर्थम् उत्क्रान्तप्राणानित्युक्तो-त्क्रमणं किं विष्णावनवकाशं पूर्णानन्दत्वं नाम वागादिसर्वोत्तमत्वं च वायौ सावकाशमुत विपरीतमिति । तदर्थं पूर्णानन्दत्वादेर्विष्णुमात्रनिष्ठत्वे उत्क्रमणस्य विष्णौ सावकाशत्वे च प्रमाणं नास्त्युतास्तीति । तथा प्राणो वा इत्युक्तप्राणस्य मुख्यवायुत्वपक्षेऽपि किं प्राणादन्यस्य भूयस्त्वानुक्तिरुत तदुक्तिरिति । तदर्थं प्राणाद्वाव भूयोऽस्तीति प्रश्नप्रतिवचनाद्यध्याहारो न कर्तव्य उत कर्तव्य इति । तदर्थमध्याहारज्ञापकं नास्त्युतास्तीति ॥ **आशावसानमुक्त्वेति** ॥ अनेन प्राणो वा आशाया भूयानित्युक्त्वेति भाष्यन्यायविवरणाभ्यां साक्षादाशाशब्दवाच्य-सरस्वत्युत्तमत्वरूपा युक्तिरुक्तेत्युक्तं भवति । अन्यथा, अस्य प्राणस्य अनुक्तियुक्त्या भूमत्व-प्राप्तावपि वायुत्वापत्तेरिति भावः । अत एव प्रागुक्तं सयुक्तिकमिति ॥ **तदुत्तममनुक्त्वेति** ॥ अनेन प्राणाद्भूयसोऽनुक्तिरिति न्यायविवरणांशो व्याख्यातो भवति ॥ **पूर्णसुखरूप-त्वाभिधानादिति** ॥ सम्यक् प्रसीदतीत्यनेन व्युत्पत्त्या सम्प्रसादशब्दः पूर्णसुखरूपत्वाभिधायक इति भावः । उपरीत्यस्यैवार्थ उत्तमत्वेनैवेति । तथा च सौत्रा'धि'शब्दव्याख्यानरूपत्वमुपपद्यत इति भावः ॥ **सर्वतः परममकारवाच्यमित्यर्थ इति** ॥ अनेन परमामित्यत्र परमश्चासावश्चेति वि[illegible] । सवर्णदीर्घेण रूपसिद्धिरित्युक्तं भवति । **विरोधादेवेति** ॥ विष्णुवायोरुभयोः स[illegible]नमत्वस्यायोगादिति भावः । अत एव पूर्वं प्रतिज्ञावाक्ये वायोरपीत्यपिशब्दः । यद्वा यथा, विष्णोः स्वेतरसर्वोत्तमत्वं तथा वायोरपि न स्वेतरसर्वोत्तमत्वमिति । न च सर्वोत्तमत्वं वायोरपि स्यादित्यर्थः । अत्र अपिशब्दः सम्भावनाज्ञापनार्थः । कुत इत्यतो विरोधादेवेत्युक्तम् । कुत्रापि

(भावबोधः)

श्रुत्यादौ वायोः स्वेतरविष्ण्वादिचेतनादिसर्वोत्तमत्वस्यानुक्तिलक्षणविरोधादेवेति तस्यार्थः । अनेन प्राणस्य विष्णोः सकाशाद् भूयस्त्वानुक्तिरिति न्यायविवरणमुक्ततात्पर्यकं भवतीति ज्ञातव्यम् । 'अव्यक्तादितृणान्तास्तु विष्णुडानन्दभागिनः' इत्युक्तत्वादिति । अनेन प्राणाद्विष्णोर्भूयस्त्वोक्तिश्चेति न्यायविवरणांशो व्याख्यातो भवति । 'लक्षणं परमान्दो विष्णोरेव विशेषणम्' इति पूर्वार्धसहितेनानेन प्राणाद्विष्णोः परमानन्दत्वलक्षणं भूयस्त्वस्य उक्तत्वात् । अत एव स्वकृतमुपपादनं न्यायविवरणमूलकमिति ज्ञापयितुं सूत्रभाष्ययोरुक्तक्रमं विहाय पूर्णानन्दत्वसर्वोत्तमत्वयोः न्यायविवरणानुसारेण व्युत्क्रमेणोपपादनम् । परमानन्दत्वरूपभूयस्त्वे प्रमाणोदाहरणश्च कृतम् ।

ननूपक्रमगतप्राणशब्दस्य विष्णुपरत्वे सिद्धे भवेद्विष्णोर्भूमत्वं तदेव कुत इत्यत आह ॥ **अनन्तरमन्यमनुक्त्वेति** । अनेनापि प्राणस्य विष्णोः सकाशाद् भूयस्त्वानुक्तिरिति न्यायविवरणमुक्ततात्पर्यकं भवति । अस्मिन् व्याख्याने तदक्षरार्थस्तु प्राणस्य विष्णोरिति सामानाधिकरण्यम् । भूयस्त्वेत्यतः पूर्वमुपन्यस्येति शेषः । तथा च पूर्वपक्षे प्राणस्य वायुत्वमङ्गीकृत्य तस्मादन्यस्य भूयस्त्वानुक्तिर्या वायोर्भूमत्वे युक्तिरिति । तथा च 'ता एव बलवत्यस्तु' इत्यनुव्याख्यानमपि समञ्जसं भवति । 'च'शब्देन एष तु वा अतिवदति । यः सत्येनातिवदतीति प्राणाद् विष्णोर्भूयस्त्वोक्तिश्चेति । समग्रन्यायविवरणाभिप्रेतं पक्षान्तरमाह ॥ **अस्तु वेति** ॥ न्यायविवरणे 'च' शब्देनेत्यस्यानुक्तिश्चेत्यनुव्याख्यानगत 'च'शब्देनेत्यर्थः । न्यायविवरणे पक्षान्तरेऽपि उक्तयुक्तिः 'व्यतिहारो विशिषन्ति हीतरवत्' इति सूत्रानुरोधेनेति द्रष्टव्यम् । न्यायविवरणोक्तहेतुं विवृणोति ॥ **एष तु वा अतिवदतीत्यादिनेति** । ज्ञापकेनेति शेषः । आदिपदेनैवं विजानन्नतिवादी भवतीति प्राणवादिनोऽतिवादित्वमात्रप्रतिपादकवाक्यग्रहणम् । प्रश्नाद्यध्याहारप्रकारस्तु 'व्यतिहार' इति सूत्रव्याख्यानावसरे स्पष्टं वक्ष्यमाणत्वान्नात्र प्रपञ्चित इत्यवधेयम् ॥ **भूयस्त्वमुक्त्वेति** ॥ अनेन 'अध्युपदेशात्' इति सूत्रांशो न्यायविवरणे व्याख्यात इत्युक्तं भवति । एतदर्थद्वयं न विरुद्धमिति । प्राणशब्दस्य विष्णुवाचकत्वं वायुवाचकत्वमित्युक्तार्थं द्वयमित्यर्थः । अन्तर्यामिविवक्षयापि 'अहं मनुरभवं सूर्यश्च' इत्यादिवन्नेत्याह ॥ **आत्मन आकाशः सम्भूत इत्यादिवदिति** ॥ तथा च 'प्राणो वा आशाया भूयान्' इत्यत्र विष्णुवाय्वोरुभयोरपि प्रतिपाद्यत्वेनान्तर्यामिविवक्षया प्राणशब्दवाच्यस्य भूमत्व-

(भावबोधः)

वचनमिति 'च'शब्देनेत्यादिन्यायविवरणस्य प्राणस्येति न्यायविवरणेन तमुत्क्रान्तमिति भाष्येण च न विरोध इत्यर्थः । अनेन 'इयदामननात्' इत्यादिवक्ष्यमाणसूत्रादिना विरोधः परिहृतो भवति । भाष्ये सर्वगतत्वादीत्यादिपदविवरणार्थं 'यत्र नान्यत्पश्यति' इत्यादिकमुदाहृतमिति ज्ञातव्यम् ।

## भावदीपः

न्यायविवरणोक्तरीत्या साधारण्यं व्यनक्ति ॥ **प्राणो वा इति** ॥ तस्मात् देवेभ्यो भूयस्त्वादित्यर्थः । समाख्यायाः प्रक्रमाद्दौर्बल्येऽपि साभ्यासत्वेन सोपपत्तिकत्वेन च प्राबल्यात्साधारण्यमविरुद्धम् । अत एव तस्माद्भूयान्नामेत्यन्तोक्तिः । भूमभूयश्शब्दयोरैकार्थ्यादिति भावः । न्यायविवरणे भूमशब्दोऽज्ञानां साधारण इत्यज्ञपदप्रयोगेऽपि तस्य पूर्वोत्तरपक्षन्यायानुसन्धानहीनानाम् इत्यर्थत्वात् तस्य सर्वनयसाधारण्यादिहाज्ञानामिति नोक्तम् । भूमशब्दस्य अध्यात्मसम्बन्धभूमा भूम्नः क्रतुवज्ज्यायस्त्वमित्यादौ बाहुल्यरूपधर्मवाचित्वेन प्रयोगेऽपीह धर्मधर्मिणोरभेदविवक्षया पूर्णरूपधर्मिपरत्वमिति मत्वोक्तम् ॥ **भूमनाम्नो विष्णाविति** ॥ अधिकं चन्द्रिकायाम् । इत्यन्तभाष्यं सङ्गतिपरत्वेन तावद्व्याकुर्वन् यो वै भूमा तत्सुखमित्युक्तेरित्येतस्य भावार्थमाह ॥ **आनन्दमयेति** ॥ **छन्दोगेति** ॥ सप्तमेऽध्याये 'यो वै भूमा तत्सुखम्' इति सुखपदेनोक्तं पूर्णं सुखमिति । जडे अप्रसक्त्या निषेधायोगात् । अल्पेऽपूर्णे चेतने सुखं नेति वक्तव्ये तत्र स्वरूपसुखनिषेधे बाधाद्धर्मान्तरेण वाक्यशेषादिति न्यायेनासङ्कुचितपूर्णसुखनिषेध एव वाच्य इति तदन्यथानुपपत्या तत्सुखमित्युक्तस्य पूर्णसुखत्वलाभ इत्युपेत्य टीकायां शेषोक्तिः । अवशिष्टकृत्स्नभाष्यभावमाह ॥ **तस्य चेति** ॥ वक्ष्यमाणदिशोत्क्रमणलिङ्गेन निरवकाशप्राणश्रुतिसामानाधिकरण्यात् विष्णोरितरत्वे प्राणत्वे सतीत्यर्थः । यो वै भूमा तत्सुखमित्युक्तेरित्यस्य तात्पर्यम् ॥ **प्रागुक्तेत्यादि** ॥ इति सङ्गति सम्भवादित्यर्थः ।

तदेव भाष्यं पूर्वपक्षतद्युक्तितत्फलोक्तिपरत्वेन व्याकुर्वन् तस्यैव भूमत्वप्राप्तिरिति प्रतिज्ञांशार्थमाह ॥ **मुख्येति** ॥ प्राणपदस्य हरावपि भावात् मुख्येत्युक्तिः । कुत इत्यतः तत्र हेतुत्वेनाध्युपदेशादित्येतद्व्यावर्त्योक्तिपरमुक्त्वेत्यन्तभाष्यं व्याचष्टे ॥ **नामेति** ॥ नामवाङ्मनस्संकल्पचित्तध्यानविज्ञानबलान्नापस्तेज आकाशस्मराशाशब्दितान् उषः स्वाहापर्जन्यमित्राग्नि-

(भावदीपः)

वरुणविधुप्रवहानिरुद्धप्राणेन्द्रोमारुद्रवाणीरूपदेवान् नारदसनत्कुमारप्रश्नोत्तराभ्याम् उत्तरोत्तरातिशयितत्वेनोक्त्वेत्यर्थः । एतच्च तदुत्तममनुक्त्वेति वक्ष्यमाणानुक्तिरूपयुक्तेर्निरवकाशत्वायोक्तम् । तथा च विवरिष्यामः । इत्युक्त्वेत्यस्य कर्मकारणं निष्कृष्याह ॥ **प्राणस्येति** ॥ एतच्च प्राणस्य मुख्यप्राणत्वेनानुक्तिर्बाधिकेति वक्तुम् । ननु मध्येऽन्योक्त्यापि भूम्न उक्तिसम्भवान्नेदं भूम्नः प्राणत्वसाधकमित्यतः प्राणो वा आशाया भूयानित्युक्त्वा प्राणाद्भूयसोऽनुक्तिरिति न्यायविवरणोक्तं संयोजयति ॥ **तदुत्तममिति** ॥ यदीह नामादिभ्यो वागादिवत् प्राणाद्भूमाऽन्यः स्यात्तदाऽस्ति भगवो नाम्नो भूयः इत्यादिप्रश्नवत् वाग्वाव नाम्नो भूयसीत्यादिप्रतिवचनवच्च अस्ति भगवः प्राणाद्भूय इति प्रश्नः भूमा वाव प्राणाद्भूयानिति प्रतिवचनं च स्यात् । भूम्नः सर्वोत्तमत्वार्थमेव नामवागादितारतम्यस्य प्रक्रान्तत्वात् । न च यदर्थमन्यत्प्रक्रान्तं तदनुक्तिर्युक्तेति भावः । निरवकाशानुक्तिबलात् भूमा प्राण एव । भूम्नः प्राणत्वे तु नानुक्तिर्बाधिका । प्राणो वा आशाया भूयानित्युक्तत्वादिति भावः । भूमप्राणयोर्मध्ये सत्यं त्वेव विजिज्ञासितव्यमित्यादिना सत्यविज्ञानमतिश्रद्धानिष्ठाकृतिसुखानां वस्तूनामुक्तत्वेऽपि तेषां सैव हि सत्यादय इत्यग्रे वक्ष्यमाणादिशा भूमाऽभिन्नत्वात्तदुत्तममनुक्त्वे(त्युक्तं)ति युक्तम् । श्रुत्यन्तरे विष्णुर्वै देवेभ्य इत्यत्र ॥ **उपक्रमादिति** ॥ न च समाख्यापि साभ्यासत्वेन सोपपत्तिकत्वेन च प्रबलेति शङ्क्यम् । निरवकाशानुक्तिसचिवस्य बलवत्त्वादिति तात्पर्यार्थः ॥ **अत इति** ॥ निरवकाशानुक्तिसहितोपक्रमादित्यर्थः । यो वै भूमेति वाक्यतात्पर्यम् ॥ **तस्यैवेति** ॥ एवं प्राणाद्भूम्नोरेकप्रकरणत्वं अथापि भूमा विष्णुः स्यादित्याशङ्कापूर्वम् उत्क्रान्तेत्यादिभाष्यं व्याचष्टे ॥ **नन्विति** ॥ **इत्युक्तरीत्येति** ॥ यद्यपि तत्र निरवकाशलिङ्गबलेन प्राणश्रुतेर्वैष्णवत्वं निर्णीतम् इह च तन्नास्ति । तथापि जीवनहेतुत्वादिप्राणपदप्रवृत्तिनिमित्तस्य हरौ पुष्कलत्वेन अन्यगतस्य तदधीनत्वाल्पत्वाभ्यां विष्णौ महायोगविद्वद्रूढ्युक्त्या विष्णौ मुख्यत्वस्योक्तत्वात् तत्त्याजकस्येहाभावादत्रापि प्राणपदस्य वैष्णवत्वमिति शङ्काशयः । भाष्ये चोऽवधारणे भिन्नक्रम इति मत्त्वा तदर्थं व्यनक्ति ॥ **नायमिति** ॥ **उत्क्रान्तेति** ॥ उत्क्रान्तः प्राणो येषां तान् उत्क्रान्तप्राणान् मातापित्रादीन् साकल्येनैकदेशेन (समासं समासेन सङ्कोचेन व्यतिषं विलुण्ठ्य सामस्त्येनेति यावत्) शूलेन दहेत् । नैनं ब्रूयुः पितृहासीति न मातृहासीत्यादौ वाक्ये इत्यर्थः ॥ **सर्वगत इति** ॥ अदृश्यत्वादिनये सर्वगतं सुसूक्ष्ममिति सर्वगतत्वगुणस्य समन्वितत्वादिति भावः ॥ आकाङ्क्षाक्रमेण भाष्यं व्याचष्टे ॥ **विष्णुरेवेति** ॥ तत्त्वित्यनुवृत्तस्यार्थोऽयम् ।

(भावदीपः)

सम्यक्प्रसीदत्यनेन पुरुष इति तत्वप्रदीपदर्शितव्युत्पत्तिं हृदि कृत्वा भाष्ये सम्प्रसादादित्येतत् पूर्णसुखरूपत्वादिति व्याख्यातम् । तत् श्रुतौ केन लब्धमित्यत आह ॥ **तत्सुखमितीति** ॥ तस्य भूमनिष्ठत्वद्योतनाय यो वै भूमेत्यंशोक्तिः । अर्थोक्तिपूर्वं भाष्यपदमनुवदति ॥ **नामादीनां सर्वेषामिति** ॥ उपरीत्यनूद्यार्थमाह ॥ **तदुत्तमत्वेनेति** ॥ प्राणभूम्नोर्द्वयोरपि विष्णुत्वमिति भाष्यपक्षे प्राणान्तर्यामित्वेनैव प्राणपदेन विष्णोर्गृहीतेर्नामादिप्राणान्तात् सर्वस्मादुत्तमत्वम् । यदा तु प्राणस्य वायुत्वं भूम्न एव तु विष्णुत्वमिति न्यायविवरणादिपक्षस्तदापि प्रश्नाद्यध्याहारेण सर्वस्मादुत्तमत्वं प्राप्तमिति नासिद्धो हेतुरिति भावः । उत्तरसूत्रस्थचकारोऽत्राप्याकर्षणीय इति भावेनाह ॥ **व्यपदेशाच्चेति** ॥ तथा च सम्प्रसादात् प्राणादधि उपरि उपदेशादिति पररीत्या एक एवायं सौत्रो हेतुरिति न भ्रमितव्यमिति भावः ॥ **पूर्णसुखार्थत्वादिति** ॥ मुख्यामुख्ययोर्मुख्ये सम्प्रत्यय इति न्यायात् । मुख्यस्य निर्विशेषेण शब्द इति स्मृतेर्नाल्पे सुखमस्तीति वाक्य-शेषबलाच्च सङ्कोचकापवादकस्याभावे पूर्णसुखलाभादिति भावः । पूर्वपक्षिणाऽऽक्षिप्तोऽप्ययं हेतुस्तत्प्रापकखण्डनेन स्थिरीभविष्यतीति भावः ।

यद्वा नामादिप्राणान्तेभ्यः सर्वेभ्योऽप्युत्तमत्वेनोपदेशादिति निरवकाशहेतुसाहित्यान्नै-तदन्यशङ्कार्हमितिभावेन सम्प्रसादादित्युक्तिः । अत एव भाष्ये चशब्दः ॥ **सर्वतः परममकार-वाच्यमिति** ॥ परमश्चासावश्चेति विग्रह इति भावः । अनेन सर्वोत्तमत्वमुक्तम् । परममिति द्राविडपाठेऽपि आन्ध्रपाठानुरोधात् परमामित्युक्तिः । शिष्टश्रौतवदार्थस्तु विश्वतो दर्शनादिक-मस्येति विश्वाक्षम् । विश्वं प्रविष्टत्वेन वर्तमानम् । नारायणं मुक्तसन्धाश्रयम् । देवं प्रकाश-रूपम् । विश्वं गुणैः पूर्णमिति तत्वप्रदीपे व्यक्तः । द्वितीयान्तस्य तद्विश्वमुपजीवतीति कर्तृक्रियाभ्यामग्रे श्रुताभ्यामन्वयः ।

ननु श्रुत्यन्तराद्विष्णोरिव निरवकाशलिङ्गोपेतप्राणोपक्रमात् प्राणस्याप्यस्तु सर्वोत्तमत्वं पूर्णानन्दत्वं चेत्याशङ्क्याऽऽह ॥ **न चेति** ॥ **विरोधादिति** ॥ अन्योन्यापेक्षयाऽन्योन्यस्य परावरत्वप्राप्तेरिति भावः ॥ **इत्युक्तत्वादिति** ॥ अन्तरनये सुखविशिष्टेति सूत्रभाष्य इत्यर्थः । अनुक्तिसहितस्यैवोपक्रमस्य भूम्नः प्राणसाधकत्वादाह ॥ **अनन्तरमिति** ॥ **रूपान्तरेति** ॥ सर्वरूपाणां सर्वगतत्वेऽप्युत्तरनये वक्ष्यमाणरीत्याऽणुत्वस्यापि सर्वरूपेषु सत्वेऽपि यस्मिन् देहस्थादिरूपे महत्त्वं शक्त्यात्मनाऽस्ति तादृशरूपे क्रियावत्त्वस्यापि सम्भवात् श्रुतिसिद्ध-

(भावदीपः)

त्वाच्चेत्यर्थः । स्पष्टमुपपादितमेतच्चन्द्रिकायाम् । नन्वेवमत्र भाष्ये प्राणभूम्नोरेकत्वमुपेत्य उत्क्रमणं कथञ्चित्समाधाय द्वयोर्विष्णुतोक्तौ एष तु वा अतिवदतीति तुशब्दयोगः आशाशब्दोक्त-सरस्वतीतो मुख्यवायोरुत्तमत्वमनुक्त्वा विष्णोरेव तदुक्त्ययोगश्च । इयदामननादित्यादिनयैः 'आशा सरस्वती प्रोक्ता तत्प्रकृष्टसुखत्वतः । प्राण इत्युच्यते वायुः सर्वे त्वेते दशोत्तरा' इत्यादिच्छान्दोग्यभाष्येण च विरोध इत्यतः एष तु वा अतिवदति यः सत्येनातिवदतीति प्राणाद्विष्णोर्भूयस्त्वोक्तिश्चेति न्यायविवरणानुरोधेन प्राणभूम्नोर्भेदमुपेत्याह ॥ **अस्तु वेति** ॥ अन्यथा प्राणपक्ष एव प्राणस्य विष्णोः सकाशाद् भूयस्त्वोक्तिर्न्यायविवरणोक्ता बाधिका । अध्याहारस्यापि कल्पकाभावेनानवकाशाच्चेति भावः ॥ **इत्यादिनेति** ॥ ज्ञापकेनेति शेषः । पूर्वत्र प्राणवादिनोऽतिशयितवस्तुवादित्वमुक्त्वा एष तु वा अतिवदति यस्सत्येनातिवदतीति सत्याख्यवस्तुवादिनः प्राणवादिनोऽप्यतिशयितवस्तुवादित्वोक्त्या तु शब्देनाध्याहारो ज्ञाप्यते । सत्यभूम्नोरभेदश्च सैव हीत्यादावग्रे व्यक्त इति भावः ॥ **प्रश्नादीति** ॥ व्यक्तमेतत्तृतीये व्यतिहारो विशिंषन्ति हीतरवदित्यत्र । तेनास्यापौनरुक्त्यमपि चन्द्रिकायां व्यक्तम् । भाष्योक्तेरभिप्रायं वक्तुमाह ॥ **न चैतदिति** ॥ **अन्तर्यामीति** ॥ प्राणशब्दस्य वायुपरत्वेऽपि आत्मन आकाशः सम्भूत इत्यादावाकाशादिशब्दैरिवान्तर्यामिविवक्षया भाष्ये प्राणपदेन विष्णोरुक्तेरित्यर्थः । वक्ष्यते च कारणत्वेनेत्यत्राकाशादिशब्दानामन्यपरत्वेऽपि विष्णुपरत्वम् ॥

## अभिनवचन्द्रिका

**अत्र प्राणेति** ॥ 'उपक्रमेण' इति स्वरूपकथनार्थम् । साधारण्यव्युत्पादनस्य श्रुतिद्वयोप-न्यासमात्रसाध्यत्वात् ॥ **तच्छन्दोगश्रुताविति** ॥ अनेनैतदधिकरण प्रतिपाद्यस्याऽऽनन्द-मयाधिकरणप्रतिपाद्यस्य च पूर्णानन्दत्वेन प्रतीयमानत्वम्, आनन्दमयाधिकरणतच्छ्रुतिभ्यां अस्याधिकरणस्य सङ्गातिरित्युक्तमिति बोध्यम् ॥ **अत्र नामेति** ॥ अत्र यद्यपि प्राणमभिधाय तदुत्तममनुक्त्वा भूम्न आम्नातत्वात् मुख्यप्राणो भूमेत्येव वक्तव्यम् । मुख्यप्राणो भूमेति पूर्वपक्षं प्रति एतन्मात्रस्यैवोपयुक्तत्वात्, तथापि यत्प्राणोक्त्यनन्तरं भूमाऽऽम्नातः स प्राणो मुख्य एव कुतः, विष्णुरेव किं न स्यादित्याशङ्कानिरासाय सरस्वतीपतित्वरूपप्राणलिङ्गप्रदर्शनाय प्राणस्य आशाया भूयानिति अग्शोत्तमत्वं चाऽभिधायेत्युक्तम् । आशाशब्देन सरस्वतीविवक्षितेति कुतो विज्ञेयं श्रीरेव विवक्षिता किं न स्यादित्याशङ्कापरिहाराय नामवागादितारतम्यम् आशावसान-

(अभिनवचन्द्रिका)

मुक्त्वेत्युक्तम् ॥ **समासं व्यतिषं दहेदिति** ॥ समासमिति क्रियाविशेषणम् । वि अति समित्युपसर्गत्रयम् । ततश्च समासं यथा भवति तथा सङ्कुच्येति यावत् । पित्रादीन् दहेत्, तदा, एनं दाहकं पितृहा वै त्वमसीत्यादिकं न ब्रूयुरित्यर्थः । व्यतिषमित्यस्य व्यत्यस्येत्यर्थ इत्यप्याहुः । **पूर्णसुखरूपत्वाभिधानादिति** ॥ नन्विदमत्रायुक्तं वर्तते । किमत्रायुक्तं वर्तते । पूर्णसुखरूपत्वाभिधानात् विष्णुरेवायं भूमेति अन्योन्याश्रयात् । तथाहि प्राक् भूम्नो विष्णोरितरत्वे आनन्दमयत्वस्याऽऽक्षिप्तत्वेनानन्दमयत्वसिध्यर्थमेव भूमत्वस्य साध्यमानत्वात् भूमत्वसिद्धौ पूर्णसुखत्वसिद्धिः । पूर्णसूखत्वसिद्धौ भूमत्वसिद्धिरिति चेत् ।

संस्तुत्य चरणौ सत्यनिधेः सम्यग्जगद्गुरोः ।
दुर्घटस्यापि चोद्यस्य वक्ष्येऽभिनवमुत्तरम् ॥

तथा हि ॥ भूम्नः विष्णोरितरत्वे प्रागुक्तानन्दमयत्वस्यैवाक्षिप्तत्वेन पूर्णसुखरूपानन्दमयत्वस्य विष्णुलिङ्गत्वानपायात्, निरवकाशेन पूर्णसुखत्वेन भूम्नो विष्णुत्वं प्रसाध्यते नानन्दमयाधिकरणोक्तानन्दमयत्वं विष्णोरेव नान्यस्येति साधने बाधकाभावात् । न चास्य निरवकाशत्वमसिद्धमिति वाच्यम् । 'अव्यक्तादितृणांतास्तु विप्रुडानन्दभागिन' इति अन्येषां पूर्णसुखत्वनिषेधात् ॥ **नामादीनां सर्वेषामिति** ॥ नन्वसिद्धो हेतुः 'प्राणो वा आशाया भूयान्' इति प्राणस्याशोत्तमत्वाभिधायकवाक्यवत् भूम्नो नामादिसर्वोत्तमत्वाभिधायक 'भूमा वा नामादिभ्यः सर्वेभ्यो भूयान्' इति वाक्यस्यादर्शनादिति चेत्, सत्यम् इह भूमा वा नामादिभ्यः सर्वेभ्यो भूयान्' इति वाक्यं नास्ति, तथापि प्राणवादिनोऽतिवादित्वमुक्त्वा, एष तुवा अतिवदति यः सत्येनाऽतिवदति' इति तु शब्देन प्राणवादिनः सकाशात् सत्याख्यभगवद्वादिनो विशेषाभिधानेन तस्य नामादिसर्वोत्तमस्यैवासिद्धेः । परमश्चासौ अश्चेति विग्रहमभिप्रेत्य 'विश्वतः परमाम्' इत्येतदनूद्य व्याचष्टे ॥ **विश्वतः परमामिति** ॥ **अस्तु वेति** ॥ 'अस्तु वा' इत्ययं निपातसमुदायः अथवेत्यर्थे वर्तते । एतेन अस्तु वा' इत्यस्याङ्गीकारवादत्वेनाऽपसिद्धान्तत्वात् 'न चैतदर्थद्वयं विरूद्धम्' इति विरोधमाशङ्क्य परिहाराभिधानमयुक्तमिति परास्तम् ॥ **एष तु वेति** ॥ 'एष तु वा अतिवदति' इत्यादिना लिङ्गेन गम्यमानेन प्रश्नाद्यध्याहारेणेत्यर्थः ॥ **न चैतदर्थद्वयं विरूद्धमिति** ॥ 'प्राणशब्देन विष्णोरुक्तत्वात्' इति प्राणपदव्याख्यानं च विरुद्धमित्यर्थः । तथा हि विष्णोर्निरवधिकसर्वोत्तमत्वेन प्रश्नाद्यध्याहाराऽ-

(अभिनवचन्द्रिका)

सहिष्णुत्वात् प्राणस्य तु निरवधिकसर्वोत्तमत्वाभावेन तदुत्तमत्वसद्भावात्, प्रश्नाद्यध्याहार-सहिष्णुत्वादिति । सत्यं निरवधिकोत्तमत्वात्, तदपेक्षया उत्तमो नास्तीति, तथापि प्रश्नाद्य-ध्याहारो न युज्यत' इति गूढाभिसन्धिरुत्तरमाह ॥ **अन्तर्यामिविवक्षयेति** ॥ स्वाभिसन्धि-मुद्घाटयितुं दृष्टान्तमाह ॥ **आत्मन आकाशः सम्भूत इत्यादिवदिति** ॥ भूताकाशवत् अन्तर्नियामकस्य हरेः उत्पत्तिविधुरत्वेऽपि प्रादुर्भावमात्रविवक्षया 'आत्मन आकाशः सम्भूत' इत्यादौ सम्भूतत्वव्यपदेशवत् इहापि प्राणवद्धरेरुत्तमाभावेऽपि प्राणान्तर्यामिरूपापेक्षया मूल-रूपस्य स्वेच्छैयैवाऽनुग्रहकर्तृत्वरूपविशेषसद्भावेन तदभिप्रायेण प्रश्नाद्यध्याहारेणोत्तमाभिधानं युज्यत इति भावः । एतेन विष्णोः प्राणपदवाच्यत्वेन विष्णुग्रहणसम्भवात् अन्तर्यामिविवक्षयेति व्यर्थमिति परास्तम् ।

पूर्वपक्षस्तु – अयं भूमा मुख्यप्राणो भवेत् । प्राणस्योत्तमत्त्वमुक्त्वा' तदुत्तममनुक्त्वा भूम्न आम्नातत्वात् 'शूलेन समासं व्यतिषं दहेत्' इति उत्क्रमणश्रवणाच्च । न चेदं लिङ्गं विष्णाव-वकाशमर्हति । सर्वगतत्वात् । ततश्च आनन्दमयोऽपि स एवेति ।

सिद्धान्तस्तु – विष्णुरेवायं भूमा । पूर्णसुखत्वात् । तस्य चान्यत्र निरवकाशत्वात् । किं च अस्य भूम्नः सर्वेषामुपर्युपदेशः श्रूयते । न चासावन्यत्रावकाशं लभते । न चोपक्रमे प्राण-शब्दश्रवणात्कथमसौ विष्णुरिति वाच्यम् । प्राणशब्देनापि विष्णोरुक्तत्वात् । न चोपक्रमण-लिङ्गविरोधः । 'तमुत्क्रान्तं प्राणोऽनुक्रामति' इति श्रुतिसिद्धत्वेन तस्य विष्णावेव मुख्यत्वात् । अथवा अयं प्राणो वायुरेव, तथापि न तस्य भूमप्राप्तिः, एष तु वा अतिवदति' इत्यादिना सूचितेन प्रश्नाद्यध्याहारेण प्राणाद्विष्णोर्भूयस्त्वमुक्त्वा भूम्न आम्नानात् । ननु प्राणशब्दस्य विष्णुरूपार्थद्वयं विरुद्धस्वभावम् । वायोः 'असि भगवः प्राणाद्भूय' इति, भूमा वाव प्राणो भूयानिति, प्रश्नप्रतिवचनसहिष्णुत्वात् विष्णोः सर्वोत्तमत्वं न तदसहिष्णुत्वादिति चेत्, न प्राणपदेन वाय्वन्तर्गतस्य विष्णोरभिधानात् । एवं च 'आत्मन आकाशः सम्भूत' इत्यत्र सम्भूतपदेन भूतस्य तदभिमानिदेहस्य च स्वरूपोत्पत्यभिधानेऽपि, तदभिमानिनो हरेश्च, देहसम्बन्धप्रादुर्भावयोश्चाऽभिधानवत् 'भूमा वाव प्राणो भूयान्' इत्यनेन स्वरूपोत्तमत्वस्य भूम्नः अभिधानेऽपि वाय्वन्तर्गतप्रसादोन्मुखत्वरूपोत्तमत्वविशिष्टभूमाभिधानसम्भवेन प्रश्नप्रतिवचन-सहिष्णुत्वात् । किं च 'स एवाऽधस्तात्स उपरिष्ठात्' इत्यादिना भूम्नि सर्वगतत्वादयो धर्माः

(अभिनवचन्द्रिका)
श्रूयन्ते । नैतेऽन्यत्रावकाशं लभन्ते । एवं च निरवकाशेभ्यः सर्वगतत्वादिभ्यो भूमा विष्णुरेवेति तस्यैवाऽऽनन्दमयत्वमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

श्रुत्या चेति समाख्याश्रुत्या चेत्यर्थः । ननु भूमशब्दो भाववाची तत्कथं धर्मिणोः शक्यता कथं च भूयानित्यनेन समानार्थः तस्य धर्मिवाचित्वात् । कथं च नामात्मकः । मैवम् । यो वै भूमा तत्सुखमित्याद्युत्तरवाक्यपर्यालोचनया भावभवित्रोरभेदाभिप्रायेण भवितृविषयतावगमादिति न्यायविवरणटीकायामाशङ्क्य समाहितम् । ननु उपक्रमात्समाख्याया दौर्बल्यात् कथं ततः साधारण्यम् । न च विष्णौ प्राणशब्दसमन्वयस्योक्तत्वादुपक्रमस्य सावकाशत्वात् समाख्यास्थ-विष्णुशब्दस्यान्यत्र निरवकाशत्वान्न समाख्यायाः दौर्बल्यमिति वाच्यम् । तथात्वे पुनः साधारण्यानुपपत्तिः । निरवकाशसमाख्यायाः सावकाशोपक्रमात्प्राबल्यायोगादिति चेन्न । अन्तराधिकरण इवोपक्रमसमाख्ययोः प्राबल्याद्यविवेकेनोभयत्र प्रसिद्धहेतुत्वोपपत्तेः । अत एव न्यायविवरणे अज्ञानां साधारणमित्युक्तम् । उपक्रमात्समाख्याया दौर्बल्येऽपि साभ्यासत्वेन, सोपपत्तिकत्वेन च प्राबल्यात्साधारण्यमविरुद्धम् । अत एव तस्माद्भूयान्नामेत्यंशोक्तिरित्येके ॥ **श्रुत्यादिसङ्गतिमिति** ॥ यो वै भूमा तत्सुखमित्युक्तेरिति भूम्नः पूर्णसुखाभिधानेन आनन्द-मयाधिकरणतदुपात्तश्रुतिसङ्गतेः भूमत्वप्राप्तिरित्यनेन भूमाविषय इत्यस्य, प्राणो वा आशाया इत्युक्त्या संशयकोटेः सबीजस्य सूचनात् । विष्णुकोटेस्तु सिद्धत्वादिति भावः । अव्यवहित-सङ्गतिस्तु, यस्मिन् द्यौरित्युक्तद्युभ्वाद्यायतनत्वोपपादनाय ब्रह्मैवेदममृतं पुरस्तात् ब्रह्म पश्चात्, दक्षिणतश्चोत्तरेणेत्यादिना यत्सर्वगतत्वम् ब्रह्मैवेदं विश्वमिति सर्वस्य तदायतनत्वं चोक्तम् । तदेव स एवाधस्तादित्यादिना स एवेदं सर्वं, यत्र नान्यत्पश्यतीत्यादि च भूम्न आम्नायते । यद्ययं भूमान्यः स्यात्तर्हि द्युभ्वाद्याश्रयोऽप्यन्यः स्यादिति बोध्यम् । पूर्णानन्दत्वं भूम्नः कथं प्रतीयत इत्यतः समग्रवाक्यमुदाहरति ॥ **यो वै इति** ॥ तत्सुखमित्युक्तं सुखं पूर्णमेव विवक्षितम् । निरपवादसुखशब्दस्य पूर्णसुखार्थत्वात् । नाल्पे सुखमस्तीत्युपपाद्य भूमैव सुखमिति निगमनेन अपूर्णसुखवत्यपि रमादौ सुखनिषेधान्यथानुपपत्त्या पूर्णसुखनिषेधलाभेन भूम्नः तत्सुखमित्युक्त-सुखस्य पूर्णत्वलाभाच्चेति भावः ॥ **किं विष्णुरिति** ॥ अत्र यो वै भूमा तत्सुखमित्युक्तो भूमा प्राणादुत्तमानुक्त्युत्क्रमणलिङ्गाभ्यां किं वायुः उत पूर्णसुखरूपत्व, सर्वोपर्युपदेश, सर्वगत्वादि-

(वाक्यार्थमुक्तावली)

लिङ्गैः विष्णुरिति चिन्ता । तदर्थं विष्णुप्रापकानां वायौ सावकाशत्वं, वायुप्रापकानामन्यत्र निरवकाशत्वं वा, उत वायुप्रापकानां विष्णौ सावकाशत्वं, विष्णुप्रापकानामन्यत्र निरवकाशत्वमिति । तस्यैव भूमत्वप्राप्तिरित्यंशं व्याचष्टे ॥ **मुख्यप्राण इति** ॥ कुत इत्यतः अध्युपदेशादित्येतद्व्यावृत्तिपरं मुक्तेत्यन्तभाष्यं व्याचष्टे ॥ **नामेत्यादिना** ॥ एतेन उक्तेति भाष्ये आवर्तते । तच्च कर्मसापेक्षमध्याहृतेन नामवागादितारतम्यमाशावसानमित्यनेनान्वेति । आशाया भूयानिति प्राणस्याशोत्तमत्वं चोक्त्वा, यो वै भूमा तत्सुखमिति भूम्न एवोक्तेरित्युक्त्या अन्यमनुक्त्वेति लभ्यते इति भावेन प्राणाद्भूयसोऽनुक्तिरिति स्पष्टं न्यायविवरणानुसारेण तदुत्तममनुक्त्वेत्युक्तम् ।

इदमुक्तं भवति । प्राण एवायं भूमा न तु विष्णुः तथात्वे प्रश्नप्रतिवचनाभ्यां प्राणादुत्तममुक्त्वा तस्य भूमत्वस्य वक्तव्यत्वात् । भूम्नः सर्वोत्तमत्वार्थमेव, नाम, वाङ्, मनः, सङ्कल्प, ध्यानविज्ञानबलान्नाप्तेज आकाशस्मराशाशब्दितानामुषआदिसरस्वत्यन्तानां तारतम्यस्य प्रक्रान्तत्वात् । न च प्राणादुत्तम उक्तः तद्विषयप्रश्नाद्यभावात् । भूम्नः प्राणत्वे तु नानुक्तिर्बाधिका तस्याशातोत्तमत्वेन प्रक्रान्तसर्वोत्तमत्वाविरोधात् । न च भूमप्राणयोर्मध्ये सत्यं त्वेव विजिज्ञासितव्यमित्यादिना सत्यादीनामुक्तत्वात् कथमनुक्तिरिति वाच्यम् । सिद्धान्तिनोऽपि सैव हि सत्यादय इति सत्यादीनां भूमाभेदप्रतिपादनादिति । उपक्रमात्समाख्याया इति । एतेन प्राणो वेत्यादिभाष्यं प्राणो वा आशाया भूयानिति प्राणमुपक्रम्यान्तरं, यौ वै भूमेति भूमपाठात्तस्यैव भूमत्वप्राप्तिर्न समाख्यावशाद्विष्णोरिति व्याख्यातं भवति । न च समाख्यापि साभ्यासत्वेन सोपपत्तिकत्वेन प्रबलेति शङ्क्यं निरवकाशानुक्तिसचिवोपक्रमस्य ततोऽपि बलवत्त्वादिति भावः ॥ **विष्णुपरत्वादिति** ॥

यद्यपि श्रीलक्ष्मीपतित्वादिकमिवात्र न निरवकाशलिङ्गमस्ति । तथापि महायोगविद्वद्रूढिभ्यां, तदधीनत्वन्यायेन विष्णुपरत्वादिति भावः । असम्भवादिति आकाशादिवदिति भावः ॥ **पूर्णसुखेति** ॥ सम्यक् प्रसीदत्युच्चतामनुभवति अनेनेति व्युत्पत्त्या सम्प्रसादशब्दः पूर्णसुखाभिधायकः तेन तदभिधानं लक्ष्यते इति भावः । सौत्राधिशब्दस्योपरीतिभाष्यं तस्यार्थः **उत्तमत्वेनेति** ॥ **निरुपपदेति** ॥ उपलक्षणं चैतत् । अल्पे रमादौ सुखवत्यपि सुखनिषेधानुपपत्तेः, मुख्ये निषेधासम्प्रत्यय इति न्यायान्मुख्यस्य निर्विशेषेणेति स्मृतेश्चेति ग्राह्यम् ।

(वाक्यार्थमुक्तावली)

सूत्रार्थस्तु स्पष्टः ॥ **कुतो विष्णुत्वनिश्चायकमित्यत आहेति** ॥ सूत्रस्यार्थान्तरमाहेत्यर्थः । परमामित्यत्र परमश्चासावश्चेति विग्रहः । सवर्णदीर्घश्चेति भावः । एतेन सूत्रे तत्वित्यनुवर्तते । तस्यैवेत्यर्थः । ततश्च सहस्रशीर्षमिति समाख्याश्रुतौ विष्णोरेव पूर्णसुखाभिधानात्सर्वाधिक्यो-पदेशाच्च तस्यैव पूर्णसुखत्वादिकमिति प्रकारान्तरेण व्याख्यातं भवति । विष्णोरेवेत्यवधारण-व्यवच्छेद्यं व्यक्तीकर्तुमाशङ्क्य परिहरति ॥ **न चेति** ॥ विश्वतः परमां नित्यं, मुक्तेषु श्रीस्तथा वायोरित्यादिना विष्णोरेव सर्वोत्तमत्वोक्तिविरोधात् उभयोरपि स्वेतरसर्वोत्तमत्वविरोधात् । वायोः सर्वोत्तमत्वानुक्तिलक्षणविरोधाच्चेत्यर्थः । तदुक्तं न्यायविवरणे । प्राणाद्विष्णोर्भूयस्त्वोक्तिः प्राणस्य विष्णोर्भूयस्त्वानुक्तिरिति । प्राणोपक्रमात्तत उत्तमानुक्तेश्च भूमा प्राण इति यत्पूर्वपक्षितं तद्विघटनायाशङ्क्य निराकुर्वन् तत्सङ्गतत्वेन तमुत्क्रामन्तमिति भाष्यमवतारयति ॥ **उपक्रम इत्यादिना** ॥ उपक्रमे प्राणशब्दश्रवणात्तत उत्तममनुक्त्वा भूम्न आम्नानात्सर्वोत्तमतया प्रतिपाद-यिषितो भूमाप्राण एव भवेत् कथं भूमा विष्णुरिति चेदित्यर्थः ॥ **प्राणशब्देनेति** ॥ यदा यमुपक्रमस्थः प्राणशब्दो विष्णुपरो भवेत्तदा त्वदीयानुक्तियुक्तिः विष्णोरेव भूमत्वसाधिका भवेत् इति भावः । इदमप्युक्तं न्यायविवरणे प्राणस्य विष्णोर्भूयस्त्वानुक्तिरिति । प्राणनाम्नो विष्णोः सकाशादन्यस्य भूयस्त्वानुक्तिर्विष्णोर्भूमत्वे लिङ्गमिति तदर्थः । एवं प्राणाद्भूयसोऽनुक्ति-मङ्गीकृत्य प्राणशब्दस्य विष्णुपरत्वं स्वीकृत्यानुक्तेः सिद्धान्तानुगुण्यं सम्पाद्य अत एवा-ध्युपदेशान्नामादीनां सर्वेषामुपर्युपदेशात्तत उत्तमानुक्तेर्भूमा विष्णुरिति सभाष्यं सूत्रं व्याख्यातम् । अधुना प्राणाद्भूयसोऽनुक्तिहेतोरसिद्धिपरतया सूत्रभाष्ययोस्तात्पर्यमाह ॥ **अस्तु वेति** ॥ इत्यादिनेति ज्ञापकेनेति शेषः ।

अयं भावः । स वा एष एवं पश्यन्नेवं मन्वान एवं वदन्नतिवादी भवतीति पूर्ववाक्ये प्राणोपासकस्यातिवादित्वमुक्त्वा एष तु वा अतिवदति यः सत्येनातिवदतीत्युत्तरवाक्ये सत्यो-पासकस्य तुशब्देन विशेषेणातिवादित्वमुच्यते । तच्च सत्याख्यस्य प्राणाद्भेदातिशययोरभावेन सम्भवति । एवं च अस्ति भगवो नाम्नो भूय इत्यादिवदत्रापि अस्ति भगवः प्राणाद्भूय इति प्राणाद्वाव भूयोऽस्तीति प्रश्नप्रतिवचनयोरध्याहारस्यावश्यकत्वेन भूम्नः प्राणाधिक्यसिद्धिः । सत्यभूमादीनामभेदश्च सैव हीत्यत्र वक्ष्यत इति ।

ततश्चायं सूत्रार्थः । सम्प्रसादात्पूर्णसुखरूपत्वादध्युपदेशात्प्राणादप्यधिकत्वेन, 'व्यतिहारो

(वाक्यार्थमुक्तावली)

विशिंषन्ति हि' इति वक्ष्यमाणन्यायेनोपदेशादनुक्तिलक्षणहेत्वसिद्धेश्च भूमा विष्णुरिति अर्थद्वयमिति । विष्णुपरत्वं, वायुपरत्वं चेत्यर्थद्वयम् ॥ **अन्तर्यामीति** ॥ प्राणान्तर्यामिण आशोत्तमत्वमुक्त्वा सत्यादेरधिष्ठानात्प्राणादुत्तमत्वकथनं युज्यत इति भावः । अन्तर्यामि-विवक्षाप्यहं मनुरभवमित्यादिवन्नेति भावेनाह ॥ **आत्मन इति** ॥ अत्रान्तर्यामिणोऽभिव्यक्ति-रधिष्ठानस्योत्पत्तिश्चोच्यत इति भावः । ननु प्राणशब्दस्य वायुपरत्वेऽस्ति ज्ञापकं तथा च न्यायविवरणे चशब्देन 'एष तु वा अतिवदति यः सत्येनानुवदति' इति प्राणाद्विष्णो-र्भूयस्त्वोक्तिश्चेति व्यतिहारसूत्रं च । विष्णुपरत्वे किं ज्ञापकमिति चेत् उत्क्रान्तप्राणानिति-वाक्यस्य भाष्ये विष्णौ सावकाशत्वोक्तेरेव ज्ञापकत्वादिति । सूत्रे पूर्णसुखत्वादिति वाच्ये यौगिकसम्प्रसादपक्षोपादानं कुत इति चेन्न । पूर्णसुखत्वादित्युक्ते विशेषणासिद्धिः स्यात् तत्सुखमित्येव श्रवणात् । अतश्च तत्सुखं पूर्णमेव विवक्षितं तस्यैव सम्प्रसादशब्दि-तात्युच्चताहेतुत्वात् । भूम्न उच्चता निरूपणार्थमेव नामवागादितारतम्यस्योपक्रान्तत्वात् । न हि तत्सुखमात्रोक्तौ सिध्यतीति युक्तिसूचनाय यौगिकग्रहणमिति । केचित्तु, सुखित्वे दुःखित्वं स्यादिति शङ्कानिरासाय पूर्णसुखोत्कर्षजन्यप्रसादेन दुःखाभावं सूचयितुमेवमुक्तमित्याहुः । 'अध्युपदेशात्' इत्यत्र, धर्मोपपत्तेश्च' इत्यागामिसूत्राच्चशब्दस्याकर्ष इति बोध्यम् ।

## तत्त्वसुबोधिनी

श्रुत्यादिसाधारण्येन उभयत्र प्रसिद्धत्वमाह ॥ **अत्र प्राणो वेति** ॥ **श्रुत्या चेति** ॥ समाख्यारूपश्रुतेत्यर्थः । अत्र यद्यपि भूमशब्दः बहोर्लोपो भू च बहोः इति भावे निष्पन्नो बहुत्ववाची । बहुत्वसङ्ख्या च लोकतोऽन्यत्र प्रसिद्धा । तथापि बह्वन्नमित्यादौ बहुशब्दस्य वैपुल्येऽपि प्रयोगात् भूमशब्दस्य यो वै भूमेत्यादौ धर्मिणि प्रयोगात् वैपुल्यविशिष्टधर्मिवाचकत्वं तस्य उपपद्यते इति उभयत्र प्रसिद्धत्वाविरोध इति भावेन वायुविष्णुसाधारण इत्युक्तम् । न च प्राणो वा इत्युपक्रमात् विष्णुर्वा इति समाख्यायाः दुर्बलत्वात् कथं ततः साधारण्यमिति वाच्यम् । अन्तराधिकरणे अदृश्यत्वलिङ्गेनेन्द्रादित्यश्रुत्योः सन्देहबीजत्ववत् इहापि उपक्रम-समाख्ययोः प्राबल्याद्यविवेकेन उभयत्र प्रसिद्धिहेतुत्वसम्भवादिति भावः । स एवाधस्तात् यो वै भूमेत्यादिना भूम्नि सर्वगतत्वादेः ब्रह्मैवेदम् अमृतमित्यादिना द्युभ्वाद्याश्रयत्वेन श्रवणात् । भूम्नः विष्ण्वन्यत्वे द्युभ्वाद्यायतनत्वमन्यस्य स्यादिति पूर्वाक्षेपेण पूर्वपक्षोत्थानात् अनन्तरसङ्गतिः । यो

(तत्त्वसुबोधिनी)
वै भूमा पूर्णः तत्सुखम् । अल्पसुखे सुखशब्दो नास्तीति भूमैव पूर्ण एव सुखं पूर्णसुखमेव मुख्यं सुखमित्यर्थः । **आशावसानमुक्त्वेति** । अनेन साक्षात् आशाशब्दवाच्या सरस्वती उत्तमत्वरूपा युक्तिरुक्तेति भावः । **उपक्रमादिति** । तस्याः षष्ठप्रमाणत्वादिति भावः । **पूर्णसुखरूपत्वाभिधानादिति** । सम्यक् प्रसीदत्यनेनेति व्युत्पत्त्या सम्प्रसादशब्दः पूर्णसुखत्वाभिधायक इति भावः । उपरीत्यस्यैवार्थः उत्तमत्वेनैवेति । तथा च सौत्राधिशब्दव्याख्यानरूपत्वस्यैवार्थः । **विश्वशम्भुवमिति** । विश्वं च तत् शं च विश्वशं तद्भवत्यस्मिन्निति वा विश्वशम्भुवं पूर्णसुखाश्रयम् । **सर्वतः परमकारवाच्यमिति** । अनेन परमामित्यत्र परमश्चावश्चेति विग्रहः सवर्णदीर्घेण रूपसिद्धिरिति भावः । **विरोधादेवेति** । विष्णुवाय्वोः उभयोः सर्वोत्तमत्वायोगादिति भावः । अत एव पूर्वं वायोरपीत्यपिशब्दः । यद्वा यथा विष्णोः स्वेतरसर्वोत्तमत्वं तथा न वायोः स्वेतरसर्वोत्तमत्वमिति । न च सर्वोत्तमत्वं वायोरपिस्यादित्यार्थः । अत्रापिशब्दः सम्भावनाज्ञापनार्थः । कुत इत्युक्ते विरोधादेवेत्युक्तम् । कुत्रापि श्रुत्यादौ वायोः स्वेतरविष्ण्वादिचेतनादिसर्वोत्तमत्वस्यानुक्तिलक्षणविरोधादेवेति तस्यार्थः ।

ननूपक्रमगतप्राणशब्दस्य विष्णुपरत्वे सिद्धे भवेत् विष्णोः भूमत्वं तदेव कुत इत्यत आह । **अनन्तरमन्यमनुक्त्वेति** ॥ प्राणानन्तरमन्यमुत्तममनुक्त्वा इत्यर्थः । एतावत्पर्यन्तं प्राणो वेत्यत्र प्राणशब्दस्य विष्णुपरत्वमङ्गीकृत्यानुक्तिरुपपादिता । अधुना तु अयं प्राणशब्दो वायुपरः तथापि न तस्य भूमत्वम् । एवं विजानन्नतिवादी भवतीत्यादिना प्राणज्ञानेनातिवादित्वमुक्त्वा एष तु वेत्यादिना सत्याख्यभूमज्ञानिनस्तुशब्देन विशेषस्योक्तत्वेन ज्ञापकादस्ति भगवः प्राणाद्भूय इति प्राणाद्वाव भूयोऽस्तीति प्रश्नाद्यध्याहारेण विष्णोरेव भूमत्वे सिध्यतीत्यनुक्तिरन्यथोपपन्नेत्याह ॥ **अस्तु वेति** ॥ **नचैतदर्थद्वयं विरुद्धमिति** ॥ प्राणशब्दस्य विष्णुवाचकत्वं वायुवाचकत्वमित्यर्थद्वयं विरुद्धमित्यर्थः । अन्तर्यामिविवक्षाऽपि अहं मनुरभवम् इत्यादौ यथा अन्तर्यामिमात्रविवक्षा न तथा प्रकृते किन्तु आत्मनः आकाशः सम्भूत इत्यादौ अन्तर्यामिणो हरेः भूताकाशादेश्च यथा विवक्षा तथेत्याह ॥ **आत्मानः आकाशः सम्भूत इत्यादिवदिति** ॥ तथा च 'प्राणो वा आशाया भूयान्' इत्यत्र विष्णु वाय्वोरुभयोरपि प्रतिपाद्यत्वेनान्तर्यामिविवक्षया प्राणशब्दवाच्यस्य भूमत्ववचनं वायुविवक्षया प्राणशब्दवाच्यात् उत्तमत्वेनोक्तस्य विष्णोः भूमत्ववचनमिति न विरोध इत्यर्थः ।

## वाक्यार्थविवरणम्

एकस्यार्थद्वयवाचित्वे दृष्टान्तमाह ॥ **आत्मन इति** ॥ 'भूतं भूताभिमानी च तद्देहोऽन्त-र्नियामकः । हरिश्चाकाशशब्दोक्तः' इत्युक्तत्वेनाकाशशब्दस्य भूततदन्तर्यामिभगवद्वाचित्वस्य दृष्टत्वादित्याशयः ॥

## वाक्यार्थमञ्जरी

**श्रुत्येति** ॥ समाख्यारूपश्रुत्येत्यर्थः । भूमन्भूयःशब्दयोः पर्यायत्वादिति भावः । स्थानान्तरश्रुतसमाख्यायाः अत्रैव श्रुतोपक्रमतो दुर्बलत्वेऽपि प्राबल्याद्यविवेकेन साधारण-प्रयोजकत्वमुपपन्नम् ॥ **यो वै भूमेति** ॥ अनेन भूमाख्यनारायणस्य लक्षणमुच्यते यो वै भूमा पूर्णो नारायणाख्यस्तत्सुखम् अनन्याधीनसुखरूपम् । अस्यातिव्याप्तिं परिहरति ॥ **नाल्प इति** ॥ भूमप्रसादं विना नाल्पे मुक्तजाते सुखमस्ति । ततः किमित्यत आह ॥ **भूमैवेति** ॥ तस्माद्भूमैवानन्याधीनसुखरूपमित्यर्थः ॥ **नामवागादीति** ॥ 'वाग्वाव नाम्नो भूयसी मनो वाव वाचो भूयः सङ्कल्पो वा मनसो भूयान् चित्तं वाव सङ्कल्पाद्भूयः ध्यानं वाव चित्ताद्भूयः विज्ञानं वाव ध्यानाद्भूयः बलं वाव विज्ञानाद्भूयः अन्नं वाव बलाद्भूयः आपो वावान्नाद्भूयस्यः, तेजो वावाद्भ्यो भूयः, आकाशो वाव तेजसो भूयान्, स्मरो वावाकाशाद्भूयान् आशा वाव स्मराद्भूयसि' इत्येवं नामादिशब्दितोषास्वाहापर्जन्यमित्राग्निवरुणसोमप्रवाहानिरुद्धतैजस-प्राणेन्द्रोमारुद्रसरस्वतीनां तारतम्यमुक्त्वेत्यर्थः ।

अत्राशावसानमुक्त्वा प्राणस्योत्तमत्वं चाभिधायेत्यनेन प्राणस्य भूमत्वे आशाशब्दित-सरस्वत्युत्तमत्वरूपा मुक्तिरुक्तेति द्रष्टव्यम् ॥ **तदुत्तममनुक्त्वेति** ॥ अस्ति भगव आशाया भूय इत्याशा वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति प्रश्नवत्प्राणो वाव आशाया भूयानिति प्रत्युक्तिवच्चात्र प्राणादूर्ध्वमस्ति प्राणाद्भूय इति तन्मे भगवान् ब्रवीत्विति प्रश्नस्य भूमा वाव प्राणाद्भूयानिति प्रत्युत्तरस्याप्यभावेन भूम्नः प्राणादनन्यत्वनिश्चय इति भावः । आम्नातत्वात् पठितत्वात् ॥ **उत्क्रान्तप्राणानिति** ॥ प्राणवत्पित्रादीन्प्रति यदि कश्चित्त्वंकारादिना भृशं वदेत्तस्य पितृहंतृत्वादिना निन्द्यवचनयोग्यत्वमुक्त्वा प्राणोत्क्रमणानन्तरं तन्नेत्यनेनोच्यते । उत्क्रान्तः प्राणो येभ्यस्ते उत्क्रान्तप्राणाः पित्रादयः तान् प्रति यदि समासं सङ्कोचेन व्यतिषं विस्तरेण वा शूलने दहेत् हत्वा भस्मीकुर्यात्तदा एनं पितृहासीत्यादिनैव ब्रूयुरित्यर्थः । ॐ भूमा

(वाक्यार्थमञ्जरी)
सम्प्रसादादध्युपदेशात् ॐ । यो वै भूमेत्युक्तभूमा विष्णुरेव सम्प्रसादात् सम्यक् प्रसीदत्यनेनेति सम्प्रसादः पूर्णसुखं तदभिधानात् । अध्युपदेशात् अधि नामादिसर्वोत्तमत्वेन व्यपदेशाच्चेत्यर्थः ॥ **विश्वशम्भुवमित्यादि** ॥

ततश्चायं श्रुत्यर्थः । अनन्तमूर्धानं देवं प्रकाशरूपं विश्वाक्षमनन्ताक्षम् । विश्वशम्भुवम् । विश्वं च तत् शं च विश्वशं तद्भवत्यस्मिन्निति विश्वशम्भुवं पूर्णसुखाश्रयम् । विश्वं ज्ञानादि-पूर्णम् । नारायणं मुक्तसङ्घाश्रयं देवं स्वेच्छया विहरन्तम् अक्षरं चतुर्विधनाशरहितम् । परमं पदम् अत्यन्तप्राप्यम् । विश्वतः सर्वतः परमां परमश्चासौ अश्च परमाः तम् उत्तमम् अकार-शब्दवाच्यं नित्यं तद्विश्वमुपजीवतीत्यन्वय इति । यद्यपि परममित्येव द्राविडपाठः । तथापि परमामित्यांध्रपाठो भाष्ये उदाहृतः ॥ **विरोधादेवेति** ॥ उभयोरपि स्वेतरसर्वोत्तमत्वे अन्योन्या-पेक्षयोत्तमत्वप्राप्त्या व्याघातादित्यर्थः । तर्हि भूमा किं विष्णोरन्य इति तत्राह ॥ **अनन्तर-मिति** ॥ प्राणानन्तरमित्यर्थः । न्यायविवरणानुसारेण पक्षान्तरमाह ॥ **अस्तु वेति** ॥ न च तदुत्तममनुक्त्वा भूम्नः आम्नानात्तस्यैव भूमत्वमिति वाच्यम् । अनुक्तेरेवाभावादित्यत आह ॥ **एप तु वा अतिवदतीति** ॥ यः सत्येनातिवदतीत्यादि पदोक्तम् । योऽधिकारी स निर्दोषश्चासौ नियामकश्चेति सत्यो विष्णुस्तेन अतिवदति तमतिशयेनातिवदतीति यावत् । स एषः तु प्राणादिवाद्यपेक्षया विशेषेणातिवदति अत्युत्तमवस्तुवादीत्यर्थः । इत्यादिना ज्ञापकेन प्रश्ना-दीत्यादिपदेन सत्यं वाव प्राणाद्भूय इति प्रतिवचनग्रहः । प्रश्नाद्यध्याहाराभावे एवं विजानन्नाति-वादी भवतीत्याद्युक्तप्राणज्ञानिनः सकाशादेष तु वा अतिवदतीत्यादिना सत्याख्यभूमज्ञा-निनस्तुशब्देन विशेषोक्त्ययोगादिति भावः ॥ **इत्यादिवदिति** ॥ तत्रैकस्याकाशशब्दस्य भूततदन्तर्यामिपरत्ववदत्राप्युभयपरत्वमविरुद्धमित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ धर्मोपपत्तेश्च ॐ ॥ ९ ॥**

**सर्वगतत्वादिधर्मोपपत्तेश्च ॥**

## तत्त्वप्रदीपिका

**'स एवाधस्तात्स उपरिष्टात्स उपरिष्टात्स पुरस्तात्स दक्षिणतः स उत्तरतः स एवेदं सर्वं यत्र**

(तत्त्वप्रदीपिका)

नान्यत्पश्यति नान्यत् श्रुणोति नान्यद्विजानाति स भूमा' इत्यादिसर्वगतत्वस्वातन्त्र्यादिधर्माणां तत्रैवोपपत्तेश्च ॥

## तत्त्वप्रकाशिका

युक्त्यन्तरेण विष्णोर्भूमत्वप्रतिपादकं सूत्रमुपन्यस्य व्याचष्टे ॥ **धर्मेति** ॥ 'स एवाधस्तात् स उपरिष्टात् स पश्चात् स पुरस्तात् स दक्षिणतः स उत्तरतः । स एवेदं सर्वम् । यत्र नान्यत्पश्यति नान्यत् शृणोति नान्यद्विजानाति स भूमा स भगवः कस्मिन् प्रतिष्ठितः स्वे महिम्नि' इत्यादिना भूम्नि सर्वगतत्वादिधर्मश्रवणाच्चासौ विष्णुरेव । तेषां विष्णावेवोपपत्ते-रित्यर्थः । अतो विष्णुरेव भूमेति तस्यैवानन्दमयत्वमिति सिद्धम् ॥

## भावबोधः

अत्राद्ये– भूम्नो विष्णुत्वे विषयवाक्यगतपूर्णसुखरूपत्वोपक्रमस्थाध्युपपदेशरूपहेत्वोः, द्वितीये– तदुत्तरवाक्यस्थसर्वगतत्वादिरूपहेतोश्चोक्तिरिति सूत्रक्रमः ।

## भावदीपः

भाष्यस्थादिपदोक्तलिङ्गद्योतनाय यत्र नान्यदित्यादिशेषोक्तिः । यत्र यस्मिन् दृष्टे श्रुते विज्ञाते सतीत्यर्थः । उपपत्तिशब्दः सूत्रे लिङ्गानां निरवकाशत्वोक्तिपर इति भावेन धर्मश्रवणाच्च विष्णावेवोपपत्तेरिति विच्छिद्य व्याख्यातम् ॥ **अत इति** ॥ पूर्णसुखत्वादिहेतूनां भावात् । उत्क्रमणानुक्त्योश्च रूपविशेषविवक्षाध्याहाराभ्यामुपपत्त्या बाधकाभावाच्च भाष्यदिशा प्राण-पदेनान्तर्याम्युक्त्या प्राणभूम्नोरेकत्वेन वा न्यायविवरणरीत्या प्राणभूम्नोर्भेदेन प्राणस्य वायुमात्र-त्वेन वा भूमा विष्णुरेवेति सर्वसूत्रार्थः । तमेव हेतूकृत्य यो वै भूमा तत्सुखमित्युक्तेरिति पूर्वाक्षेपकभाष्यार्थमुपसंहरति ॥ **इति तस्यैवाऽऽनन्दमयत्वमिति** ॥ तत् सुखमित्युक्त-पूर्णसुखत्वद्वारेत्यर्थः ॥

## वाक्यार्थमुक्तावली

भाष्यस्थसर्वगतत्वादीत्यादिपदविवरणाय यत्र नान्यत्पश्यतीत्यादिकमुदाहृतम् । स्वातन्त्र्यं, स्वाश्रयत्वं चादिपदार्थ इति भावः । सर्वगतत्व, सर्वस्वातन्त्र्यादिधर्माणां तत्रैवोपपत्तेश्चेति,

(वाक्यार्थमुक्तावली)

'तत्वप्रदीपोक्तेः' ॥ निरवकाशत्वप्रदर्शनायोपपत्तिपदमित्यभिप्रेत्याह ॥ **तेषामिति** ॥ सूत्रार्थस्तु स्पष्टः । अत्राद्ये भूम्नो विष्णुविषयविशेषणपूर्णसुखरूपत्वस्योपक्रमस्थोपदेशस्य च हेतुत्वोक्तेः द्वितीये तदुत्तरवाक्यगतसर्वगतत्वादेरिति सूत्रक्रमः ॥

## तत्त्वसुबोधिनी

भाष्यगतसर्वगतत्वादीत्यादिशब्दार्थमाह । **स एवाधस्तादित्यादि** । अत्राद्ये सूत्रे विष्णोः भूमत्वे पूर्णसुखत्वसर्वोत्तमत्वरूपहेत्वोः द्वितीये सर्वगतत्वादिरूपहेतोश्चोक्तिरिति सूत्रक्रमः ॥

## वाक्यार्थमञ्जरी

स एवाधस्तादित्याद्युक्तसर्वगतत्वादिधर्माणां विष्णावेवोपपत्तेश्च स एव भूमेत्यर्थः ॥ **स एवेति** ॥ स भूमैवाधोभागादिस्थितिः सर्वगतत्वं सर्वसत्ताप्रदानायेत्युक्तम् ॥ **स एवेदं सर्वमिति** ॥ स एव स्वतन्त्रः इदं सर्वन्तदधीनमित्यर्थः । यद्वा इदं सर्वमित्यत्र लिङ्गव्यत्यासेनायं सर्व इत्यङ्गीकृत्य स भूमा सर्वत्र सन्निहितत्वादयं पूर्णत्वात्सर्व इत्युच्यत इत्यर्थः । यत्रेत्यनेन भूम्नोऽसदृशत्वमुच्यते यत्र यस्याधीनं विनाऽन्यं न पश्यति अधिकारी सर्वमेव तदधीनं पश्यति शृणोति विजानाति वा स भूमेत्यर्थः । जानन्नपि नारदो विशेषार्थज्ञानास्थापनाय च भूमाश्रयं पृच्छति ॥ **स इति** ॥ हे भगवः भगवन् स भूमा कस्मिन्प्रतिष्ठितः आश्रितः । सनत्कुमार उत्तरमाह ॥ **स्वे महिम्नीति** । स्वे स्वकीये महिम्नि सामर्थ्ये प्रतिष्ठित इत्यर्थः ।

॥ इति भूमाधिकरणम् ॥

## ३. अक्षराधिकरणम्

### सूत्रभाष्यम्

अदृश्यत्वादिगुणा विष्णोरुक्ताः । अदृष्टं द्रष्ट्रश्रुतं श्रोतृ (बृ.उ.५.८.११) इत्यादिना । 'अहं सोममाहनसं बिभर्मि' (ऋ.सं.१०.१२५.२) इत्यादेस्तस्यापि सम्भवान्मध्यमाक्षरस्योक्ता इत्यतो ब्रूते–

**॥ ॐ अक्षरमम्बरान्तधृतेः ॐ ॥ १० ॥**

'एतस्मिन् (न्नु) खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' (बृ.उ.५.८.११) इत्यम्बरान्तस्य सर्वस्य धृतेर्ब्रह्मैवाक्षरम् । 'य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा' (ऋ.सं.१.१५४.४) 'भर्ता सन्भ्रियमाणो बिभर्ति । एको देवो वहुधा निविष्टः । यदा भारं तन्द्रयते स भर्तुम् । परास्य (निधाय, पा.) भारं पुनरस्तमेति' (तै.आ.३.१४) । 'यस्मिन्निदं सञ्च विचैधि सर्वं यस्मिन्देवा अधि विश्वे निषेदुः' (म.ना.उ.१-२) इत्यादिश्रुतेः ।

'पृथिव्यादिप्रकृत्यन्तं भूतं भव्यं भवच्च यत् ।
विष्णुरेको बिभर्तीदं नान्यस्तस्मात्क्षमो धृतौ' इति स्कान्दे ॥

### सत्तर्कदीपावली

तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृ अश्रुतं श्रोतृ अमतं मन्तृ इत्यादि श्रूयते । अत्र परमेश्वरधर्मादृष्टत्वादिगुणत्वेनोच्यमानमक्षरं लक्ष्मीतत्वं भवेत् । 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत' इत्यादिना चन्द्राद्याधारत्वेन विष्णोरुक्तत्वाचन्द्राद्याधारत्वस्य गुणत्वेन लक्ष्म्या उक्तत्वात् 'अहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगम्' इति । अत्राहनसशब्देन आसमन्ताद्धन्तृत्वाद्रुद्र उच्यते । सोमशब्दस्तूमया सहितः सोम इति रुद्रविशेषणमपि भवति । अक्षरमदृष्टं द्रष्ट्रित्यादिना यदक्षरं तदन्यैरदृष्टत्वादिकं चोच्यते । तल्लक्ष्मीतत्वस्यापि सम्भवतीत्येवं पूर्वपक्षयति अदृश्यत्वेत्यादिना । सिद्धान्तयति अक्षरमित्यादिना । अत्राक्षरशब्देन विष्णुरुच्यते न लक्ष्मीः । 'यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते । आकाश एव तदोतं च प्रोतं च । एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' इति सर्वाधारतयोक्ताकाशशब्दगृहीतलक्ष्म्याधाराक्षराज्ञानिमित्तजगद्धारणनिमित्तश्रवणादप्यत्राक्षरशब्देन

(सत्तर्कदीपावली)
विष्णुरुच्यते । विष्णवाज्ञया जगद्धारणस्य सप्तेत्यादिवचनसिद्धत्वात् । सप्तमहदहङ्कार-पञ्चभूताख्याः पदार्थाः आसमन्ताद् ऋद्धो गर्भो ब्रह्माण्डाख्यो येषां ते ऋद्धगर्भाः । वननीयो भजनीयश्चेति भुवनस्य विष्णोः रेतस्थानीयाः ते तस्य प्रदिशा आदेशेन आज्ञया विधर्मणि विधारणे तिष्ठन्ति आज्ञयैव धृता इत्यर्थः ॥ १०,११ ॥

## तत्त्वप्रदीपिका

अदृश्यत्वादिगुणाः 'तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतं श्रोतृ' इत्यादिनाऽक्षरस्यैवोच्यन्ते । तच्च 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्दमसौ विधृतौ तिष्ठतः' इत्यादिना सूर्यादि-विधारणान्मध्यमाक्षरं भवितुमर्हति । 'अहं सोममाहनसं विभर्म्यहं त्वष्टारमुत पूषणं भगम्' इति मध्यमाक्षरस्य सूर्यादिविधारकत्वश्रुतेः । आहनसम् आ समन्तात् हन्तारं संहर्तारमित्यर्थः । यद्यप्यदृश्यत्वादयो विष्णोस्सम्भवन्ति तथाऽप्यक्षरशब्दस्यान्यत्रापि प्रसिद्धेरुक्तयुक्तेश्च मध्य-माक्षरस्यापि सम्भवादत्र तस्योक्ता इत्यत आह– 'अक्षरमम्वरान्तधृतेः' ॥ 'यद्भूतं च भवच्च भविष्यचेत्याचक्षते, आकाश एव तदोतं च प्रोतं च' इत्युक्त्वा 'एतस्मिन्नुखल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' इति वचनेन अम्बरान्तस्य सर्वस्य धृतेरुक्तत्वाद् ब्रह्मैवाक्षरम् । भर्ता सन् विष्णुर्जीवैर्हृदि भ्रियमाणश्च बिभर्ति च । एतदुक्तं भवति । यद्यपि हरिर्जगता भ्रियत इत्युच्यते जगति व्याप्तत्वात् । जगद्बिभर्ति च । नैतावता तयोराधाराधेयभावस्तुल्य इति मन्तव्यम् । किन्तु मूलभर्ता सन् भ्रियमाणश्च बिभर्ति च । युज्यते च तस्यैकस्यैव वहुरूपतया निविष्टत्वादिति । यस्मिन्निदं सम्यक्च विविधं चैधि ॥

## तत्त्वप्रकाशिका

अत्राविनाशित्वसाम्यात् चित्प्रकृतौ हरौ च साधारणस्याक्षरनाम्नो ब्रह्मणि समन्वय-प्रतिपादनादस्ति शास्त्रादिसङ्गतिः । श्रुत्यादिसङ्गतिं विषयवाक्यमुदाहृत्य विषयादिकं च सूचयन् सयुक्तिकं पूर्वपक्षं च दर्शयति ॥ **अदृश्यत्वादीति** ॥ अदृश्यत्वादिगुणाः पूर्वं विष्णोरुक्तास्ते च वाजसनेयके अक्षरस्योक्ताः । 'तद्वा एतदक्षरं गार्गि अदृष्टं द्रष्टृश्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञात्रे तस्मिन्खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' इति । तस्याक्षरस्य विष्णोरन्यत्वेऽदृश्यत्वादिकं चान्यस्यैव प्रसज्येत इत्यवश्यं निर्णेयत्वम् । तदक्षरं विषयः । किं विष्णुरुत चेतनप्रकृतिरिति सन्देहः । उक्तसाधारण्यं च सन्देहवीजम् । द्रष्टृत्वादिश्रवणात् जडप्रकृतेरोङ्कारस्य च न

(तत्त्वप्रकाशिका)

सन्देहनिविष्टत्वम् । उत्तराधिकरणे त्वीक्षणस्य प्रथमप्रतीतेरस्त्यवकाशः । एतदक्षरं मध्यमं श्रीतत्त्वमेवेति पूर्वः पक्षः । तत्राक्षरशब्दस्य प्रसिद्धेः । 'एतस्य वाऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इत्यादिनाऽक्षरस्य चन्द्रसूर्याद्याधारत्वप्रतीतेश्च । चन्द्राद्याधारत्वस्य च 'अहं सोमम्' इत्यादेस्तद्धर्मत्वात् । न च वाच्यमदृश्यत्वादिविष्णुधर्मश्रवणात् तस्याक्षरत्वमिति । अदृश्यत्वादिगुणानां मध्यमाक्षरेऽपि सम्भवात् । तथा च स्मृतिः । 'ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते । सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम्' । 'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् । अप्रतर्क्यमनिर्देश्यं प्रसुप्तमिव सर्वतः' इत्यादि । अथापि स्यात् । अक्षरश्रुतेरदृश्यत्वादिलिङ्गानां च मध्यमोत्तमाक्षरयोः साम्येऽत्र मध्यमैवोच्यत इति निर्बन्धे को हेतुरिति । मैवम् । 'न तदश्नाति किञ्चन' इत्यक्षरस्यानशनोक्तेः तच्च विष्णोर्विरुद्धम् । 'अत्ता चराचरग्रहणात्' इत्युक्तत्वात् । न च मध्यमाक्षरस्यानशनाङ्गीकारे विरोधोऽस्ति । अतो मध्यमाक्षरमेवैतदक्षरमिति तस्यैवादृश्यत्वादिगुणकत्वमिति भावः । आहनसं यज्ञेष्वभिषूयमाणम् । लताभिमानित्वेनेयमुक्तिः । 'सोमं राजानं जुह्वति । तं देवा भक्षयन्ति' इत्यादिवत् । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ इदमक्षरं ब्रह्मैव । 'यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षिरे गार्ग्याकाश ओतश्च प्रोतश्च' इत्यक्षरस्य तदाधारत्वश्रवणादित्यर्थः । सर्वाधारत्वं कुतो विष्णुत्वनिश्चायकमित्यत आह ॥ **य इति** ॥ एको देवो भर्तृत्वेन बहुधा निविष्टो जगता म्रियमाणस्तद्बिभर्ति । स च यदा तं भारं भर्तुं नेच्छति तदासौ नश्यतीत्यर्थः । एतच्च तद्वै त्वं प्राण इत्युक्तप्राणस्योच्यते । यस्मिन्निदं सम्यग्विविधं चैधि तदेव ब्रह्मेत्यर्थः । विष्णुवदन्यस्यापि सर्वाधारत्वं किं न स्यादित्यत आह ॥ **पृथिव्यादीति** ॥

## गुर्वर्थदीपिका

उत्तराधिकरणे त्वीक्षणस्य प्रथमाप्रतीतेरित्यत्र ''तद्वा एतदक्षरं गार्गि अदृष्टं द्रष्टृ'' इतिवत् ''सदेव सौम्येदमग्र आसीद्'' इति प्राथमिकवाक्य एवाप्रतीतेरित्यर्थः । न च वाच्यं प्राथमिकवाक्येऽप्रतीतत्वेऽपि ''एकमेवाद्वितीयम्'' इत्येकवाक्यमात्रव्यवहिततया प्रतीतस्येक्षणस्यातिदूरत्वाभावेन बुद्धिमतोन्नेतुं शक्यत्वात्कथमचेतनप्रकृतेः प्राप्तिरिति । विष्णौ श्रीतत्त्वे चासम्भावितस्य ''बहु स्यां प्रजायेय'' इत्युत्तरप्रकरणस्थश्रुत्युक्तजगदाकारविकारस्य प्रधान एव सम्भवेन ईक्षणस्याभिमानिव्यपेक्षयौपचारिकत्वकल्पनोपपत्त्या जडप्रकृतिप्राप्तिविघटकत्वाभावे तात्पर्यात् ।

## भावबोधः

विष्णोश्चित्प्रकृतेश्चाविनाशित्वसाम्यादक्षरशब्दः सावधारण इति न्यायविवरणोक्तमक्षरशब्दस्योभयत्र प्रसिद्धत्वमाह ॥ **अत्राविनाशित्वसाम्यादिति** ॥ अविनाशित्वस्याक्षरशब्दप्रवृत्तिनिमित्तत्वादिति भावः । उपलक्षणञ्चैतत् । अक्षरशब्दस्य तत्र प्रसिद्धत्वादित्यपि द्रष्टव्यम् । जीवानां शरीरक्षरणाख्यनाशस्य विद्यमानत्वान्न योगस्तत्साधारणः । अव्याकृताकाशादिसाधारण्येऽपि तस्य संशयकोटित्वाद्यसम्भवान्न तद्ग्रहणम् । उभयत्र प्रसिद्धिकथने यद्विष्ण्वितरल्लिङ्गशब्दोपेतत्वेनाभिधीयते तस्यैव संशयकोटित्वादिकं वक्तव्यम् । अव्याकृताकाशादेस्तु संशयकोटित्वादिकं न सम्भवति । प्रकृताक्षरशब्दवाच्यस्य 'अदृष्टं' 'द्रष्टृ' इत्यादिना द्रष्टृत्वादेरुक्तत्वादिति भावः । अत एव वक्ष्यति 'द्रष्टृत्वादिश्रवणाज्जडप्रकृतेराकाशस्य च न सन्देहनिविष्टत्वम्' इति । अक्षरशब्दस्य योगेनोभयत्र प्रसिद्ध्यङ्गीकारेऽपि यौगिकानन्दमयादिशब्दवदस्यापि नामत्वं विरुध्यत इत्यभिप्रेत्योक्तमक्षरनाम्न इति ॥ **श्रुत्यादिसङ्गतिमिति** ॥ अव्यवहितपूर्वाधिकरणसङ्गतिस्तु भूम्नि स एवाधस्तादित्युक्तव्यापकत्वोत्क्रान्तप्राणानित्युक्तोत्क्रमणसिद्धाऽव्यापकत्वादिधर्माणामविरोधाय 'अन्यभावव्यावृत्तेः' इति सूत्रेण लोकवैलक्षण्योक्तेरिति ज्ञातव्यम् ।

नन्वत्र 'तद्वा एतदक्षरं गार्गि ब्राह्मणा अभिवदन्ति' 'अस्थूलमनणु' इत्यस्यादिवाक्यत्वेन तस्यैव भाष्यादौ विषयवाक्यत्वेनोदाहरणं युक्तम्; समन्वेतव्यशब्दस्य तत्रापि सत्त्वात् । 'तद्वा एतदक्षरं गार्गि अदृष्टं' इत्युत्तरवाक्योदाहरणं किमर्थमिति चेत्, न; पूर्ववाक्ये द्रष्टृत्वादि अदृष्टत्वादिगुणोक्त्यभावेन सङ्गत्यभावापत्तेः । अम्बरान्तधृतेरित्युक्तहेतोस्तत्रानुक्तत्वाच्च । द्रष्टृत्वादिकथनाभावेनैव जडप्रकृतेर्वर्णानां च सन्देहपूर्वपक्षविषयनिराकरणासम्भवेन न्यायविवरणेऽक्षरशब्दस्य प्रकृतिविष्णुमात्रसाधारण्योक्त्ययोगाच्च । अत एव न्यायविवरणटीकायां नन्वचेतनप्रकृतौ वर्णेषु च कुतो न शङ्कापरिहृतमेतद् भाष्यकृता अदृष्टं दृष्टृ इत्यादिविषयवाक्यमुदाहरतैवेत्युक्तम् । न च प्रथमवाक्योदाहरणेऽपि तत्प्रकरणस्थोत्तरवाक्यगतद्रष्टृत्वादिकं जडप्रकृतिवर्णयोः संशयकोटित्वनिरासकत्वेन वक्तुं शक्यमिति वाच्यम्; तथात्वे उत्तराधिकरणेऽपि तदैक्षतेत्युत्तरवाक्ये ईक्षणश्रवणात् जडप्रकृतेः सन्देहादिविषयत्वाभावापातात् । अत एवोक्तं टीकायामुत्तराधिकरणे ईक्षणस्य प्रथमाप्रतीतेरस्त्यवकाश इति ॥ किं

(भावबोधः)

**विष्णुरिति** ॥ तद्वा एतदक्षरं गार्ग्यदृष्टमित्युक्तमक्षरं श्रीतत्त्वमुत विष्णुरिति चिन्ता । तदर्थं श्रीतत्त्वप्रापकाक्षरशब्दप्रसिद्ध्यादिबलाद् विष्णुत्वप्रापकसर्वाश्रयत्वादिलिङ्गबाध उत विष्णुप्रापकलिङ्गेन तत्प्रसिद्ध्यादिबाध इति । तदर्थं प्रसिद्ध्यादिकं निरवकाशमुत सावकाशमिति । अम्बरान्तधृत्यादिकं तु आकाशशब्दस्य लक्ष्मीतत्त्वपरत्वादिना सावकाशमुताकाशशब्दस्य चित्प्रकृतिपरत्वादिनाम्बरान्तधृत्यादिकं निरवकाशमक्षरश्रुत्यादिकं च विष्णौ सावकाशमिति । तदर्थं 'न तदश्नाति किञ्चन' इत्युक्तमनशनं विष्णोर्न युक्तमुत युक्तमिति । तदर्थं न तदश्नाति किञ्चनेति श्रुतिः किं विष्णोः सर्वथाशनाभावपरोत जीवनहेतुत्वेनाशनाभावपरेति ॥ **प्रथमप्रतीतेरिति** ॥ न प्रतीतिः समन्वेतव्यसच्छब्दरूपधर्मिणः । अग्र आसीदित्युक्तनियतपूर्ववर्तित्वलक्षणकारणत्वरूपसाधारणधर्मप्रतीतिकाल एवेत्यर्थः । अत्तेत्युक्त्वा न तदश्नाति किञ्चनेति विरुद्धेति न्यायविवरणम् तन्निवर्तनीयाशङ्काप्रदर्शनपूर्वकं व्याचष्टे– अथापि स्यादित्यादिना ॥ **न च मध्यमाक्षरस्येति** ॥ 'आत्मा वा इदमेक एव अग्र आसीन्नान्यत् किञ्चन मिषत्' इति श्रुतौ स्वतन्त्रोन्मेषाभावेनानुन्मेषोक्तिवत् स्वतन्त्राशनाभावेन वा ब्रह्मवत्संहर्तृत्वाभावेन वा अत्तेत्यत्र संहाररूपतयोक्तस्याशनस्याभावस्य तत्र युक्तत्वादिति भावः ।

ननु 'अहं सोमम्' इति वाक्यस्य सूर्याचन्द्रमसौ विधृतावित्यनेन समानार्थत्वलाभाय सोमशब्देन चन्द्रो यदि ग्राह्यस्तर्हि कथं तस्याऽऽहनसमिति यज्ञेष्वभिषूयमाणत्वोक्तिरित्यत आह ॥ **लताभिमानित्वेनेति** । यथा 'सोमं राजानम्' इत्यादौ हूयमानतया वक्ष्यमाणसोमलताभिमानित्वाच्चन्द्रे हूयमानत्वादिव्यपदेशस्तथात्रापि सोममभिषुणोतीति वाक्यविहिताभिषवणयुक्तसोमलताभिमानित्वाच्चन्द्रे अभिषूयमाणत्वव्यपदेश इत्यर्थः । भाष्योदाहृतश्रुतिभागे अम्बरधृतिरेव प्रतीयते, न त्वम्बरान्तधृतिरित्यतो सर्वाधारप्रकृत्याधारत्वमिति न्यायविवरणानुसारेण यदूर्ध्वमित्यादितत्पूर्ववाक्योदाहरणपूर्वकं दिव उपरितनादीनामाकाशान्तानां साक्षात् परमात्मधृतत्वाभावेऽपि सर्वाधाराकाशाधारत्वे सर्वाधारत्वमपि सिध्यत्येवेत्यभिप्रेत्य सूत्रभाष्ययोरम्बरान्तसर्वधृतिरुक्तेति मनसि निधाय एतस्मिन् खल्विति भाष्यं व्याचष्टे– इदमक्षरं ब्रह्मैवेत्यादिना ॥ **आकाशाख्यप्रकृतेरिति** ॥ न चात्राकाशपदेन जडप्रकृत्यादिकमेव विवक्षितमिति, अम्बरान्तधृतिः श्रीतत्त्वे आकाशे इति वाच्यम्; अत्र चाकाशो 'यद्भूतम्' इत्यादिना 'आकाश एव तदोतश्च प्रोतश्च' इत्यनेन सर्वचेतनपोषकतया 'एतस्मिन् खल्वक्षरे गार्ग्याकाश

(भावबोधः)

ओतश्च प्रोतश्चेत्यनन्याश्रितत्वेन चोच्यते । न च तत् चित्प्रकृतितोऽन्यत्र युक्तम्; न चात्रोक्तत्वादिकमुपादेयत्वमाधेयत्वं वा न तु पोष्यत्वम् । तच्च सर्वस्य जडप्रकृतिं प्रति सम्भवतीति शङ्क्यम्; एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्चेत्याकाशाश्रयत्वेनोष्यमानाक्षरस्य द्रष्टृत्वादिना चेतनत्वेनोपादानत्वायोगात् । कस्मिन् खलु इन्द्रलोका ओतश्च प्रोतश्चेति प्रजापतिलोकेषु गार्गीत्यादावाधेयत्वस्याभावाच्च । न ह्यधस्तन इन्द्रलोकः उपरितने प्रजापतिलोके, आहितः एकप्रकरणस्थस्यौतादिशब्दस्य नानार्थत्वं चायुक्तम्; तस्मात् 'रुद्रं समाश्रिता देवाः 'राज्ञि राज्यं समाहितम्' इत्यादाविव पोष्यत्वादिकमेव ओतत्वम् । न चाचेतनस्य पोष्यत्वं युक्तमिति । भूतादिपादमपि देहद्वारा भूतत्वादियुक्तचेतनपरमेवेत्याकाशः चित्प्रकृतिरेव ततश्च तदाश्रयोऽक्षरं ब्रह्मैव, न चित्प्रकृतिः । स्वाश्रयत्वस्य विरुद्धत्वादिति भावः । तदुक्तं बृहदारण्यकभाष्ये–

'दीप्तेराकाशशब्दोक्ता श्रीर्हि सर्वाश्रया मता ।
तदाश्रयः परो विष्णुः सोऽस्थूलादिगुणो मतः ॥' इति ।

अत एव भाष्योदाहृतश्रुतौ 'भर्ता' 'बिभर्ति' इत्यनयोः पोषकत्वमप्यर्थो ग्राह्यः । न्यायविवरणोदाहृतश्रुतौ पतिशब्देनात्मानमित्यात्मशब्देन परायणमित्यनेन चायमेवार्थोऽभिप्रेतः। 'एको देवो बहुधा निविष्टः' इत्यस्य शेषभूतं वाक्यं 'यदा भारं तंद्रयते स भर्तुं निधाय भारं पुनरस्तमेति' इति । तस्यार्थमाह– **स च यदेत्यादिना** ॥ ननु 'भर्ता सन्' इति श्रुतौ विष्णुवाचकपदाभावात् कथं तस्या विष्णोः सर्वाधारत्वप्रतिपादकत्वमित्यत आह– एतच्च तद्धि त्वं प्राण इत्युक्तप्राणस्येति । तस्य प्राणस्य विष्णुत्वं प्रागेव साधितमिति भावः । 'यस्मिन्निदं सञ्चविचैधि सर्वम्' इति श्रुतौ यच्छब्दस्य यतः प्रसूतेत्यादियच्छब्दवत् 'तदेव ब्रह्म परमं कवीनाम्' इत्युत्तरवाक्यस्थेन तच्छब्देनान्वय इत्याह– तदेव ब्रह्म परमं कवीनाम्' इत्युत्तरवाक्यस्थेन तच्छब्देनान्वय इत्याह ॥ **तदेव ब्रह्मेत्यर्थ इति** ॥ श्रुतावेधीत्यस्यावर्धतेत्यर्थः । तथा चास्या अपि श्रुतेर्विवक्षितार्थप्रतिपादकत्वादत्रोदाहरणं युक्तमिति भावः । विष्णुवदन्यस्यापि सर्वाधारत्वं किं न स्यादिति । अनेन सर्वाधारप्रकृत्याधारत्वं विष्णोरन्यस्य विरुद्धमिति न्यायविवरणमप्यवतारितं सत् उक्ततात्पर्यकं भवतीति द्रष्टव्यम् ।

## भावदीपः

विष्णोश्चेतनप्रकृतेश्चाविनाशित्वसाम्यादक्षरशब्दः साधारण इति न्यायविवरणोक्तं साधारण्यमाह ॥ **अविनाशित्वेति** ॥ अक्षरशब्दप्रवृत्तिनिमित्तेति योज्यम् । उपलक्षणमेतत् । अक्षरशब्दस्य रूढ्या चेत्यपि ध्येयम् । अविनाशित्वयोगमात्रस्यातिप्रसङ्गात् । देहतोऽविनाशित्वसाम्यादिति वाऽर्थः । विशेषस्तु चन्द्रिकायाम् । इत्यन्तभाष्यं सङ्गतिपरत्वेन तावद्व्याकुर्वन् अदृश्यत्वादिगुणा अक्षरस्योक्ता इत्येतावदंशं व्याचष्टे ॥ **अदृश्यत्वादिगुणा इति** ॥ अदृश्यत्वनये उक्ता इत्यर्थः । वाजसनेयके पञ्चमाध्याये अदृष्टं द्रष्टृश्रुतं श्रोत्रित्यादिनेत्यर्थः ॥ **तद्वा एतदिति** ॥ अम्बराधारत्वद्योतनायादिपदोपात्तपरशेषोक्तिः । अदृश्यत्वादेरक्षरस्थता द्योतनाय पूर्वशेषोक्तिः ॥ **इतीति** ॥ इत्युक्ता इत्यन्वयः । अहं सोममित्यादेर्भावमाह ॥ **तस्येति** ॥ वक्ष्यमाणदिशा चन्द्राद्याधारत्वलिङ्गाच्चित्प्रकृतित्व इत्यर्थः । गुणा इत्येतस्य तात्पर्यमदृश्यत्वादिकं चेति ॥ **इतीति** ॥ इति सङ्गतिसम्भवादवश्यनिर्णेयत्वमक्षरस्येत्यर्थः ॥ **उक्तेति** ॥ देहाक्षरणरूपाविनाशित्वाख्यप्रवृत्तिनिमित्तसाधारण्यमित्यर्थः । नन्वक्षरत्रयमीरितमित्यदृश्यत्वनयोक्तस्मृत्या जडप्रकृतौ तथा यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीतेत्योङ्कारेऽप्यक्षरपदप्रयोगदर्शनात् प्रवृत्तिनिमित्तस्यापि तत्साम्येनैव वाच्यत्वात्तयोः कुतो न संशयकोटित्वमित्यत आह ॥ **द्रष्टृत्वादिश्रवणाज्जडप्रकृतेरोङ्कारस्य चेति** ॥

एतेन ॐकारेण सर्वा वाक् सन्तृण्णेत्यादिश्रुत्या सर्ववर्णात्मकोङ्कारस्य सन्देहकोटित्वं वदन्तो निरस्ताः । कश्चित्तु जडप्रकृतेराकाशस्य चेति पाठः । स च न साधुरेव तत्राक्षरशब्दाप्रवृत्तेः । अविनाशित्वरूपप्रवृत्तिनिमित्तस्य भूताकाशेऽभावात् । अव्याकृते भावेऽपि तदैक्षतेति श्रवणाज्जडप्रकृतिसंशयो न स्यादित्यत आह ॥ **उत्तरेति** ॥ सदेवेत्यत्राप्रतीतेरित्यर्थः । एतेनान्तर्यामिनयेऽपि प्रकृतेः संशयकोटित्वं समाहितं ध्येयम् । तदेवभाष्यं पूर्वपक्षादिपरत्वेनापि व्याकुर्वन् मध्यमाक्षरस्योक्ता इत्येतावदंशं प्रतिज्ञापरत्वेन व्याचष्टे ॥ **एतदिति** ॥ अदृष्टत्वादिगुणकमित्यर्थः । श्रीतत्वस्येत्यनुक्त्वा मध्यमाक्षरस्येत्युक्तिलब्धां युक्तिमाह ॥ **तत्रेति** ॥ ये त्वक्षरमनिर्देश्यमिति गीतादौ श्रीतत्वे प्रसिद्धेरित्यर्थः । अक्षरत्रयमीरितमिति स्मृत्या विष्णावपि प्रसिद्धिरस्ति । अत एव भाष्ये मध्यमपदम् । अन्यथाऽक्षरस्येत्येव ब्रूयादित्यतो भाष्ये इत्यादिनेत्यनेन न केवलं प्राक्टीकोक्तवाक्यशेषो ग्राह्यः । किन्तु एतस्य वा इत्यादिलिङ्गोक्तिपरवाक्यं

(भावदीपः)

च । गुणा इत्यनेन चन्द्राद्याधारत्वगुणोऽपि ग्राह्य इति भावेन तद्वाक्योक्तिपूर्वं लिङ्गमाह ॥ **एतस्येति** ॥ लिङ्गस्य श्रीतत्वधर्मतोक्तिपरत्वेनाहमित्यादिभाष्यं योजयति ॥ **चन्द्रेति** ॥ अम्भ्रिणीपर्यायश्रीवाक्यत्वादहमित्यादेरिति भावः । द्युभ्वादिनयन्यायेन विष्णावपि सम्भवाद्भाष्यस्थादिपदानुरोधेन तद्धर्मत्वादित्येवोक्तम् । न तु तस्यैव धर्मत्वादिति । भाष्ये इत्यादेरित्यादिपदेनाहं त्वष्टारमुतपूषणं भगमिति वाक्यशेष इव ये त्वक्षरमिति गीतास्मृतिरपि गृह्यत इति भावेन तद्व्यावर्त्यशङ्कामाह ॥ **न च वाच्यमिति** ॥ आकाङ्क्षितपूर्त्या तस्यापि सम्भवादिति वाक्यार्थमाह ॥ **अदृश्यत्वादीति** ॥ न केवलं अदृश्यत्वनयरीत्या विष्णावित्यपेरर्थः । इत्यादेरित्यादिपदोक्तां स्मृतिमाह ॥ **तथा चेति** ॥ अक्षरमविनाशि सूक्ष्मत्वादनिर्देश्यम् । अप्रसिद्धत्वादव्यक्तम् । सर्वगं देशतो व्याप्तम् । गुणबाहुल्यादचिन्त्यम् । कूटे आकाशे अभिमानितया स्थितं कूटस्थम् । अचलं कदापि स्वपदादभ्रष्टम् । ध्रुवं निर्विकारमित्यर्थः ।

इयं चित्प्रकृतिपरेति तात्पर्ये व्यक्तम् । आसीदिति द्वादशगीताभाष्योक्तस्मृतिः । इदं प्रसिद्धं तमः मायाख्यं प्रलये प्रसुप्तमिति निर्व्यापारमासीत् । अभूतमजातम् । अप्रज्ञातमित्यादिना प्रत्यक्षाद्यवेद्यत्वमुच्यते । अत्तेत्युक्त्वा न तदश्नाति किञ्चनेति विरुद्धतेति न्यायविवरणमत्र योजयितुं तद्व्यावर्त्यशङ्कामाह ॥ **अथापीति** ॥ आदिपदेन सूर्याद्याधारत्वलिङ्गग्रहः । न्यायविवरणवाक्यस्य खण्डशोऽर्थमाह ॥ **न तदिति** ॥ अयमक्षरवाक्यशेष इत्यग्रे स्पष्टम् । अत्र न तदश्नातीत्येव पूर्तौ किञ्चनेत्युक्तिः सामान्याभावसूचनाय । तेन गुहानयोक्तरीत्याऽशुभानशनपरं तदिति प्रत्युक्तं ध्येयम् ॥ **न चेति** ॥ तस्य प्रागत्तृत्वस्य क्वाप्यनुक्तेः अत्तृत्वेऽपि वा धर्मान्तरेण वाक्यशेषादिति न्यायेन नान्यत्किञ्चन मिषदिति श्रुताविव स्वतन्त्राशनाभावपरतोपपत्तेरिति भावः ॥ **अत इति** ॥ श्रुतिलिङ्गरूपप्रापकभावात् विष्णुत्वेऽनशनोक्तिविरोधाच्चेत्यर्थः । अक्षरमित्यनन्तरम् अत इत्यनुषङ्गः । इतीति पाठे तु नानुषङ्गः । अत्रोक्तं प्रागुक्तं चादृश्यत्वादिगुणकत्वमित्यर्थः । आङ्पूर्वस्य हन्तेः कर्मणि रूपं मत्वाऽऽह ॥ **अभिषूयमाणमिति** ॥ कथं चन्द्रस्याभिषूयमाणत्वमत आह ॥ **लतेति** ॥ सोममिति सोमं राजानमित्यादौ हूयमानभक्ष्यमाणसोमलताभिमानत्वाच्चन्द्रेऽभिषूयमाणत्वोक्तिरित्यर्थः ॥ यत्र क्व चाक्षरस्य ब्रह्मत्वमुच्यते इति भ्रमनिरासाय भाष्यस्थप्रतिज्ञार्थमाह ॥ **इदमिति** ॥ भाष्योक्तवाक्यादम्बरधृतेरेव प्रतीत्या तदन्तसर्वधृतेरप्रतीतेः सर्वाधारप्रकृत्याधारत्वं विष्णोरन्यस्य

(भावदीपः)
विरुद्धमिति न्यायविवरणोक्तिमनुरुध्य वाक्यशेषं वदन् हेतूक्तिपरं भाष्यं व्यनक्ति ॥ **यदूर्ध्वमिति** ॥ **आकाशाख्यप्रकृतेरिति** ॥ चित्प्रकृतेरित्यर्थः । अत्र श्रुतावाकाशस्य सर्वाधारत्वमुक्त्वाऽस्यैकाक्षराश्रितत्वमुच्यते । तच्च अव्यक्तात् पुरुषः परः । अक्षरात्परतः परः । मम योनिरप्स्वान्तः समुद्र' इत्यादिना श्रीतत्वलिङ्गमिति आकाशस्तल्लिङ्गादिति न्यायसाम्येन दीप्तेराकाशशब्दोक्ता श्रीर्हि सर्वाश्रया मता । तदाश्रयः परो विष्णुः सोऽस्थूलादिगुणो मत इतिबृहद्भाष्योक्तस्मृत्या चाकाशश्चित्प्रकृतिरिति भावः । अधिकं चन्द्रिकायाम् । य एव एकप्रकृतिपुरुषकालाधारः पृथिवीं द्यां सर्वभुवनानि च दधारेति जन्मादिनये य इति श्रुतेर्व्याख्यानात् भर्तेत्यादेरर्थमाह ॥ **एक इति** ॥ भर्ता सन्नित्यस्यार्थो भर्तृत्वेनेति ॥ भ्रियमाणो बिभर्तीत्युक्त्या प्राप्तं जगदीश्वरयोराधाराधेयभावसाम्यं निरसितुं यदा भारं तन्द्रयते स भर्तुं (निधाय) परास्य भारं पुनरस्तमेतीति शेषार्थमाह ॥ **स चेति** ॥ अत्र विष्णुश्रुत्यादेरभावात् कथं विष्णौ समाख्येयं श्रुतिरित्यतस्तच्छब्दपरामृष्टमाह ॥ **एतच्चेति** ॥ स च प्राणोऽत एव प्राण इत्यत्र लक्ष्मीपतित्वादिलिङ्गेन विष्णुरिति निर्णीत इति भावः । एधि अस्तीत्यर्थः । ध्वसोरेद्धावभ्यासलोपश्च' इति अस्तेर्मध्यमपुरुषप्रयोगः छान्दस इत्येके । एधीत्यस्यावर्धतेति चन्द्रिकोक्तिः । यस्मिन्निति श्रौतयच्छब्दस्य विष्ण्वर्थत्वद्योतनाय तदेव ब्रह्म परमं कवीनामित्युत्तरवाक्यस्थतत्पदेनान्वयमाह ॥ तदेव ब्रह्मेत्यर्थः इति ॥ **विष्णुवदन्यस्यापीति** ॥ य उ त्विति श्रुतेर्जन्मादिनयोक्तरीत्या भर्तेति श्रुतेश्च यदा भारमिति वाक्यशेषार्थोक्तिरीत्याऽन्वयव्यतिरेकाभ्यां विष्ण्वेकपरत्वप्रतीतेस्तथैव श्रुतीनां व्याख्यातुं शक्यत्वेऽपि स्मृत्यवैयर्थ्याय श्रुतीः सर्वाधारप्रकृत्याधारत्वं विष्णोरिति न्यायविवरणैकदेशविवरणपरतया व्याख्यायान्यस्य विरुद्धमित्येतदंशविवरणपरतया स्मृतिर्व्याख्यातेति ध्येयम् ॥

## अभिनवचन्द्रिका

**अक्षरस्योक्ता इति** ॥ अदृश्यत्वाधिकरणैतदधिकरणप्रतिपाद्ययोः अदृश्यत्वेन प्रतीयमानत्वं सङ्गतिरिति भावः । पूर्वपक्षहेतुं वक्तुं सम्भावकं तावदाह ॥ **तत्राऽक्षरशब्दस्येति** ॥ एतेनाऽक्षरशब्दस्य प्रसिद्धेः अक्षरत्रयेऽपि सद्भावात् तस्य न मध्यमत्वसाधकत्वमिति परास्तम् । अक्षरशब्दस्य प्रसिद्धं(द्धिं) मध्यमाक्षरत्वसम्भावानार्थमनुपन्यासात् ॥ **प्रतीतेश्चेति** ॥ सम्भावकापेक्षया समुच्चयः ॥ **अदृश्यत्वादिलिङ्गानामिति** ॥ चन्द्राद्याधारत्वमादिशब्दार्थः ॥ **अत्रेति** ॥

(अभिनवचन्द्रिका)

अत्ता चराचरेति सूत्रे सर्वात्तृत्वस्योक्तत्वादित्यर्थः । ननु आ हनसमित्यस्य यज्ञेष्वभिषूयमाण-मित्यर्थकथनमयुक्तम् । चन्द्रस्याऽभिषवणायोगादित्यत आह **॥ लताभिमानित्वेनेति ॥ यदूर्ध्वमिति ॥** हे गार्गि! दिवो यदूर्ध्वं पृथिव्या यदर्वाक् यच्च द्यावा पृथिव्योरन्तरा मध्ये ये चेमे द्यावापृथिवी, यच्च **भूतम्** अतीतम्, यच्च **भवत्** वर्तमानम्, यच्च भविष्यत्, **तत्सर्वमाकाशे** श्रीतत्वे मध्यमाक्षरे, **ओतम्** आश्रितं, प्रोतं विशेषेणाश्रितम्, इत्याचक्षत इत्यर्थः । 'य उ त्रिधातु' इति श्रुतेः अन्यत्र व्याख्यानात् भर्त्ता सन्निति श्रुतिं व्याचष्टे **॥ एको देव इति ॥ स चेति ॥** अनेन स परमात्मा, स्वगतं भारं, निधाय अवतार्य, परास्येति यावत् । तं भारं भर्त्तुं नेच्छति तदा असौ भारः नश्यतीति श्रुतेर्योजनोक्ता भवतीति । इतः परं टीकायां श्रूयमाणम् 'एवञ्च तद्वै त्वं प्राण इत्युक्तप्राणस्योच्यत' इति वाक्यं प्रक्षिप्तम् । अवश्यं चैतदेवं विज्ञेयम् । अनाकाङ्क्षितत्वात्, अन्वयाभावाच्च । 'भर्ता सन्' इति वाक्ये विष्णुवाचकपदाभावात् नेदं वाक्यं विष्णुपरमिति शङ्कानिरासाय प्राणस्योच्यत इति वाक्यं श्रुतिव्याख्यानावसर एव (श्री)ह्रीश्च ते लक्ष्मीश्च पत्न्याविति श्रीलक्ष्मीपतित्वेनोक्तः स देव इति तच्छब्दव्याख्यानेनैव तच्छङ्का-निरासस्योचितत्वात् । 'यस्मिन्निदं सं च विचैधिसर्वम्' इति विष्णुपरत्वशङ्कानिरासाय तदेव ब्रह्मेत्यर्थ इति श्रुतिव्याख्यानस्य कृतत्वात् । प्राणस्योच्यत इत्युक्त्या विष्णुपरत्वशङ्कानिरासा-योगाच्च । अत्रोक्तप्राणो न विष्णुः । ततश्च नेदं वाक्यं विष्णुपरमिति वदन्तं प्रति प्राणस्योच्यत इत्युक्तेरयोगाच्च । प्राणस्य विष्णुत्वसिद्ध्यर्थमुक्तलिङ्गस्य अवश्यमनुसरणीयत्वाच्च ।

## वाक्यार्थमुक्तावली

**अविनाशित्वेति ॥** अविनाशित्वस्याक्षरशब्दप्रवृत्तिनिमित्तत्वादिति भावः । उपलक्षणं चैतत् । अक्षरशब्दस्य तत्र प्रसिद्धत्वादित्यपि द्रष्टव्यम् । तेन यौगिकस्य लिङ्गत्वात्कथं नामत्व-मित्यपास्तम् । उभयत्र रूढेरप्याश्रयणात् **॥ श्रुत्यादिसङ्गतिमिति ॥** अव्यवहितसङ्गतिस्तु धर्मोपपत्तेश्चेत्यत्र स एवाधस्तादित्यादिनोक्तं यत्सर्वगतत्वं वाजसनेये अस्थूलमनण्वित्यादि-पदेनोक्तं यच्च सर्वस्वातन्त्र्यं यत्र नान्यत्पश्यतीत्यादिनोक्तं तदेव, वाजसनेयेनान्यदतोऽस्ति द्रष्टृिति अन्यस्य स्वातन्त्र्येण द्रष्टृत्वनिषेधेनाम्नायते यदीदमक्षरमन्यत्स्यात्तदा भूमाप्यन्य इत्याक्षेपादिति बोध्यम् । अत एव भाष्येऽदृष्यत्वादिगुणा इति सामान्येनोक्तं तत्रादिपदेन नित्यं विभुं सर्वगतमित्युक्तसर्वगतत्ववदव्यवहिताधिकरणोक्तसर्वगतत्वस्यापि ग्रहणसम्भवात् । तद्वा

(वाक्यार्थमुक्तावली)

एतदक्षरं गार्गि ब्राह्मणा अभिवदन्तीत्यस्य प्रथमवाक्यत्वेऽपि तत्रादृष्टत्वाद्यश्रवणेन सङ्गत्यप्रतीतेः अत एव तत्र द्रष्टृत्वादिचेतनधर्माश्रयणेन जडप्रकृतेर्वर्णानां च सन्देहपूर्वपक्षविषयत्वनिराकरणासम्भवात् अम्बरान्तधृतेरित्युक्तहेतोस्तत्राभावाच्च तद्वा एतदक्षरं गार्ग्यदृष्टमित्युत्तरवाक्योदाहरणमिति ज्ञेयम् ॥ **किं विष्णुरिति** ॥ किमिदमक्षरं येत्वक्षरमनिर्देश्यमिति प्रसिध्या अम्भृणीसूक्तसमाख्यातं चन्द्राद्याधारत्वानशनलिङ्गैः श्रीतत्वम् उत अम्बरान्तधृति, प्रशासन, अन्यभावव्यावृत्तिलिङ्गैः विष्णुरिति तदर्थं श्रीतत्वप्रापकाणां श्रीतत्वे सावकाशत्वमन्यत्र निरवकाशत्वमुत वैष्णवलिङ्गानामन्यत्र निरवकाशत्वं श्रीतत्वप्रापकाणां विष्णौ सावकाशत्वमिति ।

ननु योगरूढिभ्याम् उभयत्र प्रसिद्धेर्विवक्षितत्वेन जीवे अविनाशित्वयोगमात्रसद्भावेऽपि रूढ्यभावात्पूर्वपक्षसंशयविषयत्वाभावेऽपि अक्षरत्रयमीरितमिति जडप्रकृतौ यः पुनरेतन्त्रिमात्रेणोमित्यनेनैवाक्षरेणेत्योङ्कारेऽक्षराणामकारोऽस्मीति सर्ववर्णेषु चाक्षरपदप्रयोगादविनाशित्वप्रवृत्तिनिमित्तसद्भावाच्च कुतो न तेषां सन्देहनिविष्टत्वमित्यत आह ॥ **द्रष्टृत्वादीति** ॥ जडप्रकृतेरोङ्कारस्येति पाठः । आकाशस्येति त्वपपाठः । आकाशे अक्षरपदाप्रयोगात् प्रवृत्तिनिमित्तमात्रस्य चेतनमात्रसाधारण्याच्च केवलं योगेन साधारण्ये नामत्वाभावापाताच्च अक्षरे आकाश ओतश्चेत्युक्ताक्षरस्याकाशत्वाप्रसक्तेश्च । नन्वचेतनप्रकृतौ वर्णेषु च कुतो न शङ्का परिहृतमेतद्भाष्यकृता अदृष्टं द्रष्टृत्यादिवाक्यं विषयवाक्यमुदाहृतैवेत्यादिन्यायविवरणटीकानानुगुण्याच्च । ननु तर्हि उत्तराधिकरणे सदेव सौम्येदमग्र आसीदित्युक्तम् । तत्किं ब्रह्म प्रधानं वेति न सन्देहावकाशः तत्रापि तदैक्षतेति ईक्षणश्रवणादित्यत आह ॥ **उत्तराधिकरणेत्विति** ॥ अस्मिन् स्थाने सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयं, तदैक्षत, तत्तेजोऽसृजतेति वाक्यान्तरे प्रतीतावपि, तद्वा एतक्षरं गार्ग्यदृष्टं द्रष्टृत्यत्राक्षरस्य विधेयधर्मतया प्रथमतो द्रष्टृत्वभाववत्सदेव सौम्येदमग्र आसीदित्यत्र सतो विधेयधर्मतया प्रथमतः प्रलयवृत्तित्वधर्मवदीक्षणस्य प्रथमाप्रतीतेरित्यर्थः । एवमदृश्यत्वादि गुणा विष्णोरुक्ताः अदृष्टं द्रष्टृ अश्रुतं श्रोतृत्यादिना अक्षरस्योक्ता इत्यसङ्गतिप्रदर्शनपरतया व्याख्याय मध्यमाक्षरेत्युक्तम् अक्षरशब्दस्य श्रीतत्वपरपूर्वपक्षं व्यनक्ति ॥ **एतदक्षरमिति** ॥ कुत इत्यतस्तस्यापि सम्भवादिति वाक्यस्य मध्यमस्याप्यक्षरशब्दवाच्यत्वसम्भवादित्यर्थमभिप्रेत्याह ॥ **अत्रेति** ॥ भाष्ये अत्रेत्यादिपदेन एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसावित्यादि गृह्यते । ततश्च सूर्याचन्द्रमसौ विधृतौ तिष्ठत इत्यादिना

(वाक्यार्थमुक्तावली)

सूर्यचन्द्राधारत्वादयः अक्षरस्योक्ताः तेज अहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगम्' इत्यादेः अम्भृणीसूक्तसमाख्यानात्तस्य श्रीतत्वस्यैव सम्भवादक्षरं मध्यमं श्रीतत्वमेवेति भाष्यार्थमभिप्रेत्य व्याचष्टे ॥ **एतस्य वाक्षरस्येत्यादिना** ॥ अदृष्टं द्रष्टृ अश्रुतं श्रोत्रित्यादिना ये अदृश्यत्वादिविष्णुगुणा उक्ताः तेषां तस्यापि तत्रापि मध्यमाक्षरेऽपि सम्भवान्मध्यमाक्षरस्यैवोक्ता इति भाष्ययोजनामभिप्रेत्य तद्व्यावृत्या शङ्काप्रदर्शनपूर्वकं व्याचष्टे । न च वाच्यमित्यादिना । कथं तेषां गुणानां मध्यमाक्षरे सम्भव इत्यतः अदृश्यत्वादिगुणाः स्मृतिषु मध्यमाक्षरस्योक्ता इति योजनामभिप्रेत्य व्याचष्टे ॥ **तथा च स्मृतिरिति** ॥ अनिर्देश्यं सूक्ष्मत्वात् । अचिन्त्यं गुणबाहुल्यात् । कूटस्थं कूटे आकाशे अभिमानित्वेन स्थितम् । अचलं स्वपदात् कदाप्यभ्रष्टम् । ध्रुवं निर्विकारम् । अभूतमजन्यम् । अप्रज्ञातं प्रत्यक्षेण । किं चातर्क्यं तदपि कुतः अलक्षणं प्रात्यक्षिकानुमापकलिङ्गरहितम् । किं चानिर्देश्यम् इदमित्थमित्यागमनिर्देशाविषयम्, इदं प्रसिद्धं तमो दुर्गाख्यं प्रलये सर्वतः प्रसुप्तमिव निर्व्यापारमिव सर्वतः सर्वत्र व्यापकतयासीदित्यर्थः । अन्यभावव्यावृत्तेरिति सूत्रनिर्वचनीयानशनत्वयुक्तिं शङ्कितुमाह ॥ **अथापि स्यादिति** ॥ अक्षरत्रयमीरितमित्यक्षरश्रुतेः अदृश्यत्वादिगुणकः येत्वक्षरमनिर्देश्यमित्यदृश्यत्वादिगुणानां यस्मिन् द्यौः पृथिवी चान्तरिक्षं 'चन्द्रमा मनसो जातः' 'चक्षोः सूर्यो' 'अहं सोममाहनसम्' इति चन्द्राद्याधारत्वस्योभयोः साम्येऽपीत्यर्थः । अत्तेत्युक्तत्वान्न तदश्नाति किञ्चनेति विरुद्धतेति न्यायविवरणं मनसि निधाय इत्यादिनेत्यादिपदेन न तदश्नाति किञ्चनेति वाक्यं च गृह्यते । तथा च न तदश्नाति, इत्यनेनाक्षरस्यानशनगुण उक्तः मध्यमाक्षरस्यैवानशनसम्भवादक्षरं मध्यमतत्वमेवेति भाष्यार्थं मत्वा समाधत्ते ॥ **मैवमिति** ॥ न तदश्नातीत्येतावता पूर्तौ किञ्चनेत्युक्तिः सामान्याभावसूचनाय । तेन गुहानयोक्तरीत्या, अशुभानशनपरं तदिति प्रत्युक्तं ध्येयम् । **न च मध्यमाक्षरस्येति** । तस्यात्तृत्वस्य प्रागनुक्तेः । अत्तृत्वेऽपि वा धर्मान्तरेणेति न्यायेन, नान्यत्किञ्चनमिषदित्यत्र स्वतन्त्रोन्मेषाभावादनिमिषोक्तिवदत्रापि स्वतन्त्राशनाभावपरतोपपत्तेरिति भावः । आङ्पूर्वस्य हन्तेः कर्मणि रूपं मत्वोक्तम् ॥ **अभिषूयमाणमिति** ॥ **लताभिमानित्वेनेति** ॥ यथा सोमं राजानमित्यादौ, हूयमानभक्ष्यमाणसोमलताभिमानित्वेन चन्द्रे हूयमानत्वादिव्यपदेशः, तथाऽभिषवयुक्तलताभिमानित्वेनाभिषूयमाणव्यपदेश इत्यर्थः । एतस्मिन् खल्वक्षरे इत्यत्र अम्बरमात्रधृतिश्रवणाद्भाष्ये कथम् अम्बरान्तस्य सर्वस्येत्युक्तमित्यतः पूर्ववाक्योदाहरणपूर्वं व्याचष्टे, इदमित्यादिना

(वाक्यार्थमुक्तावली)

॥ **आकाशाख्यप्रकृतेरिति** ॥ दीप्तेराकाशशब्दोक्ता, श्रीर्हि सर्वाश्रया मता । 'तदाश्रयः परो विष्णुः अस्थूलादिगुणोमतः' इति तद्भाष्योक्तेरिति भावः । एको देवो भर्ता सन् बहुधा निविष्ट इत्यन्वयमभिप्रेत्याह ॥ **एव इति** ॥ एको देवो बहुधा निविष्ट इत्यस्य शेषभूतं वाक्यं, यदा भारं तन्द्रयते स भर्तुं निधाय भारं पुनरस्तमेतीति, तस्यार्थमाह ॥ **स च यदा तं भारमिति** ॥ तं भारमधो निधाय, भर्तुं नेच्छतीत्यर्थः । नन्वेको देवो विष्णुः कुतः तत् श्रुतिलिङ्गाभावादित्यत आह ॥ **एतच्चेति** ॥ स च प्राणः श्रीलक्ष्मीपतित्वलिङ्गेन विष्णुरिति समाधितमिति भावः ॥ **एधीति** ॥ वर्धत इत्यर्थः । मध्यमपुरुषः छान्दसः । यद्वा अस्तीत्यर्थः । ध्वसोरेद्धाव-भ्यासलोपश्च' इति स्मरणात् । अत्रापि असोर्मध्यमपुरुषत्वं छान्दसम् । यस्मिन्निदमिति यच्छब्दस्य तदेव ब्रह्म परमं कवीनाम् इत्यनेनान्वय इत्याह ॥ **तदेवेति** ॥ एतेन सूत्रे तत्वित्यन्वेति ॥ तत्प्रथमान्तं षष्ठ्यन्तं चानुसन्धेयम् । तथा च तस्य ब्रह्मण एव श्रुत्यन्तरेऽम्बरान्तधृत्युक्तेर्विषयवाक्येऽक्षरस्याम्बरान्तधृतेर्ब्रह्मैवाक्षरमिति ।

## तत्त्वसुबोधिनी

अत्राद्येऽधिकरणे प्रकृतेः जीवमात्रादेश्च निरासः । द्वितीये सर्वश्रेष्ठस्य मुख्यप्राणस्य भूमत्वम् । अत्र तु ततोऽपि श्रेष्ठस्य श्रीतत्वस्याक्षरत्वनिरास इत्यवान्तरसङ्गतिः । अविनाशित्वरूपप्रवृत्तिनिमित्तसाधारण्येनोभयत्र प्रसिद्धत्वमाह ॥ **अत्राविनाशित्वेति** ॥ उपलक्षणं चैतत् । अक्षरशब्दस्य तत्र प्रसिद्धत्वादित्यपि द्रष्टव्यम् । अक्षरशब्दस्य योगेन उभयत्र प्रसिद्ध्यङ्गीकारेऽपि यौगिकानन्दमयादिशब्दवत् अस्यापि नामत्वं न विरुद्धम् इत्यभिप्रेत्यैवोक्तम् ॥ **अक्षरनाम्न इति** ॥ न च तद्धा एतदक्षरमिति वाक्यमेव कुतो नोदाहृतं समन्वेतव्यशब्दस्य तत्र सत्त्वादिति वाच्यम् । तत्राद्दष्टत्वादिगुणोक्त्यभावेनासङ्गतत्वापत्तेः । अम्बरान्तधृते-रित्युक्तहेतोः तत्रानुक्तत्त्वाच्चेति भावः ॥ **उक्तसाधारण्यमिति** ॥ प्रवृत्तिनिमित्तसाधारण्य-मित्यर्थः । नन्वक्षरशब्दस्य जडप्रकृतौ प्रसिद्धेः तस्या आकाशवत्कुतो न सन्देहनिवेश इत्यत आह ॥ **द्रष्टृत्वादीति** ॥ ननु तर्हि उत्तराधिकरणे ईक्षणीयस्योक्तत्वात् तस्य च जडप्रकृताव-सम्भवात् तत्र कथं तस्याः सन्देहनिवेश इत्यत आह ॥ **उत्तराधिकरणेत्विति** ॥ **प्रथमाप्रतीतेरिति** ॥ समन्वेतव्यसच्छब्दधर्मिणि अग्र आसीत् इत्युक्तनियतपूर्ववृत्तित्वलक्षण-कारणत्वरूपसाधारणधर्मप्रतीतिकाल एवेत्यर्थः । लिङ्गमप्याह ॥ **एतस्येति** ॥ प्रशासने

(तत्त्वसुबोधिनी)

आज्ञायाम् आज्ञामात्रेण चन्द्रादित्याद्याधारत्वरूपलिङ्गादित्यर्थः । अस्तु चन्द्रादित्याद्याधारत्वमक्षरस्य तथापि चित्प्रकृतेरक्षरत्वं कुत इत्यत आह ॥ **चन्द्रादीति** ॥ तस्य लक्ष्मीसूक्तत्वादिति भावः । तत्र प्रमाणमाह ॥ **तथा च इति** ॥ ततः किमित्यत आह ॥ **तच्चेति** ॥ कुत इत्यत आह ॥ **अत्तेति** ॥ **न च मध्यमेति** ॥ स्वतन्त्राशनाभावेन ब्रह्मवत्संहर्तृत्वाभावेन वा अत्तेत्यत्र संहाररूपतयोक्तस्याशनाभावस्य तत्र युक्तत्वादिति भावः । श्रुतिस्थाहनसपदार्थमाह ॥ **यज्ञेष्विति** ॥ 'ननु अहं सोमम्' इत्यस्य सूर्या चन्द्रमसौ विधृतावित्यनेन समानार्थत्वलाभाय सोमशब्देन चन्द्रो यदि ग्राह्यः तर्हि कथं तस्याहनसमिति यज्ञेषु अभिषूयमाणत्वोक्तिरित्यत आह ॥ **लताभिमानित्वेनेति** ॥ तत्र दृष्टान्तमाह ॥ **सोमं राजानमिति** ॥ यथा सोमं राजानमित्यादौ हूयमानभक्ष्यमाणसोमलताभिमानित्वात् चन्द्रे हूयमानत्वव्यपदेशः तथा अत्रापि सोममभिषुणोति इति वाक्यविहिताभिषवयुक्त सोमलताभिमानित्वात् चन्द्रेऽभिषूयमाणत्वव्यपदेश इत्यर्थः । भाष्योदाहृतश्रुतिभागे अम्बरधृतिरेव प्रतीयते न तु अम्बरान्तधृतिरित्यतो दिव आदीनां साक्षात् परमात्मधृतत्वाभावेऽपि सर्वाधाराकाशाधारत्वेन सर्वाधारत्वमपि सिध्यतीत्यभिप्रायेणैतस्मिन्निति भाष्यं व्याचष्टे ॥ **इदमक्षरमिति** ॥ एको देवो बहुधा निविष्टः इत्यस्य शेषभूतं 'यदा भारं तन्द्रयते सभर्तुं निधाय भारं पुनरस्तमेति' इत्यस्य स परमात्मा भारं जगद्धारं निधाय कृत्वा तं भारं भर्तुं यदा तन्द्रयते तदाऽसौ पुनरस्तम् एतीत्यन्वयमभिप्रेत्य तदर्थमाह ॥ **स च यदेति** ॥ ननु भर्ता सन्निति श्रुतौ विष्णुवाचकपदाभावात् कथं तस्या विष्णोः सर्वाधारत्वप्रतिपादकत्वमित्यत आह ॥ **एतच्चेति** ॥ तस्य ब्रह्मणः विष्णुत्वं प्रागेव समर्थितमिति भावः । यस्मिन्निदं सञ्च विचैधि सर्वम्' इति श्रुतौ यच्छब्दस्य 'यतः प्रसूता' इत्यादि यच्छब्दवत् तदेव ब्रह्म परमं कवीनाम् इत्युत्तरवाक्यस्थेन तच्छब्देनान्वय इत्याह ॥ **तदेव ब्रह्म' इत्यर्थ** इति ॥ श्रुतावेधीत्यस्यावर्धतेत्यर्थः । तथा चास्यापि श्रुतेः विवक्षितार्थप्रतिपादकत्वादत्रोदाहरणं युक्तमिति भावः ॥

## वाक्यार्थमञ्जरी

वाजसनेयके बृहदाहरण्यके ॥ **यद्वा एतदिति** ॥ हे गार्गीति याज्ञवल्क्यस्य स्वभार्यां प्रति सम्बोधनम् । तदेतदक्षरशब्दवाच्यं ब्रह्म अदृष्टमन्यैः साकल्येन द्रष्टं न भवति स्वयं तु दृष्टृ एवमग्रेऽपि योज्यम् । अन्येषामपि द्रष्टृत्वादिसद्भावात्किमनेनेत्यत आह ॥ **नान्यदिति** ॥

(वाक्यार्थमञ्जरी)

अतोऽक्षरादन्यत्स्वातन्त्र्येण दृष्टृ नास्ति । एवमग्रेऽपि आकाशः प्रकृतिः । नन्वक्षरशब्दस्य जडप्रकृतावपि सिद्धेः कुतो न तस्याः सन्देहविषयत्वमित्यत आह ॥ **द्रष्टृत्वादीति** ॥ **प्रथम प्रतीतेरिति** ॥ सदेव सौम्येति विषयवाक्ये तदैक्षतेत्यश्रवणादिति भावः । मध्यममित्यक्षरत्रया-पेक्षयोक्तिः । प्रशासने आज्ञायां विधृतौ विशेषेण धृतौ इत्यादेरित्यादिपदोक्तां स्मृतिमाह ॥ **तथाचेति** ॥ अक्षरमविनाशि । सूक्ष्मत्वादनिर्देश्यमदृश्यम् अप्रसिद्धत्वादव्यक्तं, सर्वत्रगं देशतो व्याप्तं, गुणबाहुल्यादचिन्त्यं, कूटे अव्याकृताकाशे अभिमानित्वेन स्थितं कूटस्थम्, अचलं कदापि स्वपदादभ्रष्टं ध्रुवं निर्विकारमित्यर्थः । इदं च चित्प्रकृतिपरमिति तात्पर्ये व्यक्तम् । आसीदिति गीताभाष्योक्तस्मृतिः तमोभूतं तमोरूपं तम आसीत्तमसा गूळ्हमग्र इति श्रुतेः अप्रज्ञातं शब्देन अलक्षणं लौकिकचिह्नरहितम् अतर्क्यम् अनुमानागम्यम् अनिर्देश्यं प्रत्यक्षेण प्रसुप्तमिव तदानीं जगद्व्यापाराभावात् । अभिषूयमाणम् अभिषवयुक्तम् । ननु सोम-पदोक्तचन्द्रस्य कथं यज्ञेषु अभिषवणमित्यत आह ॥ **लताभिमानित्वेनेति** ॥ यथा सोमो वैराजेत्यादौ हूयमानभक्ष्यमाणसोमलताभिमानित्वेन चन्द्रमसि हूयमानत्वभक्ष्यमाणत्वव्यपदेश-स्तथात्रापि सोममभिषुणोतीतिवाक्यविहिताभिषवणयुक्तसोमलताभिमानित्वेन चन्द्रेऽभिषूय-माणत्वव्यपदेश इत्यर्थः । ॐ अक्षरमम्बरान्तधृतेः ॐ । अक्षरङ्गार्गीत्युक्तमक्षरं ब्रह्मैव अम्बरान्तधृतेः अम्बरमाकाशशब्दितं श्रीतत्त्वम् अन्तं यस्य सर्वस्य जगतस्तदम्बरान्तं तस्य धृतेर्धारणादित्यर्थः । दिवः स्वर्गाद्वैकुण्ठाद्वा ऊर्ध्वम् उपरि यदस्ति महर्लोकादिकं ब्रह्माण्ड-खर्परबहिरावरणादिकं वा पृथिव्याः भूलोकात् पृथिवीसम्बन्धिसप्तलोकाद्वा अर्वाक् अधो यदस्ति तलादिकमण्डोदकादिकं वा 'अन्तरा ऊर्ध्वार्वाक्शब्दवाच्ययोः पूर्वोक्त्योर्मध्ये वर्तमानं यदिमे प्रसिद्धे द्यावापृथिवी स्वर्गादिभूरादिके 'भर्ता सन् भ्रियमाणो बिभर्ति' 'एको देवो बहुधा निविष्टः' यदा भारन्तन्द्रयते सभर्तुं परास्यभारं पुनरस्तमेतीति श्रुतिं व्याचष्टे ॥ **एको देव इति** ॥ भर्त्तेत्यस्यार्थो भर्तृत्वेनेति । श्रुतौ परास्य निरस्य ॥ **प्राणस्येति** ॥ तस्य च विष्णुत्वं प्रागेव समर्थितमिति भावः । अभिअवर्धत अधिनिषेदुः । अवस्थिता बभूवुः ।

## सूत्रभाष्यम्

### ॥ ॐ सा च प्रशासनात् ॐ ॥ ११ ॥

सा च धृतिः प्रशासनादुच्यत 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत' (बृ.वि.५-८-९) इत्यादिना । तच्च प्रशासनं विष्णोरेव ।

'सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि' (ऋ.सं.१-१६४-३६)

'चतुर्भिः साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतींरवीविपत्' (ऋ.सं.१-१५५-६) इत्यादिश्रुतेः ।

[१]'एकः शास्ता न द्वितीयोऽस्ति शास्ता' (भारते) ।

'यो हृच्छयस्तमहमिह ब्रवीमि'

'न केवलं मे भवतश्च राजन्स वै बलं बलिनां चापरेषाम्' (भागवते) इत्यादेश्च ।

## तत्त्वप्रदीपिका

सप्तमहदादिदेवता ब्रह्मादयः 'आर्द्धा' आ समन्तादृद्धा गर्भा गरणेन भ्रियन्त इति । भूमा वननीयश्चेति भुवनः, भुवनस्य विष्णोः, रेतोरूपाश्च ते तस्यैव प्रदिशा प्रदेशेनाऽदेशेनाऽज्ञया, विविधधर्मणि तिष्ठन्ति ।

'एकश्शास्ता न द्वितीयोऽस्ति शास्ता
गर्भे शयानं पुरुषं शास्ति शास्ता' इति भारते ॥

## तत्त्वप्रकाशिका

युक्त्यन्तरेण विष्णोरेवाक्षरत्वं प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे ॥ सा चेति ॥ यदा सर्वधारत्वमेवाक्षरस्य विष्णुत्वं निश्चाययति तदा सुतरामाज्ञामात्रेण सर्वाधारत्वं विष्णुत्व-निश्चायकमित्याशयः । कुतोऽनेन विष्णुत्वनिश्चय इत्यत आह ॥ तच्चेति ॥ सर्वधृतिकारणं प्रशासनं विष्णोरेव तत्कृत इति तत्राह ॥ सप्तेति ॥ महदहङ्कारपञ्चमहाभूताख्यसप्तदेवता ब्रह्माण्डाख्यातिसमृद्धगर्भास्तदावरणभूता भुवनस्य रतिप्रदाः सारभूता वा भुवनरतिप्रदस्य

१. एकः शास्ता इति भारते सभापर्वगतं वाक्यम्, यो हृच्छयः इति त्वन्यद् वाक्यमिति जगन्नाथतीर्थाः ।

(तत्त्वप्रकाशिका)
**विष्णोराज्ञया विविधविश्वधारणे तिष्ठन्तीत्यर्थः । सर्वधृतिहेतुप्रशासनं विष्णोरित्रान्यस्यापि किं न स्यादित्यत आह ॥ एक इति ॥ वलं बलप्रदो धृतिहेतुः ॥**

## गुर्वर्थदीपिका

रेतः इति पदस्य सप्तपदोक्तबहूनां विशेषणत्वघटनाय 'व्यत्ययो बहुलम्' इति वचनाद्रेतस इति तावद्योजनीयम् । तच्च षष्ठ्यैकवचनेऽपि सममित्यतो भुवनरतिप्रदस्येति टीका । पर्यावर्तन-मात्रे चक्रदृष्टान्तः । विष्णोः सकाशाज्जगत्पर्यावर्तनं तु 'प्रदिशा विधर्मणि' इति समाख्या-श्रुतिबलादाज्ञयैवेति सिद्ध्यतीत्याशयवान्भाष्यकारः 'चतुर्भिः साकम्' इत्यृचमपि प्रमाणया-मास। यद्वा अन्तरङ्गत्वाद्विष्णोः स्वचक्रमेव निदर्शनम् 'सर्वस्यान्तर्बहिः सोऽथ कृत्यां माहेश्वरीं विभुः । विज्ञाय तद्विघातार्थं पार्श्वस्थं चक्रमादिशत्' इति भागवतवचनादक्षक्रीडां कुर्वतो भगवत आज्ञामात्रेण परिवर्तमानं पार्श्वस्थमिति हि स्मृतिः । अन्यथा करस्थमित्य-वक्ष्यत्। एवं च दार्ष्टान्तिकं जगदपि भगवदाज्ञामात्रेण परिवर्तमानमिति सिद्ध्यतीत्येतत् श्रुतिमपि सञ्जग्राहेति ज्ञेयम् । नृसिंहावतारात्प्राक् दैत्यकृतशस्त्रघाताद्युपद्रवस्य स्वाङ्गास्पर्शनं भगवदाज्ञामात्रेणेत्यतो 'न के ..लं मे भवतश्च राजन्' इति प्रह्लादवाक्योद्धरणम् ।

## भावबोधः

'पतिं विश्वस्यात्मेश्वरं,' 'विश्वात्मानं परायणम्' इति न्यायविवरणे उदाहृतप्रमाणाभ्यां विष्णोः सर्वाश्रयत्वसमर्थनम् । आदिपदोपात्तेन भाष्योदाहृतश्रुत्यादिना विष्णोरन्यस्य सर्वा-धारत्वं विरुद्धमित्यस्य समर्थनमिति बोद्धव्यम् । विश्वस्य पतिं सकललोकपालकत्वेन तदाधारम् आत्मेश्वरं लक्ष्म्यादिसकलचेतननियामकत्वेन तदाधारं 'विश्वात्मानं परायणम्' इति पदयोरपि क्रमेण पूर्वोक्त एवार्थः । सूत्रभाष्यगत 'त'च्छब्द'च'शब्दयोर्विधृतौ तिष्ठत इत्यादिनेति 'आदि'पदस्य च तात्पर्यमाह ॥ **यदा सर्वाधारत्वमेवेत्यादिना** ॥ **अतिसमृद्धेति** ॥ सप्तार्धगर्भा इति संहितागतस्याकारस्यार्थोऽतीति । फलितमाह ॥ **तदावरणभूता इति** ॥ **बलप्रदो धृतिहेतुरिति** ॥ तथा च प्रकृते तदुदाहरणं युक्तमिति भावः ।

## भावदीपः

सूत्रे चशब्दादाह ॥ **युक्त्यन्तरेणेत्यादि** ॥ धृतेरक्षराज्ञाधीनत्वोक्ता- वप्यक्षरस्य कथं विष्णुत्वसिद्धिरित्यतोऽभिप्रायमाह ॥ **यदेति** ॥ आज्ञामात्रेण सर्वाधारत्वाच्चेत्यर्थ उक्तो भवति । तच्छब्दार्थं व्यनक्ति ॥ **सर्वधृतीति** ॥ **अर्धपदार्थोऽन्तिसमृद्धेति** ॥ तदावरणेति फलितोक्तिः । रेतो रेतस इति व्यत्ययेन बहुवचनस्यैकवचनं मत्त्वाऽर्थद्वयमाह ॥ **रतीति** ॥ षाष्ठ्यर्थं मत्त्वाऽर्थमाह ॥ **भुवनेति** ॥ चतुर्भिरिति श्रुतिर्जन्मादिनय एव व्याख्याता । स वै बलमित्यस्य प्रकृतोपयोगायाऽर्थमाह ॥ **बलमिति** ॥

## वाक्यार्थमुक्तावली

अत्रत्वक्षरमित्यनुवर्तते । यत उच्यते अत इति शेषः । चशब्दः युक्त्यन्तरसमुच्चायकः कैमुत्य-द्योतकश्च । ततश्च न केवलमम्बरान्तधृतिः तत्रोच्यते । किं तु सा धृतिः प्रशासनादाज्ञामात्रेणा-प्युच्यते । यतोतो ब्रह्मैवाक्षरमित्यभिप्रेत्य भावमाह ॥ **यदेति** ॥ भाष्ये इत्यादीत्यादिपदप्रयोगा-त्सर्वाधारत्वमित्युक्तम् । तच्च प्रशासनमिति भाष्ये न केवलं धृतिरिति चार्थः । सप्तार्धगर्भा इत्यत्र सप्त अर्धगर्भा इति पदच्छेदः तत्र आ समन्तादृद्ध अर्ध इति विग्रहमभिप्रेत्योक्तम् ॥ **अतीति** ॥ भावबोधे तु सप्तार्धगर्भा इति संहितागुणाकारस्यार्थ अतीत्युक्तम् । केचित्तु अर्धेत्यत्रार्थो अतीत्याहुः । फलितमाह ॥ **तदावरणेति** ॥ व्यत्ययेन रेतो रेतस इति मत्वा द्वेधा व्याचष्टे रतिप्रदाः सारभूतावेति । प्रकारान्तरेणार्थमाह ॥ **रतिप्रदस्येति** ॥ तथा च रेतस इत्यत्र षष्ठ्या अलुगिति भावः । बलप्रदो धृतिहेतुरिति । तथा च प्रकृते तदुदाहरणं युक्तमिति भावः ॥

## अभिनवचन्द्रिका

ननु सर्वाधारत्वस्य विष्णुलिङ्गत्वात् तेनैव विष्णुत्वसाधनसम्भवात् आज्ञामात्रेण सर्वाधारत्वरूपगुरुतरलिङ्गाश्रयणं व्यर्थमित्यत आह ॥ **यदेति** ॥ कैमुत्यर्थं तदाश्रयणमिति भावः ।

## तत्त्वसुबोधिनी

सूत्रभाष्यगततच्छब्दयच्छब्दयोः विधृतौ तिष्ठत इत्यादिना इत्यादिपदस्य च तात्पर्यमाह ॥ **यदा सर्वाधारत्वमेवेत्यादिना** ॥ अतिसमृद्धेति ॥ सप्तार्धगर्भ इति । संहितागतस्याकारार्थः

(तत्त्वसुबोधिनी)
॥ अतीति ॥ फलितमाह ॥ तदावरणभूता इति ॥ बलप्रदो धृतिहेतुरिति ॥ तथा च प्रकृते तदुदाहरणं युक्तमिति भावः ।

## वाक्यार्थमञ्जरी

सा च धृतिः प्रशासनादक्षरस्याज्ञामात्रादुच्यते । अतश्चाक्षरं ब्रह्मैवेत्यर्थः । आशब्दार्थो **अतिसमृद्धेति** ॥ तदावरणेति फलितोक्तिः । भुवनस्य रेत इत्येतदावृत्त्याह ॥ **भुवनस्य रतिप्रदस्येति** ॥ चतुर्भिरिति श्रुतिर्जन्मनये व्याख्याता । भाष्ये हृदयं श्रयत इति हृच्छ्रयः । प्रकृतोपयोगायाह ॥ **धृतिहेतुरिति** ॥

## सूत्रभाष्यम्

**॥ ॐ अन्यभावव्यावृत्तेश्च ॐ ॥ १२ ॥**

**'अस्थूलमनणु' (बृ.उ.५-८-८) इत्यादिना स्थूलाण्वादीनामन्यवस्तुस्वभावानां व्यावृत्तेश्च । 'अस्थूलोऽनणुरमध्यमो मध्यमोऽव्यापको व्यापको योऽसौ हरिरादिरनादिरविश्वो विश्वः सगुणो निर्गुण' इत्यादेर्विष्णोरेव हि ते धर्माः ।**

**'अस्थूलोऽनणुरूपोऽसावविश्वो विश्व एव च ।**
**विरुद्धधर्मरूपोऽसावैश्वर्यात्पुरुषोत्तम' इत्यादि ब्राह्मे ।**

## सत्तर्कदीपावली

'अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशम्' इत्यादिना प्रकृतेर्विलक्षणत्वेनोच्यमानत्वात् अत्राक्षरं विष्णुर्न प्रकृतिः । 'अस्थूलोऽनणुरूपः' इत्यादिवचनान्तरेण विष्णोरेवास्थूलत्वादिलक्षणत्वेनोक्तत्वादित्याह । अन्यभावेत्यादिना । न विद्यते अन्यो व्यापको यस्यासावव्यापक इत्यर्थः ॥

## तत्त्वप्रदीपिका

'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितम्' इत्यादिना स्थौल्याणुत्वादीनां व्यावृत्तिवचनाच्च । अस्थूलोऽनणुः 'अणोरणीयान्महतो महीयान्' इति

(तत्त्वप्रदीपिका)
श्रुतेः । अमध्यमः मध्यमपरिमाणनियतिवर्जितः । मध्ये मीयमानत्वान्मध्यमः । अस्य व्यापकोऽन्यो नास्तीत्ययमव्यापकः । प्रवेशनाद्विश्वः । यद्यपि लोकेऽतिस्थूलत्वादणुत्वादयो धर्मा एकत्र विरुद्धाः, तथाऽपि विष्णोरैश्वर्यादुपपद्यन्ते । तदाह– **।। विरुद्धधर्मरूपोऽसावैश्वर्यादिति ।।** ननु कथमतिमहत ईश्वरस्यात्यणुत्वमिष्यते । परमाणोर्वा परममहत्तोच्यते? रूपविशेषात्प्रदेशविशेषवत् । यथा हि परमाणुसम्बद्ध ईश्वरप्रदेशः परमाणुपरिमाणतामणति । मेरुमन्दरादिगतस्तत्तत्परिमाणतामुपैति । एवं गगनसम्बन्धी तादृशो भवति । न च तेषां प्रदेशानामीश्वरान्मिथो वा भेदं वादिनो वदन्ति । एकस्यैव तत्तत्प्रदेशात्मकत्वात् । एवमत्राप्यविरोधः ।

## तत्त्वप्रकाशिका

हेत्वन्तरेण विष्णोरेवाक्षरत्वं प्रतिपादयत्सूत्रं पठित्वा व्याचष्टे **।। अन्येति ।।** 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममात्रमनन्तरबाह्यम्' । 'न तदश्नाति किञ्चन' इति सकलवस्तुस्वभावानां स्थूलत्वादीनामक्षरे व्यावृत्तिकथनाच्च ब्रह्मैवाक्षरमित्यर्थः । लौकिकस्थौल्यादिराहित्यं कथं विष्णुत्वनिश्चायकमित्यत आह **।। अस्थूल इति ।।** लौकिकस्थौल्यादिराहित्येऽप्यलौकिकपरिमाणादिसद्भावान्न विष्णोरस्वभावत्वमिति भावेनोपलक्षणतया मध्यम इत्याद्युक्तम् । तमोवाय्वादीनां सर्वात्मना निवृत्तिरदुःखमसुखमित्यादिवत् । लौकिकपरिमाणादिराहित्यं कथं विष्णोर्युक्तम् । सर्वपदार्थानां प्राकृतपरिमाणस्यैव दर्शनादित्यत आह **।। अस्थूलेति ।।** मध्यमाक्षरस्याप्राकृतविग्रहत्वेऽपि भगवदपेक्षयैव । अनेनैव 'न तदश्नाति किञ्चन' इत्येतदपि जीवस्वभावभूतोपजीवनार्थाशनव्यावृत्त्यर्थमिति सूचितं भवति । अस्थूलत्वादिसमभिव्याहारात् । अक्षरश्रुत्यादीनां तु विष्णावेव मुख्यता तस्मादक्षरं विष्णुरेवेति तस्यैवादृश्यत्वादीति स्थितम् ।।

## गुर्वर्थदीपिका

लौकिकस्थौल्यादिराहित्यमित्यत्र लोकपदेन परतन्त्रमित्युच्यते । अस्थूलमित्यादौ परतन्त्रजडस्थौल्यादिराहित्यं स्वतन्त्राजडस्थौल्यादिसाहित्यं चाभिप्रेत्य । अन्यथा 'अणोरणीयान्महतो महीयान्' इत्यादिश्रुतेर्नैरर्थक्यप्रसङ्गात् । एवं च तत्प्रायपठितानां छायातमोवाय्वाकाशानामपि द्वैविध्यं स्यादित्यत आह **।। तमोवाय्वादीनामिति ।।** छायाया आदित्वेऽपि तमोरूपत्वान्

(गुर्वर्थदीपिका) .

पृथग्ग्रहणम् । यथा एकवाक्यपठितत्वेऽपि अदुःखमसुखमिति श्रुतौ दुःखस्य सर्वथाऽभावः सुखस्य द्वैविध्यं तद्वदिहापीति भावः । 'अस्थूलोऽनणुरूपोऽसौ' इत्यत्रास्थूलश्चासावनणुरूपश्चेति विग्रहः । अनणुत्वं च स्थूलत्वम् । अन्यथा विरुद्धधर्मरूपोऽसाविति वक्ष्यमाणविरोधाभासस्यासङ्गतिप्रसङ्गात् । अक्षरश्रुत्यादीनामित्यत्र अक्षरमक्षरपदं, श्रुतिः 'अदृष्टं द्रष्टृ' इत्यादिना । आदिपदेनानशनं गृह्यते । एतेषामित्यर्थः । मुख्यतेति वदता चतुर्विधनाशाख्यक्षरणाभावादक्षरपदं विष्णावेव मुख्यं न त्वपूर्णत्वाख्यक्षरणवति श्रीतत्त्वे । श्रुतिरपि सर्वैरप्यान्तमदृष्टे निरवधिकसर्वज्ञत्वादिगुणे भगवत्येव मुख्या । अनशनमपि स्वातन्त्र्येण भगवत्येव मुख्यमिति भावः ॥

## भावबोधः

**मध्यम इत्याद्युक्तमिति** ॥ प्रमाणत्वेनोदाहृतश्रुतौ मध्यमव्यापकादिशब्दः स्थूलोऽणुरित्यादेरप्युपलक्षक इत्यर्थः । तथा च विषयवाक्यगतास्थूलमनण्विति श्रुतावपि प्राकृतस्थौल्यादिमात्रस्य राहित्यं विवक्षितम्, तेन न ब्रह्मणो निस्स्वभावत्वापत्तिरिति भावः ॥ **तमोवाय्वादीनां सर्वात्मनेति** ॥ यथा 'अदुःखमसुखम्' इत्यादौ असुखमित्यनेन बाह्यसुखनिषेधेऽपि अदुःखमित्यनेन दुःखमात्रनिषेधस्तथात्राप्यस्थूलमित्यादौ प्राकृतस्थौल्यादिनिषेधेऽपि अतमोऽवाय्वित्यादौ सर्वात्मना तमआदेर्निषेध इत्यर्थः ॥ **भगवदपेक्षयैवेति** ॥ सापेक्षनिरपेक्षयोर्निरपेक्षस्यैव ग्राह्यत्वात् । श्रुतेः निरपेक्षस्थौल्यादिराहित्यपरत्वे हेतोर्न व्यभिचार इति भावः ॥ **अनेनैव न तदश्नाति किञ्चनेति** ॥ एतेनानशनोक्तिस्तु अनुपजीवनार्थत्वेनैव सावकाशेति न्यायविवरणं व्याख्यातं भवति ॥ **विष्णावेव मुख्यतेति** ॥ चतुर्विधनाशशून्यत्वादिना अक्षरादिशब्दप्रवृत्तिनिमित्तस्य सूर्यचन्द्राद्याधारत्वस्य च तत्रैव पौष्कल्यादिति भावः । अत्राद्ये– विषयवाक्यस्थलिङ्गोक्तिः । द्वितीये– कैमुत्येन साधकोपेतलिङ्गोक्तिः । तृतीये– स्वपरपक्षसाधकबाधकस्य प्राकृतस्थौल्यादिराहित्यस्योक्तिरिति सूत्रक्रमः ॥

## भावदीपः

सौत्रचशब्दांशं प्रागुक्तहेतुसमुच्चायकं मत्वाऽऽह ॥ **हेत्वन्तरेणेति** ॥ सूत्रे अन्यभावेत्युक्तिलब्धोक्तिरन्यवस्तुस्वभावानामिति । तदर्थः ॥ **सकलेति** ॥ प्राकृतानामित्यर्थः । भाष्ये

(भावदीपः)

भावप्रधानं मत्वोक्तम् ॥ **स्थूलत्वेति** ॥ भाष्योक्तश्रुतौ मध्यमव्यापकपदयोरुक्तेरुपयोगमाह ॥ **अलौकिकेति** ॥ उपलक्षणतया स्थौल्यादेरुपलक्षणतयेत्यर्थः । विस्तृतमेतन्महतोऽल्पत्वमपि हि व्योमवत् प्राह वेदरादित्यादिना वैशेषिकाधिकरणानुव्याख्याने भगवतोऽणुत्वमहत्त्वादि-व्युत्पादनेन । नन्वस्थूलमित्यादिना प्राकृतस्थौल्यादिनिरासे तत्प्रायपठितानामपि तथा स्यादित्यत आह ॥ **तम इति** ॥ अदुःखमसुखमिति श्रुतावसुखमित्यनेन बाह्यसुखनिषेधेऽपि अदुःखमित्यनेन दुःखमात्रनिषेधो यथा तथाऽत्राप्यस्थूलमित्यादौ लौकिकस्थौल्यादिनिषेधेऽपि अतमोऽवाय्वित्यादौ सर्वात्मना तमःप्रभृतेरेव निरासः । 'आदित्यवर्णं तमसः परस्तात्' इत्यादिवाक्यबलादित्यर्थः । प्राकृतस्थौल्यादिराहित्यरूपहेतोर्व्यभिचारमाशङ्क्य दहरनयभाष्ये वक्ष्यमाणपरिहारं स्वयमाह ॥ **मध्यमेति** ॥ तथा च सापेक्षनिरपेक्षयोर्निरपेक्षं स्वीकर्तव्यमित्यग्रे भाष्योक्तेरस्थूलमित्यादिश्रुतौ निरपेक्षस्थौल्यादिराहित्यस्यैव ग्राह्यत्वात्तस्यैव च सूत्रकृता विवक्षितत्वान्न व्यभिचार इत्यर्थः । प्रागुक्तानशनोक्तिविरोधं परिहर्तुम् अनशनोक्तिस्त्वनुप-जीवनार्थत्वेनैव सावकाशेति न्यायविवरणं सूत्रारूढं दर्शयितुं सयुक्तिकं व्याख्याति ॥ **अनेनैवेति** ॥ सूत्रे लौकिकस्थौल्यादिराहित्यस्य श्रुत्यर्थतया कथनेनैवेत्यर्थः । 'साशनानशन-त्वेन नरदेवौ यथोदितौ । अत्तिं विनाऽप्यदौर्बल्यात्तदानत्ति हरेर्भुज' इत्येकादशस्कन्ध-तात्पर्योक्तेरिति भावः । कुत एवं सामान्योक्तेर्विशेषपरत्वमित्यतो धर्मान्तरेण वाक्यशेषादिति न्यायादिति भावेन न्यायविवरणोक्तसमाधौ युक्तिमाह ॥ **अस्थूलत्वादीति** ॥ लौकिक-स्थौल्यादिराहित्यादिसमभिव्याहारादित्यर्थः ॥ **अक्षरेति** ॥ अक्षरश्रुतितत्प्रवृत्तिनिमित्तसूर्यचन्द्रा-द्याधारत्वलिङ्गरूपपूर्वपक्षप्रापकाणामित्यर्थः ॥ **मुख्यतेति** ॥ अनित्यत्वं देहहानिः दुःख-प्राप्तिरपूर्णता । नाशश्चतुर्विधः प्रोक्तस्तदभावो हरेः सदा' इति स्मृतेः । तस्मादक्षरमित्याचक्षत एतमेव सन्तमित्यादिश्रुतेः । अक्षरं ब्रह्म परममित्यादिस्मृतेः । द्युभ्वादिनयोक्तदिशा अत्र भाष्योक्तश्रुत्यादिना च सूर्याद्याधारत्वादेर्हरावेव युक्तत्वादिति भावः ॥ **तस्मादिति** ॥ तस्मात् प्रकृतिद्वारा सर्वाधारत्वाज्ञामात्रेण सर्वाधारत्वनिरपेक्षलौकिकस्थौल्यादिराहित्यरूपनिरवकाश-प्रापकभावात् । अनशनोक्तिरूपबाधकाभावाच्चेति सर्वहेत्वंशार्थः । अक्षरं तत्त्विति प्रतिज्ञार्थोऽ-क्षरं विष्णुरेवेति ॥ **इतीति** ॥ हेतोरित्यर्थः । शेषेण फलोक्त्या भाष्योपसंहारः यत्तु कश्चिदाह । सूत्रे श्रुत्यनुसारायाकाशधृतेरित्येव वाच्यम् अन्तपदं व्यर्थमिति तन्न । तवाप्यम्बर-पदास्वारस्यं स्यात् । मम तु अं विष्णुं बिभर्तीत्यादिव्युत्पत्त्या श्रीतत्त्वमेव आकाशशब्दार्थ इति

(भावदीपः)
सूचनेन स्वारस्योपपत्तेश्च । चन्द्रिकोक्तदिशा पृथिव्यादिप्रकृत्यन्तसर्वाधारत्वोक्त्यर्थ-तयाऽन्तपदस्यापि सार्थक्यात् ॥

## अभिनवचन्द्रिका

अस्थूलमनण्विति भाष्यस्य अनन्वयशङ्कापरिहाराय योग्यपदाध्याहारेणाऽन्वयमाह ॥ **सकलवस्त्विति** ॥ व्यावृत्तेश्चेत्यस्य व्याख्यानं व्यावृत्तिकथनादिति । ततश्चेयं भाष्ययोजना अस्थूलमनण्वित्यादिना वाक्येन अन्यवस्तुस्वभावानां स्थूलाण्वादीनां व्यावृत्तेः कथनाच्च ब्रह्मैवाऽक्षरमिति । ननु अस्थूलमनण्वित्यादिश्रौतपदानां लौकिकस्थौल्याद्यभावपरतया व्याख्यानमयुक्तम् । अतमोऽवाय्वित्यनयोरपि लौकिकतमोवायुनिवृत्यर्थकत्वप्राप्त्या परमेश्वर-स्याऽलौकिकतमोवायुच्छायाकाशप्रसङ्गादित्यत आह ॥ **तमोवाय्वादीनामिति** ॥ आदिशब्देन छायाऽऽकाशयोर्ग्रहणम् । अस्थूलमित्यादिप्रायपाठेऽपि अच्छायमित्यादेः सर्वात्मना च्छायादि-निषेध एवार्थो ग्राह्यः । अलौकिकच्छायादेरप्रामाणिकत्वेन प्रायपाठस्य त्याज्यत्वात् । अन्यथा 'अदुःखमसुखम्' इत्यादौ प्रायपाठानुसरणाय अदुःखमित्यस्य प्राकृतदुःखराहित्यमर्थः स्यादिति भावः । यद्यपि इदं वाक्यमत्र न श्रूयते, अपि तु उत्तरमूलव्याख्यानावसरे श्रूयते, तथापि तद्वाक्यमत्रैव द्रष्टव्यम् । अस्थूलादिपदव्याख्यानान्तरं प्रायपाठादच्छायमित्यादेरपि प्राकृत-च्छायादिराहित्यमर्थः स्यात् । ततश्चायुक्तमिदं व्याख्यानमिति शङ्कापरिहारात्मकस्याऽस्य वाक्यस्याऽत्रैवोचितत्वात् । अथवा पुनरुक्तमिदं वाक्यम् । तत्रैव सिंहावलोकनन्यायेन व्यवहितशङ्कापरिहारस्य बहुलमुपलम्भात् । ननु अस्थूल्वनण्वित्यादिश्रुत्युदाहरणेन कृतत्वात् 'अस्थूलोऽनणुरूप' इति स्मृत्युदाहरणं व्यर्थमित्यतः तद्वाक्यमवतारयति ॥ **अलौकिकेति** ॥ ननु अन्यभावव्यावृत्त्या नाक्षरस्य विष्णुत्वं साधयितुं शक्यम् । अन्यभावव्यावृत्तेः मध्यमाक्षरेऽपि सत्त्वादित्यत आह ॥ **मध्यमाक्षरस्येति** ॥ 'भगवदपेक्षयेत्यतः परं 'ततश्च न लिङ्गस्य सावकाशत्वम्' इति शेषः । अनन्याधीनस्थौल्यादिराहित्यस्य हेतुत्वेन विवक्षितत्वात् तस्य च विष्णुमात्रनिष्ठत्वेन न सावकाशत्वमिति भावः । ननु नैतच्छ्रुतिबलेन विष्णोरक्षरत्वं प्रतिपादयितुं शक्यं 'न तदश्नाति किञ्चन' इत्युक्तस्याऽनशनस्य विष्णौ कथमप्ययोगादित्यत आह ॥ **अनेनैवेति** ॥ अनेनैव 'ऐश्वर्यात्पुरुषोत्तम' इति भाष्ये ऐश्वर्यवचनेनेत्यर्थः । प्रायपाठबलादपि अयमेवार्थः प्रतिपत्तव्य इत्याह ॥ **अस्थूलत्वादिति** ॥ अक्षरस्य विष्णुत्वे हेत्वन्तरं चाह ॥ **अक्षरश्रुत्यादीनामिति** ॥ यतोऽक्षरश्रुतीनां विष्णावेव मुख्यता अतो विष्णुरेवाऽयमिति भावः ।

(अभिनवचन्द्रिका)

पूर्वपक्षस्तु – एतदक्षरं मध्यमं श्रीतत्त्वमेव । अक्षरश्रुतेः । 'अहं सोमम्' इत्यादिना तद्धर्मत्वेनाऽवगतचन्द्रसूर्याद्याधारत्वबलात् यद्यक्षरं श्रीतत्त्वमुच्यते, तर्हि विष्णुलिङ्गतया प्रसिद्धाऽदृश्यत्वादिबलात् विष्णुरेवाक्षरं किं न स्यादिति वाच्यम् । अदृश्यत्वादीनां 'ये त्वक्षरमनिर्देश्यम्' इत्यादिना सावकाशत्वात् । न चाक्षरश्रुतेः अदृश्यत्वादिलिङ्गानां च मध्यमोत्तमाक्षरयोः साम्येऽत्र मध्यममेवोच्यत इति निर्बन्धे को हेतुरिति वाच्यम् । 'न तदश्नाति किंचन' इति अक्षरस्यानशनोक्तेः । तच्च विष्णोर्विरुद्धम् । 'अत्ता चराचरग्रहणात्' इत्युक्तत्वात् । न च मध्यमाक्षरस्यानशनाङ्गीकारे विरोधोऽस्ति । अतो मध्यमाक्षरस्यैव एतदक्षरं(रत्वं) तस्यैवाऽदृश्यत्वादिगुणकत्वमिति ।

सिद्धान्तस्तु – ब्रह्मैवाक्षरं, 'यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते आकाश एव तदोतं च प्रोतं च' इत्याकाशाख्यप्रकृतेः सर्वाधारत्वमुक्त्वा 'एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' इति अक्षरस्य तदाधारत्वश्रवणात् । 'एतस्य वा अक्षरस्य प्रशासन' इत्यादिना आज्ञामात्रेण सर्वाधारत्वश्रवणाच्च, 'अस्थूलमनणु' इत्यादिना अन्यवस्तुस्वभावानां स्थौल्यादीनां व्यावृत्त्यभिधानाच्च । तस्मादक्षरं विष्णुरेवेति तस्यैवाऽदृश्यत्वादिसिद्धम् ।

## वाक्यार्थमुक्तावली

सूत्रार्थमाह ॥ **सकलवस्तुस्वभावानामिति** ॥ **इत्यत आहेति** ॥ इत्यतः सूत्रस्यार्थान्तरमाहेत्यर्थः ॥ ततश्च तस्य विष्णोरेव श्रुत्यन्तरेऽन्यभावव्यावृत्तिकथनादित्यर्थ उक्तो भवति । अस्वभावत्वमसत्वम् ॥ **उपलक्षणतयेति** ॥ स्थौल्यादेरुपलक्षकतयेत्यर्थः । नन्वस्थूलमित्यादिना प्रकृतस्थौल्यादिनिरासे तत्प्रायपठितानामपि तथा स्यादित्यत आह ॥ **तम इति** ॥ यथा दुःखमसुखमित्यत्रासुखमिति प्राकृतसुखनिषेधेऽपि अदुःखमिति दुःखमात्रनिषेधः एवं स्थूलादिपदैः प्राकृतस्थौल्यादिनिषेधेऽपि अतमोऽवाय्वादिपदैः सर्वात्मनातम आदेर्निषेधः क्रियत इत्यर्थः । तमो हि विषयावरकतया वाय्वादयः शरीरोपादानतया लोके प्रसक्ताः । लोके तथाप्रसक्तानां विषयावरणशून्ये अप्राकृतविग्रहे सर्वात्मना निरास इति भावः । उक्तं च बृहद्भाष्ये । अनावृते तमो नास्ति इति । व्यासतीर्थीये च अच्छायम् आवरणरहितम् ।

(वाक्यार्थमुक्तावली)
अवाय्वनाकाशमतेजस्कमिति तदारब्धदेहरहितमिति । विस्तरस्तु प्रमेयमुक्तावल्यामस्माभि: कृतोऽनुसन्धेय: ।

विरुद्धधर्मरूपोऽसावैश्वर्यात्पुरुषोत्तम इति भाष्यम् । अत्र विरुद्धधर्मरूप: प्राकृतपरिमाणादि रूपलोकविरुद्धधर्मरूप: ऐश्वर्यादीश्वरत्वादित्यर्थो बोध्य: । विष्णोरेव ते धर्मा इत्येतदाक्षिप्य समाधत्ते ॥ **मध्यमाक्षरस्येति** ॥ प्रागुक्तानशनोक्तिविरोधं परिहर्तुम्, अनशनोक्तिस्तु अनुपजीवनार्थत्वेन सावकाशेति न्यायविवरणं सूत्रारूढं कर्तुमाह ॥ **अनेनैवेति** ॥ अक्षरस्य विष्णुत्वे, युक्त्यन्तरपरेणाप्यनेनैव सूत्रेण परेणाक्षरस्य विष्णुत्वे बाधकतया शङ्कितं न तदश्नाति किञ्चनेत्येतदपि जीवस्वभावभूतोपजीवनार्थाशनव्यावृत्त्यर्थमिति हेतो: सावकाशमिति सूचितमित्यर्थ: । सर्वथाशनाभाव एव श्रुत्यर्थ: किं न स्यादित्यत आह ॥ **अस्थूलत्वादीति** ॥ **मुख्यतेति** ॥ चतुर्विधनाशाभावस्याक्षरशब्दप्रवृत्तिनिमित्तस्य तत्रैव सत्त्वादिति भाव: । सूत्रक्रमस्तु यद्यप्येतत्सूत्रत्रयं स्वपक्षसाधकम् । तथाप्याद्ये विषयवाक्यस्थतया प्रबलस्याक्षरस्य श्रीत्वे अम्बरशब्दितश्रीतत्वाश्रयत्वान्यथानुपपत्या परस्यातिविरोधिन: अम्बरान्तसर्वाधारके सूर्यचन्द्राद्याधारत्वं कैमुत्यसिद्धमिति परकीयहेतो: सावकाशत्वप्रतिपादनपरस्याम्बरान्तधृतिहेतोरुपन्यास: । द्वितीये यदा सर्वाधारत्वमेवाक्षरस्य विष्णुत्वं निश्चाययति तदा सुतरामाज्ञामात्रेण सर्वाधारत्वमिति कैमुत्यन्यायेन साधकतोपेतस्य प्रशासनलिङ्गस्य मध्यमाक्षरसाधकतयोक्तचन्द्राद्याधारत्वं परस्यैव बाधकमिति प्रदर्शनायोक्ति: । तृतीये, स्वपक्षबाधकानशनत्वयुक्तिबाधोद्धारस्योक्तिरिति ।

## तत्त्वसुबोधिनी

ननु श्रुतौ मध्यम इत्यादिकमर्थमुक्तमित्याशङ्क्य यथा स्थौल्यादिनिषेधे नि:स्वभावत्वं स्यादित्याशङ्कानिरासार्थं उक्तमित्याह ॥ **लौकिकेति** ॥ **मध्यम इत्याद्युक्तमिति** ॥ श्रुतौ मध्यमादिशब्द उपलक्षक इत्यर्थ: । तथा च विषयवाक्यगतास्थूलमनणु इति श्रुतावपि प्राकृतस्थौल्यादिनिषेधो न स्थौल्यादिमात्रनिषेध इति न ब्रह्मणो नि:स्वभावत्वापत्तिरिति भाव: । ननु प्राकृतस्थौल्यादिनिषेधेऽपि अप्राकृतस्थौल्यादिसद्भाववदतमोवाय्वित्यादावपि प्राकृततमो वाय्वादिनिषेधेऽपि अप्राकृततमो वाय्वादिसद्भाव: किं न स्यादित्याशङ्क्याह ॥ **तमो वाय्वादीनामिति** ॥ यथाऽदु:खमसुखमित्यादौ असुखमित्यनेन बाह्यसुखनिषेधेऽपि

(तत्त्वसुबोधिनी)
अदु:खमित्यनेन दु:खमात्रनिषेध: तथात्रापीत्यर्थ: । अन्यथा श्रुत्यन्तरविरोध: स्यादिति भाव: । ननु मध्यमाक्षरस्याप्राकृतविग्रहत्वात् कथं विष्णोरेवेत्युच्यते इत्यत आह ॥ **मध्यमेति** ॥ **भगवदपेक्षयैवेति** ॥ सापेक्षनिरपेक्षयो: निरपेक्षस्यैव ग्राह्यत्वात् श्रुते: निरपेक्षस्थौल्यादिराहित्यपरत्वे हेतो: न व्यभिचार इति भाव: । तर्हि अनशनाभावप्रतिपादकश्रुते: का गतिरित्यत आह ॥ **अनेनैवेति** ॥ अप्राकृतविग्रहत्वादिप्रतिपादनेनैवेत्यर्थ: । जीवस्य स्वभावभूतं यदुपजीवनं तदर्थप्रदर्शनमित्यर्थ: । अशनव्यतिरेकेण तस्यावस्थानासम्भवान्न परस्याशनमिति भाव: । कुत इत्यत आह ॥ **अस्थूलत्वादिति** ॥ **विष्णावेव मुख्यतेति** ॥ चतुर्विधनाशशून्यत्वादिशब्दप्रवृत्तिनिमित्तस्य तत्रैव पौष्कल्यादिति भाव: । अत्राद्ये विषयवाक्यस्य लिङ्गोक्ति: । द्वितीये कैमुत्येन साधकत्तयोपेतलिङ्गोक्ति: । तृतीये स्वपरसाधकबाधकरूपस्य प्राकृतस्थौल्यादिराहित्यस्योक्तिरिति सूत्रक्रम: ।

## वाक्यार्थविवरणम्

'भारं निधाय, तं भारं भर्तुं, यदा स तन्द्रियते' इत्यस्य तात्पर्यं यदा तं भारं भर्तुं नेच्छतीति । पुनरस्तमेतीत्यस्य तात्पर्यं तदासौ नश्यतीति । कुत इत्यत आह ॥ **अस्थूलत्वादिसमभिव्याहारादिति** ॥ अस्थूलमित्यादावन्यवस्तुस्वभावव्यावृत्तेरेवार्थतयोक्तत्वेन तत्समभिव्याहारात् न तदश्नातीत्यत्रापि तथैव व्याख्येयमित्याशय: ॥

## वाक्यार्थमञ्जरी

अन्येषां वस्तूनां भावानां स्थौल्यादीनां व्यावृत्तेश्चाक्षरं ब्रह्मैवेत्यर्थ: ॥ **एतद्वैतदिति** ॥ एतदाकाशाश्रयत्वेन वक्ष्यमाणमक्षरशब्दवाच्यं ब्रह्मेति तदेतल्लक्षणकं ब्राह्मणा: ब्रह्मज्ञानिन: अभिवदन्ति वै किं तल्लक्षणमित्यत आह ॥ **अस्थूलमित्यादि** ॥ प्राकृतस्थौल्यादिरहितमित्यर्थ: । **अलोहितं** लोहितोपलक्षितरूपमात्रशून्यम् ॥ **अच्छायम्** ॥ तेजोरूपत्वात् । अज्ञानरहितम् । असङ्गं निर्लेपम् । **अतेजस्कं** वर्चोरहितम्, **अप्राणं** चक्षु:श्रोतृवाङ्मनोतिरिक्तज्ञानकर्मेन्द्रियशून्यम् । **अमुखं** तदुपलक्षितशरीररहितम् । **अमात्रं** परिमितिशून्यम् । न विद्यते अन्तरं यस्य **तदनन्तरं** न विद्यते बाह्यं यस्य तदबाह्यम् इदमेव सर्वान्तरम् । बाह्यं चेति यावत् । तर्ह्यप्राकृततमो वाय्वादिरस्ति किं नेत्याह ॥ **तमोवाय्वादीनामिति** ॥ सङ्गताना-

(वाक्यार्थमञ्जरी)

मित्यर्थः । उपलक्षणमेतत् सुधानुसारेण छायाया अपि सर्वात्मना निवृत्तिर्द्रष्टव्या । एकवाक्य-पठितशब्देष्वित्थं वैषम्याश्रयणमदृष्टचरमित्यतोऽत्र बृहद्भाष्योदाहृतस्मृतिमुदाहरति ॥ **अदुःख-मसुखमिति** ॥ यथात्रासुखमित्यनेन बाह्यसुखनिषेधेऽपि अदुःखमित्यनेन दुःखमात्रनिषेधः तथात्रापीत्यर्थः । ननु परमात्मनः सर्वथा वायुरहितत्वे प्राणाद्वायुरजायतेति ऋचि प्राणः पृथग्वर्त्मेति छन्दोगे श्वसितं, मातरिश्वेति भागवते च मुख्यप्राणस्य भगवच्छ्वासजन्यत्वाभिधानं श्वासैजदलकव्रातमित्यादि भागवतद्वादशस्कन्धवाक्यं च कथं सङ्गच्छत इति चेदुच्यते । नात्र श्वासरूपवायुनिषेधः क्रियते किं तु देहारम्भकस्यैव । आकाशसहपाठात् । न ह्याकाशस्य देहारम्भकत्वेन निषेध्यत्वं विना प्रकारान्तरमस्ति श्वासश्च तत्स्वरूपभूतोऽस्त्येव । अत एव छान्दोग्यभाष्ये 'वाय्वादिप्राणशक्यं न यत्तत्कर्ता हरिर्यतः । प्राणस्तेन पृथग्वर्त्म' इति भगव-त्प्राणस्य वाय्वादिप्राणाशक्यकार्यकर्तृत्वेन पृथग्वर्त्मत्वमुक्तम् । यदा त्यागनिरोधाभ्यां सुखदुःखापादकास्मदादिश्वासतुल्योभयविधश्वासनिरोधोऽत्र क्रियते । एतदभिप्रायेणैव बृहद्भाष्य-भावबोधे प्राकृताप्रकृतोभयश्वासनिषेधेनैतत् श्रुतिव्याख्यानं कृतम् । ननु मध्यमाक्षरस्यापि अप्राकृतविग्रहवत्त्वेन प्राकृतस्थौल्यादिराहित्यसम्भवात्कथमनेन विष्णुत्वनिश्चय इत्यत आह ॥ **मध्यमाक्षरस्येति** ॥ सापेक्षनिरपेक्षयोर्मध्ये निरपेक्षस्यैव ग्राह्यत्वादिति भावः । अनेन प्राकृत-स्थौल्यादिनिषेधेन ॥ **विष्णावेव मुख्यतेति** ॥ चतुर्विधनाशशून्यत्वेनाक्षरस्य प्रवृत्तिनिमित्तस्य तत्रैव पौष्कल्यादिति भावः ॥

॥ इति अक्षराधिकरणम् ॥

## ४. सदधिकरणम्

### सूत्रभाष्यम्

'सदेव सोम्येदमग्र आसीत्' (छां.उ.६-२-१) इत्यादिना सतः स्रष्टृत्वमुच्यते । तच्च सत् 'बहु स्यां प्रजायेय' (छां.उ.६-२-३) इति परिणामप्रतीतेर्न विष्णुः । स 'ह्यविकारस्सदा शुद्धो नित्य आत्मा सदा हरिः' इत्यादिनाऽविकारः प्रसिद्ध इत्यतो ब्रवीति ॥

**॥ ॐ ईक्षतिकर्मव्यपदेशात्सः ॐ ॥ १३ ॥**

'तदैक्षत' इतीक्षतिकर्मव्यपदेशात्स एव विष्णुरत्रोच्यते । 'नान्योऽतोऽस्ति द्रष्टा' (बृ.उ.५-७-२३) 'नान्यदतोऽस्ति द्रष्टृ' (बृ.उ.५-८-११) इत्यादिना तस्यैव हि तल्लक्षणम् । बहुत्वं चाविकारेणैवोक्तम् । 'अजायमानो बहुधा विजायते' (तै.आ.३-१३-१) इति ॥

### सत्तर्कदीपावली

सदेव सोम्येत्यादेरयमर्थः । 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजत' इत्यादिश्रुत्या यत् जगत्स्रष्टृ श्रूयते तत्प्रधानं भवेत् । बहुधा जायमानत्वेनोच्यमानत्वात् । बहुधा परिणामस्तु जडरूपप्रधानधर्मो न विष्णुधर्मः । 'अविकारः शुद्ध' इत्यादिवचनैः विष्णोरविकारत्वेनोक्तत्वादिति चेन्मैवम् । विष्णुरेवात्र सच्छब्देनोच्यते न प्रधानम् ईक्षितृत्वेनोच्यमानत्वात् । ईक्षितृत्वं मुख्यं न विष्ण्वन्यस्य सम्भवति 'नान्योऽतोऽस्ति द्रष्टृ' इत्यादि श्रुतिविरोधात् । 'अजायमानो बहुधा विजायत' इति अपरिणामस्यैव बह्ववतारश्रवणात् विष्णोर्न बहुभावनश्रुतिर्विरुध्यते ॥

### तत्त्वप्रदीपिका

सदेव सोम्येदमग्र आसीदित्युपक्रम्य 'तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत' इति सतः स्रष्टृत्वमुच्यते । तच्च सत्परिणामप्रतीतेः प्रकृतिरिति प्राप्ते प्रत्याह– 'ॐ ईक्षतिकर्मव्यपदेशात्सः ॐ' । तत्सदैक्षत बहुभवेयं प्रजनयेयमितीक्षतिकर्मव्यपदेशात् । 'तत्तेजोऽसृजत' इति तत्पूर्वकर्म व्यपदेशान्नामरूपे व्याकरवाणीत्यादिना चेक्षतिपूर्वकव्याकरणादिकर्मव्यपदेशात् । स एवेश्वरस्सन् सर्वशब्दोक्तः । न तत्प्रधानमीक्षतिशक्त्या कर्तृकर्मशक्त्या च विहीनत्वात् ॥

## तत्त्वप्रकाशिका

अत्र 'सदेव सोम्य' इत्यादिसृष्टिप्रतिपादकस्थानगतसन्नाम्नो ब्रह्मप्रधानयोः कारणत्वसाम्येन साधारणस्य भगवति समन्वयप्रतिपादनादस्ति शास्त्रादिसङ्गतिः । श्रुत्यादिसङ्गतिं विषयवाक्यमुदाहृत्य विषयादिकं च सूचयति ॥ सदिति ॥ 'जन्माद्यस्य यतः' इति जगत्स्रष्टृत्वं विष्णोरुक्तं तच्छन्दोगश्रुतौ सतः प्रतीयते 'तत्तेजो असृजत' इत्यादिना । तस्य च विष्णोरन्यत्वे अन्यस्यैव स्रष्टृत्वप्रसङ्गादवश्यं निर्णेयत्वम् । तत्सदत्र विषयः । किं ब्रह्म उत प्रधानमिति सन्देहः । कारणत्वसाम्यं सन्देहबीजमिति भावः । सयुक्तिकं पूर्वपक्षयति ॥ तच्चेति ॥ एतत्सत् प्रधानमेव भवेन्न तु विष्णुः । 'बहुस्यां प्रजायेय' इति सतो बहुभावाख्यविकारित्वश्रवणादित्यर्थः । विकारित्वप्रतीतावपि कुतोऽयं-न विष्णुरित्यत आह ॥ स हीति ॥ विष्णोः प्रमाणैरविकारित्वप्रसिद्धेस्तस्मिंस्तदसम्भवात् प्रधाने च तत्सम्भवात् तदेव सदिति तस्यैव जगत्कारणत्वमिति भावः । न चेतत्स्थाने प्रधानस्य प्रतिपाद्यत्वेऽपि तस्योपादानकारणताऽभ्युपगमेनानिष्टाभावाद्व्यर्थमेवेदमधिकरणं प्रतीयत इति । मैवम् । भवेदेतद्यद्येतत्प्रकरणे विकारिकारणमेवोच्येत । नैतदस्ति । 'एकमेवाद्वितीयम्' 'तत्तेजोऽसृजत' 'सन्मूलाः सोम्येमाः सर्वाः सदायतनाः सत्प्रतिष्ठाः' 'सता सोम्य तदा सम्पन्नो भवति' इत्यादिब्रह्मलक्षणानां श्रवणात् । सिद्धान्तयत् सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ सदेवेत्यादिस्थाने सच्छब्देन विष्णुरेवोच्यते । सतस्तदैक्षतेतीक्षत्याख्यव्यापारश्रवणात् । जडप्रधानस्येक्षणासम्भवादित्यर्थः । अपि च विष्ण्वन्यस्य कस्यापीक्षतिर्मुख्यतो न विद्यते किमु जडस्येत्याशयेनाऽऽह ॥ नेति ॥ एतेन 'सोमो वै राजा गन्धर्वेष्वासीत्' इत्यादिवत् अभिमानिविवक्षयेक्षत्युक्तिरिति परास्तम् । ननु निरवकाशविकारित्वलिङ्गेनेक्षतिव्यपदेशो गौणः किं न स्यात् । 'सत्वात्सञ्जायते ज्ञानम्' इत्यादेः प्रधानस्य ज्ञानोपादानत्वादित्यत आह ॥ बहुत्वं चेति ॥ बहुभावस्य विकारित्वं विनैव स्वरूपबहुत्वेन सावकाशत्वान्न तद्बलेनेक्षतेर्गौणत्वं कल्प्यमिति भावः । अजायमानोऽविकुर्वाणः। अतः परं ब्रह्मैवैतत्स्थानप्रतिपाद्यं सदिति तस्यैवैतत्स्रष्टृत्वम् इति सिद्धम् ॥

## गुर्वर्थदीपिका

सोमो वै राजा गन्धर्वेष्वासीदित्यत्र प्रस्तुतसोमलतां 'सोमो वै' इत्यनूद्य तस्य राजत्वं गन्धर्वेषु भवनं चोच्यते । तदुभयं सोमलतायामसम्भावितम् । लताऽभिमानिचन्द्रविवक्षया यथा तथेत्यर्थः । यद्यपि 'बहु स्याम्' इति श्रुतौ बहुभावः प्रागुक्तविधया बहुरूपत्वेनापि सावकाशः । तथाऽपि प्रकर्षेण जायेयेत्युत्तरपदे विकाररूपजननश्रवणात्परिणाममादायैवेति शङ्कितुरभिप्राय-

(गुर्वर्थदीपिका)

माशङ्क्य प्रजायेयेत्येतदन्तं वाक्यमुदाहृत्य 'परिणामप्रतीतेः' इत्याह भगवान्भाष्यकारः । स्वरूपबहुत्वेनेति वदता टीकाकृताऽपि प्राशस्त्यमेव प्रशब्दार्थः । न तु प्रकर्षेण जन्मेति सिद्धान्ते परिहारोऽपि सूचितः । भगवत्स्वरूपाणां मत्स्यकूर्मादीनामवताररूपं बहुधा जन्म प्रशस्तमेव पुण्यकरत्वात् । न प्रकर्षेण जन्म । शुक्लशोणितविकाररूपदेहाभावादिति विवेकस्य स्वरूपपदेनैव सूचनादित्यनुसन्धेयम् । नन्वेवमुभयोरपि प्रशब्दार्थत्वसम्भवात्कथं निर्णय इति चेन्न । ''नान्यदतोऽस्ति द्रष्टृ'' इत्यादिश्रुतेः । भगवतोऽन्यत्र चित्प्रकृतावपि मुख्यत ईक्षितृत्वासम्भवेन पराभिमतोपचारस्याऽप्यसम्भवान्निरवकाशसौत्रहेतुना निर्णयोपपत्तेः । अत एव गङ्गाशब्दव-दीक्षितृशब्दमात्रस्य कथञ्चिदन्यथीकरणसम्भवेऽपि गङ्गायाः प्रवहनव्यापारवदीक्षणव्यापारस्या-शब्दतया कथञ्चिदप्यन्यथीकरणासम्भवेन स्वहेतोरतिदृढत्वसम्पादनाय 'ईक्षति कर्म' इत्याह भगवान्सूत्रकारः । तदपि 'तदपोऽसृजत' इति ईक्षणव्यापारकार्यसृष्टिकर्तृत्वाख्यपुंप्रयत्नकथनात् श्रुत्यैवोक्तप्रायमेवेति न श्रुतिसूत्रयोर्वैरूप्यमिति विवेकिभिरूह्यम् ॥

## भावबोधः

कारणत्वसाम्याद् विष्णोरचेतनप्रकृतेश्च 'सदेव सोम्य' इत्यादिसृष्टिस्थानसाधारणमिति न्यायविवरणं मूलीकृत्य सच्छब्दस्योभयत्र प्रसिद्धत्वमाह ॥ **अत्र सदेव सोम्येत्यादीति** ॥ **स्थानगतसन्नाम्न इति** ॥ तथा च 'स्थानं लिङ्गमनुग्रहः' इत्यनुव्याख्यानोदाहृतन्यायविवरण-विसंवादो न भाष्यस्येति भावः । अनुव्याख्यानन्यायविवरणयोः स्थानशब्दग्रहणं तु 'सदेव सोम्येदं सदायतनाः सत्प्रतिष्ठाः' इत्यादिसृष्टिस्थानगतबहुवाक्येषु सच्छब्दस्य श्रुतत्वा-त्तत्समन्वयोक्त्या तद्युक्तवाक्यानां विष्णुपरत्वसाधने स्थानसमन्वयोऽप्युक्तो भवतीति ज्ञापयितुं कृतमिति भावः ॥ **कारणत्वसाम्येनेति** ॥ अत्र 'अग्र आसीत्' इति प्रतीतं महदादिसकलकार्यं प्रति पूर्ववृत्तित्वरूपं कारणत्वमुभयत्र प्रसिद्धिद्योतकत्वेन तत एव सन्देहबीजत्वेन च विवक्षितम्; न तु 'तत्तेजोऽसृजत' इत्यादिनोक्तं तस्येक्षणादिना सह प्रतीतस्य साधारण्यहेतुत्वाद्यनुपपत्तेः । टीकायाम्, तत्तेजोऽसृजतेत्यादिनेति तु भाष्योक्तस्रष्टृत्वाक्षेपसमर्थनार्थमुक्तम् । अत एव, सदेव सोम्येति वाक्यमुदाहृतम् । कारणत्वमात्रं सन्देहबीजमिति । वक्ष्यति च **श्रुत्यादिसङ्गतिमिति** ॥ अव्यवहितपूर्वाधिकरणसङ्गतिस्तु सदेवेत्युक्तसतो विष्णुत्वं न सम्भवति । अस्य सतो बहु स्यामिति परिणामरूपजडधर्मोक्तेः । तस्य च 'अन्यभावव्यावृत्तेश्च' इति विष्णोरन्यवस्तु-

(भावबोधः)

स्वभावव्यावृत्तेरुक्तत्वेन विष्णावपीति पूर्वाधिकरणसिद्धान्तन्यायमुपजीव्य पूर्वपक्षोत्थानादिति ज्ञातव्यम् ॥ **किं ब्रह्मेति** ॥ अत्र सदेव सोम्येत्युक्तं सत् किं जडप्रकृतिः किं वा ब्रह्मेति चिन्ता। तदर्थं बहुस्यामित्युक्तबहुभावस्य विकारात्मकत्वेन विष्णावनवकाशतया तदैक्षतेत्युक्तमीक्षणं परिणामिजडप्रकृतौ गौणमङ्गीकार्यम् । किं वा ईक्षणस्य मुख्यत्वमङ्गीकृत्य मुख्येक्षणकर्तृत्वस्य जडप्रकृतावनवकाशेन बहुस्यामिति श्रुतेः स्वरूपबहुत्वार्थकत्वेन सावकाशत्वमङ्गीकार्यमिति । तदर्थमस्मिन् प्रकरणे तत्कल्पकानि सतो विष्णुत्वज्ञापकानि न सन्त्युत सर्वाधारत्वसुप्तप्राप्यत्वादीनि सन्तीति । भाष्ये पूर्वपक्षे प्रधानग्रहणज्ञापकाभावेऽपि उदाहृतन्यायविवरणगताचेतनप्रकृतेश्चैतन्मूलीकृत्य पूर्वपक्षमाह– **एतत्सत्प्रधानमेवेति** ॥ 'अविकारः सदा' इत्युदाहरिष्यमाणप्रमाणानुरोधेन भाष्यगतपरिणामपदं व्याचष्टे– **बहुभावाख्यविकारित्वेति** ॥ **तस्मिंस्तदसम्भवादिति** ॥ अनेन बहुस्यां प्रजायेयेत्यन्यस्यान्यभावादृष्टिरिति न्यायविवरणमुक्ततात्पर्यकं भवति ।

तदक्षरार्थस्तु– बहुस्यां प्रजायेयेत्युक्ततेज आदिभवनं चेतनत्वेन ततो भिन्नब्रह्मणो न सम्भवति । चेतनस्य जडादत्यन्तभिन्नस्य जडात्मना भवनस्य यतो देवदत्तघटादावन्यत्रादृष्टिरिति विकारिकारणमेवेति 'तदपोऽसृजत' इत्यादौ तेजःप्रभृतिभूतानामबाधिकं प्रत्युपादानस्यापि विवक्षितत्वादिति भावः ॥ **ब्रह्मणो लक्षणश्रवणादिति** ॥ समाधिकराहित्यस्रष्टृत्वादीनामप्येतद्वाक्योक्तत्वात्तस्य प्रधानपरत्वे उक्तब्रह्मलक्षणानामतिव्याप्तिप्रसङ्गेन सिद्धान्तिनोऽनिष्टं स्यादिति तत्समन्वयो वक्तव्य इति भावः । अनेन स्रष्टृत्वग्रहणमुपलक्षणत्वेनेत्युक्तं भवति ईक्षत्याख्यव्यापारश्रवणादिति अनेन सूत्रे कर्मपदं क्रियापदमित्युक्तं भवति । जडप्रधानस्य ईक्षणासम्भवादित्यर्थ इति । अनेनाचेतनस्येक्षणादृष्टिरिति न्यायविवरणमुक्ताभिप्रायं भवति ॥ **एतेनेति** ॥ विष्णुव्यतिरिक्तचेतनस्य मुख्यतो द्रष्टृत्वाभावप्रतिपादकश्रुत्युदाहरणेनेत्यर्थः ॥ **सोमो वै राजेति** ॥ 'यथा सोमो वै राजा गन्धर्वेष्वासीत्तं देवाश्च ऋषयश्चाभ्यध्यायन्' इत्यादौ सोमलताभिमानिचेतनविवक्षया गन्धर्वेष्वासीदिति व्यपदेशः तथात्रापि प्रधानाभिमानिचेतनविवक्षया ईक्षितृत्वव्यपदेश इत्यर्थः ॥ **बहुभावस्य विकारित्वं विनैवेति** ॥ अनेन बहुभावश्रुतिस्त्वन्यभावं विना तन्नियामकतया स्वरूपबहुत्वार्थत्वेनैव युज्यत इति न्यायविवरणमप्युक्तभावं भवति । तत्तन्नियामकतयैव स्वरूपबहुत्वस्य विवक्षितत्वात् ॥ **अविकुर्वाण इति** ॥ तेन न तदुदाहरणस्य प्रकृतासङ्गतिरिति भावः ॥

## भावदीपः

अत्र न्यायविवरणे कारणत्वसाम्याद्विष्णोरचेतनप्रकृतेश्च 'सदेव सोम्य' इत्यादिसृष्टिस्थानं साधारणमिति अनेकप्रकरणजातरूपस्थानं समन्वेतव्यमुक्तम् । तच्च न साक्षात् । किन्तु तत्स्थसन्नामसमन्वये तद्युक्तानेकप्रकरणसमन्वयो भवतीति सच्छब्दसमन्वयद्वारेत्यभिप्रेत्य भाष्ये तच्च सदिति सन्नाम समन्वेतव्यं प्रदर्शितमिति भावेनान्यत्रोक्तमेव साधारण्यं व्यनक्ति ॥ अत्र **सदेवेति** ॥ सृष्टीत्युपलक्षणम् । सदेव सोम्य । सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः । सता सोम्य तदा सम्पन्नो भवति सति सम्पद्य न विदुः । सत आगत्य न विदुरित्यादिसृष्टिसुप्तिसर्वाश्रयत्वादिप्रतिपादकानेकप्रकरणजातरूपस्थानगतस्येत्यर्थः ॥ **कारणत्वेति** ॥ सदेवेति वाक्ये विश्वस्मात् पूर्वं सत्वोक्त्या प्रतीतकारणत्वसाम्येनेति वा तत्तेजोऽसृजतेति वाक्यप्रतीतकारणत्वसाम्येनेति वाऽर्थः । अधिकं चन्द्रिकायाम् । सङ्गतिपरत्वेन तावद्भाष्यं व्याकुर्वन् सतः स्रष्टृत्वमुच्यत इति स्रष्टृपदसूचितमाक्षेप्यं दर्शयति ॥ **जन्मादीति** ॥ अत्र भाष्यटीकयोः स्रष्टृत्वशब्दः कारणत्वमात्रपरः स च गुणान्तरोपलक्षक इत्यग्रे व्यक्तीभविष्यति । उच्यत इत्यस्यार्थः ॥ **प्रतीयत इति** ॥ सदेवेत्यादि तु वाक्यप्रतीकं सन्नामप्रदर्शनार्थमिति दर्शयन् व्याचष्टे ॥ **छान्दोगश्रुतौ सत इति** ॥ षष्ठेऽध्याय इत्यर्थः । 'इत्यादिनेत्यनेनोपात्तं वाक्यमाह ॥ **तत्तेज इति** ॥ एतेन जन्मादिनयोक्तं स्रष्टृत्वमित्यादिना सत उच्यत इति भाष्ययोजना दर्शिता । तच्च सदित्यादिभाष्यतात्पर्यमाह ॥ **तस्य चेति** ॥ विष्णावयुक्तविकाररूपपरिणामोक्तेर्विष्णोरन्यत्व इत्यर्थः । स्रष्टृत्वमित्युक्तितात्पर्यमाह ॥ **अन्यस्यैवेति** ॥ इति सङ्गतिसम्भवान्निर्णेयत्वम् । सत इत्यनुषङ्गः । भाष्ये न विष्णुरित्युक्तावपि न्यायविवरणोक्तिमनुरुध्य उत प्रधानमित्युक्तम् । तदैक्षतेतीक्षणश्रवणेऽप्यदृष्टं द्रष्ट्रित्यक्षरवाक्य इव प्रथमत एवाप्रतीतेरस्ति सन्देहनिविष्टत्वं प्रधानस्येति पूर्वमेवोक्तमिति भावः । पूर्वपक्षादिपरत्वेनापि व्याख्यातुमवतारयति ॥ **सयुक्तिकमिति** ॥ तच्च सन्न विष्णुरिति प्रतिज्ञाभाष्यं फलितार्थपरं मत्वा व्याख्याति ॥ **प्रधानमेवेति** ॥ हेत्वंशार्थमाह ॥ **बहु स्यामिति** ॥ **बहुभावेति** ॥ तेजःप्रभृत्यात्मना । न तु स्वरूपबहुभावेनेत्यर्थः । इत्यादिनेत्यस्यार्थः ॥ **प्रमाणैरिति** ॥ भाष्ये हिर्हेताविति भावः । अस्त्वविकारित्वं विष्णोः परिणामोऽप्यस्त्वित्यतः बहु स्यां प्रजायेयेत्यन्यस्यान्यभावादृष्टेरिति न्यायविवरणोक्तं हृदि कृत्वाऽऽह ॥ **तस्मिन्निति** ॥ निर्विकारे हरौ । तस्य तेजःप्रभृत्यात्मना बहुभवनरूपविकारस्य क्वाप्येवमदृष्ट्याऽसम्भवादित्यर्थः

(भावदीपः)

॥ **प्रधाने चेति** ॥ तस्य विकारित्वादिति भावः ॥ **जगत्कारणत्वमिति** ॥ एतेन भाष्ये स्रष्टृत्वपदम् अनन्याधीनकारणत्वमात्रपरमिति दर्शितम् । ईक्षणं त्वभिमानिद्वारा वा ज्ञान-हेतुत्वाद्वा युक्तमिति भावः ॥ **नन्विति** ॥ उक्तदिशाऽनन्याधीनकारणत्वरूपब्रह्मलक्षणाक्षेपा-सम्भवेऽपि गुणान्तराक्षेपप्रदर्शनायेयमाशङ्केति ज्ञेयम् । प्रधानस्य सत्पदवाच्यत्वेऽपीत्येतावति वाच्ये स्थान इत्युक्तिर्वक्ष्यमाणानेकप्रकरणगतबहुगुणाक्षेपोक्तिसौकर्याय । उच्यते । प्रतीयेत ।

यद्वा तेजःप्रभृतेरग्रे त्रिवृत्करणोक्त्योपादानभूतत्वमप्यस्तीत्येवमुक्तिः ॥ **एकमेवेति** ॥ तेन समाभ्यधिकराहित्योक्त्या सदेवेत्युक्तकारणत्वस्यानन्याधीनतोक्तेः कारणत्वं ब्रह्मलक्षणमिति वा समाभ्यधिकराहित्यादिकं पृथगेकं लक्षणमिति वा एतदुक्तिः । एतच्च जन्मादिसूत्रेऽर्थात्सिद्धम् । 'सृष्टिः स्थितिश्च संहारो नियतिर्ज्ञानमावृत्तिः । बन्धमोक्षौ च कथ्यन्ते तस्योत्कर्षप्रसिद्धये'' इत्युक्तेः ॥ **सन्मूला इति** ॥ प्रजाः प्रतिनिमित्तत्वस्थितिहेतुत्वसुप्तगम्यत्वादीनां श्रवणा-त्तेषामतिव्याप्तिः स्यादिति भावः । प्रतिष्ठापकत्वं च मुक्तिदत्वम् । तत्प्रतिष्ठाश्च मोक्षगा इति तद्भाष्योक्तेः ॥ **सता सोम्येति** ॥ लयकर्तृत्वं च लब्धम् । प्रजास्तद्वत् प्रजालय इति तद्भाष्योक्तेरेवेति ध्येयम् । किञ्चित् शेषोक्त्या प्रतिज्ञाहेतूक्तिपरं भाष्यं व्याचष्टे ॥ **सदेवेति** ॥ अत्रेत्यस्यार्थः स्थान इति । कर्मशब्दार्थो व्यापारेति । तत्कृत्यं चन्द्रिकायां व्यक्तम् । तत्वप्रदीपे तु न कर्तृत्वं न कर्माणीति गीतावाक्य इव कर्मेति सृष्टिरुच्यते । ईक्षतिसृष्ट्योरुपदेशादित्यर्थ इत्युक्तम् । विष्णुरेवेत्युक्त्या न प्रधानमिति दर्शितम् । तत्र हेत्वाकाङ्क्षायामचेतनस्येक्षणा-दृष्टिरित्यन्यत्रोक्तमीक्षणस्य निरवकाशत्वमाह ॥ **जडेति** ॥ तत्तेज ऐक्षतेत्युक्तं तेजःप्रभृत्यपि चेतनमेवेत्यभिमानिनये वक्ष्यत इति भावः । श्रुत्यर्थं वदन्नेवावतारयति ॥ **अपि च विष्णिवति** ॥ **एतेनेति** ॥ श्रुतौ विष्ण्वन्यस्य मुख्येक्षणनिषेधेनेत्यर्थः । यथा सोमो वै राजा गन्धर्वेष्वासीत्तं देवा ऋषयश्चाभ्यध्यायन्नित्यादौ सोमलताभिमानिचेतनविवक्षया गन्धर्वेष्वासीदित्युक्ति-स्तथेत्यर्थः । भाष्ये बहुत्वं चाविकारेणोक्तं श्रुतावित्युक्तम् । तावता कथमुक्तशङ्काव्युदास इत्यतो बहुभावश्रुतिस्त्वन्यभावं विना तत्तन्नियामकतया स्वरूपबहुत्वार्थतयैव युज्यत इत्यन्यत्रोक्तमत्र संयोज्य भाष्यभावमाह ॥ **बहुभावस्येति** ॥ **स्वरूपेति** ॥ अत्र श्रुतौ स्वरूपबहुभवनमेवोच्यते न तु तेजःप्रभृत्यात्मना बहुभवनम् । बहुस्यामित्युक्त्वा 'तत्तेजोऽसृजतेत्युक्तिस्तु सृष्ट्वा जगदिदं सर्वं नियामकतयाऽस्य तु । बहुरूपो भवानीति स्याज्जगच्चेत्यचिन्तयत्' इति तैत्तिरीयभाष्योक्त-दिशा तत्तन्नियामकतया स्वरूपबहुभावसङ्कल्पानन्तरं नियम्यं तेजः प्रभृतिसृष्टवानित्युपपन्नेति ।

(भावदीपः)

तदुक्तं चतुर्थपादीयानुव्याख्याने । 'बहु स्यामिति तस्यैव ह्युक्तमार्गेण युज्यते । तत्तद्गतेन रूपेण तदर्थं ह्यसृजज्जगदिति'' । न्यायविवरणे चोक्तं बहुभावश्रुतिस्त्वित्यादि । विवृतमेतच्चन्द्रिकायाम् । 'बहु स्यामिति सङ्कल्प्य तेजः प्रभृतिसर्जनम् । गुरुः स्यामिति सङ्कल्प्य शिष्यसम्पादनादिवत्' इति । सूत्रार्थं विवृण्वन्नेव फलोक्त्योपसंहरति ॥ **अत इति** ॥ निरवकाशनिर्बाधमुख्येक्षणरूपसाधकभावादित्यर्थः । सदिति सूत्रे शेषोक्तिः । सदिति नपुंसकानुरोधात् ब्रह्मेत्युक्तिः । मम योनिर्महद्ब्रह्म' इति प्रधानेऽपि ब्रह्मशब्दोऽस्तीति परं ब्रह्मैवेत्युक्तम् । अयं च तत्त्वित्यनुवृत्ततुशब्दस्य स इत्यनेनान्वयेन लब्धोऽर्थः । इतिशब्दो हेत्वर्थः । तस्यैवेति पूर्वाक्षेपकभाष्यस्य विपर्ययेणोपसंहारः ॥ **स्रष्टृत्वमिति** ॥ अनन्याधीनकारणत्वादिकम् अत्र श्रुतं प्रागुक्तं चेत्यर्थः । यद्वा ईक्षणेन सच्छब्दितस्य चेतनत्वे निश्चिते तत्तेजोऽसृजतेत्यादेः सृष्टिपरत्वस्यैव सम्भवेन कारणत्वमात्रपरत्वस्याकल्प्यत्वात् स्रष्टृत्वमित्युक्तम् । यत्तु कश्चिदाह । व्यापारपरस्य कर्मपदस्य धातुनिर्देशरूपे क्षतिपदेन सामानाधिकरण्यायोगः कर्मपदवैयर्थ्यम् । स इत्यस्य साध्यनिर्देशरूपत्वे पक्षनिर्देशाभावेन पूर्वोत्तराधिकरणवैरूप्यं चेत्यादि । तन्न । धातुनिर्देशेन तदर्थस्येक्षणस्यात्र लक्ष्यत्वात् । अत एव टीकायां प्रधानस्येक्षणासम्भवादित्युक्तम् । न्यायविवरणे चाचेतनस्येक्षणादृष्टिरिति । तथा चेक्षणाख्यव्यापारेत्यर्थोपपत्तेः । कर्मपदसार्थक्यस्य पक्षविशेषानुक्तिकृत्यस्य च चन्द्रिकायां व्यक्तत्वात् ॥

## अभिनवचन्द्रिका

**ईक्षतिरिति धातुनिर्देशः** ॥ तेन तदर्थो लक्ष्यते । ततश्च ईक्षत्याख्यव्यापारश्रवणात्, सः पुंस्त्ववान् विष्णुः सच्छब्दार्थ इति सूत्रार्थः । ननु स इति तच्छब्दग्रहणं शक्यमकर्तुम्, 'अक्षरमम्बरान्तधृतेः' इत्यादाविव 'तत्तु समन्वयात्' इत्यतोऽनुवृत्ततच्छब्दान्वयसम्भवात् । अस्तु वा तच्छब्दग्रहणं कथंचित्सार्थकं, तथापि 'ईक्षतिकर्मव्यपदेशात्' तदिति वक्तव्यम् । ब्रह्मेति नपुंसकशब्देन ब्रह्मणः प्रकृतत्वात् । नपुंसकशब्देन प्रकृतस्य पुल्लिङ्गेन परामर्शे कारणाभावादिति चेत्, उच्यते । तदित्यनुवर्त्तमानतच्छब्देनोक्ते ब्रह्मणि पुस्त्वं सूचयितुं स इति पुल्लिङ्गपदम् । पुंस्त्वसूचनं च माभूत् ईक्षतिकर्मव्यपदेशात् जडप्रकृतेः जगत्कारणत्वे न सन्नामार्थत्वं, चित्प्रकृतेस्तु स्यात्, 'तदैक्षत' इत्युक्तेक्षणस्य तत्र सम्भवादिति शङ्कापरिहाराय पुंस्त्वोक्त्या कथं शङ्कापरिहार इति चेत्, इत्थम् – ईक्षणव्यपदेशात् । अत्रोक्तं जगत्कारणत्वं नोपादानत्वं

(अभिनवचन्द्रिका)

किन्तु जगन्निमित्तत्वमेव । तच्च न केवलायाः चित्प्रकृतेः सम्भवति । केवलाभ्यः स्त्रीभ्यः पुत्रजन्मानुपलब्धेः । न चेश्वरपक्षेऽप्ययं दोषः केवलेभ्यो भरद्वाजादिभ्यो द्रोणद्रुपदाद्युत्पत्ति-दर्शनादिति ॥ **छन्दोगश्रुतौ सतः प्रतीयत इति** ॥ जन्माधिकरणैतदधिकरणप्रतिपाद्ययोः जगत्कारणत्वेन प्रतीयमानत्वमेव सङ्गतिरिति भावः ॥ **बहुभावाख्येति** ॥ ननु नेदं विकारित्वश्रवणम्, अपि तु बहुस्यामिति बहुभावालोचनश्रवणम् । 'न हि तदैक्षत अहं गच्छेयम्' इति श्रवणं गमनश्रवणम् । येनेदं बहुभावश्रवणं स्यात् । ततश्चाऽसिद्धो हेतुरिति चेत्, सत्यम् बहुस्यामित्याकारकमीक्षणं श्रूयते, तथापि बहुस्यामित्याकारकज्ञानस्य प्रमात्वेन तद्विषयीभूतं विकारित्वमपि सिध्यत्येवेति भावेन विकारित्वश्रवणादित्युक्तम् ॥ **तस्मिन्निति** ॥ विष्णौ विकारित्वासम्भवात्, प्रधाने च तत्सम्भवात्, प्रधानमेव सच्छब्दवाच्यमित्यर्थः । ननु यथा विष्णौ विकारित्वमसम्भवि तथेक्षणं प्रधानेऽसम्भवि इति चेत्, न सर्वोपादानस्य प्रधानस्य ईक्षणं प्रत्युपादानत्वेनोपादानस्योपादेयाश्रितत्वसम्भवेन तत्रेक्षणस्य सुलभत्वात् । शिष्यः शङ्कते ॥ **नन्विति** ॥ **भवेदेतदिति** ॥ यद्यस्मिन्प्रकरणे कारणत्वमेवोच्येत तदा प्रधानपरत्वे बाधका-भावात् तन्निरासकैतदधिकरणवैयर्थ्यं स्यात् । न चैतदस्ति । अपि तु ब्रह्मधर्माः श्रूयते । ततश्च अस्य स्थानस्य ब्रह्मपरत्वसमर्थनाभावे ब्रह्मधर्माणामन्यगामित्वबुद्धिः स्यादिति तन्निरासायेद-मधिकरणं सार्थकमिति भावः । ननु अनेकब्रह्मधर्मश्रवणात् पूर्वपक्षानुदय इति चेत्, न तज्ज्ञान-विधुरस्येह पूर्वपक्षित्वात् । ननु ईक्षतिकर्मव्यपदेशात् विष्णुत्वसाधनमयुक्तं प्रधानस्य आदौ 'बहुस्याम्' इति ईक्षणात्मना परिणामः, तदनन्तरं तेजःप्रभृतिकार्यात्मना परिणाम' इति पूर्वपक्षिणाऽङ्गीकृतत्वेनेक्षणाऽनुपपत्तेरभावादित्यतः सूत्रभाष्ययोः 'ईक्षितिव्यपदेशात्' इति वक्तव्ये ईक्षतिकर्मव्यपदेशादित्युक्तम् तदभिप्रायमाह ॥ **ईक्षित्याख्यव्यापारश्रवणादिति** ॥ **इदमुक्तं भवति** ॥ यदीक्षणं तेजःप्रभृतिकार्यमिव कार्यतया उच्यते न चैवं, किं नाम कार्यजनने व्यापारतया उच्यते । ततश्च प्रेक्षापूर्वकारित्वमनेनोक्तं भवति । तस्य च जडे प्रधानेऽ-सम्भवाद्विष्णुत्वसिद्धिरिति । ननु नात्रेक्षणं कर्तृव्यापारतयोच्यते । येनानेन विष्णुत्वं सिद्धं स्यात् किं नाम कार्यतयोच्यते । अन्यथा निरवकाशविकारित्वलिङ्गविरोध इत्याशङ्कते ॥ **नन्विति** ॥

पूर्वपक्षस्तु – एतत्सत् प्रधानमेव भवेत् । न तु विष्णुः । यतो बहुभावादिविकारित्व-श्रवणात् । न च परमात्मनो विकारित्वं सम्भवति । 'अविकारः सदा शुद्ध' इत्यादिना तस्याऽविकारित्वात् । ततश्च प्रधानमेव सदिति तस्यैव जगत्कर्तृत्वमिति ।

(अभिनवचन्द्रिका)

सिद्धान्तस्तु– 'तदैक्षैत' इति ईक्षत्याख्यव्यापारश्रवणात् । तेन प्रेक्षापूर्वकारित्वलाभात् विष्णुरेव सत् । प्रधाने ईक्षणस्य कथमप्ययोगात् । मा भूत्तर्हि अचेतना प्रकृतिः किं न स्यादिति चेत्, स्त्रीत्वेन स्वातत्र्येण सर्जकत्वायोगात् । न च बहुभावाख्यप्रधानलिङ्गश्रवणात् स न विष्णुरिति वाच्यम् । 'अजायमानो बहुधा विजायत' इत्यविकारस्यापि बहुभावश्रवणेन तस्य सावकाशत्वात् । विष्णुरेव तत्स्थानोक्तं सदिति तस्यैव स्रष्टृत्वमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**स्थानगतसन्नाम्न इति ॥** तथा च स्थानं लिङ्गमनुग्रहः सृष्टिस्थानं साधारणमित्यनुव्याख्यानन्यायविवरणविरोधो भाष्यस्येति निरस्तम् । तत्र स्थानपदेन तद्गतसन्नाम्नो विवक्षितत्वात् । अत एव सङ्ग्रहभाष्ये 'सोऽक्षरः सन् हृदब्जगः' इति सन्नामगृहीतम् । अनुव्याख्याने स्थानग्रहणं तु सदेव सौम्येदं, सदायतनाः सत्प्रतिष्ठाः इत्यादि सृष्टिस्थानस्थबहुवाक्येषु श्रुतत्वात्समन्वयोक्त्या तद्युक्तवाक्यानां विष्णुपरत्वसाधने स्थानसमन्वयोऽप्युक्तो भवतीति फलितविवक्षया कृतम् । इदमग्र आसीत्' इति सकलकार्यं प्रति, प्रतीतपूर्ववृत्तित्वसाम्यं नेत्यर्थः । तदैक्षतेति प्रकृतौ विरुद्धमिति चेत् बहुस्यामिति विष्णोरपि विरुद्धमिति साम्यमेवेति । स्पष्टमेतन्न्यायविवरणटीकायाम् ॥ **श्रुत्यादिसङ्गतिमिति ॥** अव्यवहितसङ्गतिस्तु सदेवेत्युक्तसतो विष्णुत्वे बहुस्यामित्युक्तबहुभावो युक्तः । अन्यभावव्यावृत्तेरुक्तत्वेन परिणामरूपजडधर्मायोगादिति पूर्वाधिकरणसिद्धान्तन्यायमुपजीव्य पूर्वपक्षोत्थानादिति ज्ञेयम् ।

यद्वा तदैक्षतेत्युक्तस्वातन्त्रेणेक्षिताऽन्यः स्यात् । 'तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृ, नान्यदतोऽस्ति द्रष्टृ' इत्युक्तस्वातन्त्र्येण द्रष्ट्रक्षरं चान्यत्प्रसज्येतेत्याक्षेपेणोत्थानादाक्षेपिकी सङ्गतिरिति ज्ञेयम् । अत एव भाष्ये नान्योऽतोऽस्ति द्रष्टा, नान्यदतोऽस्ति द्रष्टृत्यादेः तस्यैव तल्लक्षणमिति वक्ष्यतीत्यतिचतुरस्रम् ॥ **तत्तेजोऽसृजदित्यादिनेति ॥** यद्यपि भाष्ये सदेव सौम्येदमग्र आसीत्' इत्यादिनेत्युक्तं तथापि तत्र कारणत्वमात्रप्रतीतेः स्रष्टृत्वाक्षेपायोगादादिपदगृहीतस्य तदैक्षत तत्तेजोऽसृजतेत्यस्यैव ग्रहणं कृतम् । भाष्ये मुखतस्तदुदाहरणं तु विषयप्रदर्शनार्थम् ॥ **किं ब्रह्मेति ॥** किमत्रोक्तं, सद्बहुभावश्रवणात्प्रधानम् । उत ईक्षणश्रवणाद् ब्रह्मेति चिन्ता । तदर्थं निरवकाशबहुभावबलादीक्षतिव्यपदेशस्योपादाने कर्तृत्वोपचारेणाभिमानि विवक्षया वा सावकाशत्वम्, उत मुख्यार्थेक्षणकर्तृत्वोक्तिबलाद्बहुभावस्य सावकाशत्वमिति ।

(वाक्यार्थमुक्तावली)

**कारणत्वमात्रमिति** ॥ अग्र आसीदिति प्रतीतपूर्ववृत्तित्वरूपकारणत्वमात्रम् । न तु तत्तेजोऽसृजतेत्युक्तानन्याधीनकारणत्वम् । तस्येक्षणादिना सह प्रतीतस्य साधारण्यहेतुत्वानुपपत्तेः । तस्यैव ब्रह्मलक्षणस्याक्षेप्यत्वाच्च ॥ **प्रधानमेवेति** ॥ उभयत्र प्रसिद्धशब्दस्य पूर्वपक्षिणा भगवति प्रसिद्धिमात्रं त्याजनीयम्, न तु प्रधाने सिद्धिः सम्पादनीया सिद्धत्वात् । सिद्धान्तिनापि अन्यत्र प्रसिद्धिमात्रं त्याजनीयं, न तु भगवति प्रसिद्धिः सम्पादनीया, सिद्धत्वादित्याशयेन भाष्ये तच्च सन्न विष्णुरित्येवोक्तावपि वस्तुतः प्रधानस्य पूर्वपक्षकोटित्वादचेतनप्रकृतेश्चेति न्यायविवरणानुरोधेन प्रधानमेवेति संयोज्यैवकारव्यवच्छेद्यप्रदर्शनपरतया भाष्यं योजितं द्रष्टव्यम् ॥ **तस्यैव जगत्कारणत्वमिति** ॥ एतेन भाष्ये स्रष्टृत्वपदमनन्याधीनकारणत्वमात्रपरमित्युक्तं भवति । सतः स्रष्टृत्वमुच्यत इति स्रष्टपदस्वारस्यं वक्तुं तदुपलक्षणं मत्वा स्थानसमन्वयप्रतिपादनेन जन्मादिसूत्रोक्तानां सर्वेषामपि लक्षणानामतिव्याप्तिपरिहारः क्रियतेऽतः स्थानसमन्वयोऽर्थवानेवेति च वक्तुमाशङ्कते ॥ **नन्वेतत्स्थान इति** ॥ विकारिकारणमेवेति तदपोऽसृजतेत्यादौ तेजःप्रभृतिभूतानाम् अबादिकं प्रत्युपादनस्यापि विवक्षितत्वादिति भावः ॥ **श्रवणादिति** ॥ तथाचातिव्याप्तिप्रसङ्गात्तन्निरासाय स्थानसमन्वयोऽर्थवानेवेति भावः । सूत्रे स्थानसमन्वयद्योतनाय समन्वेतव्यशब्दानुपादानम् । अत एव भाष्येऽत्रेत्युक्तम् । समन्वयसूत्रात्तुरन्वेति । तदित्यनुवृत्तेः सर्वत्रानुषङ्गस्मरणाय एको नारायण आसीत्समुनिर्भूत्वा समचिन्तयदित्यादौ यः कारणतया समाख्यातः स एवेति समाख्याप्रदर्शनाय वा पुनः स इति निर्देशः । अत भाष्ये स एव विष्णुरित्युक्तम् । ईक्षतिरित्यस्य धातुनिर्देशत्वेऽपि तदर्थभूतमीक्षणमिह लक्ष्यते । ईक्षतिव्यपदेशादित्युक्तेन प्रधानव्यावृत्तिः उपादानकारणे कर्तृत्वोपचारेण तदैक्षतेति व्यपदेशसम्भवादित्यतः कर्मपदम् । तच्चावान्तरव्यापारं (परं) तथा च नेक्षणं तेज आदिकमिव प्रधानकार्यतयोच्यते । किं नाम तेजआदिकार्यजनकत्वे पूर्वभाव्यवान्तरव्यापारतयोच्यते । न च ज्ञानमवान्तरव्यापारीकृत्य स्रष्टृत्वमचेतनस्योपपद्यत इति सूत्रार्थं मनसि निधाय सतः प्रतीयत इत्यादिभाष्यं चानुसृत्य भाष्यार्थमाह ॥ **सदेवेत्यादिस्थान इति** ॥ सूत्रार्थस्तु स्पष्टः । अपि चेति युक्त्यन्तरपरतया सूत्रस्यार्थान्तरमित्यर्थः ।

तथाचायं सूत्रार्थः । नान्योऽतोऽस्ति द्रष्टा, नान्यदतोऽस्ति द्रष्टृ' इत्यादौ तस्य विष्णोरेव स्वातन्त्र्येण सर्वविषयतया सम्पूर्णमीक्षणाख्यं कर्म नान्यस्येति व्यपदेशादत्र च तदैक्षतेति सतः

(वाक्यार्थमुक्तावली)

मुख्ये सम्प्रत्यय इति न्यायेन, मुख्यस्य निर्विशेषेणेति न्यायेन वा, स्वातन्त्र्येण सर्वविषये ईक्षणरूपक्रियारूपभगवल्लक्षणव्यपदेशाद्विष्णुरेव सत् नान्यचेतनाः ॥ **किमु जडस्येति** ॥ अत्र कर्मपदं तु विशेषबलादेव तदैक्षतेति क्रियाकर्तृभावः । अतस्तल्लक्षणं भवत्येवेति द्योतयितुम् । अत एव भाष्ये तस्यैव तल्लक्षणमित्युक्तम् । **एतेनेति** ॥ एवं भाष्यकृता सूत्रस्य वृत्यन्तर-वर्णनेनेत्यर्थः ॥ **सोमो वै राजेति** ॥ 'सोमो वै राजा गन्धर्वेष्वासीत्तन्देवाश्च ऋषयश्चाभ्य-ध्यायन्' इत्यादौ लता विवक्षिता । गन्धर्वदेशोत्पन्नस्य सोमस्य स्त्रीकामा वै गन्धर्वा मयैव स्त्रियापणध्वमिति तया सोमं राजानमक्रीणन्निति विक्रियादिलिङ्गश्रवणात् । तत्र राजत्वम् ऋषिदेवताध्येयत्वं च यथाऽभिमानिविवक्षया एवं प्रकृते प्रधाने विरुद्धमीक्षणमभिमानिविवक्षयेति भावः । ननु तदैक्षतेत्यत्र तेज आदिसृष्ट्यर्थं तत्सदैक्षतेति, ईक्षणाख्यव्यापारवदभवदिति न तेज आदिकार्यजनने ईक्षणमवान्तरव्यापारतयोच्यते, किन्तु तदीक्षणमात्मनि परिणतमभवदित्येव । बहुस्यामिति निरवकाशविकारित्वलिङ्गश्रवणेनैक्षतेति कर्तृनिर्देशस्यापि गौणतया व्याख्येय-त्वादिति भावेन शङ्कते ॥ **ननु निरवकाशेति** ॥ व्याहतिपरिहाराय प्रकृतसङ्गत्यर्थं चाह ॥ **अजायमानोऽविकुर्वाण इति** ॥

## तत्त्वसुबोधिनी

सदेवेत्युक्त सतो विष्णुत्वं न सम्भवतीत्यस्य सत बहुस्यामिति परिणामरूपजडधर्मोक्तेः तस्य चान्यभावव्यावृत्तेश्चेति विष्णोरन्यवस्तुस्वभावव्यावृत्तेः उक्तत्वेन विष्णावसम्भवादिति पूर्वाधिकरणसिद्धान्तन्यायमुपजीव्य पूर्वपक्षोत्थानात् अनन्तरसङ्गतिः । कारणत्वधर्मसाधारण्येन उभयत्र प्रसिद्धत्वमाह ॥ **कारणत्वसाम्येनेति** ॥ अत्राग्र आसीदिति प्रतीतं महदादिसकलकार्यं प्रति पूर्ववृत्तित्वरूपं कारणत्वमुभयत्र प्रसिद्धिद्योतकत्वेन तदेव सन्देहबीजत्वेन विवक्षितम् । न तु 'तत्तेजोऽसृजत' इत्यादिनोक्तं तस्येक्षणादिना सह प्रतीतस्य साधारण्यहेतुत्वाद्यनुपपत्तेः । टीकायां तत्तेजोऽसृजतेत्यादिनेति तु भाष्योक्तस्रष्टृत्वाक्षेपसमर्थनार्थमुक्तमिति भावः । न चात्र सृष्टिस्थानसमन्वयस्य प्रतिपाद्यमानत्वात् भाष्ये तच्छब्दग्रहणमयुक्तमिति वाच्यम् । सदेव सौम्येदं सदायतनाः सत्प्रतिष्ठाः इत्यादिसृष्टिस्थानगतबहुवाक्येषु श्रुतत्वात् तत्समन्वयोक्त्या तद्युक्त-वाक्यानां विष्णुपरत्वसाधने स्थानसमन्वयोऽप्युक्तो भवतीति ज्ञापयितुं कृतमिति भावः । अविकारः सदेत्युदाहरिष्यमाणप्रमाणानुरोधेन भाष्यगतपरिणामपदं व्याचष्टे ॥ **बहुभावाख्येति**

(तत्त्वसुबोधिनी)

॥ **विकारिकारणमेवेति** ॥ तदपोऽसृजतेत्यादौ तेजः प्रभृतिभूतानामवादिकं प्रति उपादानत्व-स्यापि विवक्षितत्वादिति भावः ॥ **ब्रह्मलक्षणानां श्रवणादिति** ॥ समधिकराहित्यस्रष्टृत्वादीना-मप्येतद्वाक्योक्तत्वात्तस्य प्रधानपरत्वे उक्तब्रह्मलक्षणानामतिव्याप्तिप्रसङ्गेन सिद्धान्तिनोऽनिष्टता स्यादिति तत्समन्वयो वक्तव्य इति भावः । अनेन भाष्ये स्रष्टृत्वग्रहणमुपलक्षणत्वेनेत्युक्तं भवति ॥ **ईक्षत्याख्यव्यापारेति** ॥ अनेन सूत्रोक्तकर्मपदं क्रियापरमित्युक्तं भवति ॥ **एतेनेति** ॥ विष्णुव्यतिरिक्तचेतनस्य मुखतो द्रष्टृत्वाभावप्रतिपादकश्रुत्युदाहरणेनेत्यर्थः ॥ **सोमो वै राजेति** ॥ यथा 'सोमो वै राजा गन्धर्वेषु आसीत्तं देवाश्च ऋषयश्चाभ्यध्यायन्' इत्यादौ सोमलताभि-मानिचेतनविवक्षया गन्धर्वेषु आसीदिति व्यपदेशः तथा तत्रापि प्रधानाभिमानिचेतनविवक्षया ईक्षितृत्वव्यपदेश इत्यर्थः । ननु गौणव्यपदेशो गुणयोगनिमित्तं तत्र प्रकृते गुणयोगः कथमित्यत आह ॥ **सत्त्वादिति** ॥ तथा च ज्ञानोपादानत्वरूपगुणयोगात् गौणीवृत्तिरुपपन्नेति भावः । नन्वजायमान इत्यत्राविकारेण बहुत्वानुक्तेः कथं प्रकृते तदुदाहरणम् । अत्राह ॥ **अविकुर्वाण इति** ॥ तथा च तदुदाहरणं न प्रकृतासङ्गतमिति भावः ।

## वाक्यार्थविवरणम्

**स्वरूपबहुत्वेनेति** ॥ स्वस्य यानि रूपाणि तेषां बहुत्वेनेत्याशयः । यथोक्तम् । बहु स्यामिति तस्यैव ह्युक्तमार्गेण युज्यते ॥ **तत्तद्गतेन रूपेणेति** ॥

## वाक्यार्थमञ्जरी

**स्थानेति** ॥ अनेकप्रमेयप्रतिपादकमेकार्थे तात्पर्ययुक्तं स्थानम् ॥ **कारणत्वसाम्येनेति** ॥ अत्र 'सदेव सौम्येदमग्र आसीत्' इत्यत्र अग्र आसीदित्यनेन प्रतीतं महदादिसकलकार्यं प्रति पूर्ववृत्तित्वरूपं कारणत्वमुभयत्र प्रसिद्धिद्योतकत्वेन । तत एव च सन्देहबीजत्वेन विवक्षितम् । न तु तत्तेजोऽसृजतेत्यादिनोक्तम् । तस्य प्रधानासम्भावितेक्षणादिना सह प्रतीतस्य साधारण्य-हेतुत्वाद्यनुपपत्तेः । पूर्वाधिकरणे उत्तराधिकरणेत्वीक्षणस्य प्रथमाप्रतीतेरस्त्यवकाश इत्युक्तेश्च टीकायां तत्तेजोऽसृजत' इत्युक्तिस्तु भाष्योक्तस्रष्टृत्वापेक्षत्वसमर्थनार्थम् । अत एव पूर्वं सदेव सौम्येति वाक्यमुदाहृतम् । 'तदैक्षत बहुस्यां प्रजायेय' इति 'तत्तेजोऽसृजत्' इति अस्याय-मर्थः । तत्सदाख्यं ब्रह्म ऐक्षत विचारमकरोत् । किमिति? अहं बहुस्यां जगन्नियामकतया

(वाक्यार्थमञ्जरी)

बहुरूपं स्यामिति । तदर्थं प्रजायेय सृज्यं प्रजनयामीति तदित्थं विचिन्त्य । तेजः तेजोनाम-करमासहितं तदभिमन्यमानं तेजोभूतम् असृजतेति । तेजःप्रभृतीनामग्रे त्रिवृत्करणोक्त्या तेजः शब्दादेरभिमन्यमानभूतपरत्वस्यापि सत्वेनोपादानस्यापि प्रतिपाद्यत्वाद्विकारिकारणमेवोक्तम् । एकं स्वावयवगुणकर्मादिभेदरहितम् अद्वितीयं समाभ्यधिकरहितम् ॥ **सन्मूला इति** ॥ हे सौम्य इमाः सर्वाः प्रजाः सत्परं ब्रह्म मूलकर्तु यासां ताः सन्मूलाः । न केवलमेतावत् । किं तु सत् आयतनम् आश्रयो यासां ताः सदायतनाश्च । न केवलं सांसारिकाः किं तु सत्प्रतिष्ठाः सत् प्रतिष्ठा प्रतिष्ठापकं यासां मुक्तप्रजानां ताः सत्प्रतिष्ठा इत्यर्थः ॥ **सतेति** ॥ हे सौम्य यदा जीवः स्वपिति सुप्तो भवति तदा सता परमात्मना सम्पन्नः सङ्गतो भवतीत्यर्थः ॥ **ब्रह्मलक्षण-श्रवणादिति** ॥ एतद्वाक्यस्य प्रधानपरत्वे ब्रह्मलक्षणानामतिव्याप्तिप्रसङ्गेन सिद्धान्तिनोऽनिष्टं स्यादिति तत्समन्वयो वक्तव्य एवेति भावः ॥ ॐ ईक्षतिकर्मव्यपदेशात्सः ॐ ॥ सदेवेत्यादौ श्रुतसच्छब्दवाच्यं सः विष्णुरेवेक्षतिरूपं च तत्कर्म च तस्य व्यपदेशात्तदैक्षतेतीक्षणाख्य-व्यापारोक्तिरित्यर्थः ॥ **एतेनेति** ॥ विष्णुव्यतिरिक्तचेतनस्य मुख्यतो द्रष्टत्वाभावप्रतिपादक-श्रुत्युदाहरणेनेत्यर्थः ॥ **सोमो वै राजेति** ॥ यथा सोमो वै राजागन्धर्वेष्वासीत्तं देवाश्च ऋषयश्चाभ्यध्यायन्नित्यादौ सोमलताभिमानिचेतनविवक्षया गन्धर्वेष्वासीदिति व्यपदेशस्तथात्रापि प्रधानाभिमानी चेतनविवक्षयेक्षत्यादिव्यपदेश इत्यर्थः । गौणत्वव्यपदेशप्रयोजकमीक्षितृ-गतकारणत्वरूपगुणयोगं प्रधाने दर्शयति ॥ **सत्त्वादिति** ॥ सत्वगुणात्मकप्रधानादित्यर्थः ॥ **स्वरूपवहुत्वेनेति** ॥ स्वस्य यानि रूपाणि तेषां बहुत्वेनेत्यर्थः । प्रकृतोपयोगायाह ॥ **अविकुर्वाण इति** ॥

॥ इति सदधिकरणम् ॥

## ५. दहराधिकरणम्

### सूत्रभाष्यम्

चन्द्रादित्याद्याधारत्वं विष्णोरुक्तम् । तच्च 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशः.... किं तदत्र विद्यते....' (छां.उ.८-१-२) 'उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते । उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ । विद्युन्नक्षत्राणि' (छां.उ.८-१-३) इत्यादिनाऽऽकाशस्य प्रतीयते । स चाऽऽकाशो न विष्णुः । 'तस्यान्ते सुषिरं सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितम्' (म.ना.उ.११) इति श्रुतेरित्यत आह ॥

॥ ॐ दहर उत्तरेभ्य ॐ ॥ १४ ॥

'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामस्सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्य' (छां.उ.८-७-३) इत्यादिभ्य उत्तरेभ्यो गुणेभ्यो दहरो' विष्णुरेव । 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' (बृ.उ.५-५) 'स एष सर्वेभ्यः पाप्मभ्य उदित' (छां.उ.१-६-७) इत्यादिना विष्णोरेव हि ते गुणाः ।

'नित्यतीर्णाशनायादिरेक एव हरिः स्वतः ।
अशनायादिकानन्ये तत्प्रसादात्तरन्ति हि' इति पाद्मे ।

सापेक्षनिरपेक्षयोश्च निरपेक्षं स्वीकर्तव्यम् ।

'सत्यकामः परो (कामोऽपरो पा.) नास्ति तमृते विष्णुमव्ययम् ।
सत्यकामत्वमन्येषां भवेत्तत्काम्यकामिता' इति स्कान्दे ॥

### सत्तर्कदीपावली

चन्द्रेत्यादेरयमर्थः । अथ 'यदिदमस्मिन् ब्रह्मपुरे' इत्याम्नायते । तत्राकाशस्य चन्द्राद्याधारत्वमुच्यते । स चाकाशशब्दाभिधेयो भूताकाशो न विष्णुः । 'हृदयं तद्विजानीयात्' । 'तस्यान्ते सुषिरं सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितम्' इति श्रुत्यन्तरसंवादात् । अतश्च यदुक्तं चन्द्राद्याधारत्वम् 'एतस्य वा अक्षरस्य' इत्यादिना विष्णोरेवेति तन्न सिध्यतीत्येवं प्राप्तेऽभिधीयते । चन्द्राद्याधारो विष्णुरेवात्र निर्दिश्यते नाकाशम् । 'य आत्माऽपहतपाप्मा

(सत्तर्कदीपावली)
विजरो विमृत्युर्विशोको विजिघित्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः' इत्युत्तरवाक्य-विरोधात्। 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाश-स्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्' इत्यन्वेष्टव्यतया यो निर्दिष्टो विष्णुः दहराकाशस्थः तद्धृदयाकाशसन्निहितं सर्वमुच्यते । 'यावान्वाऽयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन् द्यावापृथिवी' इत्यादिना । अथवा विष्णुमेव न बाह्यमाकाशं व्यापकं हृत्कुहरस्थाकाशशब्देन निर्दिश्य तत्स्थं सर्वमुच्यते । उभे इत्यादिना अपहतपाप्मत्वादिगुणकश्च विष्णुरेवेतच्छ्रुत्यन्तरसंवादेन दृढीकरोति ॥ **योऽशनायेत्यादिना** ॥ अशनाया विजिघत्सा क्षुदित्यर्थः । नन्वशनायादिपिपासाद्यतिक्रमणं न विष्णोरेव मुक्तानामपि सम्भवादित्याशङ्कित आह ॥ **नित्येति** ॥ न च दहराकाशस्याप्यपहतपाप्मत्वादिकं किञ्चिदाशङ्कनीयम् अप्रसक्त-प्रतिषेधप्रसङ्गात् । भगवदनुकूलेच्छावत्वमेव मुक्तानां सत्यकामत्वमित्यर्थः ॥

## तत्त्वप्रदीपिका

चन्द्रादित्याद्याधारत्वं विष्णोरुक्तं 'सूर्याचन्द्रमसौ विधृतौ' इत्यादिना । तच्च 'एतस्मि-न्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति, स ब्रूयाद्यावान्वाऽयमाकाशस्तावानेषोऽऽन्तर्हृदय आकाशः । उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते । उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ' इत्यादावा-काशस्य प्रतीयते । स चाऽदित्याद्याधारः किं दहराकाशस्स्यादाहोस्वित्तत्स्थः कश्चिदितीदानीं चिन्त्यते । किं तावत्प्राप्तम् ? दहराकाश इति 'तस्यान्ते सुषिरं सूक्ष्मं तस्मिन्सर्वं प्रतिष्ठितम्' इत्यादिश्रुत्यन्तरे दहरसुषिरस्य सर्वाधारत्वप्रतीतेः । तत्स्थः कश्चिदित्यपरः पक्षः । सोऽपि जीव इति प्राप्तम् । हृदयगतदहराकाशान्तस्थत्वात् । उपरि च तत्परामर्शदर्शनादिति । अत्रोत्तरं– 'दहर उत्तरेभ्यः' । न तावद्दहराकाशोऽत्र प्रतिपाद्यते । 'तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्' इति तदन्तस्थस्यैवान्वेष्टव्यत्वप्रतिज्ञानात् । किन्तु तत्स्थः कश्चिदेव । स च दहराकाशे स्थितो विष्णुरेव । 'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपि-पासस्सत्यकामस्सत्यसङ्कल्पः' इत्यादिभ्यः । न चाऽकाशजीवयोरेते गुणास्सम्भवन्तीत्याह योऽशनायापिपासे इत्यादिना बृहदारण्यकवाक्येन स एष इत्यादिना छन्दोगवाक्येन च । अत्र ब्रह्मपुरं शरीरं दहरो भूताकाश इत्यादि छन्दोगोपनिषद्भाष्ये त्वभाणि निपुणतमं श्रीमच्चरणैः । तस्मादस्माकं न प्रयत्नोऽत्र । 'दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते' इत्यत्राऽकाशशब्देन भूताकाशो विवक्षितः । किं तदत्र विद्यते इत्यस्यायं परिहारः अस्मिन्भूताकाशे परब्रह्माख्य

(तत्त्वप्रदीपिका)

आकाशो विद्यते । आ समन्तात्काशनादाकाशः, आ समन्तात्कमश्नातीति वा । 'अस्मिन्कामास्समाहिताः' इति वाक्यशेषादासमन्तात्कामानश्नातीति वा । स च यावान्परमात्मा व्याप्तोऽस्ति तावानेव विद्यते गुणतः । पूर्णगुणात्मकत्वात् । अल्पपरिमाणस्य महत्परिमाणत्वं च युज्यते । अचिन्त्यशक्तित्वात् । 'यस्मिन्विरुद्धगतयोऽप्यनिशं पतन्ति विद्यादयो विविधशक्तय आनुपूर्व्या' इति वचनात् । आनुपूर्व्येति श्रुतिप्रमाणादित्यर्थः । 'आनुपूर्वी श्रुतिर्वेद आम्नायश्चेति कथ्यत' इत्यभिधानात् । अन्यथाऽनिशमित्युक्तिविरोधात् । 'एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा एष म आत्माऽन्तर्हृदये ज्यायान्पृथिव्याः'' इति हृदयस्थस्यैवाणुत्वमहत्त्वोक्तेश्चेत्यादि, 'दहरोऽस्मिन्नन्तराकाश' इति च पूर्वोक्ताकाशस्य दहरत्वमुक्तम् । उत्तरस्य 'यावान्वाऽयमाकाशः' इत्यनन्तपरिमाणत्वम् । अतो ब्रह्माकाश एवोत्तरः । पूर्वोक्तस्याभूताकाशत्वे ''तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्'' 'तत्रापि दहं गगनं विशोक स्तस्मिन्यदन्तस्तदुपासितव्यं' 'सहस्रशीर्षं देवम्' इत्यादि कथं युज्येत । नहि भगवदन्तःस्थितमेवान्यत्किञ्चिद्विजिज्ञास्यम् । तद्वावेत्यवधारणाच्चेत्यादि च सुविस्तृतम् ।

## तत्त्वप्रकाशिका

अत्र 'यो वेद निहितं गुहायाम्' । 'तस्यान्ते सुषिरं सूक्ष्मम्' । 'हृदि ह्येष आत्मा' इत्यादिश्रुतिभिःब्रह्माकाशजीवेषु साधारणस्य हृत्पद्मस्थत्वलिङ्गस्य भगवति समन्वयप्रतिपादनादस्ति शास्त्रादिसङ्गतिः । श्रुत्यादिसङ्गतिं विषयवाक्यमुदाहृत्य विषयादिकं च सूचयन् सयुक्तिकं पूर्वपक्षं सूचयति ॥ **चन्द्रेति** ॥ एतस्य वाऽक्षरस्येत्यादिना विष्णोश्चन्द्रादित्याधारत्वमुक्तं तच्छन्दोगश्रुतौ हृत्पद्मस्थस्योच्यते । 'एतस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति तं चेद् ब्रूयुः किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति । स ब्रूयाद्यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन् द्यावापृथिवी' इत्यादिना । तस्य च विष्णोरन्यत्वेऽक्षरस्य विष्णुत्वसाधकसर्वाधारत्वं चान्यस्य प्रसज्ज्येतेत्यवश्यं निर्णेयता । तद्धृदयपद्मस्थत्वं विषयः । किं विष्णोरथाकाशस्योत जीवस्येति संशयः । उक्तसाधारण्यं सन्देहबीजम् । सर्वाधारतया हृत्पद्मस्थत्वमाकाशस्येति तावत्पूर्वः पक्षः । दहरोऽस्मिन्नन्तर आकाश इति हृत्पद्मे दहराकाशस्थितिश्रवणात् । तस्यैवोभे अस्मिन्निति सर्वाधारत्वोक्तेरित्यर्थः । नन्वस्त्वाकाशस्य सर्वाधारतया हृदयपद्मस्थत्वम् । तस्य चाऽऽकाशस्तल्लिङ्गादिति न्यायेन विष्णुत्वे तस्यैव हृत्पद्मस्थत्वसिद्धिरित्यत आह ॥ **स चेति** ॥ नात्रोक्ता काशो विष्णुः । तस्यान्ते सुषिरमिति

(तत्त्वप्रकाशिका)

प्रसिद्धाकाशस्यैव सर्वाधारतया हृत्पद्मस्थत्वोक्तेः तत्समाख्यानादित्यर्थः । न च वाच्यमस्त्वाकाशशब्देन सुषिरमेव । तस्मिन् यदन्तरिति हृत्पद्मस्थाकाशगतो विष्णुः सर्वाधारतयोच्यत इति । तथा सति वाक्यान्वयानुपपत्तेः । तथा हि । तस्मिन्नित्यत्र विष्णुत्वाभिप्राये किं तदत्र विद्यत इति प्रश्नस्य ब्रह्म विद्यत इति परिहारं विना यावान्वा इत्यादेरभिप्रायासङ्गतिः । आकाशपक्षे त्वस्त्यन्वयः । हृदयाकाशस्थमुपास्यमित्युक्ते किं तत्र स्थितमिति प्रश्ने यावान्वा अयमाकाश इति प्रागुक्ताकाशमेव विशिष्योभे अस्मिन्नित्यादिपरिहारसंश्लेपात् । न च यावानित्यादिनाऽऽकाशाख्यो विष्णुः सर्वाधारतया परिहारे कथ्यत इत्यन्वयोपपत्तिः । तस्मिन् सर्वं प्रतिष्ठितमिति साक्षात्सुषिरस्यैव सर्वाधारत्वोक्तिविरोधात् । तस्मादाकाशस्यैव सर्वाधारतया हृत्पद्मस्थत्वम् । जीवस्य वैतद्भवेत् । उत्तरत्र 'परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत एप आत्मेति होवाच' इति जीवस्य य आत्माऽपहतपाप्मा इत्युक्तहृत्पद्मस्थात्मतया परामर्शात् दहरस्थत्वलिङ्गाच्च । तद्धि अणोर्जीवस्यैव युक्तं न सर्वगतस्य हरेः । न चान्वयाभावदोपः । विष्णुपक्षेऽपि साम्यात् । अतो भगवदितरदेव चन्द्रादित्याद्याधाराक्षरमिति । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ दहरपद्मस्थो विष्णुरेव भवेत् । य आत्माऽपहतपाप्मेत्यादिनोत्तरवाक्ये हृत्पद्मस्थस्यापहतपाप्मत्वादिगुणश्रवणादिति भावः । अपहतपाप्मत्वादिकं कथं विष्णुत्वनिश्चायकमित्यत आह ॥ **य इति** ॥ अत्येति अतिक्रम्य वर्तते । न चाकाशस्यापि पापाद्यभावेनैते गुणा युक्ता इति वाच्यम् । तस्याचेतनस्य तत्प्राप्त्यभावेन निषेधायोगात् । विष्णोश्चेतनत्वादस्ति प्राप्तिः । सत्यकामत्वाद्ययोगाच्च । तथापि नैते गुणा विष्णोरेव रमादिष्वपि सम्भवादित्यत आह ॥ **नित्येति** ॥ ननु यथा कथञ्चिदपि तेऽन्यत्र गुणाः सन्त्येवातः कथं तैर्विष्णुत्वनिश्चय इत्यत आह ॥ **सापेक्षेति** ॥ अपहतपाप्मत्वादीनां कथञ्चिदन्यत्र वृत्तावपि न कथञ्चिदन्यत्र सत्यकामत्वादीत्याशयेनाऽऽह ॥ **सत्यकाम इति** ॥ अनेनाकाशाभिमानिविषयतयाऽपहतपाप्मत्वाद्युपपत्तिरिति परास्तम् ॥

## गुर्वर्थदीपिका

तस्मिन्नित्यत्रेत्यत्र 'तस्मिन्यदन्तः' इति वाक्य इत्यर्थः । 'तस्यान्ते सुषिरँ सूक्ष्मम्' इति समाख्याश्रुतावपि आकाशाधिकरणन्यायेन सुषिरशब्दोऽपि विष्णुपरः किं न स्यादिति चेन्न । 'तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः' इत्युत्तरवाक्ये परमात्मनो वक्ष्यमाणत्वेन समाख्याश्रुतौ सुषिरपदस्याऽऽकाशपरत्वे सर्वेषामविवादात् । अविजिघित्स इत्यत्र विशेषण जग्धुं भक्षितुमिच्छा विजिघत्सा तद्रहित अविजिघत्स इत्यर्थः ।

## भावबोधः

न्यायविवरणे हृत्पद्मस्थितत्वसाधारणमित्युक्तम् । कुत्र कथञ्च साधारणमित्याकांक्षायां तत्सूचितश्रुत्युदाहरणपूर्वकं हृत्पद्मस्थत्वस्योभयत्र प्रसिद्धत्वमाह ॥ **अत्र यो वेदेत्यादिना** ॥ **श्रुत्यादिसङ्गतिमिति** ॥ अव्यवहितपूर्वाधिकरणसङ्गतिस्तु 'सदायतनाः सत्प्रतिष्ठाः' इत्यादिना सद्धर्मतयोक्तसर्वाधारत्वादेः 'उभे अस्मिन् द्यावापृथिवी' इत्यादिना हृत्पद्मस्थे श्रवणात्तस्य विष्णोरन्यत्वे प्रागुक्तं सदप्यन्यदेव स्यादिति पूर्वाक्षेपस्यापि सम्भवादिति ज्ञातव्यम् ॥ **तद्धृदयत्पद्मस्थत्वं विषय इति** ॥ अत्र तच्छब्देन यद्यपि 'दहरोऽस्मिन्नन्तर आकाशः' इति वाक्योक्तस्य हृत्पद्मस्थत्वस्य न परामर्शः । तस्य सिद्धान्तेऽप्यब्रह्मनिष्ठत्वात् । नापि 'तस्मिन् यदन्तस्तदन्वेष्टव्यम्' इति वाक्योक्तस्य । तत्र भाष्योक्तस्य आकाशशब्दस्य पूर्वपक्षबीजस्याभावात् । पूर्वपक्षे दहराकाशस्यैव सर्वाधारत्वाभ्युपगमेन तत्स्थस्य तदभावात् । अम्बरान्तधृत्याक्षेपायोगाच्च । तथापि दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यम्' इति वाक्यद्वयोक्तस्य साक्षात् परम्परासम्बन्धसाधारणस्य हृत्पद्मस्थत्वस्य परामर्शः । एवं च नोक्तानुपपत्तिः । 'दहरोऽस्मिन्नन्तर आकाशः' इति हृत्पद्मे दहराकाशस्थितिश्रवणात् । तस्यैवोभे अस्मिन्निति सर्वाधारत्वोक्तेरिति टीकायामेव द्वितीयपक्षोक्तदोषस्य परिहृतत्वात् । 'तस्मिन् यदन्तः' इति वाक्योक्तस्य हृत्पद्मस्थत्वस्य सिद्धान्ते ब्रह्मनिष्ठत्वाच्च । इयांस्तु विशेषः । 'तस्यान्ते सुषिरं सूक्ष्मम्' इति समाख्यावलात् साक्षादेव हृत्पद्मस्थत्वमाकाशस्येति पूर्वपक्षिणोऽभिप्रेतम् । 'तत्रापि दहं गगनं विशोकस्तस्मिन् यदन्तः' इति समाख्यावलात् पद्मगतदहराकाशगततया विष्णोः हृत्पद्मस्थत्वमिति सिद्धान्तिनामाशय इति ।

यद्वा तत्सर्वाधारत्वेनोक्तं हृत्पद्मस्थत्वं विषय इत्यर्थः । तेन सिद्धान्ते आकाशस्य हृत्पद्मस्थत्वनिषेधो न व्याहत इति ध्येयम् । अत एव वक्ष्यति । 'सर्वाधारतया हृत्पद्मस्थितत्वम्' इति ॥ **किं विष्णोरिति** ॥ अत्र 'दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्त' इति वाक्योक्तं हृत्पद्मस्थत्वं किमाकाशस्योत विष्णोरिति चिन्ता । तदर्थमाकाशस्य सर्वाधारतया हृत्पद्मस्थत्वसाधकतया 'तस्यान्ते सुषिरं सूक्ष्मम्' इति समाख्यया हृत्पद्मस्थस्य विष्णुत्वसाधकापहतपाप्मत्वादिलिङ्गबाध उत अपहतपाप्मत्वादिना समाख्याबाध इति । तदर्थं समाख्यानिरवकाशापहतपाप्मत्वादिकं चाकाशस्याचेतनतया पापाद्यभावेन सावकाशमुताचेतनस्य पापादि-

(भावबोधः)

प्राप्त्यभावेनाप्राप्तनिषेधापातेनापहतपाप्मत्वादिकमाकाशेऽनवकाशं समाख्या तु विष्णौ लक्षणया सावकाशेति । तदर्थं किं तदत्र विद्यत इति प्रश्नस्य यावान् वायमाकाश इति प्रतिवचनेनान्वयस्य किमाकाशविष्णुपक्षयोः सम्भवासम्भवावुत विष्ण्वाकाशपक्षयोस्ताविति । तदर्थं 'यावान् वायमाकाशस्तावानेषः' इति विशेषणस्य उभे अस्मिन्नित्याद्युक्तपृथिव्याद्याश्रयत्वादेश्च किमाकाशविष्णुपक्षयोर्घटनाघटने उत विष्ण्वाकाशपक्षयोस्ते इति । तथा हृत्पद्मस्थत्वं किं जीवस्योत विष्णोरिति चिन्ता । तदर्थं परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति हृत्पद्मस्थात्मतया परामर्शः किं जीवस्य हृत्पद्मस्थत्वसाधको भवत्युत न भवतीति । तदर्थमपहतपाप्मत्वादिकं किं मुक्तिमादाय भाविभावेनामुख्यं सञ्जीवे सावकाशमुत मुख्यं निरवकाशमिति । तदर्थम् एष आत्मेतीत्येतच्छब्द उपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत इत्युक्तजीवपरः उत परञ्ज्योतिःशब्दोक्तपरमात्मपर इति तदर्थमेतच्छब्दस्य परमात्मपरत्व-नियामकमात्मब्रह्मशब्दसत्यसङ्कल्पत्वादिलिङ्गसमाख्यादिकं हृत्पद्मस्थस्य विष्णुत्वसाधकं न भवत्युत भवतीति । तदर्थमल्पस्थानस्थितत्वरूपजीवलिङ्गं किं विष्णावनवकाशमुत रूपविशेषेण विष्णौ सावकाशमिति । तदर्थं तत्र प्रमाणं नास्त्युतास्तीति ॥ **सर्वाधारतया हृत्पद्मस्थत्व-मिति** ॥ अत्राधिकरणोदाहृतश्रुतिस्मृतिबलात् सर्वाधारत्वस्य विष्ण्वेकनिष्ठत्वात् तस्य चात्र श्रवणात् हृत्पद्मस्थत्वं विष्णोरेव किं न स्यादित्याशङ्कायाम् 'तस्मिन् सर्वं प्रतिष्ठितम्' इति समाख्याबलात् तदाक्षिप्यत इति दर्शनार्थं सर्वाधारतयेत्युक्तमिति द्रष्टव्यम् । अत एवाक्षेप्य-लिङ्गात् समन्वीयमानलिङ्गादेर्विष्णुपरत्वमाशङ्क्य तत्र तत्र न चादृश्यत्वलिङ्गेनान्तःस्थो विष्णुरिति निराकृतम् ।

यद्वा आकाशस्य हृत्पद्मस्थत्वं सिद्धान्तेऽप्यङ्गीक्रियते इति सिद्धान्तिनामनिष्टप्रदर्शनार्थं विषयान्तर्गतया सर्वाधारतयेत्युक्तम् ॥ **हृत्पद्मे दहराकाशस्थितिश्रवणादिति** ॥ अनेन भाष्ये दहरोऽस्मिन्नन्तर आकाश इत्यंशोदाहरणस्य युक्तिसूचनमपि प्रयोजनम् इत्युक्तं भवति । सर्वं चैतदाकाशस्य प्रतीयत इति भाष्ये आकाशशब्दप्रयोगमूलकमित्यवगन्तव्यम् । अन्यथा हृत्पद्म-स्थस्येत्यवक्ष्यत् ॥ **तस्यान्ते सुषिरमिति** ॥ **प्रसिद्धाकाशस्यैवेति** ॥ श्रुतौ तच्छब्देन 'पद्मकोशप्रतीकाशं हृदयम्' इत्युक्तहृत्पद्मपरामर्शादिति भावः । न्यायविवरणोक्तान्वयाभाव-लक्षणयुक्तिं सङ्गमयितुमाह ॥ **न च वाच्यमस्त्विति** ॥ 'दहरोऽस्मिन्नन्तर आकाशः

(भावबोधः)

तस्मिन्यदन्तस्तदन्वेष्टव्यम्' इत्यनेन 'यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदयाकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यम्' इत्यनेन 'यावान् वा अयमाकाशस्तावानेषो अन्तर्हृदय आकाश' इत्यस्यान्वयाभाव इति न्यायविवरणार्थमाह । तथा सति वाक्यान्वयानुपपत्तेरित्यादिना ॥ **अभिप्रायासङ्गतिरिति** ॥ पूर्वोत्तरवाक्ययोरसङ्गतार्थप्रतिपादकत्वेनैवानन्वयः । न त्वन्वयाऽननुकूलविभक्तिकपदत्वादिनेति भावः ॥ **प्रागुक्ताकाशमेव विशिष्येति** ॥ द्यावापृथिव्याद्याश्रयत्वयोग्यत्वाय बाह्याकाशतुल्यतया विशिष्येत्यर्थः ॥ **आकाशाख्यो विष्णुः सर्वाधारतयेति** ॥ तथा चान्वेष्टव्ये इत्थम्भावप्रदर्शनार्थमुभे अस्मिन्नित्यादिकं प्रवृत्तमिति तदपि नासङ्गतमिति भावः ॥ **सर्वाधारत्वोक्तिविरोधादिति** ॥ अनेन 'तस्यान्ते सुषिरं सूक्ष्मम्' इति श्रुतेरिति भाष्यं तदन्तःस्थत्वापेक्षत्वान्न सुषिरश्रुतिविरोध इत्युत्तरभाष्यानुरोधेन न्यायविवरणशेषत्वेनापि योजितमिति ज्ञातव्यम् । 'इतरपरामर्शात् स इति चेत्' इत्यादिसूत्राभिप्रेतपूर्वपक्षमाह ॥ **जीवस्यैतदिति** ॥ दहरं पुण्डरीकश्रुत्यनुसारेण सूत्रे तदनुसारेण भाष्ये च दहरपदप्रयोगाल्लिङ्गं हृत्पद्मस्थत्वमिति न्यायविवरणे 'हृदब्जग' इति संक्षेपे चाभिधानात्तदुभयानुकुल्यायाह ॥ **दहरपद्मस्थ इति** ॥ अन्यथा हृत्पद्मस्थ इति वक्तव्यम् । अनेन सूत्रभाष्ययोः सप्तम्यन्तं दहरपदं दहरं पुण्डरीकमित्युक्तहृत्पद्मपरमित्युक्तं भवति । चेतनत्वादस्ति प्राप्तिरिति । चेतनजातीये जीवे पापादेर्दर्शनादिति ॥ **अनेनेति** ॥ 'नित्यतीर्णाशनायादिः' इत्यनेनेत्यर्थः ।

## भावदीपः

अत्र न्यायविवरणे स्पष्टत्वाच्छ्रुतीरनुदाहृत्य हृत्पद्मस्थितत्वं साधारणमित्युक्तम् । तदुदाहरणपूर्वकं साधारण्यं व्यञ्जयन्नस्य पादान्तर्भावमाह ॥ **अत्र यो वेदेति** ॥ एतच्चानन्दमयनये ब्रह्मपरत्वेन निर्णीतम् । यद्यपि परमे व्योमन्निति हृदयगुहास्थाकाशस्थत्वमेव तत्रोक्तं मन्दिरे मणिमालेतिवत् सामान्येन गुहास्थत्वमविरुद्धम् । अत एव गुहायामित्याधारसप्तमीति भावः ॥ **तस्येति** ॥ 'तैत्तिरीये पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखम् । अधोनिष्ट्या वितस्त्यान्ते नाभ्यामुपरि तिष्ठति । ज्वालमालाकुलं भाति विश्वस्यायतनं महत् । सन्ततं शिलाभिस्तु लम्बत्याकोशसन्निभम् । तस्यान्त' इति प्रकृतहृत्पद्मं तस्येति परामृश्य तदन्तःस्थत्वमाकाशस्योच्यते ॥ **हृदीति** ॥ षट्प्रश्ने मध्ये तु समानः एष ह्येतद्धुतमन्नं समं नयति

(भावदीपः)

तस्मादेताः सप्तार्चिषो भवन्तीति पूर्वत्र तस्मात्समानेनान्नस्य समीकरणादेताः सप्तार्चिषो भवन्तीत्युक्तौ आत्मैव विषयसंसर्गेणताननुभविष्यति किमिन्द्रियवृत्तिभिरिति शङ्कायाम् अणुत्वात्तस्य नैवं युक्तमिति भावेन हृदि ह्येष आत्मा जीवः स्वरूपेण वर्तत इत्युक्तेः । अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हीति सूत्रकृता जीवपरत्वेन वक्ष्यमाणत्वाच्चेति भावः ॥ **हृत्पद्मस्थत्वेति** ॥ साक्षात्परम्परासाधारणहृत्पद्मगतत्वलिङ्गस्येत्यर्थः । आकाशस्येति भाष्यं तु पूर्वपक्षहेत्वभिप्रायं न तु समन्वेतव्यनामाशयमिति भावः । इत्यन्तभाष्यं सङ्गतिसूचकत्वेन व्याकुर्वन्नुक्तमित्यन्तं व्याचष्टे ॥ **एतस्य वा इति** ॥ उक्तमक्षरनय इत्यर्थः । आकाशस्य प्रतीयत इत्यत्र हृत्पद्मस्थस्येत्याकाशविशेषणमुपेत्य तात्पर्यमाह ॥ **तच्छन्दोगश्रुताविति** ॥ उच्यते अष्टम इत्यर्थः । केनेत्यत एतस्मिन्नित्यादिभाष्यमिति भावेन भाष्ये पूर्वपक्षयुक्तिद्योतनाय समग्रानुक्तावपि वक्ष्यमाणानन्वययुक्तिसौकर्याय तद्वाक्यं समग्रं पठति ॥ **एतस्मिन्निति** ॥ ब्रह्मपुरे देहे । दहरं दभ्रमल्पमित्यर्थः । अस्मिन्पुण्डरीके । तस्मिन्नाकाशे । कथं तस्यान्वेषण-मित्यत उक्तम् ॥ **विजिज्ञासितव्यमिति** ॥ तमेवमुक्तवन्तं गुरुं शिष्याश्चेद् ब्रूयुः किं तदाह ॥ **किं तदत्रेति** ॥ यदन्वेष्टव्यत्वादिनोक्तं तदत्र किं विद्यते कुतश्च तदन्वेष्टव्यं कीदृशं च तद्विद्यत इति प्रश्नार्थः । स गुरुः शिष्यान् प्रति ब्रूयात् । किं तदाह ॥ **यावानिति** ॥ हृद्ययत इति हृदये हृत्स्थदहराकाशे । आकाशः आकाशनाम ब्रह्म विद्यते । अयं बाह्याकाशः आकाशनामा विष्णुर्यावान् व्याप्त्या तावानिति किमित्यस्य । अस्मिन् द्यावाभूम्यादि सर्वं समाहितं यतोऽतो द्यावापृथिव्याद्याधारत्वाज्जिज्ञास्यमिति कुतश्चेति प्रश्नस्योत्तरम् । कीदृशमित्यस्यापि यद्ब्रह्म कीदृशमस्तीति पृष्टं तस्य हृदये यावान्बाह्याकाशः तावान् द्यावाभूम्यादिकं च सर्वं विद्यते सर्वाधारभूतं तदिति इदमेवोत्तरमिति सिद्धान्तीयोऽर्थः ।

पूर्वपक्षीयस्तु हृदये आकाश इति प्रागुक्तदहराकाशमनूद्य यावानिति बाह्याकाशतुल्यतया तं विशेष्यान्वेष्टव्यतया तत्र द्यावाभूम्यादिकमुच्यत इत्यर्थः । आकाशस्येत्यादेर्भावः ॥ **तस्य चेति** ॥ चन्द्राद्याहारहृत्पद्मस्थस्येत्यर्थः ॥ **अन्यत्व इति** ॥ सुषिरश्रुतिसमाख्यासहिताकाशश्रुत्या आकाशत्वे वक्ष्यमाणदिशा जीवत्वे वेत्यर्थः । उक्तमित्यन्तस्य तात्पर्यम् ॥ **अक्षरस्येति** ॥ **इतीति** ॥ इति सङ्गतिसम्भवादित्यर्थः ॥ **तदिति** ॥ यस्मिन् हृत्पद्मस्थे सर्वाधरत्वं श्रुतं तद्गतः साक्षात्परम्परासाधारण्येन पूर्वोत्तरवाक्यस्थहृत्पद्मस्थत्वसामान्यरूपो धर्म इत्यर्थः । तेन

(भावदीपः)

साक्षाच्चेद्दहरे विष्णुरेवेति विष्णोर्दहराकाशस्थत्वोक्तिः सिद्धान्ते न युक्ता । परम्परा चेदाकाशस्थेति पूर्वपक्षायोग इति शङ्कानवकाशः । अस्मिन्पक्षे पूर्वोत्तरपक्षसामञ्जस्यमग्रे विवरिष्यते । जीवपरामर्शादित्युत्तरभाष्यानुरोधादाह ॥ **उत जीवस्येति** ॥ पूर्वपक्षादिपरत्वेनापि व्याकुर्वन् हृत्पद्मस्थत्वं साक्षाद् व्यवधानेन वा द्वेधा सम्भवति । तत्राद्ये तच्चाकाशस्य प्रतीयत इति प्रतिज्ञाभाष्यं विवृणोति ॥ **सर्वेति** ॥ दहरोऽस्मिन्नन्तरिति पूर्ववाक्ये य एषोऽन्तर्हृदय इत्युत्तरस्मिन्सर्वाधारवाक्ये च श्रुतहृत्पद्मस्थत्वमित्यर्थः ॥ **तावदिति** ॥ जीवस्येति पश्चाद्वक्ष्याम इत्यर्थः । पूर्वाक्षेपरूपफलोक्तिसौकर्याय वा सुषिरश्रुत्यैकार्थ्याय वा तदुक्त्यै शङ्कोत्थानाय वा सिद्धान्तिन इष्टापत्तिनिरासाय वा सर्वाधारतयेति विशेषणम् । तेन तच्चेत्येतदर्थो विवृतः । कुत इत्यतो दहरोऽस्मिन्नन्तर आकाश इत्यन्तवाक्योक्तेर्भावमाह ॥ **दहर इति** ॥ इदमुपलक्षणम् । य एषोऽन्तर्हृदय आकाश इति चेत्यपि बोध्यम् ॥ **स्थितीति** ॥ हृत्पद्मस्थे आकाशशब्दश्रवणादित्यर्थः । किं तदत्रेत्याद्युक्तेर्भावमाह ॥ **तस्यैवेति** ॥ अन्यथा किं तदत्रेति प्रश्नानानुगुण्यमिति भावः ॥ **तस्यान्त इति** ॥ विवृतमेतत्पूर्वम् । तस्मिन् सर्वं प्रतिष्ठितमिति वाक्यशेषार्थमाह ॥ **सर्वेति** ॥ तत्रापि सुषिरस्य विष्णुत्वं तु न युक्तम् । 'तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थित' इति सुषिरमध्येऽग्निशिखामुक्त्वा 'तस्याः शिखाया मध्ये परमात्मा व्यवस्थित' इति विष्णोः शिखामध्यस्थत्वोक्तेरिति भावेनोक्तमाकाशस्यैवेति ।

एवं साक्षाद्धृत्पद्मस्थत्वपक्षे भाष्यं योजयित्वा व्यवधानेन हृत्पद्मस्थत्वपक्षं शङ्कते ॥ **न च वाच्यमिति** ॥ अस्मिन् पक्षे न्यायविवरणोक्तं दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यमित्यनेन यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय इत्यस्यान्वयाभाव इति दोषं व्यञ्जयन् द्यावाभूम्यादेरेवान्वेष्टव्यत्वं न विष्णोरित्याह ॥ **तथा सतीति** ॥ एतेन भाष्ये आकाशो न विष्णुः सुषिरश्रुतेरित्युपलक्षणम् । आकाशो न विष्णुः वाक्यान्वयानुपपत्तेरित्यपि बोध्यमिति दर्शितम् । यावान्वा अयमाकाश इति वाक्यस्थाकाशः किं प्रसिद्ध एवोत ब्रह्मेति विकल्पौ हृदि कृत्वा आद्ये अन्वयाभावदोषमाह ॥ **तस्मिन्नित्यत्रेति** ॥ अन्वेष्टव्यवाक्ये अन्वेष्टव्यतयोक्तस्य दहराकाशस्थस्येत्यर्थः । अयं च दोषो न पूर्वपक्ष इत्याह ॥ **आकाशेति** ॥ आकाशान्तर्ब्रह्मास्तीत्यनुपेत्य साक्षाद् हृत्पद्मस्थमाकाशं व्यवहितं तु द्यावाभूम्यादिकमिति पक्षे त्वित्यर्थः । अस्त्यन्वय इत्युक्तं तदुपपादकत्वेनापि एतस्मिन् ब्रह्मपुर इत्यादिभाष्यं योजयति ॥ **हृदयेति** ॥

(भावदीपः)

**इत्युक्त इति** ॥ तस्मिन्यदन्तरिति वाक्य इत्यर्थः । किं तदत्रेत्यादि प्रतीयत इत्यन्तभाष्यभावमाह ॥ **किमिति** ॥ आधेयप्रश्न इत्यर्थः । विशिष्य द्यावाभूम्याद्याधारत्वयोग्यत्वाय बाह्याकाश-तुल्यतया विशिष्येत्यर्थः । यावान्वा इति वाक्यस्थाकाशो ब्रह्मेति द्वितीयपक्षशङ्कोत्तरत्वेन स चाकाश इत्यादिभाष्यं व्याचष्टे ॥ **न चेति** ॥ परिहारे परिहारवाक्ये । एतेन सः यावानिति वाक्योक्ताकाशो विष्णुरिति न च वाच्यमिति भाष्यार्थो दर्शितः । वाक्यशेषोक्तिपूर्वं तस्यान्त इत्युक्तसमाख्याविरोधं व्यनक्ति ॥ **तस्मिन्निति** ॥ **तस्मादिति** ॥ सुषिरश्रुतिसमाख्या-वाक्यान्वयसामञ्जस्याभ्यां सहितस्याऽऽकाशशब्दस्य साधकस्य भावात् ।

विष्णुत्वपक्षे वाक्यान्वयाभावसुषिरश्रुतिविरोधरूपबाधकभावाच्चेत्यर्थः । अपहतपाप्मत्वादिकं तु जडे आकाशे पापास्पृष्ट्या वा अभिमानिद्वारा वा युक्तमिति भावः । बाधवारणां सर्वाधार-तयेत्युक्तम् । इतरपरामर्शात् स इति चेदिति सूत्रतद्भाष्याभ्यामुक्तं व्यनक्ति ॥ **जीवस्य चेति** ॥ **परामर्शादिति** ॥ प्रकृतं जीवम् एष इति परामृश्य आत्मेत्यात्मपदेन य आत्मा अपहत-पाप्मेत्यादिवाक्येऽपहतपाप्मत्वादिनोक्तहृत्पद्मस्थात्मत्वस्य विधानादित्यर्थः । अल्पश्रुतेरिति चेदिति सूत्रतद्भाष्याभ्यामुक्तमाह ॥ **दहरस्थत्वेति** ॥ अर्भकौकस्त्वादिति सूत्रे व्योमवद्विष्णावपि युक्तमित्यतोऽस्य निरवकाशत्वमाह ॥ **तद्भ्यणोरिति** ॥ उत्क्रान्तिगत्यागतीनामिति वक्ष्यमाण-न्यायेनाणोरित्यर्थः ॥ **सर्वगतस्येति** ॥ अंशतोऽपीति योज्यम् । व्योम्नोंऽशेनैकत्राल्पदेशेऽ-वस्थितिसम्भवेऽपि हरेरंशस्याप्यपरिच्छिन्नत्वेनाल्पौकस्त्वस्य निरवकाशत्वादिति भावः । विवरिष्यते चैतदग्रे । अपहतपाप्मत्वादिकं तु जीवे मुक्तौ भावात् भाव्यपेक्षया युक्तमिति भावः । ननु हृत्पद्मस्थाकाशस्थो जीवश्चेद्यावान्वा इति वाक्यानन्वय इत्यत आह ॥ **न चेति** ॥ हृत्पद्मस्थ आकाश एवेति वा जीव एवेति वा निर्णयाभावात् पूर्वपक्षस्य सन्देहादविशेषः स्यादित्यतो विष्णिवतरत्वेन निश्चयः स्यादिति भावेन द्विविधपूर्वपक्षफलत्वेनोक्तमित्यन्तभाष्य-तात्पर्यमाह ॥ **अत इति** ॥ साक्षाद्व्यवधानाभ्यां क्रमादाकाशजीवयोरेव सर्वाधारतया हृत्पद्म-स्थत्वात् विष्णोश्चैकेनापि रूपेण सर्वाधारतया हृत्पद्मस्थत्वाभावाच्चेत्यर्थः । विष्णोः साक्षाद्हृत्पद्मस्थत्वाभावेऽपि हृत्पद्मस्थदहराकाशस्थतया व्यवधानेन हृत्पद्मस्थत्वं स्यादेवेति भावेनाऽऽकांक्षाक्रमेण भाष्यं व्याचष्टे ॥ **दहरेति** ॥ परम्परया दहरहृत्पद्मस्थ इत्यर्थः । अत्येति अतिशयेन प्राप्नोतीति भ्रान्तिं निराह ॥ **अतिक्रम्येति** ॥ सर्वदा शोकादिहीन एवास्त इत्यर्थः

(भावदीपः)

॥ **विष्णोरिति** ॥ सजातीये जीवे दर्शनेनात्रापि तत्प्राप्तिभ्रान्तौ निषेधसम्भवादित्यर्थः । अभिमानिद्वाराऽऽकाशेऽप्यस्त्वपहतपाप्मत्वमित्यत आह ॥ **सत्यकामत्वेति** ॥ तत्तु निरवकाशमित्यग्रे व्यक्तमिति भावः । कथञ्चित् अभिमान्यादिद्वारेत्यर्थः ॥ **अनेनेति** ॥ क्वापि निरपेक्षधर्माभावकथनेनेत्यर्थः । ननु तर्कताण्डवे पाकसापेक्षस्यापि पृथिवीशौक्ल्यस्य तन्निरपेक्षा-बादिशौक्ल्यस्येव शुक्लशब्दमुख्यार्थत्वेन तुल्यतया प्रतीतेः व्याप्तिसङ्गतिज्ञानादिसापेक्षयो-रप्यनुमानशब्दयोस्तन्निरपेक्षप्रत्यक्षवत् प्रमाणशब्दमुख्यार्थत्वेन तुल्यतया प्रतीतेश्चेत्यादिनोपक्रम-प्राबल्यभङ्गे सापेक्षस्यापि शब्दमुख्यार्थत्वोक्तेः सत्यकामः सत्यसङ्कल्प इति श्रुतौ सापेक्ष-धर्मस्यापि धीरस्तीति चेन्न । प्रतीतस्यापि तस्य त्यागोपपत्तेरिति भावः ॥

## अभिनवचन्द्रिका

**हृत्पद्मस्थत्वलिङ्गस्येति** ॥ यद्यप्यत्र विषयवाक्ये हृत्पद्मस्थत्वरूपधर्माभिधायकलिङ्गात्मकः शब्दो न श्रूयते । तथाप्येतद्वाक्यसमन्वयाभिधाने हृत्पद्मस्थत्वरूपधर्मसिद्धिर्भवतीत्यभिप्रेत्य तथोक्तम् ॥ **एतस्मिन्निति** ॥ **ब्रह्मपुरे** देहे, **दहरम्** अल्पं **पुण्डरीकं** पुण्डरीकात्मकं वेश्म, विद्यते । अस्मिन् आकाशे, यदन्तः विद्यते, तदन्वेष्टव्यं, तद्वाव विज्ञासितव्यम्' इति । **तं** गुरुं प्रति, शिष्याः, चेच्छब्दो यद्यर्थे । यदि ब्रूयुः किं तदत्र विद्यते, यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति । **स** गुरुः, शिष्यान्प्रति ब्रूयात् । **यावान्वा अयमाकाशः** आकाशनामा विष्णुः, व्याप्त्या यावान्वर्तते, **तावानेष आकाशः** आकाशनामा विष्णुः, अन्तः हृदये हृत्पद्मान्तर्गतदहराकाशे वर्तते, **अस्मिन्** आकाशनाम्नि विष्णौ । उभे द्यावापृथिवी वर्तेते इति सिद्धान्तरीत्या श्रुत्यर्थः । अनेनैतदधिकरणप्रतिपाद्यस्य अक्षराधिकरणप्रतिपाद्यस्य च चन्द्र-सूर्याद्याधारत्वेन प्रतीयमानत्वं पूर्वाधिकरणतच्छ्रुतिभ्यामस्याऽधिकरणस्य सङ्गतिरित्युक्तं भवति ॥ **सर्वाधारतयेति** ॥ 'हृत्पद्मस्थत्वं आकाशस्येत्येतावन्मात्रोक्तौ न सिद्धान्तविरोधो भवति । सिद्धान्तिनाऽस्याकाशस्य हृत्पद्मस्थत्वाङ्गीकारात् । तदर्थं सर्वाधारतयेति विशेषणम् । **नात्रोक्ताकाशो विष्णुरिति** ॥ 'किं तु प्रसिद्धाकाश एव' इति शेषः । कुतोऽयं प्रसिद्धाकाश इत्यत आह ॥ **तस्यांत इति** ॥ स चाकाशो न विष्णुरिति प्रतिज्ञाय 'तस्यांते सुषिरम्' इति शाखान्तरस्थश्रुत्युदाहरणमयुक्तमित्यतः तदभिप्रायमाह ॥ **तत्समाख्यानादिति** ॥ अस्त्वा-काशस्य हृत्पद्मस्थत्वं, तथापि न तस्य सर्वाधारत्वमत्रोच्यते । किंत्वाकाशान्तर्गतस्य

(अभिनवचन्द्रिका)

विष्णोरेव । ततश्च 'सर्वाधारत्वमाकाशस्य' इति यत्प्रागुक्तं तद्युक्तमित्याशङ्क्य निषेधति ॥ **न च वाच्यमिति ॥ तथा सतीति ॥** 'तस्मिन्यदन्तः' इति वाक्यस्य अस्मिन् आकाशे यदन्तः विष्ण्वाख्यं ब्रह्म विद्यते तदन्वेष्टव्यमित्यर्थकत्वे 'किं तदत्र विद्यते यावान्वा अयमाकाश' इति प्रश्नपरिहारयोरसङ्गतत्वापत्तेरित्यर्थः । ननु न प्रश्नपरिहारयोरसङ्गतिः । तावानेषोऽन्तर्हृदय आकाश' इत्यनन्तरं 'तत्र ब्रह्म विद्यत' इत्यध्याहारेण योजनायां सङ्गतिसम्भवादित्यत आह ॥ **तस्मिन्नित्यत्रेति** ॥ सत्यमध्याहारेण प्रश्नपरिहारयोः सङ्गतिर्भवति, तथापि अध्याहारं विना आकाशपक्षे प्रश्नपरिहारयोः सङ्गतिवत् विष्णुपक्षे अध्याहारं विना सङ्गत्यभावात् विष्णोरेव सर्वाधारत्वमिति न श्रुत्यभिप्रायः । 'यत्रानवसरोऽन्यत्र पदं प्रतिष्ठितम् । वाक्यं वेति सतां नीतिः सावकाशे न तद्भवेत्' इति प्रमाणेन अध्याहारं विना योजनासम्भवे अध्याहारस्य निषिद्धत्वादिति भावः । अत एव टीकायां ब्रह्म विद्यत' इति परिहारं विना 'यावान्वा' इत्यादेरभिप्रायासङ्गतिः' इत्युक्तम्, अन्यथा इति प्रश्नस्य 'यावान्वा' इत्यादेरभिप्रायासङ्गतिः' इत्यवक्ष्यत् । एतेन यथा 'किं तदत्र विद्यत' इति प्रश्नस्य 'यावान्वा' इत्यादिपरिहारः आकाशान्तर्गतार्थानिरूपकत्वात् सिद्धान्तिपक्षे असङ्गतः, तथा पूर्वपक्षिमते प्रागुक्ताकाशमेव विशिष्य वक्तुं 'यावान्वा' इत्यादिवाक्यं सङ्गतं, तथा सिद्धान्तिमतेऽपि सङ्गतं भवेत्, ब्रह्म विद्यत इति परिहारं वक्तुं 'यावान्वा अयमाकाश' इति विशिष्योक्तिसम्भवादिति परास्तम् । सिद्धान्तिमते अध्याहारं विना न सङ्गतिरिति दूषणे तात्पर्यात् । नन्वकाशपक्षे प्रश्नार्थनिरूपकत्वेन 'उभे अस्मिन्नित्यादेः सङ्गतिभवेऽपि यावान्वेति वाक्यस्यासङ्गतिः । प्रश्नोत्तरत्वाभावादित्यत आह ॥ **आकाशपक्ष इति ॥ हृदयेति ॥** हृदयाकाशस्थमुपास्यमित्युक्ते किं तत्रस्थं यन्मयोपास्यमिति प्रश्नो भवति, तस्मिंश्च प्रश्ने सति द्यावापृथिव्यादिकं तत्रस्थमिति वक्तुं हृदयाकाशस्य द्यावापृथिव्याद्याधारत्वं न सम्भावितम् । अल्पत्वादित्याशङ्कापरिहाराय 'यावान्वा अयमाकाश' इति प्रागुक्ताकाशं विशिष्य 'उभे अस्मिन्' इति परिहारप्रवृत्तेः । आकाशपक्षे अस्त्यस्य वाक्यस्यान्वय इति भावः ।

ननु न सिद्धान्तपक्षेत्यध्याहारः, 'यावान्वा अयमाकाश' इति वाक्यस्य विष्णुपरत्वेन 'किं तदत्र विद्यत इति प्रश्नोत्तरत्वमित्याशङ्क्य निषेधति ॥ **न चेति** ॥ समाख्याविरोधादिति भावेनाह ॥ **तस्मिन्निति ॥ उत्तरत्रेति** ॥ उत्तरत्र उत्तरखण्डे जीवस्य 'एष आत्मा' इति

(अभिनवचन्द्रिका)

वाक्येन हृत्पद्मस्थात्मत्वाभिधानादिति यावत् । जीवस्याप्रकृतत्वात्, 'एष आत्मा' इति वाक्येन तस्य हृत्पद्मस्थत्वमुच्यत इत्युक्तमित्यत उक्तम् ॥ **परञ्ज्योतिरुपसंपद्येति** ॥ इदमुक्तं भवति – 'अथ यदेतस्मिन्ब्रह्मपुरे' इत्येतस्मिन्वाक्ये हृत्पद्मस्थत्वमुक्तम् । अनन्तरं 'एष आत्मा अपहत-पाप्मा' इति आत्मनो हृत्पद्मस्थत्वमुक्तम् । अनन्तरं 'परंज्योतिरुपं संपद्य, स्वेन रूपेण अभिनिष्पद्यत' इति जीव उक्तः । स एव 'एष आत्मा' इति वाक्येन हृत्पद्मस्थात्मतयोक्तः । ततश्च जीवस्यैव हृत्पद्मस्थत्वमिति ॥ **विष्णुपक्षेऽपि साम्यादिति** ॥ नन्विदमयुक्तम् । विष्णुपक्षे दोषोद्भावनमात्रेण स्वपक्षदोषा परिहारात् । न हि पराङ्गं दग्धमिति स्वाङ्गदाहदुःखं निवर्तते इति चेत्, मैवं न ब्रूमो वयमन्वयाभावदोषः सिद्धान्तिन इव ममाप्यस्तीति । येनोक्त-दोषः स्यात् । किं तर्हि यथा सिद्धान्तिनाऽन्वयाभावदोषपरिहाराय वाक्ययोजना क्रियते, तथैवाऽहमपि करिष्यामीति । तथा हि – 'ब्रह्मपुरम्' इत्यनेनैव जीवस्थितिसिद्धेः कीदृशं तदितिभावेन 'किं तदत्र विद्यत' इति प्रश्ने तत्स्वरूपनिरूपणपरतया 'यावान्वा अयमाकाश' इत्यादिवाक्यान्वयः सम्भवतीति ।

अत्र गुणसूत्रं 'गतिशब्दभ्यां तथा हि दृष्टं लिङ्गं च' इति । नन्वयं योगः शक्योऽवक्तुम् । अत्रोक्तस्य 'अहरहर्गच्छन्त्य एतम्' इति सुप्तप्राप्यत्वस्य, ब्रह्मशब्दस्य च, 'अरश्च हवै ण्यश्चार्णवौ ब्रह्मलोक' इति अरण्याख्यसुधासमुद्राश्रयलोकत्वरूपलिङ्गस्य च पूर्वसूत्रोक्तोत्तरेभ्य इत्यनेनैव ग्रहणसम्भवादिति चेत्, सत्यम्, उत्तरेभ्य इत्यनेनैव सर्वेषां लाभ इति, तथापि कुरुपाण्डवन्यायेन पृथग्ग्रहणम् । तथा हि सर्वेषां साधकानां निर्दोषत्वेऽपि अपहतपाप्मत्वादीनां मुक्तेष्वपि सद्भावात् व्यभिचार इत्याशङ्काऽऽस्कन्दिततत्वेन दौर्बल्यम् । सुप्तप्राप्यत्वादीनाम-न्यत्राऽसम्भावितत्वेन तादृशाशङ्काऽनुदयात्प्राबल्यमिति । एवमुत्तरत्रापि द्रष्टव्यम् ।

## वाक्यार्थमुक्तावली

**तस्यान्ते सुषिरं सूक्ष्ममिति** ॥ 'पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखं तस्यान्त' इति शेषो बोध्यः । यद्यपि 'यो वेद निहितं गुहायां परमे व्योमन्', 'हृदि ह्येष' इति श्रुत्योः नेशजीवयोः हृत्पद्मस्थत्वं प्रतीयते, तथापि मन्दिरे मणिमालेत्यत्र मजूषानुक्तिवन्मध्ये पद्मा-नुक्तिमात्रं द्रष्टव्यम् ॥ **श्रुत्यादिसङ्गतिमिति** ॥ अव्यवहितपूर्वाधिकरणसङ्गतिस्तु अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्तीति सुप्तप्रजाप्राप्यत्वेनोक्तं हृत्पद्मस्थं यद्यन्यत्स्यात्तदा सता सोम्य तदा

(वाक्यार्थमुक्तावली)

सम्पन्नो भवतीति सुप्तप्राप्यत्वेनोक्तं सदप्यन्यत्स्यादित्याक्षेपेणोत्थानादिति बोध्यम् । अत एव भाष्ये गति शब्दाभ्यामिति सूत्रे समाख्यात्वेन सता सोम्येनेति वाक्यमुपादीयत इति बोध्यम् । भावबोधे तु, उभे अस्मिन् द्यावापृथिवीत्युक्तद्युपृथिव्याद्याधारपद्मस्थं यद्यन्यत्स्यात् तदा सदायतनाः सत्प्रतिष्ठाः इति सर्वप्रजाश्रयत्वेनोक्तं सदप्यन्यत्स्यादित्याक्षेपिकी सङ्गतिरित्युक्तम् । चन्द्राद्याधारत्वमिति भाष्यम् । यद्यपि सूर्याचन्द्रमसौ विधृताविति पूर्वमुक्तत्वादत्रापि सूर्याचन्द्रमसावुभावित्युच्यमानत्वात् श्रुत्यनुसारेण सूर्याद्याधारत्वमिति वक्तव्यम् । तथाप्यहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगम्' इत्यम्भृणीसूक्तसमाख्यावष्टम्भेन चन्द्राद्याधारत्वे श्रीतत्वस्य शङ्किते चन्द्राद्याधाराम्बराधारके, समाख्योक्तं चन्द्राद्याधारत्वमपि सावकाशमित्युक्तत्वात्तद्विवक्षया चन्द्रस्यादित्वग्रहणम् । भाष्ये सर्वाधारतया हृत्पद्मस्थत्वमाकाशस्यैवाकाशश्रुतेरिति पूर्वपक्षस्य द्योतनमेतावत्पठनेनैव भवति । तदन्वेष्टव्यमित्यादि तु पूर्वपक्षानुपयुक्तम् । यावान्वा इत्यादिकमपि पूर्वोक्ताकाशस्यैव विशेषकं, नातोऽतिरिक्तम् आकाशस्य सर्वाधारत्वमेव श्रुतिपर्यवसन्नोऽर्थ इति द्योतयितुमितरांशानुदाहरणेऽपि वक्ष्यमाणानन्वयाद्युक्तिसौकर्याय तद्वाक्यं समग्रं पठति ॥ **एतस्मिन्निति** ॥ **तद्धृदयपद्मस्थत्वमिति** ॥ अत्र तच्छब्देन यद्यपि दहरोऽस्मिन्नन्तर आकाश इति वाक्योक्तस्य साक्षात् हृत्पद्मस्थत्वस्य न परामर्शः । तस्य सिद्धान्तेऽप्यब्रह्मनिष्ठत्वात् । दहरे विष्णुरेवेति दहराकाशस्थत्वोक्तेः । नापि तस्मिन्यदन्तस्तदुपासितव्यं, तदन्वेष्टव्यमिति वाक्योक्तस्य परम्परया हृत्पद्मस्थत्वस्य तत्राकाशशब्दस्य भाष्योक्तपूर्वपक्षबीजस्य भावात् । पूर्वपक्षे दहराकाशस्यैव सर्वाधारत्वाभ्युपगमात् तस्थस्य तदभावात् । अम्बरान्तधृत्याक्षेपायोगाच्च । तथाप्येतद्वाक्यद्वयोक्तस्य साक्षात्परम्परासम्बन्धसाधारणस्य हृत्पद्मस्थत्वसामान्यमुभाभ्यामुभयमुभयत्राङ्गीकृतमिति न तस्य विषयत्वमिति वाच्यम् । सामान्यतो हृत्पद्मस्थत्वस्य पूर्वपक्षिणा विष्णावनङ्गीकारात् । यत् द्यावापृथिव्याद्याश्रयतया साक्षाद्धृत्पद्मस्थत्वं तदाकाशस्यैव, भाष्योदाहृतसुषिरश्रुतेः । तद्व्यवहितमन्वेष्टव्यतया हृत्पद्मस्थत्वं द्यावापृथिव्यादेरेव । तथा च यद्विशेषबाधे सामान्याभाव इति पूर्वपक्षे सति, सत्यं साक्षाद्धृत्पद्मस्थत्वम् आकाशस्य, व्यवहितं तु ब्रह्मणः तस्यैवान्वेष्टव्यत्वम् । तथा च विशेषसद्भावात्सामान्यमप्यस्तीति । सिद्धान्तः तथाचोभयसाधारणं हृत्पद्मस्थत्वं विषयो भवत्येव ।

यद्वा सर्वाधारतया हृत्पद्मस्थत्वं विषयः अत एव टीकायां सर्वाधारतया हृत्पद्मस्थत्वमाकाशस्येति तावत्पूर्वपक्ष इत्याद्युक्तम् । नन्वेवं सति जीवस्य न संशयपूर्वपक्षविषयत्वमिति

(वाक्यार्थमुक्तावली)

वाच्यम् । हृदि ह्येष आत्मेति आत्मश्रुत्या दहरस्थत्वलिङ्गेन हृदि ह्येष आत्मेति समाख्यया च जीवप्रसक्तौ अदृष्टद्वारा सर्वाधारत्वोपपत्तेरित्याशयेन पूर्वपक्षाद्युपपत्तेरिति दिक् । विस्तरस्तु प्रमेयमुक्तावल्याम् ॥ **किं विष्णोरिति** ॥ तत्र दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तः इति वाक्योक्तं, सर्वाधारतया हृत्पद्मस्थत्वमाकाशश्रुत्या, सुषिरश्रुतिसमाख्यया विष्णुपक्षेऽन्वयाभाव-बाधकेन किमाकाशस्य उत इतरत्र परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते एषात्मेति होवाचेति जीवस्य य आत्मा अपहतपाप्मेत्युक्तहृत्पद्मस्थात्मतया परामर्शात्, दहरस्थत्वलिङ्गाच्च जीवस्य । अथवापहतपाप्मत्व, सत्यकामत्वादिसुप्तप्राप्यत्व, ब्रह्मशब्द, अरण्याख्यसुधा-समुद्राश्रयलोकत्व, ससेतुरित्युक्तसर्वाधारकत्व,. य एषोऽन्तर्हृदय आकाश इति वाजसनेय-समाख्या न प्रसिद्धलिङ्गैः विष्णोरिति चिन्ता । तदर्थमपहतपाप्मत्वादीनामभिमानिविवक्षयाऽ-काशे मुक्त्यवस्थाविशिष्टजीवे च सावकाशत्वमुत निरवकाशबहुलिङ्गश्रुतिबलाद्विष्णावाकाश-श्रुतेः तल्लिङ्गादितिन्यायेन सुषिरश्रुतेस्तदन्तस्थत्वविवक्षयान्वयाभावस्य परपक्ष एवोपपादनेन परामर्शस्यान्यार्थत्वेन दहरस्थत्वलिङ्गस्य निचाय्यत्वादेवं व्योमवच्चेत्युक्तन्यायेन सावकाशत्व-मिति । एवं विष्णोरुक्तं चन्द्राद्याधारत्वम् 'एतस्मिन्ब्रह्मपुर' इत्यादिनाऽकाशस्य प्रतीयत इति भाष्यमाकाशपदस्थाने हृत्पद्मस्थेति संयोज्य सङ्गतिप्रदर्शनपरत्वेन व्याख्यातम् । अधुना हृत्पद्मस्थस्याकाशस्य प्रतीयत इति संयोज्य तल्लब्धपूर्वपक्षमाह ॥ **सर्वाधारतयेति** ॥ हृत्पद्म-स्थत्वसामान्यं विषय इति पक्षे सर्वाधारतयेति किमर्थमिति चेन्न । अक्षराधिकरणोदाहृत-श्रुत्यादिबलात्सर्वाधारत्वस्य विष्ण्वैकनिष्ठत्वात्तस्य चात्र श्रवणाद्धृत्पद्मस्थं ब्रह्मैवेत्याशङ्कायां समाख्याबलात्तदप्याक्षिप्यत इति प्रदर्शनार्थत्वेनोपपत्तेः ॥ **आकाशस्यैवेति** ॥ 'पद्मकोश-प्रतीकाशं हृदयं चाप्यधोमुखम् । तस्यान्ते सुषिरं सूक्ष्मं तस्मिन्सर्वं प्रतिष्ठितम्' इति प्रसिद्धाकाशस्यैव सर्वाधारतया हृत्पद्मस्थत्वमुक्त्वा 'तस्य मध्ये वह्निशिखाऽणीयोर्ध्वा व्यवस्थितेति,' सुषिरमध्ये वह्निशिखामुक्त्वा 'तस्याः शिखाया मध्ये परमात्मा व्यवस्थित' इति विष्णोस्तच्छिखामध्यस्थत्वोक्तेरिति भावः । भाष्ये दहरम्पुण्डरीकं वेश्म, 'दहरोऽस्मिन्नन्तर आकाशः किं तदत्र विद्यते उभेऽस्मिन्द्यावापृथिवी' इत्यादिवाक्यपठनेन किं तदत्र विद्यते इति प्रश्नस्य ब्रह्म विद्यत इति परिहाराभावात् । प्रत्युतोभेऽस्मिन्नित्यादिपरिहारसंश्लेपात् विष्णुपक्षे यावान्वा इत्यादेरनन्वय इति सूचितां, न्यायविवरणोक्तामनन्वययुक्तिं सङ्गमयितुमाह न च वाच्यमित्यादिना ॥ **अभिप्रायासङ्गतिरिति** ॥ पूर्वोत्तरवाक्ययोरसङ्गतार्थप्रतिपादकत्वेनैवानन्वयः

(वाक्यार्थमुक्तावली)

न तु अनन्वयानुकूलविभक्तिकपदत्वादिनेति भावः ॥ **विशिष्येति** ॥ द्युपृथिव्याद्याश्रयत्व-योग्यत्वाय बाह्याकाशतुल्यतया विशिष्येत्यर्थः । पूर्वं 'स चाकाशो न विष्णुरिति' भाष्यं दहरोऽस्मिन्नन्तर इत्युक्ताकाशस्य विष्णुत्वाभावपरत्वेन व्याख्यातम् । अधुना विष्णुपक्षेऽन्वयो-पपत्तये यावान्वाऽयमाकाश इत्युक्ताकाशो विष्णुरिति शङ्किते तन्निषेधकतया व्याचष्टे **न च यावानित्यादिना** ॥ अत एव तदन्तस्थत्वादिसिद्धान्ते परिहारो भविष्यतीति बोध्यम् । इतरपरामर्शादिति सूत्र एव जीवपूर्वपक्षप्रदर्शनाद्भाष्ये त्यागेऽपि एकबुध्यारोहाय स्वयमाह ॥ **जीवस्य वेति** ॥ अपहतपाप्मेत्युक्तेऽपि मुक्तौ भाविविवक्षयाऽपहतपाप्मत्वं जीवेऽविरुद्ध-मिति भावः ।

अल्पश्रुतिसूत्रोक्तमाह ॥ **दहरस्थत्वेति** ॥ अंशतोऽपीति योज्यम् । तेनार्भकौकसूत्रे व्योमवत्सर्वगतस्याप्यंशतोऽल्पस्थानगतत्वमुक्तमिति निरस्तम् ॥ तस्यांशतोऽपि सर्वगतत्वादिति भावः । सूत्रभाष्ययोः सप्तम्यन्तं दहरपदं दहरं पुण्डरीकम् इत्युक्तदहरपद्मपरम् । सूत्रे तदित्यनु-वर्तते । उत्तरेभ्य इत्युत्तरवाक्योक्तेभ्यो गुणेभ्य इत्यर्थः । उपसंहारस्थततया प्राबल्यं सूचयितु-मुत्तरग्रहणमित्यभिप्रेत्य व्याचष्टे– **दहरपद्मस्थ इति** ॥ **य आत्मेति** ॥ यद्यप्येष आत्मेति साक्षाद्धृत्पद्मस्थे श्रूयते तथाप्युत्तरत्र बहुवारं य आत्मेत्यभ्यासलिङ्गाभ्याससूचनाय य आत्मेति भाष्ये पठितमिति ज्ञेयम् । विष्णोरेवेत्येवकारव्यवच्छेद्यमाह न चाकाशस्येति ॥ **अस्ति प्राप्तिरिति** ॥ चेतनजातीये जीवे पापादिदर्शनादिति भावः ॥ **सत्यकामत्वादीति** ॥ सत्यकामः सत्यसङ्कल्प इति तदुत्तरवाक्ये सत्यकामत्वादिकथनादिति भावः ॥ **कथञ्चिदिति** ॥ जीवेषु मुक्त्यनन्तरं रमायां परतन्त्रेणेत्यर्थः । केचिदभिमानिद्वारे(णे)त्यर्थमाहुः न कथञ्चिदिति । तत्काम्यकामितेत्यविनाभूतत्वेन सत्यकामत्वोक्तेरिति भावः ॥ **अनेनेति** ॥ क्वापि निरपेक्ष-धर्माभावकथनेनेत्यर्थः ।

## तत्त्वसुबोधिनी

अत्र 'सदायतनाः सत्प्रतिष्ठा' इत्यादिना सद्धर्मतयोक्तसर्वाधारत्वादेः 'उभे अस्मिन् द्यावापृथिवि' इत्यादिना हृत्पद्मस्थे श्रवणात्तस्य विष्णोरन्यत्वे प्रागुक्तं सदप्यन्यदेव स्यादिति पूर्वाक्षेपेण पूर्वपक्षोत्थानादनन्तरसङ्गतिः । श्रुतिसाधारण्येनोभयत्र प्रसिद्धत्वमाह ॥ **अत्र यो वेदेति** ॥ अथानन्तरं ब्रह्मपुरे शरीरे यदिदं दहरम् अल्पं पुण्डरीकं वेश्म हृत्पद्मं वर्तते । अस्मिन्

(तत्त्वसुबोधिनी)

हृत्पद्मे दहरः अल्पः आकाशोऽस्ति तस्मिन् आकाशे यदन्तः तदन्वेष्टव्यम् । वा वेति निपातौ । तद्विज्ञासितव्यं विचारणीयमिति गुरुणोक्ते शिष्याः तं चेद्यदि ब्रूयुः किं तद्ब्रूयुरत आह अत्राकाशे किं विद्यते यदन्वेष्टव्यम् । तथा जिज्ञास्यतया चोच्यते इति शिष्यैरुक्ते तान्प्रति सगुरुः ब्रूयात् यावान्वायम् आकाशः तावानेष आकाशः हृदये अन्तस्तिष्ठति अस्मिन्नाकाशे द्यावापृथिव्यन्तरिक्षादिकं समाहितमित्यर्थः ॥ **तत् हृत्पद्मस्थत्वमिति** ॥ यद्यप्यत्र तच्छब्देन दहरोऽस्मिन्नन्तराकाश इति वाक्योक्तस्य तस्मिन्यदन्तः तदन्वेष्टव्यमिति वाक्योक्तस्य वा परामर्शः । प्रथमे तस्य सिद्धान्तेऽप्यन्नब्रह्मनिष्ठत्वात् । द्वितीये भाष्योक्तस्याकाशशब्दस्य पूर्वपक्ष-बीजस्याभावात् । अम्बरान्तधृत्याक्षेपायोगाच्च । तथाहि दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तः तदन्वेष्टव्यमिति वाक्योक्तस्य साक्षात्परम्परासाधारणस्य हृत्पद्मस्थत्वस्य परामर्श इति नोक्तानुपपत्तेरिति भावः । **सर्वाधारतया हृत्पद्मस्थत्वमिति** । अत्राक्षराधिकरणोदाहृत-श्रुतिस्मृतिबलात् सर्वाधारत्वस्य विष्ण्वेकनिष्ठत्वात्तस्य चात्र श्रवणात् हृत्पद्मस्थत्वं विष्णोरेव किं न स्यादित्याशङ्कायां तस्मिन्सर्वं प्रतिष्ठितमिति समाख्याबलात्तदप्याक्षिप्यत इति प्रदर्शनार्थं सर्वाधारतयेत्युक्तमिति द्रष्टव्यम् । हृत्पद्मे दहराकाशस्थिति श्रवणादिति । अनेन भाष्ये दहरोऽस्मिन्नन्तर आकाश इत्यंशोदाहरणस्य युक्तिसूचनं प्रयोजनमिति भावः । सर्वमेतदाकाश-शब्दस्य भाष्ये प्रयोगमूलकमित्यव गन्तव्यम् । अन्यथा हृत्पद्मस्थस्येत्वक्ष्यत् ॥ **तस्यान्ते सुषिरमिति** ॥ **प्रसिद्धाकाशस्यैवेति** ॥ श्रुतौ तच्छब्देन "पद्मकोशप्रतीकाशं हृदयं" इत्युक्त हृत्पद्मपरामर्शादिति भावः । वाक्यान्वयानुपपत्तिं एव दर्शयति ॥ **तथा हीत्यादिना** ॥ **अभिप्रायसङ्गतिरिति** ॥ पूर्वोक्तवाक्ययोरसङ्गतार्थप्रतिपादकत्वेनैवानन्वयः । नत्वन्यथाऽननुकूल-विभक्तिकपदत्वादिनेति भावः । नन्वाकाशपक्षेऽप्यन्वयाभावात् कथमाकाशस्यैव हृत्पद्म-स्थत्वमुच्यते इत्यत आह ॥ **आकाशपक्षेऽत्वस्त्यन्वय इति** । प्रागुक्ताकाशमेव विशिष्येति । द्यावापृथिव्याद्याश्रयत्वयोग्यत्वाय बाह्याकाशतुल्यतया विशिष्येत्यर्थः । **आकाशाख्यो विष्णुः सर्वाधारतयेति** । तथाचान्वेष्टव्ये इत्थं भावप्रदर्शनार्थमुभेऽस्मिन्नित्यादिकं प्रवृत्तमिति तदपि नासङ्गतमिति भावः । न चाकाशपक्षेऽपहतपाप्मत्वादिकमनुपपन्नमिति वाच्यम् । तस्याचेतनत्वेन पापात्यन्ताभावस्य सत्त्वात् । सत्यकामत्वे तु प्रतिहतकामादिराहित्यात् । यद्वाभिमान्यभिमन्य-मानाभिप्रायेणैतदिति न कोऽपि दोष इति भावः । इतरपरामर्शादिति सूत्रं निरस्य पूर्वपक्षमाह ॥ **जीवस्य वैतदिति** ॥ तत्र युक्तिमाह ॥ **उत्तरत्रेति** ॥ इति वाक्यस्थैतच्छब्देन प्रकृतं

(तत्त्वसुबोधिनी)
जीवमनूद्येति शेषः । हृत्पद्मस्थात्मतया परामर्शात् ॥ **हृत्पद्मस्थस्यात्मत्वविधानादित्यर्थः** ॥ जीवलिङ्गाच्च जीव एव हृत्पद्मस्थ इत्याह ॥ **दहरस्थत्वलिङ्गाच्चेति** ॥ **चेतनत्वादस्ति प्राप्तिरिति** ॥ चेतनजातीये जीवे पापादेः दर्शनादिति भावः ॥ **अनेनेति** ॥ नित्य-तीर्णाशनायादिरित्यनेनेत्यर्थः ।

## वाक्यार्थविवरणम्

**तस्मिन् यदन्तरित्यादि** ॥ तस्मिन्यदन्तरिति वाक्येन उक्तो यो हृत्पद्मस्थाकाशगतो विष्णुः स सर्वाधारतया 'उभेऽस्मिन्' इत्यादिवाक्येनोच्यत इति योज्यम् ॥ **इत्युक्ते** ॥ तस्मिन् यदन्तः इति वाक्येन ॥ **प्रश्ने** ॥ किं तदत्र विद्यत इति वाक्येन ॥ **परिहारेति** ॥ द्यावा-पृथिव्यादिकं तत्र विद्यत इति परिहारः शिष्ट इत्यर्थः । तर्हि यावान्वा इत्यादेरसङ्गतिरित्यत उक्तं **यावान्वेत्यादिविशिष्येत्यन्तम्** । अल्पस्य हृत्पद्मस्थाकाशस्य कथं द्यावापृथिव्या-द्याश्रयत्वमिति शङ्कापरिहाराय हृत्पद्मस्थाकाशस्य द्यावापृथिव्याद्याश्रयत्वयोग्यत्वाय दहरोऽस्मि-न्नन्तराकाश इति प्रागुक्ताकाशमेव यावन्वा इत्यादिवाक्येन बाह्याकाशतुल्यतया विशिष्यत इत्यर्थः । विष्णुपक्षे अन्वयमाशङ्कते ॥ **न च यावानित्यादिनेति** ॥ तस्मिन् यदन्तरित्यादिना हृत्पद्मस्थाकाशस्थं ब्रह्मान्वेष्टव्यमित्युक्ते कीदृशं तदिति भावेन किं तदत्र विद्यत इति पृष्टे तत्स्वरूपनिरूपणाय यावान्वा इत्यादि वाक्यं प्रवृत्तम् । तथा च यावान्वा अयमासमन्तात् काशनादाकाशो भगवान् बहिर्व्याप्ततया तिष्ठति तावानेषोऽन्तर्हृदये आकाशो तिष्ठतीत्येक-महिमानं निरूप्य, उभेऽस्मिन्नित्यादिना सर्वाधारत्वरूपमहिमान्तरमुच्यते । इत्यन्वयो-पपत्तेरित्यर्थः ॥ **विरोधादिति** ॥ विष्णोः सर्वाधारत्वोक्ताविति शेषः ॥ **अन्वयाभावदोष इति** ॥ तस्मिन्यदन्तः इत्यत्र जीवत्वाभिप्राये किं तत्र विद्यत इति प्रश्नस्य जीवो विद्यत इति परिहारं विना यावान्वा इत्यादेरन्वयाभाव इत्यर्थः । एवं सिद्धान्तिना शङ्किते कुतो न चेत्यतः पूर्वपक्षी सिद्धान्तिनं प्रत्याह ॥ **विष्ण्विति** ॥ **साम्यादिति** ॥ तस्मिन्नित्यत्र विष्णुत्वाभिप्राये इत्युक्तरीत्या विष्णुपक्षेऽप्यन्वयाभावः समान एवेत्यर्थः ॥ **चेतनत्वादिति** ॥ तज्जातीये जीवे प्राप्तिरस्तीत्याशयः ।

## वाक्यार्थमञ्जरी

**तस्यान्त इति** ॥ तत्र तच्छब्देन पद्मकोशप्रतीकाशं हृदयमिति प्रकृतं हृत्पद्मं परामृश्यते । तथा च तस्य हृत्पद्मस्यान्ते अन्तः सूक्ष्मम् अल्पं सुषिरम् आकाशं वर्तते । तस्मिंश्चाकाशे भगवांस्तत्र च सर्वं जगत्प्रकर्षेण वर्तत इत्यर्थः ॥ **अथ यदिदमिति** ॥ अथेत्यारम्भे अस्मिन्ब्रह्मपुरे पुरुषदेहव्यापिपरब्रह्मशरीरे इदं बुद्धिसन्निहितं दहरम् अल्पं पुण्डरीकं पद्मरूपं वेश्म गृहं यदस्ति अस्मिन्नन्तः पद्ममध्ये दहराकाशः भूताकाशोऽस्ति ततः किमित्यत आह ॥ **तस्मिन्निति** ॥ तस्मिन्नाकाशे यदन्तर्वर्तते तदन्वेष्टव्यं मार्गणीयम् । न घटादिवदस्यान्वेषणमप्रत्यक्षत्वादित्यतस्तदेव विवृणोति ॥ **तद्वावेति** ॥ वावेत्यवधारणे तदेवावजिज्ञासितव्यमिति गुरुणोक्ते सतीति शेषः । तद्गुरुं प्रति शिष्याः पृच्छेयुः यदिदमित्याद्यनुवादः यद्विजिज्ञासितव्यं तदत्र हृत्पद्मगताकाशे किं विद्यते ब्रह्म च न सम्भवति तस्य व्याप्तत्वेन दहराकाशगतत्वायोगादिति भावः । इति ब्रूयुरिति सम्बन्धः । तदा स गुरुः ब्रूयात् ॥ **किमिति** ॥ अन्तःशरीरान्तर्हृदये हृद्यत इति हृदयशब्दवाच्ये हृत्पद्मगते भूताकाशे आकाशः आकाशाख्यपरमात्मा वर्तते । एषोऽन्तस्थः यावानयं बहिर्विद्यमानः आकाशाख्यपरमात्मा तावान्वै गुणतः परिमाणतश्च तावानेव अनेन हृत्पद्मगतं ब्रह्माण्वपि व्याप्तं लोकदृष्ट्या विरुद्धयुगपदणुत्वमहत्त्वादीनां तस्मिन्समावेशस्य प्रमितत्वादित्युक्तं भवति । अन्यपरित्यागेन तस्यैव जिज्ञास्यत्वप्रयोजकं तत्सामर्थ्यमाह ॥ **उभेत्यादिना** ॥ अस्मिन्नन्तरे वोभे मुक्ते द्यावापृथिव्यौ समाहिते समाश्रिते उभयविधाग्निवायुसूर्यचन्द्रविद्युन्नक्षत्राणि च समाहितानीत्यर्थः । किमाकाशे विद्यत इति प्रश्ने आकाशगतस्यैव वक्तव्यत्वेन यावानित्यादेरसङ्गताकाशपक्षेऽप्यन्वयानुपपत्तिरित्यत आह ॥ **आकाशपक्षे त्विति** ॥ हृत्पद्माकाशस्य द्यावापृथिव्याद्याश्रितत्वयोग्यत्वद्योतनाय दहरोऽस्मिन्नन्तर आकाश इति प्रागुक्ताकाशमेव यावान्वेत्यादिना वाह्याकाशतुल्यतया विशिष्येत्यर्थः ॥ **परिहारे कथ्यत इति** ॥ एतच्च तद्वाक्यव्याख्यावसर एव व्यक्तम् । उत्तरत्र उत्तरखण्डे । परञ्ज्योतिरिति योऽधिकारी सम्प्रसादः सम्यग्विष्णुप्रसादवान्, एषः अस्माच्चरमशरीरात्समुत्थाय निर्गतः, परं ज्योतिः अतिप्रकाशमान् परमात्मानम् उपसम्पद्य, स्वेन रूपेणाभिनिष्पद्यते स्वस्वरूपाविर्भावं प्राप्नोति । हृत्पद्मस्थात्मनिरूपणावसरे किं ज्योतिःप्रसङ्गेनेत्यत उक्तम् ॥ **एष इति** ॥ यं प्राप्य स्वस्वरूपमाप्नोति स एष प्रागुक्तपरमात्मेति होवाचेत्यर्थः । अत्र यः निष्पद्यते एष आत्मेत्यन्वयः पूर्वपक्षिणोऽभिमतः । न चेति किं तदत्र

(वाक्यार्थमञ्जरी)
वियत इति प्रश्नस्य जीवे वियत इति परिहारं विना यावान्वायमाकाश इत्यादेरसङ्गतत्वादिति भावः ॥ ॐ दहर उत्तरेभ्यः ॐ ॥ दहरे दहरं पुण्डरीकमित्याद्युक्तदहरपद्मे स्थितं ब्रह्मैव उत्तरेभ्यः य आत्मापहतपाप्मेत्याद्युत्तरवाक्योक्तापहतपाप्मत्वादितद्धर्मेभ्य इत्यर्थः । अपहतपाप्मा दूरनिरस्तपापः, अविजिघत्सः बुभुक्षापीडारहितः, अतिशयेन प्राप्नोतीति भ्रान्तिं वारयति ॥ **अतिक्रम्येति** ॥ **कथञ्चित्** अभिमानिद्वारा । **अनेन** नित्यतीर्णेत्यादिना ।

## सूत्रभाष्यम्

**॥ ॐ गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॐ ॥ १५ ॥**

'अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति' इति (छां.उ.८-३-२) सुप्तस्य तद्गतिर्ब्रह्मशब्दश्चोच्यते । 'सता सोम्य तदा सम्पन्नो भवति' (छां.उ.६-८-१) इति श्रुतेस्तं हि सुप्तो गच्छति । 'अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोक' (छां.उ.८-५-३) इति लिङ्गं च । तथा हि दृष्टम् । 'अरश्च वै ण्यश्च सुधासमुद्रौ तत्रैव सर्वाभिमतप्रदौ द्वौ' इत्यादिना तस्यैव हि तल्लक्षणत्वेनोच्यते ॥

## सत्तर्कदीपावली

गतीत्यादेरयमर्थः । द्यावापृथिव्याधारं प्रकृत्य 'इमाः सर्वाः प्रजाः अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति' इति श्रूयमाणत्वादप्यसौ विष्णुरेव न हि दहर आकाशः । विष्णुरेव हि सुप्तगम्यः प्रसिद्धो 'यत्र तत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति' इत्यादि श्रुतो ब्रह्मलोकशब्दोऽत्र दहराकाशविपयत्वे अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके इति लिङ्गदर्शनं विरुध्यते । अरण्यशब्दाभिधेयसुधासमुद्रयोर्विष्णुलोकस्थत्वेन प्रसिद्धत्वादागमेषु । तथा हि उक्तं पुरुषोत्तमतन्त्रे 'अरश्च वै ण्यश्च सुधासमुद्रौ तत्रैव सर्वाभिमतप्रदौ द्वौ' इति ।

## तत्त्वप्रदीपिका

'इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति' न विजानन्तीत्यर्थः ।

अज्ञत्वादेव सुप्तौ तु नित्यं यान्तोऽपि माधवम् ।
नैव पश्यन्त्यसौ विष्णुर्हृदयं नाम हृद्गतः ॥ इति पर्यङ्कोपासनायाम् ।

(तत्त्वप्रदीपिका)

तद्गतिर्दहरस्थं प्रति गतिः । सुप्तगम्यत्वलिङ्गाद् ब्रह्मशब्दाच्च दहरस्थो विष्णुरेव । अरण्य-नामार्णवद्वयाधिकरणलोकवत्त्वं लिङ्गं च तथा दृष्टं हि, ब्रह्मशब्देन सहैव दृष्टमित्यर्थः ।

'परस्य ब्रह्मणो लोके श्वेतद्वीपाभिधे परे ।
अरो ण्यश्चार्णवौ दिव्यौ चिदानन्दरसात्मकौ' इति च पर्यङ्कोपासनायाम् ॥

## तत्त्वप्रकाशिका

युक्त्यन्तरेण हृत्पद्मस्थत्वं विष्णोः प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **गतीति** ॥ अत्र हृत्पद्मस्थस्याहरहर्गच्छन्त्य एतमिति सुप्तप्रजाप्राप्यत्वव्यपदेशात् हृत्पद्मस्य ब्रह्मलोकत्वोक्त्या तदन्तर्गते ब्रह्मशब्दश्रवणाच्च विष्णुरेवायमित्यर्थः । ब्रह्मैव सर्वाश्रयत्वादिना लोकपदोक्तं वा । सुप्तप्राप्यत्वं कुतो विष्णुत्वनिश्चायकमित्यत आह ॥ **सतेति** ॥ सम्पन्नः सङ्गतः । ब्रह्मशब्दस्तु विष्ण्वेकपर इति प्रागेवोक्तम् । किं च हृत्पद्मस्थस्यारण्याख्यसुधासमुद्राश्रयलोकवत्त्वलिङ्ग-श्रवणाच्च तदन्तर्गतो विष्णुरिति सूत्रशेषं व्याचष्टे ॥ **अरश्चेति** ॥ हृत्पद्मस्थस्यारण्याश्रय-लोकवत्त्वलिङ्गश्रवणेऽपि कुतोऽयं विष्णुरिति चेत् । तस्य च विष्णुलोकैकलिङ्गत्वादिति हिशब्दाभिप्रायमाह ॥ **अरश्चेति** ॥ अनेनारण्याश्रयत्वं सत्यलोकलिङ्गमित्यप्यपास्तम् । क्षीराब्धिमध्ये इति तत्प्रसङ्गात् । अरण्याश्रयलोकवत्त्वं हृत्पद्मस्थस्य नोच्यत इति शङ्कापनोदाय तथेत्युक्तम् । यथाऽहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्तीत्येतत् हृत्पद्मस्थविषयं तथैतदपि लिङ्गं तन्निष्ठम् । ब्रह्मलोकशब्दश्रवणादेवेति भावः । अथवा ब्रह्मलोकमिति हृत्पद्मस्य विष्णुलोकत्वोक्तेस्तदन्तर्गतो विष्णुरित्युक्तम् । ब्रह्मलोकपदं कुतो विष्णुलोकवाचीत्यत आह ॥ **अरश्चेति** ॥ ब्रह्मलोकपदस्य विष्णुलोके अरश्चेति प्रयोगादत्रापि तत्परत्वमेव । तत्रापि तत्कुतः । अरण्याश्रयता(त्व)लिङ्गादित्यर्थः । तस्य भगवल्लोकलिङ्गत्वं कुत इत्यत आह ॥ **अरश्चेति** ॥

## गुर्वर्थदीपिका

'अरश्च ह वै ण्यश्च' इति श्रुतौ ह वै इति निपातद्वयम् । अरसंज्ञो ण्यसंज्ञश्च सुधासमुद्र इति भावेनोक्तं **अरण्याख्येति** ॥ अर इति ण्य इति च आख्या ययोरिति । 'एष भूताधिपतिरेष भूतपालः' इत्याद्यस्य महिमाऽस्मिन् हृत्पद्मस्थे उपलब्धेः बृहदारण्यकशाखायां श्रवणादस्यापि प्रकरणस्य हृत्पद्मस्थविषयकत्वेन तत्समाख्यानात् । छन्दोगोपनिषदुक्तहृत्पद्मस्थोऽपि विष्णुरेवेत्यर्थो ज्ञेयः ॥

## भावबोधः

गच्छन्त्य इति स्त्रीलिङ्गाभिप्रायमाह– **सुप्तप्रजेति** ॥ **सर्वाश्रयत्वादिना लोकपदोक्तं चेति** ॥ अनेन न पूर्ववत् हृत्पद्मप्राप्तिद्वारा तन्निष्ठभगवतः सुप्तप्राप्यत्वं किन्तु साक्षादेवेत्युक्तं भवति । अत्राऽऽदिना प्रकाशरूपत्वादिकं ग्राह्यम् । हृत्पद्मस्थस्यारण्याख्यसुधासमुद्राश्रयलोकवत्त्वलाभाय ब्रह्मलोकशब्दश्रवणादेवेत्यादिवक्ष्यमाणाभिप्रायेण **हृत्पद्मस्य ब्रह्मलोकत्वोक्त्या** इति प्राचीनं व्याख्यानमित्यवधेयम् ॥ **लोकवत्त्वलिङ्गश्रवणादिति** ॥ सुप्तप्राप्यत्वस्यापि लिङ्गत्वे 'अपि शब्दादिभ्योऽन्तःप्रतिष्ठानात्' इत्यत्रेव गतिः पृथगुक्तेति भावः ॥ **हिशब्दाभिप्रायमाहेति** ॥ अत एव भाष्ये 'लिङ्गञ्च तथा दृष्टम्' इत्यत्र 'हि' इत्यनुक्त्वा तस्यैव 'हि' तल्लक्षणत्वेनोच्यत इत्यत्र 'हि' शब्दो योजित इति भावः ॥ **एतद्हृत्पद्मस्थविषयमिति** ॥ 'अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति' इत्यस्यानन्तरं स एव आत्मा हृदि' इति श्रवणादिति भावः ॥ **ब्रह्मलोकशब्दश्रवणादेवेति** ॥ हृत्पद्मस्थस्यावासत्त्वेन तल्लोके हृत्पद्मे एतं ब्रह्मलोकमिति प्रयुक्तस्य ब्रह्मलोकशब्दस्यारण्याश्रयलोकेऽपि श्रवणादित्यर्थः । अनेन सूत्रे गतिशब्दलिङ्गैरित्यनुक्त्वा लिङ्गश्चेति किमर्थं पृथगुक्तमिति परास्तम् । गतिशब्दयोः हृत्पद्मनिष्ठतया प्रसिद्धत्वेन लिङ्गस्योक्तरीत्या साध्यत्वेन पृथगुक्तेरिति भावः ।

पूर्वं हृत्पद्मस्थस्य ब्रह्मत्वे हेत्वन्तरोक्त्यर्थं सौत्रं लिङ्गपदमित्येवं परतया अरश्चेत्यादिभाष्यं व्याख्यातम् । अधुना ब्रह्मलोकशब्दस्य प्रसिद्ध्या सत्यलोकपरत्वशङ्कानिरासार्थं तदित्येवम्परतया अरश्चेत्यादिभाष्यं व्याचष्टे– **अथवा ब्रह्मलोकमिति** । अनेन 'लिङ्गं च' इति सूत्रोक्तं लिङ्गं न केवलं गतिशब्दवत् हृत्पद्मस्थस्य विष्णुत्वसाधकं; किन्तु हृत्पद्मे प्रयुक्तब्रह्मलोकपदोक्तस्य विष्णुलोकत्वसाधकत्वेन हृत्पद्मस्थस्य विष्णुत्वसाधकब्रह्मशब्दाख्यहेतुसाधकमपीत्यतः तत् पृथक्कृत्योक्तमिति तस्य पृथग्वचने प्रयोजनान्तरमपि सूचितं भवति ॥ **अरश्चेति** ॥ 'अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके' इति वाक्य इत्यर्थः ॥ **अत्रापीति** ॥ एतं ब्रह्मलोकं न विन्दन्तीत्यत्रापीत्यर्थः ॥ **तत्परत्वमिति** ॥ ब्रह्मलोकपदस्य विष्णुलोकपरत्वमित्यर्थः ॥ **तत्रापि तत् इति** ॥ अरश्च ह वैण्यश्चेति वाक्ये बह्मलोकपदस्य विष्णुलोकपरत्वमित्यर्थः । **तस्य भगवल्लोकलिङ्गत्वमिति** ॥ अरण्याख्यसमुद्राश्रयत्वस्येत्यर्थः ।

## भावदीपः

**युक्त्यन्तरेणेति** ॥ जातावेकवचनम् । भाष्यं व्याकुर्वन् सूत्रार्थमाह ॥ **अत्रेति** ॥ इमाः प्रजा अहरहर्गच्छन्त्य इति पूर्वोक्तप्रजापेक्षया गच्छन्त्य इति स्त्रीलिङ्गमित्युपेत्योक्तम् ॥ **सुप्तप्रजेति** ॥ परं ब्रह्मैव लोकनात् । ब्रह्मलोक इति प्रोक्तस्तस्य लोकोऽपि कथ्यत इति तद्भाष्योक्तेः षष्ठ्यर्थत्वमुपेत्यार्थमाह ॥ **हृत्पद्मस्येति** ॥ अयं सर्वाधारतया हृत्पद्मस्थ इत्यर्थः । अर्थान्तरं चाऽऽह । **ब्रह्म चासौ लोकश्चेति** व्युत्पत्त्येति भावः । अस्मिन्पक्षे साक्षादेव हृत्पद्मस्थस्य गतिशब्दौ । पूर्वव्याख्याने त्वार्थिकौ । तद्व्याख्यानं तूत्तरलिङ्गोक्तिसौकर्यायेति भावः । तादात्म्यं प्राप्त इति भ्रान्तिं निराह ॥ **सङ्गत इति** ॥ लिङ्गं चेति चार्थं वदन् भाष्यं भावार्थोक्तिपूर्वमवतारयति ॥ **किं चेति** ॥ **लोकवत्त्वलिङ्गेति** ॥ 'अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि' इत्युत्तरवाक्ये अरण्याख्यसुधासमुद्राश्रयलोके प्रयुक्तब्रह्म-लोकपदस्य हृत्पद्मे प्रयोगात् हृत्पद्मस्थस्य तादृशलोकवत्त्वं लभ्यत इति भावः ॥ **हिशब्देति** ॥ पूर्वं भाष्ये लिङ्गं च तथाहि दृष्टमिति हिशब्दः केवलमनूदित एवेति भावः ॥ **अनेनेति** ॥ हिशब्दसूचितस्मृतिकथनेनेत्यर्थः ॥ **तत्प्रसङ्गादिति** ॥ विष्णुलोकप्रसङ्गादित्यर्थः । अरश्च वै ण्यश्च इति भाष्योक्तवाक्ये पूर्वत्र क्षीराब्धिमध्य इत्युपक्रम्योक्तविष्णुलोकप्रस्तावे अरश्चेति पाठादित्यर्थः ।

यद्वा वराहादिपुराणान्तरे चतुर्दशाध्यायादौ पूर्वत्र क्षीराब्धिमुक्त्वा तन्मध्ये मम लोकस्तु परितो वलयाकृतिरित्युक्त्वा अरण्याख्यसुधाम्भोधिरित्याद्युक्तेरिति भावः । भाष्ये हि शब्दार्थ-मात्रविवरणात् सौत्रतथाशब्दकृत्यं स्वयमाह ॥ **अरण्येति** ॥ **ब्रह्मलोकेति** ॥ सुधासमुद्राश्रय-लोके प्रयुक्तब्रह्मलोकपदस्य हृत्पद्मे श्रवणादित्यर्थः । एतेनास्य लिङ्गस्य विष्णुनिष्ठताया अस्पष्टत्वेनोपपादनसापेक्षत्वात् गतिशब्दलिङ्गेभ्य इत्यनुक्त्वा पृथगुक्तिरिति दर्शितम् । पूर्वं हृत्पद्मस्थस्य ब्रह्मत्वे हेत्वन्तरोक्त्यर्थं सौत्रं लिङ्गपदमित्येवम्परतया अरश्चेत्यादिभाष्यं व्याख्यातम् । अधुना ब्रह्मलोकशब्दस्य प्रसिद्धसत्यलोकपरत्वशङ्कानिरासार्थं तदित्येवम्परतया अरश्चेत्यादिभाष्यांशं व्याचष्टे ॥ **अथवेति** ॥ भाष्ये इतिशब्दानन्तरं हेतुसाध्ये अध्याहृत्य वा सति (यथा) विष्णुलोके ब्रह्मलोकपदप्रयोगः तथा ब्रह्मलोकमित्यत्रापि विष्णुलोकत्वे लिङ्गमनु-मापकं दृष्टमित्यर्थमुपेत्य वा अरश्चेत्यादिवाक्यं व्याचष्टे ॥ **ब्रह्मलोकेति** ॥ **अरश्चेति** ॥ वाक्ये

(भावदीपः)

इत्यर्थः । अत्रापि ब्रह्मलोकं न विन्दन्तीत्यत्रापि विष्णुलोकपरत्वमेवेत्यर्थः । तथा अरश्चेत्यादि वाक्येऽपि ब्रह्मलोकशब्दस्य विष्णुलोकवाचित्वेऽपि लिङ्गं सुधासमुद्राश्रयत्वादिरूपविष्णुलोक-लिङ्गं दृष्टमित्यर्थमुपेत्य लिङ्गं चेत्यादिभाष्यमवतार्य व्याचष्टे ॥ **तत्रापीति** ॥ अरश्चेत्यादि-वाक्येऽपीत्यर्थः ॥ **तस्येति** ॥ समुद्राश्रयत्वस्येत्यर्थः । भाष्ये तस्यैव विष्णुलोकस्यैव तत् समुद्राश्रयत्वमित्यर्थः ।

## अभिनवचन्द्रिका

ननु 'ब्रह्मशब्दस्योच्यत' इति भाष्यमनुपपन्नम् । 'अहरहर्गच्छन्त्य' इति वाक्ये हृत्पद्मस्य ब्रह्मलोकत्वश्रवणेऽपि हृत्पद्मस्थे ब्रह्मशब्दाश्रवणादित्यत आह ॥ **हृत्पद्मस्येति** ॥ यद्यपि हृत्पद्मस्थे साक्षाद्ब्रह्मशब्दो न श्रुतः, तथापि हृत्पद्मस्य ब्रह्मलोकत्वोक्त्या हृत्पद्मस्थं ब्रह्म-शब्दोक्तं भवतीत्यर्थः ॥ **ब्रह्मैवेति** ॥ वाशब्दात्पूर्वम्, 'इति तदन्तर्गते ब्रह्मशब्दश्रवणा-द्विष्णुरेवायम्' इति वाक्यं ग्राह्यम् । वाशब्दात्परम्, अर्थशब्दो ग्राह्यः । ततश्चैवं टीका-वाक्यपाठः । 'ब्रह्मैव सर्वाऽश्रयत्वादिना लोकपदोक्तमिति तदन्तर्गते ब्रह्मशब्दश्रवणात् विष्णुरेवायमिति वाऽर्थ' इति । एतेनेदं वाक्यमनन्वितमिति परास्तम् । **कुतोऽसाविति** ॥ इति चेदित्यतः परं नेति शेषो बोध्यः ॥ **अनेनेति** ॥ हिशब्दसूचितश्रुत्युदाहरणपूर्वकं विष्णुलिङ्गत्व-कथनेनेत्यर्थः । नन्वेतद्वाक्यस्य विष्णुलोकपरत्वं कुत इत्यत आह ॥ **क्षीराब्धिमध्य इति** ॥ विष्णुलोकपरत्वमिति शेषः । लिङ्गं च 'तथा हि दृष्टम्' इति भाष्ये लिङ्गशब्दस्य तथा शब्दान्वयाभिधानप्रयोजनमाह ॥ **अरण्याश्रयेति** ॥ 'लिङ्गं तथा' इत्युक्त्या कथमुक्तशङ्का-परिहार इत्यतः तदभिप्रायमाह ॥ **यथा अहरहरिति** ॥ 'अहरहर्गच्छन्त्य एतम्' इति सुप्तप्राप्यत्वं तावत् हृत्पद्मस्थस्योच्यत इत्यविवादम् । स्वापस्य हृदयस्थानत्वात् । तत्सादृश्या-दरण्याश्रयलोकवत्त्वमपि हृत्पद्मस्थस्योच्यत इत्यभ्युपेयम् । तदुभयाभिधायकवाक्ययोः ब्रह्मलोकशब्दश्रवणेन सदृश्यत्वादिति भावः ।

## वाक्यार्थमुक्तावली

युक्त्यन्तरेणेति समुदायवचनम् । इमाः प्रजा अहरहर्गच्छन्त्य इत्येतदनुसारेण सुप्त-प्रजेत्युक्तम् । सर्वाश्रयत्वादिनेत्यादिपदेन प्रकाशरूपत्वं परं ब्रह्मैव लोकनात् ब्रह्मलोक इति

(वाक्यार्थमुक्तावली)

प्रोक्तमिति वचनादवलोककर्तृत्वं च गृह्यते । अस्मिन्पक्षे हृत्पद्मस्थस्य गतिशब्दो साक्षादेव, पूर्वव्याख्याने त्वार्थिकौ । तद्व्याख्यानन्तु अरण्याश्रयलोकवत्वलक्षणं लिङ्गं ब्रह्मलोकं न विन्दन्तीत्येतद्वत् हृत्पद्मनिष्ठं ब्रह्मलोकशब्दश्रवणादेवेति वक्ष्यमाणोक्तिसौकर्यायेति ज्ञेयम् ॥ **लोकत्वलिङ्गेति** ॥ अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितोदिवीत्युत्तरवाक्ये अण्याख्यसुधासमुद्राश्रयलोके ब्रह्मलोकं न विन्दन्तीत्यत्र हृत्पद्मे प्रत्युक्तब्रह्मलोकपदश्रवणात् हृत्पद्मस्थमेव ब्रह्मसंज्ञितं, सुधासमुद्राश्रयलोकवत्वं हृत्पद्मस्थस्य लिङ्गमिति भावः । स्पष्टी-भविष्यतीति बोध्यम् ॥ **क्षीराब्धिमध्ये इति** ॥ पुरुषोत्तमसंहितायाम् । 'अरश्च ह वै ण्यश्च सुधासमुद्रौ तत्रैव सर्वाभिमतप्रदौ द्वौ । **अ़तोऽनवद्या हरिमेव नित्यं विद्याधराणामपि सन्घसन्घाः** इत्याद्युक्त्वा, तत्रैव विष्णोस्तु सभा मनोज्ञा महाचतुःस्तम्भनिविष्टकोणाः ॥ स्तम्भैश्च मध्ये परिवर्जिता च चित्रा महायोजनकोटिमात्रेत्यादि चोक्त्वा क्षीराब्धिमध्ये तु शुभा-मनन्तां ध्यायेदिमां विश्वकृता कृतां ताम् । स ब्रह्मलोकोद्भववृक्षषण्ढात् ब्रह्मादिदेवैः सततार्चितां च इत्युक्तत्वादिति भावः । अरश्चेत्यस्याव्यवहितपूर्ववाक्ये, अश्वत्थसन्धश्च पयोब्धिमध्ये, इति क्षीराब्धिप्रसङ्गादिति वा ॥ **हृत्पद्मस्थविषयमिति** ॥ एतद्वाक्यानन्तरं, स एष आत्मा हृदीति प्रयोगात्, हृत्पद्मस्थविषयमिति गम्यत इति भावः ॥ **ब्रह्मलोकशब्देति** ॥ प्रागुक्तब्रह्मलोक-शब्दस्य, सुधासमुद्राश्रयलोके श्रवणादित्यर्थः । अभिप्रायस्तु प्रागेवोक्तः ।

पूर्वं सुप्तप्राप्यत्व, ब्रह्मशब्द, सुधासमुद्राश्रयलोकत्वलिङ्गैः हृत्पद्मस्थो विष्णुरिति व्याख्यातम् । अधुना शब्दपदेन ब्रह्मशब्दो विवक्षितः, किं तु हृत्पद्मे ब्रह्मलोकशब्दश्रवणात्तस्य विष्णुलोके रूढत्वात्तदन्तर्गतो विष्णुरिति शब्देत्यंशं व्याख्याय, ब्रह्मलोकशब्दस्य विष्णुलोके रूढत्वे, प्रयोगाख्यलिङ्गप्रदर्शकतया तथाहीत्यंशः प्रवृत्त इत्याशयेन भाष्यमवतारयति अथवेति ॥ **इत्युक्तमिति** ॥ शब्देत्यंशेनेत्यर्थः । अत्रापि, ब्रह्मलोकं न विन्दन्तीत्यत्रापि । प्रयोगाख्य-लिङ्गं दृष्टमिति व्याख्यातं भवति ॥ **तत्रापीति** ॥ अरश्चेत्यत्रापीत्यर्थः ॥ **तस्येति** ॥ समुद्राश्रयस्येत्यर्थः । अनेन लिङ्गमिति प्रकारान्तरेण व्याख्यातं सूत्रे तत्वित्यस्ति । शब्दपदेन ब्रह्मशब्दो विष्णुलोकवाचकब्रह्मलोकशब्दश्च गृह्यते । तत्र ब्रह्मशब्दः साक्षात् श्रुतित्वेन विष्णुत्वसाधकः ब्रह्मलोकशब्दस्तु हृत्पद्मं, विष्ण्वाश्रयं, विष्णुलोकत्वात् । न चासिद्धिः । विष्णुलोकरूढब्रह्मलोकशब्दस्य तत्र श्रवणादिति लिङ्गविधया विष्णुत्वसाधकः । ततश्च सुप्तस्य

(वाक्यार्थमुक्तावली)

हृत्पद्मस्थगतिब्रह्मशब्दाभ्यां हृत्पद्मे ब्रह्मलोकशब्दाच्च दहरे विष्णुरेव । किं च यथा गतिशब्दौ हृत्पद्मनिष्ठौ तथा समुद्राश्रयलोकत्वलिङ्गं च हृत्पद्मस्थगतं दृष्टम् अतोऽपि दहरे ब्रह्म । एतल्लोकवत्त्वं च विष्णोःप्रसिद्धमिति हीत्युक्तम् । ब्रह्मलोकपदं कुतो विष्णुलोकवाचीत्यतश्चोक्तं तथेत्यादि । तथा तथात्वे । ब्रह्मलोकशब्दस्य विष्णुलोकवाचित्वे, अरश्चेति प्रयोगाख्यं लिङ्गं दृष्टम् । तथा च तत्रापि, अरश्चेति श्रुतावपि ब्रह्मलोकपदस्य विष्णुलोकपरत्वे अरण्याश्रयत्वं लिङ्गं दृष्टं तस्य च भगवल्लोकलिङ्गत्वं च श्रुतिसिद्धमिति हेरर्थः । गतेर्लिङ्गत्वेऽपि, अन्तः-प्रतिष्ठानादित्यत्र पाचकत्वेनान्तप्रतिष्ठानस्य कर्मत्वात्पृथगुक्तिवदत्रापि पृथुगुक्तिः । गतिशब्द-योरेकश्रुत्युक्तत्वाल्लिङ्गस्य हृत्पद्मनिष्ठताया उपपादनीयत्वेन गतिशब्दवदस्पष्टत्वात् ब्रह्मलोक-शब्दस्य विष्णुलोके प्रयोगादिप्रदर्शकतया शब्देत्युक्तशेषत्वाच्च लिङ्गस्य पृथुगुक्तिरिति सर्वमनवद्यम् ।

## तत्त्वसुबोधिनी

गच्छन्त्य इति स्त्रीलिङ्गाभिप्रायमाह ॥ **सुप्तप्रजेति** ॥ **हृत्पद्मस्य ब्रह्मलोकत्वोक्त्येति** ॥ **एतं ब्रह्मलोकमिति** ॥ ब्रह्मलोकत्वोक्त्येत्यर्थः । **सर्वाश्रयत्वादिना लोकपदोक्तं वेति** । अनेन पूर्ववत् पद्मप्राप्तिद्वारा तन्निष्ठभगवतः सुप्तप्राप्यत्वं किन्तु साक्षादेवेत्युक्तं भवति । अत्रादिपदेन प्रकाशरूपत्वादिकं ग्राह्यम् । हृत्पद्मस्थस्यारण्याख्यसुधासमुद्राश्रयलोकवत्वलाभाय ब्रह्मलोक-शब्दश्रवणादेवेत्यादिवक्ष्यमाणाभिप्रायेण हृत्पद्मस्थत्वस्य ब्रह्मलोकत्वोक्त्येति प्राचीनं व्याख्यान-मित्यवधेयम् ॥ **तस्येति** ॥ अरण्यालोकत्वस्येत्यर्थः ॥ **हि शब्दाभिप्रायमाहेति** ॥ अत एव भाष्ये लिङ्गं च तथादृष्टमित्यत्र हीत्यनुक्त्वा तस्यैव तल्लक्षणत्वेनोच्यत इत्यत्र हिशब्दो योजित इति भावः ॥ **अनेनेति** ॥ अरण्याश्रयलोकत्वस्य विष्णुलोकलिङ्गत्वप्रतिपादकप्रमाणोदाहरणे-नेत्यर्थः । नन्वरश्चेत्यत्रापि तत्रेत्येतत्सत्यलोकपरम् । तथा च कथं तेन प्रमाणेन ब्रह्मलोक-शब्दस्य सत्यलोकपरत्वशङ्कानिरास इत्यत आह ॥ **क्षीराब्धिमध्य इति** ॥ तत्प्रसङ्गात् । विष्णुप्रकरणात् । एतत्पूर्ववाक्ये क्षीराब्धिमध्य इत्युक्तत्वेन विष्णुप्रकरणात् । न तत्रेत्यस्य सत्यलोकपरत्वमिति भावः ॥ **एतदूहृत्पद्मस्थविषयमिति** ॥ 'अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विदन्तीत्यस्यानन्तरं स एष आत्मा हृदीति श्रवणादिति भावः ॥ **ब्रह्मलोकशब्दश्रवणा-देवेति** ॥ हृत्पद्मस्थस्याब्रह्मत्वेन तल्लोके हृत्पद्म एव तं ब्रह्मलोकमिति प्रयुक्तस्य ब्रह्मलोक-

(तत्त्वसुबोधिनी)

शब्दस्यारण्याश्रयलोकेऽपि श्रवणादित्यर्थः । अनेन एतत्सूत्रे गतिशब्दलिङ्गैरित्यनुक्त्वा लिङ्गं चेति लिङ्गं किमर्थं पृथगुक्तमित्यपास्तम् । गतिशब्दो यो हृत्पद्मनिष्ठतया प्रसिद्धत्वेन लिङ्गस्योक्तरीत्या साध्यत्वे पृथगुक्तेरिति भावः । पूर्वं हृत्पद्मस्थस्य विष्णुत्वे हेत्वन्तरोक्त्यर्थं सौत्रलिङ्गं पदमित्येवम्परतया अरश्चेत्यादिभाष्यं व्याख्यातम् । अधुना ब्रह्मलोकशब्दस्य प्रसिध्या सत्यलोकपरत्वशङ्कानिरासार्थं हृत्पद्मान्तर्गतो विष्णुः हृत्पद्मस्य विष्णुलोकत्वात् । तस्य विष्णुलोकत्वम् कुत इति चेत् । तत्र ब्रह्मलोकशब्दस्य प्रयुक्तत्वम् । ततः किमिति चेत् । ब्रह्मलोकपदस्य विष्णुलोकवाचकत्वात् । तदपि कुतः । विष्णुलोकलिङ्गस्यारण्याश्रयत्वस्य ब्रह्मलोकप्रयुक्तत्वात् । इत्येवम्परतया अरश्चेत्यादिभाष्यं व्याचष्टे ॥ **अथवा ब्रह्मलोकमिति** ॥ अनेन सूत्रे लिङ्गं चेत्युक्त लिङ्गं न केवलं गतिशब्दवत् हृत्पद्मस्थस्य विष्णुत्वसाधकं किन्तु हृत्पद्मे प्रयुक्तब्रह्मलोकपदोक्तस्य विष्णुलोकसाधकत्वेन हृत्पद्मस्थस्य विष्णुत्वसाधकब्रह्मशब्दाख्यहेतुसाधकमपीत्यतः तत्पृथकृत्योक्तमिति तस्य पृथग्वचने प्रयोजनान्तरमिति सूचितम् ॥ **अरश्चेतीति** ॥ अरश्च ह वैण्यश्चार्णवौ ब्रह्मलोक इति वाक्य इत्यर्थः ॥ **तत्परत्वमिति** ॥ ब्रह्मलोकपदस्य विष्णुलोकपरत्वमित्यर्थः । **तत्रापीति** । एतं ब्रह्मलोकं न विन्दन्तीत्यत्रापीत्यर्थः ॥ **तस्येति** ॥ अरण्याख्यसमुद्राश्रयत्वस्येत्यर्थः ।

## वाक्यार्थमञ्जरी

गतिः सुप्तप्राप्तिः अहरहर्गच्छन्त्य एतं ब्रह्मलोकमिति सुप्तगम्यत्वलिङ्गब्रह्मशब्दाभ्यां च हृत्पद्मस्थं ब्रह्मैव । किञ्च यथागतिशब्दौ हृत्पद्मस्थगौ तथा लिङ्गं अरण्याख्यसुधासमुद्राश्रयलोकवत्त्वरूपलिङ्गं च अरश्च वैण्यश्च अर्णवौ ब्रह्मलोक इति तन्निष्ठतया दृष्टं यतोऽतोऽपि हृत्पद्मस्थं ब्रह्मैवेत्यर्थः ॥ **अहरह इति** ॥ इमाः सर्वाः प्रजाः एतं ब्रह्मलोकं विष्णुलोकं हृत्पद्मं तत्रत्यं ब्रह्मैवेति यावत् । अथवा लोकं सर्वाधारत्वेन प्रकाशवत्त्वेन लोकशब्दाभिधेयं ब्रह्मविष्णुम् अहरहः प्रतिदिनं प्राप्नुवन्त्यः सत्यः एतं जानन्तीत्यर्थः । हृत्पद्मस्थे ब्रह्मशब्दं प्रकारद्वयेन घटयति ॥ **हृत्पद्मस्थेत्यादिना** ॥ अरश्च वैण्यश्च अर्णवौ ब्रह्मलोके तृतीयस्यामितो दिवीत्यस्यायमर्थः । इतो मेर्वपेक्षया तृतीयायां दिवि विद्यमाने ब्रह्मलोके श्वेतद्वीपे अरश्च वैण्यश्चेत्येतन्नामानौ लक्ष्म्यात्मकौ ह वै प्रसिद्धार्णवौ समुद्रौ समुद्रोपमे च सरसी तिष्ठत इति । प्रसङ्गात् प्रकरणात् इदं भाष्योदाहृतात्पूर्ववाक्ये द्रष्टव्यम् । यद्वा वराहादिपुराणान्तरे चतुर्दशाध्यायादौ

(वाक्यार्थमञ्जरी)

पूर्वत्र क्षीराब्धिमुक्त्वा तन्मध्ये मम लोकस्तु परितोवलयाकृतिरित्युक्त्वा अरण्याख्यसुधाम्भोधि-रित्याद्युक्तेरिति भावः ॥ **नोच्यत इति** ॥ हृत्पद्मस्थस्याद्यखण्डे तादृशलोकवत्त्वस्य पञ्चमखण्डे अभिहितत्वेन व्यवधानादिति भावः । एवं हृत्पद्मस्थस्य ब्रह्मत्वे हेत्वन्तरोक्त्यर्थं सौत्रं लिङ्गपद-मित्येवम्परतया अरश्चेति भाष्यं व्याख्यायाधुना ब्रह्मलोकशब्दस्य प्रसिद्ध्यनुसारेण सत्यलोक-परत्वशङ्कानिरासार्थं तदित्येवम्परतया व्याचष्टे ॥ **अथवेति** ॥ **अरश्चेतीति** ॥ अरश्चेत्यादिना । अत्र एतं ब्रह्मलोकमित्यत्र ।

## सूत्रभाष्यम्

### ॥ ॐ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॐ ॥ १६ ॥

**'एष सेतुर्विधृतिः'** (चां.उ.८-४-१) इति धृतेः, '(एष सर्वेश्वर) एष भूताधिपतिरेष भूतपाल' (बृ.उ.६-४-२१) इत्याद्यस्य **महिम्नोऽस्मिन्नुपलब्धेः** । **'एतस्मिन् (नु) खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च'** (बृ.उ.५-८-११) **'एतस्य वा अक्षरस्य प्रशासने गार्गि'** (बृ.उ.५-८-९) **'स हि सर्वाधिपतिः स हि सर्वपालः स ईशः स विष्णुः' 'पतिं विश्वस्याऽत्मेश्वरम्'** (म.ना.इ.११) इत्यादिश्रुतिभ्यस्तस्य ह्येष महिमा । **'सर्वेशो विष्णुरेवैको नान्योऽस्ति जगतः पतिः'** इति स्कान्दे ॥

## सत्तर्कदीपावली

धृतेरित्यादेरयमर्थः । द्यावापृथिव्याधारं प्रकृत्य 'स सेतुर्विधृतिरेषां लोकानाम्' इति श्रूयमाणत्वादप्यसौ विष्णुरेव न दहर आकाशः । तत्स्थितपुरुष एव हि जगद्धारणादिमहिमा श्रुत्यन्तरोपलब्धः । 'स एषोऽन्तर्हृदय आकाशस्तस्मिंश्छेते । एष भूताधिपतिरेष भूतपालः एष सेतुर्विधरणा एष लोकानामसम्भेदाय' इति विष्णोरेवायं महिमेत्येतच्छ्रुत्यन्तरैः साधयति **एतस्मिन्नित्यादिना** ॥

## तत्त्वप्रदीपिका

अस्मिन् विषयवाक्ये 'एष सेतुर्विधृतिः' इति जगद्धृतेरुक्तत्वाच्च दहरस्थो विष्णुरेव । 'स सेतुः' इति वक्तव्ये च्छन्दोगवाक्ये 'एष सेतुः' इति वदता भगवता समानरूपं श्रुत्यन्तरमपि विषयवाक्यमादीयत इत्यावेदितम् । सर्वत्र च सर्वेषां समानजातीयानां श्रुत्यन्तराणां सहोप-

(तत्त्वप्रदीपिका)

लक्षणार्थमेतदुपक्रमे च 'अस्मिन् ब्रह्मपुरे' इत्युदाहर्तव्येऽपि 'एतस्मिन् ब्रह्मपुरे' इत्युदाहृतम् । 'गायति त्रायति च' इति श्रुत्यन्तरमेव सदृशमधस्ताच्च सूचयाम्बभूवे । उपरिष्टाच्च क्वचित्क्वचिदेवम्भूतेषु वचनभेदेष्वयमेवाऽऽशयो वोद्धव्यः । 'एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानाम्' इत्यादेरस्य विष्णोर्महिम्नोऽस्मिन् हृदयाकाशस्थे बृहदारण्यकवाक्यादुपलब्धेश्च दहरे विष्णुरेव । तत्र 'य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते' 'सर्वस्य वशी' इति हृदयाकाशस्थं प्रस्तुत्य हि महिमाऽयमभिहितः । 'एतस्मिन्नु खल्वक्षरे गार्गि' इत्यादिश्रुतिभ्यस्तस्यास्य विष्णोरेव ह्येष धृत्यादिको महिमा ॥

## तत्त्वप्रकाशिका

हेत्वन्तरेण विष्णोः हृत्पद्मस्थत्वं प्रतिपादयत् सूत्रमुपन्यस्य व्याचष्टे ॥ **धृतेश्चेति** ॥ 'अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय' इति हृत्पद्मस्थस्य सर्वाधारत्वश्रवणाच्च विष्णुरेवासावित्यर्थः । अत्र स सेतुरिति वक्तव्ये एष सेतुरित्युक्तिः शाखान्तराणामप्यत्रोपसङ्ग्रहार्थम् । एवमन्यत्रापीति सम्प्रदायविदः । विधृतिः सेतुरिति धारणसमर्थ आश्रयः । न च वाच्यमयं न हृत्पद्मस्थ इति । 'य आत्मा' इति प्रागुक्तात्मपरामर्शात् 'सर्वे पाप्मानोऽतो निवर्तन्ते' इति तल्लक्षणत्वोक्तेश्च । समाख्ययाऽप्येतमर्थं साधयति ॥ **एष इति** ॥ वाजसनेयके 'य एषोऽन्तर्हृदय आकाशस्तस्मिंञ्शेते सर्वस्य वशी' इत्याद्युक्त्वा 'एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरणः' 'एषां लोकानामसम्भेदाय' इत्यादिना हृदये विष्णोरुक्तत्वेन तत्समाख्यानादत्राप्युक्तो विष्णुरेव । न च वाच्यं समाख्याश्रुत्युक्तोऽपि कुतो विष्णुरिति । अस्मिन्सर्वेश्वरत्वादिविष्णुमहिम्नः श्रवणादेवेति भावः । यदुक्तं हृत्पद्मस्थस्य सर्वाधारत्वश्रवणात् विष्णुरसाविति तत्र सर्वाधारत्वं कुतो विष्णुत्वनिश्चायकमित्यत आह ॥ **एतस्मिन्निति** ॥ एतस्येति प्रतीकग्रहणेन वहुवाक्यानि सूचयति । ननु समाख्याश्रुत्युक्तः सर्वेश्वरत्वादिमहिमा कुतो विष्णोरित्यत आह ॥ **स हीति** ॥ विश्वमचेतनम् । विष्णोरिव अन्यस्याप्ययं महिमा किं न स्यादित्यत आह ॥ **सर्वेश इति** ॥

## गुर्वर्थदीपिका

'य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय' इति वाक्यस्य 'अथ यदिदमस्मिन्ब्रह्मपुर' इति प्रकरणे एकवाक्यताया अभावात्कथमेकविषयत्वमित्याशङ्क्य परिहरति ॥ **न च वाच्यमिति** ॥ प्रागुक्तेत्यस्य प्रथमसूत्रोक्तेत्यर्थः । श्रौतमर्यादया 'य आत्मा स सेतुः' इति

(गुर्वर्थदीपिका)

वाक्यस्यैव पूर्ववाक्यत्वेन 'य आत्मा अपहतपाप्मा' इत्यस्य प्रागुक्तत्वायोगात् 'य आत्मा अपहतपाप्मा' इत्युक्तात्मन एवात्रापि 'य आत्मा स सेतुः' इति परामर्शाद्भिन्नयोरप्युभयोर्वाक्ययोरेकविषयत्वमिति भावः । 'एतस्य वा अक्षरस्य प्रशासन' इति भाष्ये सर्वाधारत्वप्रतिपादकभागस्यासङ्गृहीतत्वादादिपदस्याप्यभावादौत्तरतदर्थकसमग्रवाक्यसूचकं तदित्याह– **एतस्येति प्रतीकग्रहणेनेति** ॥ 'पतिं विश्वस्यात्मेश्वरम्' इत्यत्र आत्मनां चेतनानामीश्वरमिति सिद्धत्वाद्विश्वस्य पतिमित्यत्र विश्वपदं जडमात्रग्राहीत्याह– **विश्वमचेतनमिति** ॥

## भावबोधः

पौनरुक्त्यपरिहारार्थमाह– **धारणसमर्थ आश्रय इति** ॥ साधारणसामर्थ्यस्याश्रयत्वासम्भवाद् वैपरीत्येन पदान्वयः कृत इत्यवधेयम् ॥ **तल्लक्षणोक्तेश्चेति** ॥ हृत्पद्मस्थलक्षणस्यापहतपाप्मत्वस्य सर्वे पाप्मानोऽतो निवर्तन्त इत्यनेन ससेतुरित्युक्त्य(क्तेः)भावे सेतुधर्मत्वोक्तेरित्यर्थः । स सेतुरिति सेतुतयोक्तेः परमात्मन्युक्तेरित्यर्थः । लक्षणत्वोक्तेरिति पाठे तु 'एष आत्मा अपहत पाप्मा' इत्यत्र हृत्पद्मस्थलक्षणत्वेनोक्तस्यापहतपाप्मत्वस्य सर्वे पाप्मानोऽतो निवर्तन्त इत्यनेन स सेतुरित्युक्तसेतुधर्मत्वोक्तेरित्यर्थः । अनेनास्य हृत्पद्मस्थस्य महिम्नोऽपहतपाप्मत्वस्यास्मिन् सेतुतयोक्ते उपलब्धेरिति सूत्रांशः प्रकारान्तरेणात्रापि योजितो भवति । 'एष भूताधिपतिः इति भाष्योदाहृतवाक्ये हृत्पद्मस्थत्वाप्रतिपादनात् कथं समाख्यापीत्युक्तमित्यतः समाख्यारूपतत्पूर्ववाक्यमुदाहृत्य तद्योजयति वाजसनेयके य एषोऽन्तर्हृदय इत्यादिना । तर्हि भाष्ये तदुदाहरणं किमर्थमित्यत एतत् श्रुत्युक्तस्य विष्णुत्वे निश्चिते स्यादस्याः समाख्यात्वं तदेव कुत इत्याशङ्कानिवृत्तये महिम्न इत्यादि सूत्रोक्तहेतुविवरणार्थं तदिति भावेनाह– **न वाच्यं समाख्याश्रुत्युक्तोऽपीति** ॥ एष भूतपाल इत्याद्यस्येति भाष्ये इत्यादीत्यविभक्तिको निर्देशः । विभक्तिश्चेदित्यादेर्महिम्न इति वा इत्यादिवाक्येनेति वा । इत्याद्युपलब्धेरिति क्रियाविशेषणं वा । इत्यादिश्रुतिभ्यः 'तस्य ह्येष महिमा' इत्येतत् 'एतस्य वा अक्षरस्य प्रशासने' इत्यतः परमप्यनुकृत्य योज्यमित्यभिप्रेत्य 'एतस्मिन् खल्वक्षरे' इत्यादिवाक्यद्वयम् अवतारयति– **यदुक्तं हृत्पद्मस्थस्येति** ॥ 'आकाश ओतश्च प्रोतश्च' इत्यन्तोदाहरणवत् 'एतस्य वा अक्षरस्य प्रशासन' इत्येतच्छेषोऽति कुतो नोदाहृत इत्यत आह– **एतस्येति** ॥ **प्रतीकग्रहणेनेति** ॥ प्रतीकग्रहणेन 'एतस्य वा अक्षरस्य प्रशासने गार्गि

(भावबोधः)
सूर्याचन्द्रमसौ एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ' इत्यादि बहुवाक्यानि सूचयतीत्यर्थः । शेषोदाहरणे उक्तशेषयुक्तमेव वाक्यं गृहीतमिति विज्ञायेतेति भावः । **विश्वमचेतनमिति** ॥ आत्मेश्वरमिति चेतनेश्वरत्वस्य पृथगुक्तत्वादिति भावः ।

## भावदीपः

**हेत्वन्तरेणेति** ॥ सूत्रे चशब्दादिति भावः । भाष्ये वाजसनेयवाक्यप्रतीकपूर्वम् अत्रत्य-वाक्यस्योक्तेर्भावमग्रे विवृण्वानः स्वयमेतत्प्रकरणस्थछान्दोग्यवाक्यमुदाहृत्य धृतेरित्यन्तभाष्यं व्याकुर्वन् धृतेश्चेति सूत्रांशार्थमाह ॥ **अथ य इति** ॥ भाष्यभावमाह ॥ **अत्रेति** ॥ **उपसङ्ग्रहार्थमिति** ॥ विवरिष्यते चैतदग्रे ॥ **एवमन्यत्रापीति** ॥ अत एव प्राण इत्यत्र ह्रीश्च त इति वक्तव्ये श्रीश्च त इत्युक्तिः । तथा पत्यादिशब्देभ्यः इत्यत्र सर्वस्य वशी सर्वस्येशान इत्येव वक्तव्ये सर्वस्याधिपतिरित्युक्तिः । अत्रैव अस्मिन् ब्रह्मपुर इति वाच्येऽप्येतस्मिन्निति वाक्योक्तिः । समानजातीयानां श्रुत्यन्तराणां सङ्ग्रहोपलक्षणार्थमेतदित्यादितत्त्वप्रदीपोक्तेः सम्प्रदायविद इत्युक्तम् । अपौनरुक्त्यायाऽऽह ॥ **धारणसमर्थ इति** ॥ सूत्रखण्डमवतार्य व्याचष्टे ॥ **न चेति** ॥ अस्य हृत्पद्मस्थस्य अस्मिन्स सेतुरिति वाक्येऽपहतपाप्मत्वरूपमहिम्न उपलब्धे-रित्यर्थमुपेत्याऽऽह ॥ **य आत्मेति** ॥ भाष्ये एष भूतेत्यादिवाजसनेयवाक्यशेषोक्तिः सर्वे पाप्मान इति छान्दोग्यवाक्यशेषस्याप्युपलक्षणमिति भावः । इदानीं सूत्रस्यार्थान्तरोक्तिपरतया भाष्य-मवतार्य धृतेरित्यन्तं तात्पर्यतो व्याचष्टे ॥ **समाख्ययेति** ॥ **वाजसनेयक इति** ॥ षष्ठेऽध्याये । भाष्ये एष सेतुरिति प्रतीकमात्रोक्तेः स्वयं समग्रं पठति ॥ **य एष इति** ॥ हृत्पद्मस्थत्वस्य तत्स्थाकाशस्थत्वेनैवेहाभिमतत्वाद्हृदये विष्णोरुक्तत्वेनेत्युक्तम् । एष भूतेत्यादिभाष्यशेषमवतार्य व्याचष्टे ॥ **न च वाच्यमिति** ॥ भाष्ये इत्यादीति क्रियाविशेषणम् । 'सान्तमहत' इत्यादा-विवाविभक्तिकनिर्देशो वेति भावः ॥ **यदुक्तमिति** ॥ स सेतुर्विधृतिरिति वाक्यग्राहिणा धृतेश्चेति सूत्रखण्डेनेत्यर्थः ॥ **एतस्मिन्नितीति** ॥ भाष्ये आकाश इति सर्वाधारतयोक्त-नित्प्रकृतिरित्यर्थः ॥ **प्रतीकेति** ॥ 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ' इत्यादीनि बहुवाक्यानि सूचयतीत्यर्थः । आत्मेश्वरमित्यस्यावैयर्थ्यायाऽऽह ॥ **विश्वमचेतनमिति** ॥ आत्मा चेतन इति भावः । नारायणं महाज्ञेयमित्यग्रे नारायणपदसामानाधिकरण्याद्वैष्णवत्वमस्य सिद्धमिति भावः ॥

## अभिनवचन्द्रिका

अत्र गुणसूत्रम् – 'धृतेश्च महिम्नोऽस्याऽस्मिन्नुपलब्धेः' इति । 'य आत्मा स सेतुर्विधृतिः' इति सर्वाधारत्वश्रवणात्, वाजसनेयसमाख्यानाच्च विष्णुरेवासौ । समाख्या-श्रुत्युक्तेऽपि कुतो विष्णुरित्यत उक्तम् – **अस्येति** ॥ अस्य विष्णोर्महिम्नः समाख्याश्रुत्युक्ते हृत्पद्मस्थे उपलब्धेः स विष्णुरिति सूत्रार्थः ॥ **सर्वाधारत्वश्रवणाच्चेति** ॥ ननु हृत्पद्मस्थे सर्वाधारत्वस्यान्यगतत्ववारणाय हृत्पद्मस्थस्य विष्णुत्वं समर्थ्यते । एवं च हृत्पद्मस्थस्य विष्णुत्वसिद्धौ सर्वाधारत्वस्य अन्यगतत्वनिरासः । तस्याऽन्यगतत्वनिरासे च तेन हृत्पद्मस्थस्य विष्णुत्वसिद्धिरित्यन्योन्याश्रय इति चेत्, उच्यते नाऽत्र निरुपचरितसर्वाधारत्वाक्षेपः पूर्वपक्षफलं, किं तु चन्द्रादित्याद्याधारत्वरूपसंकुचितसर्वाधारत्वम् । तदुक्तम् – 'विष्णोश्चन्द्रादित्या-द्याधारत्वमुक्तम्' इति । हेतूकृतं सर्वाधारत्वं चासङ्कुचितम् । एवं च – यस्यानतिप्रसङ्गायेद-मधिकरणम्, नासौ हेतुत्वेन विवक्षितः । यश्च हेतुत्वेन विवक्षितः न तस्यानतिप्रसङ्गायेदमाधि-करणमिति नाऽन्योन्याश्रय इति । भाष्ये – 'एष सेतुः' इति शाखान्तरस्थवाक्योदाहरण-प्रयोजनमाह – **अत्रेति** ॥ **यदुक्तमिति** ॥ यदुक्तं सर्वाधारत्वश्रवणात् विष्णुरेवासाविति तत्रैषा शङ्का प्राप्नोति । सर्वाधारत्वं विष्णुत्वनिश्चायकमिति कुतोऽङ्गीकर्तव्यम् । येन तेन विष्णुत्व-निश्चयः स्यादिति तत्परिहाराय सर्वाधारत्वस्य विष्णुलिङ्गत्वे श्रुतिमाहाऽऽचार्यो भाष्यकार इत्यर्थः ॥

## वाक्यार्थमुक्तावली

**एष सेतुरित्युक्तिरिति** ॥ वाजसनेयवाक्योदाहरणमित्यर्थः । अत एष वै प्राण, इत्यत्र ह्रीश्च त इति वाच्ये श्रीश्च त इति, पत्यादिशब्देभ्य, इत्यत्र सर्वस्य वशी, सर्वस्येशान इति वक्तव्ये सर्वस्याधिपतिरित्युक्तिः अत्र चास्मिन् ब्रह्मपुर इति वक्तव्ये एतस्मिन्नित्युक्तिरिति सम्प्रदायविदः तत्वप्रदीपिकाकृत इत्यर्थः । धारणसमर्थस्यैवाश्रयत्वसम्भवाद्वैपरीत्येन पदान्वय-मभिधाय समुदायार्थमाह– **विधृतिः सेतुरिति** ॥ **धारणसमर्थाश्रय इति** ॥ अन्यथा पौनरुक्त्या-दिति भावः । असम्भेदायाविदारणाय ॥ **तल्लक्षणोक्तिरिति** ॥ तल्लक्षणस्य ससेतुरिति सेतुतयोक्तपरमात्मन्युक्तेरिति अर्थः । तल्लक्षणत्वोक्तेरिति पाठे हृत्पद्मस्थलक्षणस्य अपहत-पाप्मत्वस्य सर्वे पाप्मानो निवर्तन्त इति सेतुलक्षणत्वोक्तेरित्यर्थः । अनेन य आत्मा ससेतुरिति

(वाक्यार्थमुक्तावली)

सर्वाधारकत्वश्रवणाच्च दहरे ब्रह्मैव । तल्लिङ्गं हृत्पद्मस्थविषयमिति कुतः अस्य हृत्पद्मस्थस्य महिम्नो अपहतपाप्मत्वादेरस्मिन्वाक्ये उपलब्धेरिति सूत्रार्थ उक्तो भवति । समाख्ययाप्येतमर्थं साधयत्सूत्रं व्याचष्टे इत्यर्थः । पूर्वयोजनायां महिम्न इत्यादिभाष्येण विवृतम् । अस्मिन्व्याख्याने धृतेरिति पूर्वांशः वाजसनेयवाक्यं गृह्णन्नथा एष सेतुरिति धृतेरिति भाष्येणैव विवृतः । अतस्तत्समाख्याद्योतकमिति भावेन धृतिशब्दघटितं समाख्यावाक्यं पठति, वाजसनेय इत्यादिना । महिम्न इत्यंशं व्याख्यानपरं भाष्यं सङ्गमयति– **न चेत्यादिना** ॥ भाष्ये इत्यादीत्यविभक्तिको निर्देशः इत्यादिनेत्यर्थः । क्रियाविशेषणं वा । ततश्च सूत्रे धृतिपदेन धृतिपदयुक्तं वाजसनेयवाक्यं गृह्यते । धृतेरेष सेतुरिति विधृतिशब्दघटिताद्य एषोऽन्तर्हृदय इत्यादिना वाजसनेयसमाख्यानाच्च दहरे ब्रह्मैव । तत्रापि ब्रह्मेति कुतः अस्य विष्णोर्महिम्नः सर्वाधिपतित्वादेरस्मिन् समाख्यावाक्ये उपलब्धेरिति सूत्रार्थ उक्तो भवति ॥ भगवन्महिमोपलब्धिमेव व्यक्तीकर्तुं धृतिपदेन तद्ग्रहणम् । कुतो विष्णुत्वनिश्चायकमित्यत **आहेति** ॥ इत्यतो धृतेरित्यंशे प्रकारान्तरेण व्याचष्टे इत्यर्थः । तेन एतस्मिन्नक्षर इत्यादिश्रुतौ विष्णोरेव धारकत्वोक्तेरिति व्याख्यातं भवति ॥ **बहूनि वाक्यानीति** ॥ एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ एतस्य वाक्षरस्य प्रशासने गार्गि द्यावापृथिव्यावित्यादीनि बहुवाक्यानीत्यर्थः । कुतो विष्णोरित्यत आहेति । कुतः प्रमाणाद्विष्णोरित्यतः महिम्ना इत्याद्यंशस्य अर्थान्तरमाहेत्यर्थः । ततश्च 'महिम्नः अस्मिन् स हि' इत्यादिश्रुतिसमुदाये अस्य विष्णोरुपलब्धेरित्यर्थ उक्तो भवति । विश्वमचेतनमिति आत्मेश्वरमिति चेतनेश्वरत्वस्य पृथगुक्तेरिति भावः ।

## तत्त्वसुबोधिनी

पौनरुक्त्यपरिहारार्थमाह– **धारणसमर्थ आश्रय इति** ॥ धारणसामर्थ्यस्याश्रयत्वसम्भवात् । वैपरीत्येन पदान्वयः कृतः इत्यवधेयम् । ननु हृदय आत्मेति वाक्ये आत्मशब्दोक्तः न हृत्पद्मस्थ इत्याशङ्क्य निषेधति ॥ **न च वाच्यमिति** ॥ **य आत्मेतीति** ॥ यः पूर्वोक्तः आत्मा स सेतुरित्यर्थः । किं च एष आत्माऽपहतपाप्मा इत्यत्र हृत्पद्मस्थलक्षणत्वेनोक्तस्य अपहतपाप्मत्वस्य सर्वे पाप्मानोऽतो निवर्तन्त इत्यनेन आत्मा सेतुः विधृतिरिति उक्तसर्वाधारधर्मत्वोक्तेरयं हृत्पद्मस्थ इत्याह ॥ **सर्वे पाप्मानोऽतो निवर्तन्त इति** तल्लक्षणत्वोक्तेरिति पाठे तन् हृत्पद्मलक्षणस्यापहतपाप्मत्वस्य ससेतुरिति सेतुतया उक्ते परमेत्युक्तेरित्यर्थः । अनेनास्य

(तत्त्वसुबोधिनी)
हृत्पद्मस्थस्य महिम्नोऽपहतपाप्मत्वस्यास्मिन् सेतुतयोक्ते उपलब्धेरिति सूत्रांशः प्रकारान्तरेण योजितः । एष भूताधिपतिरिति भाष्योदाहृतवाक्ये हृत्पद्मस्थत्वाप्रतिपादनात् कथं समाख्ययापीत्युक्तमित्यतः समाख्यारूपतत्पूर्ववाक्यमुदाहृत्य तद्योजयति । वाजसनेयक इत्यादिना । तर्हि भाष्ये तदुदाहरणं किमर्थम् इत्यत एतच्छुत्युक्तस्य विष्णुत्वे निश्चिते स्यात् अस्याः समाख्यात्वं तदेव कुत इत्याशङ्कानिवृत्तये 'महिम्न' इत्यादिसूत्रोक्तहेतुविवरणार्थं तदिति भावेन आह । **न च वाच्यमिति ॥ अस्मिन्निति** । वाजसनेयकोक्त इत्यर्थः । एष भूतपाल इत्याद्यस्येति भाष्ये इत्यादीत्यविभक्तिको निर्देशः । विभक्तिश्चेत्यादिर्महिम्न इति वा । इत्यादिना वाक्येनेति वा इत्याद्युपलब्धेरिति क्रियाविशेषणं वा । इत्यादिश्रुतिभ्यः तस्य हैष महिमेत्येतदेतस्य वा अक्षरस्य प्रशासन इत्यतः परमप्यनुकृष्य योज्यमित्यभिप्रेत्य एतस्मिन् खल्वक्षर इत्यादिवाक्यद्वयमवतारयति ॥ **यदुक्तं हृत्पद्मस्थस्येति** ॥ आकाश ओतश्च प्रोतश्चेत्यन्तोदाहरणवत् एतस्य वा अक्षरस्य प्रशासने इत्येतत् शेषोऽपि कुत उदाहृत इत्यत आह ॥ **एतस्येति** ॥ **प्रतीकग्रहणेनेति** ॥ प्रतीकग्रहणेन एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ, एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यावित्यादिबहुवाक्यानि सूचयतीत्यर्थः । शेषोदाहरणे तु उदाहृतशेषयुक्तमेव वाक्यं गृहीतमिति विज्ञायेतेति भावः ॥ **विश्वमचेतनमिति** ॥ आत्मेश्वरमिति चेतनेश्वरत्वस्य पृथगुक्तेः इति भावः ।

## वाक्यार्थविवरणम्

पौनरुक्त्यपरिहारायाह ॥ **धारणेति** ॥ धारणासमर्थश्चासावाश्रयश्चेत्यर्थः । योग्यताफलोपधानविवक्षया न पौनरुक्त्यमित्याशयः ।

## वाक्यार्थमञ्जरी

**धृतेर्धारणाद्यात्मा** ससेतुर्विधृतिरिति सर्वाधारत्वलिङ्गश्रवणाच्च हृत्पद्मस्थं ब्रह्मैव एतल्लिङ्गस्य हृत्पद्मस्थत्वं कुत इति चेन्न । **अस्य** हृत्पद्मस्थस्य **महिम्नो** अपहतपाप्मत्वादेः सर्वे पाप्मानोऽतिवर्तन्त इति **अस्मिन्** वाक्ये उपलब्धेरित्यर्थः ॥ **अथेति** ॥ य आत्मा हृत्पद्मस्थत्वेनोक्तः स एषां लोकानामसम्भेदायासंमेलनायाविदारणाय वा धारणसमर्थाश्रय इत्यर्थः ॥ **इति वक्तव्य इति** ॥ तथैव छन्दोगपाठादिति भावः ॥ **शाखान्तराणाम्** ॥

(वाक्यार्थमञ्जरी)

बृहदारण्यकादीनां समानजातीयानां श्रुत्यन्तराणां सङ्ग्रहोपलक्षणार्थमेतदिति तत्त्वप्रदीपोक्तेः सम्प्रदायविद इत्युक्तम् ॥ **धारणसमर्थ आश्रय इति** ॥ तेन न पुनरुक्तिरिति भावः । अयं सर्वाधारतयोक्तः । यश्चैषः प्रसिद्धः सर्वेश्वरः । सर्वेश्वरत्वं नामादि किं तु यश्चैष भूत एवाधिपतिर्नास्याधिपत्यमादिमदिति भूताधिपतिः यश्चैष भूत एव पालः पालकः ॥ **बहुवाक्यानीति** ॥ एतस्य वाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ एतस्य वाक्षरस्य प्रशासने गार्गि द्यावापृथिव्यावित्यादिबहुवाक्यानीत्यर्थः । आत्मेश्वरमिति चेतनस्य पृथगभिधानादाह ॥ **विश्वमचेतनमिति** ॥

## सूत्रभाष्यम्

### ॥ ॐ प्रसिद्धेश्च ॐ ॥ १७ ॥

'तत्रापि दहं(हरं)गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्' (म.ना.उ. १०-७) इति प्रसिद्धेश्च । तदन्तःस्थत्वापेक्षत्वान्न सुपिरश्रुतिविरोधः ॥

## सत्तर्कदीपावली

'तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्' इति दहराकाशस्थितस्योपास्यत्वेन श्रवणादत्र विष्णुरेव प्रतिपाद्यते । तथाहि श्रुत्यन्तरम् । 'दहरं विपाप्मं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम् । तत्रापि दहं गगनं विशोकः तस्मिन्यदन्तस्तदुपासितव्यम् । सहस्रशीर्षं देवम्' इति । तदाह प्रसिद्धेरित्यादिना । यदुक्तं तस्यान्ते सुपिरमिति तत्राह– **तदन्तरिति** । यथा भाण्डान्तस्थमपि गृहस्थमित्युच्यते एवं सुषिरस्थितविष्णावेव सर्वं प्रतिहितमिति ज्ञातव्यम् । सुषिरस्य सर्वाधारत्वविरोधादित्यर्थः ।

## तत्त्वप्रदीपिका

'दहं विपाप्मं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम् । तत्रापि दहं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यं' 'सहस्रशीर्षं देवम्' इति श्रुत्यन्तरे दहरगगनान्तर्गतस्य नारायणत्वप्रसिद्धेश्च । तस्मिन् गगने यद्विशोकस्तदुपासितव्यमित्यन्वयः । लिङ्गव्यत्यासस्तस्य पुरुषत्वज्ञापनार्थः । 'एष म आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकः' इत्यादावुदितगुणानामधिकरणैक्यबलेन सन्निधीयमानानामनुकर्षणार्थश्चकारः । यत्तूक्तं हृत्पद्मसूक्ष्मसुषिरे

(तत्त्वप्रदीपिका)
सर्वप्रतिष्ठा श्रुतेस्तस्यैव सर्वाधारत्वमिति, तत्रोच्यते तदन्तस्थापेक्षत्वादिति । सुषिरान्तस्थ-परमात्मापेक्षत्वात्सुषिरे सर्वप्रतिष्ठाश्रुतेर्न विरोधः । यथा मन्दिरस्थमञ्जूषान्तर्गतमपि मन्दिरस्थ-मिति सङ्गीर्यते, एवमिहापि ॥

## तत्त्वप्रकाशिका

युक्त्यन्तरेण विष्णोः हृत्पद्मस्थत्वसाधकं सूत्रं पठित्वा व्याचष्टे ॥ **प्रसिद्धेश्चेति** ॥ 'दहरं विपापं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम् । तत्रापि दहरम्' इति विष्णोः हृत्पद्मस्थत्वप्रसिद्धेश्च स एव हृत्पद्मस्थ इत्यर्थः । 'दहरोऽस्मिन्नन्तर आकाशः' इति हृत्पद्म-स्थाकाशो विष्णुरित्यभ्युपगमे सुषिरश्रुतिविरोध इत्येतदनेनैव निरस्तं भवति । पुण्डरीके दहरं गगनं तस्मिन् विशोकं ब्रह्मेत्यभ्युपगमात् । 'दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा सम्प्रतिष्ठितः' । 'य एषोऽन्तर्हृदय आकाशस्तस्मिन्नयं पुरुषः' इत्यादेश्च । अन्वयाभावस्तर्हि भवेदिति च न वाच्यम् । तथा हि । तस्मिन्यदन्तरित्यत्र हृत्पद्मस्थाकाशगतं ब्रह्मान्वेष्टव्यमित्युच्यते । ब्रह्म-पुरपदेनैव ब्रह्मस्थितिसिद्धेः । तथा च कीदृशं तदिति भावेन किं तदत्र विद्यत इति प्रश्ने तत्स्वरूपनिरूपणपरतया यावान्वाऽयमाकाश इत्यादिवाक्यान्वयः । यद् ब्रह्मान्वेष्टव्यतयोक्तं तस्यान्तर्हृदये यावानेष आकाशस्तावान् सर्वोऽपि विद्यते । तदाधारतया पृथिव्यादिकं च समाहितम् । नष्टेऽपि देहे न नश्यति । अपहतपाप्मत्वादिगुणं चेति । अथवा हृत्पद्म-गताकाशस्थमन्वेष्टव्यमिति सामान्येनोक्ते किं तदत्र विद्यत इति प्रश्ने यावान् बहिः परमात्माऽऽकाशाख्यस्तिष्ठति तावान् हृदयपद्माकाशे विद्यते । स च पृथिव्याद्याश्रयत्वात् शरीरनाशेनाऽप्यनाश्यत्वाद् अपहतपाप्मत्वादेश्च अन्वेष्टव्य इत्यन्वयोपपत्तेः । न च ब्रह्मपुरपद-प्रयोगादात्मा न विष्णुः । ब्रह्मैव पूर्णत्वात् पुरमित्युपपत्तेः । एतच्छब्देन शरीरस्य प्रकृतत्वान्नेति चेन्न । शरीरनाशेनास्याविनाशोक्तेः । न चाऽऽकाशपक्षेऽन्वयोऽस्ति । दहराकाशस्थ-मुपास्यमित्युक्ते किं तदत्र विद्यत इति प्रश्ने यावान्वेत्यस्यान्वयादर्शनात् । न हि दहराकाशस्थो व्याप्ताकाशोऽन्वेष्टव्य इत्युपपद्यते । तदभावादयोगाच्च । नापि दहराकाशमेव विशिष्योभे अस्मिन्नित्यादिपरिहार इति युक्तम् । दहरस्य व्याप्तत्वायोगान्मुख्यतः पृथिव्यादीनामनुपास्य-त्वाच्च । नन्वेवं हृत्पद्मगताकाशस्थो विष्णुरित्यभ्युपेत्य तस्य सर्वाधारत्वाङ्गीकारेऽपि सुषिरश्रुतिविरोधः स्यात् । तत्र साक्षात्सुषिरस्य सर्वाधारत्वोक्तेरित्यत आह ॥ **तदिति** ॥ न चैवमङ्गीकारेऽपि सुषिरश्रुतिविरोधः । मन्दिरे मणिमालेत्यत्र मन्दिरपदेन तदन्तःस्थ-मञ्जूषाविवक्षावत् सुषिरश्रुतेरपि तदन्तःस्थभगवदपेक्षया प्रवृत्तत्वादित्यर्थः ॥

## गुर्वर्थदीपिका

तत्स्वरूपनिरूपणपरतयेत्यत्र स्वरूपपदेन महिमोच्यते । तदाधारतया पृथिव्यादिकं च समाहितमित्यस्य तदाधारतया व्याप्तगगनाधारतया अव्याप्तपृथिव्यादिकं च समाहितं सुतरामाधीयत इति समाधानवत्कृतं शरीरनाशेऽप्यनाश्यत्वात् । यद्यपि 'नास्य जरयैतज्जीर्यति न वधेनास्य हन्यत' इति दहरप्रकरणस्थश्रुतिवाक्ये शरीरजरया जराभावः तन्नाशान्नाशाभावश्चेति द्वावपि ब्रह्मधर्मौ गृहीतौ । तथाऽपि नाशस्यैव प्रबलदोषत्वान्नष्टेऽपि देहे न नश्यतीति शरीरनाशेऽप्यनाश्यत्वादिति च टीकायां स्थानद्वयेऽपि नाशाभाव एव सङ्गृहीतः । 'एतत्सत्यं ब्रह्मपुरमस्मिन्कामाः समाहिताः एष आत्मा अपहतपाप्म' इति वाक्ये आत्मन्येव ब्रह्मपुरपदप्रयोगादयमात्मा ब्रह्मपदवाच्यस्य विष्णोः पुरस्थानीय एव न विष्णुरिति शङ्कते ॥ **न चेति** ॥ एतच्छब्देन शरीरस्य प्रकृतत्वादित्यस्य 'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म' इति पूर्ववाक्ये तच्छब्देन ब्रह्मपुरशब्देन शरीरस्य प्रकृतत्वादित्यर्थः ।

## भावबोधः

भाष्योदाहृते तत्रापीति श्रुत्यंशे हृत्पद्मस्थत्वं न प्रतीयत इत्यतस्तत्पूर्वांशोदाहरणपूर्वकं तद्व्याचष्टे– **दहरं विपापमिति ॥ विष्णुरित्यभ्युपगमे सुषिरश्रुतिविरोध इति ॥**

ब्रह्मणो हृत्पद्मस्थत्वे सुषिरस्य तस्यान्ते सुषिरमिति हृत्पद्मस्थत्वश्रुतिविरोध इति निरस्तम् । सुषिरस्य दहरेऽस्मिन्नन्तर आकाश इति वाक्योक्तहृत्पद्मस्थत्वमुपेत्यैव ब्रह्मणो दहरं विपाप्ममित्यादि श्रुतिबलात् तस्मिन् यदन्तरिति वाक्योक्तहृत्पद्मस्थताया एव स्वीकारादित्यर्थः । विष्णोः हृत्पद्मगताकाशगतत्वे स्पष्टं श्रुतिद्वयं स्वयमुदाहरति– **दिव्ये ब्रह्मपुर इति** । भाष्योदाहृतश्रुत्यपेक्षया स्वोदाहृतश्रुतिद्वयस्यात्मपुरुषपदयुक्तत्वेन स्पष्टत्वमिति भावः ॥ **ब्रह्मस्थितिसिद्धेरिति** ॥ तथा च 'तस्मिन् यदन्तस्तदुपासितव्यम्' इत्यत्र यच्छब्दप्रथमान्ततच्छब्दयोः प्रकृतब्रह्मपरत्वे ब्रह्मैवान्वेष्टव्यतयोक्तं भवतीति भावः । विष्णुपक्षे तु 'योऽन्वेष्टव्यो भगवांस्तस्यान्तर्हृदये यावान् वा अयमाकाशस्तावानाकाशस्तस्मिन् द्यावापृथिवी अन्तरेव समाहिते स भगवानपहतपाप्मेत्यन्वयः' इति न्यायविवरणे विष्णुपक्षे त्वन्वय इत्यंशं तथाहीत्यादिना वाक्यान्वय इत्यन्तेन व्याख्याय, शिष्टमंशं व्याचष्टे– **यद् ब्रह्माऽन्वेष्टव्यतयोक्त-**

(भावबोधः)

**मित्यादिना ॥ तदाधारतयेति ॥** ब्रह्मनिष्ठाकाशाधारतयेत्यर्थः । अनेन न्यायविवरणगतं तस्मिन्नित्येतदाकाशपरमित्युक्तं भवति । य आत्मेत्यतः प्राक्तनं न वधेनास्य हन्यत इति व्याचष्टे– **नष्टेऽपि देहे न नश्यतीति ।** अनेन जीवब्रह्मपक्षयोः साम्यपरिहाराय जीवपक्षेऽन्वया-भावः सूचितो भवति । अपहतपाप्मत्वादीनां कथञ्चित्सम्भवेऽपि देहनाशस्यैव जीवनाश-व्यवहारविषयत्वेनास्य कथमप्यसम्भवादिति । अस्मिन् भूताकाशे ब्रह्माख्याकाशो वर्तते, स च यावान् वा बहिः परमात्मा व्याप्तोऽस्ति, तावानेव विद्यत इति च्छान्दोग्यभाष्योक्तमन्वय-प्रकारमाह– **अथवा हृत्पद्मेति ॥ सामान्येनोक्त इति ॥** अस्मिन् पक्षे यावान् वा इत्यादिना ब्रह्मैव वर्तत इत्युक्तत्वात् किं तदत्र विद्यत इति प्रश्नवाक्ये कीदृशमिति विवक्षाभावात् पूर्वं ब्रह्म ज्ञातव्यमिति न नियम इति भावः ॥ **हृदयपद्माकाशे विद्यत इति ॥** श्रुतावन्तर्हृदय इति सप्तम्यन्तं पदं हृद्गते हृद्ययनादिति च्छान्दोग्यभाष्यानुसारेण हृत्पद्मगताकाशपरमित्युक्तं भवति ।

'एषोऽन्तरहृदय आकाश' इत्येव परिहार इति च्छान्दोग्यभाष्यानुसारेण द्वितीयाकाश-पदमपि प्रथमान्तपदमात्मपरम् । तत्तु विजिज्ञास्यत्वे हेतुत्वेन सामर्थ्यकथनमिति तद्भाष्यानु-सारेणाऽऽह– **स चेति ॥ ब्रह्मपुरपदप्रयोगादिति ॥** य आत्मा अपहतपाप्मेति वाक्यसन्निधौ एतत्सत्यं ब्रह्मपुरमितीत्यर्थः ॥ **तच्छब्देन शरीरस्येति ॥** अथ यदिदमस्मिन् ब्रह्मपुर इत्यत्र ब्रह्मपुरशब्देनेत्यर्थः । तत्र ब्रह्मपुरशब्दस्य शरीरपरत्वं दहरपुण्डरीकाधिकरणत्वेन निश्चितमिति भावः । शरीरनाशेऽप्यात्मनाशानुक्तेरिति । अस्यैतत्सत्यं ब्रह्मपुरमित्युक्तस्येत्यर्थः । न चास्ये-त्युक्तं शरीरमेवैतत्सत्यमिति परामृश्य इति वाच्यं; शरीरे सत्यादिपदेन नित्यत्वाविधानायोगात् अनुपयोगाच्च । ब्रह्मणि तु न जीर्यते न हन्यत इत्यत्र हेतुत्वेन नित्यत्वादिविद्यमानस्य सप्रयोजनत्वसम्भवाच्च । एतदिति पूर्वं ब्रह्मणः प्रकृतत्वेनाप्येतच्छब्देन तस्यैव प्रत्यभिज्ञानाच्चेति भावः । आकाशपक्ष एवान्वयाभाव इति न्यायविवरणोक्तमुपपादयति– **न चाकाश-पक्षेऽन्वयोऽस्तीत्यादिना ॥ अयोगाच्चेति ॥** ईश्वरवदत्यचिन्त्यशक्त्यभावेन व्याप्ताकाशस्य दहराकाशेऽवस्थानायोगाच्चेत्यर्थः । न हि द्यावापृथिव्यादेरेव विजिज्ञास्यत्वमिति च्छान्दोग्य-भाष्योक्तं मनसि कृत्वाऽऽह– **मुख्यत इति ॥** पृथिव्याद्यभिमानिदेवतानां विष्णुशेषत्वेनो-पास्यत्वादिति भावः ।

## भावदीपः

भाष्योक्तश्रुतौ तत्रापीति तच्छब्दपरामर्शं दर्शयन्भाष्यं व्याचष्टे ॥ **दहरमिति** ॥ **विष्णोरिति** ॥ सहस्रशीर्षं देवमिति तस्यैव प्रकृतत्वादिति भावः । न सुषिरश्रुतिविरोध इति भाष्यं व्याचष्टे ॥ **दहर इति** ॥ **इत्यभ्युपगम इति** ॥ आकाशपदेन तल्लिङ्गादितिन्यायेन विष्णुमुपादाय तस्य हृत्पद्मस्थत्वाभ्युपगमे पूर्वोक्तदिशा सुषिरस्य सर्वाधारतया हृत्पद्मस्थत्व-श्रुतिविरोध इत्यर्थः ॥ **अनेनैवेति** ॥ तत्रापि दहरमिति श्रुतिग्राहिणा प्रसिद्धेश्चेति सूत्रेणै-वेत्यर्थः । न केवलं तस्य हृत्पद्मस्थत्वसामान्यस्य प्रसिद्धेश्चेति सूत्रार्थः । किन्तु हृत्पद्म-स्थाकाशस्थत्वप्रसिद्धेश्चेत्यप्यर्थ इति भावेन इति प्रसिद्धेश्चेत्यस्य श्रुतिषु दहराकाशस्थत्व-प्रसिद्धेश्चेत्यर्थकतया उत्तरभाष्येणान्वयमुपेत्य तदन्तःस्थेति तच्छब्दार्थमाह ॥ **तस्मिन्निति** ॥ श्रुतौ लिङ्गव्यत्ययं मत्वोक्तम् ॥ **विशोकमिति** ॥ भाष्ये हृत्पद्मस्थत्वोक्तेरिति शेषः । दहराकाशस्थत्वावेदकश्रुत्यन्तराणि भाष्योपलक्षितान्याह । दिव्य इति आथर्वणे । य एष इति तैत्तिरीये । आदिपदेन य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते यो वेद निहितं गुहायां परमे व्योमन्निति पूर्वोक्तश्रुत्यादिग्रहः । भाष्ये श्रुतिविरोध इत्युपलक्षणं मत्त्वा प्रागुक्तानन्वयदोषं निराह ॥ **अन्वयाभाव इति** ॥ योऽन्वेष्टव्यो भगवांस्तस्यान्तर्हृदये यावान्वा अयमाकाश-स्तावानेषोऽन्तर्हृदय आकाशस्तस्मिन् द्यावापृथिवी अन्तरेव समाहिते । स भगवानपहत-पाप्मेत्यन्वय इत्यन्यत्रोक्तं समाधिं व्यनक्ति ॥ **तस्मिन्नित्यादिना** ॥ अप्रकृतब्रह्मणः कथमुक्ति-रित्यत आह ॥ **ब्रह्मपुरेति** ॥ देहस्य ब्रह्म प्रति पुरत्वोक्त्या तथा पुण्डरीकं वेश्मेत्यत्रापि ब्रह्मपदान्वयावश्यम्भावे ब्रह्म प्रति पुण्डरीकस्य वेश्मत्वोक्त्या ब्रह्म वेश्मपदेन चेत्युपलक्षणम् । तथा च यद्ब्रह्मान्तस्तदन्वेष्टव्यमिति सिद्धेरित्यर्थः । तस्यान्तर्हृदय इति समानविभक्तिकत्वा-भावेऽपि समानविषयत्वमात्रेणापि प्रश्नोत्तरभावो युक्त इति भावः । उभे अस्मिन् द्यावापृथिवी इत्यादेरर्थः ॥ **तदाधारतयेति** ॥ ब्रह्महृदयस्थाकाशाभिमान्याधारतया पृथिव्याद्यभिमान्यादिक-मित्यर्थः । 'नास्य जरयैतज्जीर्यते । न वधेनास्य हन्यते । तदेतत्सत्यं ब्रह्मपुरमस्मिन्कामाः समाहिताः । एष आत्माऽपहतपाप्मा' इत्यादेरर्थमाह ॥ **नष्टेऽपीति** ॥ अस्मिन् भूताकाशे ब्रह्माख्याकाशो वर्तते । स च यावान् बहिः परमात्मा व्याप्तोऽस्ति तावानेव विद्यत इति छान्दोग्यभाष्योक्तं पक्षान्तरं व्यनक्ति ॥ **अथवेति** ॥ अस्मिन्पक्षे प्रश्नोत्तरयोस्तुल्यविभक्तिकत्वं चास्तीति भावः ।

(भावदीपः)

एतद्व्याख्यानोक्तिश्चाल्पश्रुतेरित्यधिकाशङ्कोत्थानाय । 'सङ्गम्यन्ते गुरोर्गिर' इति स्वप्रतिज्ञानुरोधाय चेति ज्ञेयम् । देहादेर्ब्रह्म प्रति पुरत्वाद्युक्तावपि स्पष्टं तत्र ब्रह्मस्थितेर-प्राप्तेरन्यपुरादावन्यस्यापि स्थितिसम्भवादित्यभिप्रेत्य सामान्येनोक्त इत्युक्तम् । तस्यैतदेव निरुक्तं हृदयमित्युत्तरवाक्योक्तरीत्या हृद्ययत इति व्युत्पत्त्या हृदयपदेन हृत्पुण्डरीकस्थदहरभूताकाशं गृह्यत इति भावेनाह ॥ **हृदयपद्माकाश इति** ॥ तर्हि किं तदत्रेति प्रश्नस्य यावानित्य-नेनोत्तरितत्वात् । उभे अस्मिन् द्यावापृथिवी इत्यादि व्यर्थमित्यतः तत्तु विजिज्ञासितव्यत्वे हेतुत्वेन सामर्थ्यकथनमेवेति छान्दोग्यभाष्यानुरोधेन वाक्यशेषस्यान्वयमाह ॥ **स चेति** ॥ **न चेति** ॥ तदेतत्सत्यं ब्रह्मपुरमिति हृत्पद्मस्थाकाशस्थे ब्रह्मपुरपदप्रयोगादित्यर्थः । ब्रह्माख्यं पुरं पूर्णत्वात् पुरमिति तद्भाष्योक्तमेवाह ॥ **ब्रह्मैवेति** ॥ एतच्छब्देन । यदिदमस्मिन् ब्रह्मपुर इति ब्रह्मपुरशब्देनेत्यर्थः ॥ **अस्याविनाशेति** ॥ तथा च नाशाभावरूपलिङ्गेन शरीरेऽनुपपन्नेन बाधकेन प्रकृतशरीरत्यागेन विष्णुग्रहणं युक्तम् । यथा अदृश्यत्वनये अक्षरात्सम्भवतीह विश्वमित्यत्राक्षरशब्देन ब्रह्मणः प्रकृतत्वेऽपि अक्षरात्परतः पर इत्यत्र परत्वावधित्वबाधकेन तत्राक्षरपदेन प्रकृतिग्रहणं तद्वदिति भावः । एतच्चोपलक्षणम् । बृहत्वात्पूर्णकामत्वाद्विष्णु-र्ब्रह्मपुराभिधः । तस्मिंस्तस्य पुरं देहस्तस्मिन् हृदयमास्थितमित्युक्तदिशा पूर्वमपि ब्रह्मपुरपदेन विष्णोरपि प्रकृतत्वात् द्वयोः प्रकृतत्वेऽपि बहूनां सह निर्देश इत्यानन्दमयनयटीकोक्तरीत्या सत्यं ब्रह्मपुरमित्यत्र विष्णुमात्रग्रहणं युक्तमित्यपि ज्ञेयम् । तर्हि उभयत्र वाक्यान्वयसामञ्जस्ये विष्णुरेवेति निर्बन्धे को हेतुरित्यत आकाशपक्ष एवान्वयाभाव इति न्यायविवरणोक्तमन्वयाभावं व्यनक्ति ॥ **न चेत्यादिना** ॥ तत्र किं यावानिति वाक्ये पूर्वोक्तहृत्पुण्डरीकस्थदहराकाशस्यैव हृदयेऽवस्थानमुच्यते ।

अथ आकाशपदं सप्तम्यन्तमुपेत्य हृदये हृत्स्थे आकाशे व्याप्ताकाशोऽस्तीत्युच्यते । किं वा हृदये आकाश इति दहरमनूद्य यावानिति बाह्याकाशतुल्यतया तदेव विशिष्यत इति विकल्पान् हृदि कृत्वा आद्यं निराह ॥ **यावान्वा इत्यस्येति** ॥ हृदये आकाश इत्येतावता पूर्तेरिति भावः । द्वितीयं निराह ॥ **न हीति** ॥ **तदभावादिति** ॥ ईश्वरवदचिन्त्यशक्त्यभावेन व्याप्ताकाशस्य दहराकाशस्थत्वाभावात् । छान्दोग्यभाष्योक्तदिशा तमेवैकं जानथेति ब्रह्मण एवान्वेष्टव्यत्वोक्त्या आकाशे अन्वेष्टव्यत्वायोगाच्चेत्यर्थः । तृतीयं निराह ॥ **नापीति** ॥

(भावदीपः)

**व्याप्तत्वेति** ॥ ईश्वरवदचिन्त्यशक्त्यभावादिति भावः । न हि 'द्यावापृथिव्यादेर्जिज्ञास्यत्वं तमेवैकं जानथ आत्मानम् अन्या वाच्यो विमुञ्चथ' इति हि श्रुतिरिति छान्दोग्यभाष्योक्तं दोषमाह ॥ **मुख्यत इति** ॥ **तदाधारतयेति** प्रागुक्तदिशा ब्रह्मणि प्रकारतया जिज्ञास्यत्वमस्तीत्यतो मुख्यत इत्युक्तम् । वक्ष्यति च अवस्तितेरिति काशकृत्स्न इति सूत्रेऽमुख्यतो जिज्ञास्यत्वमिति भावः । पूर्वोक्तशङ्कापरिहारकत्वेनापि तदित्यादिभाष्यमवतार्य व्याचष्टे ॥ **नन्वेवमिति** ॥ **अङ्गीकारेऽपीति** ॥ यथा साक्षात् हृत्पद्मस्थत्वे विरोधस्तथैवमङ्गीकारेऽपीत्यपेर्थः । भाष्येऽपेक्षितं पूरयति ॥ **न चैवमङ्गीकारेऽपीति** ॥

## अभिनवचन्द्रिका

**युक्त्यन्तरेणेति** ॥ समाख्यान्तरेणेत्यर्थः । दहराकाशो विष्णुरिति सिद्धान्तिना उच्यत इति मन्यमानस्य शङ्काप्यनेनैव निरस्तेत्याह ॥ **दहर इति** ॥ पुण्डरीके गगनं, गगने ब्रह्मेत्यत्र मूलभूतं श्रुतिद्वयं स्वयमुदाहरति ॥ **दिव्य इति** ॥ **अन्वयाभावस्तर्हीति** ॥ आकाशस्य विष्णुत्वानङ्गीकारे 'किं तदत्र विद्यत' इति प्रश्नस्य 'यावान्वा अयमाकाश' इति परिहारस्याऽनन्वयात् प्रश्नोत्तरभावो न स्यादिति भावः ।

ननु तस्मिन्यदन्तरिति वाक्यश्रवणानन्तरं किं विद्यत इति धर्मिप्रश्न एव कर्तव्यः, न तु 'कीदृशम्' इति धर्मप्रश्नः । धर्मिनिर्धारणस्य प्राथमिकत्वादित्यत आह ॥ **ब्रह्मपुरपदेनैवेति** ॥ उपोद्घातमुक्त्वा वाक्यान्वयमाह ॥ **तथा चेति** ॥ 'यावान्वा' इति वाक्येन कीदृशं ब्रह्मेति प्रश्नस्य कथं परिहारो भवतीत्यतो 'यावान्वा अयमाकाश' इत्यादेरर्थमाह ॥ **यद्ब्रह्मेति** ॥ 'तस्मिन् यदन्तः' इति वाक्ये यद्ब्रह्म अन्वेष्टव्यतयोक्तं तस्य ब्रह्मणः अन्तर्हृदये यावान्वा अयमाकाशः बाह्याकाशः तावान् सर्वोऽपि, एष आकाशो विद्यते तदाधारतया पृथिव्यादिकं च समाहितमित्यर्थः । अनेन 'यावान्' इति वाक्येन कीदृशं ब्रह्मेति प्रश्नस्याऽऽकाशपृथिव्याद्याश्रयो ब्रह्मेत्युत्तरमुक्तमिति बोध्यम् । कीदृशं ब्रह्मेति प्रश्नस्य 'न वधेनास्य हन्यत' इति वाक्येनाप्युत्तरमुक्तमिति भावेन तद्वाक्यं व्याचष्टे ॥ **नष्टेऽपि देहे न नश्यतीति** ॥ अनेन कीदृशं ब्रह्मेति प्रश्नस्य नाशरहितं ब्रह्मेत्युत्तरमुक्तमिति बोध्यम् । कीदृशं ब्रह्मेति प्रश्नस्य 'य आत्मा अपहतपाप्मा' इत्यादिवाक्येनाप्युत्तरमुक्तमिति भावेनाह – **अपहतेति** ॥ अनेन

(अभिनवचन्द्रिका)
अपहरपाप्मत्वादिगुणकं ब्रह्मेत्युत्तरमुक्तमिति बोध्यम् । यावान्वेति वाक्यस्य प्रश्नवाक्येन सह प्रकारान्तरेणान्वयमाह – **अथवेति** ।।

ननु हृत्पद्मस्थात्मा विष्णुरित्ययुक्तम् । तस्मिन् आत्मनि 'एतत्सत्यं ब्रह्मपुरम्' इति वाक्ये ब्रह्मपुरत्वेनोक्तस्य ब्रह्मत्वायोगादित्याशङ्क्य निषेधति ।। **न चेति** ।। **एतच्छब्देनेति** ।। एतच्छब्देन शरीरस्य प्रकृतत्वात्, ब्रह्मणः अप्रकृतत्वात् ब्रह्मैव पूर्णत्वात् पुरमिति व्याख्यानमनुपपन्नमिति चेदित्यर्थः ।। **शरीरनाश इति** ।। 'न वधेनास्य हन्यत' इत्यव्यवहितपूर्ववाक्येन शरीरनाशेऽप्यविनष्टतया ब्रह्मणः प्रकृतत्वात् 'एतत्सत्यं ब्रह्मपुरम्' इति वाक्येनापि ब्रह्मोक्तिसम्भवादित्यर्थः ।

## वाक्यार्थमुक्तावली

तत्रापि दहरमित्यनन्तरं सहस्रशीर्षं देवमिति वाक्यशेषादस्य नारायणश्रुतित्वाच्च विष्णोर्हृत्पद्मस्थत्वप्रसिद्धेरित्युक्तम् । तस्मिन् गगने, अन्तः यद्विशोकं ब्रह्म तदुपासितव्यमित्यर्थः । पूर्वपक्षग्रन्थे दहरोऽस्मिन्नन्तर आकाश इत्याकाशपरत्वमनङ्गीकृत्य विष्णोः किं साक्षाद्धृत्पद्मस्थत्वमुच्यते उताकाशपरत्वमङ्गीकृत्य उभेऽस्मिन्नित्युक्तसर्वाधारतया । नाद्यः स चाकाशो न विष्णुः तस्यान्ते सुषिरमिति हृत्पद्मसुषिरावस्थानोक्तेः । न द्वितीयः । किं तदत्र प्रश्ने ब्रह्म विद्यत इति परिहारं विना यावान्वा इत्यादेरनन्वयात् । यावान्वा इत्यादिना आकाशाख्यो विष्णुः परिहारे कथ्यते इति चेन्न । स चाकाशो न विष्णुः तस्यान्ते सुषिरं सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितमिति सुषिरस्य सर्वाश्रयत्वश्रुतिविरोधादिति भाष्यकृता पक्षद्वयं दूषितम् । तत्र द्वितीयपक्षे दोषोद्धारः **प्रसिद्धेश्चेति** ।। सूत्रव्याख्यानसमये तदन्तस्थापेक्षत्वादिति क्रियते तत्कृत इत्यतो आद्यपक्षदूषणस्यापहसितत्वात् द्वितीयप्रसक्तौ तदुद्धारावसर इति भावेनाद्यपक्षोक्तदोषस्य सूत्रेणोद्धारप्रकारं दर्शयति ।। **दहरोऽस्मिन्निति** ।। हृत्पद्मे दहराकाशस्तत्र ब्रह्मेति तदेव सर्वाधारतयोच्यत इत्यङ्गीकारेण हृत्पद्मस्थाकाशो विष्णुरित्यभ्युपगमे यः सुषिरश्रुतिविरोधः स नास्त्येवेति प्रसिद्धिसूत्रोपात्तश्रुत्या सूच्यत इति भावः ।

विष्णोर्हृत्पद्मगताकाशगतत्वे आत्मपुरुषमनोमयशब्दघटिततया स्पष्टश्रुतिद्वयं स्वयमुदाहरति, **दिव्य इति** ।। **अन्वयाभावस्तर्हीति** ।। यदि हृत्पद्मगताकाशगतं ब्रह्म सर्वाधारतया

(वाक्यार्थमुक्तावली)

विवक्षितं, तर्हि किं तदत्र विद्यत इत्यस्य ब्रह्म विद्यत इति परिहारं विना यावान्वा इत्यादेरभाव इत्यर्थः ॥ **ब्रह्मपुरपदेनैवेति** । ब्रह्मणः पुरम् आवासस्थानम् । ब्रह्मपुरपदेनैव ब्रह्मस्थितिं सिद्धवत्कृत्य तस्मिन्नन्तः यद्विद्यते तदन्वेष्टव्यम् इति यत्तच्छब्दाभ्यां प्रकृतब्रह्मानुवादेनान्वेष्टव्यत्वं विधीयते इत्यर्थः ॥ **तथाचेति** ॥ धर्मिसिद्धावित्यर्थः ॥ उभेऽस्मिन्नित्यादेरर्थः **तदाधारतयेति** ॥ ब्रह्मणो हृदयाधारतयेत्यर्थः । अत एव **पृथिव्यादिकं च** इति प्रागुक्ताकाशसमुच्चयार्थश्चशब्दः । तस्मिन्द्यावापृथिवीत्यादिन्यायविवरणेऽपि तस्मिन्निति हृदय इत्यर्थः । तदाधारतयेत्यस्य भावबोधे ब्रह्मनिष्ठाकाशाधारतयेति, चन्द्रिकायां हृदयस्थाकाशाभिमान्याधारतयेत्यर्थः उक्तः । आकाशपदेन अभिमान्यग्रहणे उभे इत्युक्तमुक्ताश्रयत्वं जडे न युक्तं इति तेषामाशयः । न वधेनास्य हन्यत इत्यस्यार्थो **नष्टेऽपि इति** ॥ य आत्मा अपहतपाप्मेत्यादेरर्थः **अपहतपाप्मेति** ॥ एवं न्यायविवरणानुसारेणान्वयमुक्त्वा अस्मिन् भूताकाशे ब्रह्माख्याकाशो वर्तते । न च यावान् बहिः परमात्मा व्याप्तोऽस्ति तावानेव विद्यते इति छान्दोग्यभाष्यानुसारेणाल्पश्रुतेरित्यत्र यावानित्युक्तरीत्या व्यापकस्याल्पस्य न स्थितिरयुक्तेति पूर्वपक्षोद्धलनाय प्रकारान्तरेणान्वयमाह– **अथवेति** ॥ **सामान्येनेति** ॥ धर्मविशेषसिद्धवक्तारं विनेत्यर्थः । अस्मिन् पक्षे ब्रह्मपुरपदं शरीरे रूढमिति बोध्यम् ।

यौगिकत्वे वा ब्रह्मशब्दस्यान्यार्थपरत्वे वा, विष्णुपरत्वेऽपि अन्यपुरे अन्यावस्थानसम्भवेन, ब्रह्मपुरान्तर्गतपद्माकाशगतमन्वेष्टव्यमित्युक्ते अन्यशङ्कायापि भावेन सामान्येनेत्युक्तम् । किं तदत्र विद्यत इति प्रश्न इति स्वरूपप्रश्न इत्यर्थः । अस्मिन्पक्षे यावान्वा इत्यादिना ब्रह्मैव वर्तत इत्युक्तत्वात् किं तदत्र विद्यत इति प्रश्नवाक्ये कीदृशमिति विवक्षाभावात्पूर्वं ब्रह्म ज्ञातव्यमिति न नियम इति भावः ॥ **हृदयपद्माकाशे विद्यत इति** ॥ श्रुतावन्तर्हृदयपदं सप्तम्यन्तम् । हृदयगताकाशो हृदयशब्देनोच्यते । हृद्ययनादिति छान्दोग्यभाष्यानुसारेण हृत्पद्मगताकाशपरमित्युक्तं भवति । न तु अन्तर्हृदय आकाश इति द्वितीयाकाशपदस्य सप्तम्यन्तत्वमिति भ्रमितव्यम् । एषोऽन्तर्हृदय आकाश इत्येव परिहार इति तद्भाष्योक्तेः । अल्पाकाशस्थाल्पपरिमाणत्वं वारयितुं यावान्वाऽयमाकाशस्तावानित्युक्तम् । किं तदिति प्रश्नस्य य एषोऽन्तर्हृदय आकाश इत्यनेनोत्तरितत्वात् । उभे इत्यादिव्यर्थमित्यत आह– **स चेति** ॥ **ब्रह्मपुरपदप्रयोगादिति** ॥ एतत्सत्यं ब्रह्मपुरमित्यत्रेत्यर्थः ॥ **तच्छब्देनेति** ॥ अथ यदिदमस्मिन् ब्रह्मपुरे, इत्यत्र स्थितेन

(वाक्यार्थमुक्तावली)
ब्रह्मपुरशब्देनेत्यर्थः ॥ **शरीरनाशेनेति** ॥ बाधकवशात्प्रकृतत्याग इति भावः । तर्हि, उभयत्र वाक्यान्वयसामञ्जस्ये विष्णुरेवेति निर्बन्धे को हेतुरित्यतः आकाशपक्षे अन्वयाभाव इति न्यायविवरणोक्तमन्वयाभावं व्यनक्ति ॥ **न चेति** ॥ कुतो नेत्यतः किमाकाशपदं सप्तम्यन्तमुपेत्य हृदये, हृत्स्थे, आकाशे व्याप्ताकाशोऽस्तीत्युच्यते । किं वा हृदयस्थाकाशमनूद्य यावानिति बाह्याकाशतुल्यतया तदेव विशिष्यत इति, विकल्पौ हृदि (निधाय) कृत्वा क्रमेण निराह– **न हीत्यादिना** ॥ **अयोगाच्चेति** ॥ ईश्वरवदचिन्त्यशक्त्यभावेन व्यापकाकाशस्य दहराकाशेऽव-स्थानायोगादित्यर्थः ॥ **मुख्यत इति** ॥ पृथिव्यादिदेवतानां परिवारतयोपास्यत्वेऽपि न प्राधान्येनेत्यर्थः ।

## तत्त्वसुबोधिनी

भाष्योदाहृते तत्रापीति श्रुत्यंशे हृत्पद्मस्थत्वं न प्रतीयत इत्यतः तत्पूर्वांशोदाहरणपूर्वकं तद्व्याचष्टे ॥ **दहरं विपापमिति** ॥ अस्यायमर्थः । यदेतत्पुण्डरीकमष्टदलं हृदयकमलमस्ति कीदृशं दहरमल्पं विपापं शुद्धं शरीरसम्बन्धिदोषैरपरामृष्टत्वात् । परस्यात्मनो वेश्मभूतं गृहभूतं सर्वदा तत्रोपलभ्यमानत्वात् । पुरस्य शरीरस्य मध्ये संस्थितं राज्ञ इव पुरमध्य इव प्रासादः तत्रापि हृत्पुण्डरीके दहरं सूक्ष्मं गगनमस्ति । यस्मिन्गगने यदन्तः विशोकं ब्रह्मास्ति तदुपासितव्यमिति । विष्णुरित्यभ्युपगमे सुषिरश्रुतिविरोध इति ब्रह्मणो हृत्पद्मस्थत्वे सुषिरस्य तस्यान्ते सुशिरमिति हृत्पद्मस्थत्वश्रुतिविरोध इति निरस्तम् । सुषिरस्य दहरोऽस्मिनन्तर आकाश इति वाक्ये हृत्पद्मस्थत्वमुपेयमेव । ब्रह्मणो इदं विपापमित्यादिश्रुत्यादिबलात् तस्मिन यदन्तरिति वाक्योक्तहृत्पद्मस्थसुषिरस्थताया एव स्वीकारादित्यर्थः । विष्णोः हृत्पद्मगताकाश-गतत्वे स्पष्टश्रुतिद्वयं स्वयमुदाहरति ॥ **दिव्ये ब्रह्मपुर इति** ॥ ब्रह्मपुरे दिव्ये शरीरे हृत्पद्ममस्ति तत्र विद्यमाने व्योम्नि एष आत्मा प्रतिष्ठितः । हृदये अन्तरेष आकाशः तस्मिन्नाकाशे अयं पुरुषः तिष्ठतीत्यर्थः । भाष्योदाहृतश्रुत्यपेक्षया स्वोदाहृतश्रुतिद्वयस्थात्मपुरुषपदयुक्तत्वेन स्पष्टत्व-मिति भावः । ननु तर्हि विष्णुपक्षेऽनन्वयः प्रसज्यत इत्यत आह ॥ **अन्वयाभाव इति** ॥ ननु तस्मिन्यदन्तः इत्यत्र ब्रह्मणोऽप्रकृतत्वात् कथं ब्रह्मान्वेष्टव्यमिति तदर्थः क्रियत इत्यत आह ॥ **ब्रह्मपुरपदेनैवेति** ॥ ब्रह्मपुरपदेनैव ब्रह्म प्रकृतमिति भावः । तथा च तस्मिन् यदन्तः तदुपासि-तव्यमित्यत्र यच्छब्द तच्छब्द प्रथमान्तयोः प्रकृतब्रह्मपरत्वे ब्रह्मैवान्वेष्टव्यतयोक्तं भवतीति भावः।

(तत्त्वसुबोधिनी)

कथमनेन तत्स्वरूपनिरूपणमित्यत आह ॥ **यद् ब्रह्मान्वेष्टव्यतयोक्तमिति** ॥ **तदाधारतयेति** ॥ तदाधारपृथिव्यादिकं चेति । आकाशाभिमान्याश्रितपृथिव्याद्यभिमान्यादिकमित्यर्थः । ब्रह्म-निष्ठाकाशाधारतयेत्यर्थः । ननु शरीरस्थस्य तन्नाशे नाशः प्रसज्येत इत्यत आह ॥ **नष्टेऽपीति** ॥ तस्य पापादिमत्वे पृथिव्याद्याधारत्वं कथं तस्मिन्घटते कथं च तस्यापाप्मत्वम् इत्यत आह ॥ **अपहतेति** ॥ अनेन जीवब्रह्मपक्षयोः साम्यपरिहाराय जीवपक्षेऽपि अन्यथाभावः सूचितः । अपहतपाप्मत्वादीनां कथञ्चित्सम्भवे देहनाशस्यैव जीवनाशव्यवहारविषयत्वेनास्य कथमप्य-सम्भवादिति । अनन्वयं प्रकारन्तरेण परिहरति ॥ **अथवेति** ॥ **सामान्येनोक्तेति** ॥ अस्मिन्पक्षे 'यावान्वा' इत्यादिना ब्रह्मैव वर्तते इत्युक्तत्वात् किं तदत्र विद्यते इति प्रश्नवाक्ये कीदृशमिति विवक्षाभावात् पूर्वं ब्रह्म ज्ञातव्यमिति न नियम इति भावः ॥ **हृदयपद्माकाशे विद्यत इति** ॥ श्रुतावन्तर्हृदय इति सप्तम्यन्तं पदम् । हृद्गताकाशो हृदयशब्देन उच्यते हृत्पद्मगताकाश-परमित्युक्तं भवति । ननु एतत्सत्यं ब्रह्मपुरमिति ब्रह्मपुरशब्देन प्रकृतस्य शरीरस्यैव एष आत्मेति परामर्शात् । आत्मा न विष्णुरित्याशङ्क्य निषेधति– **न च ब्रह्मपुरेति** ॥ उत्तरमाह ॥ **ब्रह्मैव पूर्णत्वादिति** ॥ छान्दोग्यभाष्योक्तरीत्या 'यदिदमस्मिन्ब्रह्मपुर इत्याद्यस्य ब्रह्मपुरशब्दस्य षष्ठीतत्पुरुषकर्मधारययोराश्रयणेन शरीरब्रह्मोभयपरत्वेऽपि ब्रह्मपुरे सर्वं समाहितमिति द्वितीयस्य एतत्सत्यं ब्रह्मपुरमिति तृतीयस्य च ब्रह्ममात्रपरत्वादिति भावः । नन्वेतज्जरावाप्नोतीति पूर्वत्रे-तच्छब्देन शरीरस्य प्रकृतत्वात् एतत्सत्यं ब्रह्मपुरमित्यत्रापि शरीरस्यैव प्राप्तिरित्याशयेन शङ्कते ॥ **एतच्छब्देनेति** ॥ **शरीरनाशेनास्याविनाशोक्तेरिति** ॥ नास्य जरयैतज्जीर्यते इति सन्निहितपूर्ववाक्ये शरीरमस्येति निर्दिश्य एतच्छब्देन ब्रह्मनिर्देशात् शरीरनाशेऽप्यविनाशित्व-लिङ्गाच्च न शरीरमिह ब्रह्मपुरशब्दार्थ इत्यर्थः ।

यद्वा **ब्रह्मपुरपदप्रयोगादिति** ॥ य आत्मा अपहतपाप्मेति वाक्यसन्निधेः एतत्सत्यं ब्रह्म-पुरमित्यर्थः । तच्छब्देन शरीरस्येति । अथ यदिदमस्मिन् ब्रह्मपुर इत्यत्र ब्रह्मपुरशब्देनेत्यर्थः । तत्र ब्रह्मपुरशब्दस्य शरीरपरत्वं दहरपुण्डरीकाधिकरणत्वेन निश्चितमिति भावः । शरीरनाशे नास्याविनाशोक्तेरिति । अस्यैतत्सत्यं ब्रह्मपुरमित्युक्तस्येत्यर्थः । आकाशपक्षेऽनन्वयमुपपादयति ॥ **न चेति** ॥ **तदभावादिति** ॥ व्याप्ताकाशस्य दहराकाशस्थत्वाभावात्यर्थः ॥ **अयोगाच्चेति** ॥ ईश्वरवदचिन्त्यशक्त्यभावेन व्याप्ताकाशस्य दहराकाशे अवस्थानायोगाच्चेत्यर्थः ॥ **दहराकाशमेव**

(तत्त्वसुबोधिनी)

**विशिष्येति** ॥ द्यावापृथिव्याद्याश्रयत्वयोग्यत्वाय बाह्याकाशतुल्यत्वादिना विशिष्येत्यर्थः । किञ्च तथात्वे दहराकाशस्थस्य पृथिव्यादेरन्वेष्टव्यत्वं वक्तव्यम् । न च तत्सम्भवतीत्याह ॥ **मुख्यत इति** ॥ पृथिव्याद्यभिमानिदेवानां विष्णुशेषत्वेनोपास्यत्वान्न मुख्यत उपास्यत्वमिति भावः ॥ **न चैवमङ्गीकारे सुषिरश्रुतिविरोध इति** ॥ सुषिरस्य सर्वाधारत्वप्रतिपादकश्रुतिविरोध इत्यर्थः ।

## वाक्यार्थविवरणम्

कीदृशं तदिति प्रश्नः कुतः, किं तदिति स्वरूपप्रश्न एव किं न स्यादित्यत आह ॥ **ब्रह्मपुरपदेनैवेति** ॥ सिद्धत्वात्स्वरूपस्य न स्वरूपमात्र प्रश्न इत्याशयः । स चासौ शब्दश्चेति तच्छब्दः ब्रह्मपुरशब्दः इत्यर्थः । नन्वस्त्यन्वयः अन्तर्हृदयाकाशे यावान्वा बहिःस्थिताकाशस्तावान् सर्वोऽप्यन्तर्विद्यमान इत्यन्वयसम्भवादित्यत आह ॥ **न हीति** ॥ **तदभावात्** ॥ दहराकाशे व्याप्ताकाशाभावात् । **अयोगाच्चेति** अनुपपन्नत्वाच्चेत्यर्थः । यथाकथञ्चिदुपपत्तौ त्वाह ॥ **मुख्यत इति** ॥ **न चेति** ॥ न हीत्यर्थः । **एवमङ्गीकारे** तदन्तस्थत्वापेक्षत्वाङ्गीकारे । मोक्षदातृत्वापातादिति । उपास्यस्यैव मोक्षदातृत्वादिति भावः ।

## वाक्यार्थमञ्जरी

दहरं विपापमित्यादि तैत्तिरीये विष्णोर्हृत्पद्मस्थत्वप्रसिद्धेश्च तत्समाख्यानात् दहरं ब्रह्मैवेत्यर्थः ॥ **दहरमिति** ॥ यत्पुण्डरीकम् अष्टदलकमलमस्ति कीदृशं दहरम् अल्पं विपापं शुद्धं शरीरदोषैरपरामृष्टत्वात्परमात्मनो **वेश्मभूतं** गृहभूतं सर्वदा तत्रोपलभ्यमानत्वात् । पुरमध्ये शरीरमध्ये संस्थितम् । राज्ञः पुरमध्ये प्रासाद इव तत्रापि हृत्पुण्डरीके दहरङ्गगनमस्ति । तस्मिन्गगने यदन्तर्विशोकः शोकरहितं ब्रह्मास्ति तदुपासितव्यमित्यर्थः । अनेन तैत्तिरीयवाक्योदाहरणेन दिव्ये द्योतमाने, व्योम्नि हृदयाकाशे, सम्प्रतिष्ठितः सम्यग्व्यवस्थितः अन्तर्देहस्य अनयोरात्मपुरुषपदोपेतत्वेन स्पष्टत्वात्स्वयमुदाहृतवान् । सामान्येनोक्तत्वात् कथं ब्रह्मेति निर्धारणमित्यत आह ॥ **ब्रह्मपुरपदेनेति** ॥ न वधेनास्य हन्यत इत्यस्यार्थो नष्टेऽपि देहेन नश्यतीति । एवं न्यायविवरणोक्तयोजनां प्रदर्श्य छान्दोग्यभाष्योक्तयोजनां प्रदर्शयति ॥ **अथवेति** ॥ प्रयोगात् एतत्सत्यं ब्रह्मपुरमित्यत्र ॥ **तच्छब्देनेति** ॥ स चासौ शब्दश्च तच्छब्दः । ब्रह्मपुरशब्देनेत्यर्थः ॥ **प्रकृतत्वात्** ॥ ब्रह्मपुरे दहरं पुण्डरीकमित्यत्र । अस्य एतत्सत्य-

(वाक्यार्थमञ्जरी)

मित्युक्तस्य । तत्र शरीरग्रहणेऽप्यत्र बाधकवशात्तत्परित्याग इति भावः । **तदभावात्** व्याप्ताकाशस्य दहरस्थत्वाभावात् ॥ **अयोगाच्चेति** ॥ ईश्वरवदचिन्त्यशक्त्यभावेन व्याप्ताकाशस्य दहराकाशे अवस्थानायोगाच्चेत्यर्थः । पृथिव्यभिमानिदेवानां विष्णुशेषत्वेनोपास्यत्वान्मुख्यत इत्युक्तम् ।

## सूत्रभाष्यम्

**॥ ॐ इतरपरामर्शात्स इति चेन्नासम्भवात् ॐ ॥ १८ ॥**

**'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते'** (छां.उ.८-१२-३) **'एप आत्मेति होवाच' इति** (छां.उ.४-१५-१) **जीवपरामर्शात्स इति चेन्न तस्य स्वतोऽपहत-पाप्मत्वाद्यसम्भवात् ॥**

## सत्तर्कदीपावली

इतरेत्यादेरयमर्थः । 'एप आत्मापहतपाप्मा' इत्यादिवाक्यवशाद्दहराकाशस्थितो विष्णुरेव द्यावापृथिव्याधार इत्युक्तं तन्न । दहराकाशस्थितस्य जीवस्यैव 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते एष आत्मेति होवाच' इति परामर्शादिति चेन्मैवम् । जीवस्यापहत-पाप्मत्वादिधर्मासम्भवेनात्रात्मशब्देन निर्देशासम्भवात् । 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभि-निष्पद्यते स तत्र पर्येति जक्षन् क्रीडन् रममाणः' इत्युपरितनवाक्येन मुक्तजीवप्रतीतेः । मुक्तस्यापहतपाप्मत्वादिगुणकात्मत्वसम्भव इति चेन्मैवम् । अमुख्यार्थत्वात् । न हि मुख्ये सत्यमुख्यं युज्यते । अतः परमेश्वरप्रसादलब्धापहतपाप्मत्वादिगुणममुख्यात्मानं जीवं परित्यज्य मुख्यः परमेश्वर एवापहतपाप्मत्वादिना पूर्वमुक्तः । न चैप य आत्मेति जीवपरामर्शविरोधः, यं परं ज्योतिश्शब्दाभिधेयमुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते । एप आत्मेति परमात्मन एव परामर्शोपपत्तेः ॥

## तत्त्वप्रकाशिका

भगवतो हृत्पद्मस्थत्वमाक्षिप्य समादधत्सूत्रमुपन्यस्याऽऽक्षेपांशं तावद्व्याचष्टे ॥ **इतरेति** ॥ 'परं ज्योतिरुपसम्पद्य स्वेन रूपेण अभिनिष्पद्यते' इत्युक्तस्य जीवस्य 'एप आत्मेति होवाच' इति हृत्पद्मस्थात्मतया परामर्शाज्जीव एव हृत्पद्मस्थ इत्यर्थः । परिहारांशं व्याचष्टे ॥ **नेति** ॥ न जीवो हृत्पद्मस्थः । हृत्पद्मस्थेऽपहतपाप्मत्वादिगुणश्रवणात्तेपां जीवेऽसम्भवात् । न च वाच्यं

(तत्त्वप्रकाशिका)

**मुक्तजीवे तत्सम्भवात् जीव एव भाविभावेनोच्यत इति । मुक्तस्याप्यस्वातन्त्र्येण तदसम्भवात् । अतः स्वातन्त्र्येणापहतपाप्मत्वादिगुणो हरिरेव हृत्पद्मगत इति भावः ॥**

## गुर्वर्थदीपिका

**भाविभावेन** इत्यस्य भाविनः मुक्तिकाले भविष्यतः, भावेन सत्त्वेनेत्यर्थः । यद्यपि अपहतपाप्मत्वादिकमेव जीवापवादकं हृत्पुण्डरीकस्थतया शङ्क्यमाने संसारिजीवे सर्वथाऽसम्भवाद्भाविरक्ते घटे श्यामतादशायां रक्तव्यवहाराभावाद्भाविभावेनापि न शक्यसमाधानम् । तथाऽपि मुक्तिप्रकरणसमीपस्थत्वान्मन्दानां स्यादेव शङ्केत्यभ्युपगमवादेन शङ्का समाधानं च ज्ञेयम् ।

## भावबोधः

**हृत्पद्मस्थात्मतयेति** ॥ य आत्मा अपहतपाप्मेति हृत्पद्मस्थे पूर्वमात्मशब्दप्रयोगादत्रापि आत्मशब्देनास्यैवाभिधानादिति भावः ।

## भावदीपः

**परामर्शादिति** ॥ एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरिति पूर्ववाक्ये सम्प्रसादपदेन प्रकृतस्य अभिनिष्पद्यत इति कर्तृत्वेनोक्तस्य जीवस्यैष इति परामृश्य आत्मपदेन य आत्माऽपहतपाप्मा विजरो विमृत्युरित्युक्तहृत्पद्मस्थात्मत्वविधानादित्यर्थः । शेषपूर्त्या स इति प्रतिज्ञार्थमाह ॥ **जीव एवेति** ॥ नेत्यस्य पूर्वतनप्रतिज्ञयाऽन्वयं दर्शयन् हेतुसाध्ययोरवैय्यधिकरण्याय भाष्यं व्याचष्टे ॥ **न जीव इति** ॥ स्वत इति पदं शङ्कापूर्वं व्यनक्ति ॥ **न चेति** ॥ **स्वातन्त्र्येणेति** ॥ सापेक्षनिरपेक्षयोर्निरपेक्षमेव श्रुतौ स्वीकर्तव्यमिति भावः ।

## अभिनवचन्द्रिका

**तेषां च जीवेऽसम्भवादिति** ॥ इतःपरं टीकायां श्रूयमाणं न च वाच्यं मुक्तजीवे तत्सम्भवात्, जीव एव भाविभावेनोच्यत इति, मुक्तस्यापि स्वान्तत्र्येण तत्सम्भवात्' इति वाक्यद्वयं प्रक्षिप्तम् । अवश्यं चैतदेवं विज्ञेयम् । उत्तरसूत्रव्याख्यानावसरे टीकायां 'न च वक्तव्यम्' इत्यादिना जीवस्य भाविभावेनाऽपहतपाप्मत्वादिकमुच्यत इत्याशङ्क्य मुक्तस्यापि

(अभिनवचन्द्रिका)
परमेश्वरप्रसादादेव तद्गुणाविर्भावेन स्वतोऽपहतपाप्मत्वाद्यसम्भवादिति भाव' इति परिहारस्याऽभिहितत्वात् उत्तरसूत्राभिप्रायस्य पूर्वसूत्राऽभिप्रायकथनावसरे निरूपणायोगात् । अन्यथा पौनरुक्त्यं स्यादिति ।

## वाक्यार्थमुक्तावली

**हृत्पद्मस्थात्मतयेति** ।। य आत्माऽपहतपाप्मेति हृत्पद्मस्थे आत्मशब्दः प्रयुक्तः, कोऽयमात्मेति शङ्कायाम् अथ एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय, परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते एष आत्मेत्यनूद्याभिधानादित्यर्थः । यद्वक्ष्यति जीवं परामृश्य हृत्पद्मस्थत्वं विधीयत इति । ततश्चायं सूत्रार्थः । परं ज्योतिरुपसम्पद्येति प्रकृतस्येतरस्य जीवस्यैष इति परामर्शो विधायैष आत्मेत्युक्तहृत्पद्मस्थात्मविधानाद्दहरे जीव इति चेन्न । हृत्पद्मस्थे श्रुतानाम् अपहतपाप्मत्वादीनां गुणानां जीवेऽसम्भवात् । तस्यैव मुक्त्यवस्थाविवक्षायामपि स्वतोऽपहतपाप्मत्वाद्यसम्भवादिति ।।

## तत्त्वसुबोधिनी

**हृत्पद्मस्थात्मतयेति** ।। य आत्मा अपहतपाप्मेति पूर्वम् आत्मशब्दप्रयोगात् अत्रापि आत्मशब्देन अस्यैवाभिधानादिति भावः ।। **तदसम्भवादिति** ।। स्वातन्त्र्येणापहतपाप्मत्वाद्यसम्भवादित्यर्थः ।

## वाक्यार्थमञ्जरी

परञ्ज्योतिरुपसम्पद्येति प्रकृतस्येतरस्य जीवस्यैष आत्मेति परामर्शात्स जीव एव दहरस्थ इति चेन्न । तस्य स्वतोऽपहतपाप्मत्वासम्भवादित्यर्थः ।। **भाविभावेनेति** ।। यूपं तक्षतीत्यादिवद्भविष्यदभिप्रायेणेत्यर्थः ।

## सूत्रभाष्यम्

**।। ॐ उत्तराच्चेदाविर्भूतस्वरूपस्तु ॐ ।। १९ ।।**

'स तत्र पर्येति जक्षन् क्रीडन् रममाण' (छां.उ.८-१२-३) इत्याद्युत्तरवचनाज्जीव

(सूत्रभाष्यम्)

एवेति चेन्न । तत्र हि परमेश्वरप्रसादादाविर्भूतस्वरूपो मुक्त उच्यते । यत्प्रसादात्स मुक्तो भवति स भगवान्पूर्वोक्तः ॥

## तत्त्वप्रकाशिका

जीवस्यापहतपाप्मत्वाद्यसम्भवमाक्षिप्य समादधत्सूत्रं पठित्वाऽऽक्षेपांशं तावद् व्याचष्टे ॥ **उत्तरादिति** ॥ 'एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय' इत्युक्तजीवस्य 'स तत्र पर्येति' इत्यादिना सत्यकामत्वप्रतीतेस्तत एव विशोकत्वादिसिद्धेः उक्तगुणासम्भवाभावात्स एव हृत्पद्मस्थ इत्यर्थः । नञध्याहारेण परिहारांशं व्याचष्टे ॥ **नेति** ॥ नैतद्वाक्यबलेन जीवस्य गुणान् सम्भाव्य हृत्पद्मस्थत्वं वाच्यम् । तद्वाक्ये मुक्तजीवस्योच्यमानत्वात् । 'स्वेन रूपेणाभिनिष्पद्यते' इत्युक्तेः । हृत्पद्मस्थस्य च देहान्तर्वर्तितया मुक्तत्वायोगात् । न च वक्तव्यं मुक्तिविषयत्वेऽप्येतद्वाक्यस्य मुक्तस्यापि जीवत्वेनास्त्येव जीवेऽपहतपाप्मत्वादिसम्भवोऽतो जीव एव अपहतपाप्मत्वादिगुणो हृत्पद्मगततया भाविभावेनोच्यते इति । मुक्तस्यापि परमेश्वरप्रसादादेव तद्गुणाविर्भावेन स्वतोऽपहतपाप्मत्वाद्यसम्भवादिति भावः । नन्वत्र मुक्तस्य तद्गुणत्वमेवोच्यते न तु परमेश्वराधीनत्वम् अतस्तत्स्वत एवेत्यत आह ॥ **यदिति** ॥ नात्र मुक्तगुणप्राप्तेः परमेश्वराधीनत्वोक्त्यभावः । परमेश्वरस्य गुणप्रदातृतया 'परं ज्योतिरूपसम्पद्य' इति पूर्ववाक्योक्तत्वादिति भावः । ननु परमेश्वरप्रसादादपि जीवस्यास्त्येव तद्गुणजातमतः स एवापहतपाप्मत्वादिगुणो हृत्पद्मस्थोऽस्त्वित्यतो वाऽऽह ॥ **यदिति** ॥ न परमेश्वरप्रसादलब्धगुणो जीवः पूर्ववाक्येऽपहतपाप्मत्वादिनोक्तः । किं तु यत्प्रसादात्स मुक्तो भूत्वाऽपहतपाप्मत्वादिगुणो भवति स भगवानेव । दातृप्रतिग्रहीत्रोर्दातुरेव मुख्यत्वात् मुख्यस्यैव ग्राह्यत्वादिति भावः ॥

## भावबोधः

स तत्र पर्येतीत्यादिना जीवस्य सत्यकामत्वसिद्धावपि अपहतपाप्मत्वादेः कथं जीवनिष्ठत्वमित्यत उक्तं– **तत एव विशोकत्वादिसिद्धेरिति** ॥ देहान्तर्वर्तितया मुक्तत्वायोगादिति । तथा च हृत्पद्मगतत्वापहतपाप्मत्वयोर्भिन्नकालीनत्वेन जीवस्य हृत्पद्मगतत्वे अपहतपाप्मत्वाद्यसम्भव इति भावः ॥ **मुक्तस्यापि जीवत्वेनेति** ॥ भिन्नकालीनत्वेऽपि हृत्पद्मस्थत्वापहतपाप्मत्वयोः सामानाधिकरण्यस्य सत्त्वान्नानुपपत्तिरिति भावः ॥ **भाविभावेनेति** ॥ अपहतपाप्मत्वादिगुणत्वाभिप्रायेणेदम् ॥ **तद्गुणाविर्भावेणेति** ॥ स्वरूपाविर्भावस्येश्वर-

(भावबोधः)

प्रसादायत्तत्वप्रतिपादनं प्रकृतानुपयुक्तमित्याविर्भूतस्वरूपमित्येतदेव व्याख्यातमित्यवधेयम् । एवं मुक्तगुणप्राप्तेरित्यादिकमपि नेयम् ॥ **गुणप्रदातृतयेति** ॥ तस्य स तत्र पर्येतीत्युक्तगुण-प्रदातृत्वाभावे तत्प्राप्तिकथनमनुपपन्नमिति भावः ॥ **पूर्ववाक्य इति** ॥ य आत्मा अपहतपाप्मेति पूर्ववाक्य इत्यर्थः ॥ **दातुरेव मुख्यत्वादिति** ॥ अनेन यत्प्रसादात्स मुक्तो भवतीत्यंशस्य भगवत एव पूर्ववाक्योक्तत्वे नियामकप्रतिपादनरूपप्रयोजनमुक्तं भवति । यत्प्रसादादिति वाक्यस्य द्वितीयव्याख्यानाभावे मुख्यामुख्ययोर्मुख्यस्यैव ग्राह्यत्वादित्यस्य अवचनात् 'अन्यार्थश्च परामर्शः' इति सूत्रनिवर्तनीयायाः परामर्शबलादमुख्यापहतपाप्मत्वादिरपि जीवे य आत्मेति वाक्ये प्रतिपाद्यत इति शङ्काया उदयो न स्यादित्यतस्तदुदयार्थमिदं व्याख्यानमित्यवधेयम् ।

## भावदीपः

शेषोक्त्या भाष्यं व्याचष्टे ॥ **नैतदिति** ॥ आविर्भूतस्वरूप इत्यस्यार्थो **मुक्तजीवस्येति** । परमेश्वरप्रसादादित्येतच्छङ्कापूर्वं व्यनक्ति ॥ **न च वक्तव्यमित्यादिना** ॥ **मुक्तस्यापि जीवत्वेनेति** ॥ हृत्पद्मस्थत्वापहतपाप्मत्वयोर्भिन्नकालत्वेऽप्यैकाधिकरण्यादपहतपाप्मेत्याद्युक्ति-र्युक्तेत्यर्थः ॥

## वाक्यार्थमुक्तावली

संसारिजीवस्य, सर्वथासम्भवं मुक्तजीवस्यापि स्वतोऽसम्भवमित्यर्थः ॥ **सत्यकामत्वेति** ॥ एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघित्सोऽपिपासः सत्यकामः सत्यसङ्कल्प इति, हृत्पद्मस्थे श्रुतसत्यकामत्वस्य प्रतीतेरित्यर्थः ॥ **तत एव विशोकत्वादीति** ॥ आदि-पदेनापहतपाप्मत्वादिगृह्यते । **नञध्याहारेणेति** ॥ नञनुवृत्त्येत्यर्थः ॥ **देहान्तर्वर्तितयेति** ॥ हृत्पद्मगतत्वापहतपाप्मत्वयोर्भिन्नकालीनत्वेन जीवस्य हृत्पद्मगतत्वेऽपहतपाप्मत्वाद्यसम्भव इति भावः ॥ **मुक्तस्यापीति** ॥ हृत्पद्मस्थत्वापहतपाप्मत्वयोर्भिन्नकालीनत्वेऽपि, ऐकाधिकरण्यादप-हतपाप्मत्वाद्युक्तिर्युक्तेत्यर्थः । सूत्रे तुरवधारणे पूर्वसूत्रात्स इति असम्भव इति, नेति चानुवर्तते । अपहतपाप्मेति हृत्पद्मस्थे श्रुतादुत्तरात् परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते एष आत्मेति होवाचेतीतरपरामर्शादित्यत्रोपात्तादुत्तरात्, परञ्ज्योतिरूपसम्पद्य स्वेन रूपेणाभि-निष्पद्यते, स उत्तमः पुरुषः स तत्र पर्येतीति वाक्यादपहतपाप्मत्वाद्यसम्भवो नेति दहरे जीव

(वाक्यार्थमुक्तावली)
इति चेन्न । आविर्भूतस्वरूपो मुक्त एव तत्रोच्यते, स्वेन रूपेणाभिनिष्पद्यत इत्युक्तेः न तु हृत्पद्मस्थतया त्वदभिलषितः संसारी । येन प्रमाणबलादपहतपाप्मत्वं सम्भाव्येत । न चास्य वाक्यस्य मुक्तपरत्वेऽपि मुक्तस्यापि जीवत्वात् भाव्यवस्थाविवक्षया तत्सम्भवः । मुक्तस्यापि परमेश्वरप्रसादादेव तद्गुणाविर्भावेन स्वतोऽसम्भवादिति सूत्रार्थः । एवं हृत्पद्मस्थतया पराभिमतस्य जीवस्यास्मदुक्तमपहतपाप्मत्वाद्यसम्भवं सम्भावकप्रमाणेनाक्षिप्य प्रमाणस्य मुक्तपरत्वेन सावकाशत्वप्रदर्शनपरत्वेन सूत्रं व्याकुर्वद्भाष्यं व्याख्याय मुक्तस्य स्वतोऽपहतपाप्मत्वाद्यसम्भवाक्षेपसमाधायकतया व्याकुर्वन्नाक्षेपांशं व्याचष्टे ॥ **नन्वत्र मुक्तस्येति** ॥ ततश्च सर्वत्र पर्येतीत्यस्य पराधीनत्वज्ञापकपदाभावेन स्वत एवापहतपाप्मत्वप्रतिपादकादुत्तरवचनान्मुक्तस्य स्वतोऽपहतपाप्मत्वाद्यसम्भवो नेत्याक्षेपांश इत्यर्थ इति भावः ॥ **इत्यत इति** ॥ इत्याक्षेपे तत्परिहाराय परिहारांशं व्याचष्टे इत्यर्थः ॥ **गुणप्रदातृतया इति** ॥ स तत्र पर्येतीत्यत्र गुणप्रदातृत्वाभावे परञ्ज्योतिरुपसम्पद्येति तत्प्राप्तिकथनमनर्थकमिति भावः । एतेन यत्प्रसादात्स मुक्तः स तत्र पर्येतीत्युत्तरवाक्योक्तापहतपाप्मत्वादिगुणो भवति स भगवान् गुणप्रदातृतया पूर्ववाक्ये उक्त इति भाष्यार्थ उक्तो भवति ॥ **परमेश्वरप्रसादादिति** ॥ उत्तरे स इति चानुसन्धेयम् । ततश्चोत्तरवाक्ये मुक्तगुणप्राप्तेः न परमेश्वराधीनत्वोक्त्यभावः । यतस्तत्रैव परमेश्वरप्रसादादाविर्भूतगुणोऽजीव उक्त एवेत्यर्थः । स तत्र पर्येतीत्यंशे तदश्रवणेऽपि, परञ्ज्योतिरुपसम्पद्येति पूर्वांशे श्रवणादिति भावः । प्रकारान्तरेण व्याचष्टे **ननु परमेश्वरेति** ॥ अत्राप्सम्भवः सदहर इति पदान्यनुसन्धेयानि । परमेश्वरप्रसादायत्तगुणप्रतिपादकोऽप्युत्तरवचनात्सिध्यत्वे वापहतपाप्मत्वादिकमिति न पूर्वोक्तापहतपाप्मत्वाद्यसम्भवोऽतः स एव दहरपक्षस्थ इत्याक्षेपार्थः ॥ **इत्यतो वेति** ॥ इति चोत्तरादित्यंशेनाक्षेपे तत्परिहाराय, सिद्धान्तांशं व्याचष्ट इत्यर्थः । सूत्रे पूर्ववाक्य इति, नेति, स इति पदत्रयं संयोज्यम् । ततश्चाविर्भूतस्वरूपः परमेश्वरप्रसादलब्धगुणो जीवः । एष आत्मापहतपाप्मेति पूर्ववाक्येऽपहतपाप्मत्वादिगुणो नोक्तः । किं तु यत्प्रसादात्स आविर्भूतस्वरूपः (भावः) स भगवानेवेति सूत्रार्थ इति भावः ॥

## तत्त्वसुबोधिनी

स तत्र पर्येति इत्यादिना जीवस्य सत्यकामत्वसिद्धावपि अपहतपाप्मत्वादेः कथं जीवनिष्ठत्वमित्यत उक्तं **तत एव विशोकत्वादीति** ॥ तद्वाक्यस्य मुक्तपरत्वं कुत इत्यत आह ॥ **स्वेन रूपेणेति** ॥ स्वरूपाविर्भावस्य तत्रोक्तत्वात् तद्वाक्यं मुक्तपरमिति भावः । अस्तु

(तत्त्वसुबोधिनी)

तथापि हृत्पद्मस्थत्वं जीवस्येत्यत्र किमागतमित्यत आह ॥ **हृत्पद्मस्थस्य चेति** ॥ तथा च हृत्पद्मगतत्वापहतपाप्मत्वयोः भिन्नकालीनत्वेऽपि जीवस्य हृत्पद्मगतत्वे अपहतपाप्मत्वाद्य-सम्भवादिति भावः ॥ **मुक्तस्यापि जीवत्वेनेति** ॥ भिन्नकालीनत्वेऽपि हृत्पद्मस्थत्वापहत-पाप्मत्वयोः सामानाधिकरण्यस्य सत्त्वान्नानुपपत्तिरिति भावः ॥ **भाविभावेनेति** ॥ अपहत-पाप्मत्वादिगुणत्वाद्यभिप्रायेणोक्तम् ॥ **तद्गुणाविर्भावेनेति** ॥ स्वरूपाविर्भावस्य ईश्वर-प्रसादायत्तत्वप्रतिपादनं प्रकृतानुपयुक्तमित्याविर्भूतस्वरूपमित्येतदेवं व्याख्यातमित्येव ध्येयम् ॥ **गुणप्रदातृतयेति** ॥ तस्य स तत्र पर्येतीत्युक्तगुणप्रदातृत्वाभावे तत्प्राप्तिकथनमनुपपन्नमिति भावः ॥ **पूर्ववाक्य इति** ॥ य आत्मा अपहतपाप्मेति पूर्ववाक्ये इत्यर्थः ॥ **दातुरेव मुख्यत्वादिति** ॥ अनेन यत्प्रसादात् स मुक्तो भवति इत्यंशस्य भगवत एव पूर्ववाक्योक्तत्वे नियामकप्रतिपादनरूपं प्रयोजनमुक्तं भवति । यत्प्रसादादिति वाक्यस्य द्वितीयव्याख्यानाभावे मुख्यामुख्ययोः मुख्यस्यैव ग्राह्यत्वादित्यस्यावचनादन्यार्थश्च परामर्शः सूत्रनिवर्तनीयायाः परामर्शबलादमुख्यापहतपाप्म-त्वादेरपि जीवेयम् आत्मेति वाक्ये प्रतिपाद्यते इति शङ्काया उदयो न स्यादित्यतः तदुदयार्थमिदं व्याख्यानमिति भावः ।

## वाक्यार्थमञ्जरी

**उत्तरात्** जीवस्य सत्यकामत्वप्रतिपादक स तत्र पर्येतीत्युत्तरवाक्यात्स एव दहरस्थ इति चेन्न । **आविर्भूतस्वरूपस्तु** मुक्त एव तत्रोच्यते यत इत्यर्थः ॥ **स तत्रेति** ॥ सःप्राप्त-निजानन्दाविर्भावो जीवः । तत्र भगवल्लोके तदनुग्रहेणैव जक्षस्वाभिलषितं भक्षयन्हसन्वा सह मुक्तैः क्रीडन् खेलनं कुर्वन् अत्यन्तं रममाणः परितो गच्छतीत्यर्थः । स तत्र पर्येतीत्यादिना जीवस्य सत्यकामत्वसिद्धावपि अपहतपाप्मत्वादेः कथं जीवनिष्ठत्वमित्यत उक्तम् ॥ **तत एवेति** ॥ सत्यकामत्वादेवेत्यर्थः । काम्यालाभ एव शोकादिरिति भावः ॥ **गुणप्रदातृतयेति** ॥ अन्यथा तत्प्राप्तिकथने वैयर्थ्यमिति भावः ॥

## सूत्रभाष्यम्

**॥ ॐ अन्यार्थश्च परामर्शः ॐ ॥ २० ॥**

**यं प्राप्य स्वेन रूपेण जीवोऽभिनिष्पद्यते स एष आत्मेति परमात्मार्थश्च परामर्शः ॥**

## तत्त्वप्रदीपिका

अन्यार्थश्च परामर्शः । 'एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय' इत्यादिवाक्ये एष आत्मेति परामर्शः परमात्मविषय इति यत्, तस्माच्च न जीव उच्यते ।

'यस्य सम्यक्प्रसादोऽस्ति विष्णोरेव स उच्यते ।
सम्प्रसादः स उत्थाय शरीरात्प्राय केशवम् ॥
यथास्वरूपस्तु भवेद्यं प्राप्यासौ सरूपताम् ।
आप्नोति स परो ह्यात्मा भगवानिन्दिरापतिः ।
इत्याह सा रमादेवी पश्यन्ती परमं पदम्' इति च पर्यङ्कोपासनायाम् ॥

## तत्त्वप्रकाशिका

अमुख्यापहतपाप्मत्वादिगुणोऽपि जीवः परामर्शबलेन हृत्पद्मस्थात्मा किं न स्यादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **अन्येति** ॥ भवेदेतद्यद्येष इति जीवं परामृश्य तस्य हृत्पद्मस्थत्वं विधीयेत । नैतदस्ति । यं परं ज्योतिराख्यं भगवन्तमभिसम्पद्य जीवः स्वेन रूपेणाऽभिनिष्पद्यते स एष आत्मेति परमात्मानमेवैष इति परामृश्य तस्यात्मत्वोक्तेः । अतो जीवेऽपहतपाप्मत्वाद्य-सम्भवात्परामर्शस्य चेश्वरार्थत्वात् स एवापहतपामत्वादिगुणो हृत्पद्मस्थ इति भावः । न च मन्तव्यमुभयथापि सम्भवे कुतः परमात्मार्थता परमर्शस्येति । निरवकाशोक्तानेकहेतुबलादेव ॥

## भावबोधः

**यं परञ्ज्योतिराख्यमिति** ॥ अनेन परं ज्योतिरित्यत्र लिङ्गमविवक्षितमित्यभिप्रेत्य भाष्ये यमित्युक्तं भवति ॥ **परामर्शस्य चेति** ॥ अनेन 'सूत्रगत'चशब्दस्य परामर्शश्चेत्यन्वय उक्तो भवति । एवं सति न केवलमसम्भवादिबाधकं परामर्शलक्षणं साधकाभावश्चेति चशब्दः सार्थकः । यथाश्रुते तु प्रयोजनाभाव इति भावः ।

## भावदीपः

**भगवन्तमिति** ॥ ज्योतिश्शब्दश्चाऽऽत्मा प्रकरणादिति चतुर्थे भगवत्परो वक्ष्यत इति भावः ॥ **एष इति परामृश्येति** ॥ पुंल्लिङ्गं तु शैत्यं हि यत्सा प्रकृतिर्जलस्य इत्यादाविव विधेयात्मापेक्षया युक्तमिति भावः । स एवेत्येवकारतात्पर्यं हेतूक्त्या व्यनक्ति ॥ न च **मन्तव्यमिति** ॥

## वाक्यार्थमुक्तावली

**परं ज्योतिराख्यमिति** ॥ अनेन परं ज्योतिरिति लिङ्गमविवक्षितमित्यभिप्रेत्य भाष्ये यमित्युक्तं भवति ॥ **परामृश्य चेति** ॥ अनेन परामर्शश्चेति चशब्दान्वय इत्युक्तं भवति । तेन न केवलमसम्भवादिपरपक्षे बाधकं किन्तु परामर्शलिक्षणसाधकाभावश्चेति भावः ।

## तत्त्वसुबोधिनी

**परञ्ज्योतिषाख्यमिति** ॥ अनेन परञ्ज्योतिरित्यत्र लिङ्गमविवक्षितमित्युक्तं भवति ॥ **परामर्शस्य चेति** ॥ अनेन सूत्रगतचशब्दस्य परामर्शस्य चेत्यन्वय उक्तः । एवं सति न केवलमसम्भवादिबाधकं परामर्शलक्षणसाधकसद्भावश्चेति चशब्दः सार्थकः ।

## वाक्यार्थमञ्जरी

एष आत्मेति **परामर्शः अन्यार्थश्च** परमात्मविषय एव न जीवविषय इत्यर्थः ।

## सूत्रभाष्यम्

### ॥ ॐ अल्पश्रुतेरिति चेत्तदुक्तम् ॐ ॥ २१ ॥

'दहर' (छां.उ.८-१-१) इत्यल्पश्रुतेर्नेति चेन्न । 'निचाय्यत्वादेवं व्योमवच्च' इत्युक्तत्वात् । 'एष म आत्माऽन्तर्हृदये ज्यायान्' इति (छां.उ.३-१४-३) श्रुत्युक्तत्वाच्च ॥

## तत्त्वप्रदीपिका

दहरे स्थित इत्यल्पौकस्त्वश्रुतेर्न परः किन्तु जीव इति चेन्नैवम् । सूत्रश्रुतिभ्यामुक्तोत्तरत्वात् ।

## तत्त्वप्रकाशिका

उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्याऽऽक्षेपांशं तावद्व्याचष्टे ॥ **अल्पेति** ॥ यदुक्तं जीवेऽसम्भावितगुणश्रवणाद्विष्णुरेव हृदयपद्मस्थो न जीव इति तदयुक्तम् । 'दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तः' इति परमात्मन्यसम्भाव्यमानजीवलिङ्गस्याल्पस्थानस्थितत्वस्य श्रुतत्वादित्यर्थः । नञध्याहारेण परिहारांशं व्याचष्टे ॥ **नेति** ॥ नाल्पस्थानस्थितिश्रुतिः

(तत्त्वप्रकाशिका)

**विष्णावनुपपन्ना । 'निचाय्यत्वादेवं व्योमवत्' इत्यत्र सर्वगतस्यापि विष्णोः व्योमवदल्पस्थान-स्थितेः उक्तत्वादित्यर्थः । न व्योमवदीश्वरस्य अल्पस्थानस्थितिः युक्ता । सर्वगतस्यापि व्योम्नोंऽशतोऽल्पस्थानस्थित्युपपत्तेः । न च तथा विष्णोरुपपत्तिः । तस्यांशतोऽपि सर्वगतत्वात् 'यावान्वा' इत्युक्तेश्चेत्यतः सूत्रशेषं प्रकारान्तरेण व्याचष्टे ॥ एष इति ॥ सर्वगततयैव विष्णोरल्पस्थानस्थितिरुपपन्ना । 'एष म आत्मा' इति श्रुतौ सर्वज्यायस्त्वेनैव हृदय-स्थत्वोक्तेरित्यर्थः । न च एतद्युक्तिविरुद्धम् । 'यस्मिन्विरुद्धगतयोऽप्यनिशं पतन्ति' इत्यादेः । अतो विष्णुरेव हृत्पद्मस्थः सर्वाधारश्चेति सिद्धम् ॥**

## गुर्वर्थदीपिका

यस्मिन्विरुद्धगतयोऽप्यनिशं पतन्तीत्यादेरित्यत्राऽऽदिपदेन अणुत्वशक्त्या यशोदाङ्कगतस्यैव शिशोः विजृम्भमाणे मुखे महत्त्वशक्त्या ब्रह्माण्डस्यापि तयैव दर्शनाज्ज्ञानिप्रत्यक्षं च गृह्णाति ।

## भावबोधः

न च 'अर्भकौकस्त्वात्' इत्यनेनैव ज्ञातुं शक्यत्वात् किमर्थं तत्स्मरणमित्यतो अभ्यधिका-शङ्कापरिहारार्थं तदिति भावेन एष म आत्मेति भाष्यं प्रवृत्तमित्यभिप्रेत्याभ्यधिकाशङ्काप्रदर्शन-पूर्वकं तद्भाष्यमवतार्य व्याचष्टे– **न व्योमवदित्यादिना** ॥ अत्राद्ये विषयवाक्यसन्निहितवाक्य-गतात्मशब्दापहतपाप्मत्वादिलिङ्गरूपस्वपक्षसाधकोक्तिः । द्वितीये– तदुत्तरगतसुप्तप्राप्यत्वादि-लिङ्गब्रह्मशब्दरूपसाधकान्तरोक्तिः । अत्र 'अरश्च' ह्वै'ण्यश्च' इति वाक्यस्य धृतेश्चेत्युत्तर-सूत्रोपात्त 'अथ य आत्मा स सेतुर्विधृतिः' इति वाक्यादुत्तरत्वेऽपि एतं ब्रह्मलोकमिति पूर्व-वाक्योक्तहेतुसाधकहेतुप्रतिपादकत्वादत्रैव तदुक्तलिङ्गोक्तिः । तृतीये– तदुत्तरवाक्यगतस्य सर्वाधारत्वलिङ्गस्य वाजसनेयकसमाख्यायाश्चोक्तिमहिम्नोऽस्यास्मिन्नुपलब्धेः' इति समाख्या-प्रतिपादकसूत्रांशेन सर्वाधारत्वलिङ्गस्य हृत्पद्मनिष्ठत्वस्याप्युपपादनात् तल्लिङ्गसाहित्येन तत्समाख्योक्तिः । तैत्तिरीयसमाख्यया परमात्मनो हृत्पद्मगतदहराकाशस्थत्वेन हृत्पद्मस्थत्व-प्रतिपादनात्तदुक्तौ सुषिरश्रुतिविरोधशङ्कायां तत्रापि तद्गतमित्यनेन तदुद्धारस्योपलक्षणया-न्वयाभावलक्षणबाधकोद्धारस्याकाशपक्षे अन्वयाभावरूपपरपक्षबाधकस्य च सूचनात् सर्व-साधकोक्त्यनन्तरं चतुर्थे तदुक्तिः । पञ्चमे जीवपक्षे बाधकोक्तिः । षष्ठेऽसम्भवरूपबाधकस्या-सिद्धिमाशङ्क्य तदुद्धारः । सप्तमे– परामर्शस्य विष्णुविषयत्वसमर्थनम् । अष्टमे– हृत्पद्मस्थस्य

(भावबोधः)

विष्णुत्वजीवत्वबाधकसाधकतया अल्पस्थानस्थितत्वलिङ्गमाशङ्क्य तस्य पूर्वोक्तयुक्तिस्मरणेन श्रुतिरूपविशेषप्रमाणोपन्यासेन च विष्णौ सावकाशत्वोक्तिरिति सूत्रक्रमः ॥

## भावदीपः

व्योमवदित्यनेनास्यागतार्थत्वाय विशेषाशङ्कोक्तिपूर्वं भाष्यं व्याचष्टे ॥ **न व्योमवदिति** ॥ **यावान्वा इति** ॥ पूर्वमथवेति द्वितीयव्याख्याने यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश इति हृत्पद्मस्थदहराकाशस्थस्याऽऽकाशनाम्नो विष्णोर्व्याप्तवाह्यरूपतौल्येन व्याप्तत्वोक्तेरित्यर्थः । इति श्रुतौ छन्दोगश्रुतौ तृतीय इत्यर्थः । ज्यायस्त्वेन वृद्धतमत्वेन व्याप्तत्वेनेति यावत् । वृद्धशब्दात् 'वृद्धस्य च' इति सूत्रेण ईयसुन्प्रत्यये ज्यादेशे च रूपमेतत् । छान्दोग्यभाष्यस्थं सर्वमत्रानुसन्धेयमिति भावेन किञ्चित्प्रदर्शयति ॥ **यस्मिन्निति** ॥ उक्तं हि तद्भाष्ये अल्पपरिमाणस्यापि महत्परिमाणं युज्यते । अचिन्त्यशक्तित्वात् । 'यस्मिन् विरुद्धगतयोऽप्यनिशं पतन्ति विद्यादयो विविधशक्तय आनुपूर्व्या' इति वचनात् । आनुपूर्व्येति श्रुतिप्रामाण्यादित्यर्थः इत्यादि । उपपादितमेतन्निपुणतरं वैशेषिकनयानुव्याख्यान इति भावः । सर्वमत्रार्थं फलोक्त्योपसंहरति ॥ **अत इति** ॥ आत्मशब्दब्रह्मशब्दापहतपाप्मत्वसुप्तगम्यत्वारण्याख्यसुधासमुद्राश्रयलोकवत्त्वसर्वधारकत्वरूपलिङ्गवाजसनेयतैत्तिरीयसमाख्यारूपसाधकभावात् सुषिरश्रुतिविरोधवाक्यानन्वयेतरपरामर्शाल्पस्थानस्थत्वादिबाधकाभावाच्चेत्यर्थः । दहरे तत्त्वित्यस्यार्थो **विष्णुरेवेति** ॥ सर्वेति भाष्यलब्धफलोपसंहारः । अत्र पूर्वत्र च श्रुतसर्वाधारश्चेत्यर्थः । यत्त्वत्र केनचिद्दूषणमुत्प्रेक्षितं तत्तु चन्द्रिकार्थावमर्शिनां न दुरुद्धरमिति ग्रन्थगौरवभयान्नात्र प्रपञ्च्यते ।

## अभिनवचन्द्रिका

**तस्यांऽशतोऽपि सर्वगतत्वादिति** ॥ ननु सर्वगतस्याल्पस्थानस्थितिरनुपपन्नेत्ययुक्तम् । व्याहतेः । न हि सर्वगतमेकदेशे नास्तीति शक्यते वक्तुम् । सर्वगतत्वाभावप्रसङ्गात् । न चाल्प एव स्थितिरनुपपन्नेत्युच्यते । न चैवं सति व्याहतिरिति वाच्यम् । अस्माभिरपि अल्पस्थितिमात्रस्याऽभिधानेन अल्प एवस्थितेरनभिधानात् । न च साकल्येनाल्पस्थानस्थितिरनुपपन्नेत्युच्यत इति वाच्यम् । एवं सति सर्वगतस्यापि व्योम्नः साकल्येनाऽल्पस्थानस्थितत्वमङ्गीकृत्य परमात्मनः तदाक्षेपानुपपत्तेः । तथा हि व्योमांशानां किं व्योमैक्यं, उत भेदः । आद्ये

(अभिनवचन्द्रिका)
तदंशस्यापि सर्वगतत्वेन साकल्येनाऽल्पस्थानस्थित्यङ्गीकारानुपपत्तिः । द्वितीयेऽपि व्योमांशानामेवाऽल्पस्थानस्थितत्वेन व्योम्नः तदभावेन तदङ्गीकाराऽनुपपत्तिरेवेति चेत् । उच्यते । अभिन्न एव व्योम्नो व्योमांशः, तथापि घटाभिन्नस्यापि रूपस्य त्वचा घटग्रहेऽपि अग्रहवत् विशेषबलेन व्योम्नो व्याप्तत्वेऽपि तदंशानां मूर्तत्वात् साकल्येनाऽल्पस्थानस्थितिर्युज्यते । ततश्च तदभिन्नत्वादाकाशस्यापि अल्पस्थानास्थितिर्युज्यते । न चैवं विष्ण्ववयवानां सम्भवति । तद्व्यक्तेपामपि सर्वगततया प्रमाणसिद्धत्वात् । ततश्चाऽऽकाशस्याल्पस्थानस्थितत्वमङ्गीकृत्य विष्णोस्तदाक्षेपो युज्यत एवेति ॥

पूर्वपक्षस्तु– आकाश एवाऽयं हृत्पद्मस्थः । 'दहरोऽस्मिन्नन्तराकाश' इति हृत्पद्मे दहराकाशस्थितिश्रवणात् । 'तस्यान्ते सुषिरमिति समाख्यानाच्च । न च अस्त्वाकाशशब्देन सुषिरमेव । 'तस्मिन्यदन्तः' इति हृत्पद्मस्थाकाशगतः सर्वाधारतयोच्यत इति, तथा सति वाक्यान्वयाऽनुपपत्तेः । तथा हि 'तस्मिन्' इत्यत्र विष्णुत्वाऽभिप्राये 'किं तदत्र विद्यत' इति प्रश्नस्य 'ब्रह्म विद्यत' इति परिहारं विना 'यावान्वा' इत्यादेरभिप्रायाऽसङ्गतिः । आकाशपक्षे तु अस्त्यस्यान्वयः, हृदयाकाशस्थमुपास्यमित्युक्ते 'किं तत्र स्थितम्' इति प्रश्ने 'यावान्वा अयमाकाश' इति प्रागुक्ताकाशमेव विशिष्योभे अस्मिन्नित्यादिपरिहारसंश्लेषात् । न च यावानित्यादिना आकाशाख्यो विष्णुः सर्वाधारतया परिहारे कथ्यते इत्यन्वयोपपत्तिरिति वाच्यम् । 'तस्मिन्सर्वं प्रतिष्ठितम्' इति साक्षात्सुषिरस्यैव सर्वाधारत्वोक्तिविरोधात् । तस्मादाकाशस्यैव सर्वाधारतया हृत्पद्मस्थत्वम् । जीवस्यैव वा तद्वत् । उत्तरत्र 'परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष त आत्मेति होवाच' इति जीवस्याऽपहतपाप्मेत्यत्र हृत्पद्मस्थात्मतया परामर्शात्, दहरस्थत्वलिङ्गाच्च । न चान्वयानुपपत्तिः । विष्णुपक्षे वाक्ययोजनावत् जीवपक्षेऽपि योजयितुं शक्यत्वात् । अतो भगवदितरदेव चन्द्रादित्याधाराक्षरमिति ॥

सिद्धान्तस्तु– दहरपद्मस्थो विष्णुरेव भवेत् । 'अपहतपाप्मा' इत्यादिनोत्तरवाक्ये हृत्पद्मस्थस्याऽपहतपाप्मत्वादिगुणश्रवणात्', 'अहरहर्गच्छन्त्य एतम्' इति सुप्तप्राप्यत्वाभिधानाच्च हृत्पद्मस्य ब्रह्मलोकत्वोक्तेः तदन्तर्गते ब्रह्मशब्दश्रवणाच्च, 'अथ य आत्मा स सेतुः' इति सर्वाधारत्वश्रवणाच्च, वाजसनेयके 'य एषोऽन्तर्हृदय आकाशः तस्मिन् शेते सर्वस्य वशी' इत्याद्युक्त्वा 'एष सर्वेश्वर एष भूताधिपतिः एष भूतपाल एष सेतुर्विधरण, एषां

(अभिनवचन्द्रिका)

लोकानामसम्भेदाय' इत्यादिना हृदये विष्णोरुक्तत्वेन तत्समाख्यानाच्च, 'दहरं विपापं पुरवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम्, तत्रापि दहरम्' इति विष्णोर्हृत्पद्मस्थत्वप्रसिद्धेश्च । न न प्रश्नोत्तरयोरसङ्गतिः ब्रह्मपुरशब्देनैव हृत्पद्मस्थस्य ब्रह्मत्वे सिद्धे स्वरूपमात्रे प्रश्नायोगात् । कीदृशं तदिति भावेन किं तदिति प्रश्ने ब्रह्मस्वरूपनिरूपणाय 'यावान्' इत्यादि परिहार-श्लेषात् । 'परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाच' इति जीव-परामर्शात् स इति चेत्, न तस्यापहतपाप्मत्वाद्यसम्भवात् । 'एष संप्रसादोऽस्माच्छरीरा-त्समुत्थाय' इत्युक्तजीवस्य 'स तत्र पर्येति' इत्यादिना सत्यकामत्वप्रतीतेः । तत एव विशोकत्वादिसिद्धेरुक्तगुणासम्भवाभावात् स एव हृत्पद्मस्थ इति चेत्, न 'परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाच' इति वाक्ये मुक्तजीवस्योच्यमानत्वेन हृत्पद्म-स्थस्य देहान्तर्वर्तितया मुक्तत्वायोगात् । न च वक्तव्यमेतद्वाक्यस्य मुक्तविषयत्वेऽपि मुक्तस्यापि जीवत्वेनाऽस्त्येव जीवे अपहतपाप्मत्वादिसम्भवः । अतो जीव एवाऽपहतपाप्मत्वादिगुणो हृत्पद्मगततया भाविभावेनोच्यत इति । मुक्तस्यापि परमेश्वरप्रसादादेव तद्गुणाविर्भावेन स्वतोऽपहतपाप्मत्वाद्यसम्भवात् । अमुख्यापहतपाप्मत्वादिगुणोऽपि 'परंज्योतिरुपसंपद्य स्वेन रूपणाभिनिष्पद्यत एष आत्मेति होवाच' इति परामर्शबलेन जीव एव हृत्पद्मस्थात्मा किं न स्यादिति चेत्, भवेदेतत् यदि एष इति जीवं परामृश्य तस्य हृत्पद्मस्थाऽऽत्मत्वं विधीयेत । एष आत्मेति परमात्मानमेव एष इति परामृश्य तस्यात्मत्वोक्तेः । ननु यथा जीवेऽसम्भाव्य-मानापहतपाप्मात्वादिगुणश्रवणात् न जीवः, तथा परमात्मन्यसम्भाव्यमान जीवलिङ्गस्याप्यल्प-स्थानस्थितत्वस्य श्रवणात् न परमात्माऽपीति चेत्, न निचाय्यात्वादेवं व्योमवच्च' इत्यत्र सर्वगतस्यापि विष्णोर्व्योमवदल्पस्थानस्थितेरुक्तत्वात् । 'एष आत्माऽन्तर्हृदये ज्यायान्' इति सर्वगततया श्रुत्युक्तत्वाच्च । अतो विष्णुरेव हृत्पद्मस्थः सर्वाधारश्चेति सिद्धम् ।

## वाक्यार्थमुक्तावली

सूत्रे उक्तस्मरणं नातीवप्रयोजनवदित्यत अभ्यधिकाशंकोत्थापनपूर्वं तत्परिहारायेतिभावेनेष म आत्मेति भाष्यं प्रवृत्तमिति हृदि कृत्वाऽभ्यधिकाशंकामाह ॥ **न व्योमवदिति** ॥ **यावान्वा इति** ॥ यावान्वायमाकाशस्तावानेषोऽन्तर्हृदय आकाश इत्यत्र, हृदयपक्षस्थस्य भगवद्रूपांशस्य विष्णोरुक्तेरिति भावः । सूत्रे दहरे नेत्येतदनुवर्तते । दहर इत्यल्पस्थानस्थितिश्रवणाद्दहरे न

(वाक्यार्थमुक्तावली)

ब्रह्मेति चेन्न । तद्विष्णोरल्पस्थानत्वं, व्योमवदिति यथा व्योम्नोऽशतोऽल्पस्थानगतत्वं तथाणु-रूपविशेषविवक्षया प्रागेवोक्तम् । अणोर्महत्वेऽपि महत्वाविरोधेनैवाल्पदेशगतत्वं श्रुतावुक्तमिति सूत्रार्थः । अत्र प्रसिद्धेश्चेत्यन्तानि चत्वारि सूत्राणि स्वपक्षसाधकानि । अत एव परपक्ष-बाधकानि च । तत्राद्ये विषयवाक्यसमीपस्थतया बहुत्वेन त्रिचतुर्वारमभ्यस्ततयात्सशब्द-समानाधिकृततया चातिप्रबललिङ्गोक्तिः । द्वितीये तदुत्तरवाक्यगतश्रुतिलिङ्गोक्तिः ब्रह्मश्रुते-रपहतपाप्मत्वादिलिङ्गात्प्राबल्येऽपि, ब्रह्मशब्दान्तर्गत्वेन पृथगभावात् द्वितीये तदुपन्यासो युक्त एव ॥ तथाहि दृष्टं लिङ्गं चेत्युक्तलिङ्गस्थधृतेरित्युक्तलिङ्गप्रतिपादकवाक्यादुत्तरवाक्यगतत्वेऽपि ब्रह्मलोकशब्दस्य विष्णुलोके प्रयोगप्रदर्शकतया तच्छेषत्वस्यापि सत्वात्तत्सन्निधाने उक्तिः । तृतीये तदुत्तरवाक्यगतलिङ्गस्य वाजसनेन समाख्योक्तिः । चतुर्थे तैत्तिरीयसमाख्योक्तिरिति वाक्यक्रमेण श्रुतिलिङ्गसमाख्यानां प्राबल्यक्रमेण च क्रमः । इतरेत्यादिचत्वारिसूत्राणि स्वपक्षे बाधकोद्धाराय स्वपक्षे बाधकाभावाय च, प्रवृत्तानि तत्र त्रीण्येकवाक्यानि । चतुर्थं बाधकान्तर-परिहारकम् । त्रिष्वप्याद्ये हृत्पद्मस्थस्य विष्णुत्वे परामर्शविरोधमाशङ्क्य तस्य जीवविषयत्वेऽ-पहतपाप्मत्वाद्यसम्भवोक्तिः । द्वितीये सम्भावकं तदुत्तरवाक्यमाशङ्क्य तस्य मुक्तविषयतया सावकाशत्वोक्तिः । तृतीये परामर्शस्यैवान्यविषयत्वोक्तिः । चतुर्थे प्रागेव परिहृततया दुर्बलस्य बाधकस्य पूर्वोक्तस्मरणेनोद्धार इति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

नन्वर्भकौकस्त्वादित्यनेनैव ज्ञातुं शक्यत्वात्किमर्थं स्मरणमित्यतोऽभ्यधिकाशङ्का प्रदर्शन-पूर्वकं तद्भाष्यमवतार्य व्याचष्टे ॥ **न व्योमवदित्यादिना** ॥ अत्राद्यसूत्रे अपहतपाप्मत्वादि-लिङ्गरूपसाधकोक्तिः । द्वितीये तदुत्तरवाक्यगतसुप्तप्रजाप्राप्यलिङ्गब्रह्मशब्द, अरण्याख्यसुधा-समुद्राश्रयत्वलिङ्गानां चोक्तिः । अत्रारश्च हवैण्यश्चेति वाक्य स्याथ य आत्मेति वाक्यादुत्तर-त्वेऽपि एतं ब्रह्मलोकमिति पूर्ववाक्योक्तहेतुप्रतिपादकत्वादत्रैव तदुक्तलिङ्गोक्तिः । तृतीये सर्वाधारत्वलिङ्गस्य वाजसनेयके समाख्यायाश्चोक्तिः । हृत्पद्मस्थो विष्णुः ससेतुरिति सर्वाधार-त्वस्योक्तत्वात् । किं च वाजसनेयके समाख्यानाच्च विष्णुरेव हृत्पद्मस्थः । वाजसनेयके हृत्पद्मस्थस्य विष्णुत्वं कुत इति चेदस्य विष्णोः सर्वेश्वरत्वादिमहिम्नः अस्मिन् वाजसनेयकोक्ते हृत्पद्मस्थे उपलब्धेश्चेति चशब्दो भिन्नक्रमः । तथा च तत्र हृत्पद्मस्थस्य विष्णुत्वेन

(तत्त्वसुबोधिनी)

तत्समाख्यानादत्रापि हृत्पद्मस्थो विष्णुरेवेति चास्याक्षरार्थः । चतुर्थे प्रसिद्धिरूपसाधकोक्तिपूर्वकं सुषिरश्रुतिविरोधपरिहारस्य उपलक्षणतया अन्वयाभावलक्षणाबाधकोद्धारस्य आकाशपक्षे अन्वयाभावरूपपरपक्षबाधकस्य च सूचनात् सर्वसाधकोक्त्यनन्तरं तदुक्तिः । पञ्चमे जीवपक्षे बाधकोक्तिः । षष्ठेऽसम्भवरूपबाधकस्यासिद्धिमाशङ्क्य तदुद्धारः । सप्तमे परामर्शस्य विष्णुविषयत्वसमर्थनम् । अष्टमे हृत्पद्मस्थस्य विष्णुत्वबाधकस्याल्पस्थानस्थितत्वस्य पूर्वोक्तयुक्तिस्मरणेन विशेषप्रमाणोपन्यासेन च विष्णौ सावकाशत्वोक्तिरिति सूत्रक्रमः ।

## वाक्यार्थमञ्जरी

दहरं पुण्डरीकमित्यादिनाल्पस्थानस्य श्रवणाद्दहरं जीव एव न ब्रह्मेति चेन्न । तत् अल्पस्थानस्थत्वमुक्तं निचाय्यत्वादिना समाहितं यत इत्यर्थः । तर्हि तत एवैतत्परिहारादिदं व्यर्थमित्यतोऽभ्यधिकाशङ्कां दर्शयति ॥ **न व्योमवदिति** ॥ **यावानित्युक्तेश्चेति** ॥ अंशस्यापि सर्वगतत्वोक्तेश्चेत्यर्थः ॥ **सर्वज्यायस्त्वेनेति** ॥ सर्वापेक्षया परिमाणतः श्रेष्ठत्वेनेत्यर्थः । 'यस्मिन्विरुद्धगतयोऽप्यनिशं पतन्ति ब्रह्मादयो विविधशक्तय आनुपूर्व्या' इति भागवतवाक्यस्यायमर्थः । यस्मिन्विद्यादयो विविधशक्तयो पतन्ति वर्तन्ते न केवलमेतावत् किन्तु विरुद्धगतयोऽपि अन्यत्र विभिन्नाश्रया अप्यणुत्वमहत्वादयः वर्तन्ते किं कालभेदेनेत्यत आह ॥ **अनिशमिति** ॥ कुतः आनुपूर्व्या । अणोरणीयानिति श्रुत्येत्यर्थः । 'आनुपूर्वीश्रुतिश्चैव त्रयी चाम्नाय उच्यत' इत्यभिधानात् । तथा च युक्त्यविषये विरोधो अकिञ्चित्कर इति भावः ।

॥ इति दहराधिकरणम् ॥

# ६. अनुकृत्यधिकरणम्

## सूत्रभाष्यम्

अदृश्यत्वादयः परमेश्वरगुणा उक्ताः । 'तेषां सुखं शाश्वतं नेतरेषाम् । तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम्' (क.उ.५-१२,१४) इत्यादिना ज्ञानिसुखस्याप्यनिर्देश्यत्वमज्ञेयत्वं चोच्यत इत्यतो वक्ति–

**॥ ॐ अनुकृतेस्तस्य च ॐ ॥ २२ ॥**

'तमेव भान्तमनुभाति सर्वम्' (क.उ.५-१५) इत्यनुकृतेः, 'तस्य भासा सर्वमिदं विभाति' इति (क.उ.५-१५) वचनाच्च परमात्मैवानिर्देश्यसुखरूपः । न हि ज्ञानिसुखमनुभाति सर्वम् । न च तद्भासा । 'अहं तत्तेजो रश्मीत्' इति नारायणभासा हि सर्वं भाति ॥

## सत्तर्कदीपावली

अदृश्यत्वेत्यादेरयमर्थः । 'तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं' 'कथं नु तद्विजानीयाम्' इति श्रुतौ ज्ञानिसुखस्यानिर्देश्यत्वादिकमुच्यते । अतः परमात्मैवादृश्यत्वादिगुणक इति यदुक्तं प्राक् तन्न सिध्यतीति चेन्मैवम् । 'तस्य भासा सर्वमिदं विभाति' इति वाक्यशेषात् 'अहं तत्तेजोरश्मीन्' इति श्रुत्यन्तरविरोधात् । 'यदादित्यगतं तेज' इत्यादिवाक्यविरोधात् 'तत्तेजो विद्धि मामकम्' इति मत्तेजसा प्रवर्तितमित्यर्थः ।

## तत्त्वप्रदीपिका

'तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्' इत्यत्र तेषां सुखं शाश्वतमिति हि प्रस्तुतिः पूर्वपक्षोत्थापिका । 'तमात्मस्थम्' इति सिद्धान्तबीजम् । 'तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम् । कथं नु तद्विजानीयाम्' इति विषयवाक्यम् । 'अनुकृतेस्तस्य च' ॥ अनुभानं नाम तदिच्छानुरोधेन भानम् । अनुकृतिशब्देन अनुभानमुच्यते । भानस्यापि क्रियारूपत्वात् । अन्यकृतीनामप्युपसङ्ग्रहार्थमनुकृतेरित्युक्तम् । नहि काचिदपि कृतिर्हरीच्छानुरोधनमन्तरेण भवति । भानश्रुत्याऽपि कृतिरुपसङ्गृहीता । भानपूर्वकत्वात्कृतेः । अतोऽनुकृतेरिति युक्तमुक्तम् । अहं तत्तेजो मदपेक्षया रश्मिरूपाणामल्पानामन्येषां तेजसां प्रेरकम् ।

## तत्त्वप्रकाशिका

अत्राऽऽनुकूल्येन गृह्यमाणत्वलिङ्गस्य भगवति ज्ञानिसुखे च सुखशब्दवृत्त्या साधारणस्य विष्णौ समन्वयप्रतिपादनादस्ति शास्त्रादिसङ्गतिः । श्रुत्यादिसङ्गतिं विषयादिकं च सूचयन् सयुक्तिकं पूर्वपक्षं च दर्शयति ॥ **अदृश्यत्वादय इति** ॥ पूर्वमदृश्यत्वादिगुणाः परमेश्वरस्योक्ताः । तेषामदृश्यत्वाज्ञेयत्वे कस्यचिदानुकूल्येन गृह्यमाणस्य काठके कथ्येते । 'तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम् । कथं नु तद्विजानीयां किमु भाति न वा' इति आनुकूल्येन गृह्यमाणत्वं नाम कथं नु तद्विजानीयामिति ज्ञानार्थं प्रार्थितत्वम् । तस्य चान्यनिष्ठत्वेऽनिर्देश्यत्वं न भवतीत्युक्ताज्ञेयत्वं चान्यस्यैव प्रसज्ज्येतेत्यवश्यं निर्णेतव्यत्वम् । तदानुकूल्येन गृह्यमाणत्वमत्र विषयः । विष्णोरन्यस्य वेति सन्देहः । प्रागुक्तसाधारण्यं सन्देहबीजम् । ज्ञानिसुखस्य तल्लिङ्गमिति पूर्वः पक्षः । परमं सुखमिति सुखोक्तेः । न च सुखश्रुतिर्विष्णावपि सावकाशेति तद्ग्रहः 'एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति । तमात्मस्थं येऽनुपश्यन्ति धीराः तेषां सुखं शाश्वतं नेतरेषाम्' इति ज्ञानिसुखस्य प्रकृतत्वात् । तस्यैव तदेतदिति मन्यन्त इति परामर्शात् । न च वाच्यं भगवतोऽपि प्रकृतत्वात्तत्परामर्शोऽयमस्त्विति । तस्य नपुंसकसुखशब्देनाप्रकृतस्य तदित्यादिपरामर्शायोगात् । सम्भवत्समीपस्थपरामर्शं विहाय दूरस्थपरामर्शग्रहणे कारणाभावाच्च । अतो ज्ञानिसुखस्यैवाऽऽनुकूल्येन गृह्यमाणत्वात् तस्यैवानिर्देश्यत्वादीत्यर्थः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ कथं नु तद्विजानीयामित्यानुकूल्येन गृह्यमाणो विष्णुरेव । न च सुखश्रुतिविरोधः । परमं सुखमिति सुखश्रुतेरपि तत्परत्वात् । तेषां सुखमिति ज्ञानिसुखस्य प्रकृतत्वात्तस्यैव तदेतदिति परमर्शान्नेति चेन्न । 'चेतनश्चेतनानाम्' इत्यादौ परमात्मनोऽपि प्रकृतत्वात् । न च परमात्मनो नपुंसकसुखशब्देनाप्रकृतत्वात्तदेतदिति परामर्शायोग इति वाच्यम् । यदनिर्देश्यं परमं सुखं कथं नु तद्विजानीयामित्यानुकूल्येन गृह्णन्ति तदनिर्देश्यं सुखमेतत्प्रकृतपरमात्मनो रूपमिति मन्यन्त इति वाक्ययोजनोपपत्तेः । न च वक्तव्यं समीपस्थपरामर्शं विहाय कथञ्चिदेव दूरस्थग्रहणे कारणाभाव इति । 'तमेव भान्तमनुभाति सर्वम्' इति वाक्यशेषे सूर्यादीनामेतदधीनप्रकाशश्रवणात् 'तस्य भासा' इति सर्वजगतः तत्प्रभाप्रकाश्यत्वप्रतीतेश्च । अतः समीपोक्तपरित्यागे कारणसद्भावेन दूरोक्तपरमात्मग्रहणोपपत्तेस्तस्य च सुखरूपत्वातिशयेन नपुंसकसुखश्रुत्युपपत्तेः विष्णुरेव आनुकूल्येन गृह्यमाणा इति तस्यैव अनिर्देश्यत्वादीति भावः । नन्वेतदधीनतया सूर्यादीनां भानोक्तावेतस्य सर्वजगत्प्रकाशकत्वोक्तौ च कुतः समीपोक्तज्ञानिसुखपरामर्शपरित्याग इत्यत आह ॥ **न हीति** ॥ सर्वं सूर्यादिजगत् भातीति शेषः ।

(तत्त्वप्रकाशिका)

**अस्त्वेतदुभयं ज्ञानिसुखेऽनुपपन्नं तथापि कुतोऽनेन परमात्मग्रहणमित्यत आह ।। अहमिति ।। एतदुभयस्य ज्ञानिसुखेऽसम्भवात्परमात्मनि सम्भवाद् दूरोक्तस्यापि समीपोक्तपरित्यागेन ग्रहण-मिति भावः । तदुक्तं 'व्यवधानेनान्वयोऽपि योग्यतापेक्षया भवेत्' इति । इति श्रुतेरिति शेषः । रश्मीदिति सूर्यादितेजसां नारायणाधीनत्वमुच्यते । तेज इति सर्वजगत्प्रकाशकत्वं नारायणभामा तदधीनभासा तदीयभासा च सर्वं सूयादिजगच्च भाति प्रकाशते प्रकाश्यते च ।।**

## गुर्वर्थदीपिका

यद्यपि 'किमु भाति' इति श्रुतौ ज्ञेयत्वमप्युक्तम् । तथाऽपि ज्ञानप्रार्थनलिङ्गात्सा कोटि-रितः पूर्वमसिद्धैव । अतः परिशेषान्न भातीत्येव कोटिरुत्कटेति भावेनोक्तं न भातीत्युक्ताज्ञेयत्वं चेति । तमेव भान्तमनुभाति सर्वमित्यत्र भान्तं तं परमात्मानमनु अनुसृत्य भाति लोके प्रकाशत इत्युक्तम् । सर्वं भगवत्प्रकाशानुसारिप्रकाशसहितं परप्रकाशकं तेजोरूपं सूर्यचन्द्राग्नि-विद्युदादिकमेव गृह्यते । 'तस्य भासा सर्वमिदं विभाति' इत्यत्र तु भास्यमानं जगदेवोच्यते । भासेति करणार्थकतृतीयोक्तेर्विभातीत्यस्य प्रकाश्यत इत्येवार्थः । अतो न पौनरुक्त्यम् ।

## भावबोधः

कथं नु तद्विजानीयामित्यानुकूल्येन ग्रहणं कस्येति विचार्यमिति न्यायविवरणे पूर्ववाक्यात् साधारणपदमनुवर्तत इति भावेन तत्सूचितमानुकूल्येन गृह्यमाणत्वस्योभयत्र प्रसिद्धिं तत्कारण-प्रदर्शनपूर्वकमाह– **अत्रानुकूल्येनेति ।। सुखशब्दवृत्त्या साधारणस्येति ।।** अनेनोभयत्र प्रसिद्धिसाहचर्यादुभयत्र प्रसिद्धमित्युक्तं भवति । 'यो वै भूमा तत्सुखम्' इत्यादौ भगवति सुख-शब्दवृत्तिर्ज्ञेया ।। **पूर्वमिति** ।। भाष्ये 'अदृश्यत्वादिगुणक' इति सूत्रतदुपात्त 'यत्तदद्रेश्यम्' इति श्रुतिग्रहणवत् 'गतिशब्दाभ्याम्' इति सूत्रांशतदुपात्ताहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्तीति श्रुत्योः परिग्रहणात् तदुक्ताज्ञेयत्वस्याप्याक्षेपादव्यवहितपूर्वाधिकरणसङ्गतिरपीति भावः ।

ननु उदाहृतवाक्ये आनुकूल्येन गृह्यमाणं न प्रतीयत इत्यशङ्कापरिहारार्थं कथं नु तद्विजानीयामित्यानुकूल्येन ग्रहणमिति न्यायविवरणांशाभिप्रायमाह– **आनुकूल्येनेति ।। विष्णोरिति ।।** अत्रानुकूल्येन गृह्यमाणत्वं ज्ञानिसुखस्योत विष्णोरिति चिन्ता । तदर्थं परमं सुखमिति सुखशब्दः किं ज्ञानिसुखपर उत परमात्मपर इति । तदर्थं नपुंसकलिङ्गसुखशब्द-

(भावबोधः)

समानाधिकृत 'तदेतदिति मन्यन्त' इति वाक्यस्थतच्छब्दादिना 'तेषां सुखम्' इत्यव्यवहित-पूर्ववाक्यगतनपुंसकलिङ्गसुखशब्देन प्रकृतस्य ज्ञानिसुखस्य परामर्श उत 'नित्यो नित्यानाम्' इति व्यवहितवाक्यगतपुल्लिङ्गतादृशशब्देन प्रकृतस्य परमात्मन इति । तदर्थं तथा प्रकृतज्ञानि-सुखग्रहणे बाधकमन्यथा प्रकृतपरमात्मग्रहणे साधकञ्च किं नास्त्युतास्तीति । तदर्थं तदेतदिति कथं नु तदिति तच्छब्दसमानार्थकमित्यादितच्छब्दोपेतमेवभान्तमित्यादि वाक्योक्तस्य सर्व-प्रकाशकत्वलिङ्गस्य विष्ण्वैकनिष्ठत्वे प्रमाणं नास्त्युतास्तीति । भाष्योदाहृतश्रुतिलिङ्गं तस्य तेषामित्यस्य ज्ञानिपरत्वज्ञापनार्थम् । तमात्मस्थमित्यंशस्तावदुदाहर्तव्यः । तथा च तद्गत-तच्छब्दार्थज्ञापनार्थम् एको वशीत्यादितत्पूर्वभागोऽप्युदाहृत इति ज्ञातव्यम् ॥ **नपुंसकसुख-शब्देनेति** ॥ नपुंसकलिङ्गशब्देन सुखशब्देन चेत्यर्थः ॥ **तदित्यादीति** ॥ आदिपदेन सुखशब्दादिग्रहणम् । तथा च पूर्वं परमात्मनो नपुंसकशब्देनाप्रकृतत्वादित्यादिशब्दैः सुख-शब्देनाप्रकृतत्वात् परमं सुखमिति सुखशब्देन परामर्शायोगादित्यर्थः । अनेन 'तदेतदिति मन्यन्ते' 'कथं नु तद्विजानीयाम्' इति 'तेषां सुखं शाश्वतं' इत्युक्तज्ञानिसुखपरामर्श इति विपरीतश्रुतिभ्रम इति न्यायविवरणमपि व्याख्यातं भवति । अत्र भ्रमविषयभूतश्रुतिवैपरीत्यं तु परमात्मन आनुकूल्येन गृह्यमाणत्वस्य वाचकानाम्' एको वशीत्यादि' 'तदेतत्' इत्यादि-शब्दानां भिन्नलिङ्गत्वादिरूपमिति भावः । तदेतदिति मन्यन्ते कथमित्यादिन्यायविवरणस्य तदेतदित्यादिना तेषां सुखमिति समीपोक्तज्ञानिसुखग्रहणं; न तु दूरोक्तपरमात्मग्रहण-मित्यर्थान्तरमभिप्रेत्याह **सम्भवत्समीपेति** ॥ 'अनुकृतेः' इति सूत्रे 'आनन्दमयोऽभ्यासात्' इत्यादाविव समन्वेतव्यशब्दादेर्विष्णुपरत्वे एव हेतुर्नोच्यते । किं त्वनिर्देश्यं सुखमित्यत्र व्यवहितपरमात्मग्रहणे समीपोक्तज्ञानिसुखपरित्यागे च हेतुरुच्यत इत्यभिप्रेत्य भाष्ये परमात्मैवा-निर्देश्यसुखरूप इत्युक्तमितिभावेन प्रधानसाध्यादिप्रदर्शनपूर्वकं भाष्यं व्याचष्टे **कथं नु तदित्यादिना** ॥ **परमं सुखमिति सुखश्रुतेरिति** ॥ 'तेषां सुखम्' इति वाक्यगतसुख-श्रुतिव्यावर्तनाय 'परमं सुखम्' इतीत्युक्तम् ॥ **चेतनश्चेतनानामिति** ॥ अनेन यस्य ज्ञाना-च्छाश्वतं सुखं स भगवानिति न्यायविवरणं परमात्मनः प्रकृतत्वप्रदर्शनार्थं प्रवृत्तमित्युक्तं भवति । 'चेतनश्चेतनानाम्' इति वाक्यगतशान्तिपदस्यापि सुखपरत्वात् ॥ **यदनिर्देश्यमिति** ॥ अनेन यद्ब्रह्मानिर्देश्यं सुखमिति वदन्ति तदेतत्स्वरूपमिति मन्यन्त इति न्यायविवरणं व्याख्यातं भवति ॥ **तस्यैवानिर्देश्यत्वादीति** ॥ अनेन परमात्मैवानिर्देश्यसुखरूप इति भाष्यं समन्वयोक्तिफल-

(भावबोधः)

प्रदर्शनपरमपीत्युक्तं भवति । सूत्रे **तस्येति** । तस्य भासेति वाक्यप्रतीकग्रहणमिति ज्ञापयितुं भाष्ये वचनादित्युक्तमित्याशयेनोक्तम् । तस्य भासेतीति भाष्ये सर्वशब्दोऽप्रकाशघटादिसाधारणं न सम्भवतीत्यतस्तेज:पर इत्याह **सर्वं सूर्यादीति** ॥ सर्वशब्दस्य तेज:परत्वेन व्याख्यातत्वा-द'नु'शब्दसमभिव्याहृतस्य भातीत्यस्य भासयतीत्यर्थत्वात् सर्वं भातीत्यस्य न च तद्भासे-त्यत्रानुवृत्त्यसम्भवाच्छेषं पूरयति **जगद्भातीति शेष इति** ॥ अहं तत्तेजो रश्मीदिति भाष्यमुक्त-लिङ्गद्वयस्य विष्णुलिङ्गत्वप्रतिपादकत्वेन व्याचष्टे ॥ **रश्मीदिति** ॥ सूर्यादितेजसामित्यादिना ।

## भावदीपः

अत्र न्यायविवरणे कथं नु तद्विजानीयामित्यानुकूल्येन ग्रहणं कस्येति विचार्यमित्युक्तम् । तत्र पूर्वस्माल्लिङ्गं साधारणमिति पदानुवृत्तिं सूचयन् आनुकूल्येन ग्रहणं कस्येत्युक्त्यैव लब्ध-साधारण्यं व्यनक्ति ॥ **अत्रानुकूल्येनेति** ॥ भगवति ज्ञानिसुखे च साधारणस्येत्यन्वयः । सुखे तावदुक्तलिङ्गं प्रसिद्धमेव । अनुकूलवेदनीयत्वं सुखत्वमिति सर्वसिद्धत्वात् । भगवतोऽपि ज्ञानिनं प्रति प्रियो हि ज्ञानिनोऽत्यर्थमहम् इत्युक्तनिरुपाधीष्टत्वात् । ज्ञानिनं प्रति स्वसुख इव भगवत्यपि तल्लिङ्गं सिद्धमिति भगवति ज्ञानिसुखे च साधारणस्येत्युक्तम् । परमात्मैवानिर्देश्य-सुखरूप इति भाष्योक्तिसूचितं साधारण्यमाह ॥ **सुखशब्दवृत्त्येति** ॥ प्राक्तनचशब्दोऽत्राप्य-न्वेति । परमं सुखमित्युक्तसुखशब्दस्य तेषां सुखं शाश्वतमिति पूर्वत्र ज्ञानिसुखे यो वै भूमा तत्सुखमिति भगवति च प्रयोगेण चेत्यर्थः । भाष्यं सङ्गतिपरत्वेन तावद्व्याचष्टे ॥ **पूर्वमिति** ॥ अदृश्यत्वनये ॥ **तेषामदृश्यत्वाज्ञेयत्वे इति** ॥ तेषां मध्ये अद्रेश्याग्राह्यपदोक्ते इत्यर्थः । ज्ञानिसुखस्योच्यत इत्यस्यार्थः ॥ **कस्यचिदिति** ॥ केनेत्यत: तदेतदिति पूर्वभाष्यमिति मत्वाऽऽह ॥ **तदेतदिति** ॥ भाष्ये पूर्वपक्षयुक्तिसूचनाय एकदेशमात्रोक्तावपि आदिपदोपात्त-लिङ्गार्पकांशमाह ॥ **कथं नु तदिति** ॥ पूर्वार्धेनानिर्देश्यत्वस्य उत्तरार्धेन न भातीत्यज्ञेयत्वस्य चोक्तेरिति भाव: ।

अत्र भाष्ये परमात्मैवानिर्देश्यसुखरूप इत्युक्त्याऽऽनुकूल्येन गृह्यमाणत्वं सुखत्वरूप-लिङ्गमिति भाति । तथात्वे न्यायविवरणे कथं नु तद्विजानीयामित्यानुकूल्येन ग्रहणमित्युक्तिर्न युक्ता तद्वाक्ये सुखत्वलिङ्गाप्रतीतेरित्यतो लिङ्गस्वरूपं विविच्याऽऽह ॥ **आनुकूल्येनेति** ॥ विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङिति स्मरणात् । विजानीयामिति लिङ्ज्ञानार्थं

(भावदीपः)

ज्ञेयस्य प्रार्थना प्रतीतेरिति वा । कथं पुत्रं पश्येयम् आयाति न वेत्यत्र दर्शनार्थं पुत्रागमन-प्रार्थनप्रतीतेरिव कथं नु इति वाक्ये ज्ञानाधर्माविर्भावरूपभानप्रार्थनप्रतीतेरिति वाऽभिप्रायः । सुखरूप इति भाष्यं तु फलितोक्तिपरमिति भावः । तेषां सुखमित्यादेर्भावमाह ॥ **तस्य चेति** ॥ प्रकृतज्ञानिसुखवाचिसुखश्रुत्या ज्ञानिसुखनिष्ठत्व इत्यर्थः । ज्ञानिसुखस्यानिर्देश्यत्वमज्ञेयत्वं चोच्यत इत्यस्य भावमाह ॥ **अनिर्देश्यत्वमिति** ॥ प्राग्विष्णुधर्मतयोक्तमिति योज्यम् । इत्यवश्येत्युक्तार्थम् । निर्णेतव्यत्वम् । आनुकूल्येन गृह्यमाणस्येत्यनुषङ्गः । पूर्वपक्षादिपरत्वेनापि व्याकुर्वन् ज्ञानिसुखस्येत्येतत्प्रतिज्ञापरत्वेन व्याचष्टे ॥ **ज्ञानिसुखस्यैतल्लिङ्गमिति** ॥ कथं नु तदिति वाक्योक्तमानुकूल्येन गृह्यमाणत्वरूपमित्यर्थः । अनिर्देश्यमित्यादिपूर्वभाष्यलब्धं हेतुमाह ॥ **परमं सुखमितीति** ॥ तस्यैव च कथं नु तदिति तच्छब्देन परामर्शादिति भावः । तदेतदिति मन्यन्ते कथं नु तद्विजानीयामिति तेषां सुखं शाश्वतमित्युक्तज्ञानिसुखग्रहणमिति विपरीत-श्रुतिभ्रम इत्यन्यत्रोक्तरीत्या सुखश्रुतेर्निरवकाशत्वाय तद्विशेषणभूततदादिसर्वनामश्रुतेर्निरवकाश-त्वोक्तिपरतया तेषामित्यादिभाष्यं शङ्कापूर्वं व्याचष्टे ॥ **न चेति** ॥ सुखविशिष्टेति सूत्रे लक्षणं परमानन्द इत्युक्तदिशा वा भूमा सम्प्रसादादित्यत्रोक्तदिशा यो वै भूमा तत्सुखमित्युक्त्या वेति भावः । तेषामिति तच्छब्दार्थसूचनाय एको वशीति त्रिपाद्युक्तिः । आत्मस्थं स्वस्थितम् । तदिति प्रातिपदिकश्रुतेः सावकाशत्वमाशङ्क्य नपुंसकलिङ्गेन तस्या निरवकाशत्वमाह ॥ **न चेति** ॥ तथा च तस्यैवेत्ययुक्तमिति भावः ॥ **प्रकृतत्वादिति** ॥ तत्रैव मन्त्रे । एको वशीति प्रकृतत्वादित्यर्थः ।

ननु पूर्वत्र एष आत्मेत्यत्र एतच्छब्दस्य पूर्वोक्तज्योतिःपरत्वेऽपि विधेयात्मापेक्षया पुल्लिङ्गत्व-वदिहापि विधेयसुखापेक्षया नपुंसकत्वमस्त्वित्याशङ्कानिरासायोक्तं तदित्यादित्यादिपदम् । तदेतच्छब्दयोरेकस्य तथात्वेऽप्येकस्योद्देशकत्वावश्यम्भावेन द्वयोर्नपुंसकत्वायोगादित्यर्थः । अङ्गीकृत्य चेदमुदितम् । वस्तुतस्तु तदिति प्रातिपदिकश्रुतिरेव स्वतो निरवकाशेति भावेनाह ॥ **सम्भवदिति** ॥ **दूरस्थेति** ॥ **ज्ञानिसुखेन** व्यवहितेत्यर्थः । अन्यथा पूर्वत्रापि तस्मिन्य-दन्तरित्यत्राप्याकाशपरामर्शित्वं तच्छब्दस्य न स्यात् । व्यवहितपुण्डरीकपरत्वमेव स्यादिति भावः ॥ **अत इति** ॥ सन्निहितपरामर्शिनपुंसकं तदेतत् श्रुतिसमानाधिकृतसुखश्रुत्यनुरोधा-दित्यर्थः ॥ **अनिर्देश्यत्वादीति** ॥ काठके आथर्वणे च श्रुतमिति योज्यम् । भाष्ये परमात्मै-

(भावदीपः)

वेत्यनन्तरम् आनुकूल्येन गृह्यमाण इति शेषं मत्वा भाष्यमाकांक्षाक्रमेण व्याचष्टे ॥ **कथं नु तदिति** ॥ सुखरूप इत्यस्यार्थं इति भ्रमनिरासाय कथं नु इति वाक्योक्तिः । अनिर्देश्यसुखरूप इति भाष्यं प्रागुक्तसुखश्रुतेः सावकाशत्वोक्तिपरतया तात्पर्यतो व्याचष्टे ॥ **न चेति** ॥ ननु तदेतत् श्रुतिसामानाधिकरण्यात्साऽपि निरवकाशेत्युक्तमिति शङ्कते ॥ **तेषामिति** ॥ **नेति चेदिति** ॥ सुखश्रुतेर्विष्णुपरत्वं नेति चेदित्यर्थः । यज्ज्ञानाच्छाश्वतं सुखं स भगवान् यद्ब्रह्म अनिर्देश्यं सुखमिति वदन्ति तदेतत्स्वरूपमिति मन्यन्त इत्यन्यत्रोक्तं वाक्यमत्र व्याकुर्वन् तदुत्तरत्वेन भगवानित्यन्तस्य भावमाह ॥ **चेतन इति** ॥ यद्ब्रह्मेत्यादेः पूर्वकृतशङ्कान्तर-निवर्तकत्वेनार्थमाह ॥ **न चेत्यादिना** ॥ **यदिति** ॥ 'यतो वाचो निवर्तन्ते' इत्यादौ प्रसिद्धं यदनिर्देश्यमित्यर्थः । गृह्णन्ति ज्ञानार्थं प्रार्थयन्त इत्यर्थः ।

काठकभाष्ये तु तदेव भगवद्रूपं परमं सुखं ज्ञानिसुखं तु विष्णुमात्रमिति सुखं विधेय-मित्यर्थान्तरमुक्तम् । तत्र तत् गुह्यं ब्रह्मेत्युपक्रान्तम् एतत् एकं रूपमिति मध्ये चोक्तं ब्रह्मणो रूपं परमं सुखमित्यर्थ इति नपुंसकोपपत्तिरुक्ता चन्द्रिकायाम् । इदानीं तमेवेत्यादिभाष्यं सम्भवत्समीपेत्यादिना पूर्वोक्तशङ्काव्यावर्तकत्वेन व्याचष्टे ॥ **न च वक्तव्यमिति** ॥ **दूरस्थेति** ॥ यद्यपि तेषां सुखमित्युक्तज्ञानिसुखात् एको वशीत्यादिनोक्तो विष्णुर्दूरस्थः । चेतनश्चेतना-नामित्युक्तस्तु सन्निहित एव । एतन्मन्त्रस्य तेषां सुखमित्यतोऽनन्तरमाम्नानात् अनेनैव मन्त्रेण पूर्वं प्रकृतत्वस्योक्तेः । तथाप्यभ्युपेत्यवादेन वा चेतन इति मन्त्रेऽपि तेषां शान्तिः शाश्वती नेतरेषामिति श्रवणेन शान्तिशब्दितसुखव्यवधानं चेतन इत्यस्याप्यस्तीति वा दूरस्थेत्युक्तम् । अनुभानं नाम तदिच्छानुरोधेन भानम् अनुकृतिशब्देन अनुभानमुच्यते । भानस्यापि क्रिया-रूपत्वात् । अन्यकृतीनामप्युपसङ्ग्रहार्थमनुकृतेरित्युक्तमिति तत्वप्रदीपोक्त्या अनुकृतेरित्यस्य अनुभानादित्यर्थं मत्वाऽऽह ॥ **एतदधीनप्रकाशेति** ॥ सर्वमित्यस्यार्थः ॥ **सूर्यादीनामिति** ॥ एतदधीनेत्युक्त्या सूत्रे तस्येति पदमानुकूल्येन गृह्यमाणपरं सत् अनुकृतेरित्यतः पूर्वमण्यन्वेति स्वस्थाने च स्थितं सत् तस्य भासेति वाक्यप्रतीकं च भवतीति दर्शितम् । स्पष्टीकृतं चैतत्तन्त्र-दीपिकायामस्माभिः । भाष्ये अनिर्देश्यसुखरूपत्वे च अनुकृत्यादेर्हेतुत्वोक्त्या समीपस्थदूर-स्थत्यागोपादानयोर्हेतुत्वं लिङ्गसमन्वयहेतुत्वं च लब्धमिति दर्शयन् भाष्यस्य फलितोक्तिपरत्वेन भावमाह ॥ **अत इति** ॥ उक्तलिङ्गब्बाभावादित्यर्थः । सर्वं सूर्यादीत्युक्त्या श्रौतसर्वशब्दोऽपि

(भावदीपः)

सूर्यादितेजोमात्रपरो न सर्वजगत्पर इति व्याख्यातं भवति । न च तद्भासेति भाष्ये शेषमाह ॥ **जगद्भातीति शेष इति** ॥ तेन तस्य भासेति श्रुतौ सर्वशब्दो जगत्परो न तेजोमात्रपर इति दर्शितम् । न हीत्यादेर्भावमाह ॥ **एतदुभयस्येति** ॥ सर्वतेजोनियन्तृत्वसर्वजगत्प्रकाशकत्व-रूपोभयस्येत्यर्थः ॥ **तदुक्तमिति** ॥ चतुर्थस्कन्धतात्पर्ये विंशेऽध्याये भगवत्पादोदाहृत-शब्दनिर्णयवाक्ये सन्निधेरपि योग्यताया बलीयस्त्वमुक्तमित्यर्थः । इति शब्दानन्तरं श्रुतेरिति शेषमाह ॥ **इति श्रुतेरिति शेष इति** ॥ प्रकृतार्थद्वयं श्रुतौ व्यनक्ति ॥ **रश्मीदिति** ॥ अग्नीदित्यस्य अग्निसमिन्धकत्वमिव रश्मीच्छब्दस्य रश्मिसमिन्धकत्वमर्थ इत्युपेत्योक्तम् ॥ **सूर्यादीति** ॥ **नारायणेति** ॥ नारायणं पुरुषमिति वाक्यशेषादिति भावः । एषा च श्रुति-रत्नर्नयोक्ता व्याख्याता च । श्रुत्यनुरोधेन भाष्यस्थपदानामप्यर्थद्वयमाह ॥ **नारायणेति** ॥

## अभिनवचन्द्रिका

**अत्रानुकूल्येनेति** ॥ आनुकूल्येन गृह्यमाणसुखं 'अनुकूलवेद्यं सुखं, प्रतिकूलवेद्यं दुःखम्' इति प्रसिद्धेः, अनुकूलवेद्ये तस्मिन् 'अनिर्देश्यं परमं सुखम्' इति सुखशब्दवृत्तेश्च । सुखशब्दश्च 'यो वै भूमा तत्सुखम्' इति श्रुत्या भगवति लोकव्यवहाराच्च ज्ञानिसुखे प्रसिद्ध इति सुखशब्दविषयमात्रनिष्ठम् । आनुकूल्येन गृह्यमाणत्वलिङ्गम्, उभयत्र प्रसिद्धप्रायमित्यर्थः । एतेन सुखशब्दस्योभयत्र प्रसिध्या प्रकृतलिङ्गस्योभयत्र प्रसिद्धत्वकथनमयुक्तमिति परास्तम् । न च पादान्तर्भावाभावः । साक्षादुपचारेण वा साधारणशब्दानामिह समन्वयस्य विवक्षितत्वात् । **अदृश्यत्वाज्ञेयत्वे इति** ॥ नन्वत्र काठके अज्ञेयत्वमेवोच्यते नत्वदृश्यत्वम् । 'अनिर्देश्यम्' इत्यस्य निर्देष्टुमशक्यमित्यर्थकत्वेनाऽदृश्यार्थकत्वाभावादिति चेत्, सत्यम् अनिर्देश्यमित्येतत् स्वभावात् निर्देष्टुमशक्यस्यैव प्रतिपादकम्, तथापि महावराहपुराणे–

'सम्यग्भाति न भातीति जानीयां तत्कथं न्वहम् ।
तत्प्रसादमृते दिव्यमनिर्देश्यं परं सुखम् ॥'

इति अनिर्देश्यमितिपदेन अदृश्यत्वस्याऽभिहितत्वेन तत्समानाख्यानादिहापि तदेव ग्राह्य-मिति भावेन अदृश्यत्वाज्ञेयत्वे कस्यचिदानुकूल्येन गृह्यमाणस्य काठके कथ्येते इत्युक्तम् । पुराणवाक्ये 'अनिर्देश्यम्' इत्यनेनाऽदृश्यत्वमेवोक्तमित्यभ्युपेयम् । तथा हि – 'जानीयां तत्कथं

(अभिनवचन्द्रिका)

न्वहमित्यपरोक्षज्ञानप्रार्थनमुक्त्वा तत्प्रसादमृतेऽनिर्देश्यमित्युक्ते तत्प्रसादमृते द्रष्टुमशक्यत्वस्यैव लाभात् । भगवत्प्रसादमृते भगवान् नैव द्रष्टुं शक्यः, मम तु भगवत्प्रसादाभावात् कथं जानीयामिति योजनासम्भवात् । अन्यथा भगवत्प्रसादं विना निर्देश एव न स्यात्, दर्शनन्तु भवेदेवेति 'कथं नु तद्विजानीयाम्' इति प्रार्थनाऽनुपपन्ना स्यात् । इक्षुक्षीरगुडादीनां माधुर्यस्य पार्थक्येन निर्देष्टुमशक्यत्वेऽपि अनुभवस्यानुभवसिद्धत्वात् । अनेनास्याऽधिकरणस्याऽदृश्यत्वाधिकरणेन तदधिकरणप्रतिपाद्यनिष्ठाऽदृश्यत्वाज्ञेयत्ववत्प्रमेयप्रतिपादकत्वमेव सङ्गतिरित्युक्तं भवति ॥ **तदेतदितीति** ॥ तदेतत् पूर्वोक्तं भगवद्रूपम्, अनिर्देश्यं, परमं सुखं परमसुखात्मकमिति ज्ञानिनो मन्यन्ते । तत्सुखात्मकं भगवद्रूपम्, कथं न्वहं जानीयाम् । भगवद्रूपं दर्शनायोग्यं किमिति पृच्छति ॥ **किमिति** ॥ उत्तरमाह ॥ **भाति न भाति वेति** ॥ भगवदनुग्रहे भाति, अन्यथा न भातीत्यर्थः ॥ **तस्येति** ॥ नपुंसकशब्देनाऽप्रकृतस्य तदिति परामर्शायोगादित्यर्थः । सुखपदन्तु कोऽसौ नपुंसकशब्द इति शङ्कापरिहारायेति बोध्यम् । **यदनिर्देश्यमिति** ॥ अस्मिन्नेव मन्त्रे 'परमं सुखम्' इति यन्मन्यन्ते इति नपुंसकसुखशब्देन परमात्मानम्, आदौ निर्दिश्य, पश्चात्तदेतदिति तच्छब्देन परामर्शाङ्गीकारात् नपुंसकसुखशब्देनाऽप्रकृतपरामर्शो नेति भावः ।

अस्तु वा 'एको वशी' इति वाक्योक्तदूरस्थपरामर्शः, तथापि न तत्परामर्शे कारणाभावाख्यो दोष इत्याह ॥ **न च वक्तव्यमिति** ॥ ज्ञानिसुखस्यैव तच्छब्देन परामर्शाङ्गीकारो युक्तः, न तु दूरस्थस्य परमात्मनः नपुंसकशब्देन परामर्शसिद्धये पूर्वोक्तयोजनाङ्गीकारो युक्तः । स्वरसत एव नपुंसकसुखशब्देन प्रकृतं ज्ञानिसुखमपहाय, दूरस्थपरमात्मग्रहणे कारणाभावादिति न वक्तव्यमिति भावः । एतेन पूर्वोक्तयोजनापक्षे ज्ञानिसुखापेक्षया अतिसमीपस्थपरामर्शलाभात् दूरस्थपरामर्शे कारणाभाव इत्युक्तमिति परास्तम् । न हीति वाक्यगतसर्वशब्दार्थमाह ॥ **सर्वं सूर्यादिजगदिति** ॥ 'न च तद्भासा' इति वाक्ये शेषमाह ॥ **भातीति शेष इति** ॥ **तथापि कुत इति** ॥ ज्ञानिसुख इव तदुभयमपि अत्रानुपपन्नमिति भावः । अत्र गुणसूत्रम् 'अपि स्मर्यते' इति । नन्वत्राऽपिशब्दस्य समुच्चयार्थकत्वात् स्मर्यतेऽपीति वक्तव्यम्, लघु चैवं सति सूत्रं स्यादिति चेत्, सत्यम् अपिशब्दः समुच्चयार्थक इति अन्ते प्रयोक्तव्य इति तथापि अन्त एव समुच्चयशब्दः प्रयोक्तव्य इति न नियमः । आदावपि प्रयोगो युक्त इति द्योतनायैवमुक्तम् । अत एव 'अपि च किं च' इति आदौ समुच्चयमुक्त्वा दूषणाद्यभिधानं दृश्यते ।

## वाक्यार्थमुक्तावली

**सुखशब्दवृत्या साधारणस्येति** ॥ अनेनोभयत्र प्रसिद्धसाहचर्यादुभयत्र प्रसिद्धमित्युक्तं भवति । परमसुखशब्दस्य येऽनु पश्यन्ति धीरास्तेषां सुखं शाश्वतमिति ज्ञानिसुखे यो वै भूमा तत्सुखमिति भगवति च प्रयोगादुभयत्र प्रवृत्तिर्ज्ञेया ॥ **श्रुत्यादिसङ्गतिमिति** ॥ अव्यवहिताधिकरणसङ्गतिरपि गतिशब्दाभ्यामित्यत्र अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्तीति परमेश्वरस्यादृश्यत्वमुक्तम् । तच्चानुकूल्येन गृह्यमाणस्योच्यत इति अदृश्यत्वाधिकरणेनाक्षेपिकेति स्फुटैव । अदृश्यत्वादयः परमेश्वरगुणा उक्ताः तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखमित्यादिनाऽनिर्देश्यत्वमज्ञेयत्वं चोच्यत इत्यंशमुक्त्वा, इत्यतःपरं तेषां मध्ये इति अज्ञेयत्वं चेत्यतः परं, कस्यचिदित्यध्याहारेण सङ्गतिपरतया योजयति– **पूर्वमिति** ॥ अद्रेश्यमग्राह्यमित्युक्तादृश्यत्वाज्ञेयत्वे अनिर्देश्यं, न भातीति, पदाभ्यां काठके कथ्येते इत्यर्थः । न त्वानुकूल्येन गृह्यमाणत्वं नामानुकूल्येन वेदनीयत्वं, तच्च सुखशब्दप्रवृत्तिनिमित्तम् । तथा च लिङ्गसमन्वयविरोधः । अन्यथातिप्रसङ्गः ।

किं च तस्य सुखमात्रनिष्ठत्वेनोभयत्र प्रसिद्धत्वायोगः । किं च ज्ञानिसुखस्याप्यदृश्यत्वमज्ञेयत्वं च परमात्मैवानिर्देश्यसुखरूप इति भाष्यवाक्यद्वयपर्यालोचनायामनुकूलवेदनीयत्वरूपसुखत्वं लिङ्गमिति प्रतीयते । तच्च 'कथं नु तद्विजानीयाम्' इत्यानुकूल्येन ग्रहणमिति न्यायविवरणविरुद्धं, तद्वाक्ये सुखत्वरूपलिङ्गप्रतीतेरित्यतः लिङ्गस्वरूपं विविच्याह ॥ **आनुकूल्येनेति** ॥ आनुकूल्येनाभिलषितज्ञानतया, ग्रहणमुच्चरणं स्वीकरणं चेति न्यायविवरणटीकोक्तेः ज्ञानार्थं प्रार्थितत्वं लभ्यत इति ज्ञेयम् । श्रुतितस्तल्लाभस्तु, विधिनिमन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङिति स्मरणात् तदनिर्देश्यं परमं सुखं स्वतो भाति वेत्यतः तत्प्रसादमृते कथं वा जानीयां किन्तु तत्प्रसादादेव जानीयामिति ज्ञानार्थं प्रसादस्य प्रार्थितत्वे, ज्ञेयस्यापि प्रार्थितत्वं लभ्यते । यद्वा, यदनिर्देश्यं परमं सुखं तत्प्रसादे सति किमु भाति तत्प्रसादमृते न भाति वा । व्यवस्थितविकल्पार्थौ किमु वा शब्दाविति हेतोस्तत्प्रसादमसम्पाद्य कथं नु केन प्रकारेण तद्विजानीयामतः तत्प्रसन्नं भवत्विति ज्ञानार्थं प्रार्थयन्ति । तदनिर्देश्यं परमं सुखमेतस्य प्रकृतस्य परमात्मनो रूपमिति मन्यन्त इति योजनायां ज्ञानार्थं प्रार्थितत्वं लभ्यते । अथवा, कथं नु पुत्रं पश्येमायाति नवेत्यत्र दर्शनार्थं पुत्रागमनप्रार्थनाप्रतीतेरिव कथं नु

(वाक्यार्थमुक्तावली)

इतिवाक्ये ज्ञानार्थमाविर्भावरूपभानप्रार्थनाप्रतीतेरिति द्रष्टव्यम् । ज्ञानिसुखस्येति भाष्यन्तु पूर्वपक्षसिद्धान्ततत्फलप्रदर्शनपरमिति वक्ष्यत इति भावः ॥ **विष्णोरन्यस्य वेति** ॥ आनुकूल्येन गृह्यमाणत्वं किं ज्ञानिसुखस्योतविष्णोरिति तदर्थं सुखश्रुतिः विष्णावनवकाशवर्ती उत सावकाशेति, तदर्थं तदेतदिति मन्यत इति तच्छब्देन तेषां सुखमिति अव्यवहितज्ञानि-सुखपरामर्शः उत नित्यो नित्यानामिति व्यवधानेन प्रकृतपरमात्मपरामर्श इति, तदर्थम् अव्यवहितज्ञानिसुखं परित्यज्य व्यवहितपरमात्मपरामर्शे हेतुर्नास्त्युतास्तीति । इत्यादिना ज्ञानिसुखस्योच्यत इति भाष्यमानुकूल्येन गृह्यमाणत्वमिति पदाध्याहारेण सयुक्तिकपूर्वपरतया योजयति ज्ञानिसुखस्येत्यादिना ॥ **परमं सुखमितीति** ॥ तस्यैव कथं नु तदिति तच्छब्देन परामर्शादिति भावः ॥ **न चेति** ॥ भूमादिकरणोक्तरीत्येत्यर्थः । तेषामित्युक्तानां ज्ञानित्व-लाभाय परमात्मनोऽपि प्रकृतत्वशङ्कोत्थापनाय च एको वशीत्यादि पूर्वांशोदाहरणम् । **नपुंसकसुखशब्देनेति** ॥ नपुंसकशब्देनेत्यर्थः ॥ **तदित्यादीति** ॥ आदिपदेन एतत्सुख-शब्दादिग्रहणम् ।

एतेनैतदपि निरस्तम् । पूर्वसूत्रे एष आत्मेत्यत्रैतच्छब्दस्य, पूर्वोक्तज्योतिःपरत्वेऽपि विधेयात्मापेक्षया पुल्लिङ्गवदिहापि विधेयसुखापेक्षया नपुंसकत्वमस्त्विति । अङ्गीकृत्य चेद-मुदितम्। वस्तुतस्तु तदितिश्रुतिरेव स्वतो निरवकाशेति भावेनाह ॥ **सम्भवदिति** ॥ अतो ज्ञानिसुखस्येति एतेन ज्ञानिसुखस्यापीति भाष्यं पूर्वपक्षफलप्रतिपादकं न तु सुखत्वस्य लिङ्गत्वाभिप्रायेणेत्युक्तं भवति । सूत्रे आनन्दमयाधिकरण इव समन्वेतव्यशब्दस्य विष्णुपरत्व एव हेतुर्नोच्यते । किं त्वनिर्देश्यं परमं सुखमित्यत्र व्यवहितपरमात्मग्रहणे समीपोक्तज्ञानि-सुखपरित्यागे च हेतुरुच्यत इत्यभिप्रेत्य परमात्मैवानिर्देश्यसुखरूप इत्युक्तमिति भावेन प्रधान-साध्यादिप्रदर्शनपूर्वकं व्याचष्टे ॥ **कथं नु तदित्यादिना** ॥ **परमं सुखमितीति** ॥ परमत्व-विशेषितसुखश्रुतेरित्यर्थः ॥ **प्रकृतत्वादिति** ॥ शाश्वतमिति परमत्वेनैव प्रकृतत्वादिति भावः ॥ **आनुकूल्येन गृह्णन्तीति** ॥ अभिलषितज्ञानतया गृह्णन्ति वदन्ति स्वीकुर्वन्ति वा ज्ञानार्थं प्रार्थयन्तीति यावत् ॥ एतदित्यस्यार्थः **प्रकृतेति** ॥ **दूरस्थेति** ॥ ननु तेषां सुखमित्युक्त-ज्ञानिसुखात् यद्यप्येको वशीत्यादिनोक्तो विष्णुर्दूरस्थः तथापि चेतनश्चेतनानामित्युक्तस्तु सन्निहित एव । एतन्मन्त्रस्य तेषां सुखमित्यनन्तरं पठितत्वात् । अत एव चेतनश्चेतनानामिति

(वाक्यार्थमुक्तावली)

परमात्मनो प्रकृतत्वादित्युक्तम् । अन्यथा एको वशीति प्रकृतत्वादित्यवक्ष्यदिति चेन्न । परेण हि कथं नु तद्विजानीयामित्यस्याव्यवहितपूर्वमन्त्रे नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् । तमात्मस्थं येऽनु पश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषामिति शान्तिशब्देन सुखस्य प्रकृतत्वेऽपि तदेतदिति न तत्परामर्शः कर्तुं युक्तः । स्त्रीलिङ्गशान्तिपदेन प्रकृतस्य नपुंसकसुखशब्देन परामर्शायोगात् । अतस्तत्पूर्वमन्त्रे तेषां सुखमित्युक्तस्य परामर्श इत्यभ्युपगतं तत्र चैको वशीत्यस्य व्यवहितत्वमुक्तं, तदभ्युपेत्य वा व्यवहितमन्त्रेऽपि शान्ति-शब्दितसुखव्यवधानं, चेतन इत्युक्तस्यास्तीति वा दूरस्थेत्युक्तम् । नपुंसकसुखश्रुत्यनुपपत्ते-रुक्तत्वात्कथञ्चिदित्युक्तम् । अनुभानं नाम तदिच्छानुरोधेन भानम् । अनुकृतिशब्देनानुभान-मुच्यते । भानस्यापि क्रियारूपत्वात् । अन्यकृतीनामप्युपसङ्ग्रहार्थमनुकृतेरित्युक्तमिति तत्वप्रदीपोक्त्यानुकृतेरित्यस्यानुभानादित्यर्थं मत्वाऽऽह ॥ **एतदधीनप्रकाशेति** ॥ सूत्रे तस्येति प्रतीकग्रहणमिति भावेन भाष्ये वचनाच्चेत्युक्तमिति मत्वा व्याचष्टे ॥ **तस्य भासेति** ॥ भाष्येऽनिर्देश्यसुखरूप इति वचनं सुखश्रुतेः सावकाशत्वाय समन्वयोक्तिफलप्रदर्शनपरमपीत्युक्तं भवति । सर्वशब्दः तेजोमात्रपर इत्याह ॥ **सर्वं सूर्यादीति** ॥ सर्वशब्दस्य तेजोमात्रपरत्वात्, अनुशब्दसमभिव्याहृतस्य भातीत्यस्य भासयतीत्यर्थत्वात् सर्वं भातीत्यस्य न च तद्भासेत्यत्रानु-वृत्त्यसम्भवात्तच्छेषं पूरयति ॥ **जगद्भातीति शेष इति** ॥ सूत्रे तस्य चेति शब्दः यथायुक्ति-समुच्चायक तथा लिङ्गद्वयस्य विष्णुनिष्ठत्वे श्रुतिसमुच्चायकोऽपि भवति इति भावेन भाष्ये तदुदाहरणमित्यभिप्रेत्यावतारयति ॥ **अस्त्वेवं तदुभयमिति** ॥ **व्यवधानेनेति** ॥ अत्र सन्निधेरपि योग्यता बलीयसीत्युक्तमिति भावः ॥ **रश्मीदितीति** ॥ रश्मीनीरयतीति व्युत्पत्त्येति भावः । तथैव हि तत्वप्रदीपोक्तेः । चन्द्रिकायामग्नीच्छब्दस्याग्निसम्बन्धिकत्वमिव रश्मीच्छब्दस्य रश्मिसम्बन्धिकत्वमर्थ इत्युक्तम् ॥ **नारायणेति** ॥ नारायणं पुरुषमिति वाक्यशेषादिति भावः । तदीयेति तदधीनभासा सूर्यादि प्रकाशते तदीयभासा जगत्प्रकाश्यत इत्यर्थः । नारायणभासा सर्वं भातीत्यस्य श्रुत्यनुरोधादर्थद्वयमेतदिति ज्ञेयम् । सूत्रे आनुकूल्येन गृह्यमाणमिति योग्यतया-न्वेति ॥ मुख्यत एवोक्तावनुकृतिस्तत्रैव हेतुरिति प्रतीयेत, न चैवम् । किं त्वनुकृतिर्व्यवहित-परमात्मग्रहणे समीपप्रकृतज्ञानिसुखत्यागे च हेतुरिति सूचयितुं मुखतोऽनुक्तिः ।

सूत्रे तस्येति वाक्यविशेषप्रतीकग्रहणात्समन्वेतव्यलाभाच्च ॥ **तस्येत्यावर्तते** ॥ एकस्यानु-कूल्येन गृह्यमाणस्येत्यर्थः । अपरस्य प्रतीकरूपत्वम् । आनुकूल्येन गृह्यमाणस्यान्वयानुसारेण

(वाक्यार्थमुक्तावली)

सूर्यादीनां भानरूपकृतेः क्रियाश्रवणात्तस्य च तस्य भासा सर्वमिदं विभातीति वाक्ये सर्वस्यापि तत्प्रभाप्रकाश्यत्वश्रवणाच्च । न चैतल्लिङ्गद्वयं वैष्णवमिति कुत इति वाच्यम् । अहं तत्तेज इत्यत्र तयोर्वैष्णवत्वस्य तत्रोक्तत्वादिति सूत्रार्थः । सूर्यादिगत, तापन, शोषण, पाचनादिक्रियाणामपि तदायत्तत्वद्योतनायानुभानादित्यनुक्त्वा कृतिग्रहणमिति तत्त्वप्रदीपे स्पष्टम् ।

## तत्त्वसुबोधिनी

उभयत्र प्रसिद्धशब्दसाहचर्येणोभयत्र प्रसिद्धिमाह ॥ **सुखशब्दवृत्त्या साधारणस्येति** ॥ यो वै भूमा तत्सुखमित्यादौ भगवति सुखशब्दवृत्तिर्ज्ञेया । अत्र पूर्वाधिकरणन्यायेन तद्वैषम्येण वा पूर्वपक्षोत्थानादनन्तरसङ्गतिः ॥ **तदेतदिति** ॥ यत्तत्सुखमनिर्देष्टुमशक्यं परमप्रकृष्टं प्राकृत-वाङ्मनसयोरगोचरं एवं भूतं तत्प्रत्यक्षमिति ये ब्राह्मणा मन्यन्ते तत्कथं नु विजानीयां इद-मित्यात्मबुद्धिविषयमापादयेयं तत्किं भाति दीप्यते प्रकाशात्मकं तद्यतोऽस्मद्बुद्धिगोचरत्वेन विभाति स्पष्टं दृश्यते । किं वा नेतीति वा वाक्यार्थः ।

ननु उदाहृतवाक्ये आनुकूल्येन गृह्यमाणं न प्रतीयत इत्यत आह ॥ **आनुकूल्येनेति** ॥ न चानेन ज्ञानार्थं प्रार्थनं प्रतीयत इति वाच्यम् । विजानीयामिति लिङा ज्ञानार्थं ज्ञयस्य प्रार्थनाधीरित्यभिप्रेत्य कथं नु पुत्र पश्येयं स आगच्छति वा न वेत्यत्र यथा पुत्रज्ञानार्थं तदा-गमनप्रार्थनाधीः तथा कथं नु तद्विजानीयामिति वाक्ये ज्ञानार्थमाविर्भावरूपमानप्रार्थनाधी-रित्यभिप्रेत्योक्तमिति भावः । एकः स्वगतभेदरहितः । वशी सर्वमस्य वशे वर्तत इति वशी । सर्वभूतान्तरात्मा सर्वभूतान्तर्यामी यः । एकं रूपं बहुधा करोत्यवतारादिना तमात्मस्थं ये धीराः अनुपश्यन्ति तेषां शाश्वतं सुखं नेतरेषामित्यर्थः । न च समग्रवाक्योदाहरणं किमर्थमिति वाच्यम् । भाष्योदाहृतश्रुतिगतस्य ज्ञानिपरत्वज्ञापनार्थं तमात्मस्थमित्यंशस्तावदुदाहर्तव्यः । तथा च तद्गततच्छब्दार्थज्ञापनार्थं एको वशीत्यादि तत्पूर्वभागोऽप्युदाहृत इति ज्ञातव्यम् । **नपुंसक-सुखशब्देनेति** ॥ नपुंसकलिङ्गशब्देन सुखशब्देन चेत्यर्थः ॥ **तदित्यादीति** ॥ आदिशब्देन सुखशब्दादिग्रहणम् । तथा च पूर्वं परमात्मनो नपुंसकशब्देनाप्राकृतत्वात्तदित्यादिशब्दे सुखशब्देनाप्रकृतत्वात्परमं सुखमिति सुखशब्देन परामर्शायोगादित्यर्थः ।

किञ्च समीपोक्तपरामर्शे सम्भवति दूरस्थपरामर्शस्यान्याय्यत्वात्समीपोक्तज्ञानिसुखस्यैवात्र

(तत्त्वसुबोधिनी)
परामर्श इत्याह ॥ **सम्भवादिति** ॥ अनुकृतेरिति सूत्रे आनन्दमयोऽभ्यासादित्यादाविव समन्वेतव्यशब्दादेर्विष्णुपरत्व एव हेतुनोच्यते किन्तु अनिर्देश्यसुखमित्यत्र अविहितपरमात्मग्रहणे समीपोक्तज्ञानिसुखपरित्यागे च हेतुरुच्यत इत्यभिप्रेत्य भाष्ये परमात्मा वाऽनिर्देश्यसुखरूप इत्युक्तमित्यभिप्रेत्य प्रधानसाध्यादिप्रदर्शनपूर्वकं भाष्यं व्याचष्टे ॥ **कथं नु तदित्यादिना** ॥ **परमं सुखमिति** ॥ सुखश्रुतेरिति । तेषां सुखमिति वाक्यगतसुखश्रुतिव्यावर्तनाय परमं सुखमित्युक्तम् ॥ **तस्येति** ॥ तस्य भासेति वाक्यं प्रतीकग्रहणमिति ज्ञापयितुं भाष्ये वचनादित्युक्तम् । न हि ज्ञानिसुखमिति भाष्ये सर्वशब्दः प्रकाश्यघटादिसाधारणो न सम्भवतीत्यतस्तेजः पर इत्याह ॥ **सर्वं सूर्यादीति** ॥ सर्वशब्दस्य तेजःपरत्वेन व्याख्याततत्वादनुशब्दसमभिव्याहृतस्य भातीत्यस्य भासयतीत्यर्थत्वात् सर्वं भातीत्यस्य न च तद्भासेत्यसम्भवात् जगद्भातीतिपदद्वयमध्याहार्यमित्याह ॥ **जगद्भातीतिशेष इति** ॥ अहं तत्तेजो रश्मीदिति भाष्यं उक्तलिङ्गद्वयस्य विष्णुनिष्ठत्वप्रतिपादकत्वेन व्याचष्टे ॥ **रश्मीदिति** ॥ **सूर्यादितेजसामिति** ॥ अग्नीच्छब्दस्याग्निसमिन्धकत्वमिव रश्मीच्छब्दस्य रश्मिसमिन्धकत्वमर्थ इति भावः ॥ **नारायणभासेति** भाष्यस्य सूर्यादितेजसां नारायणाधीनप्रकाशकत्वं नारायणस्य सर्वजगत्प्रकाशकत्वं चार्थ इति अभिप्रेत्य तदनुगुणतया **नारायणभासेतिपदं सर्वपदं भातीति** पदश्चार्थद्वयपरतया व्याचष्टे ॥ **तदधीनभासेत्यादिना** ॥

## वाक्यार्थमञ्जरी

**आनुकूल्येन गृह्यमाणत्वेति** । आनुकूल्येन अनुकूलत्वेन अत्यन्तमिष्टत्वेन गृह्यमाणं कथमनुभवामीत्यनेन प्रकारेण ज्ञानार्थं प्रार्थितं सुखं तस्य भावस्तत्त्वं सुखादन्यस्य अत्यन्तमिष्टत्वाभावात् । अत एव भाष्ये अनिर्देश्यसुखमित्युक्तम् । अत एव चन्द्रिकाकारैः केचित्त्वेतद्भाष्यानुसारन्यायविवरणोक्तमानुकूल्ये गृह्यमाणत्वं सुखमेवेत्याहुरिति स्वोत्प्रेक्षितपक्षो दर्शितः प्रसिद्धं चानुकूलवेद्यं सुखं प्रतिकूलवेद्यं दुःखमिति ॥ **उभयत्र** ॥ **सुखशब्दवृत्त्येति** ॥ यो वै भूमा तत्सुखमित्यादौ भगवति सुखशब्दवृत्तिर्ज्ञेया ॥ **तदेतदिति** ॥ तद्रूपं रूपं प्रतिरूपो बभूव' इत्यत्र प्रकृतम् एतत् एकं रूपं बहुधा यः करोतीत्यत्र च प्रकृतं भगवद्रूपम् अनिर्देश्यं साकल्येनादृश्यं परमं सुखमिति मन्यन्ते ज्ञानिनः । नु इदानीम् अहं तत्सुखं कथं केन प्रकारेण विजानीयां तत्सुखं मत्प्रयत्नेन तथा भाति न वेत्यर्थः । नात्रानुकूल्येन गृह्यमाणपदं श्रूयत इत्यत

(वाक्यार्थमञ्जरी)

आह ॥ **आनुकूल्येनेति** ॥ कथं नु पुत्रं पश्येयं स आगच्छति न वेत्यत्र यथा पुत्रज्ञानार्थं तदागमनप्रार्थनाधीस्तथा कथं नु तद्विजानीयामित्यादिवाक्ये ज्ञानार्थमाविर्भावरूपज्ञान-प्रार्थनाधीरित्यभिप्रेत्यैवमुक्तमिति ध्येयम् ॥ **एको वशीति** ॥ यः एकः स्वगतभेदवर्जितः सर्वमस्य वशे वर्तत इति वशी सर्वभूतानामन्तर्नियामकः एकं स्वात्मरूपं नियम्यानां बहुत्वा-त्तद्गतत्वेन बहुधा करोतीति तमात्मनि देहे जीवे वा तिष्ठतीति आत्मस्थं भगवन्तं ये धीराः पण्डिता अनुपश्यन्ति तेषामेव शाश्वतं नित्यमभिव्यक्तं सुखं नेतरेषामित्यर्थः ॥ **नपुंसक-सुखशब्देनेति** ॥ नपुंसकलिङ्गशब्देन सुखशब्देन चेत्यर्थः ॥ ॐ अनुकृतेस्तस्य च ॐ ॥ आनुकूल्येन गृह्यमाणं ब्रह्मैव कुतः अनुकृतेः अनुमानात् । तमेव भान्तमनुभाति सर्वमिति सूर्यादीनां तदधीनभानश्रवणादिति यावत् । किंच तस्य वाक्यप्रतीकग्रहणमेतत् । तस्य भासा सर्वमिदं विभातीति सर्वस्य तत्प्रकाश्यत्वोक्तेरित्यर्थः ॥ **परमं सुखमिति** ॥ तेषां सुखमिति वाक्यगतसुखश्रुतिव्यावर्तये परमशब्दः ॥ **चेतनश्चेतनानामिति** ॥ चेतनानां चेतनत्वप्रदः परम-चेतन इति वाक्यार्थः । पूर्वोक्तयोजनायां सत्यामेव योजनान्तरमाह ॥ **यदिति** ॥ गृह्णन्ति ज्ञानार्थं प्रार्थयन्ते । प्रतीतयोजनात्यागात्कथंचिदित्युक्तम् ॥ **तमेव भान्तमिति** ॥ सर्वं सूर्यादितेजो जातं भान्तं प्रकाशमानं तं भगवन्तम् अनुसृत्य भाति प्रकाशते । सर्वमिदं जगत्तस्य परमात्मनो भासा प्रकाशेन विभाति प्रकाश्यत इत्यर्थः । सर्वशब्दस्य तेजःपरत्वेन व्याख्यात-त्वादनुशब्दसमभिव्याहृतस्य भातीत्यस्य भासत इत्यर्थत्वात्सर्वं भातीत्यस्य न च तद्भासेत्यत्रानु-वृत्त्यसम्भवात्तच्छेषं पूरयति ॥ **जगद्भातीति शेष इति** ॥ तदुक्तं चतुर्थतात्पर्ये अहं तत्तेजोर-श्मीदित्यादिभाष्यं मुक्तलिङ्गद्वयस्य विष्णुनिष्ठत्वप्रदिपादकत्वेन व्याचष्टे । **रश्मीदित्यादिना** ॥

## सूत्रभाष्यम्

**॥ ॐ अपि स्मर्यते ॐ ॥ २३ ॥**

**'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।**
**यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्'** इति ॥ (भ.गी. १५-१२)

**'न तद्भासयते सूर्यो न शशाङ्को न पावकः ।**
**यद्गत्वा न निवर्तन्ते तद्धाम परमं मम'** इति (भ.गी. १५-६) च ॥

## तत्त्वप्रदीपिका

अपि स्मर्यते । मामकं मदधीनम् । मत्तेज एवाऽदित्यादिस्थितं तत्तेजःप्रेरकत्वेनाखिलं भासयतीत्यर्थः ॥

## तत्त्वप्रकाशिका

यदेतल्लिङ्गद्वयस्य विष्णुनिष्ठत्वं श्रु(त्यो)त्युपपादितं तत्स्मृत्याप्युपपादयत्सूत्रं पठित्वा तां स्मृतिमुदाहरति ॥ **अपीति** ॥ न केवलमेतत् श्रूयतेऽपि तु स्मर्यतेऽपीत्यर्थः । मामकं मदधीनं मदीयं च । किञ्च 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः' इत्यानुकूल्येन गृह्यमाणस्य सूर्याद्यप्रकाश्यत्वमुच्यते । तच्च विष्णोरेव स्मर्यते । अतो विष्णुरेवात्र प्रतिपाद्य(त) इति सूत्रस्यार्थन्तरमभिप्रेत्य तां स्मृतिमुदाहरति ॥ **न तदिति** ॥ धाम स्वरूपम् । 'तेजः स्वरूपं च गृहं प्राज्ञैर्धामेति गीयते' इत्यभिधानात् । युक्तिसमुच्चयेऽपिपदम् । न च मन्तव्यं न तत्र सूर्यो भातीत्यादिपुल्लिङ्गेन प्रकृतपरमा(त्मनए)त्मैवोच्यते न तु आनुकूल्येन गृह्यमाणस्य । अतस्तज्ज्ञानिसुखमिति ग्रहणेऽपि बाधकाभाव इति । किमु भाति न भाति वेति प्रकृतस्यैव न तत्रेत्यनुसन्धानप्रतीतेः । यस्यैव सुखं रूपं तत्रेति वाक्ययोजनोपपत्तेश्च । दूरोक्तग्रहणे बिभ्यतोऽतिदूरोक्तग्रहणे कथं न भीतिः । अनिर्देश्यत्वाद्ययोगाच्च । तस्मादानुकूल्येन गृह्यमाणो हरिरेवेति तस्यैव अनिर्देश्यत्वादीति सिद्धम् ॥

## गुर्वर्थदीपिका

परमात्मस्वरूपसुखस्यैव न तत्रेत्युत्तरवाक्ये प्रतिपाद्यमानत्वे सुखे स्वभावत एव सूर्यादि-प्रकाशानपेक्षत्वात् 'न तद्भासयते' इति स्मृतिसामाख्ययोक्तस्य विषये सूर्यो न भाति न भास-यतीत्युक्तस्य अप्रसक्तप्रतिषेधशङ्कामिदं चोपलक्षणं तमेव भान्तमिति पुल्लिङ्गानुपपत्तिशङ्कां च वारयितुमाह– **यस्येति** ॥ प्रागेतदिति नपुंसकत्वघटनाय सुखमेव प्रधानीकृत्य प्रकारान्तरेण योजना । इह तु तदभावात्प्रकारान्तरेण योजनेति भावः । 'तेषां सुखं शाश्वतं नेतरेषाम्' इत्येकवाक्यव्यवहितपरमात्मग्रहणं दूरत्वदोषेण दूषयन् वाक्यद्वयव्यवहितं परमात्मानं न तत्रेति वाक्ये प्रतिपाद्यं वदन्परः कथं न दूष्यत इति भावेनाह दूरोक्तेति । अस्माभिस्तु सुखमन्त-र्भाव्यैवाप्रसक्तप्रतिषेधत्वदोषपरिहाराय यच्छब्देन परमात्माऽप्यध्याह्रियते न तु दूरस्थः परामृश्यते । अतः परस्यैव नास्माकं दोष इत्यनुसन्धेयम् ।

(वाक्यार्थमञ्जरी)

आह ॥ **आनुकूल्येनेति** ॥ कथं नु पुत्रं पश्येयं स आगच्छति न वेत्यत्र यथा पुत्रज्ञानार्थं तदागमनप्रार्थनाधीस्तथा कथं नु तद्विजानीयामित्यादिवाक्ये ज्ञानार्थमाविर्भावरूपज्ञान-प्रार्थनाधीरित्यभिप्रेत्यैवमुक्तमिति ध्येयम् ॥ **एको वशीति** ॥ यः एकः स्वगतभेदवर्जितः सर्वमस्य वशे वर्तत इति वशी सर्वभूतानामन्तर्नियामकः एकं स्वात्मरूपं नियम्यानां बहुत्वा-त्तद्गतत्वेन बहुधा करोतीति तमात्मनि देहे जीवे वा तिष्ठतीति आत्मस्थं भगवन्तं ये धीराः पण्डिता अनुपश्यन्ति तेषामेव शाश्वतं नित्यमभिव्यक्तं सुखं नेतरेषामित्यर्थः ॥ **नपुंसक-सुखशब्देनेति** ॥ नपुंसकलिङ्गशब्देन सुखशब्देन चेत्यर्थः ॥ ॐ अनुकृतेस्तस्य च ॐ ॥ आनुकूल्येन गृह्यमाणं ब्रह्मैव कुतः अनुकृतेः अनुमानात् । तमेव भान्तमनुभाति सर्वमिति सूर्यादीनां तदधीनभानश्रवणादिति यावत् । किंच तस्य वाक्यप्रतीकग्रहणमेतत् । तस्य भासा सर्वमिदं विभातीति सर्वस्य तत्प्रकाश्यत्वोक्तेरित्यर्थः ॥ **परमं सुखमिति** ॥ तेषां सुखमिति वाक्यगतसुखश्रुतिव्यावर्तये परमशब्दः ॥ **चेतनश्चेतनानामिति** ॥ चेतनानां चेतनत्वप्रदः परम-चेतन इति वाक्यार्थः । पूर्वोक्तयोजनायां सत्यामेव योजनान्तरमाह ॥ **यदिति** ॥ गृह्णन्ति ज्ञानार्थं प्रार्थयन्ते । प्रतीतयोजनात्यागात्कथंचिदित्युक्तम् ॥ **तमेव भान्तमिति** ॥ सर्वं सूर्यादितेजो जातं भान्तं प्रकाशमानं तं भगवन्तम् अनुसृत्य भाति प्रकाशते । सर्वमिदं जगत्तस्य परमात्मनो भासा प्रकाशेन विभाति प्रकाश्यत इत्यर्थः । सर्वशब्दस्य तेजःपरत्वेन व्याख्यात-त्वादनुशब्दसमभिव्याहृतस्य भातीत्यस्य भासत इत्यर्थत्वात्सर्वं भातीत्यस्य न च तद्भासेत्यत्रानु-वृत्त्यसम्भवात्तच्छेषं पूरयति ॥ **जगद्भातीति शेष इति** ॥ तदुक्तं चतुर्थतात्पर्ये अहं तत्तेजोर-श्मीदित्यादिभाष्यं मुक्तलिङ्गद्वयस्य विष्णुनिष्ठत्वप्रदिपादकत्वेन व्याचष्टे । **रश्मीदित्यादिना** ॥

## सूत्रभाष्यम्

**॥ ॐ अपि स्मर्यते ॐ ॥ २३ ॥**

'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्' इति ॥ (भ.गी. १५-१२)

'न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम' इति (भ.गी. १५-६) च ॥

## तत्त्वप्रदीपिका

**अपि स्मर्यते । मामकं मदधीनम् ।** मत्तेज एवाऽदित्यादिस्थितं तत्तेजःप्रेरकत्वेनाखिलं भासयतीत्यर्थः ॥

## तत्त्वप्रकाशिका

यदेतल्लिङ्गद्वयस्य विष्णुनिष्ठत्वं श्रु(त्या)त्युपपादितं तत्स्मृत्याप्युपपादयत्सूत्रं पठित्वा तां स्मृतिमुदाहरति ॥ **अपीति** ॥ न केवलमेतत् श्रूयतेऽपि तु स्मर्यतेऽपीत्यर्थः । मामकं मदधीनं मदीयं च । किञ्च 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः' इत्यानुकूल्येन गृह्यमाणस्य सूर्याद्यप्रकाश्यत्वमुच्यते । तच्च विष्णोरेव स्मर्यते । अतो विष्णुरेवात्र प्रतिपाद्य(त) इति सूत्रस्यार्थन्तरमभिप्रेत्य तां स्मृतिमुदाहरति ॥ **न तदिति** ॥ धाम स्वरूपम् । 'तेजः स्वरूपं च गृहं प्राज्ञैर्धामेति गीयते' इत्यभिधानात् । युक्तिसमुच्चयेऽपिपदम् । न च मन्तव्यं न तत्र सूर्यो भातीत्यादिपुल्लिङ्गेन प्रकृतपरमा(त्मनए)त्मैवोच्यते न तु आनुकूल्येन गृह्यमाणस्य । अतस्तज्ज्ञानिसुखमिति ग्रहणेऽपि बाधकाभाव इति । किमु भाति न भाति वेति प्रकृतस्यैव न तत्रेत्यनुसन्धानप्रतीतेः । यस्यैव सुखं रूपं तत्रेति वाक्ययोजनोपपत्तेश्च । दूरोक्तग्रहणे बिभ्यतोऽतिदूरोक्तग्रहणे कथं न भीतिः । अनिर्देश्यत्वाद्ययोगाच्च । तस्मादानुकूल्येन गृह्यमाणो हरिरेवेति तस्यैव अनिदेश्यत्वादीति सिद्धम् ॥

## गुर्वर्थदीपिका

परमात्मस्वरूपसुखस्यैव न तत्रेत्युत्तरवाक्ये प्रतिपाद्यमानत्वे सुखे स्वभावत एव सूर्यादि-प्रकाशानपेक्षत्वात् 'न तद्भासयते' इति स्मृतिसामाख्ययोक्तस्य विषये सूर्यो न भाति न भास-यतीत्युक्तस्य अप्रसक्तप्रतिषेधशङ्कामिदं चोपलक्षणं तमेव भान्तमिति पुल्लिङ्गानुपपत्तिशङ्कां च वारयितुमाह– **यस्येति** ॥ प्रागेतदिति नपुंसकत्वघटनाय सुखमेव प्रधानीकृत्य प्रकारान्तरेण योजना । इह तु तदभावात्प्रकारान्तरेण योजनेति भावः । 'तेषां सुखं शाश्वतं नेतरेषाम्' इत्येकवाक्यव्यवहितपरमात्मग्रहणं दूरत्वदोषेण दूषयन् वाक्यद्वयव्यवहितं परमात्मानं न तत्रेति वाक्ये प्रतिपाद्यं वदन्परः कथं न दूष्यत इति भावेनाह दूरोक्तेति । अस्माभिस्तु सुखमन्त-र्भाव्यैवाप्रसक्तप्रतिषेधत्वदोषपरिहाराय यच्छब्देन परमात्माऽप्यध्याह्रियते न तु दूरस्थः परामृश्यते । अतः परस्यैव नास्माकं दोष इत्यनुसन्धेयम् ।

## भावबोधः

**युक्तिसमुच्चये अपिपदमिति ॥** यद्यप्याद्यव्याख्याने सौत्रोऽपिशब्द आद्यसूत्रे आनुकूल्येन गृह्यमाणस्य ब्रह्मत्वरूपप्रधानसाध्ये हेतुकृतानुकृत्यादेर्ब्रह्मधर्मत्वसाधकश्रुतिसमुच्चयार्थः तथापि द्वितीये व्याख्याने प्रधानसाध्य एव हेतोः सूर्याद्यप्रकाश्यत्वयुक्तेः समुच्चयार्थ इत्यर्थः । न तत्र सूर्यो भातीति पुंल्लिङ्गेनेति । तमेव भान्तमित्यत्र तमिति पुंल्लिङ्गान्तशब्दे परमात्मैवोच्यत इति तदेकार्थत्वाय, न तत्र सूर्यो भातीति वाक्यस्थेन तत्रेत्यनेन परमात्मैवोच्यत इत्यर्थः । किमु **भाति न भाति वेति प्रकृतस्येति ॥** तत्रोक्तदुर्ज्ञेयत्वस्य न तत्र सूर्यो भातीत्यादिना प्रत्यभिज्ञायमानत्वादित्यर्थः ॥ **यस्यैवमिति ॥** तथा च न तत्रेत्यानुकूल्येन गृह्यमाणग्रहणे न लिङ्गानुपपत्तिरिति भावः ॥ **दूरोक्तग्रहण इति ॥** तदेतदित्यस्मिन् वाक्ये ज्ञानिसुखापेक्षया दूरोक्तपरमात्मग्रहणे बिभ्यतस्ततोऽप्युत्तरस्मिन् वाक्ये ज्ञानिसुखापेक्षया दूरोक्तपरमात्मग्रहणे बिभ्यतस्ततोऽप्युत्तरस्मिन्न तत्रेत्यत्र वाक्यद्वयव्यवहितचेतनश्चेतनानामिति वाक्योक्तपरमात्मग्रहणे कथं न भीतिरित्यर्थः । न तत्रेत्यत विष्णुमात्रनिष्ठसूर्याद्यप्रकाश्यत्वलिङ्गबलाद् दूरोक्तपरमात्मपरामर्श इति यदि तर्हि तदेतदिति वाक्येऽपि विष्णुमात्रनिष्ठत्वेन साधितानिर्देश्यत्वलिङ्गबलात् परमात्मन एव परामर्श इति भावेनाह ॥ **अनिर्देश्यत्वायोगाच्चेति ॥** अत्राद्ये– जगत्प्रकाशकसूर्यादिनियामकत्वसकलजगत् प्रकाशत्वरूपलिङ्गोक्तिः । द्वितीये तल्लिङ्गद्वयस्य न तत्रेत्युक्तसूर्याद्यप्रकाश्यत्वरूपलिङ्गान्तरस्य च विष्णुमात्रनिष्ठत्वे स्मृतिरूपप्रमाणत्वोक्तिरिति सूत्रक्रमः ।

## भावदीपः

**न केवलमिति ॥** एतेन प्रागुक्ता श्रुतिरेतत्सूत्रस्थापिपदेन समुच्चितैवोक्तेति सूचितम् । भाष्यस्य सूत्रे चीयते । तत्र सूर्याद्यप्रकाश्यत्वसूर्यादिनियन्तृत्वजगद्भासकत्वरूपलिङ्गानां मध्ये द्वयोरपिशब्देन प्रागुक्तश्रुतिसिद्धत्वमुक्त्वा त्रयाणामपि विष्णुनिष्ठत्वं स्मार्तं चेत्याहेति योजना तु स्फुटत्वान्नोक्तेत्याहुः । न तदिति स्मृत्युपयोगाय सूत्रस्यार्थान्तरं व्यक्तीकुर्वन्नवतारयति ॥ **किञ्चेति ॥** सौत्रापिशब्दार्थोऽयम् । भाति भासयति । सूर्यादयस्तं न भासयन्तीत्याथर्वणभाष्योक्तेः ॥ **युक्तीति ॥** पूर्वयोजनायाम् आद्यसूत्रोपात्तस्य युक्तिद्वयस्य विष्णौ श्रौतत्वसमुच्चयेऽपिशब्द इति दर्शितम् । इदानीं सूर्याद्यप्रकाश्यत्वस्यापि स्मार्तत्वमिति सूर्याद्यप्रकाश्यत्वाच्चानुकूल्येन गृह्यमाणो विष्णुरेवेति सूर्याद्यप्रकाशत्वरूपयुक्तिसमुच्चयेऽपिपदमित्यर्थः ।

(भावदीपः)
श्रुतौ न तत्रेति वाक्यशेषोक्तलिङ्गस्य प्राथम्येन सूर्याद्यप्रकाश्यत्वादनुकृतेस्तस्य चेति वक्तव्ये अनुकृतिशब्देन तमेव भान्तमिति द्वितीयवाक्योक्तानुभानोक्त्या सूचितं चोद्यमाशङ्क्योत्तरयति ॥ **न चेति** ॥ **इत्यादि पुल्लिङ्गेनेति** ॥ तत्र तं तस्येति तच्छब्दत्रयगतेनेत्यर्थः । मध्ये तमिति पुल्लिङ्गश्रवणात् पूर्वोत्तरतच्छब्दयोरपि तथात्वमिति भावः ॥ **प्रकृतेति** ॥ चेतनश्चेतना-नानामित्यनेनेत्यर्थः ।

उच्यते । सूर्याद्यप्रकाश्यत्वतत्प्रकाशनियन्तृत्वजगत्प्रकाशकत्वरूपलिङ्गत्र (योपेततये) यमित्यर्थः ॥ **प्रकृतस्यैवेति** ॥ दुर्ज्ञेयत्वेनोक्तस्यैव वस्तुनो न तत्र सूर्यो भातीत्यत्र प्रत्यभि-ज्ञानादित्यर्थः । तथा च तदैकार्थ्यमेव तं तस्येति तच्छब्दयोरपीति भावः । कथं तर्हि तत्र तमित्यादिपुल्लिङ्गनिर्वाह इत्यत आह ॥ **यस्येति** ॥ यदनिर्देश्यं सुखम् आनुकूल्येन ग्राह्यं च तत्परमात्मन; एतत्प्रकृतं रूपम् । यस्य परमात्मनो रूपमेवमनिर्देश्यपरमसुखात्मकमानुकूल्येन ग्राह्यं च तत्र परमात्मनि तं परमात्मानम् इति च पुल्लिङ्गस्य सन्निहितपरत्वस्य चोपपत्तेरित्यर्थः । तर्हि यस्येत्यध्याहारदोषः । व्यवहितपरत्वपक्षे तु यो विदधाति कामान् न तत्र सूर्यो भातीत्युप-पत्तेरित्यत आह ॥ **दूरोक्तेति** ॥ तदेतदिति श्रुतेर्व्यवहितेश्वरपरत्वे विम्यतः न तत्रेत्यादेरति-दूरोक्तस्य चेतनश्चेतनानामिति वाक्योक्तग्रहणे कथं न भीतिरित्यर्थः । सन्निहितपरामर्शित-च्छब्दप्रातिपदिकस्वारस्यानुरोधेन गुणभूतं लिङ्गं कथञ्चिदुक्तदिशा निर्वाह्यमिति भावः । पुल्लिङ्गानुरोधेन न तत्रेत्यादेर्व्यवहितपरत्वमुपेत्य तदेतदित्यादेर्ज्ञानिसुखपरत्वोपगतौ बाधकान्तरं चाऽऽह ॥ **अनिर्देश्यत्वाद्ययोगाच्चेति** ॥ यतो वाचो निवर्तन्त इत्यादि श्रुत्या ब्रह्मरूपा-नन्दस्यैवानिर्देश्यत्वात् । एष परम आनन्द इत्यादिश्रुत्या तस्यैव परमानन्दत्वाच्च ज्ञानिसुखस्य च अव्यक्तादितृणान्तास्तु विप्रुडानन्दभागिन इति पूर्वोक्तदिशा वा ब्रह्मादीनां तु युक्तानां सुखं विष्णुसुखस्य तु । प्रतिबिम्बस्तु विप्रुट्को विष्णोरेव परं सुखमिति काठकभाष्योक्तवाराहस्मृत्या वा अनिर्देश्यत्वपरमत्वयोरयोगाच्चेत्यर्थः ॥ **तस्मादिति** ॥ सूर्यादितेजोनियन्तृत्वजगत्प्रकाश-कत्वसूर्याद्यप्रकाश्यत्वरूपसूत्रोक्तसाधकभावात् सुखश्रुतिविरोधादिबाधकाभावाच्चेत्यर्थः । सूत्रेऽ-ध्याहृतप्रतिज्ञातार्थम् **आनुकूल्येनेति** ॥ अदृश्यत्वादीति फलोक्तिः अज्ञेयत्वमादिपदार्थः । अत्र श्रुतं प्राक् श्रुतं चेत्यर्थः ।

## अभिनवचन्द्रिका

**मामकं मदधीनं मदीयं चेति** ॥ यत्तेजः जगद्भासयते, तत्सूर्यादिगतमेव न, किं तु सूर्यादितेजोनियामकं मत्तेजसा विशिष्टमिति योजनोक्ता भवति । तेन इदं वचनं सूर्यादि-तेजोनियामकत्वे भगवत्तेजसो जगत्प्रकाशकत्वे च मानमित्युक्तं भवति । तदुक्तं तत्त्वप्रदीपे – 'मामकं मदधीनं मत्तेज एवाऽऽदित्यादिस्थितं तत्तेजः प्रेरकत्वेनाऽखिलं भासयतीत्यर्थ' इति ।

ननु 'अपि स्मर्यते' इति सूत्रस्य भाष्यकारीयं 'यदादित्यगतं तेज' इत्यादि स्मृत्युदाहरण-मयुक्तम् । एतस्य सूत्रकारवचनत्वात् । न हि सूत्रकारः विप्रतिपन्नं प्रति स्ववचनमेव प्रमाण-त्वेनोपादत्त इति सम्भवति । न च स्ववचनत्वेऽपि परोक्तानुवादरूपत्वेन प्रमाणत्वात् तदुदाहरणं युक्तमिति वाच्यम् । अनुवादत्वादेव विप्रतिपन्नार्थप्रामाण्याभावात् । तस्मादन्यदेव मन्वादि-स्मृतिवाक्यमुदाहर्त्तव्यमिति चेत्, उच्यते । भवेदेतत् मन्वादिवाक्यस्योदाहर्त्तव्यत्वम्, यदि सूत्रकृतो मन्वादिवाक्यमिह विवक्षितं स्यात् । न चैवम् । तत्कुत इति चेत्, यत्रान्यमतो-दाहरणमभिमतं तत्र तन्नामग्रहणं करोत्याचार्यः 'आर्त्विज्यमित्यौडुलोमिः' इत्यादिना । न च तथास्ति प्रकृते नामग्रहणं, तेन मन्यामहे आचार्यस्य नान्यवाक्यमिहोदाहरणत्वेन विवक्षित-मिति। कथं तर्हि अनवधृतप्रामाण्यस्य स्ववचनस्योदाहरणमिति चेत्, न पुराणस्यापि अपौरुषेयत्वात् । अन्यथा वेदवाक्योदाहरणमपि न स्यात् । वेदवाक्यस्यापि स्वेनैवोद्धृतत्वात् । वेदवाक्यन्तु सर्वदा एकप्रकारं, पुराणवाक्यं तु परिणामीत्येतत्तु वैषम्यमात्रम् । सौत्रापिशब्द-स्यानुक्तश्रुतिसमुच्चायकत्वापेक्षया सूत्रोक्तानुकृतिरूपयुक्तिसमुच्चायकत्वमेव वरमित्यभि-प्रेत्यार्थान्तरमाह ॥ **किं चेति** ॥

पूर्वपक्षस्तु– ज्ञानिसुखस्यैवाऽऽनुकूल्येन गृह्यमाणत्वं भवेत् । 'परमं सुखम्' इति सुखश्रुतेः । न च सुखश्रुतिः विष्णावपि सावकाशेति तद्ग्रहः 'तेषां सुखं शाश्वतं नेतरेषाम्' इति ज्ञानिसुखस्यैव प्रकृतत्वात् । तस्यैव तच्छब्देन परामर्शस्य युक्तत्वात् । न च वाच्यं भगवतोऽपि प्रकृतत्वात् तत्परामर्शोऽयमस्त्विति । तस्य नपुंसकशब्देनाऽप्रकृतस्य तदित्यादिपरामर्शायोगात् । सम्भवत्समीपपरामर्शं विहाय दूरस्थपरामर्शग्रहणे कारणाभावाच्च । अतो ज्ञानिसुख-स्यैवाऽऽनुकूल्येन गृह्यमाणत्वात् तस्यैवानिर्देश्यत्वादीति ।

(अभिनवचन्द्रिका)

सिद्धान्तस्तु– विष्णुरेवाऽयमानुकूल्येन गृह्यमाणो भवेत् । 'तमेव भान्तमनुभाति सर्वमिति सूर्यादितेजसां तदधीनत्वश्रवणात् । 'तस्य भासा सर्वमिदं विभाति' इति सर्वजगत्प्रकाश-कत्वोक्तेश्च । न चैतल्लिङ्गद्वयं न विष्णोरिति वाच्यम् । 'अहं तत्तेजोऽस्मात्' इति श्रुत्या 'यदादित्यगतं तेजः' इत्यादि स्मृत्या च विष्णुलिङ्गत्वावगतेः । 'न तत्र सूर्यो भाति न चन्द्रतारकम्' इति श्रुत्या सूर्याद्यप्रकाश्यत्वश्रवणाच्च आनुकूल्येन गृह्यमाणो विष्णुः । न चेदं न विष्णुलिङ्गम् । 'न तद्भासयत' इत्यादिस्मृत्या तल्लिङ्गत्वनिश्चयात् । न च सुखश्रुतिविरोधः । परमं सुखमिति सुखश्रुतेरपि तत्परत्वात् । ननु तेषां सुखम्' इति ज्ञानिसुखस्यैव प्रकृतत्वात् तस्यैव 'तदेतत्' इति परामर्श इति चेत्, न 'चेतनश्चेतनानाम्' इति परमात्मनोऽपि प्रकृत-त्वात् । न च परमात्मनो नपुंसकसुखशब्देनाप्राकृतत्वात् तदितिपरामर्शायोग इति वाच्यम् । यदनिर्देश्यं परमं सुखं कथं न तद्विजानीयामित्यानुकूल्येन गृह्णन्ति, तदनिर्देश्यं सुखमित्ये-तत्प्रकृतपरमात्मनो रूपमिति मन्यन्त इति, वाक्ययोजनोपपत्तेः । न च वक्तव्यं समीपस्थपरामर्शं विहाय कथंचिदेव दूरस्थग्रहणे कारणाभाव इति । सूर्यादिप्रकाशनियामकत्वादीनां लिङ्गानां अन्यत्रानवकाशेन दूरस्थपरामर्शस्यैव न्याय्यत्वात् । ततश्चाऽऽनुकूल्येन गृह्यमाणो हरिरेवेति तस्यैवाऽनिर्देश्यत्वादीति सिद्धम् ।

## वाक्यार्थमुक्तावली

**श्रुत्योपपादितमिति ॥** चशब्दसमुचित माह तत्तेज इति श्रुत्येत्यर्थः । भावबोधादौ तु, प्रागुक्ताश्रुतिरेतत्सूत्रस्थापि पदसमुच्चितैवोक्ता । ततश्च यदेतल्लिङ्गद्वयस्य विष्णुनिष्ठत्वं भाष्यकृता श्रुत्योपपादितं तत् स्मृत्या पूर्वोदाहृतश्रुत्याप्युपपादयत्सूत्रमित्यर्थ उक्तः । सूत्रार्थमाह **॥ न केवलमिति ॥** श्रूयते पूर्वसूत्रस्थचशब्दसमुचितश्रुत्या युक्तिसमुच्चयेऽपिपदमिति । न केवलं पूर्वसूत्रोक्तं लिङ्गद्वयं विष्णोः स्मर्यते किन्तु न तत्र सूर्यो भातीति सूर्याद्यप्रकाश्यत्वरूपाया आनुकूल्येन गृह्यमाणस्य विष्णुत्वे युक्तिः सापि विष्णोःस्मर्यत इति युक्तिसमुच्चयेऽपिपदं पूर्वयोजनायां श्रुतिसमुच्चय इति भावः । ननु नित्यो नित्यानामिति पुल्लिङ्गेन परमात्मा प्रकृतः । कथं नु तद्विजानीयामित्यानुकूल्येन गृह्यमाणं न तत्रेत्युक्तस्यैव, तमेव भान्तमिति पुनः पुल्लिङ्गेनानुवादात् । तथा च सूर्याद्यप्रकाश्यत्वस्य तमेव भान्तमित्युक्तलिङ्गद्वयस्य च विष्णु-निष्ठत्वेऽप्यानुकूल्येन गृह्यमाणेऽश्रवणात् प्रकृतेऽसिद्धैर्लिङ्गैः विष्णुत्वसमाधानं ज्ञानिसुखबाधनं

(वाक्यार्थमुक्तावली)
चायुक्तमिति भावेनाशङ्क्य समाधत्ते ॥ **न च मन्तव्यमिति** ॥ **न भाति वेति प्रकृतस्यैवेति** ॥ तत्रोक्तदुर्ज्ञेयत्वस्य, न तत्र सूर्यो भातीत्यादिना प्रत्यभिज्ञायमानत्वादित्यर्थः । तथाचैतस्यैकार्थ्य-मेव तमिति तस्येति तच्छब्दयोरपीति भावः । कथं तर्हि तत्र तमित्यादि पुल्लिङ्गनिर्वाह इत्यत आह ॥ **यस्येति** ॥ यस्य परमात्मनो रूपमेवमनिर्देश्यपरमसुखात्मकमानुकूल्येन ग्राह्यं न तत्र परमात्मनि, तं परमात्मानं चेति पुल्लिङ्गस्य सन्निहितपरत्वस्योपपत्तेरित्यर्थः ।

तर्हि यस्येत्यध्याहारदोषः । व्यवहितपरत्वे तु यो विदधाति कामान्न तत्रेत्युपपत्तेरित्यत आह ॥ **दूरोक्तेरिति** ॥ तदेतदित्यत्र ज्ञानिसुखापेक्षया दूरोक्तपरमात्मग्रहणे बिभ्यतस्तव तत्रे-त्यादिना वाक्यद्वयव्यवहितस्य चेतनश्चेतनानामिति वाक्योक्तस्य ग्रहणे कथं न भीतिरित्यर्थः । ननु सूर्याद्यप्रकाश्यत्वस्य, ज्ञानिसुखे बाधितत्वाद्दूरस्थविष्णुपरामर्शकत्वमित्यत आह ॥ **अनि-देश्यत्वादीति** ॥ सूर्याद्यप्रकाश्यत्ववदनिर्देश्यत्वपरमत्वयोरप्ययोगादन्तरङ्गलिङ्गबलादनिर्देश्यं परमं सुखमित्युक्तं न ज्ञानिसुखमिति तद्ब्रह्मरूपमेवाङ्गीकार्यमत एव भाष्ये परमात्मैवानिर्देश्यसुखरूप इत्युक्तमिति हृदयम् । अत्र यद्यपि न तत्र सूर्यो भातीत्युक्तं सूर्याद्यप्रकाश्यत्वं लिङ्गं, प्रथमप्राप्तं, तथाप्यनुकृतेरित्यत्रोक्तलिङ्गद्वये, अपिशब्दसमुच्चेयसूर्याद्यप्रकाश्यत्वलिङ्गं चैकोक्त्या, स्मृति-समाख्यां वक्तुमपि स्मर्यत इति सूत्रस्यानन्तर्यमिति बोध्यम् ।

## तत्त्वसुबोधिनी

नन्वेतत्स्मृतौ लिङ्गद्वयस्य विष्णुनिष्ठत्वं कथमुक्तमित्यत आह– **स्मर्यतेऽपि इति** ॥ युक्ति-**समुच्चये अपि पदमिति** ॥ यद्यप्याद्यव्याख्याने सौत्रेऽपिशब्दः आद्ये सूत्रे आनुकूल्येन गृह्यमाणस्य ब्रह्मत्वरूपप्रधानसाध्ये हेतूकृतानुकृत्यादेर्ब्रह्मधर्मत्वं साधकश्रुतिसमुच्चयार्थः । तथापि द्वितीयव्याख्याने प्रधानसाध्य एव हेतोः सूर्याद्यप्रकाशत्वरूपयुक्तेः समुच्चयार्थः इत्यर्थः ॥ **न तत्र सूर्य इति** ॥ तमेव भान्तमित्यत्र तमिति पुल्लिङ्गशब्देन परमात्मेवोच्यते तदेकार्थत्वाय न तत्र सूर्यो भातीति वाक्यस्थेन तत्रेत्यनेन परमात्मैवोच्यत इत्यर्थः ॥ **किमु भातीति** ॥ तत्रोक्त-दुर्ज्ञेयत्वस्य न तत्र सूर्यो भातीत्यादिना प्रत्यभिज्ञायमानत्वादित्यर्थः ॥ **यस्यैवमिति** ॥ तथा च न तत्रेत्यत्रानुकूल्येन गृह्यमाणग्रहणेन लिङ्गानुपपत्तिरिति भावः ॥ **दूरोक्तग्रहण इति** ॥ तदेतदित्यस्मिन्वाक्ये ज्ञानसुखापेक्षया दूरोक्तपरमात्मग्रहणे विभ्यतस्ततोऽप्युत्तरस्मिन्नतत्रेत्यत्र वाक्यद्वयव्यवहितचेतनश्चेतनानामिति वाक्योक्तपरमात्मग्रहणे च कथं न भीतिरित्यर्थः । न

(तत्त्वसुबोधिनी)

तत्रेत्यत्र विष्णुमात्रनिष्ठत्वे सूर्याद्यप्रकाशत्वलिङ्गबलाद्दूरोक्तपरमात्मपरामर्श इति यदि तर्हि तदेतदिति वाक्येऽपि विष्णुमात्रनिष्ठत्वेन साधितानिर्देश्यत्वलिङ्गबलात्परमात्मन एव परामर्श इति भावेनाह ॥ **अनिर्देश्यत्वाद्ययोगाच्चेति** ॥ तत्र आद्यसूत्रे लिङ्गरूपसाधकोक्तिः । द्वितीये पूर्वे लिङ्गद्वयस्य न तत्रेत्युक्तसूर्याद्यप्रकाश्यत्वरूपलिङ्गान्तरस्य च चिन्मात्रनिष्ठत्वे स्मृतिरूप-प्रमाणोक्तिरिति सूत्रक्रमः । अत्रानुकूल्येन गृह्यमाणो विष्णुरेव । अनुकृतेः सूर्यादिप्रकाशानां भगवत्प्रकाशाधीनत्वात् तस्य च सूर्यादीनां भगवत्प्रकाश्यत्ववचनाच्चेत्याद्यसूत्राक्षरार्थः । द्वितीय-सूत्रस्याद्यव्याख्याने चशब्दः सूर्याद्यप्रकाश्यत्वसमुच्चयार्थः । द्वितीये तु एतदुक्तलिङ्गस्यैव समुच्चायकः ।

## वाक्यार्थमञ्जरी

लिङ्गद्वयं स्मर्यतेऽपि स्मृतौ प्रतिपाद्यतेऽपीत्यर्थः । तत्र तद्भगवद्रूपे सूर्यो भाति भासयते चन्द्रतारकमिति द्वन्द्वैकवद्भावः । यदा प्रौढप्रकाशाः सूर्यादयो न भान्ति तदा अल्पप्रकाशोऽय-मग्निः कुतो भाति न कुतोऽपीत्यर्थः । व्याख्यानान्तरे स्मृतेः समुच्चयासम्भवादाह ॥ **युक्तीति** ॥ किञ्चेत्यादिनोक्तयुक्तीत्यर्थः । न तत्र सूर्यो भातीति तमेव भान्तमित्यत्र तमिति पुल्लिङ्गान्तशब्देन परमात्मैवोच्यत इति तदेकार्थत्वलाभाय न तत्र सूर्यो भातीति वाक्यस्थ तत्रेत्यनेन परमात्मोच्यत इत्यर्थः ॥ **किमु भाति न भाति वेति** ॥ **प्रकृतस्येति** ॥ तत्रोक्तदुर्विज्ञेयत्वस्य न तत्र सूर्यो भातीत्यादिना प्रत्यभिज्ञायमानत्वादिति भावः ॥ **यस्यैवमिति** ॥ तथा च न लिङ्गानुपपत्तिरिति भावः । दूरोक्तं ब्रह्म ॥ **अतिदूरोक्तिग्रहण इति** ॥ तदेतदित्यस्मिन्वाक्ये ज्ञानिसुखापेक्षया दूरोक्तपरमात्मग्रहणे बिभ्यतस्तव ततोऽप्युत्तरत्र विद्यमानेन तत्रेत्यस्मिन्वाक्ये चेतनश्चेतनानामिति वाक्योक्तपरमात्मग्रहणे कथं न भीतिरित्यर्थः । न तत्रेत्यत्र विष्णुमात्र निष्ठसूर्याद्यप्रकाश्य-प्रकाशत्वलिङ्गबलाद्दूरोक्तपरमात्मपरामर्श इति यदि तर्हि तदेतदिति वाक्येऽपि विष्णुमात्र-निष्ठत्वेन साधिताऽनिर्देश्यत्वलिङ्गबलात्परमात्मन एव परामर्श इति भावेनाह ॥ **अनिर्देश्यत्वा-योगाच्चेति** ॥

॥ इति अनुकृत्यधिकरणम् ॥

## ७. वामनाधिकरणम्

### सूत्रभाष्यम्

विष्णुरेव जिज्ञास्य इत्युक्तम् । तत्र–

'ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति ।
मध्ये वामनमासीनं विश्वेदेवा उपासत' (क.उ. ५-३)

इति सर्वदेवोपास्यः कश्चित्प्रतीयते । स च 'एवमेवैष प्राण इतरान्प्राणान्पृथक्पृथगेव सन्निधत्ते' (प्र.उ.३-४) 'योऽयं मध्यमः प्राणः' (बृ.उ.३-५-२१) 'कुविदङ्ग' (ऋ.सं. ७-९१-१) इत्यादिना प्राणव्यवस्थापकत्वान्मध्यमत्वात्सर्वदेवोपास्यत्वाच्च वायुरेवेति प्रतीयते । अतोऽब्रवीत् ।

**॥ ॐ शब्दादेव प्रमितः ॐ ॥ २४ ॥**

वामनशब्दादेव विष्णुरिति प्रमितः । न हि श्रुतेर्लिङ्गं बलवत् ।

'श्रुतिर्लिङ्गं समाख्या च वाक्यं प्रकरणं तथा ।
पूर्वं पूर्वं बलीयः स्यादेवमागमनिर्णय' इति स्कान्दे ।

तच्च लिङ्गं विष्णोरेव । तस्यैव प्राणत्वोक्तेः 'तद्वै त्वं प्राणो अभव' इति ॥

### सत्तर्कदीपावली

विष्णुरेव जिज्ञास्य इत्यादेरयमर्थः । ऊर्ध्वं प्राणमुन्नयतीत्याद्याम्नायते । तत्र तावल्लिङ्गान्मुख्यप्राणः प्रतीयते । यदत्र प्राणापानादिविनियोजकत्वं यन्मध्यस्थितत्वं यच्च सर्वदेवोपास्यत्वं तत्सर्वमेव प्राण इत्यादि श्रुत्यन्तरेषु मुख्यप्राणशब्दाभिधेयस्य प्रधानवायोर्लिङ्गत्वेन उच्यते । कुविदङ्गेत्यस्यायमर्थः । अङ्गेति सम्बोधनम् । नमस्कारादिरूपया भक्त्या प्रवृद्धा अनवद्याः पुरा ये देवाः सूर्येण सहासन् ते ज्ञानिने क्लेशबाधितैः शरणत्वेन प्राप्ताय वायवे क्वचिदेकान्ते उषसः प्रकाशरूपाः बुद्धिं ध्यानाख्याम् आवसन् स्थापयामासुरकुर्वन्निति । अतो यदुक्तं प्राग्विष्णुरेव निदिध्यासितव्य इति तन्न सिध्यतीति चेन्मैवम् । विष्णुरेवात्र प्रतिपाद्यते । वामनमासीनमिति वामनश्रुतेः । यदुक्तं मुख्यप्राणलिङ्गं तच्छ्रुत्या बाध्यते

(सत्तर्कदीपावली)

दुर्बलत्वात् । तदुक्तं जैमिनिना 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्य-मर्थविप्रकर्षात्' इति । यत्र श्रुतिलिङ्गादयः परस्परं विरुध्यन्ते तत्र पूर्वपूर्वबलीयस्त्वं पुराण-वचनेन साधयति ॥ **श्रुतिरिति** ॥ अत्र समाख्या नाम समानप्रकरणमुच्यते । विष्णावप्यु-पपन्नत्वेनान्यथा सिद्धत्वादप्यत्र मुख्यप्राणलिङ्गं न विरोधीत्याह ॥ **तच्चेति** ॥

## तत्त्वप्रदीपिका

मोक्षस्यैव परमपुरुषार्थत्वात्तस्य च विना विष्णुप्रसादादलभ्यत्वात्, तस्य चातिमात्रस्य ज्ञानप्रसाध्यत्वात्, तस्य चापरोक्षस्य जिज्ञासासमायत्तत्वात् विष्णुरेव जिज्ञास्य इत्युक्तम् । जिज्ञास्यो मीमांस्यो विचार्य इत्यर्थः । 'जिज्ञासितं सुसम्पन्नम्' इति भागवते । अर्थादुपास्य इत्यापद्यते । तत्र काठकश्रुतौ सर्वदेवोपास्यः कश्चित्प्रतीयते । स किं वायुरुत विष्णुरिति संशयः । किं तावत्प्राप्तम् ? **वायुरेवेति** ॥ ऊर्ध्वमित्यादिश्रुतेः । 'योऽयं देहे देहिनामूर्ध्वं प्राणमुन्नयत्यपानमभिमुखमस्यति तं मध्य आसीनं देवा उपासते' इति प्राणव्यवस्थापकत्वा-न्मध्यमत्वाच्च । 'यथा सम्राडेवाधिकृतान्विनियुंक्त एतान्ग्रामानधितिष्ठस्वेति, एवमेवैष प्राणः' इत्यादिश्रुत्यन्तरान्मुख्यप्राणस्यैव प्राणानां व्यवस्थापकत्वम् । 'अथेममेव नाऽप्रोयोऽयं मध्यमः प्राणः' इति बृहदारण्यकवाक्यात्तस्यैव मध्यमत्वं च । सर्वदेवोपास्यत्वं चाविरुद्धं तस्य । कुविदङ्गेत्यादौ प्रसिद्धत्वात् । तथाहि– पुरा कश्चिये नमस्कारादिना वृद्धास्सन्तो देवा रागाद्यवद्यशून्या आसन् ते । वायवे ज्ञानिने वाधिभिश्शरणार्थमितायाऽवासयन् स्ववुद्धिं सूर्येण सह । 'उप प्रकाशन' इति धातोर्वुद्धिरुपशब्दोक्ता । वायुमुद्दिश्य बुद्धिमावासयन्नित्यर्थः । तस्माद्वायुरपि जिज्ञास्य इति प्राप्ते प्रतिविधीयते । 'शब्दादेव प्रमितः' । एवमागमनिर्णयः । एवं पूर्वपूर्वबलीयोभिः श्रुत्यादिभिरागमार्थनिर्णयः ।

श्रुतिर्नाम समुद्दिष्टं लिङ्गं तल्लक्षणं स्मृतम् ।
पदानि निरपेक्षाणि वाक्यं प्रकरणं तथा ॥
एकस्य प्रतिपत्त्यङ्गवचनं स्थानमुच्यते ।
अन्यत्र तत्समोक्तिस्तु समाख्यास्थानमेव च ।
अध्यायादिप्रवन्धास्तु प्रभेदा आगमस्य च ॥

इति सम्प्रदायविद्वचनादेतेषां भेदो वेदितव्यः ।

## तत्त्वप्रकाशिका

अत्र प्रेरकत्वसाम्येन भगवति वायौ च साधारणस्येशाननाम्नो विष्णौ समन्वय-प्रतिपादनादस्ति शास्त्रादिसङ्गतिः । श्रुत्यादिसङ्गतिं विषयसंशयौ च सूचयति ॥ **विष्णुरेवेति** ॥ 'अथातो ब्रह्मजिज्ञासा' इति जिज्ञास्यत्वं विष्णोरुक्तम् । तज्जिज्ञास्यत्वमीशानस्य काठके प्रतीयते । 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य' इत्युक्त्वा 'ऊर्ध्वं प्राणम्' इत्यादौ 'विश्वेदेवा उपासते' इति जिज्ञासोपासनयोरैक्यात् । श्रवणादिरूपविचारो हि जिज्ञासोच्यते । उपासना च सैव । यदाहुः । 'सोपासना च द्विविधा शास्त्राभ्यासस्वरूपिणी । ध्यानरूपा परा चैव तदङ्गं धारणादिकम्' इति । स च यदि विष्णोरन्यः स्यात्तदा जिज्ञास्यत्वं चान्यस्यैव प्रसज्यते इत्यवश्यं निर्णेयः । स ईशानोऽत्र विषयः । किं विष्णुर्वायुर्वेति सन्देहः । प्रागुक्तसाधारण्यमेव सन्देहवीजमिति भावः । ईशानशव्दस्य रुद्रे प्रसिद्धावपि तद्विषयसंशयः (अधिकारिसर्वोपास्य) सर्वदेवोपास्यत्वलिङ्गभिया गर्भस्रावेणैव निवृत्तः । य उन्नयति तमित्यन्वयः । सयुक्तिकं पूर्वपक्षयति ॥ **स चेति** ॥ स चेशानो वायुरेव भवेत् । ईशानस्योर्ध्वं प्राणमुन्नयतीति वाक्ये प्राणव्यवस्थापकत्वमध्यमत्वसर्वदेवोपास्यत्वश्रवणात् । न चैतल्लिङ्ग-श्रवणेऽपि कुतोऽयं वायुर्विष्णुः किं न स्यादिति । 'यथा सम्राडेवाधिकृतान्विनियुङ्क्ते एतान् ग्रामान् अधितिष्ठस्वैतान् ग्रामानधितिष्ठस्व इत्येवमेवैष प्राण इतरान् प्राणान् पृथक्पृथगेव सन्निधत्ते' इति प्राणव्यवस्थापकत्वस्य वायुलिङ्गत्वश्रवणात् । 'अथेममेव नाप्रोयोऽयं मध्यमः प्राणः' इति मध्यमत्वस्य तद्धर्मत्वोक्तेः । कुविदङ्गेति तस्य सर्वदेवोपास्यत्वप्रतीतेश्च । अतो वाय्वेकनिष्ठलिङ्गश्रवणादीशानो वायुरेवेति हेतोस्तस्यैव जिज्ञास्यत्वम् । न च वाच्यं नेदमनिष्टं वायोरिति जिज्ञास्यताभ्युपगमाद् विष्णुजिज्ञास्यत्वस्यावाधादिति । वायोः सर्वदेवोपास्यत्वे तस्य मोक्षदातृत्वापातात् । न हि प्राप्तसमस्तैश्वर्याणां देवानां प्रयोजनान्तरमस्ति । तथा च किं विष्णुजिज्ञासानियमेनेति विष्णुरेव मोक्षार्थं जिज्ञास्य इत्यस्यानुपपत्तिरिति भावः । अयं मन्त्रार्थः । अङ्गेति सम्वोधनम् । ये देवा वायोर्नमस्कारादिना ज्ञानादिगुणपूर्णा अज्ञानाद्यवद्य-विधुराश्च पुरा आसंस्ते कचिद्रहस्यस्थाने सूर्येण साकं ज्ञानिने संसारवाधवद्भिः शरणं प्राप्ताय वायवे वुद्धिमावासयंस्तद्विषयामकुर्वन्निति । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ विष्णुरेवेशानो भवेत् । 'मध्ये वामनम्' इति वामनश्रुतेः । तस्याश्च विष्णौ महायोगरूढि-सिद्धायास्तत्प्रमापकत्वात् । अतो विष्णोरीशानत्वेन तस्यैव जिज्ञास्यत्वमिति भावः । अत्र प्रमितपदं श्रुतेर्निरवकाशत्वसूचनार्थम् । ननु वायुलिङ्गसद्भावादीशानो वायुरेव किं न स्यादित्यत आह ॥ **न हीति** ॥ भवेत्सत्यामपि श्रुतौ लिङ्गेन वायुत्वनिश्चयो यदि श्रुतेर्लिङ्गं वलवद्भवेन्न च

(तन्त्रप्रकाशिका)

तदस्तीत्यर्थः । अनेन शब्दादेव इत्येवकाराभिप्रायो वर्णितो भवति । कुतो न श्रुतेर्लिङ्गं बलवदित्यत आह ॥ **श्रुतिरिति** ॥ नाममात्रेण निर्देशः श्रुतिः । असाधारणधर्मो लिङ्गम् । निराकाङ्क्षपदानि वाक्यम् । एकप्रमेयप्रतिपादकानेकवाक्यानि प्रकरणम् । अनेकप्रमेयप्रतिपादकमेकार्थे तात्पर्ययुक्तं स्थानम् । समानोक्तिः समाख्या । तत्र श्रुतेः साक्षादर्थधीजनकत्वात् सर्वतः प्राबल्यम् । लिङ्गस्यानुमापकतयाऽर्थबोधकत्वात् तदानन्तर्यम् । वाक्यस्यानेकार्थकथनद्वाराऽर्थानुमापकत्वात् ततोऽपि दौर्बल्यम् । प्रकरणस्य बह्वर्थपरत्वेनार्थानुमितिहेतुत्वात्तदवमता । स्थानस्यातिबह्वर्थकथनेनाभिप्रायतोऽर्थानुमितिजनकस्य ततोऽपि दौर्बल्यम् । समाख्यायाः स्थानान्तरगतायाः सादृश्यमात्रेणार्थानुमापकत्वात्ततोऽपि दुर्बलत्वम् । अत्रापि पूर्ववन्निरवकाशात् स्वभावदुर्बलादपि स्वभावप्रबलसावकाशस्य दौर्बल्यमित्यादि द्रष्टव्यम् । अत्र विरुद्धैतेषां समवाये सत्येवं पूर्वपूर्वेणोत्तरोत्तरबाधायागमार्थनिर्णयो भवतीत्यर्थः । न च यथा स्थित एव क्रमः । आत्मा प्रकरणादित्यत्र समाख्यायाः प्रकरणेन बाधितत्वात् । तदाह जैमिनिः 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' इति । भाष्यकारोऽपि । 'वाक्यं प्रकरणं स्थानं समाख्या च तथा विधा' इति । श्रुतिलिङ्गवाक्यानां साक्षाद्विप्रतिपन्नार्थनिष्ठत्वे श्रुत्यादित्वेनैव ज्ञापकत्वम् । उपक्रमोपसंहारयोः श्रुतत्वे तन्निश्चायकतया लिङ्गत्वमन्यत्र चेत्प्रकरणनिश्चायकत्वेन । उपक्रमोपसंहारावपि श्रुत्यादिना सत्यामर्थसिद्धौ तात्पर्यलिङ्गे । अन्यथा प्रकरणनिश्चायकौ । समाख्यापि साक्षाद्विप्रतिपन्ननिष्ठा समाख्यात्वेनैव लिङ्गम् । अन्यथा प्रकरणनिश्चायकत्वेन भवति । लिङ्गवाक्ययोः साक्षादसाक्षात्त्वेन भेदः 'गोत्रभिदं' 'प्रवक्षणा अभिनत्पर्वतानाम्' इत्यादिवदिति । नन्वस्तु श्रुतेः स्वभावप्राबल्यं तथापि बाहुल्येन लिङ्गानामपि प्राबल्यादनिर्णय एवेत्यत आह ॥ **तच्चेति** ॥ न बाहुल्येऽपि लिङ्गानां श्रुतिसाम्येनानिर्णयः । श्रुतेर्निरवकाशत्वात् । लिङ्गानां विष्णावबकाशात् । सावकाशशतादपि निरवकाशैकस्य प्राबल्यादिति भावः । श्रुत्यन्तरेण प्राणनिष्ठतया लिङ्गोक्तेः । कथं तद्विष्णोरित्यत आह ॥ **तस्यैवेति** ॥ वायुत्वमत्रोपलक्ष्यते ॥

## गुर्वर्थदीपिका

प्राणव्यवस्थापकत्वमध्यमत्वेत्यत्र अपानप्राणयोर्मध्ये आसीनमित्युक्तत्वान्मध्यमत्वं श्रूयत इति भावः । न चास्य प्राणोन्नायकत्वमेव श्रूयते न तु प्राणत्वं तेन योऽयं मध्यमः प्राण इति श्रुतिर्न समाख्येति वाच्यम् । अत्र प्राणापानपदेन ऊर्ध्वाधःश्वासयोरेव गणनात्तन्नियामकतया मध्ये स्थितो मध्यमप्राण एवेति शङ्कितुरभिप्रेतत्वात् । अत एव वामनत्वमप्यङ्गुष्ठप्रमाणतया

(गुर्वर्थदीपिका)

ह्रस्वत्वात्कथञ्चिन्नेयमित्यभिसन्धिः । उषःकालप्रवर्तकोषादेत्यभिमन्यमानत्वात् बुद्धिरुषःपदे-नोच्यत इति भावेनोक्तं ॥ **बुद्धिमिति** ॥ वामनपदस्य हरौ रूढेः सार्वजनीनत्वाद्वामनः-तृत्वाख्ययोगस्य च निरवधिकत्वात् महारूढियोगसिद्धाया इत्युक्तम् । अत एव ह्रस्वो वामन इति शङ्काऽपि गर्भस्रावेणैव गता । विशेष्यभूतवामनाख्यपञ्चमभगवदतारविवक्षायां विशेष्य-पदाभावेन विशेषणमात्रस्य साकांक्षत्वेन वैयर्थ्याच्चाङ्गुष्ठमात्रपदेन पौनरुक्त्याच्च । अत एव शब्दस्य निरवकाशत्वद्योतनाय 'शब्दादेव' इत्युक्तम् । नाममात्रेणेत्यत्र असाधारणनाममात्रेण वस्तुनिर्देशः । यथा 'मध्ये वामनम्' इत्यत्र वामनश्रुतिः । असाधारणधर्मो लिङ्गमित्यत्र तद-साधारणधर्मबोधकसमस्तपदात्मकं लिङ्गवचनम् । यथा 'गोत्रभिदं गोविदं वज्रबाहुम्' इत्यादि । निराकांक्षपदानीत्यत्र पदान्तराकांक्षारहितत्वे सति संसर्गमर्यादया लिङ्गप्रतिपादकसमस्त-पदानीत्यर्थः । यथा 'प्रवक्षणा अभिनत्पर्वतानाम्' इत्यादि । वक्षःस्थानीयं मध्यं नयन्तीति वक्षणाः पक्षाः ये वक्षणास्तानभिनदिति योजना । एकप्रमेयप्रतिपादकानेकवाक्यानि प्रकरण-मित्यत्र एकस्मिन्वाक्ये श्रुत्या लिङ्गेन वा निर्णीतं यत्प्रमेयं तदविरुद्धार्थप्रतिपादकानि तत्समीप-स्थानेकवाक्यानि प्रकरणमित्यर्थः । यथा 'सत्यं ज्ञानमनन्तं ब्रह्म' इति सत्यत्वादिलक्षणै-र्निर्णीतब्रह्मपरमन्त्रवर्णसमीपस्थानि 'यो वेद निहितं गुहायाम्' इत्यादीनि आनन्दमयान्त-वाक्यानि । अनेकप्रमेयप्रतिपादकमेकार्थे तात्पर्ययुक्तं स्थानमित्यत्र ब्रह्मकाण्डस्थतया ब्रह्मण्येव तात्पर्यवन्ति प्राणाद्यनेकप्रमेयप्रतिपादकानि प्राणसंवादाध्ययननियमदुःखास्वातन्त्र्यादि-प्रतिपादकतयैकप्रकरणस्थानि वाक्यानि स्थानमित्युच्यते । समानोक्तिः समाख्येत्यत्र निर्णीतस्थलस्थसमानोक्तिः समाख्येत्यर्थः । यथा विश्वकर्मसूक्तार्थनिर्णायकं 'परो दिवा पर एना पृथिव्या' इति लक्ष्मीसूक्तस्थवचनम् । विरुद्धैतेषामित्यत्र आपाततो विरुद्धानामेतेषां श्रुत्यादिनामित्यर्थः । उपक्रमोपसंहारयोः श्रुतत्वे इत्यत्र उपक्रमे उपसंहारे च श्रुत्यादीनां श्रुतत्वे सतीत्यर्थः । तन्निश्चायकतया उपक्रमादीनामेकार्थनियतत्वनिश्चायकतया । लिङ्गत्वं तत्समीपस्थ-वाक्यान्तरार्थानुमापकत्वं, परनिरपेक्षत्वेन प्रबलत्वात् श्रुत्यादिकमेवार्थानुमापकम् । उपक्रमस्तु तदा 'लिङ्गं तात्पर्यनिर्णये' इति वचनात्तस्मिन्नर्थे तात्पर्यमात्रानुमापकः । वायुत्वमत्रोपलक्ष्यत इत्यत्र 'ते वायव' इति श्रुत्युक्तवायुत्वं भाष्यस्थप्राणत्वपदेनोपलक्ष्यते ।

## भावबोधः

अविनाशित्वसाम्यादित्यत्राक्षरशब्दप्रवृत्तिनिमित्ताविनाशित्वस्यैवेशानशब्दस्यापि यौगिकत्वेन तत्प्रवृत्तिनिमित्तप्रेरकत्वस्योभयत्र प्रसिद्धिहेतुत्वं स्फुटमिति पुनःशब्दः ईशानो वज्रो योनिराकाश इति न्यायविवरणे साधारण्यमात्रमनुवर्त्य उक्तमिति भावेनाह– अत्र **प्रेरकत्वसाम्येनेति** ।। एवं वज्राद्यधिकरणेष्वपि ज्ञातव्यम् ।। **श्रुत्यादिसङ्गतिमिति** ।। अव्यवहितपूर्वाधिकरणसङ्गतिस्तु मौक्तसुखविशेषार्थिदेवोपास्यतया 'विश्वे देवा उपासत' इत्युक्तस्येशानस्य विष्णोरन्यत्वे तमात्मस्थं येऽनुपश्यन्ति धीरा इत्युक्तशाश्वतसुखसाधनज्ञानोपासनाविषयोऽप्यन्यः स्यादित्यादि-पूर्वाक्षेपसम्भवादिति ज्ञातव्यम् । न्यायविवरणे ईशानशब्दः समन्वेतव्यत्वेनोक्तः भाष्ये तु कश्चिदित्येवोक्तम् । अत ईशानशब्दयुक्तश्रुत्यंशमुदाहरति– **अङ्गुष्ठमात्र इति** ।। **किं विष्णुरिति** ।। अत्रेशानो भूतभव्यस्येत्युक्त ईशानः किं मुख्यवायुरुत विष्णुरिति चिन्ता । तदर्थमूर्ध्वं प्राण-मुन्नयतीत्यादिनोक्तप्राणव्यवस्थापकत्वादिवायुलिङ्गैर्विष्णुवाचकवामनश्रुतिबाध उत तच्छ्रुत्या वायुलिङ्गबाध इति । तदर्थं लिङ्गान्यनेकत्वेन प्रबलानि उतैकत्वेऽपि श्रुतिः प्रबलेति । तदर्थं तानि किं निरवकाशानि श्रुतिः सावकाशोत विपरीतमिति । तदर्थमेवैष प्राण इति, योऽयं मध्यमः प्राण इति, ते वायवाय इति समाख्याश्रुतिगतप्राणवायुशब्दौ किं मुख्यपरावेवोत विष्णुपरावपीति । तदर्थं तत्र प्रमाणं नास्त्युतास्तीति । ईशानशब्दस्य रुद्रे प्रसिद्धावपीति । उपलक्षणञ्चैतत् । ईशानशब्दप्रवृत्तिनिमित्तप्रेरकत्वस्य रुद्रादौ साम्येऽपीत्यपि द्रष्टव्यम् । ऊर्ध्वं प्राणमुन्नयतीति श्रुतावन्वयाप्रतीतेर्यत्तच्छब्दावध्याहृत्यान्वयमाह ।। **य उन्नयति तमित्यन्वय इति । ऊर्ध्वं प्राणमिति वाक्य इति** । अनेन भाष्ये ऊर्ध्वं प्राणमुन्नयतीत्यादितः श्रुत्युदाहरणं, पूर्वपक्ष-लिङ्गज्ञापनार्थम् । अन्यथा वामनमासीनमित्येवोदाहियेतेत्युक्तं भवति । 'एवमेवैष' इत्यत्र एवमित्यस्यार्थप्रतीत्यर्थं 'यथा सम्राट्' इत्यादिपूर्ववाक्योदाहरणं कृतमिति ज्ञातव्यम् । अतो **वाय्वेकनिष्ठेति** ।। एतेनोर्ध्वं प्राणमुन्नयतीत्यात्मादिलिङ्गानां प्राणादन्यत्रावकाशराहित्यमिति न्यायविवरणं व्याख्यातं भवति । तत्र लिङ्गानां वायुनिष्ठत्वज्ञापकप्रदर्शनार्थं प्रवृत्तमेव 'एष प्राण इतरान् प्राणान् पृथक् पृथगेव सन्निधत्त' इत्यादिवाक्यभ्रम इति न्यायविवरणं 'यथा सम्राडेव' इत्यादिना 'सर्वदेवोपास्यत्वप्रतीतेश्च' इत्यन्तेन व्याख्यातं भवति । कुविदित्यस्य कचिदित्युप-पदम् । रहस्यस्थान इति तात्पर्यकथनम् । एवमुषसमवासयन्नित्यस्यापि द्रष्टव्यम् । प्रमितपदं श्रुतेर्निरवकाशत्वसूचनार्थमिति । श्रुतेर्निरवकाशत्वरूपप्राबल्याभावे बहुलिङ्गबाधेन तत्प्रापितार्थ-

(भावबोधः)

प्रमापकत्वं न स्यात्। अतः श्रुत्यर्थस्य प्रमितत्वोक्त्या श्रुतेर्निरवकाशत्वमेव सूचितमित्यर्थः। अत एव तत्प्रमापकत्वात् इत्युक्तम्।

'श्रुतिर्नाम समुदिष्टं लिङ्गं तल्लक्षणं स्मृतम्।
पदानि निरपेक्षाणि वाक्यं प्रकरणं तथा ॥
एकस्य प्रतिपत्त्यङ्गवचनं स्थानमुच्यते।
अन्यत्र तत्समोक्तिस्तु समाख्यास्थानमेव च।
अध्यायादिप्रबन्धास्तु प्रभेदा आगमस्य तु ॥'

इति तत्त्वप्रदीपोदाहृतवचनानुसारेण श्रुत्यादीनां लक्षणमाह– **नाममात्रेणेत्यादि** ॥ अत्र केवलयौगिकशब्दव्यावृत्त्यर्थं मात्रपदम्। तथा च नाममात्रेणेत्यस्य केवलयौगिकशब्दभिन्न-पदेनेत्यर्थः। तेन योगरूढानां वामनादिशब्दानां च श्रुतित्वहानिरिति द्रष्टव्यम् ॥ **असाधारण-धर्म इति** ॥ तत्प्रतिपादकशब्द इत्यर्थः ॥ **निराकाङ्क्षपदानीति** ॥ पर्यवसिताकाङ्क्षापदानीत्यर्थः। अत एवानुव्याख्याने–

'निराकाङ्क्षपदान्येवं वाक्यमित्युच्यते बुधैः।
तत्तदर्थाभिधानेन स्यान्निराकाङ्क्षता च सा ॥'

इत्युक्तम् ॥ **एकप्रमेयेति** ॥ स्थानेऽतिव्याप्तिवारणाय एकप्रमेयप्रतिपादकेति। वाक्ये अतिव्याप्तिवारणायानेकेति। अनेकाक्षरात्मकपदादावतिव्याप्तिवारणाय वाक्येत्युक्तम्। अनेक-प्रमेयेति। प्रकरणेऽतिव्याप्तिवारणायानेकप्रमेयप्रतिपादकेत्युक्तम्। विरुद्धार्थशास्त्रयोर्मिलितयोः स्थानत्वपरिहारार्थमेकार्थतात्पर्यमुक्तमिति ॥ **समानोक्तिरिति** ॥ निर्णीतस्थल इत्युपस्कर्तव्यम्। तेन विप्रतिपन्नप्रकरणादिगतसमानोक्तेः समाख्यात्वव्यवच्छेदः ॥ **साक्षादर्थधीजनकत्वादिति** ॥ व्याप्यादिप्रतिप्रादनद्वारमन्तरेण आगमतयाऽविप्रतिपन्नार्थधीजनकत्वादित्यर्थः ॥ **अनुमापक-तयेति** ॥ व्याप्यार्थप्रतिपादनद्वारेत्यर्थः। यथाऽत्रैव योऽयं मध्यम इति मध्यमपदस्य मध्यमत्वरूपव्याप्यप्रतिपादनद्वारेशानशब्दोक्तस्य वायुत्वनिश्चायकत्वम् ॥ **तदानन्तर्यमिति** ॥ ततो दौर्बल्यमित्यर्थः। यथाऽत्रैव वामनश्रुतितो मध्यमत्वादिलिङ्गानाम् ॥ **अनेकार्थकथन-द्वारेति** ॥ यथा 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त' इति वाक्यसम्भूता-

(भावबोधः)

द्यनेकार्थप्रतिपादनद्वारा भूतकारणत्वरूपव्याप्यप्रतिपादनद्वारा भूतकारणत्वरूपव्याप्य-प्रतिपादकत्वेनाकाशपदोक्तस्य भूताकाशत्वानुमापकत्वम् । **ततोऽपि दौर्बल्यमिति** ॥ यथा लिङ्गादित्यत्रैवानन्तलिङ्गाद् वाय्वादिभूतकारणत्वरूपभूताकाशत्वव्याप्यार्थकस्य 'सर्वाणि ह वा इमान्याकाशादेव समुत्पद्यन्त' इति वाक्यस्य ॥ **बह्वर्थपरत्वेनेति** ॥ यथा 'मूर्धानं दिव' इत्याद्यग्निप्रकरणस्य देवमुख्यत्वयज्ञनाभित्वाद्यग्निज्ञानकबह्वर्थप्रतिपादकत्वेन ज्योतिःशब्दोक्त-स्याग्नित्वानुमापकत्वम् ॥ **तदवमतेति** ॥ यथा 'ज्योतिश्चरणाभिधानात्' इत्यत्र विकरणादि-विरुद्धत्वलिङ्गप्रतिपादक 'विमे कर्णे' इति वाक्यादुदाहृताग्निप्रकरणस्य दौर्बल्यम् । अतिबह्वर्थ-कथनेनाभिप्रायत इति । यथा षट्प्रश्नोपनिषद्रूपस्थानस्य बह्वर्थकत्वेनानेकप्रकरणार्थधीपूर्वकमिदं स्थानं विष्णुपरमिति यज्ज्ञानं तत्पूर्वकं स्थानान्तर्गतस्यैव 'तस्यैवमेवैष प्राणः' इति वाक्यस्य स्थानानुगुणार्थकत्वमेव वक्तव्यमिति तद्वाक्यगतप्राणशब्दोक्तस्य विष्णुत्वानुमापकत्वम् ॥ **ततोऽपि दौर्बल्यमिति** ॥ यथा 'अस्यैव प्राणस्य भवः कुत एषः प्राणो' 'अजायत' इत्यादि-खण्डरूपान्मुख्यप्राणधर्मप्रतिपादकत्वेन तत्प्रकरणात् ॥ **सादृश्यमात्रेणेति** ॥ 'यथान्नमय-प्राणमयमनोमयविज्ञानमय आनन्दमया मे शुध्यन्ताम्' इति कोशपरसमाख्याया अत्रोक्तमेव स्थानान्तरस्थविप्रतिपन्नवाक्येनापि बोध्यमित्येवं स्थलद्वयानुसन्धानपूर्वकं तत्सदृशत्वादिदं तदर्थ-परमित्येवं सादृश्यमात्रेणैतमन्नमयमात्मानमुपसंक्रम्य' 'एतमन्नमयमात्मानमुपसङ्क्रामति' इत्याद्यन्नमयादिशब्दोक्तस्य कोशत्वानुमापकत्वम् । यथा वा 'स्मर्यमाणमनुमानं स्यात्' इति सूत्रोपात्तायाः 'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः' इति गीतासमाख्याया वैश्वानरस्य विष्णुत्वानुमापकत्वम् ॥ **ततोऽपि दौर्बल्यमिति** ॥ यथा– 'ब्रह्मविदाप्नोति परम्', 'भृगुर्वै वारुणिः' इति विष्णुधर्मप्रतिपादकतया विष्णुस्थानादुदाहृतसमाख्याया इति द्रष्टव्यम् । अत्र यद्यपि वामनश्रुत्या अनन्तत्वलिङ्गादीनां निरवकाशत्वेन मध्यमपदसर्वाणीत्यादिवाक्य-प्रतिपादितमध्यमत्वादेः प्राबल्यं तत्र तत्र व्युत्पाद्य तत्तद्बाधकत्वं व्युत्पादितम् । तथापि जातिकृतप्राबल्येनापि बाधकत्वाङ्गीकारे न कोऽपि विरोध इत्येतेषामुक्तोदाहरणत्वं द्रष्टव्यम् ॥ **पूर्ववदिति** ॥ सप्तान्वयाधिकरणोक्तोपक्रमादिवदित्यर्थः ॥ **इत्यादीति** ॥ आदिपदेन निरवकाशादेकस्माद्बहुत्वेन प्रबलस्य सावकाशस्य दौर्बल्यमित्यस्य ग्रहणम् ।

ननु तर्हि सावकाशत्वनिरवकाशत्वे एव बाध्यबाधकत्वोपयोगिनी न श्रुत्यादित्वमित्यतः

(भावबोधः)

सावकाशत्वादिरहितश्रुत्यादीनां जातिकृतप्राबल्यदौर्बल्यनिमित्तको बाध्यबाधकभाव इत्यभिप्रेत्यैवमागमनिर्णय इत्येतत्तथा व्याचष्टे ॥ **विरुद्धैतेषामिति** ॥ अनेन 'एवमागमनिर्णय' इत्यस्य पूर्वपूर्वं बलीय इत्यागमनिर्णय इत्यन्यथाप्रतीतिर्निरस्ता भवति ॥ **श्रुतिलिङ्गवाक्यानामिति** ॥ यथा 'सर्वेषु भूतेष्वेतमेव ब्रह्म' इत्यत्र 'अभिविमानमात्मानं वैश्वानरम्' इत्यादौ च विप्रतिपन्नसर्वगतवैश्वानरादिनिष्ठब्रह्मात्मशब्दादेः यथा च आकाशपरायणं स एष परोवरीयानुद्गीथः स एषोऽनन्त इत्यत्र य एषो अन्तरक्षणि पुरुषो दृश्यते एष आत्मेति होवाच एतदमृतमभयमेतत् ब्रह्मेत्यादौ च विप्रतिपन्नाकाशचक्षुरन्तस्थगतानन्तत्वामृतत्वादेः यथा 'विमे कर्णा' इत्यत्र 'यं पृथिवी न वेद' इत्यादौ विप्रतिपन्नज्योतिरन्तर्याम्यादिनिष्ठस्योदाहृतादिवाक्यस्येति ज्ञेयम् ॥ **उपक्रमोपसंहारयोः श्रुतत्व इति** ॥ यथा वैश्वानर इत्यत्र को न आत्मा किं ब्रह्मेत्युपक्रमस्थब्रह्मादिश्रुतेः । यथा च 'प्रथमे श्रवणात्' इत्यत्र 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इत्युपसंहारस्थाबादिश्रुतेः । लिङ्गस्य तु यथा 'आत्मा वा इदमेक एव अग्र आसीत्' इत्यत्र 'य एष तपति' इत्यादिना बहुशोऽनुसन्धानाच्चैतरेयभाष्ये तथोक्तत्वात् । 'सर्वत्र प्रसिद्धोपदेशात्' इत्यत्र 'स योऽतोऽश्रुतः' इत्युपसंहारस्थाश्रुतत्वादिलिङ्गस्य । वाक्यस्य तु यथा– अन्तर इत्यत्र कं ब्रह्म खं ब्रह्मेत्युपक्रमस्थवाक्यस्य 'प्राणस्तथानुगमात्' इत्यत्र 'ता वा एता सर्वा ऋचः' इत्यादिरूपोपसंहारवाक्यस्य ॥ **अन्यत्र चेदिति** ॥ विप्रतिपन्नार्थप्रतिपादकवाक्योपक्रमोपसंहारेभ्योऽन्यत्रेत्यर्थः । यथा 'प्राणस्तथा' इत्यत्र 'ब्रह्मेमं पुरुषम्' इत्यादिब्रह्मश्रुतेः । 'दहर उत्तरेभ्यः' इत्यादौ य 'आत्मा अपहतपाप्मा' इत्यादिलिङ्गस्य । अत एव प्राण इत्यादौ 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ' इत्यादिवाक्यस्येति द्रष्टव्यम् । यद्यपि श्रुत्यादिना विप्रतिपन्नार्थाविनिश्चयदशायामुपक्रमोपसंहारश्रुत्यादेरपि प्रकरणनिश्चायकत्वमेव । तथाप्युपक्रमादिनिश्चयद्वारा तस्य प्रकरणनिश्चायकत्वमन्यत्र श्रुत्यादेस्तु साक्षादेव प्रकरणनिश्चायकत्वमिति बोद्धव्यम् ॥ **उपक्रमोपसंहारावपि श्रुत्यादिनेति** ॥ उपक्रमोपसंहारावपि उपक्रमोपसंहाराभ्यामन्यत्र श्रुतश्रुत्यादिनार्थनिश्चये सति तस्मिन्नेवार्थनिश्चये सति तस्मिन्नेवार्थे तात्पर्यातिशयज्ञापकावित्यर्थः । 'अत्ता चराचर' इत्यत्रात्तुः ब्रह्मत्वे सर्वहन्तृत्वादिना निर्णीते, 'नैवेह किञ्चनाग्र आसीत्' इत्युपक्रमः यथा सर्वत्र प्रसिद्धेत्यत्र सर्वगतस्य ब्रह्मत्वे ब्रह्मशब्दादिना निर्णीते 'स योऽतोऽश्रुत' इत्याद्युपसंहार इति बोद्धव्यम् ॥ **अन्यथा तु प्रकरणनिश्चायकाविति** ॥ यथा द्युभ्वाद्यधिकरणे 'प्रकरणात्' इत्यत्र 'द्वे विद्ये वेदितव्ये' इति परमेश्वरोपक्रमः ।

(भाववोधः)

'अन्यमीशम्' इत्यत्रापि तस्यैव प्रकृतत्वनिश्चायकः । यथा चानुमानिकाधिकरणे 'प्रकरणात्' इत्यत्र तद्विष्णोः परमं पदमित्युपसंहारः । अनाद्यनन्तं महतः परम्' इत्यादेर्विष्णुप्रकरणत्वनिश्चायक इति ज्ञेयम् ॥ **समाख्यापीति** ॥ यथा 'पुरुषविधमपि चैनम्' इत्यत्र 'शीर्ष्णो: द्यौः समवर्तत, चक्षोः सूर्यो अजायत' इति पुरुषसूक्तोक्तिसमाना साक्षाद् विप्रतिपन्नवैश्वानरनिष्ठा वैश्वानरस्य 'मूर्ध्यैव सुतेजाश्चक्षुर्विश्वरूप' इत्याद्युक्तिः । अन्यथा प्रकरणनिश्चायकत्वेनेति । यथा 'परोदिवा पर एना पृथिव्यै तावती' इत्यम्भृणीसूक्तोक्तिसमाना । 'अजस्य नाभौ' इति विप्रतिपन्नाजे साक्षादश्रुता 'परो दिवा पर एना पृथिव्या परो देवेभिः' इत्याद्युक्तिरिति द्रष्टव्यम् ।

ननु 'परोवरीयानुद्गीथोऽनन्त' इत्यादिलिङ्गस्य 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ' इत्यादिवाक्यस्य विप्रतिपन्नार्थव्याप्यप्रतिपादकत्वाविशेषात् । कथं लिङ्गवाक्यभाव इत्यत आह ॥ **लिङ्गवाक्ययोरिति** ॥ अनेकार्थप्रतिपादनमन्तरा व्याप्यप्रतिपादकत्वं साक्षात्त्वं लिङ्गस्य । तद्द्वारा विप्रतिपन्नार्थव्याप्यप्रतिपादकत्वं वाक्यस्याऽसाक्षात्त्वमिति बोद्धव्यम् । तथा च लक्षणवाक्ये व्याप्यार्थकं पदं लिङ्गम् । तदर्थकानि निराकांक्षपदानि वाक्यमिति विवक्षितमिति भावः । तदेवोदाहरणमुखेन विशदयति ॥ **गोत्रभिदमिति** ॥ **इत्यादिवदिति** ॥ वत्करणस्य तद्यथेत्यादितदुदाहरणार्थत्वं द्रष्टव्यम् । 'अन्तस्तद्धर्मोपदेशात्' 'अत एव प्राणः' 'तथा हि लिङ्गं च' इत्यादिसूत्रेषु तद्व्याख्यानेषु भाष्यानुव्याख्यानन्यायविवरणेषु तट्टीकायाश्चानेकपदार्पितेऽपि व्याप्ये लिङ्गत्वोक्तिस्तु बोधकस्य शब्दस्य वाच्यत्वेऽपि बोध्यस्य समुद्रशायित्वलक्ष्मीपतित्वादेर्व्याप्यत्वमित्यभिप्रेत्यावान्तरभेदविवक्षया युक्तेति भावः ॥ **श्रुतेर्निरवकाशत्वादिति** ॥ अनेन वामनश्रुतेरेवानवकाश इतीशानशब्दोक्तो विष्णुरेवेति न्यायविवरणमपि व्याख्यातं भवति ॥ **लिङ्गानां विष्णावकाशादिति** ॥ एतेन लिङ्गानां परमात्मन्यवकाशो विद्यत एवेति न्यायविवरणमपि व्याख्यातं भवति ।

ननु भाष्योक्तन्यायेन प्राणशब्दस्य विष्णुवाचकत्वेन 'एवमेवैष प्राणो योऽयं मध्यमः प्राण' इति प्राणशब्दोपेतवाक्योक्तप्राणव्यवस्थापकत्वमध्यमत्वयोर्विष्णावकाशसिद्धावपि वायुशब्दोपेतकुविदङ्गेति वाक्योक्तसर्वदेवोपास्यत्वलिङ्गस्य कथं विष्णाववकाशसिद्धिरित्यत आह ॥ **वायुत्वमिति** ॥ प्राणत्वपदेनेत्यर्थः । 'प्रेरकोऽस्यापि यद्धरिः' इति अनुव्याख्यानानुसारेण अन्तर्यामितया जीवनान्वयव्यतिरेकेन्द्रियाभिमानिचेष्टकत्वादिलिङ्गाधिकरणत्वेन यथा 'तद्वै त्वं प्राणोऽ-

(भावबोधः)

भव' इति वाक्यगतप्राणशब्दवाच्यत्वं विष्णोस्तथैतद्वाक्यगतप्राणशब्दवाच्यत्वमन्तर्यामितयैव तद्वाक्योक्तप्राणव्यवस्थापकत्वादिलिङ्गाधिकरणत्वेनेति ज्ञातव्यम् ।

## भावदीपः

अत्र न्यायविवरणे पुनरीशानशब्द इत्येतावन्मात्रोक्तावपि प्राणप्रेरक इति सङ्क्षेपभाष्योक्त्या सूचितम् उर्ध्वं प्राणमुन्नयतीति भाष्योक्तवाक्यशेषलब्धं धर्ममादाय साधारण्यमक्षरनयन्यायेनाह ॥ **प्रेरकत्वेति** ॥ उपलक्षणमेतत् । रूढिसाम्येन चेत्यपि ध्येयम् । 'ईशानः प्राणदः प्राण' इति विष्णाविव ईशानो मारुतः प्राणो वायुर्जिष्णुस्तथैव चेति प्रथमाध्यायबृहद्भाष्योक्त्या वायावपि रूढेः सत्वात् । सङ्गतिपरत्वेन तावद्भाष्यं व्याकुर्वन् प्रतीयत इत्यन्तस्यार्थमाह ॥ अथात **इत्यादिना** ॥ **ईशानस्येति** ॥ तेन भाष्ये कश्चिदित्यस्यार्थो दर्शितः । सङ्गत्यादिद्योतनाय भाष्ये उपासनावाक्योक्तावपि समन्वेतव्यशब्दादि दर्शयितुं पूर्ववाक्यं चाऽऽह ॥ **अङ्गुष्ठेति** ॥ **इत्यादाविति** ॥ प्राणोन्नयनादिप्रतिपादकवाक्य इति योज्यम् । तेनोक्तेति युक्तम् । भाष्ये विश्वे देवा इत्यादावेव वाच्ये ऊर्ध्वमित्यादि पूर्वशेषोक्तेरुपयोगोऽग्रे व्यक्तः ॥ **यदाहुरिति** ॥ अनुभाष्ये तृतीये सर्ववेदान्तनय इत्यर्थः । स चेत्यादेर्भावमाह ॥ **स च यदीति** ॥ वक्ष्यमाणदिशा प्राणव्यवस्थापकत्वादिना वायुः स्यादित्यर्थः । उक्तमित्यन्तवाक्यस्य भावमाह ॥ **तदेति** ॥ इत्यवश्यमित्युक्तार्थम् । निर्णयः ईशान इत्यनुषङ्गः । श्रुतौ देवमात्रोक्तावपि कैमुत्यलब्धं मत्वाऽऽह ॥ **अधिकारिसर्वेति** ॥ इयदामननादित्यादौ रुद्रादप्यधिकारिणो वक्ष्यमाणत्वादिति भावः । स्वेतरेत्यधिकारिविशेषणं बोध्यम् । तेन न वायावप्यनुपपत्तिरिति । एतेन प्रेरकत्वस्यान्यत्रापि वृत्तेः कथं द्वयसाधारण्यमित्यपि शङ्काऽपास्ता । ननूर्ध्वं प्राणमुन्नयतीत्यत्र कर्तुरन्यस्याप्रतीतेः प्रकृतेशानस्यैव कर्तृत्वेनान्वयेऽपि नोत्तरार्धे । तत्र वामनमिति श्रुतेः अन्यस्यैवोपास्यत्वप्रतीतेः । अस्य तदप्रतीतेश्च कथं तल्लिङ्गतयेत्युक्तिरित्यत आह ॥ **य इति** ॥ अन्यथा समभिव्याहारेण प्रतीतैकवाक्यताभङ्गप्रसङ्गात् । मध्य आत्मनीत्युक्तस्य मध्ये वामनमिति प्रत्यभिज्ञानाच्चेत्यर्थः । पूर्वपक्षतद्युक्तितत्फलपरत्वेनापि भाष्यं व्याचक्षाणः स चेत्याद्यंशमवतार्य स च वायुरेवेति प्रतिज्ञांशार्थमाह ॥ **सयुक्तिकमिति** ॥ स चेत्यनुवादः ईशान इति व्याख्या । कुत इत्याकाङ्क्षायाम् एवमेवैष प्राण इत्यादिवाक्यत्रयं श्रवणोपलक्षणमुपेत्य तद्व्याचष्टे ॥ **ईशानस्येति** ॥ अनेन ईशान एवात्र वाक्ये कर्तृत्वेनान्वेतीति दर्शितम् ॥ **इति वाक्य इति** ॥

(भावदीपः)

एतेन भाष्ये पूर्वम् ऊर्ध्वमित्यादि त्रिपाद्युक्तरुपयोगो दर्शितः । इदानीम् ऊर्ध्वं प्राणमुन्न-यतीत्यादिलिङ्गानां प्राणादन्यत्रावकाशराहित्यमित्यन्यत्रोक्तलिङ्गनिरवकाशत्वविवरणपरतया एवमेवैष इत्यादि उपास्यत्वाच्चेत्यन्तं भाष्यं शङ्कापूर्वं व्याचष्टे ॥ **न चेति** ॥ भाष्यस्थैवम्पदार्थ-विवरणाय षट्प्रश्नस्थपूर्वशेषमाह ॥ **यथेति** ॥ सम्राट् सार्वभौमोऽधिकृतान्नियोगिनो विनियुङ्क्ते । कथम्, एतान्ग्रामानधितिष्ठस्व । तदाधिपत्येन तिष्ठति । एवमेवैष आत्मत एष प्राणो जायत इति आत्मजातत्वेनोक्तः प्राणो मुख्यप्राणः इतरान् भिन्नान् स्वस्माज्जातत्वेन उपचारेण आत्मप्रविभागान् प्राणान्वायून् पृथक्पृथगेव स्थानेषु स्थापयतीत्यर्थः ॥ **अथेति** ॥ वाजसनेये तृतीये वागादीनां मृत्युनात्तत्वमुक्त्वा अथेमं वायुं मृत्युर्नाऽऽप्नोदिति वागादिश्रैष्ठ्यं प्राणस्योच्यत इति तस्य मुख्यप्राणत्वद्योतनाय पूर्वशेषोक्तिः । अयं वा शिशुः योऽयं मध्यमः प्राणः प्राणः स्थूणेत्युपरि चतुर्थे शिशुब्राह्मणेऽप्यस्ति । फलितमाह ॥ **अत इति** ॥ तस्य व्याख्या **वाय्वेकेति** ॥

यद्वा अतः एवमेवैषः इत्यादि समाख्यानादित्यर्थः । सर्वदेवोपास्यः कश्चित्प्रतीयत इत्यस्य तात्पर्यमाह ॥ **इति हेतोस्तस्यैवेति** ॥ उक्तमित्यन्तभाष्यभावं वक्तुं विष्णोरेव । इत्यव-धारणोक्तेर्भावं शङ्कोत्तराभ्यां व्यनक्ति ॥ **न च वाच्यमिति** ॥ **वायोरपीति** ॥ अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदमिति तृतीये वक्ष्यमाणत्वादिति भावः । भाष्ये उपास्यः कश्चित्प्रतीयत इत्युक्त्वैव पूर्तौ सर्वदेवेत्युक्तिलब्धमाह ॥ **न हीति** ॥ एवमुक्तेस्तात्पर्यं मोक्षार्थमिति शेषपूर्त्या भाष्यवाक्यारूढं करोति ॥ **विष्णुरेवेति** ॥ पूर्वं कुविदङ्गेति तस्य सर्वदेवोपास्यत्वप्रतीतेरित्युक्तं तद्व्याख्यानेन व्यनक्ति ॥ **अयं मन्त्रार्थ इति** ॥ 'कुविदङ्ग नमसा ये वृधासः पुरा देवा अनवद्यास आसन् । ते वायवे मनवे बाधितायावासयन्नुषसं सूर्येणेति' मन्त्रः । नमसेत्युपलक्षणं मत्वाऽऽह ॥ **नमस्कारादिनेति** ॥ वृधासः ज्ञानादिगुणपूर्णाः कुवित् कचित् । बाधिः इतीयेत्युपेत्याऽऽह ॥ **संसारेति** ॥ उषसं बुद्धिम् । त्रयोऽर्थाः सर्ववेदेष्वित्युक्त्या कल्पनोपदेशा-दित्यादिचतुर्थपादोक्तन्यायैरन्यपरत्वस्यापि सत्त्वाद्वा सर्वसूक्तानां तत्र तत्रस्थवाय्वादिशब्दानां च ज्योतिरादिनयैर्वैष्णवत्वसिद्धावपि इह मन्त्रे विष्णुलिङ्गाभावेन अन्तरादिनयन्यायाविषयत्वाद्वाऽयं मन्त्रोऽत्र वायुपरत्वेनोक्तो व्याख्यातश्च । वक्ष्यते चैतत्तृतीये मन्त्रादिवद्वाऽविरोध इति सूत्रे । उक्तं च ऋग्भाष्ये । पूर्वप्रसिद्धवर्जं तु शक्रान्ता देवता मता इति ॥ प्रमित इत्यत्र विशेष्या-

(भावदीपः)

काङ्क्षाम् ईशानशब्दोक्तो विष्णुरेवेत्यन्यत्रोक्तेनैव पूरयन् भाष्यं व्याचष्टे ॥ **विष्णुरेवेति** ॥ ननु वामनश्रुतिरप्यणुश्चेति सूत्रे द्वितीये वक्ष्यमाणदिशाऽणुभूतप्राणरूपाद्यभिप्रायेण वायावपि सावकाशेत्यतो वामनश्रुतेरेवानवकाश इत्यन्यत्रोक्तमनवकाशत्वं सौत्रप्रमितपदोक्तमिति दर्शयन् भाष्यस्थप्रमितपदतात्पर्यमाह ॥ **तस्याश्चेति** ॥ अन्तरनये स्थानादीति गुणसूत्रोक्ते एष उ एव वामनिरेष हि सर्वाणि वामानि नयतीति सावधारणश्रुतिवाक्ये वामनि शब्दनिरुक्त्या एकदेशविकृतमनन्यवद्भवति इति न्यायेन देवासो देवा इत्यादेरिव वामनिवामनशब्दयोरैकार्थ्येन महायोगस्य स वामनः स आनन्दः सोऽच्युत इति तद्भाष्योक्तश्रौतप्रयोगस्य 'उपेन्द्रो वामनः प्रांशुः' इति सहस्रनामोक्तस्मार्तप्रयोगस्य च सत्त्वेन रूढेश्च सत्त्वादिति भावः ।

अस्त्वेवं प्रागुक्तजिज्ञासानियमाक्षेपे किमुक्तमुत्तरमित्यत आह ॥ **अत इति** ॥ निरवकाश-श्रुतेरेवेत्यर्थः । निरवकाशत्वं भाष्ये कुतो नोक्तमित्यत आह ॥ **अत्रेति** ॥ भाष्ये सूत्रे चेत्यर्थः । यद्वा अत एव प्राण इत्यत्र लिङ्गं बलवदेव स्यादित्यनुभाष्ये लिङ्गनिरवकाशत्वस्यैवकारार्थ-त्वोक्त्या तत्रेवात्राप्येवकारो निरवकाशत्वार्थ इति भ्रमनिरासायोक्तम् ॥ **अत्रेति** ॥ एवकारस्तु श्रुतेर्लिङ्गादितोऽपि जात्या प्राबल्योक्त्यर्थ इत्याह ॥ **अनेनेति** ॥ एवं सति श्रुत्यैव निर्णयोपपत्तौ तन्निरवकाशत्वमभ्युच्चयत्वेनोक्तमिति भावः । स्मार्तक्रमो न विवक्षित इति भावेन 'श्रुतिर्नाम समुद्दिष्टं लिङ्गं तल्लक्षणं स्मृतम् । पदानि निरपेक्षाणि वाक्यं प्रकरणं तथा । एकस्य प्रतिपत्त्यङ्गवचनं स्थानमुच्यते । अन्यत्र तत्समोक्तिस्तु समाख्या स्थानमेव च । अध्यायादि-प्रबन्धास्तु प्रभेदा आगमस्य च' इति तत्वप्रदीपोक्तवचनानुरोधेन क्रममुपेत्य लक्षणान्याह ॥ **नाममात्रेणेति** ॥ आपाततः धर्मद्वारं विना धर्मिनिर्देशकः शब्द इत्यर्थः । यथा द्युभ्वा-द्यायतनं स्वशब्दादित्यत्र तमेवैकं जानथ आत्मानम् इत्यत्राऽऽत्मश्रुतिः । यथा वा अत्रैव वामनश्रुतिः ॥ **असाधारणेति** ॥ एकपदार्पितो वाऽनेकपदार्पितो वेत्यर्थः । तथा च तादृश-धर्मबोधकशब्दोऽपि लिङ्गमित्युच्यते । योग्यतावद्वाक्यमपि तथेति भावः । तत्राऽद्यं यथा आकाशस्तल्लिङ्गादित्यत्र स एषोऽनन्त इत्यनन्तत्वम् । द्वितीयं तु अत एव प्राण इत्यत्र श्रीश्च ते लक्ष्मीश्च पत्न्याविति श्रीपत्नीकत्वादिकम् । एतेन श्रीश्च त इत्यादेर्वाक्यत्वेऽपि तद्बोध्य-स्यासाधारणधर्मत्वात् तदभिप्रायेण तत्र सूत्रभाष्यादौ लिङ्गत्वोक्तिर्युक्तेति भावः ॥ **निराकाङ्क्षेति** ॥ स्वस्मिन्नेव पूर्णाकांक्षत्वेनान्यत्र निराकांक्षाणि पदानीत्यर्थः । एतच्च वाक्यं

(भावदीपः)

विप्रतिपन्नस्वान्तर्गतपदार्थनिर्णायकं वा समभिव्याहृतवाक्यान्तर्गतविप्रतिपन्नपदार्थनिर्णायकं वा भवति । आद्यं यथा । हेयत्वावचनाच्चेति सूत्रे जानथ आत्मानमिति वाक्यम् अहेयत्वरूप-लिङ्गोपस्थापनद्वारा जीवं निवार्य परमात्मानम् आत्मपदार्थं निर्णाययति । द्वितीयमपि वाक्यान्तरनिर्णायकश्रुत्यादियुक्तत्वेन वा सहपाठमात्रेण वेति द्वेधा । आद्यं यथा । तत्रैव स एषोऽन्तश्चरते बहुधा जायमान इति जीवलिङ्गोपस्थापकवाक्यसमभिव्याहारेण पुनरात्मशब्दे जीवपरत्वे विप्रतिपत्तौ अमृतस्यैष सेतुरिति मुक्तोपसृप्यत्वलिङ्गोपेतवाक्यान्तरस्य जानथ आत्मानमिति वाक्यस्थात्मपदार्थस्य परमात्मनिर्णायकत्वम् । द्वितीयं यथा । दहरनये किं तदत्र विद्यत इति प्रश्नवाक्यम् एषोऽन्तर्हृदय आकाश इति वाक्यस्थाकाशपदस्य ब्रह्मरूपार्थत्वं निर्णाययति ॥ **एकेति** ॥ एकप्रमेयतात्पर्यकानेकवाक्यानीत्यर्थः । यथा द्युभ्वादिनये प्रकरणादित्यत्र जुष्टं यदा पश्यत्यन्यमीशमितीशशब्दार्थे विप्रतिपत्तौ द्वे विद्ये इति निर्बाधोपक्रमेण ब्रह्मपरतया निर्णीतं प्रकरणं स्वान्तर्गतेशशब्दार्थब्रह्मेति निर्णाययति । स्मृतौ ऐक्यस्येत्यादिकमुत्तरेणाप्यन्वेतीति मत्त्वाऽऽह ॥ **अनेकेति** ॥ एकार्थे तात्पर्ययुक्तानेकप्रमेय-प्रतिपादकप्रकरणजातं स्थानमित्यर्थः । यथा शन्नोमित्रादिभिर्वाक्यैस्तैरेव हरिमस्तुवत् । भृगुः पञ्चात्मकं पूर्णमन्नादिमयमच्युतम् । मुक्तगीतावसनैस्त्विति स्मृत्या ब्रह्मपरत्वेनावधारितवल्ली-त्रयात्मकस्थानस्य स्वान्तर्गतान्नमयादीनां ब्रह्मत्वनिर्णायकत्वम् ॥ **समानेति** ॥ निर्णीतस्थले समानोक्तिरित्यर्थः ।

सा च शब्दतोऽर्थतश्चेति द्वेधा । आद्या यथा । अन्तर्यामिनये शारीरश्चेति सूत्रे य आत्मनि तिष्ठन्नात्मनोऽन्तर इत्यादिसमाख्याया यो विज्ञाने तिष्ठन्नित्यादिवाक्यस्थविज्ञानस्य जीवत्वनिर्णायकत्वम् । उक्तं च तट्टीकायाम् । विज्ञानपदेन शारीरः कुत इति चेत् उदाहृत-श्रुतिसमाख्यानादेवेति । द्वितीया तु वैश्वानरनये वैश्वानरस्य विष्णुत्वे पुरुषसूक्तसमाख्या-निर्णायिकेत्याद्यूह्यम् । अत्र लक्षणेषु विशेषणकृत्यं स्पष्टम् । तेषु पूर्वबलीयस्त्वं बीजोक्त्या व्यनक्ति ॥ **तत्रेति** ॥ साक्षात् लिङ्गवद्व्याप्त्यादिबुद्धिमनपेक्ष्य शब्दविधयेत्यर्थः ॥ **अनुमापक-तयेति** ॥ इदमेतदर्थकं तदसाधारणधर्मबोधकशब्दसमानाधिकृतत्वात् । य एवं स एवं यथाऽमुक इति वा । अयमेतत्पदार्थः तत्समानाधिकृतपदबोध्यासाधारणधर्मवत्त्वात् । य एवं स एवं यथाऽमुक इति वाऽनुमापकतयेत्यर्थः । व्याप्त्यादिबुद्धिव्यवधानेनानुमापकत्वात् तदानन्तर्य-

(भावदीपः)

मित्यर्थः । यथाऽत्रैव वामनश्रुतितः प्राणादिव्यवस्थापकत्वलिङ्गस्य । यदोर्ध्वं प्राणमुन्नयतीति शब्दावगतो धर्मः वाय्वविनाभावानुसन्धानवत एव, ईशानशब्दार्थो वायुरेव तत्समानाधिकृत-शब्दबोध्यतदविनाभूतप्राणव्यवस्थापकत्वरूपधर्मवत्वात् । यो यत्समानाधिकृतशब्दबोध्या-साधारणधर्मवान् स तच्छब्दार्थः । यथा तल्लिङ्गादित्यादौ स एषोऽनन्त इत्याकाशशब्द-समानाधिकृतानन्त शब्दबोध्यासाधारणधर्मवान् विष्णुः आकाशशब्दार्थ इति ईशानशब्दार्थं वायुरिति निर्णाययितुं प्रवर्तन्ते ततः प्रागेव ईशानशब्दसमानाधिकृता वामनश्रुतिः व्याप्तिधियं विनैवेशान् शब्दार्थरूपं स्वार्थं स्वनिष्ठशक्त्यैव निश्चाययतीति प्राबल्यमित्यर्थः ॥ **अनेकेति** ॥ अनेकपदार्थकथनद्वारा स्वार्थान्वययोग्य एव समभिव्याहृतवाक्यान्तरार्थ इत्यादिरूपेणानु-मापकत्वादित्यर्थः ।

यथा दहरनये 'एषोऽन्तर्हृदय आकाश' इति वाक्यं हृत्स्थदहराकाशस्थितब्रह्मार्थकम् । तद्गतान्वेष्टव्यवस्तुप्रश्नार्थककिन्तदत्रेत्यादिवाक्यसमभिव्याहारात् । यद्यदर्थकवाक्यसमभिव्याहृतं तद्वाक्यं तदर्थान्वययोग्यार्थकम् । यथा स य एवंविदिति ब्रह्मज्ञानिवाक्यसमभिव्याहृतम् अन्नमयमात्मानमुपसंक्रामतीत्यादिवाक्यं ब्रह्मप्राप्त्यर्थकमिति सामान्यव्याप्त्या वा यथाऽधीहि भगवो ब्रह्मेति ब्रह्मपश्नार्थकवाक्यसमभिव्याहृतं चक्षुःश्रोत्रमित्याद्युत्तरवाक्यं ब्रह्मार्थकमित्यादि-रूपेण विशिष्य वाऽनुमापकत्वादित्यर्थः । तथा 'जानथ आत्मानम्' इत्याद्यपि वाक्यं 'अन्या वाचो विमुञ्चथ' इत्यादिवाक्यसहपाठात् ब्रह्मार्थकम् । तथा एतमेव ब्रह्मेत्याचक्षत इतिवाक्यं ब्रह्मपदं मुख्यपरब्रह्मार्थकम् । अन्यत्रायोग्यान्वयप्रतियोग्यर्थकसावधारणपदसमभिव्याहारात् । सामान्यव्याप्त्या संमतवदिति स्वान्तर्गतपदार्थानुमापकमित्याद्यूह्यम् ॥ **वह्वर्थेति** ॥ अनेक-वाक्यात्मकस्य प्रकरणस्यानेकवाक्यार्थधीपूर्वकमिदं प्रकरणमेतत्परमिति यज्ज्ञानं तज्ज्ञानपूर्वकं स्वान्तर्गतविप्रतिपन्नवाक्यस्य प्रकरणानुगुण एवार्थ इत्यनेकवाक्यार्थधीद्वारा लिङ्गत्वादित्यर्थः । यथा प्रागुक्तप्रकरणं अन्यमीशमिति वाक्यं जीवब्रह्मभेदार्थकमित्यस्यानुमापकमित्यादि बोध्यम् ॥ **अतिवह्वर्थेति** ॥ अनेकप्रकरणार्थधीपूर्वकमिदं स्थानमेतत्परमिति यज्ज्ञानं तत्पूर्वकं स्वान्तर्गतस्य विप्रतिपन्नवाक्यस्य स्थानानुगुण एवार्थ इत्येनकप्रकरणार्थधीद्वाराऽनुमापकत्वादित्यर्थः । प्रागुक्तमेवोदाहरणम् ॥ **स्थानान्तरेति** ॥ स्थानान्तरस्थाया अत्रोक्तमेव स्थानान्तरस्थ-विप्रतिपन्नवाक्येनापि बोध्यमिति स्थानद्वयानुसन्धानपूर्वकं तत्सदृशत्वादिदं तत्परमित्येवं सादृश्यमात्रेण लिङ्गत्वादित्यर्थः । उक्तमेवोदाहरणम् ।

(भावदीपः)

नन्वेवं कथमन्तरादिनयेषु लिङ्गात् श्रुतेर्दौर्बल्योक्तिः । कथं वा वैश्वानरनये असम्भवा-त्पुरुषविधमिति प्रकरणादिना पाचकत्वादिलिङ्गबाध इत्यत आह ॥ **अत्रापीति** ॥ नोपक्रमादा-वेवेत्यपेरर्थः । पूर्ववत्समन्वयसूत्रोक्तोपक्रमादाविवेत्यर्थः । एवं त्रिपादीं व्याख्याय अस्त्वेवं ततश्च किमित्यत एवमागमनिर्णय इति चतुर्थपादं व्याचष्टे ॥ **अत्र विरुद्धेति** ॥ एवमित्यनुवादः पूर्वेणोत्तरेण च वाक्यद्वयेन व्याख्येयतयाऽन्वेति । एवं विरुद्धेतेषां समवाये सतीति । एवं पूर्वपूर्वेण उत्तरोत्तरबाधायेति च । आगमार्थविनिर्णय इत्युक्त्वा श्रुत्यादिषट्कम् आगमार्थ एव लिङ्गतया निर्णायकम् । उपक्रमादिकं तु तात्पर्यानुमापकमिति दर्शितम् । अत एव तत्र लिङ्गं तात्पर्यनिर्णय इत्युक्तम् । समाख्यावाक्यप्रकरणस्थानानि चेति प्रमाणलक्षणटीकायां उपक्रमा-दीनां तात्पर्यलिङ्गत्वम् एतेषां पुनरर्थ एवेति योगविभाग इति । वक्ष्यते चात्रैवाग्रे उपक्रमे-त्यादिना । अत्रैषामुदाहरणानि तु चन्द्रिकायामुक्तानि । विवृतानि च तानि चन्द्रिका-प्रकाशेऽस्माभिः । तत्र श्रुत्यादिलिङ्गबाधोऽत्रैव स्पष्टः । स्मृतावुक्तक्रमो न विवक्षितः किन्तु सौत्र एवेति वक्तुमाह ॥ **न चेति** ॥ **आत्मेति** ॥ चतुर्थस्य चतुर्थपादे आत्मा प्रकरणादिति नये परं ज्योतिरुपसम्पद्येति दहरविद्यास्थवाक्यगतं ज्योतिः किं सूर्यः तद्देवाज्योतिषां ज्योतिरित्यादौ प्रयोगसत्त्वेऽपि स तेजसि सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यत एव हैव स पाप्मना विनिर्मुक्त इति श्रुतिसमाख्यानात् सूर्य इति प्राप्ते सिद्धान्तितम् । ज्योतिः परमात्मैव । य आत्माऽपहतपाप्मेति परमात्मप्रकरणात् । समाख्या तु विष्णौ सावकाशेति । तथा च तद्विरोधः स्यादिति भावः । तर्हि स्वोक्त एव क्रमः कुत इत्यत आह ॥ **तदाहेति** ॥ अस्माभिरुक्तं श्रुत्यादिपौर्वापर्यं तृतीयेऽध्याय इत्यर्थः ।

यद्वा श्रुत्यादिबलाबलबीजमस्माभिरुक्तमेव जैमिनिसूत्रेऽप्यभिमतं न तु पूर्वमीमांसाकारै-रुक्तमित्यभिप्रेत्याऽऽह ॥ **तदाह जैमिनिरिति** । श्रुत्यादिबलाबलबीजमित्यर्थः । परोक्त-बलाबलबीजखण्डनं तु तर्कताण्डवे द्वितीयपरिच्छेदान्ते प्रपञ्चितम् । सूत्रे विरुद्धानामिति योज्यम् । भाष्यमपि स्वोक्तक्रमे संवादयति ॥ **भाष्यकारोऽपीति** ॥ भक्तिपादीयानु-व्याख्यानकारोऽप्याहेत्यर्थः । आगमार्थावसित्यर्थानियतव्याप्तयोऽखिला इति पूर्वशेषः । ननु वैश्वानरनये असम्भवादिति गुणसूत्रे को न आत्मा किं ब्रह्मेति श्रुतात्मादिश्रुतेरुपक्रम-निश्चयद्वारा प्रकरणनिश्चायकत्वमुक्तम् । अत्र तूच्यते विप्रतिपन्नेशानशब्दार्थप्रमापकत्वं

(भावदीपः)
वामनश्रुतेः । तथा तल्लिङ्गादित्यादौ अनन्तत्वादिलिङ्गस्य विप्रतिपन्नार्थनिर्णायकत्वमुक्तम् । अत्ता चराचरग्रहणादित्यादौ अप्संवत्सरसृष्ट्यादेर्लिङ्गस्य प्रकरणनिर्णायकत्वमुक्तम् । तथा मान्त्रवर्णिकसूत्रे ब्रह्मविदाप्नोति परमिति वाक्यं ब्रह्मप्रकरणनिर्णायक(मित्यु)मुक्तम् । दहरन-यादौ किं तदत्रेत्यादिवाक्यं समभिव्याहृतवाक्यान्तरार्थनिर्णायकं भवति । तत्कथमित्यत आह ॥ **श्रुतिलिङ्गवाक्यानामिति** ॥ एतेषामुदाहरणानि चन्द्रिकायां व्यक्तानि । तर्हि उपक्रमादिकं व्यर्थमित्यत आह ॥ **उपक्रमेति** ॥ **अन्यथेति** ॥ अर्थसिद्ध्यभावे । नन्वसाधारणधर्मो लिङ्गमिति निराकांक्षपदानि वाक्यमिति चोक्तम् । तदयुक्तमिव । तथात्वे श्रीश्च त इत्यादे-र्लिङ्गत्वेनोक्तस्य वाक्यतापत्तेरित्याह ॥ **लिङ्गेति** ॥ असाधारणधर्मबोधकत्वाविशेषेऽपि एकः कर्ता वर्तमानकाले स्वार्थं पाकक्रियां निर्वर्तयतीत्यस्य पचते इत्यस्य चैकार्थत्वेऽपि एक इत्यादिवाक्यात् पचते इति पदस्यैव झडित्यर्थबोधकत्वादेकपदात्मकं लिङ्गम् अन्यत्तु वाक्यमिति भेद इत्यर्थः । तथा चान्तरादिनये यस्याण्डकोशं शुष्मम् । श्रीश्च ते लक्ष्मीश्च पत्न्यौ । वि मे कर्णा पतयत इत्यादीनां वाक्यत्वेऽपि लिङ्गत्वोक्तिः तद्बोध्यस्य असाधारणधर्मत्वात्तद्विवक्षयेति भावः । प्रवक्षणाः पक्षान् । इत्यादिवत् इत्यादौ यथा साक्षादसाक्षादर्थबोधकत्वेन लिङ्गं वाक्यमिति व्यवहारः । तथा अनन्तः श्रीश्च त इत्यादाविति भावः ।

एतेन ऊर्ध्वं प्राणमुन्नयतीत्यादेः शब्दस्य वाक्यत्वेऽपि तद्बोध्यस्य लिङ्गत्वाभिप्रायेण भाष्यादौ लिङ्गत्वोक्तिर्युक्तेति भावः । ननु सौत्रैवकारसूचितस्वभावप्राबल्येनैव श्रुतेर्लिङ्ग-बाधकत्वोपपत्तौ भाष्ये तच्च लिङ्गमित्यादिना लिङ्गस्य सावकाशत्वोक्तिरयुक्तेत्यतो व्यावर्त्य चोद्यमाह ॥ **नन्विति** ॥ **बाहुल्येनेति** ॥ द्विविधं बलवत्त्वं च बहुत्वाच्च स्वभावत इत्युक्तेरिति भावः । यद्यपि तयोः स्वभावो बलवानित्युक्त्या अनेकलिङ्गानामप्येकश्रुत्या बाधो युज्यते । उक्तश्चायमर्थः पादान्त्यप्राणनयटीकायाम् । तथापि सौत्रप्रमितपदसूचितश्रुतिनिरवकाशत्वा-वैयर्थ्यायाभ्युपेत्यवादेन वा प्रागुक्तदिशा लिङ्गानां निरवकाशत्वमप्यस्तीति हृदि कृत्वा लिङ्गानामपि प्राबल्यादनिर्णय एवेत्युक्तम् । ततश्च किमित्यतो भावमाह ॥ **न बाहुल्येऽपीति** ॥ **निरवकाशादिति** ॥ तस्याश्च विष्णौ महायोगेति प्रागुक्तदिशेति भावः ॥ **अवकाशादिति** ॥ वक्ष्यमाणदिशेति भावः । एतेन लिङ्गानां परमात्मन्यवकाशो विद्यत एव वामनश्रुतेरेवानवकाश इत्यन्यत्र श्रुतिलिङ्गयोर्निरवकाशत्वसावकाशत्वोक्तेरप्यभिप्रायो विवृतः ॥ **इत्यत आहेति** ॥

(भाव्दीपः)

'तद्वै त्वमिति वाक्ये यद्देवान्प्राणयो नव तस्मात्त्वं प्राणोऽभव' इत्युक्तप्राणनेतृत्वरूपप्राणत्वस्यात एव प्राण इत्यत्र विष्णौ साधितत्वात् । समाख्याया वायुपरत्वे प्राणमुन्नयतीत्याद्यं विष्णोरेव । तथा योऽयं मध्यम इत्युक्तमध्यमत्वस्य वायुधर्मत्वेऽपि इह न तत्प्रतीयते । मध्ये वामनमिति मध्यदेशस्थत्वस्यैव प्रतीतेः । तच्चाल्पश्रुतेरित्युक्तदिशा विष्णोरेवेति भावः । अथापि कुविदङ्गेति मन्त्रे वायोर्देवोपास्यत्वमुक्तमित्यत आह ॥ **वायुत्वमिति** ॥ अत्र प्राणत्वेति भाष्ये अन्तर्नये आधिदैविकसर्वशब्दानां महायोगविद्वद्रूढिभ्यां विष्णावुक्तत्वेन वायुशब्दस्याप्युक्तिरित्यर्थो बोध्य इति भावः ॥

## अभिनवचन्द्रिका

**तज्जिज्ञास्यत्वमीशानस्येति** ॥ अनेन जिज्ञासाधिकरणैतदधिकरणयोः जिज्ञास्यत्वेन प्रतीयमानवस्तुप्रतिपादकत्वमेव सङ्गतिरित्युक्तमिति बोध्यम् । ननु ईशानस्य जिज्ञास्यत्वं काठके प्रतीयत इत्ययुक्तम् । तत्रोपासनाया एवोक्तत्वादित्यत आह ॥ **जिज्ञासोपासानयोरिति** ॥ **तदा जिज्ञास्यत्वमन्यस्यैव प्रसज्यत इति** ॥ उपलक्षणमेतत् । ईशानशब्दोक्तगुणोऽप्यन्यस्यैव स्यात्। ततश्च गुणपूर्णत्वं न सिध्यतीति । ननु ईशानस्य विष्णुत्वेऽपि न जिज्ञास्यत्वस्य विष्णवैकनिष्ठत्वं सिद्ध्यति, 'कुविदङ्ग' इति श्रुत्या सर्वदेवोपास्यत्वरूपजिज्ञास्यत्वस्य वायुधर्मत्वावगमात् । न च 'ईशानो भूतभव्यस्य' इति वाक्यवत्कुविदङ्गेत्यस्यापि इह समन्वयः सिद्ध्यतीति वाच्यम् । तर्हि सर्वदेवोपास्यत्वस्य वायुधर्मत्वोपपादनाय पूर्वपक्षिणः तद्वाक्योदाहरणमयुक्तं स्यात् । वायुपरतया सन्दिग्धेन 'कुविदङ्ग' इत्यनेन वाक्येन वायुधर्मत्वनिश्चयायोगात् । एवं चेदमधिकरणमनारम्भणीयं व्यर्थत्वादिति चेत्

'आलम्ब्य चरणौ सत्यनिधेस्तस्य कृपाबलात् ।
अशक्तोऽपि समाधातुं वक्ष्येऽभिनवमुत्तरम्' ।

तथा हि न ब्रूमो वयम्, उपास्यत्वप्रतिपादकं सर्ववाक्यं युगपदेव विषयीकृत्य सकृदेवाधिकरणं प्रवर्तत इति । किं तर्हि विषयवाक्यसङ्ख्यया बहुवारं प्रवर्तते । एवं च सति यदा काठकवाक्यं विषयीकृत्य प्रवर्तते तदा कुविदङ्गेति वाक्येन देवोपास्यत्वस्य वायुधर्मत्वं पूर्वपक्षी प्रतिपादयति । यदा च 'कुविदङ्ग' इति वाक्यं विषयीकृत्य प्रवर्तते, तदा वाक्यान्तरेण

(अभिनवचन्द्रिका)

देवोपास्यत्वादीनामन्यधर्मत्वं प्रतिपादयेदिति न कश्चिद्दोष इति ॥ **सर्वदेवोपास्यत्वश्रवणादिति** ॥ ननु इदं पूर्वग्रन्थविरुद्धम् । पूर्वं 'स च यदि विष्णोरन्यः स्यात् तदा जिज्ञास्यत्वं चान्यस्यैव प्रसज्यत' इति ईशानस्य विष्ण्वन्यत्वसिद्धौ जिज्ञास्यत्वस्य विष्ण्वन्यधर्मत्वसिद्धिः स्यादित्युक्तम् । इदानीन्तु सर्वदेवोपस्यत्वरूपजिज्ञास्यत्वस्यान्यधर्मत्वात् ईशानो विष्ण्वन्य इत्युच्यत इति चेत्, सत्यम् । तथापि सर्वदेवोपास्यत्वेन ईशानस्य विष्ण्वन्यत्वसाधनं युज्यते । अधिकारिभेदेन कस्यचिद्विष्ण्वन्यत्वसिद्ध्या जिज्ञास्यत्वसिद्धिः । अन्यस्य तु जिज्ञास्यत्वस्य विष्ण्वन्यधर्मत्वसिद्ध्या ईशानस्य तदन्यत्वसिद्धिरित्यङ्गीकारात् । अत एव 'प्राणव्यस्थापकत्वात्' इति हेतुत्रयोपन्यासः । **प्राणव्यवस्थापकत्वस्य वायुलिङ्गत्वश्रवणादिति** ॥ ननु यथा सम्राडिति वाक्ये प्राणव्यस्थापकत्वस्य वायुनिष्ठत्वमात्रश्रवणेऽपि न तल्लिङ्गत्वं श्रूयत इति चेत्, न 'यथा सम्राट्' इति दृष्टान्तोक्तिबलेन तल्लिङ्गत्वलाभात् । अधिकृतव्यवस्थापकत्वस्य तल्लिङ्गत्वात् । अन्यथा दृष्टान्तोपादानमयुक्तं स्यात् ॥ **मध्यमत्वस्य तद्धर्मत्वोक्तेरिति** ॥ ननु हेतुकृतं मध्यमत्वं प्राणापानयोर्मध्ये स्थितत्वमात्रम् । इह तु 'योऽयं मध्यमप्राण' इति उच्यमानत्वमन्यदेव । 'अक्षरत्रयमीरितम्' इत्यत्र श्रीतत्वस्य मध्यमाक्षरत्ववत् इहापि प्राणपदवाच्येषु त्रिषु मध्यमस्यैव विवक्षितत्वात्, अवान्तरेश्वरत्वेन तस्येश्वरवचो भवेत् । अतो मध्यमतामाहुस्तस्य वेदेषु वेदिन' इति वचनात् । ततश्चैतच्छ्रुत्युदाहरणमयुक्तमिति चेत्, न ऊर्ध्वं प्राणमुन्नयति' इति श्रुतौ प्राणव्यवस्थापकत्ववत् मध्यमत्वमपि ईशानस्य विशेषणमुच्यते । न च मध्यमदेशस्थितत्वमात्रं विशेषणं भवितुमर्हति । साधारणत्वात् । प्राणव्यवस्थापकत्वरूपमुख्यप्राणलिङ्गसहपाठात् मध्यमत्वमपि अवान्तरेश्वरत्वरूपमिति मन्वानस्येह पूर्वपक्षित्वेन अवान्तरेश्वरत्वमपि कुतो मुख्यप्राणलिङ्गमिति शङ्कापनोदायैतच्छ्रुत्युदाहरणस्योचितत्वादिति ॥ **अयं मन्त्रार्थ इति** ॥ 'कुविदङ्ग मनसा ये वृधासः पुरा देवा अनवद्यास आसन् । ते वायवे मनवे बाधिताय आवासयन्नुषसं सूर्येण' इति मन्त्रार्थ इत्यर्थः ॥ **अनेनेति** ॥ सूत्रे वामनश्रुतेः प्रमितपदेन निरवकाशत्वप्रयुक्तं प्राबल्यमुक्तम् । एवकारेण तु श्रुतिमात्रस्य लिङ्गमात्रात्स्वभावप्रयुक्तं प्राबल्यमुक्तमिति भावः ॥ **नाममात्रेणेति** ॥ नामशब्दोऽत्र रूढिपर्यायः । रूढ्या अर्थप्रतिपादकशब्दः श्रुतिरित्यर्थः । योगरूढानां शब्दानां यल्लोकसिद्धश्रुतित्वं तद्रूढिप्रयुक्तमेव । न योगस्य तद्धटकत्वमिति द्योतनाय मात्रशब्दः ॥ **असाधारण इति** ॥ असाधारणधर्मप्रतिपादकशब्दो लिङ्गमित्यर्थः । समाख्याया वाक्यप्रकरणाभ्यां दुर्बलत्वेन 'पूर्वं पूर्वं बलीयः

(अभिनवचन्द्रिका)

स्यात्' इत्युक्तबलीयस्त्वोपपत्तये समाख्यापदम् अन्ते ग्राह्यमिति भावेन वाक्यं व्याचष्टे ॥ **निराकाङ्क्षेति** ॥ **लिङ्गस्येति** ॥ लिङ्गात्मकशब्दस्य स्वार्थबोधजननद्वारा अर्थानुमितिहेतुत्वात्तदानन्तर्यमित्यर्थः ॥ **आत्मप्रकरणादित्यत्रेति** ॥ निरवकाशत्वं विनापि प्रकरणेन समाख्याया बाधदर्शनादिति भावः । ननु लिङ्गात्मकः शब्दः स्वार्थप्रतिपादनद्वारा अर्थानुमापकः । वाक्यमपि तथेति तयोरैक्यमित्यत आह ॥ **लिङ्गवाक्ययोरिति** ॥ **गोत्रभिदामिति** ॥ लिङ्गात् । गोत्रभिच्छब्दः पर्वतभेत्तारमिन्द्रं साक्षात् प्रतिपादयति । 'प्रवक्षणा अभिनत्पर्वतानाम्' इत्येतद्वाक्यं तु अनेकार्थप्रतिपादनद्वारा अर्थं प्रतिपादयतीत्यर्थः । 'तच्च लिङ्गं विष्णोरेव' इति मूले एकवचनं जात्यभिप्रायेणेति तन्मूलमवतारयति ॥ **तथापीति** ॥ अत्र टीकायां 'न बाहुल्येऽपि लिङ्गानां श्रुतिसाम्येनाऽनिर्णयः श्रुतेर्निरवकाशत्वात्, लिङ्गानां विष्णाववकाशात्, सावकाशादपि निरवकाशस्यैकस्य प्राबल्यादिति भाव' इति वाक्यानि न टीकावाक्यानि । अपि तु भाष्ये – 'तच्च लिङ्गं विष्णोरेव' इत्यभिधानात् न्यायविवरणे च 'लिङ्गानां परमात्मनि अवकाशो विद्यत एव'त्यभिधानात् तयोर्वैरूप्यमसहमानेन विदुषा तयोरेकरूपसंपत्तये प्रक्षिप्तानि वाक्यानि । कुतस्तर्हि टीकाकृता वैरूप्यं न परिहृतमिति चेत् वैरूप्यस्य वास्तवत्वादिति ब्रूमः । न हि प्रस्थानभेदेनोच्यमानं सर्वमेकविधमेवेति नियमोऽस्ति । प्रस्थानभेदेनोक्तेः वैयर्थ्यप्रसङ्गात् ।

अयमत्र विवेकः । भाष्यकृता तानि लिङ्गानि विष्णोरेव मुख्यानीति वस्तुस्थितिमवलम्ब्य 'तच्च लिङ्गं विष्णोरेव' इत्याद्युक्तम् । न्यायविवरणकृता तु किं लिङ्गानां विष्णौ मुख्यत्वसाधनप्रयासेन, लिङ्गानां सावकाशत्वोक्तिमात्रेणाप्यभिमतसिद्धिसम्भवादिति भावेन तथोक्तमिति । अवश्यं चैतदेवं विज्ञेयम् । भाष्ये विष्णोरेव तस्यैवेत्यवधारणद्वयप्रयोगेण लिङ्गानां सावकाशत्वाभिप्रायवर्णनायोगात् । तर्हि सावकाशप्रतिपादनायाऽवधारणद्वयकृत्यमस्ति । येन लिङ्गानां सावकाशत्वाभिप्रायं भाष्यस्य प्रतीमः । नापि प्रक्षिप्तवाक्यस्य टीकान्तर्गतत्वाङ्गीकारे श्रुत्यन्तरेणेत्युत्तरवाक्यं सङ्गच्छते । लिङ्गानां प्राणनिष्ठतया श्रुत्यन्तरोक्तावपि विष्णाववकाशसम्भवात् । न हि यत् श्रुत्या यस्योच्यते तत्तदन्यत्रानवकाशमिति नियमोऽस्ति । येन लिङ्गानां विष्णावनवकाशं प्रतीमः ।

नन्वस्तु विष्णोरेव प्राणत्वस्योक्तत्वात् 'प्राणव्यवस्थापकत्वं मध्यमत्वं च' इति लिङ्गद्वयं, न तु 'कुविदङ्ग' इति श्रुत्युक्तं सर्वदेवोपास्यत्वं, तस्य वायुनिष्ठत्वेनोक्तत्वादित्यत आह ॥ **वायुत्वमिति** ॥ तस्यैव प्राणत्वोक्तेः वायुत्वोक्तेः, तल्लिङ्गमपि विष्णोरेवेति भावः ।

## वाक्यार्थमुक्तावली

अत्र न्यायविवरणे पुनरीशानशब्द इत्येतावन्मात्रोक्तावपि प्राणप्रेरक इति सङ्क्षेपभाष्योक्त्या ऊर्ध्वं प्राणमुन्नमयतीति भाष्ये वाक्यशेषोदाहरणे च लब्धमीशानशब्दप्रवृत्तिनिमित्तप्रेरकत्व-रूपधर्ममादायाक्षरनये विनाशित्वस्येव साधारण्यमाह ॥ **अत्रेति** ॥ उपलक्षणमेतत् । ईशानः प्राणदः प्राण इति हरौ ईशानो मारुतः प्राण इति बृहद्भाष्ये वायौ च प्रयोगात् रूढि-सामान्येनेत्यपि द्रष्टव्यम् । अन्यथा नामत्वायोगात् ॥ **श्रुत्यादिसङ्गतिमिति** ॥ अव्यवहित-सङ्गतिस्तु, आनुकूल्येन गृह्यमाणस्य एको वशी सर्वभूतान्तरात्मा, तमात्मस्थं येऽनुपश्यन्ति धीरा इति सर्वप्रेरकत्वम्, आत्मसंस्थत्वं, देवादिसर्वधीरोपास्यत्वं चोक्तं तदीशानस्य अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति, ईशानं विश्वेदेवा उपासत इति तस्मिन्नेव काठके प्रतीयते, स च यदा विष्णोरन्यः स्यात्तदा आनुकूल्येन गृह्यमाणोऽप्यन्यः स्यादित्याक्षेपिकीति बोध्यम् ॥ **काठक इति** ॥ तेनैव भाष्ये तत्रेति पूर्वाधिकरणविषयकाठकपरामर्श इत्युक्तं भवति ।

भाष्ये सङ्गतिसंशयद्योतनाय कश्चिदिति सामान्येनोक्तावपि विषयभानाय न्यायविवरणानु-सारेणेशानस्य प्रतीयत इत्युक्तम् । अत एवेशानशब्दघटितं पूर्वशेषमुदाहरति ॥ **अङ्गुष्ठमात्र इति** ॥ भाष्ये सङ्गत्यर्थं विश्वे देवा उपासते इत्येतावत्येव वाच्ये ऊर्ध्वमित्याद्युक्तिः पूर्वपक्ष-सौकर्यायेति बोध्यम् । ननु जिज्ञासा नाम ज्ञानेच्छा कथं तस्या उपासनैक्यमित्यत आह ॥ **श्रवणादीति** ॥ जिज्ञासितं सुसम्पन्नमिति प्रयोगाद्रूढ्या वा लक्षणया वेति भावः ॥ **किं विष्णुरिति** ॥ अत्रेशानः किं प्राणव्यवस्थापकत्व, मध्यमत्व, सर्वदेवोपास्यत्वलिङ्गैः विष्णुपक्षे अङ्गुष्ठमात्रत्वश्रुतिबाधकेन च वायुः उत वामनश्रुत्या विष्णुरिति । तदर्थं बहुत्वेन, निरवकाश-त्वेन च लिङ्गानां प्राबल्यमुत स्वभावतो निरवकाशत्वेन च श्रुतिविरोधेन लिङ्गानि सावकाशा-नीति ॥ **प्रसिद्धावपीति** ॥ प्रेरकत्वसाम्येऽपीत्यपि ग्राह्यम् । ऊर्ध्वं प्राणमुन्नमयतीति श्रुतौ कर्तुरप्रतीतेः प्रकृतस्येशानस्य कर्तृतया सम्बन्धेऽपि ईशान उन्नयति । वामनमुपासत इत्युक्तौ तयोर्भेदप्राप्तेश्चेत्यत आह ॥ **य उन्नयतीति** ॥ य ईशान उन्नयति तं वामनमित्यन्वयः । अत एव मध्य आत्मनीत्युक्तस्य, मध्ये वामनमिति प्रत्यभिज्ञेति भावः । स च प्राणव्यवस्थापकत्वात्, मध्यमत्वात्, सर्वदेवोपास्यत्वाच्च वायुरेवेत्यंशं तावद्व्याचष्टे ॥ **स चेशान इति** ॥ एवमेवैष प्राण इति षट्प्रश्नवाक्यं, योऽयं मध्यमः प्राणः इति वाजसनेयवाक्यं, कुविदङ्गेति मन्त्रश्च समाख्यारूप

(वाक्यार्थमुक्तावली)

इति भावेनावतार्य योजयति ॥ **न चैतल्लिङ्गेति** ॥ एवमेवैष इत्यत्रेवमित्यस्यार्थप्रतीत्यर्थं यथा सम्राडित्यादिपूर्वशेषोदाहरणम् । अधिकृतान्नियोगिनः ॥ **अथेममिति** ॥ पूर्वं वागादीनां मृत्युनान्यत्वमुक्त्वा अथेमं वायुं मृत्युर्नाप्नोदिति वागादिश्रैष्ठ्यं मुख्यप्राणस्योच्यत इति तस्य मुख्यप्राणत्वद्योतनाय पूर्वशेषोक्तिः ॥ **मध्यमत्वस्य तद्धर्मत्वोक्तेरिति** ॥ यद्यपि योऽयं मध्यम इत्युक्तमध्यमत्वमवान्तरेश्वरत्वं न तु काठकोक्तहृन्मध्यवर्तित्वं तथाप्युभयत्र प्राणगणमध्ये राजतया निविष्टत्वं मध्यमत्वमिति पूर्वपक्ष्यभिप्रायः ॥ **सर्वदेवतोपास्यत्वेति** ॥ चतुर्मुखोपास्यत्वं च नानिष्टमिति पूर्वपक्ष्यभिप्रायो बोध्यः । विष्णुरेव जिज्ञास्य इत्युक्तमित्यवधारणस्य कृत्यं वक्तुमाशङ्क्य निषेधति **न च वाच्यमिति** ॥ पूर्वपक्षिणा भ्रान्त्या वायोरेव जिज्ञास्यत्वमित्युक्तावपि, विश्वेदेवा उपासत इत्युक्तं वायोर्जिज्ञास्यत्वं सिद्धान्तिनो नानिष्टं विष्णोरिव वायोरपि जिज्ञास्यताभ्युपगमात् । न च वामनश्रुतिविरोधः । तत्प्रवृत्तिनिमित्तसौन्दर्यस्याणुत्वस्य तत्राप्युपपत्तेः । अस्तु वास्याःतद्विजिज्ञासस्वेतिवत् विष्णुपरत्वं कुविदङ्गेति श्रुत्युक्तं सर्वदेवोपास्यत्वं वायोर्भविष्यति । तत्र विष्णुप्रापकश्रुत्यभावात् । तथाच वायोर्जिज्ञास्यत्वे विष्णोर्जिज्ञास्यत्वहान्यभावान्न तदधिकरणाक्षेप इतीदमधिकरणं व्यर्थमिति शङ्कार्थः ॥ **मोक्षेति** ॥ न च वायुश्च तदनुज्ञयेत्युक्तेस्तदप्यस्तीति वाच्यम् । मुख्यतो ब्रह्मादिसर्वदेवोपास्यत्वे स्वातन्त्र्येण मोचकत्वस्याप्यापातादित्यर्थः ।

ननु देवैः क्रियमाणवायूपासनायाः फलान्तरार्थमप्युपपत्तेः वायोः तत्प्रदत्वमेवास्तु मोचकत्वं कुत इत्यत आह ॥ **न हीति** ॥ मोक्षस्याप्यपरोक्षेण सिद्धत्वेऽप्यानन्दातिशयाख्यप्रयोजनस्य सत्वादिति भावः । कुविदङ्गनमसा ये वृधासः, 'पुरोदेवा अनवद्यास आसन् । ते वायवे मनवे बाधितायावासयन्नुषसंसूर्येण' इति मन्त्रार्थमाह ॥ **अयमिति** ॥ कुविदित्यस्यार्थः **कचिदिति** ॥ तात्पर्यमाह **रहस्येति** ॥ बाधितायेत्यस्यार्थः ॥ **संसारेति** ॥ बाधिभिरिताय प्राप्तायेति विग्रह इति भावः ॥ उषसमित्यस्यार्थो **बुद्धिमिति** ॥ तदुक्तं सत्तर्कदीपावल्याम् । उषसं प्रकाशरूपां बुद्धिं ध्यानाख्यामिति । ईशानशब्दोक्तो विष्णुरेवेति न्यायविवरणोक्तेन भाष्यं पूरयन् व्याचष्टे ॥ **विष्णुरेवेति** ॥ अणुश्चेति वक्ष्यमाणदिशाऽणुभूतवायावपि वामनश्रुतिः सावकाशेत्यतः वामनश्रुतेरेवानवकाश इति न्यायविवरणोक्तमनवकाशत्वं सौत्रप्रमितिपदोक्तमिति दर्शयन्नाह ॥ **तस्याश्चेति** ॥ 'सवामनः सभामनः' 'उपेन्द्रो वामनः प्रांशुः' इति श्रौतस्मार्त-

(वाक्यार्थमुक्तावली)

प्रयोगाद्रूढेर्वामानि नयतीति योगस्य च सत्वादिति भावः ॥ **प्रमितपदमिति** ॥ सावकाशत्वे हि संशयेन न प्रमापकत्वमिति भावः । अत एव पूर्वं प्रमापकत्वादित्युक्तम् । यद्वा निरवकाशत्व-रूपप्राबल्याभावे, बहुलिङ्गबाधेन, तत्प्रमापितार्थप्रमापकत्वं न स्यादतः श्रुत्यर्थस्य प्रमितत्वोक्त्या श्रुतेर्निरवकाशत्वमेव सूचितमिति भावः । एवकारस्तु श्रुतेः लिङ्गाज्ज्ञात्या प्राबल्योक्त्यर्थमाह ॥ **अनेनैवेति** ॥ सूत्रे समन्वेतव्यशब्दानुक्तिस्तु तत्प्रकरणगतप्राणोन्नयनादिलिङ्गानां सावकाशत्वं च वक्तुमिति बोध्यम् । ततश्च लिङ्गाज्ज्ञात्या प्रबलवामनशब्दादेवेशानः प्राणोन्नय-नादिकर्ता च विष्णुरिति प्रमितः । शब्दस्य निरवकाशत्वेन प्रमापकत्वादिति सूत्रार्थः । अत एव संक्षेपभाष्ये प्राणप्रेरक इत्युक्तम् । आनन्दमालायां च प्राणापानयोर्मुख्यप्राणस्यापि प्रेरको विष्णुरेवेति प्रमित इति ।

श्रुतिर्नाम समुद्दिष्टं लिङ्गं तल्लक्षणं स्मृतम् ।
पदानि निरपेक्षाणि वाक्यं प्रकरणं तथा ।
एकस्य प्रतिपत्यङ्गवचनं स्थानमुच्यते ॥
अन्यत्र तत्समोक्तिस्तु समाख्यास्थानमेव च ॥

अध्यायादिप्रबन्धास्तु प्रभेदा आगमस्य तु इति तत्त्वप्रदीपोदाहृतवचनानुसारेण श्रुत्यादीनां लक्षणान्याह ॥ **नाममात्रेणेत्यादिना** ॥ अत्र नामपदेनैव केवलयौगिकव्यवच्छेदः । पङ्कज-शब्दस्य भेकनामत्वाभावात् । मात्रपदं तु नामत्वायोगव्यवच्छेदकम् । तेन योगरूढस्यापि सङ्ग्रहः । **भवतु वा योगो मा वा रूढित्यागेनेति** ॥ तथा च नाममात्रेणेत्यस्य रूढिमत्यजता शब्देनेत्यर्थः ।

यद्वा नामपदस्य वाचकशब्दपरत्वे केवलयौगिकशब्दव्यावृत्यर्थं मात्रपदम् । तथा च नाममात्रेण केवलयौगिकशब्दभिन्नशब्देनेत्यप्याहुः ॥ **असाधारणधर्म इति** ॥ असाधारण-धर्मार्थकं पदं वाक्यं वा तदर्पितासाधारणधर्मो वेत्यर्थः । यथाकाशनये स एषोऽनन्त इत्यनन्तत्वं, यथा वा अत एव प्राण इत्यत्र श्रीलक्ष्मीपतित्वम् ॥ **निराकाङ्क्षेति** ॥ पदान्तर-निरपेक्षाणि स्वस्मिन्नेव पूर्णान्वयानि पदानि वाक्यमित्यर्थः । न च श्रीश्च त इति लिङ्गेति व्याप्तिरिति वाच्यम् । असाधारणधर्मप्रज्ञिमादकानीति विशेषणात् । यथा असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषादित्यत्र तम आसीदिति वाक्यम् । नासदासीन्नोसदासीदित्यत्राव्यक्तत्व-

(वाक्यार्थमुक्तावली)

पारतन्त्र्यादिधर्मान्तरेणैव सर्वासत्वमुच्यते न तु स्वरूपेणेत्यत्र स्वविरोधान्यथानुपपत्तिमुखेन निर्णायकम् । न चेदं वाक्यं साधारणधर्मप्रतिपादकम् । नाप्यागमतया बोधकम् । किं तु वाक्यशेषत्वेनैव । तथाप्राणादयो वाक्यशेषादित्यत्रापि वाक्यस्य निर्णायकत्वं बोध्यम् । यथा वा दहरनये, यावान्वाऽयमाकाश इति वाक्यस्य किं तदत्र विद्यत इति प्रश्नवाक्येनान्वितस्य दहरस्थो भूताकाश इति पूर्वपक्षनिर्णायकत्वं, विष्णुरिति सिद्धान्तनिर्णायकत्वं च, यथा वाऽन्तिमप्राणाधिकरणे, न वक्तुरात्मोपदेशादित्यत्र प्राणो वा अहमस्मीति वाक्यमिन्द्र एवप्राणशब्दवाच्य इत्यत्र लिङ्गम् । न चेदं वाक्यमसाधारणधर्मप्रतिपादकं, नाप्यागमतया प्रमाणम् इन्द्रः प्राणशब्दवाच्य इत्यननुशासनात् तात्पर्यलिङ्गोक्तिप्रस्तावे आगमप्रमाणोप-न्यासायोगाच्च । तत इदं स्वविरोधान्यथानुपपत्तिमुखेन वाक्यत्वेनैव लिङ्गम् । तदुक्तं न्यायविवरणेऽन्यगतलिङ्गादीनामिति । तट्टीकायां चादिपदेन प्राणो वा अहमस्मीति वाक्यं गृह्यत इत्युक्तम् । यद्वाऽसाधारणधर्मो लिङ्गमित्यत्रासाधारणधर्मप्रमापकमनन्त इत्यादिपदं लिङ्ग-मित्यर्थः । निराकाङ्क्षपदानीत्यत्रासाधारणधर्मार्पकाणि निराकाङ्क्षपदानि वाक्यमित्यर्थः । यथा श्रीश्च ते लक्ष्मीश्चेत्यादिकम् । नतु अन्तस्तद्धर्मोपदेशात् 'अत एव प्राणः' 'तथा हि दृष्टं लिङ्गं च' इत्यादौ समुद्रशायित्व, श्रीलक्ष्मीपतित्वादेरनेकवाक्यार्पितस्य लिङ्गत्वोक्तेः कथं वाक्यं लिङ्गात् पृथगिति चेत् । तस्याः लिङ्गवाक्ययोरित्युत्तरटीकायामेव निरशिष्यमाणत्वात् । नन्वस्तङ्गतः सवितेत्यादिवाक्यं सन्ध्यामुपास्वेत्याद्यर्थे लिङ्गम् उक्तं हि सुधायां वाक्यलिङ्गानुमा हि सेति । तत्रोदाहरणं किं न स्यादिति चेत् न । तस्य वाक्यान्तरार्थावसितावलिङ्गत्वात् । उक्तं चानुव्याख्याने– 'आगमार्थावसित्यर्था नियतव्याप्तयोऽखिलाः । वाक्यं प्रकरणं स्थानं समाख्या च तथाविधा' इति ॥ **एकप्रमेयेति** ॥ स्थाने वाक्ये अनेकाक्षरपदादौ चातिव्याप्ति-वारणाय क्रमेणैकप्रतिपादकेति ॥ **अनेकेति** ॥ वाक्येति च विशेषणानि ॥ यथात्तेत्यत्र प्रकरणादिति सूत्रेणात्तुः विष्णुत्वनिर्णयः । अनेकप्रमेयप्रतिपादकप्रकरणजातमित्यर्थः । अन्यथा तादृशपदसमुदायरूपवाक्येऽतिव्याप्तेः विरुद्धप्रकरणयोर्मिलितयोः स्थानत्ववारणाय द्वितीय-विशेषणम् । पुनरुक्तप्रकरणयोस्तद्वारणायाद्यम् ॥ **समानोक्तिरिति** ॥ निर्णीतस्थल इति शेषः । अन्यथा समाख्यालिङ्गस्य सन्दिग्धासिद्धिप्रसङ्गात् । सा च द्वेधाऽर्थतः शब्दत इति । तत्रार्थतः समाख्या यथा वैश्वानरस्य विष्णुत्वे पुरुषसूक्तसमाख्या । शब्दतो यथा ॥ छान्दोग्योक्त-दहरस्थस्य विष्णुत्वे, धृतेरिति सूत्रे वाजसनेयसमाख्या । तत्र पूर्वं पूर्वं बलीयस्त्वं बीजोत्त्याह

(वाक्यार्थमुक्तावली)

॥ **तत्रेति** ॥ **साक्षादिति** ॥ व्याप्यार्थमन्तरा श्रुतित्वेनैवेत्यर्थः । यथा वामनश्रुतिर्व्याप्यार्थमबोधयित्वैव श्रुतित्वेनैवेशानो विष्णुरिति धीजनकेति ज्ञेयम् ॥ **अनुमापकतयेति** ॥ व्याप्यार्थप्रतिपादनद्वारेत्यर्थः । यथात्रैव प्राणव्यवस्थापकत्वादिव्याप्यार्थप्रतिपादकस्योर्ध्वं प्राणमित्यादेर्वामनश्रुतिबाध्यत्वम् । यथा वा द्युभ्वादिनये जायमानत्वलिङ्गस्य जीवत्वनिश्चायकत्वमात्मश्रुतिबाध्यत्वं च ॥ **अनेकार्थेति** ॥ यथा दहरनये यावान्वाऽयमाकाश इति वाक्यस्य किं तदत्र विद्यत इति प्रश्नवाक्येनान्वितस्य दहरपद्मस्थाकाशो भूताकाश इत्यर्थानुमापकत्वम् अपहतपाप्मत्वादिलिङ्गबाध्यत्वं चेति भावः । वाक्यस्याप्यसाधारणलिङ्गार्पकत्वमिति पक्षे तु आकाशनये भूतान्याकाशादेवसमुत्पद्यन्त इति वाक्यप्राप्तस्य सर्वभूतकारणत्वलिङ्गस्यानन्तत्वरूपैकपदार्पितलिङ्गबाध्यत्वं ज्ञेयम् ॥ **बह्वर्थपरत्वेनेति** ॥ अनेकवाक्यात्मकप्रकरणस्यानेकार्थधीपूर्वकम् इदं प्रकरणमेतत्परमिति यदज्ञानं तत्पूर्वकं स्वान्तर्गतस्य विप्रतिपन्नवाक्यस्य प्रकरणानुगुण एवार्थ इत्यनेकवाक्यार्थधीद्वारा लिङ्गत्वादित्यर्थः । यथा, ज्योतिर्दर्शनादित्यत्र किं ज्योतिरेवायं पुरुष इत्यादिजीवप्रकरणस्य जीवज्योतिष्ट्वनिश्चायकत्वं, कतमआत्मेत्यादि प्रश्नवाक्यबाध्यत्वं च । जीवस्य प्रसिद्धत्वेन कतमआत्मेति प्रश्नायोगादिति तट्टीकोक्तिः । वाक्यस्य लिङ्गत्वपक्षे ज्योतिश्चरणेत्यत्र, अग्निसूक्तप्रकरणस्य प्रसिद्धाग्निनिश्चायकत्वं, विमेकर्णेति वाक्यबाध्यत्वं च । बह्वर्थकथनेनाभिप्रायत इति अनेकप्रकरणधीपूर्वकम् इदं स्थानमेतत्परमिति यदज्ञानं तत्पूर्वकं स्वान्तर्गतस्य विप्रतिपन्नवाक्यस्य स्थानानुगुण एवार्थ इत्यनेकप्रकरणार्थधीद्वारानुमापकत्वादित्यर्थः । यथा षट्प्रश्नोपनिषत्स्थानस्यैवमेवैष प्राण इतरान् प्राणान् इति वाक्यस्य विष्णुपरत्वे लिङ्गत्वं ततोऽपि दौर्बल्यमिति । तस्यैव स्थानस्य भगवन् कुत एष प्राणो जायते आत्मत एष प्राणो जायत इत्यादिखण्डरूपात्प्राणप्रकरणाद्दौर्बल्यमिति भावः ॥ **स्थानान्तरेति** ॥ स्थानान्तरसमाख्यया अत्रोक्तमेव स्थानान्तरस्थविप्रतिपन्नवाक्येऽपि बोध्यमिति स्थलद्वयानुसन्धानपूर्वकं तत्सदृशत्वादिदं तत्परमित्येवं निर्णायकत्वम् । तस्य च ब्रह्मविदाप्नोति, अधीहि भगवो ब्रह्मेति, सैषा भार्गवी वारुणी विद्या, परमे व्योमन् प्रतिष्ठिता, इत्यादिना वैष्णवत्वेन प्रमितस्थानाद्दौर्बल्यं चेति ज्ञेयम् ।

ननु कथमन्तर्नये लिङ्गात् श्रुतिबाधः । ज्योतिर्दर्शनादित्यत्रोभयलोकसञ्चरणादिजीवलिङ्गस्य कतम आत्मेति प्रश्नवाक्येन बाधः । आनुमानिकनये प्रकरणादित्यत्र लिङ्गादतिदुर्बलेन

(वाक्यार्थमुक्तावली)

प्रकरणेन महतः परमव्यक्तमित्युक्तलिङ्गबाधः । वैष्णवेन षट्प्रश्नस्थानेन एवमेवैष प्राण इतरान् प्राणानिति प्राणप्रकरणबाधः । ब्रह्मभृगुप्रकरणसमुदायात्मकस्थानेनान्नमयादिप्रकरणबाधश्च । वैश्वानरविद्यास्थानस्य पुरुषसूक्तसमाख्याबाधश्चेत्यत आह ॥ **अत्रापीति** ॥ समन्वयाधि-करणोक्तोपक्रमादाविवेत्यर्थः । अत्र स्वभावपदेन श्रुतित्वलिङ्गत्वादिजातिरुच्यते । आदिपदेन निरवकाशादेकस्माद्बहुत्वेन प्रबलस्य, सावकाशदौर्बल्यमित्यस्य ग्रहणम् । पूर्वं पूर्वं बलीय इत्यागमनिर्णय इति प्रतीतिं वारयन् व्याचष्टे ॥ **विरुद्धेति** ॥ विरुद्धयोः श्रुतिलिङ्गयोः, लिङ्गवाक्ययोरित्यादिरूपेणैकार्थनिष्ठत्व इत्यर्थः । सावकाशत्वनिरवकाशत्वाभ्यामेव सर्वत्र निर्णयेन स्वभावदौर्बल्यं नामान्यदस्ति । तत्कथं श्रुत्यादित्वेन निर्णय इति शङ्का समन्वयाधि-करणटीकायामेव परिहृता । विवृतं चास्माभिः । आगमार्थनिर्णये लिङ्गमित्युक्त्या नोपक्रमादि-वत्तात्पर्यानुमापकमित्युक्तं भवति । अत एव 'लिङ्गं तात्पर्यनिर्णय' इत्युक्तम् । तथाचानु-व्याख्याने, 'आगमार्थावसित्यर्था नियतव्याप्तयोऽखिलाः ॥ वाक्यं प्रकरणं स्थानं समाख्या च तथाविधा' इति ॥ **तदिति** ॥ अस्मदुक्तं पौर्वापर्यं बलाबलबीजं चेत्यर्थः । श्रुत्यादीनां समवाये एकार्थनिष्ठत्वे परस्यानन्तरमुक्तस्य लिङ्गादेः पूर्वपूर्वापेक्षया दौर्बल्यमर्थप्रमापनांशे व्यवधानादिति जैमिनि सूत्रार्थः ॥ **भाष्यकार इति** ॥ भक्तिपादानुव्याख्यानकृदित्यर्थः । श्रुत्यादीनामागमार्थ-निर्णायकत्वमिवोपक्रमादिनिर्णायकत्वमप्यस्तीत्याह ॥ **श्रुतिलिङ्गेति** ॥ यथा सर्वगतत्वाधिकरणे सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षत इति विप्रतिपन्नसर्वगते श्रुताया ब्रह्मश्रुतेः वैश्वानरनये चात्मानं वैश्वानरमिति वैश्वानरे श्रुताया आत्मश्रुतेश्च यत्र यन्नाम प्रयुज्यते बाधकाभावे स तन्नामवाच्य इति श्रुतित्वेनानुमापकत्वमित्यर्थः । चन्द्रिकायां तु अत्र च श्रुतिः स्वनिर्णेतव्ये श्रुतित्वेनैव निर्णायिका । वाक्यादित्वानुमानत्वेन अत एव 'वाक्यं प्रकरणं स्थानं समाख्या च तथाविधा' इत्यनुव्याख्याने समाख्यावाक्यप्रकरणस्थानानि च उपपत्तिविशेषा इति प्रमाणलक्षणे च वाक्यादीनामेव लिङ्गतोक्ता । न तु श्रुतेः । लिङ्गस्य त्वनुमानत्वमविप्रतिपन्नमिति न लिङ्गं तत्रोक्तमिति । लिङ्गस्यानन्त इत्यादेः साक्षादेव देशकालगुणैरपरिच्छिन्नत्वरूपविष्णुत्वव्याप्य-धर्मोपस्थापकतयैव ज्ञापकत्वम् । वाक्यमपि 'तम आसीत्' इति वाक्यशेषरूपं 'नासदासीत्' इत्यारभ्य 'न परः किञ्च नास' इत्यन्तोक्तसर्वाभावरूपविप्रतिपन्नार्थे श्रुतं स्वविरोधान्यथानु-पपत्तिमुखेनाव्यक्तत्वस्वतन्त्रत्वादिरूपेण सर्वाभावे लिङ्गमिति ज्ञेयम् ।

(वाक्यार्थमुक्तावली)

वाक्यस्यापि व्याप्यधर्मोपस्थापकतया लिङ्गत्वमिति पक्षे विमे कर्णेति वाक्यं विप्रतिपन्नार्थनिष्ठं बोध्यम् ॥ **उपक्रमोपसंहारयोरिति** ॥ यथा वैश्वानरनये सम्भवादिति सूत्रखण्डे को न आत्मा किं ब्रह्मेत्यादिश्रुतेः । उपक्रमानिश्चायकतया प्रकरणनिश्चयद्वारा विप्रतिपन्नार्थलिङ्गत्वं, प्रथमे श्रवणादित्यत्र आपः पुरुषवचसो भवन्तीत्युपसंहारनिश्चयद्वारेति ज्ञेयम् । लिङ्गस्य तु द्युभ्वादिनये प्रकरणादित्यत्र द्वे विद्ये इत्युक्तपरविद्याविषयत्वस्योपक्रमनिर्णयद्वाराप्राकरणिकेश-शब्दस्य विष्णुपरत्वे लिङ्गत्वम् ।

सर्वगतत्वाधिकरणे 'स योऽतोऽश्रुत' इत्युपसंहारस्थाश्रुतत्वादिलिङ्गस्योपसंहारनिर्णयद्वारा वाक्यस्य, यथा अन्तर इत्यत्र कं ब्रह्म खं ब्रह्मेति वाक्यस्य ज्योतिर्दर्शनादित्यत्र कतम आत्मेति प्रश्नवाक्यस्य वेति बोध्यम् ॥ **लिङ्गत्वमिति** ॥ वैश्वानरो विष्णुः तत्प्रकरणपठितत्वात् इदं विष्णुप्रकरणं को न आत्मेति तदुपक्रमवत्वात् । अयं च विष्णूपक्रमः तच्छ्रुतिघटितत्वादिति विप्रनिपन्नार्थलिङ्गत्वमित्यर्थः ॥ **अन्यत्रेति** ॥ साक्षाद्विप्रतिपन्नार्थादुपक्रमोपसंहाराभ्यां चान्य-त्रेत्यर्थः । यथा प्राणस्तथानुगमादित्यत्र ब्रह्मेमं पुरुषमित्यादिब्रह्मश्रुतेः, दहर इत्यत्र अपहत-पाप्मत्वादिलिङ्गस्य, न सङ्ख्योपसङ्ग्रहादित्यत्र प्राणस्य प्राणमिति वाक्यशेषस्य, अत एव प्राण इत्यत्र श्रीश्च त इति वाक्यस्य वेति ज्ञेयम् । यद्यप्युपक्रमोपसंहारश्रुत्यादेरपि प्रकरणनिश्चाय-कत्वमेव तथापि उक्तरीत्या उपक्रमादिनिश्चयद्वारैव । अन्यत्र श्रुतश्रुत्यादेस्तु साक्षादेव प्रकरणनिश्चायकत्वमिति भेदः ॥ **उपक्रमोपसंहारावपीति** ॥ उपक्रमोपसंहारावपि अन्यत्र श्रुतश्रुत्यादिना श्रुत्यर्थनिश्चये तस्मिन्नेवार्थे तात्पर्यातिशयज्ञापकावित्यर्थः । यथा ब्रह्मविदाप्नोति परमित्युपक्रमस्य श्रुत्यादिनाऽनन्दमयस्य ब्रह्मत्वे निर्णीते तात्पर्यातिशयद्योतकत्वम् । यथा सर्वत्र प्रसिद्धेत्यत्र सवर्गतस्य ब्रह्मत्वे ब्रह्मशब्दादिना निर्णीते विवक्षितगुणेत्युक्तस्य श्रुत इत्युपसंहारस्य चेति बोध्यम् । ननु वैश्वानरस्यात्मानं वैश्वानरमित्यात्मशब्दादिना ब्रह्मत्वे निर्णीतेऽपि को न आत्मा किं ब्रह्मेत्युपक्रमस्य प्रकरणनिश्चायकत्वं भाष्यटीकयोरुक्तमिति विरोध इति चेन्न । तत्रात्मशब्देन स्मृतिसमाख्यया नार्थसिद्धिः पूर्वपक्षे श्रुतिसमाख्यादेर्भावादिति शब्दादिभ्य इत्याक्षिप्ते असम्भवादित्युपक्रमोपन्यासादिति ज्ञेयम् ॥ **अन्यथेति** ॥ यथा द्युभ्वादिनये 'द्वे विद्ये वेदितव्ये इति परमेश्वरोपक्रमः अन्यमीशमित्यत्र चेशशब्दार्थो विष्णुरित्यत्र प्रकरणनिश्चायकः यथा च आनुमानिकनये प्रकरणादित्यत्र 'तद्विष्णोः परमं' पदमित्युपसंहार' 'अनाद्यनन्तं

(वाक्यार्थमुक्तावली)

महत: परं ध्रुवम्' इत्यादेर्विष्णुप्रकरणत्वनिश्चायक इति ज्ञेयम् ॥ **समाख्यापीति** ॥ यथा पुरुषविधमपि चैनमधीयत इत्युक्तस्य वैश्वानरस्य विष्णुत्वे पुरुषसूक्तसमाख्या समाख्यात्वेनैव लिङ्गम् । अजस्य नाभावित्यत्र विप्रतिपन्नोजे साक्षादश्रुताया: 'परो दिवा पर एना पृथिव्या', परोदिवेभिरित्यस्या: 'परो दिवा पर एना पृथिव्यै तावती' इत्यम्भृणीसूक्तसमाख्या तु प्रकरण-निश्चायकत्वेन लिङ्गमित्यर्थ: ।

ननु प्राक् लिङ्गस्यानुमापकतयाऽर्थबोधकत्वात्तदानन्तर्यं वाक्यस्यानेकार्थकथनद्वाराऽर्थानु-मापकत्वात्ततोऽपि दौर्बल्यमित्युक्तम् । तदयुक्तम् । अनेकार्थकथनद्वाराऽर्थानुमापकत्वेन वाक्य-शेषादिरूपवाक्यस्य लिङ्गादवमजातीयत्वेऽनन्त इत्याद्येकपदात्मकलिङ्गात् श्रीश्च त इत्याद्यनेक-पदात्मकलिङ्गस्य भिन्नजातीयत्वप्रसङ्गेनात एवेत्यतिदेशानुपपत्तिरित्यत आह ॥ **लिङ्गवाक्य-योरिति** ॥ लिङ्गस्य व्यापकस्यैकपदात्मकलिङ्गस्यानन्त इत्यादे: साक्षात् श्रुत्यैवासाधारण-धर्मोपस्थापकत्वेन वाक्यस्य श्रीश्च त इत्यादे: असाक्षात्संसर्गमर्यादया साधारणधर्मोप-स्थापकत्वेनैव भेद: । न तु प्राबल्यदौर्बल्यापादको जातिभेद: । उभयोरप्यसाधारण-धर्मोपस्थापकत्वाविशेषात् । उपस्थापने प्रकारवैचित्र्याप्रयोजकत्वात् । तम आसीदित्यादि-वाक्यशेषादिरूपवाक्यस्य स्वयमनेकार्थकथनद्वारा तमस: सत्वसंसर्गबोधं जनयित्वा स्वविरोधा-न्यथानुपपत्या अर्थानुमापकत्वादुभयविधलिङ्गाज्जात्यन्तरत्वं दुर्बलत्वं चेति भाव: । प्रकरणा-त्प्रबलं लिङ्गाद्दुर्बलं वाक्यं श्रीश्च त इत्यादिकमेवेति पक्षे तु लिङ्गवाक्ययोरित्यसावयमवतार: । ननूभयोरप्यसाधरणधर्मोपस्थापकत्वाविशेषात् कथं भेद इत्यत आह ॥ **लिङ्गवाक्ययोरिति** ॥ असाधारणधर्मोस्थापने प्रकरणवैचित्र्यात् लिङ्गवाक्ययोर्भेद: एक: कर्ता वर्तमानकाले स्वार्थपाकक्रियां निवर्तयति पचत इति वाक्याख्यातपदयो: पाचकत्वलक्षणधर्मोपस्थापकत्वेऽपि अनेकार्थप्रतिपादनमन्तरा साक्षाद्धर्मोपस्थापकत्वमाख्यातस्य वाक्यस्य तु तद्वारेति यथा भेद: तथा प्रकृतेऽपीत्यर्थ: । अत्र वैदिकमुदाहरणमाह ॥ **गोत्रेति** ॥ प्रवक्षणा: पक्षानित्यादिवत् । इत्यादौ यथा ॥ **अनिर्णय एवेति** ॥ न च 'तयो: स्वभावो बलवान्' इति बहुत्वेन प्रबला-पेक्षया स्वभावशब्दितजाते: प्राबल्यस्योक्ते: कथमनिर्णय इति वाच्यम् । तत्र स्वभावपदेन जातिवदुपजीव्यत्वनिरवकाशत्वयोरपि व्याख्यातत्वेन लिङ्गानां निरवकाशतया बहुतया च प्राबल्यम् । श्रुतेरुक्तजात्या निरवकाशतया च प्राबल्यमिति अनिर्णय एवेति विवक्षितत्वात् ।

(वाक्यार्थमुक्तावली)

**तस्यैव प्राणत्वोक्तेरिति ॥** 'तद्वैत्वं प्राणोऽभव' इत्यत्र यस्मात्त्व देवान् प्राणयः तस्मात्वं प्राणशब्दवाच्योऽभव इति प्राणशब्दवाच्यत्वोक्तेरित्यर्थः । यद्यपि षट्प्रश्ने आत्मन एष प्राणो जायत इत्युक्तमुख्यप्राणस्यैवमेष इतरान् प्राणानिति परामर्शनात् । वाजसनेये च योऽयं मध्यमः प्राण इत्युक्तस्यायं वाव शिशुर्योऽयं मध्यमः प्राणस्तस्य प्राण इति मध्यमप्राणस्य शिशुत्व-ब्रह्माश्रितत्वप्रतिपादनात् प्राणपदं प्रसिद्धपरमिति सिद्धम् । तथापि भूमाधिकरणे पृथगुभयग्रहणे बाधकाभावादिति टीकोक्तरीत्यान्तर्यामिविवक्षया विष्णुपरत्वं बोध्यम् । कुविदङ्गेत्यत्र वायोः सर्वदेवोपास्यत्वकथनात् तद्भाष्येऽनवकाशितमित्यत आह ॥ **वायुत्वमिति** ॥ प्राणत्वोक्ते-रित्यनेन वायुत्वोक्तेरित्युपलभ्यते । अन्तर्नये आधिदैविकसर्वशब्दसमन्वयस्य उक्तत्वेन तस्यैव वायुत्वोक्तेरित्यर्थः । यद्वा श्रुत्यन्तरे प्राणनिष्ठतयेति टीकाया षट्प्रश्नवाजसनेयाख्यश्रुत्यन्तर इत्यर्थः । तयोः विषयवाक्यसमानोक्तित्वाभावेनसावकाशयितव्यत्वात् । विषयवाक्ये प्राणापान-मात्रव्यवस्थापकत्वस्य मध्यदेशगतत्वस्य चोक्तेः षट्प्रश्नवाजसनेयप्रोक्त इतरान्प्राणानिति सर्व-प्राणानियामकत्वस्य 'योऽयं मध्यम' इत्युक्त्या प्राणदासप्राणापेक्षया मध्यमत्वरूपावान्तरेश्वर-त्वस्य चोक्त्या समानोक्तित्वाभावात् । अतः श्रुत्यन्तर इति टीका अत्रापठित श्रुत्यन्तरपरतया योज्येति ज्ञेयम् । अभ्युपगमवादेन सावकाशत्वोक्तिरिति बोध्यम् ।

## तत्त्वसुबोधिनी

तमात्मानं येऽनुपश्यन्ति धीराः तेषां सुखं शाश्वतमिति पूर्वत्र विष्णुज्ञानादेव मोक्ष इत्युक्तम् । तदयुक्तम् । विश्वेदेवा उपासते इत्यन्यस्यैव देवोपास्यत्वप्रतीतेः । प्राप्तसमस्तैश्वर्याणां देवानां मोक्षादन्यार्थमुपासनायोगादन्यप्रार्थनायाश्च विष्णोः ज्ञानायोगादिति पूर्वाक्षेपेण पूर्वपक्षोत्थानात् अनन्तरसङ्गतिः । प्रकृतिनिमित्तसाधारण्येन उभयत्र प्रसिद्धिमाह ॥ **अत्र प्रेरकत्वसाम्येनेति** ॥ अङ्गुष्ठमात्रः अङ्गुष्ठपरिमाणः आत्मनि हृदयमध्ये पुरुषस्तिष्ठति भूतभव्यस्य अतीतानागतस्य ईशानः प्रेरकः । ननु जिज्ञासासूत्रे जिज्ञास्यत्वमेवोक्तं न तूपास्यत्वम् । अत्र तु उपास्यत्वमुच्यत इति कथं तदाक्षेप इत्यत आह ॥ **जिज्ञासेति** । कथं तयोः ऐक्यम् इत्यतो लक्षणैक्यादित्याह ॥ **श्रवणादिरूपेति** ॥ ननु ईशानशब्दस्य रुद्रे प्रसिद्धत्वात् सोऽपि किमिति न सन्देहकोटौ निवेश्यत इत्यत आह ॥ **ईशान शब्दस्येति** ॥ उपलक्षणं चैतत् । ईशानशब्दप्रवृत्तिनिमित्तप्रेरकत्वस्य रुद्रादौ साम्येऽपीत्यपि द्रष्टव्यम् । ऊर्ध्वं प्राणमुन्नयतीति श्रुतावन्वयाप्रतीतेः यच्छब्दाध्याहृत्यान्वयमाह ॥

(तत्त्वसुबोधिनी)

**य उन्नयति तमित्यन्वय इति ॥ ऊर्ध्वं प्राणमिति वाक्येति ॥** अनेन भाष्ये 'ऊर्ध्वं प्राणम् उन्नयति' इत्यादिश्रुत्युदाहरणं पूर्वपक्षे लिङ्गज्ञापनार्थम् । अन्यथा वामनमासीनमित्याद्येव उदाह्रियेत इत्युक्तं भवति । लिङ्गत्रयस्यापि वायुपरत्वमुपपादयति ॥ **यथेति** ॥ यथा सम्राट् राजा अधिकृतान् अधिकारिणः विनियुंक्ते आज्ञापयति । कथं 'त्वम् एतान् ग्रामानधितिष्ठस्व' इति एवमेव 'एष प्राणः इतरान् प्राणान् पृथक् पृथक्स्थाने सन्निधत्ते' स्थापयतीत्यर्थः । वृधास इत्यस्यार्थमाह ॥ **ज्ञानादिति** ॥ कुविदित्यस्य क्वचिदित्युपपदं रहस्यस्थान इति तात्पर्यकथनम् । एवमुषसम् आवासयन्नित्यस्यापि वुद्धिमुत्थापयन्नित्युपपदकथनम् । तद्विषयामकुर्वन्निति तात्पर्यकथनम् ।

अस्तु वामनश्रुतितस्तस्यापि ईशानस्य विष्णुत्वं कुत इत्यत आह ॥ **तस्याश्चेति** ॥ 'एष एव वामनिरेष हि सर्वाणि वामानि नयति' इति श्रुत्यन्तरे योगस्य उक्तत्वेन 'उपेन्द्रो वामनः प्रांशुः इति स्मृतेः आर्यप्रसिद्धेश्च महायोगरूढिसिद्धत्वमितिभावः ॥ **अत्र प्रमितपदमिति** ॥ श्रुतेः निरवकाशत्वरूपप्रावल्याभावे बहुलिङ्गबाधेन तत्प्रापितार्थविपरीतार्थप्रमापकत्वं न स्यात् । यतः श्रुत्यर्थस्य प्रमितत्वोक्त्या श्रुतेः निरवकाशत्वमेव सूचितमित्यर्थः ॥ **अनेनेति** ॥ श्रुतेः लिङ्गापेक्षया बलवत्वकथनेनेत्यर्थः । अर्थनिर्णायकश्रुत्यादीनां क्रमेण लक्षणान्याह ॥ **नाम-मात्रेणेत्यादिना** ॥ अत्र मात्रपदेन शुद्धयोगो व्यावर्त्यते । तथा च नाममात्रेणेत्यस्य केवल-यौगिकशब्दभिन्नपदेनेत्यर्थः । तेन न योगरूढानां वामनादिशब्दानां श्रुतित्वहानिरिति द्रष्टव्यम् ॥ **असाधारणधर्म इति** ॥ असाधारणधर्मप्रतिपादकः शब्दः शब्दार्पितः असाधारण-धर्म इत्यर्थः । न हि इहानुमानमात्रं लक्ष्यं तस्य वाक्यात् दुर्बलत्वात् । किन्तु श्रुतितो दुर्बलं वाक्याच्च प्रबलवैदिकं लिङ्गमिति भावः ॥ **निराकाङ्क्षपदानीति** ॥ पर्यवसिताकाङ्क्षपदानीत्यर्थः ॥ **एकप्रमेयेति ॥ स्थानेति व्याप्तिवारणाय एकप्रमेयप्रतिपादकेति** ॥ वाक्येति व्याप्ति-वारणायानेकेति ॥ अनेकाक्षरात्मकपदादावतिव्याप्तिपरिहाराय वाक्येत्युक्तम् ॥ **अनेक-प्रमेयेति** ॥ प्रमाकरणे अतिव्याप्तिपरिहारार्थम् अनेकप्रमेयप्रतिपादकेत्युक्तम् । विरुद्धार्थशास्त्रयोः मिलितयोः स्थानत्वपरिहारार्थम् एकार्थतात्पर्ययुक्तमिति ॥ **समानोक्तिरिति** ॥ निर्णीतस्थल इत्युपस्कर्तव्यम् । तेन विप्रतिपन्नप्रकरणादिगतसमानोक्तेः समाख्या त्वव्यवच्छेदः । साक्षा-दर्थधीजनकत्वादिति व्याप्त्यादिप्रतिपादनद्वारमन्तरेणागमतया विप्रतिपन्नार्थधीजनकत्वादित्यर्थः

(तत्त्वसुबोधिनी)

॥ **अनुमापकतयेति** ॥ व्याप्त्यर्थप्रतिपादनद्वारेत्यर्थः । यथात्रैव योऽयं मध्यमः इति मध्यमपदस्य मध्यमत्वरूपव्याप्यप्रतिपादनद्वारेशानशब्दोक्तस्य वायुत्वनिश्चायकत्वम् ॥ **तदानन्तर्यमिति** ॥ ततो दुर्बलमित्यर्थः । यथात्रैव वामनश्रुतितो मध्यमत्वादिलिङ्गानाम् **अनेकार्थकथनद्वारेति** ॥ यतो 'सर्वाणि हवा इमानि भूतानि आकाशादेव समुत्पद्यन्ते' इति वाक्यस्य भूताद्यनेकार्थ-प्रतिपादनद्वारा भूतकारणत्वरूपे व्याप्यप्रतिपादकत्वेन आकाशपदोक्तस्य भूताकाशत्वानु-मापकत्वम् ॥ **ततोऽपि दौर्बल्यमिति** ॥ तल्लिङ्गादित्यत्रैव अनन्तत्वादिलिङ्गात् वाय्वादि-भूतकारणतया व्याप्यार्थकस्य 'सर्वाणि हवा इमानि भूतानि आकाशादेव समुत्पद्यन्ते' इति वाक्यस्य ॥ **बह्वर्थपरत्वेनेति** ॥ यथा 'मूर्धानन्दिव' इत्यग्निप्रकरणस्य देवमुखत्वय-ज्ञनाभित्वाद्यग्निज्ञापकबह्वर्थप्रतिपादनत्वेन ज्योतिःशब्दोक्तस्याग्नित्वानुमापकत्वम् ॥ **तदवमतेति** ॥ यथा ज्योतिश्चरणाभिधानात् इत्यत्रैव कर्णादिविदूरत्वलिङ्गप्रतिपादकविमे कर्णेति वाक्या-दुदाहृताग्निप्रकरणस्य दौर्बल्यम् ॥ **अतिबह्वर्थकथनेति** ॥ यथा षट्प्रश्नोपनिषत्रूपस्थानस्य बह्वर्थकत्वेन अनेकप्रकरणार्थधीपूर्वकम् इदं स्थानं विष्णुपरमिति यज्ज्ञानं तत्पूर्वं स्थानान्तर्गत-स्यैवमेवैष प्राण इति वाक्यस्य स्थानानुगुणार्थकत्वमेव वक्तव्यमिति तद्वाक्यगतप्राणशब्दोक्तस्य विष्णुत्वानुमापकत्वम् ॥ **ततोऽपि दौर्बल्यमिति** ॥ यथा स्वस्यैव स्थानस्य भगवत्कृत एव प्राणो जायत इत्यादि खण्डरूपान्मुख्यप्राणधर्मप्रतिपादकत्वं तत्प्रकरणात् ॥ **सादृश्यमात्रे-णेति** ॥ यथा अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुद्ध्यन्तामिति कोशपरसमाख्यया अत्रोक्तमेव स्थानान्तरस्थविप्रतिपन्नवाक्येनापि बोध्यमित्येव स्थलद्वयानुसन्धानपूर्वकतत्सादृश्य-त्वादि अन्ततः तदर्थपरमित्येवं सादृश्यमात्रेण ।

एतमन्नमयमात्मानमुपसङ्क्रम्य एतमन्नमयमात्मानमुपसङ्क्रामतीत्याद्यन्नमयशब्दोक्तस्य कोश-त्वानुमापकत्वम् । यथा वा 'स्मर्यमाणमनुमानं स्यात्' इति सूत्रोपात्तायाः 'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः' इति समाख्याया वैश्वानरस्य विष्णुत्वानुमापकत्वम् ॥ ततोऽपि **दौर्बल्यमिति** ॥ यथा ब्रह्मविदाप्नोति परं भृगुर्वै वारुणिः इति विष्णुधर्मरूप प्रतिपादकतया विष्णुस्थानात् उदाहृतसमाख्याया इति द्रष्टव्यम् ॥ **पूर्ववदिति** ॥ समन्वयाधिकरणोक्तोप-क्रमादिवदित्यर्थः । इत्यादीत्यादिपदेन निरवकाशात् एकस्मात् बहुत्वेन प्रबलस्य सावकाशस्य दौर्बल्यमित्यस्य ग्रहणम् । ननु तर्हि सावकाशत्वनिरवकाशत्वे एव बाध्यबाधकत्वोपयोगिनी न

(तन्त्रसुबोधिनी)

श्रुत्यादित्वम् इत्यतः सावकाशत्वादिरहितश्रुत्यादीनां जातिकृतप्राबल्यदौर्बल्यनिमित्तको बाध्य-बाधकभाव इत्यभिप्रेत्यैव आगमनिर्णय इत्येतद्व्याचष्टे ॥ **विरुद्धतैषामिति** ॥ अनेनैवागमनिर्णय इत्यस्य पूर्वपूर्वं बलीय इत्यागमनिर्णय इत्यन्यथाप्रतीतिः निरस्ता भवति ॥ **श्रुतिलिङ्ग-वाक्यानामिति** ॥ यथा 'एष सर्वेषु भूतेषु' एवमेव 'ब्रह्मेत्येवाभिविमानमात्मानं' वैश्वानरम् इत्यादौ च विप्रतिपन्नसर्वगतवैश्वानरादिनिष्ठब्रह्मात्मशब्दादेः । यथा च 'आकाशः परायणं स एव परोवरीयान् उद्गीथः स एषोऽनन्तः' इत्यत्र 'य एषोऽन्तरक्षिणि पुरुषो दृश्यत' 'एष आत्मेति होवाच' 'एतदमृतमभयमेतद्ब्रह्म' इत्यादौ च विप्रतिपन्नाकाशचक्षुरन्तस्थगतानन्तत्वा-मृतत्वादेः । यथा विमेकर्णेत्यत्र यं पृथिवी न वेद इत्यादौ च विप्रतिपन्नज्योतिरन्त-र्याम्यादिनिष्ठस्य उदाहृतवाक्यस्य इति ज्ञेयम् ॥ **उपक्रमोपसंहारयोरिति** ॥ यथा वैश्वानर इत्यत्र कोऽनु आत्मा किं ब्रह्म इत्युपक्रमादिश्रुतेः । यथा च प्रथमे श्रवणादित्यत्र इति तु पञ्चम्या-माहुतावापः पुरुषवचसो भवन्तीत्युपसंहारस्थबहुश्रुतेः लिङ्गस्य । यथा आत्मा वा इदमेवाग्र आसीत् इत्यत्र एष तपतीत्याद्युपक्रमवाक्योक्तसूर्यस्थितलिङ्गस्य सर्वत्र प्रसिद्धेत्यत्र स योऽन्योऽ-श्रुत इत्युपसंहारस्य श्रुतत्वादिलिङ्गस्य वाक्यस्य तु यथा अन्तर इत्यत्र कं ब्रह्म खं ब्रह्म इत्युपक्रमस्थवाक्यस्य । प्राणस्तथेत्यत्र 'ता वा एता सर्वा ऋचः' इत्यादेः उपसंहारस्य वाक्यस्य ॥ **अन्यत्र चाह इति** ॥ विप्रतिपन्नार्थप्रतिपादकवाक्योपसंहारेभ्योऽन्यत्रेत्यर्थः । यथा प्राणस्तथेत्यत्र 'ब्रह्मेमं पुरुषम्' इत्यादि ब्रह्मश्रुतेः । दहर इत्यत्र 'य आत्मा अपहतपाप्मा' इत्यादिलिङ्गस्य । 'अत एव प्राण' इत्यत्र 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ' इत्यादिवाक्यस्येति द्रष्टव्यम् । उपक्रमोपसंहारावपि उपक्रमोपसंहाराभ्यामन्यत्र श्रुतौ श्रुत्यादिना अर्थनिश्चये सति तस्मिन्नेवार्थतात्पर्यातिशयज्ञापकावित्यर्थः ।

यथा अत्ता चरेत्यत्र अत्तुः ब्रह्मत्वे सर्वात्तृत्वादिना निर्णीतेनैवेह किं चाग्र आसीदित्युप-क्रमः । यथा च सर्वत्रेत्यत्र सर्वगतस्य ब्रह्मत्वे ब्रह्मशब्दादिना निर्णीते 'स योऽत' इत्युपसंहार इति बोद्धव्यम् ॥ **अन्यथा प्रकरणेति** ॥ यथा द्युभ्वाद्यधिकरणे प्रकरणादित्यत्र 'द्वे विद्ये' इति परमेश्वरोपक्रमः । अन्यमीशमित्यत्रापि तस्यैव प्रकृतत्वनिश्चायकः । यथा वा अनुमानाधिकरणे प्रकरणादित्यत्र तद्विष्णोः परममित्युपसंहारः अनाद्यनन्तमित्यादेः विष्णुप्रकरणत्वनिश्चायक इति ज्ञेयम् ॥ **समाख्यापीति** ॥ 'यथा पुरुषविधम्' इत्यत्र शीर्ष्णोरित्यादिपुरुषसूक्तोक्तिसमाना

(तत्त्वसुबोधिनी)

साक्षाद्विप्रतिपन्नवैश्वानरनिष्ठा वैश्वानरस्य मूर्धेवेत्याद्युक्तिः ॥ **अन्यथाप्रकरणेति** ॥ यथा 'परो दिवा पर एना पृथिवी तावती' इत्यम्भ्रणीसूक्तोक्तिरिति द्रष्टव्यम् । ननु परोवरीयानुद्गीथोऽनन्त इत्यादिलिङ्गस्य 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ' इत्यादि वाक्यस्य विप्रतिपन्नार्थवाक्यप्रतिपादकत्व-विशेषात् कथं लिङ्गवाक्याभाव इत्यत आह ॥ **लिङ्गवाक्ययोरिति** ॥ अनेकार्थप्रतिपादनमन्तरा व्याप्यप्रतिपादकत्वं साक्षात्त्वलिङ्गस्य तद्वारा विप्रतिपन्नार्थव्याप्यप्रतिपादकत्वं वाक्यस्य साक्षात्त्वमिति बोद्धव्यम् । तथा च लक्षणवाक्ये व्याप्यार्थकं पदं लिङ्गं तदर्थकानि निराकाङ्क्ष-पदानि वाक्यमिति विवक्षितमिति भावः । तदेवोदाहरणमुखेन दर्शयति ॥ **गोत्रभिदमिति** ॥ तत्करणस्य जप्येत्यादाविवोदाहरणार्थत्वमिति भावः ।

यद्वा लिङ्गं द्विविधम् । एकपदात्मकम् अनेकपदात्मकं चेति । नन्वेकपदात्मकस्य लिङ्गस्य वाक्यस्य च कथं भेदः द्वयोरपि अनेकपदात्मकत्वाविशेषादित्यत आह ॥ **लिङ्गवाक्य-योरिति** ॥ यत्र वाक्यार्थो व्याप्यरूपः तदेव वाक्यस्य असाक्षत्त्वमिति बोद्धव्यम् । एतदेवो-दाहरणमुखेनाह ॥ **गोत्रभिदमिति** ॥ यथानयोः लिङ्गयोः साक्षात् असाक्षत्त्वेन भेदः तथा प्रकृतयोः लिङ्गवाक्ययोरपि भेद इत्यर्थः । तथा चात्र लिङ्गवाक्ययोः भेदो लिङ्ग एव दृष्टान्तितं न तु लिङ्गवाक्ये इति भावः । अत एव इत्यादिवदितिवत्करणम् । अनेकपदात्मकस्यापि असाधारणधर्मस्य लिङ्गत्वं सूत्रतद्भाष्यतट्टीकादौ सर्वत्रोक्तमिति भावः । ननु भाष्योक्तदिशा प्राणशब्दस्य विष्णुवाचकत्वेनैवैष प्राणोऽयं मध्यमः प्राण इति प्राणशब्दोपेतवाक्योक्त-प्राणव्यवस्थापकमध्यमत्वयोः विष्णाववकाशसिद्धावपि वायुशब्दोपेतकुविदङ्गेति वाक्योक्तसर्व-देवोपास्यत्वलिङ्गस्य कथं विष्णाववकाशस्थितेरित्यत आह ॥ **वायुत्वमिति** ॥ प्राणत्वोक्तेरिति अत्र प्राणत्वपदेन वायुत्वमुपलक्ष्यत इत्यर्थः ।

## वाक्यार्थविवरणम्

ननु वायोर्मोक्षार्थं देवोपास्यत्वं नोच्यते किं नामैश्वर्यादिप्रयोजनान्तरार्थमिति चेत्तत्राह ॥ **न हीति** ॥ वायोः मोक्षदातृत्वे प्राप्ते किं पूर्वपक्षे फलमित्यत आह ॥ **तथा चेति** ॥

## वाक्यार्थमञ्जरी

**अङ्गुष्ठमात्र इति** ॥ हृदयवकाशापेक्षयाङ्गुष्ठपरिमाणः भूतभव्यस्य अतीतानागतस्य ईशानः

(वाक्यार्थमञ्जरी)

प्रेरकः पुरुषः आत्मनि देहमध्ये हृद्गुहायान्तिष्ठतीत्यर्थः ॥ **ऊर्ध्वमिति** ॥ यो हरिः प्राणवायुं मुख्यप्राणस्वरूपम् ऊर्ध्वभागं प्रापयति अपानं मुख्यावायुरूपं प्रत्यक् अधः अस्यति क्षिपति तं हृदयमध्ये आसीनं सन्तं वामनं सौन्दर्यनेतृत्वेन तच्छब्दवाच्यं भगवन्तं सर्वे देवा उपासत इत्यर्थः । नन्वत्र उपास्यत्वमेवोच्यते न जिज्ञास्यत्वमित्यत आह ॥ **जिज्ञासोपासनयोरिति** ॥ **श्रवणादीति** ॥ नन्विदमयुक्तं युक्तिभिरनुचिन्तनरूपमननस्य त्वविचाररूपत्वे औपदेशिकवाक्यार्थग्रहणरूपश्रवणस्याखण्डस्मृतिरूपनिदिध्यासनस्य च विचाररूपत्वाभावात् । न च श्रवणमादिर्यस्य मननस्य तच्छ्रवणादीत्यतद्गुणसंविज्ञानबहुव्रीहिणा मननस्यैव विचाररूपत्वमुक्तमिति वाच्यम् । तथासति श्रवणादित्रितयस्यापि विचारापरपर्यायोपासनत्वप्रतिपादकवाक्योदाहरणासङ्गतिः । तच्च श्रवणमनननिदिध्यासनरूपा जिज्ञासैवेत्युक्तमिति वक्ष्यमाणविरोधाच्चेति चेन्न । अत्र विचारपदेनाजत्स्वार्थलक्षणयौपदेशिकवाक्यार्थग्रहणमखण्डस्मृतिश्च गृह्यते । शक्यसम्बन्धश्च तज्जनकत्वात्स्मृतेश्च तज्जन्यत्वाज्जन्यजनकभावः तथा च श्रवणमनननिदिध्यासनापरपर्यायौपदेशिकवाक्यार्थग्रहणमखण्डस्मृतिरूपा जिज्ञासेति लभ्यत इति न कोऽपि दोषः । यदाहुरनुव्याख्याने । अत्र शास्त्राभ्यासशब्देनोपदिष्टशास्त्रार्थज्ञानरूपश्रवणं युक्तिभिस्तदनुचिन्तनरूपं मननं चोच्यते । ध्यानमखण्डस्मृतिः । धारणा खण्डस्मृतिः । यथाहुः 'खण्डस्मृतिर्धारणा स्यादखण्डा ध्यानमुच्यत' इति । आदिपदेन प्राणायामादि ॥ **प्रसिद्धावपीति** ॥ ईश्वरः सर्व ईशान इत्यादावित्यर्थः । श्रुतावन्वयाप्रतीतेर्यत्तच्छब्दाध्याहारेण तं दर्शयति ॥ **उन्नयतीति** ॥ **व्यवस्थापकत्वेनेति** ॥ नियोजकत्वेनेत्यर्थः ॥ **यथेति** ॥ यथा लोके सम्राट् सार्वभौमोऽधिकृतान्नियोगिनः विनियुङ्क्ते व्यवस्थापयति । कथं त्वमेतान्पाटलीपुत्रादीन् ग्रामानधितिष्ठस्व तदाधिपत्ये तिष्ठस्व । त्वमेतान्कौशाम्बिप्रभृतीन् ग्रामानधितिष्ठस्वेति । एवमेवैष मुख्यप्राणः इतरान् भिन्नानात्मजातत्वादुपचारेणात्मविभागान् प्राणान्वायून्पृथग्पृथगेव हृदयगुहास्थानेषु सन्निधत्ते संस्थापयति । स्वयं च तत्र तत्प्रवर्तकतया प्राणादिरूपोऽवतिष्ठत इत्यर्थः ॥ **अथेममिति** ॥ अथेतरदेवानां श्रमप्राप्त्यनन्तरं प्रजापतिर्योऽयं मध्यमप्राणस्तमिममेव नाप्नोद् ब्रह्मणो वायुसमशक्तित्वात्तन्नापेत्यर्थः । प्राणशब्दवाच्येषु विष्णोरुत्तमत्वादन्येषामधमत्वाद्वायोर्मध्यमत्वान्मध्यम इत्युक्तम् । अभ्युपगमात्सिद्धान्तिभिः ॥ **अबाधादिति** ॥ अत्र विष्णोर्जिज्ञास्यत्वनिषेधेऽपि अन्यत्रानिराकरणादिति भावः । न देवा मोक्षार्थं वायूपासां कुर्वन्ति येन तस्य मोक्षदातृत्वं स्यात्किन्त्वैश्वर्यादिप्रयोजनान्तरायेत्यत आह ॥ **न हीति** ॥

(वाक्यार्थमञ्जरी)
कुविदङ्गनमसाये वृधासः पुरा देवा अनवद्यास आसन् । ते वायवे मनवे बाधितायावासयन्नुषसं सूर्येणेति मन्त्रं व्याचष्टे ॥ **अङ्गेत्यादिना** ॥ कुविदित्यस्य प्रतिपदं कचिदिति रहस्यस्थान इति तात्पर्यकथनं बाधितायेत्यस्य संसार इत्यादि उषसमित्यस्य बुद्धिमिति ।

ॐ शब्दादेव प्रमितः ॐ ॥ ईशानो विष्णुरेव प्रमितः मध्ये वामनमिति वामनशब्दादित्यर्थः ॥ **महायोगरूढीति** ॥ 'एष उ एव वामनिरेष एव हि भामनिरेष हि सर्वाणि वामानि नयति' इति वामनिवामनशब्दयोरेकार्थत्वेन महायोगस्य स भामनः 'उपेन्द्रो वामनः प्रांशुः' इति रूढेश्च सत्त्वादिति भावः । अनेन श्रुतेः प्राबल्यनिरूपणेन । निर्देशः वस्तुप्रतिपादकशब्दः । यथा वामनमित्यादि अत्र केवलयौगिकशब्दव्यावृत्त्यर्थं मात्रपदम् । तेन योगरूढानां वामनादिशब्दानां श्रुतित्वहानिरिति ध्येयम् ॥ **असाधारणधर्म इति** ॥ **यथा मध्यमत्वादि** ॥ **निराकाङ्क्षपदानीति** ॥ पर्यवसिताकाङ्क्षपदानीत्यर्थः । यथा 'सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्त' इति ॥ **एकप्रमेयेति** ॥ यथा अग्निरूपैकार्थप्रतिपादकं 'मूर्धानन्दिव' इत्यादि । अत्र स्थानेति व्याप्तिवारणायैकप्रमेयप्रतिपादकेति । वाक्येति व्याप्तिवारणायानेकेति । अनेकाक्षरपदादावतिव्याप्तिवारणाय वाक्येत्युक्तम् ॥ **अनेकप्रमेयेति** ॥ यथा विष्णौ तात्पर्योपेतानेकार्थप्रतिपादकषट्प्रश्नोपनिषदादि । अत्र प्रकरणव्यावृत्त्यर्थमनेकप्रमेयप्रतिपादकमिति । विरुद्धार्थयोः शास्त्रयोर्मिलितयोः स्थानत्वव्यावृत्त्यर्थम् एकार्थतात्पर्ययुक्तमित्युक्तम् ॥ **समानोक्तिरिति** ॥ निर्णीतस्थल इत्युपस्कर्तव्यम् । तेन विप्रतिपन्नप्रकरणादिगतसमानोक्तेः समाख्यात्वव्यवच्छेदः । यथा स वा एष इत्यादिनोक्तान्नमयादिपञ्चकस्यान्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुध्यन्तामित्यत्रोक्तिः । इदानीं प्राबल्यादि निरूपयति ॥ **तत्रेत्यादिना** ॥ **साक्षादर्थधीजनकत्वादिति** ॥ व्याप्त्यादिप्रतिपादनद्वारमन्तरेणागमतयाऽविप्रतिपन्नार्थधीजनकत्वादित्यर्थः । यथा वामनश्रुतिश्रवणमात्रेणेशानस्य विष्णुप्रतिपत्तिः ॥ **अनुमापकतयेति** ॥ व्याप्त्यादिप्रतिपत्तिद्वारेत्यर्थः । यथा मध्यमपदस्य मध्यमत्वरूपव्याप्यप्रतिपादनद्वारेशानस्य वायुत्वनिश्चायकत्वम् । तदानन्तर्यम् । ततो दौर्बल्यं यथात्र वामनश्रुतितो मध्यमत्वादिलिङ्गानां दौर्बल्यम् ॥ **अनेकार्थकथनद्वारेति** ॥ यथा सर्वाणि हवेत्यस्य भूताद्यनेकार्थप्रतिपादनद्वारा भूतकारणत्वरूपव्याप्यप्रतिपादकत्वेनाकाशपदोक्तस्य भूताकाशानुमापकत्वम् ॥ **ततोऽपि दौर्बल्यमिति** ॥ यथा परोवरीयस्त्वानन्तत्वादिलिङ्गापेक्षया सर्वाणि

(वाक्यार्थमञ्जरी)

हवेति वाक्यस्य दौर्बल्यम् ॥ **बह्वर्थपरत्वेनेति** ॥ यथा मूर्धानन्दिव इत्यस्य देवमुखत्वयज्ञ-नाभित्वाद्यग्निज्ञापकबह्वर्थप्रतिपादकत्वेन ज्योतिर्हृदयाहितेति ज्योतिःशब्दस्याग्नित्वानुमापकत्वम् ॥ **तदवमतेति** ॥ यथोदाहृतप्रकरणस्य कर्णादिविदूरत्वलिङ्गप्रतिपादकविमे कर्णा इति वाक्या-दौर्बल्यम् ॥ **अतिबह्वर्थकथनेनाभिप्राय इति** ॥ यथाषट्प्रश्नोपनिषद्रूपस्थानस्य बह्वर्थानेक-प्रकरणार्थपूर्वकविष्णुपरस्थानगतः एषः प्राण इति वाक्यस्य तत्परत्वेनैतद्वाक्यस्थप्राणशब्दस्यापि विष्णुपरत्वानुमापकत्वम् ॥ **ततोऽपि दौर्बल्यमिति** ॥ यथास्यैव स्थानस्य भगवन् कुत एष प्राणो जायत इति खण्डरूपान्मुख्यप्राणधर्मप्रतिपादकत्वेन मुख्यप्राणप्रकरणाद्दौर्बल्यम् ॥ **सादृश्यमात्रेणेति** ॥ यथान्नमयप्राणमय इति कोशसमाख्यायास्तत्सदृशत्वादिदन्तदर्थकसादृश्य-मित्येवंरूपसादृश्यमात्रेणैतमन्नमयमात्मानमुपसङ्क्रामतीत्याद्यन्नमयादिशब्दोक्तस्य कोशत्वानु-मापकत्वम् ॥ **ततोऽपि दौर्बल्यमिति** ॥ यथा ब्रह्मविदाप्नोति परं भृगुर्वै वारुणिरिति विष्णु-धर्मप्रतिपादकतया विष्णुस्थानादुदाहृतसमाख्यानाद्दौर्बल्यम् । नन्वेवं लिङ्गादेः श्रुत्यादेः सकाशाद्दौर्बल्ये कथमाकाशस्तल्लिङ्गादित्यादौ लिङ्गादिना श्रुत्यादेर्बाध इत्यत आह ॥ **अत्रापीति** ॥ **पूर्ववदिति** ॥ समन्वयाधिकरणोक्तोपक्रमादिवदित्यर्थः । इत्यादीत्यादिपदेन निरवकाशादेकस्माद्धेतुत्वेन प्रबलस्य सावकाशस्य दौर्बल्यमित्यस्य ग्रहणम् । निरवकाशत्वादि-रहितश्रुत्यादावेव जातिकृतप्राबल्यादिकमिदं प्रदर्शितमिति भावः । समवाये संमेलने ।

ननु श्रुतिलिङ्गेति वाक्यानुसारेण समाख्यायाः वाक्यप्रकरणाभ्यां प्राबल्यं किं नाश्रित-मित्यत आह ॥ **न चेति** ॥ उदाहृतवाक्यानुक्तं स्थानं किमर्थं सूच्यत इति शङ्कापरिहारं सूचयन्नेव स्वोक्तक्रमसाधकजैमिनिसूत्रानुव्याख्याने क्रमेणोदाहरति ॥ **श्रुतिरित्यादिना** ॥ विरुद्धानां श्रुत्यादीनां समवाये सति पारदौर्बल्यम् । परेषामुत्तरोक्तानां दौर्बल्यम् । कुतः तेषां तत्र श्रुतेः साक्षादित्यादिनोक्तरीत्या विलम्बेनार्थसाधकत्वादिति जैमिनिसूत्रार्थः । ननु श्रुत्यादेः किं श्रुत्यादित्वेन साक्षादवयवार्थनिश्चायकत्वमुतोपक्रमादिनिश्चायकत्वेन परम्परया वा नाद्यः क्वचित्परम्परयापि हेतुत्वात् । न द्वितीयः क्वचित्साक्षादपि हेतुत्वादिति अतोऽत्र नियमो न विवक्षित इत्याशयेनाह ॥ **श्रुतिलिङ्गवाक्यानामित्यादिना इत्यादिवदित्यन्तेन** ॥ यथात्मानं वैश्वानरमित्यत्र विप्रतिपन्नवैश्वानरगतात्मश्रुतेर्विष्णुत्वनिश्चायकत्वम् । यथा च 'आकाशः परायणं स एष परोवरीयान्' इत्यत्र विप्रतिपन्नाकाशगतपरोवरीयस्त्वलिङ्गस्य विष्णुत्वनिश्चाय-

(वाक्यार्थमञ्जरी)

कत्वम् । यथा च 'विमे कर्णापतयतो विचक्षुर्विदञ्ज्योति' इति प्रतिपन्नज्योतिर्निष्ठोदाहृतवाक्यस्य विष्णुत्वनिश्चायकत्वम् ॥ **उपक्रमोपसंहारयोः श्रुतत्व इति** ॥ यथा को नात्मा' इत्युपक्रमे श्रुतात्मश्रुतेरुपक्रमस्य विष्णुपरत्वनिश्चायकतया वैश्वानरमुपास्त इत्युक्तवैश्वानरस्य विष्णुत्व-निश्चायकत्वम् ।

यथा च 'पञ्चम्यामाहुतावाप' इत्युपसंहारे श्रुतापश्रुतेरुपसंहारस्य भूतपरत्वनिश्चायकतया 'श्रद्धां जुह्वति' इत्यत्र श्रद्धाशब्दस्य भूतपरत्वनिश्चायकत्वम् । यथा च 'य एष तपति' इत्युपक्रमे श्रुतसूर्यस्थत्वलिङ्गस्योपक्रमस्य विष्णुपरत्वनिश्चायकतया 'आत्मा वा इदमेक एव' इत्युक्तात्मनो विष्णुत्वनिश्चायकत्वं यथा च 'स योऽतोऽश्रुत' इत्युपसंहारे श्रुताश्रुतत्व-लिङ्गस्योपसंहारस्य विष्णुपरत्वनिश्चायकतया 'य एषोऽन्तरक्षिणि पुरुष' इत्युक्त चक्षुरन्तस्थस्य विष्णुत्वनिश्चायकत्वम् । यथा च 'कं ब्रह्म खं ब्रह्म' इत्युपक्रमे श्रुतवाक्यस्योपक्रमस्य विष्णुपरत्वनिश्चायकत्वेनान्तरक्षिणीत्युक्तस्य विष्णुत्वनिश्चायकत्वम् । यथा च 'ता वा एताः सर्वा ऋच' इत्युपसंहारे श्रुतवाक्यस्योपसंहारस्य विष्णुपरत्वनिश्चायकतया चक्षुर्मनोवाक्प्राण इत्युक्तप्राणस्य विष्णुत्वनिश्चायकत्वम् ॥ **अन्यत्रेति** ॥ विप्रतिपन्नार्थप्रतिपादकवाक्योपक्रमोप-संहारेभ्योऽन्यत्रेत्यर्थः । यथा ब्रह्मेमं पुरुषमिति प्रकरणे श्रुतब्रह्मश्रुतेः प्रकरणस्य वैष्णवत्व-निश्चायकतया मनोवाक्प्राण इत्युक्तप्राणस्य विष्णुत्वनिश्चायकत्वम् । यथा चापहतमाप्मेति प्रकरणे श्रुतापहतपाप्मत्वलिङ्गस्य प्रकरणस्य वैष्णवत्वनिश्चायकतया दहरेऽस्मिन्नन्तर आकाश इत्युक्ताकाशस्य विष्णुत्वनिश्चायकत्वं यथा च 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति प्रकरणे श्रुत-स्यास्य वाक्यस्य प्रकरणस्य वैष्णवत्वनिश्चायकतया तद्धेत्वं प्राण इत्युक्त प्राणस्य विष्णुत्व-निश्चायकत्वमिति । यद्यपि श्रुत्यादिना अर्थनिश्चयदशायामुपक्रमोपसंहारे श्रुतश्रुत्यादेरपि प्रकरणनिश्चायकत्वं तथापि तत्र साक्षादन्यत्र परम्परयेति भेदः । प्रसङ्गात्पूर्वमनुक्त-त्वेनावश्यकत्वाच्चाह ॥ **उपक्रमोपसंहारावपीति** ॥ उपक्रमोपसंहारावपि उपक्रमोपसंहारा-भ्यामन्यत्र श्रुतश्रुत्यादिनार्थनिश्चये सति तस्मिन्नेवार्थे तात्पर्यज्ञापकावित्यर्थः । यथा सर्वं वा अत्तीति तददितेरित्युक्तात्तुः सर्वात्तृत्वलिङ्गेन विष्णुत्वनिश्चये सति नैवेह किं च नाग्र आसी-दित्युपक्रमस्य अत्तुर्विष्णुत्वनिश्चायकत्वं यथा च 'सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षत' इत्युक्त-सर्वगतस्य ब्रह्मश्रुत्या विष्णुत्वनिश्चये सति 'स योऽतोऽश्रुत' इत्युपसंहारस्य सर्वगतस्य

(वाक्यार्थमञ्जरी)

विष्णुत्वनिश्चायकत्वम् ॥ **अन्यथा प्रकरणेति** ॥ यथा 'द्वे विद्ये वेदितव्ये' इति विष्णूपक्रमस्यान्यमीशमित्यस्य विष्णुप्रकरणत्वनिश्चायकत्वम् । यथा च 'तद्विष्णोः परमं पदम्' इति विष्णूपसंहारस्य 'अनाद्यनन्तं महतः परं ध्रुवम्' इत्यादेर्विष्णुप्रकरणत्वनिश्चायकत्वम् ॥ **समाख्यापीति** ॥ यथा 'चक्षोः सूर्यो अजायत' इति पुरुषसूक्तोक्तिसमाख्यानात्साक्षाद्वि-प्रतिपन्नवैश्वानरनिष्ठा चक्षुर्विश्वरूप इत्याद्युक्तिर्वैश्वानरस्य विष्णुत्वनिश्चायिका ॥ **अन्यथेति** ॥ यथा 'परो दिवा पर एना पृथिव्यै तावती महिना सम्बभूव' इत्यम्भृर्णीसूक्तोक्तिसमाना 'अजस्य नाभौ' इति विप्रतिपन्नार्थे साक्षादश्रुता 'परो दिवा पर एना पृथिव्यै' 'परोदेवेभिः' इत्युक्तिः ।

ननु 'परो वरीयानुद्गीथोऽनन्त' इत्यादिलिङ्गस्य श्रीश्च ते लक्ष्मीश्च पत्न्यौ' इतिवाक्यस्य च विप्रतिपन्नार्थव्याप्यप्रतिपादकत्वाविशेषात्कथं लिङ्गवाक्यभाव इत्यत आह ॥ **लिङ्गवाक्ययो-रिति** ॥ अनेकार्थप्रतिपादनमन्तरा व्याप्यप्रतिपादकत्वलिङ्गस्य साक्षात्त्वम् । तद्द्वारा तत्प्रति-पादकत्वं वाक्यस्य साक्षात्त्वम् । यथा च लक्षणवाक्ये व्याप्यार्पकपदं लिङ्गम् । तदर्थकाणि लिङ्गानि निराकाङ्क्षपदानि वाक्यमिति विवक्षितमिति भावः । तदेवोदाहरणमुखेन क्रमेण दर्शयति ॥ **गोत्रभिदमिति** ॥ पर्वतभेत्तारमित्यर्थः । इन्द्रलिङ्गमिदम् ॥ **प्रवक्षणा इति** ॥ वज्री पर्वतानां प्रवक्षणाः पक्षान् अभिनत् विभेदेत्यर्थः । इदमिन्द्रपरवाक्यम् ॥ **विष्णावव-काशत्वादिति** ॥ प्राणनियामकत्वस्यान्तर्यामिनयन्यायेन सर्वनियामके हरौ युक्तत्वात् । मध्यम इति मध्यमशब्दस्योर्ध्वप्रत्यक्शब्दसहोक्तस्य मध्यदेशवाचित्वेन मध्यमोक्त्यभावेन मध्यदेशाव-स्थानस्य विष्णावपि सम्भवात् । सर्वदेवोपास्यत्वस्यापि सर्वजिज्ञासापरपर्यायस्य हरौ दहरनये सिद्धत्वादिति भावः । श्रुत्यन्तरेण सम्राडित्यादिना । प्राणशब्दोपेतयोः सम्राडथेति श्रुत्यो-र्विष्णुपरत्वेऽपि वायुशब्दोपेतकुविदङ्गेति श्रुतेर्न विष्णुपरत्वसिद्धिरित्यत आह ॥ **वायुत्वमिति** ॥ प्राणपदेनेति शेषः ।

## सूत्रभाष्यम्

**॥ ॐ हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॐ ॥ २५ ॥**

**सर्वगतस्यापि तस्याङ्गुष्ठमात्रत्वं हृद्यवकाशापेक्षया युज्यते । इतरप्राणिनामङ्गुष्ठाभावेऽपि मनुष्याधिकारत्वान्न विरोधः ॥**

## सत्तर्कदीपावली

यदत्र 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति' इत्यङ्गुष्ठमात्रत्वश्रवणं सर्वव्यापकस्य वामनस्य तद्घटयति ॥ **हृदीत्यादिना** ॥ हृदयाकाशेऽङ्गुष्ठपरिमाणत्वेन मनुष्याणां वामनोपास्तिं विधातुमङ्गुष्ठपरिमाणत्वं वामनस्योक्तमित्यर्थः ॥

## तत्त्वप्रदीपिका

'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।
ईशानो भूतभव्यस्य न ततो विजुगुप्सते'

इति तस्य सर्वदेवोपास्यस्येशानस्याङ्गुष्ठमात्रत्वं श्रूयते । न च विश्वव्याप्तस्य विष्णोरङ्गुष्ठमात्रत्वं युज्यत इत्यत आह– 'हृद्यपेक्षया तु मनुष्याधिकारत्वात्' । भाष्यं स्पष्टार्थम् । अस्मद्विवक्षितस्यार्थलेशस्य मुखतः प्रतीतेः स्पष्टत्वमुच्यते । न पुनस्सर्वेषां भाष्यार्थानां स्पष्टत्वं प्रतिज्ञायते । अपरिमितार्थत्वाद्भाष्यस्य । अत्रेशानस्य विषयत्वेऽप्ययमेव न्यायः ॥

## तत्त्वप्रकाशिका

तथापि कथमीशानो विष्णुर्भवेत् । अङ्गुष्ठमात्रत्वोक्तेः । न च विष्णोरङ्गुष्ठमात्रत्वं युक्तम् । सर्वगतत्वात् । न च वक्तव्यं व्योमवत्सर्वगतस्याप्यणुत्वं प्रत्यपादीति । 'अङ्गुष्ठमात्रः' इति तन्मात्रत्वोक्तेरित्याशङ्कां परिहरत्सूत्रमुपन्यस्य तदक्षराणि व्याचष्टे ॥ **हृदीति** ॥ सर्वगतस्यापि विष्णोरङ्गुष्ठमात्रत्वोक्तिर्युक्ता । हृदि विद्यमानावकाशस्याङ्गुष्ठमात्रत्वेन तदपेक्षया भगवन्मूर्तिविशेषस्याभिव्यक्त्या तन्मात्रपरिमाणत्वादित्यर्थः । भिन्नेष्वपि स्थानैक्येनैक्योक्तिवद् हृदयाकाशस्याङ्गुष्ठमात्रत्वेन तत्सम्बन्धात्सर्वगतेऽपि हरावुपचारेणाङ्गुष्ठमात्रत्वोक्तिरिति वाऽर्थः । तुशब्दः परिच्छिन्नतयाऽङ्गुष्ठमात्रत्वनिवृत्त्यर्थमेवार्थः । तथापि नाङ्गुष्ठमात्रत्वं विष्णोर्युक्तम् । तथाहि । किं तत्तदङ्गुष्ठमात्रत्वं वा । यत्किञ्चिदङ्गुष्ठमात्रत्वं वा । नाद्यः । पश्वादीनामङ्गुष्ठाभावेन तदन्तर्गतविष्णोरङ्गुष्ठमात्रत्वायोगात् । न द्वितीयः । तत्कथनवैयर्थ्यादसम्भवाच्चेत्याशङ्कां परिहरत्सूत्रशेषं व्याचष्टे ॥ **इतरेति** ॥ युक्तं विष्णोरङ्गुष्ठमात्रत्वम् । तत्तदङ्गुष्ठमात्रत्वाभ्युपगमेन विकल्पानवकाशात् । न च तत्पक्षोक्तविरोधः । मनुष्याणामेव वेदविद्योपासनाधिकारित्वेन तान्प्रत्येतद्विद्याप्रवृत्त्या पश्वादीनामङ्गुष्ठाभावेऽपि विष्णोरङ्गुष्ठमात्रत्वोक्तिसम्भवादिति भावः । तुशब्दोऽपिशब्दार्थः । तस्मादीशानो विष्णुरेवेति स एव जिज्ञास्य इति सिद्धम् ॥

## गुर्वर्थदीपिका

'सर्वगतस्यापि' इति 'इतरप्राणिनामङ्गुष्ठाभावेऽपि' इति च भाष्यस्थापिपदार्थपरतयाऽपि तुशब्दं व्याख्याति तुशब्दोऽपिशब्दार्थ इति ॥

## भावबोधः

**तन्मात्रत्वोक्तेरिति** ॥ नन्वत्र परिमाणार्थमात्रं च प्रत्ययोऽयम् । न त्ववधारणार्थो मात्रशब्दः । 'देहाङ्गुष्ठमितो देहे जीवाङ्गुष्ठमितो हृदि' इति स्मृतौ 'मित' इति परिमाणस्यैवोक्तेः अङ्गुष्ठपरिमाणत्वञ्च सर्वगतस्यापि व्योमवदवश्यं भवतीति पुनस्तद्दोषानिवृत्तिरिति चेन्न; तथात्वे अङ्गुष्ठमात्रवाक्ये 'मध्ये' 'आत्मनि' इत्यस्य 'हृदि' इत्यस्य च वैयर्थ्यापातात् ।

'अङ्गुष्ठमात्रः पुरुषः अङ्गुष्ठश्च समाश्रितः'

इति श्रुत्यन्तरे चाङ्गुष्ठमात्रहृदयगतत्वेनाङ्गुष्ठमात्रत्वोक्तेः । स्मृतावपि हृदीत्यादेरवैयर्थ्यायावधारणस्य विवक्षणीयत्वाच्च । पूर्वं मूर्तिविशेषस्य व्यक्त्यात्मनोऽङ्गुष्ठमात्रत्वमभ्युपेत्याङ्गुष्ठमात्रत्वं मुख्यमित्युक्तम् । इदानीमङ्गुष्ठमात्रत्वोक्तिरौपचारिकीत्याह ॥ **भिन्नेष्वपीति** ॥ **तत्कथनवैय्ययर्थ्यादिति** ॥ अङ्गुष्ठव्यक्तिविशेषनिर्धारणं विना यत्किञ्चिदङ्गुष्ठमात्रत्वेनोपासनाय असम्भवात्तत्कथनं व्यर्थमित्यर्थः ॥ **असम्भवाच्चेति** ॥ पिपीलिकादिहृदयस्थेऽङ्गुष्ठमात्रसामान्यस्याप्यसम्भवादित्यर्थः । पूर्वं सौत्रः 'तु' शब्दो एवकारार्थो व्याख्यातः इदानीमङ्गुष्ठाभावेऽपीति भाष्यानुसारात् 'अपि' शब्दार्थतया व्याचष्टे– **तुशब्दोऽपिशब्दार्थ इति** ॥ अनेन 'तु' शब्दः 'तथापि' इत्यर्थकस्य मनुष्यविकारत्वादित्युत्तरवाक्यशेषत्वमपीत्युक्तं भवति । अत्राद्ये स्वपक्षसाधकोक्तिः द्वितीये बाधकोद्धार इति सूत्रक्रमः ॥

## भावदीपः

॥ **तथापीति** ॥ प्राणव्यवस्थापकत्वादिलिङ्गविरोधाभावेऽपीत्यर्थः ॥ **अङ्गुष्ठेति** ॥ अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्येति ईशानस्याङ्गुष्ठमात्रत्वोक्तेरित्यर्थः ॥ **सर्वेति** ॥ अदृश्यत्वनये सर्वगतं सुसूक्ष्ममिति श्रवणेन तत्र सिद्धत्वात्सर्वगतत्वस्येत्यर्थः ॥ **व्योमवदिति** ॥ यद्यपि निचाय्यत्वादेवं व्योमवच्चेत्यत्र व्योमवत्सर्वगतस्याल्पदेशस्थितिरुक्ता

(भावदीपः)

न त्वणुत्वम् । अक्षरनये अन्यभावव्यावृत्तेश्चेति गुणसूत्र एवाणुत्वमुक्तं विरुद्धैर्लक्षणैर्युतम् । ब्रह्मेत्येव इत्यनुभाष्योक्तेः । तथाप्यणुपरिमाणस्यैवाल्पदेशस्थत्वं भवतीति भावेन वा महतोऽल्पत्वमपि हि व्योमवत्प्राह वेदविदिति वैशेषिकनयानुभाष्ये व्योमदृष्टान्तेनैवेश्वरेऽणुत्व-महत्वयोः साधितत्वाद्वा व्योमवदणुत्वं प्रतिपादितमित्युक्तम् ॥ **तन्मात्रत्वेति** ॥ अवधारणार्थकमात्रपदेनाङ्गुष्ठेतरपरिमाणराहित्योक्तिपूर्वम् अङ्गुष्ठपरिमाणत्वोक्तेरित्यर्थः । एतेन पूर्वस्मादभ्यधिकाशङ्का प्रदर्शिता । यद्यत्र मात्रशब्दो नावधारणार्थः किन्तु प्रमाणे द्वयसज्जिति परिमाणार्थो मात्रच् प्रत्ययः । तदा अङ्गुष्ठमात्रः चन्द्रिकायां बोध्यम् । एतेनैव वक्ष्यमाण-लक्षणाबीजमुख्यार्थानुपपत्तिरुपन्यस्ता ध्येया । सूत्रे हृदपेक्षयेत्यनुक्त्वा हृदीत्युक्तिः दहरनये प्रसिद्धेश्चेत्यत्रोक्तदिशा हृत्स्थाकाशस्थितत्वं विष्णोर्वक्तुमिति भावेन प्रवृत्तं हृद्यवकाशापेक्षयेति भाष्यं 'देहाङ्गुष्ठमितो देहे जीवाङ्गुष्ठमितो हृदि । जीवस्य स तु विज्ञेयो जीवाद्भेदेन मुक्तय' इति काठकभाष्ये अङ्गुष्ठपरिमितत्वोक्त्यनुरोधेन मुख्यार्थपरतया तावद्व्याचष्टे ॥ **हृदीति** ॥ भगवन्मूर्तिविशेषस्य तन्मात्रपरिमाणत्वेन तादृशहृदयावकाशे व्यक्तत्वेनाङ्गुष्ठमात्रपरिमाण-त्वोक्तिरित्यर्थः । शक्त्यात्मनाऽपरिमितपरिमाणस्यापि रूपविशेषे व्यक्त्यात्मनाऽङ्गुष्ठमात्र-परिमाणत्वोक्तिपरतया व्याख्यायेदानीम् ईश्वरे तन्मात्रपरिमाणाभावेऽपि उपचारात्तदुक्तिर्युक्ते-त्यर्थान्तरपरतया व्याचष्टे ॥ **भिन्नेष्विति** ॥ यथा 'गावः सायं गोष्ठ एकीभवन्ति' 'परेऽव्यये सर्व एकीभवन्ति' इत्यादौ स्थानगतैक्येन तद्गतेष्वैक्याभावेऽप्यैक्योक्तिस्तथेत्यर्थः ।

एतेनानन्दमयनये प्राणमयादेरन्यत्वान्तरत्वादिधर्माः कोशगता एव तद्गतभगवद्रूपेषूपचर्यन्त इति समाध्यन्तरमपि सूचितम् । तथा च न स्थानतोऽपि परस्योभयलिङ्गमित्यधिकरणे भाष्ये अभेदेऽपि भेदव्यपदेशः स्थानभेदादैश्वर्ययोगाच्च युज्यत इति । वैश्वानरनयोदाहरणे श्रुतं प्रादेशमात्रत्वमप्यनेनैव समाहितं बोध्यम् । यत्तु एवमुपचरितार्थत्वे श्रुतेर्वर्ण्यमाने वेदवाक्यस्य तु वाचनिकार्थं विना नैवान्यो युज्यत इति कर्मनिर्णयोक्तिविरोध इति तन्न । 'स्वातन्त्र्ये च विशिष्टत्वे स्थानमत्यैक्ययोरपि । सादृश्ये चैक्यवाक्सम्यक् यथेष्टत' इति जिज्ञासानयानु-व्याख्यानादौ भगवत्पादैरेव श्रुतेर्गौणार्थत्वोक्तेः । अत एव टीकायां स्थानैक्येनैक्योक्तिवदिति दृष्टान्तोक्तिः । कर्मनिर्णयवाक्यं तु तट्टीकायां सम्यग्व्याख्यातमिति भावः ॥ **कथनेति** ॥ अङ्गुष्ठवद्व्यक्तिविशेषनिर्धारणं विना यत्किञ्चिदङ्गुष्ठमात्रत्वेनोपासनायोगात्तत्कथनं व्यर्थमित्यर्थः

(भावदीपः)

॥ **असम्भवाच्चेति** ॥ पिपीलिकाहृदयस्थे अङ्गुष्ठमात्रसामान्यस्यैवाभावादित्यर्थः । सूत्रे भाष्ये च मनुष्यपदं मनुष्यमात्रपरामुपेत्यार्थमाह ॥ **मनुष्याणामेवेति** ॥ पूर्वं सौत्रः तुशब्दो हृद्यपेक्षयेति भाष्यानुरोधादेवकारार्थो व्याख्यातः । इदानीम् अङ्गुष्ठाभावेऽपीति भाष्यानुरोधादपिशब्दार्थतया व्याचष्टे ॥ **तुशब्दोऽपिशब्दार्थ इति** ॥ सूत्रद्वयार्थं फलोक्त्योपसंहरति ॥ **तस्माच्चेत्यर्थः** । आद्येतिशब्दो हेत्वर्थः । यत्तु कश्चिदाह । प्रथमे सूत्रे ईशान इति पदाध्याहारदोषः । प्रमितपदवैयर्थ्यं च । द्वितीये हृच्छब्दस्य अवकाशलक्षणाप्रसङ्गः अङ्गुष्ठमात्रत्वमित्यध्याहार-प्रसङ्गश्चेति । तन्न । अपेक्षिताध्याहारस्य सूत्रे सर्वतान्त्रिकसिद्धत्वात् । त्वन्मतरीत्या प्रमित इत्यस्य पक्षत्वे पूर्वोत्तरावैरूप्याय प्रमितः शब्दादेवेति निर्देशापातात् । श्रुतिनिरवकाशत्व-द्योतकतया प्रमितपदस्य सार्थक्योक्तेश्च । द्वितीये हृदपेक्षयेति वाच्ये हृद्यपेक्षयेति निर्देशादेव हृत्स्थावकाशापेक्षयेति लाभेन लक्षणानापत्तेः । त्वन्मते प्रमितपदास्वारस्याच्चेत्याद्यूह्यम् ॥

## अभिनवचन्द्रिका

**अङ्गुष्ठमात्रत्वोक्तेरिति** ॥ 'प्रमाणेद्वयसच्' इति परिमाणे मात्रचो विधानात् अङ्गुष्ठ-परिमाणत्वोक्तेरित्यर्थः । एतेन अङ्गुष्ठमात्र इत्यनेन परिमाणान्तरस्य निषेधात् 'न च वक्तव्यम्' इति परिहारमाशङ्क्य निषेधानुपपत्तिः । परममहत्परिमाणस्याऽणुत्वसमर्थनेऽपि परिमाणान्तर-व्यवच्छेदासमर्थनादिति परास्तम् ॥ **न चेति** ॥ विष्णोरङ्गुष्ठमात्रत्वाभिधानं न युक्तमित्यर्थः । उत्तरमाशङ्क्य निषेधति ॥ **न च वक्तव्यमिति** ॥ **अङ्गुष्ठमात्र इति** ॥ न ब्रूमो वयं सर्वगतस्य परिमाणान्तराऽसम्भव इति । येनोक्तपरिहारः स्यात्, किं नाम अङ्गुष्ठमात्र इति प्रयोजनशून्यविशेष्योक्तिबललब्धपरिमाणान्तरव्यवच्छेदानुपपत्तिरिति ब्रूम इति भावः । एतेन अङ्गुष्ठमात्रत्वोक्तेरिति पूर्वमेवावधारणार्थकमात्रशब्दान्तेनाऽङ्गुष्ठपदेनैव परिमाणान्तरव्यव च्छेद-स्योक्तत्वात् 'न च वक्तव्यम्' इत्यादितन्मात्रत्वोक्तेरित्यन्तं वाक्यद्वयं व्यर्थं, परिहारप्राप्तेरेवाऽ-भावेन तत्परिहारप्रयासवैयर्थ्यादिति परास्तम् । पूर्वं मात्रशब्दान्तेनाऽङ्गुष्ठपदेन तत्परिमाण-स्योक्तत्वेन परिमाणान्तरस्याऽनिषिद्धत्वात् ॥ **तन्मात्रपरिमाणत्वादित्यर्थ इति** ॥ तच्छब्दे-नाङ्गुष्ठः परामृश्यते । ततश्च अङ्गुष्ठसमपरिमाणत्वादित्यर्थ इत्यर्थः । भगवतः सर्वरूपेष्व-विशेषेऽपि कृष्णस्य नीलमेघश्यामत्वमिव हृदयान्तर्गतस्य भगवतः अङ्गुष्ठपरिमाणत्वमस्तीति तत्ख्यापनायैवाङ्गुष्ठमात्र इत्युक्तं न तु परिमाणान्तरनिषेधायेति भावः । विशिष्योक्तेरन्यथासिद्ध-

(अभिनवचन्द्रिका)

त्वेनाऽवधारणतात्पर्यकल्पनाऽयोगात् । एतेन अभिव्यक्तस्य भगवतः अङ्गुष्ठपरिमाणत्वेऽपि परिमाणान्तरस्यापि भावात् तन्मात्रपरिमाणत्वादिति परिमाणान्तरव्यतिरेकसत्त्वाभिधान-मयुक्तमिति परास्तम् । 'तुष्यतु दुर्जन' इति न्यायेनाऽवधारणतात्पर्यमङ्गीकृत्यापि मूलं योजयति ॥ **भिन्नेष्वपीति** ॥ नाऽङ्गुष्ठमात्रत्वोक्त्या विष्णोरीशानत्वबाधः, तस्यौपचारिकत्वात् । न हि माणवके उपचारेण प्रयुक्तं सिंहपदं मनुष्यत्वं विरुणद्धीति भावः ॥ **तुशब्द इति** ॥ अस्मिन् व्याख्याने उपचारेणैवाऽङ्गुष्ठमात्रः, न तु तदेव परिमाणमस्तीति अङ्गुष्ठमात्र इति एवकारार्थ-वाचकतुशब्द इत्यर्थः । पूर्वव्याख्याने तु भगवन्मूर्तिविशेषगतपरिमाणज्ञापनायैव श्रुतौ अङ्गुष्ठमात्र इत्युक्तम्, न तु 'विशेषविधिः शेषनिषेधं गमयति' इति न्यायेन परिमाणान्तरनिषेधायेति एवकारार्थवाचकस्तुशब्द इति बोध्यम् । भगवन्मूर्तिविशेषस्याङ्गुष्ठपरिमाणत्वेऽपि न विशिष्याङ्गुष्ठपरिमाणत्वोक्तिर्युज्यते ख्यापनप्रयोजनाभावादिति भावेन शङ्कते ॥ **तथापीति** ॥ **तत्तदङ्गुष्ठमात्रत्वेति** ॥ अयमपि शब्दो मात्रजन्तो बोध्यः । एतेन विकल्पकोटाववधारणार्थक-मात्रशब्दप्रवेशो व्यर्थः । किं तत्तदङ्गुष्ठमितः, किं वा यत्किञ्चिदङ्गुष्ठमित इत्येतावतैव पूर्णत्वादिति परास्तम् ॥ **अङ्गुष्ठमात्रत्वायोगादिति** ॥ उपलक्षणमेतत् । कथनवैयर्थ्यादित्यपि द्रष्टव्यम् । साधारणदोषेण द्वितीयपक्षं दूषयति ॥ **न द्वितीय इति** ॥ **कथनवैयर्थ्यादिति** ॥ अणुत्वमहत्त्वादिपरिमाणवति यत्किञ्चिदङ्गुष्ठपरिमितत्वाभिधानस्य निष्प्रयोजनत्वादिति भावः ॥ **असम्भवाच्चेति** ॥ पिपीलिकादिदेह इति शेषः । अवश्यं चैतदेवं विज्ञेयम् अङ्गुष्ठमात्र इति शब्दो मात्रजन्त एव न तु मात्रशब्दान्तः 'देहाङ्गुष्ठमितो देहे जीवाङ्गुष्ठमितो हृदि' इति स्मृतेः । अन्यथाऽङ्गुष्ठ एवायं न हस्तादिरिति अवयवान्तरनिषेधः स्यात् न तु परिणामान्तरनिषेधः । किं च अङ्गुष्ठशब्दस्य परिमाणवाचकत्वाभावात् ईशानस्याङ्गुष्ठपरिमितत्वं न सिद्ध्येत् । न च 'प्रमाणे ल' इति वार्तिकेन लुप्तमात्रजन्तत्वात् वितस्त्यादिवत् अङ्गुष्ठशब्द एव अङ्गुष्ठपरिमाण-माहेति वाच्यम् । नामलिङ्गानुशासने प्रादेशतालगोकर्ण इत्यादिना प्रमाणगणनावसरे परिगणितप्रादेशतालगोकर्णवितस्तिहस्ताऽरत्न्यादिशब्देभ्य एव 'प्रमाणेल' इति वार्तिकेन द्वय-सजादीनां लुको विहितत्वेन अङ्गुष्ठशब्दस्य तत्राऽगणितत्वेन ततः परस्य मात्रचो लुग-सम्भवात् । उक्तं च काशिकायाम् 'प्रमाणत्वेन ये प्रसिद्धाः तेभ्यः उत्पन्नस्य लुग्भवति' इति । अपि च 'मात्रं कार्त्स्न्येऽवधारण' इत्यभिधानात् अवधारणार्थकमात्रशब्दस्य नपुंसकलिङ्गत्वेन 'अङ्गुष्ठमात्र' इति पुल्लिङ्गानुपपत्तिरिति सौत्रतुशब्दं प्रकारान्तरेण व्याचष्टे ॥ **तुशब्दोऽपिशब्दार्थ**

(अभिनवचन्द्रिका)

इति ॥ अनेन यद्यपि इतरप्राणिनामङ्गुष्ठो नास्ति तथापि मनुष्याधिकारत्वात् अङ्गुष्ठमात्रत्वोक्ति-र्युज्यत इति योजनोक्ता भवति ।

पूर्वपक्षस्तु – ईशानो वायुरेव भवेत् । प्राणव्यवस्थापकत्वमध्यमत्वाभ्यां 'यथा सम्राडेव अधिकृतान् विनियुङ्क्ते, एतान् ग्रामानधितिष्ठस्व एतान् ग्रामानधितिष्ठस्व' इति । 'एवमेवैष प्राण इतरान्प्राणान् पृथक्पृथगेव सन्निधत्त' इति प्राणव्यवस्थापकत्वस्य वायुलिङ्गत्वश्रवणात् 'अथेगमेव नाप्नोद्योऽयं मध्यमः प्राण' इति मध्यमत्वस्य च तद्धर्मत्वोक्तेः । ततश्च तस्यै-वैतज्जिज्ञास्यत्वम् । न च वाच्यं नेदमनिष्टम् । वायोरपि जिज्ञास्यताभ्युपगमात् विष्णुजिज्ञास्य-त्वस्याऽबाधादिति । प्राप्तप्राणप्रसादादिसर्वैश्वर्याणां देवानां आनन्दातिशयजनकप्रसाद-विशेषमन्तरा प्रयोजनान्तराभावेन तदर्थमपि वायोरुपास्यत्वे तस्येश्वरत्वात् स्वातन्त्र्यापत्त्या विष्णुर्जिज्ञास्य इत्यस्याऽनुपपत्तिप्रसङ्गात् । अथवा ईशानो वायुरेव भवेत् । 'विश्वेदेवा उपासत' इति सर्वदेवोपास्यत्वश्रवणात् । तस्य कुविदङ्गेति सर्वदेवोपास्यत्वप्रतीतेः । ततश्चेशान-पदोक्तगुणस्य वायुनिष्ठत्वात् न विष्णोः सर्वगुणपूर्णत्वमिति ।

सिद्धान्तस्तु – विष्णुरेवेशानो भवेत् । 'मध्ये वामनम्' इति वामनश्रुतेः । तस्याश्च महायोगरूढिसिद्धायाः तत्प्रमापकत्वात् । ननु वायुलिङ्गसद्भावादीशानो वायुरेव किं न स्यादिति चेत्, न लिङ्गापेक्षया श्रुतेः प्राबल्यात् । तेषामपि लिङ्गानां 'तद्वैत्वं प्राणोऽभवः' इत्यादिना वैष्णवत्वस्य सिद्धत्वाच्च । ननु माभूत्प्राणव्यवस्थापकत्वादिलिङ्गेनेशानस्य वायुत्व-सिद्धिः, अङ्गुष्ठमात्रत्वलिङ्गेन तु सिद्ध्येदेव । तस्य विष्णावसम्भवात् । यद्यपि विष्णौ अङ्गुष्ठपरिमितत्वं सम्भवति, तथापि अङ्गुष्ठमात्र इति विशिष्योक्तिबललभ्यपरिमाणान्तर-व्यवच्छेदस्याऽसम्भव एवेति चेत्, न हृद्यवकाशेऽभिव्यक्तस्य परमात्मनोऽङ्गुष्ठमितत्वेन तथो-पासनायैव श्रुतावङ्गुष्ठमात्रत्वस्योक्तत्वेन परिमाणान्तरव्यवच्छेदाभिप्रायकल्पनायोगात् । यद्यपि इतरप्राणिनामङ्गुष्ठाभावः, तथापि मनुष्याणामेव वेदविद्याधिकारात् तान्प्रत्यङ्गुष्ठमात्रत्वोक्ति-र्युक्ता । तस्मादीशानो विष्णुरेवेति ईशानपदोक्तगुणवत्त्वं, जिज्ञास्यत्वं च तस्यैवेति सिद्धम् ।

## वाक्यार्थमुक्तावली

**तथापीति** ॥ प्राणव्यवस्थापकत्वादिलिङ्गाविरोधेऽपीत्यर्थः ॥ **सर्वगतत्वादिति** ॥ अदृश्य-

(वाक्यार्थमुक्तावली)

त्वाधिकरणे नित्यं विभुं सर्वगतं सुसूक्ष्ममितिपदेन महत्वोक्तेरिति भावः । अर्भकौकस्त्वसूत्रेण अस्याः शङ्काया गतत्वमाशङ्क्य निषेधति ॥ **न च वक्तव्यमिति** ॥ यद्यपि तत्र सर्वगतस्यापि व्योमदृष्टान्तेनाल्पस्थानगतत्वमुक्तम् । नत्वणुत्वम् । तथाप्यल्पस्थानस्थित्या अणुत्वं लभ्यत इति भावेन अणुत्वं प्रत्यपादि प्रतिपादितमित्युक्तम् । अत एवानुव्याख्याने वैशेषिकाधिकरणे 'महतोऽल्पत्वमपि च व्योमवत्प्राह वेदवित्' इत्युक्तम् । अथवा अल्पश्रुतेरिति चेत्तदुक्तमित्यनेन गतार्थतां परिहरति न च वक्तव्यमिति । अत्र व्योमवदिति सर्वगतत्वे दृष्टान्तः । तथा च व्योमवत्सर्वगतस्यापि महत्वाविरोधेन एषमात्माऽन्तर्हृदये ज्यायानिति श्रुत्युदाहरणपूर्वम् अचिन्त्यशक्त्या हृद्गतभगवदशंस्यैवाणुत्वं प्रत्यपादीत्यर्थः ॥ **तन्मात्रत्वोक्तेरिति** ॥ यद्यप्यत्र नायं मात्रशब्दोऽवधारणार्थः किं तु परिणामे । दघ्नच् मात्रच् इति परिमाणार्थो मात्रप्रत्ययः । देहाङ्गुष्ठमितो देहे जीवाङ्गुष्ठमितो हृदि इति स्मृतौ मित इति परिमाणस्यैवोक्तेः । अङ्गुष्ठ-परिमाणत्वं च सर्वगतस्यापि व्योमवत्सम्भवतीति पुनस्तन्निवृत्तिरिति शक्यते वक्तुम् । तथापि अङ्गुष्ठमात्रवाक्ये मध्य आत्मनि हृदीति स्मृतावपि हृदीत्यादिश्रवणात् तदनुसारेण मात्रपद-स्यावधारणार्थकत्वस्य विवक्षणीयत्वादियमुक्तिरूपपद्यत इति ज्ञेयम् ॥ **भगवन्मूर्तिविशेषस्येति** ॥ उपास्त्यर्थमिति शेषः । तन्मात्रपरिमाणत्वात् तन्मात्रपरिमाणस्योपास्तिविषयत्वात् । अथवा उपास्तेः तन्मात्रपरिमाणविषयत्वादित्यर्थः । तदुक्तं सत्तर्कदीपावल्याम् । हृदयाकाशोऽङ्गुष्ठ-परिमाणत्वेन वामनोपास्तिं विदधातुमङ्गुष्ठपरिमाणत्वं वामनश्रुत्योक्तमित्यर्थ इति । केचित् शक्त्यात्मनाऽपरिमितापरिमाणस्यापि रूपविशेषस्य व्यक्त्यात्मनाङ्गुष्ठपरिमाणोक्तिरिति भाव-माहुः । पूर्वमङ्गुष्ठमात्रत्वं मुख्यमित्युक्तम् । इदानीमङ्गुष्ठमात्रत्वोक्तिरौपचारिकीत्याह ॥ **भिन्नेष्वपीति** ॥ यथा गावः सायं गोष्ठ एकीभवन्ति परेऽव्यये सर्व एकीभवन्तीत्यादौ स्थानै-क्येन तद्गतेष्वैक्याभावेऽपि ऐक्योक्तिस्तथेत्यर्थः । एतेन वैश्वानरनये श्रुतं प्रादेशमात्रत्वमपि समाहितं बोध्यम् । नन्वीश्वरे कथं लक्षणा एता वृत्तयो लोके । हरौ तु महारूढो योगश्चेति वक्ष्यमाणत्वादिति चेन्न । तस्य महायोगमहारूढ्योर्लोके नावकाशः किन्तु सत्यवृत्तीनामेव हरौ तु तदसाधारणपरमित्येवम्परत्वात् ।

रूढियोगौ विना कश्चिन्नैवार्थो वेदगो भवेदिति कर्मनिर्णय(टीकाया)वाक्यस्य वैदिक-पदरूढियोगौ विहाय केवलवृत्यन्तरनिषेधपरत्वात् । अत एव न स्थानतोऽपीत्यधिकरणभाष्ये

(वाक्यार्थमुक्तावली)

अभेदेऽपि भेदव्यपदेशः स्थानभेदादैश्वर्याच्च युज्यत इत्यत्रैश्वर्यादचिन्त्यशक्तिघटितविशेष-विषयतया भेदव्यपदेशस्य मुख्यार्थत्वमविहायैव स्थानभेदादिति लक्षणोक्तिति ज्ञेयम् । उक्तं च कर्मनिर्णयटीकायाम् अङ्गुष्ठमात्रश्रुतिमेवोपादायेश्वरे लाक्षणिकार्थत्वम् । अस्तु तर्हि ईश्वरे गौणाद्यभावपरमेतदिति चेन्न । अङ्गुष्ठमात्रश्रुतेः सुषिरश्रुतेश्चेश्वर एव लाक्षणिकत्वेनोक्तत्वात् ॥ **प्राङ्गवदिति** ॥ सर्वं खल्विदं ब्रह्म इति श्रुतेः गौणार्थत्वेन स्वीकृतत्वादिति ॥ **वैयर्थ्यादिति** ॥ अङ्गुष्ठव्यक्तिविशेषनिर्धारणं विना यत्किञ्चिदङ्गुष्ठमात्रत्वेनोपासनायाः कर्तुमशक्यत्वेन वैयर्थ्या-दित्यर्थः ॥ **असम्भवादिति** ॥ पिपीलिकाहृदयस्थे अङ्गुष्ठमात्रसामान्यस्याप्यसम्भवादित्यर्थः । सूत्रभाष्ययोः मनुष्यपदं तन्मात्रपरमित्याह ॥ **मनुष्याणामेवेति** ॥ जरितर्यादीना-मुपास्त्यभावमुत्तरत्र प्रतिपादयिष्यामः । पूर्वं सौत्रं 'तु' शब्द एवार्थो व्याख्यातः इदानीमङ्गुष्ठा-भावेऽपीति भाष्यानुसारादपिशब्दार्थतया व्याचष्टे **तुशब्द इति** ॥ अनेन तुशब्दस्य तथापीत्यर्थ-कस्य मनुष्याधिकारत्वादित्युत्तरवाक्यशेषत्वमपीत्युक्तम् भवति । सूत्रे हृदीति निर्देशाद्योग्य-तयाङ्गुष्ठमात्र इत्यन्वेति । तदित्यस्ति । तुशब्दोऽवधारणेऽप्यर्थे च ॥ **हृदीति** ॥ सप्तमी-निर्देशात्तत्रस्थाकाश उच्यते । हृदि विद्यमानस्याङ्गुष्ठमात्रत्वेन तत्र तन्मात्रपरिमाणतया मूर्ति-विशेषस्योपास्तिविषयत्वेन तदपेक्षयेति मुख्यार्थतया वा हृद्गताकाशस्याङ्गुष्ठमात्रत्वेन तदपेक्षयैव न स्वत इति तद्गते श्रुतेर्लाक्षणिकतया वा ब्रह्माख्यः पुरुषोऽङ्गुष्ठमात्र उच्यते । पश्वादीना-मङ्गुष्ठाभावात् कथं तद्धृद्गतस्य तत्वमित्यत उक्तं **मनुष्येति** ॥ तु अपि । पश्वादीनामङ्गुष्ठा-भावेऽपि अङ्गुष्ठमात्रविद्याया मनुष्याधिकारत्वात् । अङ्गुष्ठमात्रः पुरुष इत्युक्तमित्यर्थः । अत्राद्ये स्वपक्षसाधकोक्तिः द्वितीये बाधकोद्धार इति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

**अङ्गुष्ठमात्र इतीति** ॥ मात्रपदेन अधिकपरिमाणराहित्यमुक्तं तच्च विष्णौ श्रुत्यादि-विरुद्धमिति भावः । पूर्वं मूर्तिविशेषस्य व्यक्तात्मनोऽङ्गुष्ठमात्रत्वमभ्युपेत्य अङ्गुष्ठमात्रत्वं मुख्य-मित्युक्तम् । इदानीमङ्गुष्ठमात्रत्वोक्तिः औपचारिकीत्याह ॥ **भिन्नेष्वपीति** । **तत्कथन-वैय्यर्थ्यादिति** ॥ अङ्गुष्ठव्यक्तिविशेषनिर्धारणं विना यत्किञ्चिदङ्गुष्ठमात्रत्वेन उपासकानाम-सम्भवात्कथनं व्यर्थमित्यर्थः ॥ **असम्भवाच्चेति** ॥ पिपीलिकाहृदयस्थे अङ्गुष्ठमात्रसामान्यस्यापि असम्भवादित्यर्थः । पूर्वं सौत्रः 'तु' शब्द एवकारार्थो व्याख्यातः इदानीमङ्गुष्ठाभावोऽपीति

(तत्त्वसुबोधिनी)
भाष्यानुसारात् अपिशब्दार्थतया व्याचष्टे ।। **तुशब्दोऽपिशब्दार्थ इति** ।। अनेन तुशब्दस्य तथापीत्यर्थकस्य मनुष्याधिकारत्वादित्युत्तरवाक्यशेषत्वमपीत्युक्तं भवति । अत्राद्ये स्वपक्ष-साधकोक्तिः । द्वितीये बाधकोद्धारः । इति सूत्रक्रमः ।।

## वाक्यार्थमञ्जरी

**प्रत्यपादि** प्रतिपादितम् । हृदयस्थाकाशापेक्षयैव ब्रह्माङ्गुष्ठपरिमितमुच्यते न तु स्वतः । पश्वादीनामङ्गुष्ठाभावात्कथं तद्धृदयगतस्याङ्गुष्ठपरिमितत्वमित्यत आह ।। **मनुष्याधिकारत्वादिति** ।। पश्वादीनामङ्गुष्ठाभावेऽपि अङ्गुष्ठमात्र इति विद्यायां मनुष्याधिकारत्वादङ्गुष्ठमात्र इति युक्तमित्यर्थः । पूर्वं मूर्तिविशेषस्य व्यक्त्यात्मनोऽङ्गुष्ठमात्रत्वमभ्युपेत्याङ्गुष्ठमात्रत्वं मुख्य इत्युक्तम् । इदानीमङ्गुष्ठमात्रोक्तिरौपचारिकीत्याह ।। **भिन्नेष्वपीति** ।। सायं गोष्ठे सर्वे एकीभवन्तीत्यादावित्यर्थः । न चैवं श्रुतेरुपचरितार्थवर्णने वेदवाक्यस्य वाचनिकार्थं विना नैवान्यो युज्यत इति कर्मनिर्णयवाक्यविरोध इति वाच्यम् । 'स्वातन्त्र्ये च विशिष्टत्वे स्थान-मत्यैक्ययोरपि सादृश्ये चैक्यवाक् सम्यक् सावकाशा यथेष्टतः' इत्यनुव्याख्याने भगवत्पादैरेव श्रुतेर्गौणार्थत्वोक्तेः कर्मनिर्णयवाक्यं तु तट्टीकायामेव सम्यग्व्याख्यातमिति भावः ।। **कथन-वैयर्थ्यादिति** ।। अङ्गुष्ठव्यक्तिविशेषनिर्धारणं विना यत्किञ्चिदङ्गुष्ठमात्रत्वे नोपासनायाः असम्भवात्कथनं व्यर्थमित्यर्थः ।। **असम्भवाच्चेति** ।। पिपीलिकाहृदयस्थेऽङ्गुष्ठमात्रत्व-सामान्यस्यैवासम्भवादित्यर्थः । पूर्वं सौत्रः तुशब्दो हृद्यवकाशापेक्षयेति भाष्यानुसारादेवार्थो व्याख्यातः । इदानीमङ्गुष्ठाभावेऽपीति भाष्यानुसारादप्यर्थतयापि व्याचष्टे ।। **तुशब्द इति** ।।

।। इति वामनाधिकरणम् ।।

# ८. देवताधिकरणम्

## सूत्रभाष्यम्

मनुष्याणामेव वेदविद्या(याम)धिकार इत्युक्तम् । तिर्यगाद्यपेक्षयैव मनुष्यत्व-विशेषणमुक्तं, न तु देवाद्यपेक्षयेत्याह–

**॥ ॐ तदुपर्यपि बादरायणः सम्भवात् ॐ ॥ २६ ॥**

तदुपरि मनुष्याणां सतां देवादित्वप्राप्त्युपरि । सम्भवति हि तेषां विशिष्टबुद्ध्यादि-भावात् । तिर्यगादीनां तदभावादभावः । तेषामपि यत्र विशिष्टबुद्ध्यादिभावस्तत्राविरोधः । निषेधाभावात् । दृश्यन्ते हि जरितार्यादयः ॥

## सत्तर्कदीपावली

अत्र मनुष्याधिकारत्वादित्युक्तेऽप्यर्थित्वसामर्थ्यादिमत्वेन देवादीनां वेदोक्तब्रह्मोपासनाधि-कारसम्भवान्मध्ये वामनमासीनमित्यादिश्रुत्युक्तत्वाच्च नात्राधिकारस्तेषां वार्यः । इदानीन्तन-देवानामुत्पत्तिमत्वादुत्पत्तेः प्राक् 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यादिशास्त्रं कथं तानधिकरोति कथं च तदुद्देशेन हविर्दानं तदानीमिति नाशङ्कनीयम् । 'यत्र पूर्वे साध्या सन्ति देवा' इति पूर्वमपि देवतान्तरसद्भावश्रुतिविरोधात् । तदाह मनुष्याणां सतां देवादित्वप्राप्त्युपरीत्यस्य देवादिपदयोग्यानां मनुष्यादीनां तत्तत्साधनानुष्ठानेन देवादिपदप्राप्तेः उपर्यपि वेदोक्तब्रह्मोपासनाधिकारोऽस्तीत्यर्थः । तिर्यगादीनामित्यत्रादिशब्देन स्थावरग्रहणम् । दृश्यन्ते हि जातिस्मरणयोगात्सूक्तद्रष्टृत्वेन भारतादिषु जरितार्यादयः पक्षिणः । अतो मनुष्येभ्योऽन्योऽपि वेदोक्तब्रह्मोपासनाधिकारिदेवताङ्गीकारो न घटते । वेदानां नित्यत्वाद्देवानां विनाशित्वात् ।

## तत्त्वप्रदीपिका

अथेदानीं प्रसङ्गादधिकारचिन्ता क्रियते । तिर्यगादिव्यावृत्त्यपेक्षयैव मनुष्यत्वविशेषण-मुक्तम् । न तु देवादिव्यावृत्त्यपेक्षयाऽपीति मन्तव्यम् । न ह्यत्र मनुष्यशब्देन मनुष्यमात्रविवक्षा । मर्त्योत्तमानामपि साधकानां मननादिशीलानां मनुष्यत्वात् । अत एव हि तदुपरीति सूत्रपदं मनुष्यत्वादुपरीति व्याचष्टे । 'तदुपर्यपि बादरायणस्सम्भवात्' । साधकानां सताम् इन्द्रादि-

(तत्त्वप्रदीपिका)
पदयोग्यानां स्वपदप्राप्तिकारणभूतविद्याकर्मसामग्रीयोगेन तत्तत्प्रदप्राप्तेरुपरितनकालेऽपि वेद-विद्यायामधिकारोऽस्तीति भगवान्बादरायणो वक्ति । तदधिकारसन्देहापोहतात्पर्यज्ञापनार्थ-मधिकाराधिक्यज्ञप्तिदाढर्यार्थं च वादरायणः स्वयमेव वक्तीत्याह । ननु नैवं भाष्यकार आह । सत्यम् । अनुक्तोऽपि तदभिप्रायो वर्ण्यते । सूत्रसिद्धं हि वादरायणपदम् । 'यत्रानवसरोऽन्यत्र' इत्युक्तन्यायसिद्धं वक्तिपदम् । नहि महतामतिस्पष्टार्थव्याख्यानचापलशीलता भवति । सर्वत्र चानुसन्धेयोऽयं न्यायः यत्र सूत्रपदानि मुखतः सिद्धार्थानि । तिर्यगादीनां तेषामपीत्यादिरपि-पदव्याख्या । तेषां मध्येऽपि येषु विशिष्टबुद्धिवागादिभावस्तेष्वविरोधो विशेपलक्षणभावे निषेधाभावात् । दृश्यन्ते हि जरितार्यादयस्तिर्यञ्चोऽपि 'अयमग्ने जरिता' इत्यादिसूक्तद्रष्टारः ॥

## तत्त्वप्रकाशिका

अत्र देवानां ब्रह्मविद्याऽधिकारसमर्थनादस्ति शास्त्रसङ्गतिः । प्रासङ्गिकत्वान्नाध्यायादि-सङ्गतिर्गवेषणीया । श्रुत्यादिसङ्गतिं विषयसंशयतद्वीजानि सूचयति ॥ **मनुष्याणामिति** ॥ 'मनुष्याधिकारत्वात्' इति मनुष्याणामेव वेदविद्याधिकार इत्युक्तम् । स च यदि न देवानां स्यात्तदा 'विश्वेदेवा उपासते' इत्यादि श्रुत्यप्रामाण्यं प्रसज्येत इत्यवश्यं विचार्यः । स वेदविद्याधिकारो विषयः । देवानामस्ति न वेति सन्देहः । मनुष्याणामेवेत्युक्तिर्विश्वेदेवा उपासत इति श्रुतिश्च सन्देहवीजमिति भावः । न च श्रुत्युक्त्योरसाम्यादसन्देहवीजत्वम् । उक्तेरप्यङ्गुष्ठमात्रश्रुतिमूलत्वात् । न देवानां वेदविद्याधिकार इति पूर्वः पक्षः । तथाहि । किं देवा अनादिनित्या उत विद्यादिना पदप्राप्तिमुक्तिमन्तः । आद्ये न वेदविद्याधिकारः । अर्थी समर्थो विद्वानधिक्रियत इति न्यायात् । तेषां चार्थित्वाभावात् । न ह्यनादितः प्राप्तपदानां मोक्षशून्यानां च विद्याभिः प्रयोजनमस्ति येनार्थिता स्यात् । न द्वितीयः । अमराणां मुक्त्याद्यङ्गीकारे कर्मादिविरोधापातात् । अतो देवानां वेदविद्याधिकाराभावान्न तदुपास्यत्वलिङ्गं विष्णोः सम्भवति । अथ सन्देहवीजं विघटयन् सिद्धान्तयितुं सूत्रमवतारयति ॥ **तिर्यगादीति** ॥ मनुष्यपदं विशिष्टबुद्ध्यादिरहिततिर्यगादिव्यावृत्त्यर्थं प्रयुक्तं न तु देवतादिव्यावृत्त्यर्थमित्यभिप्रेत्य देवानामधिकारमाहाऽऽचार्यो वादरायण इत्यर्थः । सूत्रं व्याचष्टे ॥ **तदिति** ॥ देवानामपि वेदविद्याधिकारो विद्यत एव । विशिष्टबुद्ध्यादेरधिकारोपयोगिनो देवेषु विद्यमानत्वेन तेषामधिकारसम्भवात् । न चोक्तप्रकारेण देवानामर्थित्वाभावात्सामर्थ्यविद्वत्तासत्त्वेऽप्यधि-काराभाव इति वाच्यम् । विद्याकर्मभ्यां योग्यमनुष्याणां देवादित्वप्राप्त्यभ्युपगमेन विद्याभिस्तेषां मोक्षसिद्धेरिति भगवान् वादरायणो मन्यत इत्यर्थः । विप्रतिपत्तिसूचनाय वादरायणपदम् । न

(तत्त्वप्रकाशिका)

देवा वेदविद्याधिकारिणोऽमनुष्यत्वात्तिर्यगादिवदित्यत आह ।। **तिर्यगादीनामिति** ।। न तिर्यगादीनाममनुष्यत्वप्रयुक्तोऽधिकाराभावोऽपि तु विशिष्टबुद्ध्यादिराहित्यनिबन्धन एव । तथा च विशिष्टबुद्ध्यादिराहित्यं व्यावर्तमानं पक्षात्स्वव्याप्यमधिकाराभावं च व्यावर्तयतीति भावः । विशिष्टबुद्ध्यादिमतामपि तिरश्चां न वेदविद्याधिकार इति व्याप्तिविधुरोऽयमुपाधिरित्यत आह ।। **तेषामिति** ।। अविरोधोऽधिकाराङ्गीकारेऽपीति शेषः । कथं तिरश्चां वेदविद्याधिकाराविरोध इति चेत् । किं निषेधात्तिरश्चामधिकारायोगोऽदर्शनाद्वा । आद्यं दूषयति ।। **निषेधेति** ।। अनेन निषेधराहित्ये सति विशिष्टबुद्ध्यादिमत्त्वमधिकारे प्रयोजकमिति सूचितं भवति । तेन शूद्रादौ व्यभिचारपरिहारः । द्वितीयं निराह ।। **दृश्यन्ते हीति** ।। वेदाधिकारितयेति शेषः । अनेनैव स्वप्रयुक्तानुमानस्य मनुष्यत्वोपाधिरप्यपोढो भवति ।।

## गुर्वर्थदीपिका

योग्यमनुष्याणामित्यत्र देवतापदयोग्यानां कर्मवशान्मनुष्यजन्मसु जातानामित्यर्थः । विप्रतिपत्तिसूचनायेत्यत्र जैमिनिः प्रकारान्तरेण वक्ष्यतीति विप्रतिपत्तिसूचनाय बादरायणपदमित्यर्थः । विविधा प्रतिपत्तिः विप्रतिपत्तिः न तु विरुद्धा प्रतिपत्तिः । व्यासजैमिनिमतयोर्विरोधाभावात् । दैवतानि प्रथमानि मुख्यानि धर्माणि लोकधारकाणि आसन्नित्यस्य प्रतिपदव्याख्यानम् ।

## भावबोधः

**प्रासङ्गिकत्वादिति** ।। मनुष्याधिकरत्वादित्यनेन देवाद्यधिकारादेः स्मारितत्वादिति भावः । ननु स्मृतस्योपेक्षानर्हत्वं प्रसङ्गसङ्गतिः । तथापि कथमस्य उपेक्षानर्हत्वमित्यतस्तत्प्रदर्शनपरत्वेन मनुष्याणामेवेति भाष्यं व्याचष्टे ।। **मनुष्याधिकारत्वादिति** ।। यद्यपि तृतीयाध्याये 'असार्वत्रिकी' इत्यादावपरोक्षज्ञाने देवादीनामधिकारसदसद्भावचिन्तावदियमपि चिन्ता तत्रैव कर्तव्या । तथापि पूर्वाधिकरणस्थमनुष्यग्रहणस्य विशिष्टबुद्ध्यादिहीनतिर्यगाद्येव व्यावर्त्यं; न तु देवादीत्यनेन रूपेणेयं चिन्ता न तृतीये सङ्गता । किन्त्वत्रैव । यथा 'भोक्त्रापत्तेः' इति मुक्तेशयोर्भेदसमर्थनं फलविचाररूपेण चतुर्थसङ्गतमपि युक्तिविरोधपरिहाररूपेण द्वितीये सङ्गतं तद्वदिति भावः । 'उपासत' इत्यादीति 'आदि'पदेन 'तं भूतिरिति देवा उपासाञ्चक्रिरे' इत्यादिग्रहणम् ।। **देवानामिति** ।। अत्र देवानां ब्रह्मविद्यायामधिकारो नास्त्युतास्तीति चिन्ता ।

(भावबोधः)

तदर्थं वेदविद्याधिकारप्रयोजकं किं मनुष्यत्वमुत विशिष्टबुद्ध्यादिमत्त्वमिति । तदर्थं विशिष्ट-बुद्ध्यादिमत्त्वस्याधिकारप्रयोजकत्वेऽपि देवानां किं मोक्षाद्यर्थिता न युक्ता उत युक्तेति । तदर्थं ब्रह्मादिदेवतापदस्याद्यन्तवत्त्वे पूर्वोत्तरकालयोर्देवतोद्देशेने क्रियमाणस्य कर्मणो वैयर्थ्यरूपो देवतासत्त्वप्रतिपादकवेदाप्रामाण्यरूपविरोधः प्राप्नोत्युत न प्राप्नोतीति । तदर्थं देवाः किमेकैक-व्यक्तिकाः किं वानाद्यनन्तकालेषु प्रवाहतोऽनेकव्यक्तिका इति । तदर्थमनेकव्यक्तिकत्वेऽपि देवतापदस्थानां प्रतिकल्पं किं भिन्नभिन्ननामरूपवत्त्वमुत सर्वेषु कल्पेषु समाननामरूपवत्त्व-मेवेति । तदर्थं समाननामरूपविशिष्टदेवतापदस्यानादिनित्यत्वे प्रमाणं नास्त्युतास्तीति । मनुष्याणामेवेत्युक्तिरिति । पूर्वाधिकरणे सूत्रभाष्ययोर्मनुष्याधिकारत्वादित्यत्र बुद्ध्यादिविवेकेन मनुष्याणामेवाधिकारित्वादित्यभिप्रेतम् । अन्यथा तथापि नाङ्गुष्ठमात्रत्वं विष्णोरिति शङ्का-परिहारत्वं न स्यात् । अत एवात्र भाष्ये मनुष्याणामेवेत्युक्तमिति भावः । अत एव पूर्वाधिकरणे टीकायां मनुष्याणामेव वेदविद्योपासनेत्युक्तम् । न तदुपास्यत्वलिङ्गं विष्णोः सम्भवतीति । तथा च पूर्वाधिकरणे पूर्वपक्षप्रापकलिङ्गस्य विष्णाववकाशोक्तिर्न सम्भवतीति भावः । 'दैवैरपि ज्ञेयो न वेदैः' इति संक्षेपोऽप्यधिकरणतात्पर्यप्रदर्शनपरः न फलितलिङ्गसमन्वयप्रदर्शनपर इति ज्ञातव्यम् । सन्देहबीजं विघटयन्निति । तिर्यगाद्यपेक्षयैवेत्यादिभाष्येण मनुष्याणामेवेत्यन्ययोग-व्यवच्छेदपरैवकारव्यावर्त्यविवेककथनेन सावधारणोक्तेर्देवानामधिकाराभावरूपशङ्काद्युप-स्थापकत्वाभावोक्तेरिति भावः । तिर्यगाद्यपेक्षयेति भाष्यार्थस्य सूत्रे कण्ठतोऽनुक्तेराह ॥ **मनुष्यपदमिति** ॥ अत एवोक्तमभिप्रेत्येति ॥ **विद्याभिस्तेषां मोक्षसिद्धेरिति** ॥ देवादिपदस्य सादित्वाभ्युपगमे अर्थात् सान्तत्वस्याप्यङ्गीकृतत्वादिति भावः । 'मध्वादिषु' इति वक्ष्यमाण-भाष्याभिप्रायेणोक्तम् ॥ **विप्रतिपत्तिसूचनायेति** ॥ **व्यभिचारपरिहार इति** ॥ शूद्रादावधिकारा-भावरूपसाध्यस्य सत्त्वेऽपि विशेषणाभावप्रयुक्तविशिष्टाभावरूपोपाधेरपि निषेधविषयशूद्रादौ सत्त्वेन न व्यभिचार इत्यर्थः । वेदाधिकारितयेति शेष इति ।

एवमुक्तो भ्रातृभिस्तु जरितारिर्विभावसुम् ।
तुष्टाव प्राञ्जलिर्भूत्वा यत्तच्छृणु नराधिपः ॥

इत्यादिभारतवचनैर्जरितारिसारिसृक्कस्तम्बमित्रद्रोणाख्यानां चतुर्णां पक्षिणाम् 'अयमग्ने जरिता' इत्याग्नेयसूक्तेनाग्निस्तावकत्वेन तन्मन्त्रद्रष्टृत्वस्य प्रसिद्धत्वादिति भावः । अनेनैव

(भाववोधः)
स्वप्रयुक्तानुमानस्येति । मनुष्यादीनां जरितार्यादीनां वेदविद्याधिकारप्रदर्शनेनैव 'सम्भवति हि तेषां विशिष्टबुद्ध्यादि' इति स्वप्रयुक्तस्य देवा विद्याधिकारिणो निषेधरहितत्वे सति विशिष्टबुद्ध्यादिमत्त्वाद्योग्यत्रैवर्णिकवदित्यनुमानस्येत्यर्थः । उपाधेः साध्याव्यापकत्वादिति भावः ।

## भावदीपः

**अधिकारेति** ।। योग्यतेत्यर्थः ।। **प्रासङ्गिकत्वादिति** ।। मनुष्येत्युक्त्या तिर्यगादिवद्देवानामपि नेति प्रसक्तस्य निवृत्त्यर्थत्वादित्यर्थः । 'अधिकारश्च तद्धानिः प्रसङ्गादेव चिन्तितौ' इत्यनुभाष्योक्तेरिति भावः ।। **नाध्यायादीति** ।। साक्षादिति भावः । फलतस्तस्य सत्त्वात् । सङ्गतिपरत्वेन भाष्यं व्याचष्टे ।। **मनुष्येति** ।। मनुष्यपदस्य मनुष्यमात्रपरत्वेन व्याख्यानादाह ।। **मनुष्याणामेवेति** ।। तिर्यगादीत्यादेस्तात्पर्यं स चेति ।। **श्रुतीति** ।। एतेनास्य पूर्वेणाक्षेपिकी सङ्गतिर्दर्शिता । तदुपरीति सौत्रोक्तिसूचितसादित्वव्यावर्त्ययुक्तिं वक्तुं विकल्पयति ।। **किमिति** ।। विद्यादिना विद्याकर्मभ्याम् । विरोधः कर्मणीति सूत्रभाष्योक्तमाह ।। **अमराणामिति** ।। **मुक्तीति** ।। पदप्राप्तेरप्युपलक्षणम् । क्वचिन्मुक्त्यादीत्येव पाठः । इन्द्रादिपदप्राप्तेः पूर्वं पश्चाच्चेन्द्रादिदेवताभावेन तदुद्देशेन द्रव्यत्यागात्मकयागायोगादित्यर्थः । वक्ष्यमाणशब्दविरोध आदिपदार्थः । अमराणामित्युक्त्या तेषां मरणवर्जितत्वप्रसिद्धेर्मुक्त्यङ्गीकारोऽनुचित इति सूचयति । फलोक्त्योपसंहरति ।। **अत इति** ।। अनित्यत्वे कर्मादिविरोधेनानादिनित्यत्वाङ्गीकारेऽर्थित्वादेरसम्भवादित्यर्थः ।। **न तदुपास्यत्वलिङ्गं विष्णोस्सम्भवतीति** ।। न चेष्टापत्तिः । श्रुत्यप्रामाण्यापत्तेरुक्तत्वादिति भावः । लिङ्गपदोक्त्या न प्रासङ्गिकत्वमेव किं तर्हि अत्र देवानामधिकारसिद्धौ तदुपास्यत्वरूपलिङ्गसमन्वयस्यापि सिद्ध्या अन्तर्नयवैश्वानरनययोरिव फलतोऽध्यायपादसङ्गतिरप्यस्तीति सूचितम् । प्रसङ्गादेव चिन्तितावित्यनुभाष्योक्तिः तमेव समन्वयं प्रकटयति समस्तेनाध्यायेन प्रायेणेत्येतद्भाष्योक्तिश्च साक्षात्समन्वयानुक्त्यभिप्रायेति भावः ।।

अथ देवानामधिकारसद्भावरूपमर्थान्तरं साधयितुमित्यथशब्दस्य प्रकृतादनधिकारादर्थान्तरपरत्वमर्थः । मनुष्याधिकारेत्युक्तिरूपसंशयबीजविघटनप्रकारमेव भाष्यव्याख्यानेन व्यनक्ति ।। **मनुष्येति** ।। ननु मनुष्येत्युक्त्या तद्भिन्नामनुष्यमात्रव्यावृत्तिप्रतीतेः कथं तिर्यगित्युक्तिरित्यतः सूत्रे मनुष्यत्वं व्यावर्तकत्वेन न विवक्षितं किन्तु विशिष्टबुद्ध्यादिमत्त्वमेव विवक्षितमिति भावेनोक्तम् ।। **विशिष्टबुद्धीति** ।। यद्वा तिर्यगाद्यपेक्षयेत्युक्तिः तेषामपीत्यग्रेतन-

(भावदीपः)

वाक्यविरुद्धेत्यत उक्तम् ॥ **विशिष्टेति** ॥ न सर्वतिर्यगाद्यपेक्षयेत्यर्थः । पूर्वस्माद् बुद्ध्या विभागेनाधिकारपदमनुवर्त्य सम्भवति तेषामिति भाष्यार्थमाह ॥ **देवानामिति** ॥ विशिष्टेत्यादिभाष्यं व्याकुर्वन् तेषां सम्भवतीत्येतद्धेतुगर्भतयाऽपि व्याचष्टे ॥ **विशिष्टेति** ॥ तदुपरीत्यादिभाष्यं शङ्कानिरासकतया व्यनक्ति ॥ **न चेति** ॥ न हि अनादित इत्यादिनोक्तत्यर्थः ॥ **योग्येति** ॥ देवतापदयोग्यानां मनुष्यत्वेन भूमौ जातानामित्यर्थः ॥ **मोक्षेति** ॥ विद्याकर्मभ्यां देवत्वप्राप्त्युक्त्या सादित्वस्य तद्व्याप्तसान्तत्वस्यापि लब्धत्वादिति भावः ॥ **विप्रतिपत्तीति** ॥ अनधिकारं जैमिनिरित्यनेनेत्यर्थः । देवानामधिकारो विद्यते विशिष्टबुद्ध्यादिमत्त्वात् सम्मतवदिति स्वप्रयुक्तानुमाने प्रतिपक्षमाशङ्कते ॥ **न देवा इति** ॥ **अपि तु विशिष्टेति** ॥ प्रतिपक्षे प्रतिपक्षान्तरवत् उपाधिरपि न वाच्य इति कस्यचिदुक्तिर्नादर्तव्या । हेतोर्व्यभिचारव्याप्यत्वासिद्ध्याश्रयेण तदुक्तिसम्भवादिति भावः ॥ **अयमुपाधिरिति** ॥ विशिष्टबुद्ध्यादिराहित्यरूपः ॥ **तेन शूद्रादाविति** ॥ सम्भवति हि तेषां विशिष्टबुद्ध्यादिभावादित्यत्र स्वप्रयुक्तविशिष्टबुद्ध्यादिमत्त्वरूपहेतोर्वा प्रतिपक्षानुमानेऽभिहितविशिष्टबुद्ध्यादिराहित्यरूपोपाधेर्वेत्यर्थः । शूद्रादेश्चाग्रे निषिद्धत्वं व्यक्तमित्यनिषिद्धत्वे सति विशिष्टबुद्ध्यादिमत्त्वाभावरूपोपाधेः तत्रापि सत्त्वेन न व्यभिचार इति भावः ॥ **वेदाधिकारितयेति** ॥ खाण्डववनस्थानां जरितारिसारिसृक्वस्तम्बमित्रद्रोणाख्यानां चतुर्णां पक्षिण समातृकाणां कृत्स्नवनं परिलेलिहानेन वह्निना स्वदाहप्रसक्तौ भ्रातृभिःप्रार्थितो जरितारिरग्निमयमग्रे जरितेत्यादिमन्त्रैः स्तुत्वा प्रीतेनाग्निना तान्मोचयामासेति । एवमुक्तो भ्रातृभिस्तु जरितारिर्विभावसुम् । तुष्टाव प्राञ्जलिर्भूत्वा यत्तच्छृणुनराधिपेत्यादिना भारते प्रसिद्धत्वादिति भावः ॥ **अनेनैवेति** ॥ जरितार्यादयोऽधिकारितया दृश्यन्त इति वचनेनैवेत्यर्थः । साध्याव्यापकत्वादिति भावः ॥

## अभिनवचन्द्रिका

**अत्र देवानामिति** ॥ यद्यपि मनुष्यपदेन विद्याविशेषाधिकाराभावस्यैव प्राप्तत्वात् तत्रैवाऽधिकारभावः समर्थनीयः, तथापि विद्यामात्रेऽऽनधिकारप्रापकपूर्वपक्षनिरासाय प्रसङ्गात् वेदविद्याधिकारसामान्यसमर्थनमिति बोध्यम् । **नाध्यायादिसङ्गतिर्गवेषणीयेति** ॥ नन्वत्रास्त्येवाऽध्यायसङ्गतिः । देवोपास्यत्वरूपलिङ्गसमन्वयसमर्थनात् । तदुक्तमणुभाष्ये 'उपास्यो दैवतैरपि' इति । टीकायां च 'न तदुपास्यत्वलिङ्गं विष्णोः सम्भवति' इति । किं च

(अभिनवचन्द्रिका)

प्रासङ्गिकत्वान्नाध्यायादिसङ्गतिर्गवेषणीयेत्ययुक्तम् । प्रसङ्गसङ्गतेरन्तर्भावसङ्गत्यविरोधादिति चेत्, उच्यते सत्यमिह देवोपास्यत्वलिङ्गसमन्वयो भवतीति, किं तु न साक्षात्, अपि तु जिज्ञासाधिकरणे जिज्ञासाकर्तव्यत्वसिद्धौ अर्थात् जिज्ञास्यत्वलिङ्गसिद्धिवदिहापि देवानामधिकारसमर्थनेऽर्थात्तदुपास्यत्वमपि सिध्यति । अणुभाष्यन्तु जिज्ञासाधिकरणे 'विष्णुरेव विजिज्ञास्य' इतिवत् इहाप्यार्थिकार्थप्रदर्शनपरम् । यदपि चोक्तप्रसङ्गसङ्गतेः सङ्गत्यन्तराविरोध इति, तत्तथैव । कथं तर्हि 'प्रासङ्गिकत्वान्नाध्यायादिसङ्गतिर्गवेषणीया' इत्युक्तिरिति चेत्, इत्थम् अस्मिन्नधिकरणे नाऽधिकरणान्तरवत् अध्यायपादाभ्यामन्तर्भावलक्षणा सङ्गतिः, किन्तु जिज्ञासाधिकरणवत् आर्थिकार्थमपेक्ष्य । सम्मतं चैतद्भाष्यकारस्य, एतदधिकरणद्वयव्यावृत्तये पादप्रातिपाद्यकथनावसरे प्रायेणेत्यभिधानात् । एवं चासङ्गतं न वक्तव्यमिति शङ्कापरिहारार्थमार्थिकार्थमादाय सङ्गतिव्युत्पादनाय मनःखेदो न कार्यः अनायाससिद्धप्रसङ्गसङ्गतिनिरूपणेनैव शङ्कापरिहारादिति । तदिदमुक्तम् ॥ **न गवेषणीयेति** ॥ अन्यथा नेत्येवाऽवक्ष्यत् । ततश्चैवं योजना प्रसङ्गसङ्गतेर्विद्यमानत्वात् तन्निरूपणेनैवाऽसङ्गतिशङ्कापरिहारात् महता प्रबन्धेन अन्तर्भावलक्षणसङ्गतिगवेषणं न कार्यमिति ॥ **मनुष्याणामेव वेदविद्याधिकार इत्युक्तमिति** ॥ मनुष्याणामिति असाधारण्योक्तिबलात् एवकारार्थो लब्ध इति भावेन मनुष्याणामिवेत्युक्तम् । एतेन सूत्रे मनुष्याधिकारत्वात् इत्येवोक्तत्वात् मनुष्याणामेवेत्युक्तमित्यनुवादो न युक्त इति परास्तम् । अनेनाऽस्याधिकरणस्य पूर्वाधिकरणेन व्याख्यानव्याख्येयभावलक्षणसङ्गतिरित्युक्तं भवति । भाष्ये 'तिर्यगाद्यपेक्षयैव मनुष्यत्वविशेषणं न तु देवाद्यपेक्षयेत्याह' इति अस्याधिकरणस्य तदभिप्रायकथनरूपत्वाभिधानात् । **श्रुत्यप्रामाण्यं प्रसज्जत इति** नन्विदमयुक्तम् । अधिकारशून्यैरपि देवैरुपासनायाः क्रियमाणेन श्रुतेर्विषयबाधशून्यत्वात्, न ह्यनधिकारिण उपासनां न कुर्वन्तीति नियमोऽस्ति । मुक्तैरपि उपासनायाः क्रियमाणत्वादिति चेत्, स्यादयं दोषः यदि सर्वदेवानामनधिकृतोपासने प्रत्यवायहेतौ प्रवृत्तिरुपपद्येत । न चैतत्सम्भवति । लोकेऽपि सतां सद्भे पापकारित्वादर्शनात् । अत एव देवाः स्वोत्तमोपास्यान् गुणान् नोपासते । एवं च 'विश्वेदेवा उपासत' इति श्रुतेः देवोपासनं वाचनिकोऽर्थः । अधिकारत्वादिरार्थिकोऽर्थः । तस्य च बाधात् श्रुत्यप्रामाण्यमवर्जनीयम् । यद्यपि साक्षादेवाऽधिकारप्रतिपादकानि वचनानि सन्ति । तेषामेवाऽप्रामाण्यमापादयितुं शक्यम् । तथापि अङ्गुष्ठविद्यायामेवाऽनधिकार इत्यङ्गीकारेऽपि वेदाप्रामाण्यवर्जनीयमिति तदर्थमप्येतदधिकरणमावश्यकमिति द्योतनाय

(अभिनवचन्द्रिका)

एतद्वाक्याप्रामाण्यमापादितम् ॥ **सवेदविद्याधिकार इति** ॥ अङ्गुष्ठविद्याधिकारो विषय इत्यर्थः । यद्यपि सिद्धान्ते वेदविद्याधिकारमात्रसमर्थनात् वेदविद्याधिकारो विषय इति वक्तव्यम्, तथापि सामान्यस्य विषयत्वे विशेषस्य विषयत्वं न विहन्यते इति तथोक्तम् ॥ **सन्देह इति** ॥ यद्यप्ययं नाऽधिकारमात्रविषयः, तथापि विशेषविषयस्यापि संशयस्यैतदधिकरणनिवर्त्यत्वादुपन्यासः ॥ **किं देवा इति** ॥ देवत्वप्रयोजकं पदं किमनादिनित्यम्, उतोत्पत्तिविनाशवदित्यर्थः । **न ह्यनादितः प्राप्तपदानामिति** ॥ ननु पदस्य विद्याकार्यत्वमस्ति, न वा । नाद्यः देवानामनादिनित्यत्वेन अन्यस्य चायोग्यत्वेन विद्यया कस्यापि पदप्राप्तेरभावात् । न हि कदापि कस्यापि विद्यायाः पदजनकत्वाभावे पदं विद्याकार्यमिति सम्भवति । अतिप्रसङ्गात् । नेतिपक्षे प्राप्तपदानामिति व्यर्थम् । अकामत्वव्युत्पादनाय विद्याफलसिद्धेरेव वक्तव्यत्वादिति चेत्, सत्यम् अकामत्वव्युत्पादनाय विद्याफलसिद्धिरेव वक्तव्येति, उक्ता च विद्याफलसिद्धिः, तथापि विद्याफलं हि द्विविधं मोक्षः, अभ्युदयश्चेति । तत्र न तावत् देवानां मोक्षकामना सम्भवति । तेषां तद्योग्यताविरहात् । न हि सर्वज्ञानामयोग्ये कामना सम्भवतीति सम्भवति । नाप्यभ्युदयकामना सम्भवति । तेषां प्राप्तपदत्वात् । प्राप्तपदानां च सर्वसमृद्धियुक्तत्वात् । न हि सिद्धेऽर्थे कामना सम्भवतीति भावेन 'न ह्यनादितः प्राप्तपदानां मोक्षशून्यानां च विद्याभिः प्रयोजनमस्तीति पूर्वपक्षिणाऽभिधानात् । न द्वितीयः । ननु द्वितीयकल्पदूषणं व्यर्थं, तस्य देवानां वेदविद्याधिकारानापादकत्वेन पूर्वपक्षाविरोधित्वात् । तथाहि पदप्राप्तेः पूर्वं तेषां वेदविद्याधिकारसिद्धावपि तदा तेषामदेवत्वेन देवानां वेदविद्याधिकाराप्राप्तेः । नापि मुक्त्यर्थं वेदविद्याधिकारः सिध्यति । मनुष्यत्वावस्थायामेव मोक्षसाधनस्यानुष्ठितत्वात् । वस्वादिविद्याया मोक्षसाधनत्वात् पदस्य नान्तरीयकत्वात् । उक्तं च पदप्राप्तेः नान्तरीयकफलत्वं 'ऐन्द्रं पदं नान्तरीयं फलं तु हरितोषणमित्यादाविति चेत्, सत्यम्, नायं कल्पोऽधिकारप्रापकः, तथापि देवानामनादिनित्यत्वमिति मन्यमानेन पूर्वपक्षिणा वस्तुस्थितिप्रदर्शनार्थमयं कल्पो दूषितः ॥ **मुक्त्यङ्गीकार इति** ॥ विद्यादिना पदप्राप्तिमुक्तिमन्त इति द्वितीयपक्षाङ्गीकार इत्यर्थः । **कर्मादिविरोधः**, ततः पूर्वं देवताभावेन देवोद्दिष्टकर्मणः तदुपासनायाश्च विरोधः ।

अयं भावः देवास्तावत् इन्द्रादिपदप्रापकयज्ञादिकर्मानुष्ठानेन प्राप्तपदा भवन्तीति वक्तव्यम् । ततः पूर्वं देवताभावेनोद्देश्याभावात् व्यङ्गं कर्म न पदप्राप्त्यादिफलहेतुर्भवति । साङ्गस्यैव कर्मणः

(अभिनवचन्द्रिका)

फलहेतुत्वात् । अन्यथा बाह्यकृतयागस्यापि फलहेतुत्वप्रसङ्गः । एवं च देवानामेव वन्ध्यापुत्रवत् अत्यन्तासत्त्वात् न वेदविद्याधिकार इति । नन्वत्र भाष्यं तिर्यगाद्यपेक्षयैव मनुष्यत्वविशेषणमुक्तं न तु देवाद्यपेक्षयेत्याह' इति, तदयुक्तम् । मनुष्यत्वविशेषणस्य तिर्यगादिप्राप्तिहेतुत्वाभावेन तदपेक्षया तद्विशेषणोपादनायोगात् । 'न तु देवाद्यपेक्षया' इत्यस्याऽप्रसक्तप्रतिषेधत्वाच्च । न हि मनुष्यत्वविशेषणं देवादिप्रापकं येन तदपेक्षया प्रयुक्तमिति सम्भावना स्यात् । 'इत्याह' इत्यस्यान्यथानुवादत्वाच्च । न हि सूत्रे मनुष्यविशेषणकृत्यमुपलभ्यते येनान्यथानुवादो न स्यादित्यत आह ॥ **मनुष्यपदमिति** ॥ मनुष्यपदं विशिष्टबुद्धिमत्परम् । ततश्च तेन विशेषणेन तद्रहिततिर्यगादीनां व्यावृत्तिः न तु देवानामिति भावः ॥ **न चोक्तप्रकारणेति** ॥ अनादितः प्राप्तपदत्वेन नित्यत्वात् मोक्षासम्भवेनाऽर्थित्वाभावात् सामर्थ्यविद्वत्त्वयोः सत्त्वेऽपि अधिकाराभाव इति भावः ॥ **विप्रतिपत्तिसूचनायेति** ॥ ननु विप्रतिपत्तिसूचनाय बादरायणपदमित्ययुक्तम् । तथाहि– विरुद्धा प्रतिपत्तिः विप्रतिपत्तिः । न च जैमिन्यादिप्रतिपत्तिर्बादरायणप्रतिपत्तिविरुद्धा, तथा सति अप्रामाण्यापातात् । न च तदप्रामाण्यमिष्टमिति शक्यते वक्तुम् । जैमिन्यादिमतस्य भगवन्मतैकदेशत्वात् ॥ **तदुक्तम्** ॥

> 'सर्वज्ञस्यैव कृष्णस्य त्वेकदेशविचिन्तितम् ।
> स्वीकृत्य मुनयो ब्रूयुः तन्मतं न विरुध्यते ॥'

इति । 'उक्तफलानधिकारमात्रं जैमिनिमतम्' इत्यादिना अविरोधस्य स्ववचनेनाप्युक्तत्वाच्चेति चेत् ।

> 'मुहूर्तमतुलं ध्यात्वा रामचन्द्रं रमापतिम् ।
> प्रसादमतुलं लब्ध्वा समाधानमहं ब्रुवे ॥

तथा हि न ब्रूमो वयं विरुद्धप्रतिपत्तिसूचनार्थं बादरायणपदमिति । येनोक्तदोषः स्यात् । किं नाम विशिष्टा प्रतिपत्तिः विप्रतिपत्तिः । विप्रतिपत्तिसूचनाय बादरायणपदमिति । तद्यथा महाराजेनायं ममेत्युक्ते तस्य तत्र विशिष्टा प्रतिपत्तिः गम्यत एवमिहापि वक्ष्यमाणजैमिन्यादिमतस्य स्वकीयत्वेऽपि अस्य मतस्य स्वकीयत्वोक्त्या विशिष्टप्रतिपत्तिस्तत्र तस्य ज्ञायते । सर्वनाम्नां भगवन्नामत्वेऽपि शिवादिनाम्नामन्येषां दत्तत्वेन तदपेक्षया नारायणादिनामसु प्रतिपत्तिविशेषवदिति ध्येयम् ॥ **शङ्कते न देवा विद्याधिकारिण इति** ॥ **अपि त्विति** ॥

(अभिनवचन्द्रिका)

अस्यानुमानस्य सोपाधिकत्वेन दुर्बलत्वात् न बाधकत्वमिति भावः । ननु तिरश्चां तावन्नाधिकारः शक्यते वक्तुम् । अङ्गुष्ठाभावात् । ततश्च तत्र सत्यप्यनधिकारे विशिष्टबुध्यादिराहित्याभावात् व्याप्तिविधुरोऽयमुपाधिरिति भावेन शङ्कते ॥ **विशिष्टबुध्यादिमतामपीति** ॥ **अधिकारेऽपीति शेष इति** ॥ भवेदिदं व्याप्तिवैधुर्यमुपाधेः, यदि तिरश्चामधिकारो न स्यात् । न चैवं किं नाम अस्त्येव केषांचित्तिरश्चामधिकारः । न चाङ्गुष्ठाभावविरोधः तद्विद्यायामनधिकारेऽपि विद्यान्तराधिकारादिति भावः । तदुक्तं – 'तेषामपि यत्र विशिष्टबुध्यादिभावः तत्राऽविरोध' इति । यस्यां विद्यायां विशिष्टबुद्ध्यादिभावः तत्राधिकारे विरोधाभावः । यस्यां विद्यायामधिकारे अङ्गुष्ठाभावरूपो विरोधः, न तत्र विशिष्टबुध्यादिमत्त्वमित्यर्थः । ननु तिरश्चां वेदविद्याधिकाराभावावेदकप्रमाणविरोधादधिकारेऽप्यविरोध इत्ययुक्तमिति भावेन शङ्कते – **कथं तिरश्चामिति** ॥ कथमित्याक्षेपे । नन्वधिकाराभावावेदकं प्रमाणमधिकारनिषेधरूप आगमः, किं प्रतियोगिनोऽधिकारस्य निष्प्रमाणकत्वलिङ्गमिति भावेन पृच्छति ॥ **किं निषेधादिति** ॥ **अदर्शनाद्वेति** ॥ प्रमाणेनेति शेषः । एतेन अधिकारस्यायोग्यत्वात् तदनुपलब्धिर्नाऽभावसाधिका । योग्यानुपलब्धेरेवाऽभावसाधकत्वादिति परास्तम् । प्रमाणानुपलब्धेरभावव्याप्यत्वात् ॥ **अधिकारितयेति शेष इति** ॥ 'एवमुक्तो भातृभिस्तु जरितारिर्विभावसुम् । तुष्टाव प्राञ्जलिर्भूत्वा यत्तच्छृणु नराधिप' ॥ इत्यादिना भारते जरितारिसारिसृकस्तंबमित्रद्रोणाख्यानां, चतुर्णां पक्षिणां जरितारेः, 'अयमग्ने जरिता' इत्याग्नेयसूक्तेन अग्निस्तावकत्वोक्तेः तत्रैव 'स्तम्बमित्रस्तपः कुर्यात् द्रोणो ब्रह्मविदुत्तमः' ।

इति द्रोणादेर्ब्रह्मवित्त्वाद्युक्तेश्च । ऋषीनस्मान्बालकान्पालयस्वेति ऋषिशब्देन मन्त्रद्रष्टृत्वोक्तेश्च अधिकारित्वं ज्ञायते इति भावः ॥ **उपाधिरप्यपोढ इति** ॥ जरितर्यादिषु साध्याव्यापकत्वादिति भावः ।

## वाक्यार्थमुक्तावली

॥ **शास्त्रसङ्गतिरिति** ॥ विश्वेदेवा उपासत इति श्रुत्यर्थभूतदेवोपास्यत्वरूपब्रह्मगुणनिर्णयाङ्गन्यायानुसन्धानस्यात्र क्रियमाणत्वादिति भावः ॥ **यथोक्तं दैवतैरपि ज्ञेय इति** ॥ **प्रासङ्गिकत्वादिति** ॥ मनुष्येत्युक्त्या तिर्यगादिवद्देवानामपि नेति स्मारितस्य देवाधिकारा-

(तात्पर्यमुक्तावली)

भावस्यावश्यं निरसनीयत्वेनोपेक्षानर्हत्वात् ॥ स्मृतस्योपेक्षानर्हत्वरूपप्रसङ्गप्राप्तत्वान्नाध्याय-पादान्तर्भावसङ्गतिर्गवेषणीयेत्यर्थः ॥ उपेक्षानर्हत्वमेव प्रकटयितुं भाष्यमवतारयति ॥ **श्रुत्यादीति** ॥ **मनुष्याणामेवेति** ॥ मनुष्याधिकारेत्यत्राधिकारावच्छेदकत्वेन मनुष्यत्वविशेषणस्योपात्त-त्वात्। तस्य चेतरव्यावर्तकत्वादवधारणं लभ्यते । अत एव भाष्ये मनुष्यत्वविशेषणमिति वक्ष्यतीति भावः । भावबोधे तु, एवार्थकतुशब्दस्य बुध्या विवेकेनान्वये मनुष्याणामेवेति लभ्यत इत्युक्तम् ॥ **श्रुत्यप्रामाण्यमिति** ॥ ननु श्रुत्यप्रामाण्यनिरासो द्वितीये सङ्गतः । अधिकरणद्वये क्रियमाणाधिकारचिन्ता चासार्वत्रिकीत्यादौ तृतीये सङ्गता कथमत्र तद्विचार इति चेत् प्रासङ्गिकत्वस्योक्तत्वात् । यथोक्तम् 'अधिकारश्च तद्धानिः प्रसङ्गादेव चिन्तितौ' इति नात्र श्रुत्यप्रामाण्यनिरासे देवाधिकारसमर्थने देवोद्देश्यतात्पर्यं किं तु मनुष्याणामेवाधिकार इत्युक्ते मनुष्यत्वविशेषणेन, विशिष्टबुध्यादिहीनतिर्यगाध्येव व्यावर्त्यं न तु देवादिनापि शूद्रादि-सङ्ग्राह्यम्। तथात्वे 'विश्वेदेवा उपासते' श्रवणे त्रपूजतुभ्यां श्रोत्रपूरणमित्यादिश्रुत्य-प्रामाण्यप्रसङ्गात् । न च तदुचितम् । तथात्वे पूर्वाधिकरणे सर्वदेवोपास्यत्वलिङ्गस्य पूर्वपक्ष-प्रापकस्य सिद्धान्तसावकाशत्वकथनं न स्यादित्येवं रूपेण चिन्तायाः प्रसङ्गप्राप्ताया अत्रैव कर्तव्यत्वे द्वितीयतृतीययोरकर्तव्यत्वात् । यथा भोक्त्रापत्तेरिति मुक्तेशयोर्भेदसमर्थनं फलचिन्ता-रूपेण चतुर्थसङ्गतमपि युक्तिविरोधपरिहाररूपेण द्वितीये सङ्गतं तद्वदिति भावः ॥ **अस्ति न वेति सन्देह इति** ॥ अत्र किं देवानां ब्रह्मविद्याधिकारो नास्त्युतास्तीति चिन्ता । तदर्थं मोक्षार्थिता नास्त्युतास्तीति तदर्थं तत्तत्पदविशिष्टाः देवाः किमनादिनित्याः उताद्यन्तवन्त इति। तदर्थं किमाद्यन्तवतां कर्मशब्दो विरुद्धो न वेति । तदुपरीतिसूचितसादित्वव्यावर्त्ययुक्तिं वक्तुं विकल्पकोटिमुत्थापयति ॥ **किमिति** ॥ विरोधःकर्मणि शब्द इतीति सूत्रोक्तपूर्वपक्षं वक्तुं कोटिमुत्थापयति ॥ **उत विद्यादिनेति** ॥ आदिपदेन कर्म गृह्यते ॥ **अर्थित्वाभावादिति** ॥ कथं तदभाव इत्यतः पदे वा मोक्षे वेति विकल्पं हृदि निधाय दूषयति– **न हीति** ॥ मुक्त्यादीत्यादिपदेन पदप्राप्तिर्गृह्यते कर्मादीत्यादिपदेन शब्दविरोध उच्यते । अमराणां मुक्तिरिति स्वव्याहतिश्च ॥ **न तदुपास्यत्वलिङ्गमिति** ॥ यत्पूर्वाधिकरणे पूर्वपक्षसाधकतयोक्तं लिङ्गं विष्णौ सावकाशमित्युक्तं न तद्युक्तमिति । पूर्वाधिकरणाक्षेपः पूर्वपक्षफलमिति भावः ।

ननु विश्वेदेवा उपासत इत्येतद्विषयीकृत्य देवाधिकारसमर्थनद्वारा देवोपास्यत्वलिङ्ग-

(वाक्यार्थमुक्तावली)

समन्वय एव क्रियत इति किं न स्यात्। दैवतैरपि ज्ञेय इति संक्षेपभाष्योक्तेरिति चेत्। अत्र हि चन्द्रिकायां नाध्यायादिसङ्गतिर्गवेषणीयेति। मुख्यतो विद्याधिकारे न साक्षादध्यायसङ्गति-र्गवेषणीयेत्यर्थः। प्रासङ्गिकसङ्गतेस्तत्रापि चेत्युक्तम्। अतस्तेषां पक्षे लिङ्गसमन्वयपरमिद-मधिकरणम्। अन्तर्नये फलतो नाम्न इव वैश्वानरनये लिङ्गानामिव फलतोऽत्रापि लिङ्ग-समन्वयोऽपीष्ट एवेति। भावबोधे तु दैवतैरज्ञेय इति संक्षेपीति अधिकरणतात्पर्यार्थप्रदर्शनपरः। न फलितलिङ्गप्रदर्शनपर इति ज्ञातव्यमित्युक्तम्। तेषामयमाशयः। लिङ्गसमन्वयाभिप्राये लिङ्गस्योभयत्र प्रसिद्धिर्वक्तव्या। पूर्वपक्षिणा चान्यस्यैव तल्लिङ्गमिति वक्तव्यम्। न च तदिह सम्भवति। देवानामनधिकारेण कुत्रापि देवतोपास्य त्वस्यात्र निषेधात्। ततश्च समन्वयस्यात्र प्रसिध्यादिमुखेनैवात्राध्याये करणात् नाध्यायपादसङ्गतिः पलतोऽपि। अत एव तमेव समन्वयं प्रकटयति समस्तेनाध्यायेन प्रायेण प्रसङ्गादेव चिन्तितावित्यवधारणपूर्वभाष्यप्रवृत्तिरिति। अथ सन्देहबीजं विघटयति। तदविघटने सूत्रकारेण मनुष्याणामेव वेदविद्याधिकार इति पूर्वमुक्तत्वेन देवानामधिकारप्रतिपादकसिद्धान्तसूत्रस्य स्वव्याहतत्वप्रसङ्गात्।

'न तस्य हेतुभिस्त्राणमुत्पतन्नेव यो मृत' इति न्यायविषयतापातेन सन्देहबीजविघटन-स्यावसरप्राप्तत्वादिति भावः। अत एवाथशब्दः। अथैवं सन्देहबीजविधानावसरप्राप्तौ सत्य-मिति मनुष्याधिकारेत्युक्तिरूपसंशयबीजविधानप्रकारमेव भाष्यव्याख्यानेन व्यनक्ति ॥ **मनुष्येति** ॥ ननु मनुष्याधिकारत्वादिति सूत्रे मनुष्यत्वं ह्यधिकारिविशेषणमुक्तम् ॥ विशेषणं च मनुष्यव्यावर्तकम् ॥ तथा च तिरश्चामिव देवानामपि व्यावर्त्यत्वात् कथं न तु देवाद्यपेक्षयेति वचनमित्यतः मनुष्यत्वरूपसामान्यं न व्यावर्तकत्वेन विवक्षितम्। किं तु मनुष्यगतं यद्विशिष्ट-बुध्यादिमत्वं तदेव व्यावर्तकत्वेन विवक्षितमित्याशयेनोक्तम् ॥ **विशिष्टबुध्यादीति** ॥ मनुष्य-गतविशिष्टबुध्यादिमत्वबोधकं मनुष्यपदमित्यर्थः ॥ यद्वा तिर्यगाद्यपेक्षयेत्युक्तं **तेषामपीति** ॥ तिर्यश्चामप्यधिकारस्य वक्ष्यमाणत्वादित्यत उक्तम् ॥ **विशिष्टेति** ॥ न सर्वतिर्यगाद्यपेक्षयेत्यर्थः। बुध्यादीत्यादिपदेनेन्द्रियपाटवाद्यपिग्राह्यम्। तिर्यगादीत्यादिपदेन स्थावरग्रहणमिति सत्तर्कदीपा-वल्याम्। देवादीत्यादिपदेनोपदेवऋष्यादिग्रहणम्। पूर्वसूत्राद्बुध्याविवेकेनाधिकारपदमनुवर्त्य सूत्राभाष्यार्थमाह ॥ **देवादीनामपीत्यादिना** ॥ मनुष्याणां सतां देवादित्वप्राप्त्युपर्यपीत्यस्य तात्पर्यं **देवानामपीति** ॥ सूत्रे सम्भवादित्यस्य विशिष्टबुध्यादेः सम्भवात्ततश्चाधिकारस्य च

(वाक्यार्थमुक्तावली)

सम्भवादित्यर्थद्वयमभिप्रेत्य **सम्भवति** हि तेषामित्यादिभाष्यं प्रवृत्तम् । तस्य च तेषामधिकारोप-योगिविशिष्टबुध्यादिभावात् तेषामधिकारः सम्भवतीति स्यात् तस्मादस्त्येवाधिकार इत्यादिसूत्रे देवानामित्यनुक्त्वा तदुपरीत्युक्तेर्भावं वक्तुं तद्व्यावर्त्यमाशङ्क्य दूषयति ॥ **न चोक्तेति** ॥ न ह्यनादित इत्यत्र **यदाय** मोक्षाय चेति विकल्प्योक्तप्रकारेणेत्यर्थः । देवादित्वप्राप्त्यभ्युगमेन मोक्षसिद्धेरिति देवादिपदस्य सादित्वाभ्युपगमे तद्व्याप्ततया सान्तत्वस्यापि लब्धत्वादिति भावः ॥ **विप्रतिपत्तीति** ॥ ऋषिमतविप्रतिपत्तीत्यर्थः ॥ अत एव 'अनधिकारं जैमिनिरिति वक्ष्यतीति भावः । ततश्च सूत्रे पूर्वस्माद्बुध्या विवेकेन प्रथमान्ततया विपरिणम्याधिकार इत्यनुवर्तते । तदुपर्यपि तस्य प्रकृतस्य मनुष्यस्योपरि विद्याकर्मभ्यां देवत्वप्राप्त्युपरिविद्याकर्मभ्यां देवत्वप्राप्त्युपरिदेवानमपीति यावत् । अधिकारोऽस्ति कुतः सम्भवाद्विशिष्टबुध्यादेरधिकारोपयोगिनोऽभावात् । ततश्चाधिकारसम्भवादिति बादरायणो भगवान्मन्यत इत्यर्थः । देवत्वस्य सादित्वेन सान्तत्वनैय्यत्यान्मोक्षसम्भवात्तत्रार्थिता युक्तेति सूचयितुं देवानामित्यनुक्त्वा तदुपरीत्युक्तम् ।

न केवलं मनुष्यत्वदशायामित्यपेरर्थः । देवाः वेदविद्याधिकारिणः विशिष्टबुध्यादिमन्त्वात्संमतवदिति स्वप्रयुक्तानुमानस्य प्रतिपक्षमाशङ्कते ॥ **न देवा इति** ॥ तिर्यक्षु अधिकाराभावरूपसाध्यसत्वेऽपि विशिष्टबुध्यादिराहित्यरूपोपाध्यभावाद्व्याप्तिविधुरोऽयमुपाधिरिति शङ्कते ॥ **विशिष्टबुध्यादिमतामपीति** ॥ **अविरोध इति** ॥ तेषु साध्यस्यापि सत्वान्न दोष इति भावः । **व्यभिचारपरिहार इति** ॥ शूद्रादावधिकाराभावरूपसाध्यमस्ति विशिष्टबुध्यादिरूपोपाधिर्नास्ति अतो व्यभिचार इति वक्तव्यम् । न चेदं युक्तम् ।

निषेधराहित्ये सति विशिष्टबुध्यादिमत्वाभावस्योपाधित्वेन शूद्राणां विशिष्टबुध्यादिमत्वेन तदभावरूपविशेष्याभावेऽपि निषेधराहित्यरूपविशेषणाभावेन विशिष्टाभावरूपोपाधेरपि सत्वान्न व्यभिचार इत्यर्थः । यद्वा स्वप्रयुक्तानुमानस्य व्यभिचारपरिहार इत्यर्थः ॥ **वेदाधिकारतयेति** ॥ जरितारि, सारिसृक्, स्तम्बमित्र, द्रोणाख्यानां चतुर्णां पक्षिणाम् । एवमुक्तो भ्रातृभिस्तु जरितारिर्विभावसुं तुष्टाव प्राञ्जलिर्भूत्वा यत् तत् श्रुणु नराधिप इति भारते । अयमग्रे जरितेत्यादिमन्त्रे च वेदाधिकारितया मन्त्रदृष्टृतया च दृश्यमानत्वादिति भावः ॥ **अनेनैवेति** ॥ अमनुष्याणामपि जरितार्यादीनां वेदविद्याधिकारोपपादनेन सूत्रकृता सम्भवादिति देवाः वेदविद्याधिकारिणः विशिष्टबुध्यादिमत्वात् त्रैवर्णिकवत् इति स्वप्रयुक्तानुमानस्येत्यर्थः ।

(वाक्यार्थमुक्तावली)

उपाधेः साध्यव्यापकत्वादिति भावः । एतेन सौत्रापिपदं जरितार्यादिसमुच्चायकं च तेषामपि निषेधराहित्ये सति विशिष्टबुध्यादिसम्भवात् अधिकार इति सूत्रार्थ उक्तो भवति ॥ **तेषामपीति** ॥ भाष्यतट्टीकयोस्तथा प्रतीतेः । तिर्यञ्चोऽपि केचिदपिशब्दगृहीता इत्यानन्दमालायां देवतेरपीत्यपि-शब्दस्य व्याख्याातत्वाच्च । यद्यपि प्रतिपक्षानुमानेनोपाध्युद्भावनं युक्तम् । उपाधेः पक्षादि-निष्पत्यन्तरं प्रतिपक्षोन्नायकत्वेन दूषकत्वात् । तस्य चोपाध्यभावरूपस्य प्रागेवास्माभि-रुपन्यस्तत्वात् । तथापि उपाधेरेव प्रयोजकत्वं हेतोरप्रयोजकत्वमित्यप्रयोजकतोपन्यासाय तदुक्ति-र्युक्तैव । यद्वा इह परेण अस्मदीयानुमाने मनुष्यत्वस्योपाधितयाऽमनुष्यत्वस्य प्रतिपक्षतया चोद्भावनात् उपाधेरनुमानस्य च जरितार्यादौ व्यभिचारमुद्भावयद्भिरस्माभिरनधिकारस्य मनुष्यत्वप्रयुक्तत्वान्न व्यभिचार इति परेणोक्तावनधिकारेऽपि विशिष्टबुध्यादिमत्वमेव प्रयोजकं नामनुष्यत्वम् । अतोऽमनुष्यत्वेऽपि नाधिकारहानिरतो व्यभिचार एवेति तदुपयोगितयोपाधे-रप्युद्भावनीयत्वेन स्वतन्त्रदोषतानुद्भावनान्तदोष इति ज्ञेयम् ।

## तत्त्वसुबोधिनी

ननु अध्यायपादासङ्गतत्वात् नेदमधिकरणमारब्धव्यमित्यत आह ॥ **प्रासङ्गिकत्वादिति** ॥ मुख्यतो व्युत्पाद्येऽधिकारे न साक्षादध्यायसङ्गतिर्गवेषणीयेत्यर्थः । प्रासङ्गिकसङ्गतेः तत्रापि सत्त्वात् फलिते देवोपास्यत्वलिङ्गसमन्वये साक्षात्सङ्गतेरपि सत्त्वाच्च मनुष्याधिकारत्वादित्यनेन देवाद्यधिकारादेः स्मारितत्वात् प्रासङ्गिकत्वमिति भावः । ननु स्मृतस्योपेक्षानर्हत्वं प्रसङ्ग-सङ्गतिः । तथा च कथमस्यापेक्षानर्हत्वमित्यतः तद्दर्शनपरत्वेन मनुष्याणामेवेति भाष्यं व्याचष्टे ॥ **श्रुत्यादिसङ्गतिमिति** ॥ यद्यपि सार्वत्रिकीत्यादौ देवानाङ्गमपरोक्षज्ञानाधिकारसदसद्भाव-चिन्ता। यदीयमपि चिन्ता तत्रैव कर्तव्या । तथापि पूर्वाधिकरणस्थमनुष्यपदस्य विशिष्ट-बुद्ध्यादिहीनतिर्यगाद्येव व्यावर्त्यं न तु देवादीत्यनेन रूपेणेयं चिन्ता न तृतीये सङ्गता किन्तु अत्रैव यथा भोक्त्रापत्तेरिति मुक्तेशयोः भेदसमर्थनं फलरूपेण चतुर्थे सङ्गतमपि युक्ति-विरोधपरिहारेण द्वितीये सङ्गतं तथेति भावः ।

उपासत इत्यत्रादिपदेन तं भूतिरिति देवा उपासाञ्चक्रिर इत्यादिग्रहणम् । मनुष्याणा-मेवेत्युक्तिरिति पूर्वाधिकरणे सूत्राभाष्ययोः मनुष्याधिकारत्वात् इत्यत्र बुद्ध्या विवेकेन मनुष्याणामेवाधिकारित्वादित्यभिप्रेतम् । अन्यथा तथापि नाङ्गुष्ठमात्रत्वं विष्णोरिति शङ्का-

(तत्त्वसुबोधिनी)

परिहारत्वं न स्यादिति भावः ॥ **कर्माधिविरोधापातादिति** ॥ देवानां मुक्त्याद्यङ्गीकारे पूर्वमुत्तरत्र च देवानामभावे न तदुद्देशेन द्रव्यत्यागात्मककर्मणो वैयर्थ्याख्यविरोधः स्यादित्यर्थः। आदिपदेन शब्दविरोधसङ्ग्रहः । न तदुपास्यत्वं विष्णोः सम्भवतीति । तथा च पूर्वाधिकरणे पूर्वपक्षप्रापकलिङ्गस्य विष्णावनवकाशोक्तिर्न स्यादिति भावः ॥ **सन्देहबीजं विघटयन्निति** ॥ तिर्यगाद्यपेक्षयेत्यादिभाष्येण मनुष्याणामेवेत्यन्ययोगव्यवच्छेदपरैवकारव्यावर्त्यविवेककथनेन सावधारणोक्तेः देवानामधिकाराभावरूपकोट्युपस्थापकाभावोक्तेरिति भावः । तिर्यगाद्यपेक्षयेति भाष्यार्थस्य सूत्रे कण्ठतोऽनुक्तेराह ॥ **मनुष्यपदमिति** ॥ विद्यादिभिरिति देवादिपदस्य सादित्वाभ्युपगमेऽर्थात्सान्तत्वस्याप्यङ्गीकृतत्वादिति भावः । नन्वत्र बादरायणपदप्रयोगः किमर्थ इत्यत आह ॥ **विप्रतिपत्तीति** ॥ मध्वादिष्विति वक्ष्यमाणजैमिन्यादिनाविप्रतिपत्तिसूचनायेत्यर्थः विशिष्टबुध्यादिराहित्यरूपोपाधिग्रस्तत्वान्नानुमानं युक्तमित्याह ॥ **न तिर्यगादीनामिति** ॥ यत्राधिकाराभावः तत्र विशिष्टबुद्ध्यादिराहित्यमितिसाध्योपाध्योः सहचारो वक्तव्यः । तत्र तिर्यगादिषु अधिकाराभावरूप साध्यसत्वेऽपि उपाध्यभावेन साध्याव्यापकत्वात् नायमुपाधि-रित्याशयेन शङ्कते ॥ **विशिष्टबुद्ध्यादीति** ॥ ननु शूद्रादावधिकाराभावरूपसाध्यसत्वेऽपि विशिष्टबुद्ध्यादिराहित्यरूपउपाधेरभावेन व्यभिचारान्नोपाधिः सम्भवतीत्यत आह ॥ **अनेनेति** ॥ निषेधाभावकथनेनेत्यर्थः । तथा च शूद्रादावधिकाराभावरूपसाध्यस्य सत्वेऽपि निषेधराहित्यरूपविशेषणाभावप्रयुक्तविशिष्टाभावरूपउपाधेरपि निषेधविषये शूद्रादौ सत्वेन न व्यभिचार इत्यर्थः । तथा च देवाः वेदविद्याधिकारिणः निषेधराहित्ये सति विशिष्टबुद्ध्यादि-मत्वात् । योग्यत्रैवर्णिकवदित्यनुमानमुक्तं भवति ॥ **वेदाधिकारितयेति** ॥ **शेष इति** ॥ 'एवमुक्तो भ्रातृभिस्तु जरितारिर्विभावसुम् । तुष्टाव प्राञ्जलिर्भूत्वा यत्तत् श्रुणु नराधिप' इत्यादि-भारतवचनैर्जरितारिसृक्तस्तम्बमित्रदोणाख्यानां चतृर्णां पक्षिणामयमग्रे जरितेत्याग्नेयसूक्ते-नाग्निस्तावकत्वेन तन्मन्त्रद्रष्टृत्वस्य प्रसिद्धत्वादिति भावः ।

नन्वेवं भवदुक्तानुमानेऽपि मनुष्यत्वमुपाधिः स्यात् । साध्यव्यापकत्वसाधनाव्यापकत्वयोः सत्त्वादित्यत आह ॥ **अनेनैवेति** ॥ अमनुष्याणां जरितर्यादीनां वेदविद्याधिकारप्रदर्शने-नैवेत्यर्थः । उपाधेः साध्याव्यापकत्वादिति भावः ।

## वाक्यार्थमञ्जरी

**अधिकारेति** ॥ योग्यतेत्यर्थः ॥ **प्रासङ्गिकत्वादिति** ॥ मनुष्याधिकारत्वमित्यनेन देवाद्यधिकारादेः स्मारितत्वादिति भावः ॥ **नाध्यायसङ्गतिरिति** ॥ मुख्यतो व्युत्पाद्येऽधिकारे न साक्षादध्यायसङ्गतिर्गवेषणीयेत्यर्थः । प्रासङ्गिकसङ्गतेस्त्वत्रापि सत्वात् फलिते देव-तोपास्यत्वलिङ्गसमन्वये साक्षात्सङ्गतेरपि सत्वाच्च । अत एव सङ्क्षेपे देवैर्वेदैर्ज्ञेय इत्युक्तम् । टीकायामपि न तदुपास्यत्वलिङ्गं विष्णोरिति पूर्वपक्षोपसंहारात्तदुपास्यत्वं हरेरित्यधिकरणोप-संहाराच्च । प्राक् प्रायःशब्देन व्यावर्तनन्तु मुख्यतः साक्षात्सङ्गत्यभावेनेति ध्येयम् । ननु स्मृतस्योपेक्षानर्हत्वं प्रसङ्गः न स्मृतत्वमात्रं तत्कथमस्योपेक्षानर्हत्वमित्यतस्तत्प्रदर्शनपरभाष्य-मवतार्य व्याचष्टे ॥ **श्रुत्यादिसङ्गतीति** ॥ **असाम्यादिति** ॥ श्रुतेरपौरुषेयत्वेन प्राबल्यादिति भावः । अर्थीति प्रयोजनार्थी तत्साधनकरणसमर्थः । साधनेति कर्तव्यताज्ञान्यधिकारी भवतीति न्यायार्थः ॥ **कर्मादिविरोधेति** ॥ तथात्वे प्रागूर्ध्वदेवताभावेन तदुद्देशेन कृतकर्मणो वैयर्थ्याख्य-विरोधेनेत्यर्थः । अमराणामित्युक्त्या तेषां मुक्त्यङ्गीकारे मरणवर्जितत्वप्रसिद्धिविरोधं सूचयति । सन्देहबीजं निषेधकोट्युपस्थापकम् ॥ ॐ तदुपर्यपि बादरायणः सम्भवात् ॐ ॥ तेषां प्रकृतानां मनुष्याणामुपरि विद्याकर्मभ्यां देवत्वप्राप्त्यनन्तरमपि देवानामिति यावदधिकारोऽस्ति कुतः विशिष्टबुद्ध्यादिसम्भवादिति बादरायण आहेत्यर्थः । विघटनप्रकारं व्यञ्जयन्नाह ॥ **मनुष्येति** ॥ विशिष्टबुद्ध्यादीति वाक्यार्थज्ञानोपयोगिशक्तिगृहादित्यर्थः ॥ **योग्येति** ॥ देवत्वयोग्यानां मनुष्येषु साधानसम्पत्त्यर्थमवतारादिति भावः । स्वोक्तिमात्रेणेतरसूत्रेष्विव स्वमतस्य ज्ञातुं शक्यत्वाद्बादरायणग्रहणमनर्थकमित्यत आह ॥ **विप्रतिपत्तीति** ॥ मध्वादिष्व-सम्भवादिति वक्ष्यमाणत्वादिति भावः ॥ **विशिष्टबुद्ध्यादिराहित्येति** ॥ तथा चानुमानस्य सोपाधिकत्वमिति भावः । उपाधेः साक्षाद्दोषत्वाभावादाह ॥ **तथा चेति** ॥ तथा च देवाः वेदाधिकारिणः निषेधरहितत्वे सति विशिष्टबुद्ध्यादिमत्त्वाद्योग्यत्रैवर्णिकवदिति प्रतिपक्षानुमानं भाष्यसूचितमिति भावः ॥ **व्याप्तिविधुर इति** ॥ तिर्यक्षु साध्याव्यापक इत्यर्थः ॥ **व्यभिचार-परिहार इति** ॥ अधिकाराभावरूपसाध्यवति सच्छूद्रे विशेषणाभावप्रयुक्तस्य निषेधराहित्ये सति विशिष्टबुद्ध्यादिराहित्यरूपोपाधेरपि सत्वात्साध्याव्यापकत्वपरिहार इत्यर्थः । उत्तराधि-करणन्यायेन सच्छूद्रस्याधिकारनिषेधाद्दिति भावः ॥ **वेदविद्याधिकारितयेति शेष इति** ॥ खाण्डववनस्थानां जरितारिसरिसृक्कस्तम्बमित्रद्रोणाख्यानां चतृर्णां पक्षिणां समात्रकाणां कृत्स्नं

(वाक्यार्थमञ्जरी)
वनं परितो दहता वह्निना स्वदाहप्रसक्तौ भ्रातृभिः प्रार्थितो जरितारिः अयमग्नेजरितेत्यादिमन्त्रैः स्तुत्वा प्रीतेनाग्निना तान्मोचयामासेति । एवमुक्तो भ्रातृभिस्तु जरितारिः विभावसुं तुष्टाव प्राञ्जलिर्भूत्वा यत्तत् शृणु नराधिपेत्यादिना भारते प्रसिद्धत्वादिति भावः ॥ अनेनेति ॥ अमनुष्याणां जरितार्यादीनां वेदाधिकारप्रदर्शनेनेत्यर्थः ॥ स्वप्रयुक्तेति ॥ प्रतिपक्षानुमानेत्यर्थः । अपोढः निराकृतः साध्याव्यापकत्वादिति भावः ।

## सूत्रभाष्यम्

**॥ ॐ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॐ ॥ २७ ॥**

मनुष्या एव देवादयो भवन्तीति तदुपरीत्युक्तम् । तत्र यदि मनुष्याः सन्तो देवादयो भवन्ति तत्पूर्वं देवताभावाद्देवतोद्दिष्टकर्मणि विरोध इति चेन्न । अनेकेषां देवतापद-(प्रतिपत्ते)प्राप्तेर्दर्शनात् । 'ते ह नाकं महिमानः सचन्ते(न्त) यत्र पूर्वे साध्याः सन्ति देवा' (तै.आ.३-१२) इति ॥

## तत्त्वप्रदीपिका

विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् । किञ्चित्कालं मनुष्या एव सन्तः पश्चा-द्देवोपदेवादयो भवन्तीति हि तदुपरीत्यत्रोक्तम् । मनुष्याणां सतां देवादित्वप्राप्त्युपरीति विवरणात् । यद्येतदेवं तर्हि तत्पूर्वं तेषां देवादित्वप्राप्तेः पूर्वं, देवतानामभावात्तत्तद्देवतोद्देशेन चोद्यमानेषु कर्मसु विरोधः । उद्देश्याभावादिति चेन्न । केषाञ्चिदिन्द्रादीनां देवानां स्वस्व-पदात्ययेऽन्येषामिन्द्रादीनां तत्तत्पदप्रतिपत्तिः । तेषामत्यये वाऽपरेषामित्यनेन क्रमेणा-नेकेषामधिकारिणामेकैकगणशोऽनन्तानां देवतापदप्रतिपत्तेर्दर्शनात् । 'ते ह नाकं महिमानः सचन्त' इत्यादिवाक्यात् । 'ते' देवा 'नाकं' मोक्षं महिमगुणात्मकाः 'सचन्तः' आप्नुवन् । यत्र नाके पूर्वे साध्या वस्वादयो देवास्सन्ति । अथवा यत्र पूर्वे सिद्धा मुक्तास्सन्तीत्यर्थः । न चात्र नाकः स्वर्गः । न हि स्वर्गे पूर्वसिद्धानां पश्चात्तनानां च देवानां सहभावः सम्भवति । नाकशब्दश्चादुःखवाची मोक्षं वदन्नेव स्वार्थं पूर्णं लभते ॥

## तत्त्वप्रकाशिका

देवानां वेदविद्याधिकारमाक्षिप्य समादधत्सूत्रं पठित्वाऽऽक्षेपांशं तावद्व्याचष्टे ॥ **विरोध इति** ॥ यदुक्तं देवानां वेदविद्याधिकारसिद्ध्यर्थं सादिविनाशित्वम् । तदयुक्तम् । तथात्वे तेभ्यः पूर्वं देवताऽभावेन पूर्वकल्पप्रयुक्तकर्मण्युद्देश्याभावाद्वैयर्थ्याख्यविरोधापत्तेः । अतः कर्मविरोधपरिहाराय देवानामनादिनित्यत्वमेवाभ्युपेयम् । तथा चार्थित्वाभावेनानधिकार एवेत्यर्थः । परिहारांशं व्याचष्टे ॥ **नेति** ॥ भवेदयं विरोधो यदि पूर्वं देवताऽभावः । न चासावस्ति । एतद्देवानां पूर्वमभावेऽपि देवान्तरसद्भावात् । न च तत्र प्रमाणाभावः । अनेकेषां योग्यमनुष्याणां पूर्वं पूर्वं देवतापदप्राप्तेः श्रुत्युक्तत्वादित्यर्थः । देवा देवत्वयोग्या मनुष्याः यज्ञेन ज्ञानकर्मात्मकेन यज्ञं भगवन्तमयजन्त । ततस्ते ज्ञानपूर्वकर्मणा स्वपदं प्राप्य मुख्यलोकधारका आसन् । ते पुनर्महात्मानो देवाः स्वाधिकारावसाने पूर्णसुखात्मकं मोक्षं प्राप्नुवन् । यत्र मोक्षे पूर्वकल्पे मुक्ताः साध्या देवाः सन्तीति मन्त्रार्थः ॥

## गुर्वर्थदीपिका

ततस्त इत्यादिश्रुतौ साध्या देवा इत्येतद्देवान्तरस्याप्युपलक्षणमिति भावेनोक्तं **साध्यादिदेवा इति** । देवानां प्रवाहतोऽनादित्वात्प्रवाहतोऽनादिकर्मणि विरोधाभावेऽपि स्वरूपानादिभूते वेदे देवानां प्रलयेऽभावेनार्थाभावप्रयुक्ताप्रामाण्याख्यविरोधः स्यादित्यतः सूत्रान्तरारम्भ इति विवेचनीयम् ।

## भावबोधः

देवतापदस्यादित्वप्रतिपादकतया भाष्योदाहृतश्रुतिं व्याचष्टे– **देवत्वयोग्या मनुष्या** इति ॥ अन्यथा आसन्निति यज्ञानन्तरं देवतापदप्राप्त्युक्तिर्न स्यादिति भावः ।

## भावदीपः

भवन्तीत्यन्तभाष्यभावमाह ॥ **यदुक्तमिति** ॥ तत्पूर्वमित्यादि व्याचष्टे ॥ **तथात्व इति** ॥ सादित्व इत्यर्थः । नेत्येतद्व्याचष्टे ॥ **न चासाविति** ॥ पूर्वं देवताभावो नास्तीत्यर्थः । अनेकेषामित्यादि व्याचष्टे ॥ **एतदिति** ॥ **योग्येति** ॥ देवत्वयोग्यमनुष्याणामित्यर्थः । प्रकृतोपयोगितयाऽर्थमाह ॥ **देवा इति** ॥ **भगवन्तमिति** ॥ यज्ञो वै विष्णुरिति श्रुतेरिति

(भावदीपः)

भाव: । पूर्वोक्तं हेतूकृत्य तानीत्यादेरर्थमाह ॥ ततस्त इत्यादिना ॥ ते ह नाकमित्यादेरर्थ: ॥ ते पुनरिति ॥ कं सुखं तदन्यदकं नेति नाकमिति नञ्द्वयार्थमाह ॥ पूर्णसुखेति ॥

## अभिनवचन्द्रिका

'यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवा' इति ऋचं व्याचष्टे ॥ देवा इति ॥

## वाक्यार्थमुक्तावली

तदुपरीत्युक्तमित्यनन्तरं तद्भाष्यभावमाह ॥ यदुक्तमिति ॥ तत्र यदीत्यत्र यदि मनुष्या सन्तो देवादयो: भवन्ति तत्र तर्हीत्यर्थमभिप्रेत्य व्याचष्टे ॥ तथात्वे इति ॥ नेत्यस्य विरोधो न देवताभावो न इत्यर्थद्वयमाह ॥ न चासाविति ॥ देवत्वयोग्या इति ॥ अन्यथा आसन्निति यज्ञानन्तरं देवतापदप्राप्त्युक्तिर्न स्यादिति भाव: । तानि देवतानि धर्माणि धारकाणि कं सुखं तदन्यदकं तन्नेति नाकमिति । नञ्द्वयार्थमाह ॥ पूर्णसुखेति ॥ सचन्त आप्नुवन् । साध्यादि-देवा इति बहुवचनमाद्यर्थे । तेन साध्यादीत्युक्तसाध्यपदेन च 'ऋजवो ब्रह्ममुख्या हि सुपर्ण: शेष एव च । सरस्वती सुपर्णी च वारुणी साध्यनामका:' इति छान्दोग्यभाष्योक्तदेवा: ग्राह्या: । तदुपरीत्यस्य देवपदस्य सादित्व इत्यर्थ: । ततोऽनुवृत्याऽसूत्रार्थ: स्फुट: ।

## तत्त्वसुबोधिनी

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्नित्यस्यार्थमाह ॥ देवा इति ॥ देवतापदस्य सादित्वप्रतिपादकतया भाष्योदाहृतश्रुतिं व्याचष्टे ॥ देवत्वयोग्या मनुष्या इति ॥ अन्यथा आसन्निति यज्ञानन्तरं देवतापदप्राप्त्युक्ति: न स्यादिति भाव: । तानीत्यस्य व्यत्ययेन तेनेत्यर्थ: । धर्माणीत्यस्यार्थो लोकधारका इति ॥ महिमान इत्यस्यार्थो महात्मान: । ह इत्यत्य पुन: इत्यर्थ: । नाकमित्यस्यार्थ: पूर्णसुखात्मकं मोक्षमिति ।

## वाक्यार्थमञ्जरी

देवपदस्य सादित्वाङ्गीकारे कर्मणि कर्मविषये विरोध: उक्तरीत्या व्यर्थतालक्षण: स्यादिति चेन्न । अनेकेषां योग्यमनुष्याणां प्रतिपत्ते: पूर्वं देवतापदप्राप्ते: यज्ञेनेति श्रुत्युक्तत्वादित्यर्थ: ॥

(वाक्यार्थमञ्जरी)

**उद्देश्येति** ।। यदुद्देश्य हविस्त्यागः तदभावादित्यर्थः । यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्निति प्रथमार्धेन सह ते ह नाकमिति श्रुतिं देवतापदस्य सादित्वपरतया व्याचष्टे ।। **देवत्वयोग्या इति** ।। पदप्राप्त्यनन्तरमेव देवसंज्ञेति भावः । प्रथमानि धर्माणीत्यस्यार्थो मुख्य-लोकधारका इति कं सुखं तदन्यदकं तन्न भवतीति नाकम् इति नञ्द्वयार्थमाह ।। **पूर्णसुखेति** ।। साध्याः देवाश्चेत्यर्थः ।

## सूत्रभाष्यम्

**।। ॐ शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् ॐ ।। २८ ।।**

'वाचा विरूप नित्यया' (ऋ.सं.८-६४-६) इत्यादि श्रुतेराप्त्यनिश्चयान्नित्यत्वा-पेक्षत्वाच्च मूलप्रमाणस्य, स्वतःप्रामाण्यप्रसिद्धेश्च नित्यत्वाद्वेदस्य तदुदितानां देवानाम-नित्यत्वात् पुनरन्यभावनियमाभावाच्च शब्दे विरोध इति चेन्न । 'सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत्' (म.ना.उ. ५-७)

'यथैव नियमः काले सुरादिनियमस्तथा ।
तस्मान्नानीदृशं क्वापि विश्वमेतद्भविष्यति' ।।

इत्यादेरत एव शब्दात्तेषां प्रभवनियमात्, महतां प्रत्यक्षात् । यथेदानीं तथोपर्यपि देवा भविष्यन्तीतीतरेषामनुमानाच्च ।।

## सत्तर्कदीपावली

वेदानां नित्यत्वं च वाचाविरूपनित्ययेत्यादिश्रुत्या तत्कर्तुरसिद्ध्या च सिद्धम् । कृतकत्वे प्रामाण्यं न स्यात् । वेदकर्तृराप्तत्वानिश्चयात् । विप्रलम्भादिसम्भवात् । स्मृतिपुराणादीनां पौरुषेयाणां श्रुतिमूलत्वेन प्रामाण्यस्य वेदनित्यत्वमन्तरेणासिद्धेः तद्वन्नित्यानां वैदिकेन्द्रादि-शब्दानामिदानीन्तनेन्द्रादिनाशानन्तरं वाच्याभावेन विरोधापत्तिरिति वाच्यम् । घटादिशब्द-वाच्यघटादिनाशेऽपि घटाद्यन्तरसृष्टिवत् सूर्यादिशब्दवाच्यसूर्यादिनाशेऽपि सूर्याद्यन्तरसृष्टिश्रुतेः । सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयदिति । तदाह ।। **शब्देत्यादिना** ।। 'यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये । दृश्यन्ते तानि तान्येव तथा तावद्युगादिषु' इत्यनेन वचनेन यथैव कालनियमः इत्यस्यार्थो ज्ञातव्यः । तथा चोक्तम् । 'स हि विश्वसृजो विभुशम्भुपुरन्दर-

(भावप्रकाशिका)

सूर्यमुखानपरानपरान् । सृजतीड्यतमोऽवति हन्ति निजं पदमापयति प्रणतान् सुधिया' । अतीतानागतकालयोः देवादिमत्त्वं दिव्यदृष्टीनां प्रत्यक्षात्सिद्ध्यति । उपरितनकालो देवादिमान् कालत्वात्संमतवदित्यन्येषामनुमानात्सिद्ध्यति । प्रलयकालस्य पक्षैकदेशत्वान्न तत्र कालत्व-हेतोर्व्यभिचारः शङ्कनीयः । पर्वतैकदेशस्य अनग्निमत्त्वेऽपि न हि तत्र धूमवत्त्वहेतुर्व्यभिचरितो भवतीत्यर्थः ।

## तत्त्वप्रदीपिका

'वाचा विरूपनित्यया' इतिश्रुतेरेव वेदस्य नित्यत्वमुक्त्वा युक्तिं चाऽह– **आप्त्य-निश्चयादित्यादिना ।।** अयं भावः– न तावद्धर्माद्यनङ्गीकारे शास्त्रस्यार्थवत्त्वम् । अर्थान्तरा-भावात् । अङ्गीकारे च न प्रत्यक्षादनुमानाद्वा तत्सिद्धिरिष्यते । तदगोचरत्वात्तेषाम् । न च पौरुषेयवाक्यात्तदवगमः सुलभः । पुरुषाणामाप्तिनिश्चये प्रमाणाभावात् । तन्निश्चायक-प्रमाणान्तराभ्युपगमे तस्यापि पौरुषेयत्वे तत्प्रामाण्यनिश्चयस्य पूर्वावस्थत्वादपौरुषेयमेषणीयं मूलप्रमाणम् । प्रसिद्धं च वेदस्य स्वतःप्रामाण्यं वेदत्वादेव । 'वेदा ह्येवैनं वेदयन्ति' इत्यन्यनिरपेक्षप्रामाण्यश्रुतेश्च । न तद्युज्यते पौरुषेयत्वे । पुरुषज्ञानाधीनत्वप्रसङ्गात् । तस्य चाज्ञानविप्रलम्भसम्भवात् । तस्मान्नित्यो वेदोऽभ्युपगन्तव्यः । न तस्य नित्यस्यानित्यैर्देवै-र्वाच्यवाचकभावस्सम्बोभवीति । तस्माच्छब्दे प्रामाण्यविरोधः । कश्चित्कालं वाच्याभावेना-प्रामाण्यात्सर्वदाऽपि तथात्वप्राप्तेरिति चेन्न । 'सूर्याचन्द्रमसौ धाता' 'यथैव कालनियम' इत्यादेरत एव शब्दात्तेषां प्रभवनियमावगमात् । अयं हि शब्दोऽत एव धातुर्विष्णोस्तेषां तेषां देवानां पूर्वपूर्वप्रकारेण प्रभवनियमं व्यपदिशति । महतामतीतानागतार्थदर्शिनां पूर्वपूर्वावगमे पुनरन्यान्यस्य प्रभवनियमस्य प्रत्यक्षसिद्धत्वादितरेषामनुमानसिद्धत्वाच्च विमतः कालो देववानप्रलयकालत्वादिदानीन्तनकालवदिति ।।

## तत्त्वप्रकाशिका

पुनरुक्तमाक्षिप्य समादधत्सूत्रं पठित्वाऽऽक्षेपांशं विवृणोति ।। **शब्द इति ।।** अत्रापि विरोधपदाकर्षणम् । यद्देवानामधिकारसिद्ध्यर्थमाद्यन्तवत्त्वमुक्तम् । न तद्युक्तम् । देवानामा-द्यन्तवत्त्वे वेदाप्रामाण्याख्यविरोधापातात् । वेदस्य नित्यत्वादनित्यदेवानां तद्वाच्यत्वात् । वाच्यहीनाया वाचः प्रामाण्यासम्भवात् । यावता तदेव वाक्यस्याप्रामाण्यम् । वेदस्य नित्यत्वमेव कुत इति चेत् । 'वाचा विरूप नित्यया' इत्यादिश्रुतेः । न च वाच्यमनित्य एव

(तत्त्वप्रकाशिका)
वेदो नित्य इत्युपचारमात्रमिति । वेदानित्यत्वे प्रामाण्याभावापत्तेः । आप्तिमूलत्वेन प्रामाण्यमिति चेन्न । कर्तृसार्वज्ञादौ मानाभावेनाप्त्यनिश्चयात् । विवादपदं कस्यचित्प्रत्यक्षं प्रमेयत्वादिति सार्वज्ञे मानमिति चेन्न । प्रमेयत्वेन विप्रतिपन्नधर्मान्तरसाधनापातात् । किञ्चेदं प्रमेयत्वं न तावत्सामान्यं केवलान्वयिधर्मत्वात् । उपाधित्वेऽपि क्वचिदन्तर्भावस्यापेक्षितत्वात् । न तावद्द्रव्यम् । निर्गुणत्वादस्वतन्त्रत्वाच्च । नापि गुणकर्मणी । गुणादावपि वृत्तेः । न च समवायः । असम्बन्धत्वात् । न च विशेषोऽनित्येऽपि वृत्तेः । न चाभावोऽप्रतियोगिसापेक्षत्वात् । प्रमेयस्य भाव एव प्रमेयत्वं न तु ततोऽतिरिक्तिमिति चेत् । सत्यम् । भावभवित्रोर्भेदे पुनरुक्तानतिवृत्तेः । भावस्य भवितुः पृथगभावे तच्छब्दयोः पर्यायतापातात् । एवं परत्वापरत्वादिगुणानां च दत्तजलाञ्जलिता स्यात् । प्रमातद्विषयतत्सम्बन्धेष्वन्तर्भावोऽस्तीति चेन्न । प्रमाप्रमेययोः सम्बन्धस्यैव दुर्निरूपत्वात् । न ह्यात्मगुणस्यान्येन समवायः संयोगो वा सम्भवति । विषयविषयिभाव इति चेन्न । तस्याप्यन्तर्भाव्यत्वात् । अन्तर्भावस्य चोक्तदोषलङ्घनाजङ्घालत्वात् । एषैव दिगन्यसमये धर्मान्तरेऽपीति । प्रमेयत्वानिर्वचनान्न तेन सार्वज्ञसिद्धिः । विप्रतिपन्नं सकर्तृकं कार्यत्वात् घटवदित्यनुमानेन जगत्कर्तरि सिद्धे तस्य सार्वज्ञादिसिद्धिरिति चेन्न । शरीरजन्यत्वोपाधेः शरीर्यजन्यत्वेन सत्प्रतिपक्षत्वाच्च । शरीरिविशेषणं व्यर्थमिति चेन्न । उपाधौ पक्षव्यावृत्यर्थत्वात् । प्रतिपक्षेऽसिद्धिपरिहारार्थत्वात् । पक्षव्यावृत्यर्थविशेषणवतोऽप्युपाधित्वे पक्षेतरत्वस्याप्यापायते तदिति चेत्का नो हानिः । पर्वततरत्वादीनामपि व्याप्तिरस्ति चेत् अनुमानोपजीव्येन बाधादतदिति चेत्का नो हानिः । पर्वतेतरत्वादीनामपि व्याप्तिरस्ति चेदनुमानोपजीव्येन बाधादव्याप्तौ स्वयं दुष्टत्वात् । न चासिद्धिपरिहारार्थं विशेषणासम्भव इति राज्ञामाज्ञास्ति । तथात्वे व्यभिचारनिवृत्त्यर्थमपि न प्रयोक्तव्यम् । व्याप्तिवत्पक्षधर्मताया आवश्यकत्वात् । सकर्तृकत्वे कार्यत्वमेव प्रयोजकम् । शरीरमपि तत्र सन्निहितमित्युत्तरत्र निरसिष्यते ।

अस्तु वा सकर्तृकत्वम् । कथं सार्वज्ञसिद्धिः । बहुकर्तृत्वेनाप्युपपत्तेः । लाघवादेकाङ्गीकार इति चेन्न । बह्वङ्गीकारस्य लोकानुकूल्येनागौरवात् । अतो न सार्वज्ञसिद्धिः । अविप्रलम्भादि चातिदुरवगमम् । अस्तु वा आप्तिनिश्चयस्तन्मूलत्वं कुतो वेदस्य । वेदः सार्वज्ञादिमता प्रणीतो वेदत्वादिति व्यतिरेक्यनुमानादिति चेन्न वेदत्वस्य पामरप्रणीतत्वादौ साम्यात् । असाधारण्यस्यापि साम्यात् । वेद आप्तप्रणीतः प्रमाणवाक्यत्वादिति चेन्न । वेदनित्यत्वे प्रामाण्यविवादात् । 'तस्माद्यज्ञात्' इति सर्वज्ञेश्वरप्रणीतत्वं श्रूयत इति चेन्न । उक्तदोषात् । 'ऋग्वेद एवाग्नेरजायत' इत्यसर्वज्ञप्रणीतत्वोक्तेश्च । सम्प्रदायप्रवर्तकतया तद्वाक्यमुपचरितमिति चेन्न ।

(तत्त्वप्रकाशिका)

कारणाभावात् । ईश्वरविरचितवाक्यादिति चेन्न । तद्वाक्यादस्य सम्प्रदायप्रवर्तकत्वाद्यर्थोपपत्तेः । तेषामसार्वज्ञ्यादेतदिति चेन्न । चक्रकापातात् । तस्मादाप्तितन्मूलत्वानिश्चयाद्वेदानित्यत्वे तत्प्रामाण्याभावापत्तेर्न नित्यत्वश्रुतेरुपचरितार्थत्वं वाच्यम् । किं च वेदस्याप्तप्रणीतत्वे मूलप्रमाणेन भाव्यम् । पौरुषेयस्य मूलप्रमाणसापेक्षतानियमात् । न च तत्प्रत्यक्षम् । अदृष्टादौ तदप्रवेशात् । न च कस्यचित्प्रत्यक्षं तादृशम् । अत्र प्रमाणाभावात् । नाप्यनुमानम् । तस्य प्रतिपक्षादिदुष्टत्वात् । कथं चित्तेनादृष्टसम्भावनेऽपि तद्विशेषासिद्धेः । न हि लशुनगृञ्जनाद्यदनस्य पापहेतुत्वं यज्ञादेः पुण्यसाधनत्वं वाऽनुमानेन शक्यसाधनम् । अतो वाक्यमेवेति वक्तव्यम् । तदपि न तावत्पौरुषेयम् । मूलान्तरान्वेषणेनानवस्थानात् । अतस्तन्नित्यमेवापेक्षितम् । तथा च किमनया कल्पनया श्रुतिसिद्धं वेदनित्यत्वमेवाङ्गीक्रियताम् ।

ननु वेदस्य नित्यत्वेऽपि न प्रामाण्यम् । आप्तोक्तत्वाभावादिति । मैवम् । प्रामाण्यस्य स्वतस्त्वेन गुणानपेक्षणात् । प्रामाण्यं नाम यथार्थज्ञानकरणत्वम् । न च याथार्थ्यं ज्ञानकारणातिरिक्तकारणमपेक्षते । याथार्थ्यं ज्ञानकारणातिरिक्तकारणनिरपेक्षम् अयथार्थतातिरिक्तत्वे सति ज्ञानधर्मत्वात् । ज्ञानत्ववत् । याथार्थ्यं न गुणोत्पन्नं ज्ञानधर्मत्वादप्रामाण्यवदित्याद्यनुमानात् । न च ज्ञानधर्मत्वेनायथार्थत्वस्यापि स्वतस्त्वं वाच्यम् । दोषाभावे तदभावनियमात् । प्रमा ज्ञानसामग्रीव्यतिरिक्तकारणजन्याकार्यत्वादिति चेन्न । प्रमाया ज्ञानकारणातिरिक्तकारणजन्यत्वं नाम प्रमात्वस्यैवंविधत्वेन वा ज्ञानस्य वा तत्सम्बन्धस्य वा । नाद्यः । अजन्यत्वात् । न द्वितीयः । व्याहतेः । न तृतीयः । तस्य समवायत्वेनाजन्यत्वादेव । प्रमात्वयुक्तज्ञानस्यैवंविधत्वं साध्यत इति चेन्न । तादृशज्ञानस्यापि ज्ञानकारणातिरिक्तकारणजन्यत्वसाधने व्याघातानिस्तारात् । ज्ञानकारणतदतिरिक्तजन्यत्वं साध्यत इति चेन्न । ईशप्रमायां बाधात् । तदतिरिक्तप्रमापक्षीकारान्नैवमिति चेन्न । तथापि घटादौ व्यभिचारात् । ज्ञानकारणमात्रजन्यत्वाभावः साध्यत इति चेन्न । ज्ञाने व्यभिचारापरिहारात् । ज्ञानातिरिक्तत्वेन हेतुर्विशेष्यत इति चेन्न । ज्ञानेऽपि कार्यत्वेन तत्साधनसौलभ्यात् । विशिष्टाभावविकल्पे व्याघातस्य समीकरणात् । प्रमा गुणजन्या तदन्वयव्यतिरेकित्वादित्येतदपि प्रतिज्ञानिरासेन निरस्तम् ।

किं चेदं गुणान्वयव्यतिरेकित्वमन्यत्रानुपक्षीणं सामान्यं वा । न द्वितीयः । व्यभिचारात् । नाद्यः । दोषनिरासोपक्षीणत्वात् । न चोभयकारणत्वे कल्पकमस्ति । न चैवमप्रमाया अपि स्वतस्त्वम् । तत्र दोषान्वयव्यतिरेकनियमेन दोषाणामुभयकारणत्वकल्पनोपपत्तेः । न चैतत्समं प्रकृतेऽपि । यादृच्छिकायथार्थवाक्यजनितप्रमायां व्यभिचारात् । गुणानां दोषनिरसनव्यापारत्वे

(तत्त्वप्रकाशिका)

दोषाभावोऽपि कारणतयापन्न इति चेन्न । प्रदीपावरणनिवृत्त्यादीनामपि प्रकाशनादिकारणत्वापत्तेः । दोषाभावस्य कारणत्वे च नास्माकमनिष्टम् । तावता वेदापौरुषेयताऽव्याघातात् । प्रमा गुणजन्या प्रमात्वादिति चेन्न । ईशप्रमायां बाधात् । तदतिरिक्तप्रमाः पक्षीक्रियन्त इति चेन्न । तत्रैव व्यभिचारात् । अन्यप्रमात्वं हेतुरिति चेन्न प्रमा गुणजन्या न भवति । प्रमात्वादीश्वरप्रमावदिति प्रतिपक्षसाधनात् । न चाजन्यत्वमुपाधिः । घटादौ व्यभिचारात् । अजन्यप्रमात्वमुपाधिरिति चेन्न । व्याप्त्यभावात् । अतः प्रमाया ज्ञानकारणातिरिक्तकारणनिरपेक्षत्वेन वेदस्य कर्तृगुणनिरपेक्षस्यापि प्रामाण्यसिद्धेर्युक्तमेव तन्नित्यत्वम् । तस्यैवं नित्यत्वात्तद्वाच्यदेवानां चानित्यत्वेऽप्रामाण्यमेव स्यात् । न च तद्युक्तम् । अतस्तत्सिद्ध्यर्थं देवानां नित्यत्वमेवाभ्युपेयम् । तथा च न तेषां वेदविद्याधिकारः । न च वाच्यं कर्मविरोधाभाववदयमपि विरोधः परिहर्तव्य इति । अतीतदेवताप्रवाहे प्रमाणसद्भावेनातीतकालीनविरोधस्यैव परिहर्तुं शक्यत्वात् । उत्तरकालेऽन्यदेवताभावनियमे प्रमाणाभावेन विरोधस्य कर्मण्यपि साम्यात् । न च भारतादिवदतीतविषयतया वेदस्य प्रामाण्योपपत्तिः । तस्य देवताह्वानादिरूपस्य वर्तमानविषयतयावश्यम्भावात् । अतो देवानां नानित्यत्वं युक्तमिति न तेषां वेदाधिकारः इति भावः । परिहारांशं व्याख्याति ॥ **नेति** ॥ यदुदितं वेदो नित्य इति तत्सत्यमेव । तथापि न तस्याप्रामाण्यम् । तद्वाच्यानां देवतानां स्वरूपनित्यत्वाभावेऽपि प्रवाहरूपेण नित्यत्वात् । न च तत्र प्रमाणाभावः । 'सूर्याचन्द्रमसौ' इति श्रुतेरेव । न चेयं श्रुतिरतीतविषयैव देवप्रभवनियमं न प्रमापयतीति वाच्यम् । प्रतिकल्पमपि श्रुत्या यथा विष्णुः पूर्वकल्पे सूर्याचन्द्रमसावकल्पयत् तथाऽस्मिन्कल्पेऽपीति कथने देवानां सर्वकल्पेषु सद्भावसिद्धेः । यथैवेति स्पष्टस्मृत्या च देवानां सर्वकल्पेषु प्रभवसिद्धेः । न च वाच्यं श्रुतावुपचारेणाप्युक्तिः सम्भवतीति न देवप्रभवनियम इति । अतीतानागतविदां महतां श्रुतिसंवादिनो देवप्रभवनियमग्राहकप्रत्यक्षस्य सत्त्वात् । न च परप्रत्यक्षस्याप्रत्यक्षत्वात्तदनिश्चयः । 'यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये । दृश्यन्ते तानि तान्येव तथा भावा युगादिषु' इति तद्वचनान्निश्चयोपपत्तेः । न चायोगिनां श्रुतिप्रत्यक्षयोरविश्वासेनोक्तानिश्चयः । उपरितनकाले देववान् कालत्वात् सम्प्रतिपन्नकालवदिति श्रुतिसंवाद्यनुमानेन तेषां देवप्रभवनियमसिद्धेरिति भावः । न च वाच्यं प्रलयकालो कालत्वहेतोर्व्यभिचारोऽप्रलयकालत्वहेतोः परं प्रति व्यर्थविशेषणत्वमिति । प्रलयस्य प्रमाणसिद्धत्वात् ॥

## गुर्वर्थदीपिका

अनित्यदेवानां तद्वाच्यत्वादित्यत्र तेषां प्रलयेऽभावादिति शेषः । तदेव वाक्यस्याप्रामाण्यमित्यत्र यदर्थशून्यत्वमिति शेषः । प्रमेयत्वेन धर्मादिकं कस्यचित्प्रत्यक्षमिति साधने शशः शृङ्गी प्रमेयत्वाद्गोवदिति विप्रतिपन्नशशशृङ्गाख्यधर्मान्तरस्यापि साधयितुं शक्यत्त्वादाभाससमानयोगक्षेमत्वमिति भावेनाऽऽह ॥ **प्रमेयत्वेनेति** ॥ केवलान्वयिधर्मत्वादित्यस्य सामान्यायोग्यसामान्यादित्रयेऽपि विद्यमानत्वादित्यर्थः । क्वचिदित्यस्य सप्तपदार्थानां मध्य एकत्रेत्यर्थः । अस्वतन्त्रत्वादित्यस्य धर्मिणं विना स्थातुमशक्यत्वादित्यर्थः । धर्मान्तरं अभिधेयत्वादौ पर्वतेतरत्वादिनापि व्याप्तिरस्ति चेदित्यत्र हेतोः साध्येन सह व्याप्तिरस्ति चेदित्यर्थः । अव्याप्तौ स्वयं दुष्टत्वादित्यस्य हेतोरव्याप्तौ सत्यां तत एव स्वयं दुष्टत्वात्किमुपाधिनेत्यर्थः । शरीरमपि तत्र सन्निहितमित्यस्य चेतन एव कर्ता तस्य शरीरं त्वजागळस्तनवत्सन्निहितमेव न तु सहकारीति हि परस्याऽऽशयः । तच्च न युक्तम् । शरीराभावे दण्डताडनचक्रभ्रमणादेरसम्भवेन शरीरस्यापि सहकारित्वादिति वक्ष्यमाणदूषणमनुसन्धेयम् । पामरप्रणीतत्वादौ साम्यादित्यस्य वेदस्य पामरप्रणीतत्वेऽपि निघण्ट्वादिना वेदत्वसम्भवादप्रयोजको हेतुरित्यर्थः । असाधारण्यस्यापीत्यस्य सर्वज्ञप्रणीतभारतादेः सपक्षात् अप्रणीतगगनादेः विपक्षाच्च व्यावृत्ततया पक्षमात्रवृत्तित्वेन भूर्नित्या गन्धवत्वादित्यादौ विद्यमानस्यासाधारण्यस्यात्रापि साम्यादित्यर्थः । चक्रकापातादित्यस्य तेषामसर्वज्ञत्वे सिद्धे वेदकर्तृत्वासम्भवेन सम्प्रदायप्रवर्तकत्वसिद्धिः सम्प्रदायप्रवर्तकत्वसिद्धौ च वेदस्येश्वरकर्तृत्वसिद्धिः तत्सिद्धौ च तेषां वेदकरणसामर्थ्याभावेनासर्वज्ञत्वसिद्धिरिति चक्रकादित्यर्थः । प्रमात्वयुक्तेत्यस्य वस्तुगत्या प्रमात्वयुक्तेत्यर्थः जन्यकोटौ तस्याप्रवेशादिति भावः । ज्ञानकारणतदतिरिक्तकारणेत्यत्र ज्ञानकारणं ज्ञानसामान्यकारणं तदतिरिक्तं गुणादिरूपविशेषकारणमित्यर्थः । ज्ञानकारणमात्रजन्यत्वाभाव इत्यत्र न तावज्जन्यत्वाभावरूपविशेष्याभावाद्विशिष्टाभावः । परेणापि प्रमायां जन्यत्वाङ्गीकारात् । जन्यत्वेऽपि ज्ञानकारणमात्रजन्यत्वरूपविशेषणाभावाद्विशिष्टाभाव इति वदता ज्ञानकारणातिरिक्तकारणजन्यत्वमुक्तं स्यात् । प्रमाकारणस्य सर्वस्यापि ज्ञानकारणत्वेन पुनः पराभिसन्ध्युद्धाटने व्याघात एवेत्याह ॥ **विशिष्टाभावविकल्पेनेति** ॥ अहं ब्राह्मणो नाहं ब्राह्मण इतिवत्स्पष्टं व्याघाताप्रतीतावप्यहं ब्राह्मणो नाहं ब्राह्मणपुत्र इत्यत्रेवार्थतो व्याघातस्यापरिहार एवेत्यतः समीकरणादित्युक्तम् । सामान्यं वेत्यत्र

(गुर्वर्थदीपिका)
अन्यत्रानुपक्षीणोपक्षीणान्वयव्यतिरेकसाधारणधर्मो वेत्यर्थः । तन्तुरूपान्वयव्यतिरेकानुविधायिनि तदजन्ये पटे व्यभिचारादिति भावेनाह ॥ **न द्वितीय इति** ॥ दोषाणामुभयकारणत्व-कल्पनोपपत्तेरित्यभ्युपगमवादोऽयम् ।

वस्तुतो गुणानां प्रमां प्रत्यकारणत्वेन तन्निरोधस्याप्यनपेक्षितत्वादनुपक्षीणावेव दोषान्वय-व्यतिरेकौ । प्रदीपावरणनिवृत्त्यादीनामिति वदत आवरकघटान्तर्दीपस्य प्रकाशनशक्तिदर्शनेन प्रकाशने नावरणनिवृत्तिरपेक्ष्यते किन्तु तस्यैव प्रकाशस्य बहिर्गमनायैवाऽऽवरणनिवृत्तिरपेक्ष्यते प्रकाशनं त्वन्तरिव बहिरपि स्वशक्त्यैवेति भावः । प्राग्यद्यपि 'विरोधः कर्मणि' इति सूत्रे अतीतकल्पन्यायेन भाविकल्पेऽपि विरोधः परिहृतः । तथाऽपि स्पष्टप्रमाणाभावात्कर्मण्यपि विरोधशङ्केति भावेनोक्तं विरोधस्य कर्मण्यपि साम्यादिति । प्रतिकल्पमपि श्रुत्येति वदता श्रुतेर्नित्यत्वाद्भाव्यनन्तकल्पेष्वपि पूर्वं यथा तथेदानीमप्यकल्पयदित्युक्ते भविष्यत्सर्वकल्पेष्वपि देवताप्रभवनियम इत्यत्र हेतुरसूचि । प्रलयमनङ्गीकुर्वतः परस्य व्यावर्त्याभावेन अप्रलयविशेषणं व्यर्थमित्याह ॥ **परं प्रतीति** ॥

## भावबोधः

**धर्मान्तरसाधनापातादिति** ॥ प्रमेयत्वेन विप्रतिपन्नास्मदादिप्रत्यक्षत्वस्यापि साधनापाता-दित्यर्थः ॥ **अस्वतन्त्रत्वादिति** ॥ आश्रयविषयकप्रतीत्यविषयत्वादित्यर्थः ॥ **धर्मान्तरेऽपीति** ॥ ज्ञेयत्वाभिधेयत्वादावित्यर्थः । तथा च तस्यापि नोक्तसाध्ये हेतुत्वं सम्भवतीति भावः । पर्वतेतरत्वादीनामपि व्याप्तिरस्ति वा न वा । आद्यं निरस्यति का नो हानिः । पर्वते-तरत्वादीनामपि व्याप्तिरस्ति चेदिति । द्वितीयं निराह ॥ **अनुमानोपजीवनेन बाधादव्याप्ता-विति** । आप्त्यनिश्चयादिति भाष्यमाप्तिमूलकत्वानिश्चयादित्यपि व्याचष्टे ॥ **अस्तु वेति** ॥ **पामरप्रणीतत्वादौ साम्यादिति** ॥ पामरप्रणीतत्वादौ साध्ये वेदत्वस्य प्रयोक्तुं शक्यत्वेना-भाससमानयोगक्षेममनुमानमित्यर्थः ।

ननु पामरप्रणीतकालिदासादिवाक्यरूपात् सपक्षाद्व्यावृत्तत्वेनोदाहरणमिति चेत्, तर्हि सर्वज्ञप्रणीतभारतादिरूपसपक्षाद् व्यावृत्तत्वेन तत्पक्षेऽप्यसाधारण्यमित्याह ॥ **असाधारण्यस्येति** ॥ **चक्रकापातादिति** ॥ ईश्वरस्य सर्वज्ञत्वे सिद्धे 'तस्माद्यज्ञात्' इत्यादिना वेदस्य

(भावबोधः)

सर्वज्ञप्रणीतत्वसिद्धिः । तत्सिद्धौ वेदस्य प्रामाण्यसिद्धिः । तत्सिद्धौ वेदेन सार्वज्ञ्यसिद्धिरिति चक्रकापातादित्यर्थः ॥ **अदृष्टसम्भावनेऽपीति** ॥ देवदत्तशरीरादिकं देवदत्तविशेषगुणजन्यं कार्यत्वे सति देवदत्तस्य भोगहेतुत्वात् देवदत्तप्रयत्नजन्यवस्तुवदित्यनुमानेनादृष्टस्य सामान्यतः सिद्धावपीत्यर्थः ॥ **आप्तोक्तत्वाभावादिति** ॥ ज्ञानगतयाथार्थ्यस्य गुणजन्यत्वात् वेदे चाप्तोक्तत्वगुणाभावाद्यथार्थज्ञानकरणत्वरूपप्रामाण्याभाव इति भावः । भवेदेतद्यदि ज्ञानगतयाथार्थ्यस्य गुणजन्यत्वं स्यात् । तदेव तु नास्ति । अतो नित्यत्वेऽपि वेदस्य आप्तोक्तत्वगुणाभावेऽपि न प्रामाण्यासिद्धिरित्याशयेन परिहरति ॥ **मैवमिति** ॥ **दोषाभावे तदभावनियमादिति** ॥ तथा च बाध इति भावः । प्रमाज्ञानसामग्र्यतिरिक्तज्ञानकारणजन्येत्यत्र प्रमात्वविशिष्टं वा पक्षस्तदुपलक्षितं वा । तत्राद्यं विकल्प्य दूषयति प्रमाया इत्यादिना । अत्र सर्वत्र ज्ञानकारणपदं तत्सामग्रीपरं पूर्वोत्तरग्रन्थानुरोधादिति ध्येयम् । द्वितीयमाशङ्कते ॥ **प्रमात्वयुक्तज्ञानस्येति** ॥ अत्रापि ज्ञानसामग्र्यतिरिक्तकारणजन्यत्वं किं तन्मात्रजन्यत्वम् उत ज्ञानसामग्रीजन्यत्वे सति तदतिरिक्ताजन्यत्वम् । आद्ये आह ॥ **तादृशज्ञानस्यापीति** ॥ द्वितीयं शङ्कते ॥ **ज्ञानकारणेति** ॥ **ज्ञाने व्यभिचारापरिहारादिति** ॥ प्रमारूपज्ञानविशेषे ज्ञानसामान्यसामग्र्यतिरिक्तजन्यत्वं साधयता सामान्यविशेषसामग्र्योर्भेदो वक्तव्यः । तथा च सामान्यविशेषकार्ययोरपि भेदो वाच्यः । कार्यभेदं विना सामग्रीभेदासिद्धेः । तथा च ज्ञानसामान्ये व्यभिचारापरिहारादित्यर्थः । नन्वत्र ज्ञानसामान्यकारणमात्रजन्यत्वाभावो वा ज्ञानसामान्यकारणातिरिक्तकारणजन्यत्वमात्रं वा साध्यम् । अतः सामग्रीभेदसिद्ध्यर्थं कार्यभेदानङ्गीकारे न व्यभिचार इति चेन्न इन्द्रियादिभिः सिद्धसाधनतेति भावः । ज्ञानत्वरूपसामान्यधर्मावच्छेदेन ज्ञाने व्यभिचारापरिहारादिति निर्विकल्पस्य प्रमाऽप्रमाबहिर्भूतत्वाङ्गीकारेण पक्षसपक्षत्वाभावान्निर्विकल्पने व्यभिचारापरिहारादिति वार्थः ॥ **ज्ञानातिरिक्तत्वेनेति** ॥ ज्ञानसामान्यातिरिक्तत्वेनेत्यर्थः ।

ननु ज्ञानसामान्ये ज्ञानसामग्रीजन्यत्वाभावः सिध्यन् अजन्यत्वेन वा, अतिरिक्तजन्यत्वेन वा सिध्यति । आद्ये– कार्यत्वेन हेतुवाक्येन व्याहतिः । द्वितीये– प्रतिज्ञापदयोरेव व्याघातः । ज्ञानसामान्यहेतौ तदतिरिक्तत्वाभावादित्यत आह ॥ **विशिष्टाभावविकल्पेनेति** ॥ प्रमाया अपि नाजन्यत्वेन विशिष्टाभावपर्यवसानं पूर्ववद्धेतुवाक्यव्याघातादेव नाप्यतिरिक्तजन्यत्वेन प्रमाया

(भावबोधः)

अपि ज्ञानत्वेन तत्कारणस्य ज्ञानसामग्र्यतिरिक्तत्वासम्भवेन प्रतिज्ञापदयोर्व्याघातादित्यत्रापि व्याघातस्य तुल्यत्वादित्यर्थः ॥ **प्रतिज्ञानिरासेनैव निरस्तमिति** ॥ प्रमाज्ञानसामग्री-व्यतिरिक्तकारणजन्येति प्रतिज्ञानिरासेनेत्यर्थः । परतस्त्ववादिना गुणत्वजातेरनङ्गीकारेण गुणशब्देन ज्ञानकरणातिरिक्तकारणस्यैव विवक्षणीयत्वेन पूर्वोक्तव्याघाताद्यापत्तेरिति भावः । कार्यत्वरूपहेतुदोषस्य घटज्ञानयोर्व्यभिचारस्यात्र हेतावसम्भवात् प्रतिज्ञानिरासेनेत्युक्तम् ॥ **प्रमात्वादिति** ॥ तथा च तदन्वयव्यतिरेकत्वादित्यत्रोक्तदोषप्राप्तिरिति भावः ॥ **अजन्यप्रमात्व-मिति** ॥ जन्यप्रमात्वाभाव इत्यर्थः । तेनोक्तदोषपरिहार इति ज्ञातव्यम् ॥ **व्याप्त्यभावादिति** ॥ यादृच्छिकसंवादिदुष्टवाक्यजन्यप्रमायां गुणजन्यत्वाभावेऽपि जन्यप्रमात्वाभावाभावादित्यर्थः ॥ **कर्तृगुणनिरपेक्षस्यापीति** ॥ ज्ञानगतयाथार्थ्यप्रयोजकत्वेनाभिमतकर्तृगुणव्याप्तत्वनिरपेक्षस्यापि यथार्थज्ञानकरणत्वरूपप्रामाण्यसिद्धेरित्यर्थः ॥ **देवताह्वानादिरूपस्येति** ॥ 'एह्यग्न' इत्यादिना मन्त्रेण देवताह्वानाद्यर्थत्वात् तदा देवताभावे तदाह्वानाद्ययोगादिति भावः ॥ **प्रलयस्य प्रमाणसिद्धत्वादिति** ॥ अनेन प्रलयकालत्वं हेतुरित्युक्तं भवति ।

## भावदीपः

शब्दे विरोध इति भाष्यं व्याचष्टे ॥ **अत्रापीत्यादिना** ॥ आद्यन्तवत्त्व इति शेषोक्तिः । यद्यप्यतीतदेवताप्रवाहे प्रमाणसद्भावेनेत्यादिना वक्ष्यमाणदिशा विरोधसूत्रं सादित्वप्रयुक्त-शङ्काव्यावर्तकमिति तदनुरोधेन पूर्वत्र सादित्व इति अत्र तु अनित्यत्व इत्येव वाच्यम् । तथापि आद्यन्तवत्त्वे इति द्वयोरप्युक्तिः पूर्वत्रोक्तसादित्वचोद्योत्तरयोरत्र । अत्रोक्तसान्तत्वचोद्योत्तरयोः पूर्वत्रानुसन्धेयत्वं सूचयितुमित्याहुः ।

नित्यत्वाद्वेदस्येत्यादि व्याचष्टे ॥ **वेदस्येति** ॥ यावता यस्मादित्यर्थः । वाचेत्यादि व्याचष्टे ॥ **वेदस्येति** ॥ आप्त्यनिश्चयादित्येतदवतार्य व्याख्यातुं श्रुतेरन्यथासिद्धिं शङ्कते ॥ **न चेति** ॥ 'अविप्रलम्भस्तज्ज्ञानं तत्कृतत्वादयोऽपि च' । कल्प्या इति 'प्रत्यक्षः कस्यचिद्धर्मो वस्तु-त्वादिति चोदित' इति चानुभाष्यं हृदि कृत्वाऽऽह ॥ **विवादेति** ॥ विवादपदं धर्मा-धर्मादिकमित्यर्थः । अतीन्द्रियापरोक्षिणः सार्वज्ञ्यं कैमुत्यसिद्धमिति भावः ॥ **विप्रतिपन्नेति** ॥ विवादास्पदं धर्मादिकं कस्यचिच्छरीरिणः प्रत्यक्षम् । कस्यचित्सुखिनः प्रत्यक्षं प्रमेयत्वात् घटवदित्यादेरपि सम्भवेनेश्वरे सार्वज्ञ्यसाधनवत् विप्रतिपन्नशरीरसुखदुःखादृष्टा नित्यज्ञानादि-

(भावदीपः)

रूपधर्मान्तरसाधनापातादित्यर्थः ॥ **केवलान्वयीति** ॥ केवलान्वयिनः सामान्यहीनत्वेन प्रसिद्धेषु सामान्यविशेषसमवायाभावेष्वपि सत्त्वादित्यर्थः ॥ **क्वचिदिति** ॥ अन्यथा सप्तपदार्थ-नियमभङ्गापत्तेरिति भावः ॥ **अस्वतन्त्रत्वाच्चेति** ॥ प्रमापरतन्त्रत्वात् प्रमेयरूपाश्रय-परतन्त्रत्वाच्चेत्यर्थः ॥ **एवमिति** ॥ परत्वापरत्वगुरुत्वद्रवत्वादावपि परस्य भाव एव परत्वं न तु ततोऽतिरिक्तमित्यापत्त्या परत्वादेरपि गुणत्वेन पृथग्गणनं न स्यादित्यर्थः ॥ **लङ्घनेति** ॥ लङ्घने जङ्घाशून्यत्वादित्यर्थः । प्राणिस्थादातोर्लजन्यतरस्यामिति जङ्घाशब्दान्मत्वर्थे लच्प्रत्ययः । 'जङ्घालोऽतिजवस्तुल्यौ' इत्यमरोक्तेः ॥ **धर्मान्तरेऽपीति** ॥ अभिधेयत्वव्यापकत्वादिरूपेऽयमेव खण्डनमार्ग इत्यर्थः । पर्वततरत्वादीनां व्याप्तिरस्ति न वा । आद्यं निराह ॥ **का नो हानि-रिति** ॥ द्वितीयं प्रत्याह ॥ **अनुमानेति** ॥ अनुमानं प्रत्युपजीव्येन व्याप्तिग्राहकानुकूल-तर्केणेत्यर्थः । 'अनुकूलेन तर्केण सनाथे सति साधने । साध्यव्यापकताभङ्गात्पक्षे नोपाधि-सम्भव' इति न्यायादिति भावः । पक्षव्यावृत्त्यर्थत्वादित्येतदुपपाद्य असिद्धिपरिहारार्थत्वादित्ये-तदुपपादयति ॥ **न चेत्यादिना** ॥ **सन्निहितमिति** ॥ अवर्जनीयसन्निधि न तु कार्यकारीति तूत्तरत्र समयपादे सम्बन्धानुपपत्तेश्च अन्तवत्त्वमसर्वज्ञता वेत्यत्र निरसिष्यत इत्यथः ॥ **पामरेति** ॥ वेदः पामरप्रणीतः वेदत्वाद्व्यतिरेकेण गगनवदित्यपि प्रयोक्तुं शक्यत्वादित्यर्थः । पामरप्रणीतलौकिकवाक्यात्सपक्षाद्व्यावृत्त्या पक्षमात्रवृत्तेरसाधारण्यं चेत् सर्वज्ञप्रणीतपुराणादितो व्यावृत्त्या पक्षमात्रवृत्तेरसाधारणानैकान्त्यं तवापि तुल्यमित्याह ॥ **असाधारण्यस्येति** ॥ **उक्तेति** ॥ ईश्वरसार्वज्ञ्यासिद्धिरूपोक्तदोषादित्यर्थः । वेदप्रणेतृत्वोक्त्यन्यथानुपपत्या सार्वज्ञं सेत्स्यतीत्यतो व्यभिचारान्नैवमित्याह ॥ **ऋग्वेद एवेति** ॥ **तद्वाक्यादिति** ॥ ऋग्वेद इति वाक्यादित्यर्थः । अविशेषादिति भावः । विशेषमाशङ्कते ॥ **तेषामिति** ॥ समं प्रकृतेऽपि । उक्तदिशा ईश्वरसार्वज्ञस्याप्यसिद्धेरिति भावः ।

यस्सर्वज्ञ इत्यादिवेदेनैव तत्सार्वज्ञसिद्धिरस्त्वित्यत आह ॥ **चक्रकेति** ॥ ईश्वरस्य सर्वज्ञत्वे सिद्धे तस्माद्यज्ञादित्यादिना वेदस्य सर्वज्ञप्रणीतत्वसिद्धिः तत्सिद्धौ च वेदस्य प्रामाण्यसिद्धिः तत्सिद्धौ च वेदेनेश्वरसर्वज्ञत्वसिद्धिरिति चक्रका(श्रया)पातादित्यर्थः । नित्यत्वापेक्षत्वाच्च मूलप्रमाणस्येत्येतद्व्याचष्टे ॥ **किं चेति** ॥ **मूलेति** ॥ अर्थमुपलभ्य रचितत्वं प्रणीतत्वमिति वाच्यत्वादिति भावः तत्किं प्रत्यक्षमनुमानं पौरुषेयवाक्यं वा न त्रयमपीति क्रमेण निराह

(भावदीपः)

॥ **न चेति** ॥ स्वतःप्रामाण्यप्रसिद्धेश्चेत्येतदवतार्य व्याचष्टे ॥ **नन्विति** ॥ न केवलमनित्यत्व इत्यपेरर्थः । स्वतस्त्वेन ज्ञानजनकसहजशक्त्यैव स्वतस्त्वं ज्ञानयाथार्थ्यस्वतस्त्वायत्तमिति भावेन व्यनक्ति ॥ **न चेति** ॥ ज्ञाननिष्ठमित्यर्थः ॥ **याथार्थ्यमिति** ॥ प्रमात्वरूपम् ॥ **ज्ञान-कारणेति** ॥ कारणपदं समग्रकारणपरम् ।

ननु दोषाभावस्य कारणत्वेऽपि नास्माकमनिष्टमित्युपरितनवाक्याद्दोषाभावस्य याथार्थ्ये कारणत्वेन एवंरूपसाध्यस्य साधने बाध इति चेन्न । भावकारणानपेक्षमिति तात्पर्यात् । यद्वा दोषाभावोऽपि न प्रामाण्यकारणम् । यादृच्छिकसंवादिषु सत्यपि दोषे प्रमाणज्ञानोदयादिति तत्वनिर्णयटीकोक्त्या तर्हि दोषाभावः कारणमित्यायातमिति चेन्न । तथा सत्युत्सर्गापवादयोः काप्यभावप्रसङ्गादिति सुधोक्त्या च दोषाभावः कारणं नेति भावेन एवं साध्योक्तिः । अग्रे कारणत्वोक्तिस्तु तावता प्रकृतवेदनित्यत्वाक्षतेरभ्युपेत्यवादेन वा 'निर्दोषः शब्द आगमः' इति प्रमाणलक्षणे आगमोऽदुष्टवाक्यं चेति तत्वनिर्णयादौ च दोषाभावस्याप्युक्त्या दण्डग-तदार्ढ्यादिवत् प्रयोजकत्वाभिप्राया वा ज्ञानजनकत्वशक्तिरेव प्रामाण्यजनकत्वशक्तिरिति पद्धत्युक्त्या ज्ञानजनकशक्तियार्थार्थ्यजनकशक्त्योरेकत्वपक्षे चायं साध्यनिर्देशो बोध्यः । यदा तु दोषवशात् प्रमाजननशक्तिप्रतिबन्धेऽपि ज्ञानजननशक्तेरप्रतिबन्धाज्ज्ञानप्रमाऽपीत्यादिना याथार्थ्यज्ञानजननशक्त्योर्भिन्नत्वमभ्युपेत्य द्वयोः सहजत्वमात्रेण स्वतस्त्वमिति मतं तदाऽति-रिक्तागन्तुकानपेक्षमिति साध्यार्थो बोध्यः । न गुणोत्पन्नमिति साध्ये तु न कापि विवक्षा । दोषसापेक्षाप्रामाण्ये व्यभिचारनिरासाय हेतौ सत्यन्तम् ॥ **स्वतस्त्वमिति** ॥ अयाथार्थ्यं ज्ञानकारणातिरिक्तकारणानपेक्षम् । न दोषोत्पन्नं वा । ज्ञानधर्मत्वात् याथार्थ्यवदित्यर्थः । उभयत्र साध्ये सकृदेव दोषमाह ॥ **दोषाभाव इति** ॥ यादृच्छिकसंवादीति सत्यपि दोषेऽ-याथार्थ्यादर्शनेनान्वयमनुक्त्वा दोषाभावेऽयाथार्थ्याभाव इति व्यतिरेक एवोक्तः । दोषकारणता-ग्राहकमानबाध इत्यर्थः । न चैवं गुणेऽस्ति । गुणाभावेऽपि यादृच्छिकस्थले याथार्थ्योपलम्भेन व्यतिरेकव्यभिचारादिति भावः ॥ **प्रमेति** ॥ अत्र प्रमात्वतदाश्रयतत्सम्बन्धानामन्यतमस्यै-तत्साध्यते । त्रयाणां विशेषणविशेष्यभावापत्त्या विशिष्टस्य वेति विकल्प्याऽद्येऽपि कस्येति विकल्प्य दोषमाह ॥ **प्रमात्वस्येति** ॥ द्वितीयं शङ्कते ॥ **प्रमात्वेति** ॥ किं ज्ञानकारणाति-रिक्तमात्रजन्यत्वं साध्यं किं वा ज्ञानत्वप्रयोजककारणजन्यत्वे सत्यतिरिक्तकारणजन्यत्वम् ।

(भावदीपः)

आद्ये आह ॥ **तादृशेति** ॥ द्वितीयं शङ्कते ॥ **ज्ञानेति** ॥ व्यभिचारात् कार्यत्वहेतोरित्यर्थः । बाधव्याहतिनिरासाय शङ्कते ॥ **ज्ञानकारणेति** ॥ विशिष्टाभावश्च अतज्जन्यत्वेन वा तज्जन्यत्वेऽप्यधिकजन्यत्वेन वा सर्वथैवाजन्यत्वेन वा त्रेधा घटते । दृष्टान्ते घटादावाद्यमादाय पक्षे द्वितीयमादाय ईश्वरज्ञाने त्वन्त्यपक्षमादाय पर्यवसानात् इष्टसिद्धिरव्याघातो नेश्वरज्ञाने बाधश्चेति भावः । हेतुः कार्यत्वम् । ज्ञानव्यावृत्तिर्व्यर्था प्रमायामिव तत्राप्युक्तसाधन-सम्भवादित्याह ॥ **ज्ञानेऽपीति** ॥

ननु ज्ञानेऽपि ज्ञानहेतुमात्रजन्यत्वाभावसाधने व्याघात इत्यत आह ॥ **विशिष्टेति** ॥ यथा विशिष्टाभावः प्रमायामधिकजन्यत्वाभावेन पर्यवस्यतीति न व्याघात इत्युच्यते । तथा ज्ञानेऽप्यधिकजन्यत्वेन पर्यवसानोक्त्या व्याघातस्य समाधातुं शक्यत्वादित्यर्थः । भ्रमेऽपि धर्म्यंशे प्रमात्वस्य सत्त्वेन ज्ञानत्वसमनियतस्य प्रमात्वस्याधिकप्रयोज्यत्वे ज्ञानत्वेऽपि तथात्वस्य सम्भवात् । ज्ञानत्वं भ्रमे गुणव्यभिचारि चेत् प्रमात्वमपि यादृच्छिकसंवादीति तथेति सममिति भावः । व्याघातस्येत्युपलक्षणम् । ईशज्ञाने बाधस्यापि समाधातुं शक्यत्वादित्यपि ध्येयम् ॥ **प्रतिज्ञेति** ॥ परेणापि गुणत्वजातेरनङ्गीकारेण गुणपदेन ज्ञानकारणातिरिक्तकारणस्यैव वाच्यत्वेन पूर्वोक्तव्याघाताद्यापत्तेरित्यर्थः । हेतुं च निराह ॥ **किं चेति** ॥ व्यभिचारात् । दण्डरूपादौ घटं प्रति कारणत्वाभावादित्यर्थः । तस्माद् गुणेभ्यो दोषाणामभावस्तदभावतः । अप्रामाण्यादयो भावास्तेनोत्सर्गोऽनयोदित इत्युक्त्यनुरोधेनाऽऽह ॥ **दोषनिरासेति** ॥ **उभयेति** ॥ प्रामाण्यजननदोषनिरासरूपोभयेत्यर्थः ॥ **न चैवमिति** ॥ गुणानां दोषनिरासोप-क्षीणत्वे दोषाणामपि गुणनिरासोपक्षीणत्वसम्भवात् ज्ञानकारणमात्रजन्यत्वरूपं स्वतस्त्वं स्यादित्यर्थः ॥ **दोषान्वयेति** ॥ दोषे सत्येवाप्रामाण्यं तदभावे तदभाव इत्यन्वयव्यतिरेक-नियमेनेत्यर्थः । यादृच्छिकसंवादिनि सत्यपि दोषेऽप्रामाण्यानुत्पत्तिस्तु विषयसत्त्वादेर्दोष-प्रतिबन्धकस्यासत्त्वादिति भावः ॥ **उभयेति** ॥ गुणास्त्वकिञ्चित्करा इति पद्धत्युक्त्या दोषाणां गुणनिरासकत्वेऽपि न हानिस्तथाप्यभ्युपगमोक्तिरियम् ॥ **व्यभिचारादिति** ॥ गुणाभावेऽपि प्रमाया जायमानत्वादिति भावः । तत्र विषयसत्त्वादिकमेव गुण इति त्वन्यत्र निरस्तं बोध्यम् । अभ्युपेत्यवादेनाऽऽह ॥ **दोषाभावस्येति** ॥ कारणतावच्छेदकप्रतिबन्धकाभावसाधारण-प्रयोजकत्वमात्राभिप्रायेण वा कारणत्वोक्तिः । अन्यथा प्रागुक्ततत्वनिर्णयटीकासुधावाक्याभ्यां

(भावदीपः)
विरोधापातात् । न च स्वतस्त्वभङ्गः । ज्ञानजननशक्तिवत् प्रमाजननशक्तेः सहजत्वमात्रेण स्वतस्त्वोपपत्तेः । अप्रामाण्यं तु दोषाहितशक्त्येति वैषम्यम् । उक्तं च प्रथमपादीयसुधायां इन्द्रियादीनामौत्सर्गिकी शक्तिः प्रामाण्यजनने दोषापवादादप्रामाण्यमुपजनयतीति । व्यतिरेकिणमाशङ्कते ॥ **प्रमेति** ॥ **अजन्यप्रमात्वमिति** ॥ जन्यप्रमात्वाभाव इत्यर्थः ॥ **व्याप्तीति** ॥ यादृच्छिकसंवादिदुष्टवाक्यजन्यप्रमायां साध्ये सत्युपाध्यभावादित्यर्थः । अतो गुणजन्यत्वे मानाभावात् तदजन्यत्वे मानभावाच्चेत्यर्थः । भाष्ये देवानामनादिनित्यत्वा-दित्यनुक्त्वा नित्यत्वादित्युक्तेरभिप्रायं व्यञ्जयितुमाह ॥ **न च वाच्यमिति** ॥ **प्रमाणेति** ॥ नेह नाकमिति प्रमाणेत्यर्थः ॥ **अतीतेति** ॥ शब्दे कर्मणि चोभयत्रेत्यर्थः । तथा च पूर्वत्र कर्मणीतिशब्दे इत्यस्याप्युपलक्षणमिति भावः ॥ **कर्मण्यपि साम्यादिति** ॥ शब्द इति सूत्रे कर्मणि चोभयत्रेत्यर्थः । तथा च पूर्वत्र कर्मणीतिशब्दे इत्यस्याप्युपलक्षणमिति भावः ॥ **कर्मण्यपि साम्यादिति** ॥ शब्द इति सूत्रे कर्मणि चेत्यनुवर्त्यं वा उपलक्ष्यं वेति भावः ॥ **देवताह्वानेति** ॥ इन्द्रागच्छ, हरे आगच्छेत्यादिरूपस्येत्यर्थः । नेति नञा निषेध्यं दर्शयन् तेषां प्रभवनियमादिति भाष्यं व्याचष्टे ॥ **यदिति** ॥ **न तस्याप्रामाण्यमिति** ॥ विरोध इति पदं नञाऽन्वेतीति सूचितम् । सूर्येत्यादिभाष्यं व्याचष्टे ॥ **न च तत्रेति** ॥ **तथैवेति** ॥ वचनोक्ति-रुपयोगं वक्तुमाह ॥ **न च वाच्यं श्रुताविति** ॥ तामेव सूर्यादिव्यक्तिं पूर्वप्रकारेणा-कल्पयदित्यादिरूपेणेत्यर्थः । यथर्तुष्विति सम्भवपर्वण्याद्येऽध्याये सौतिवचनम् । यथेत्यादिरुप-योगम् इतरेषामिति पदार्थं वदन्नाह ॥ **न चायोगिनामिति** ॥ परं प्रति अप्रलयवादिनं पूर्वपक्षिणं प्रति ॥ **प्रलयस्येति** ॥ अपश्यमप्यये मायया यत्प्रयन्ति आकाशं प्रत्यस्तं यन्ति नासदासीन्नो सदासीत्तदानीं यमप्येति भुवनं य इदं सर्वं विलापयति स रुद्रेण विलापयति क्रमाद्विलीयते व्युत्क्रमाद्विलयश्चेत्यादिश्रुतिभिः ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रति सञ्चर इति यस्मिंश्च प्रलयं यान्तीत्यादिस्मृतिभिस्सिद्धत्वादित्यर्थः ॥

## अभिनवचन्द्रिका

**वेदाप्रामाण्याख्येति** ॥ वेदाप्रामाण्याख्यदोषापातादित्यर्थः । ननु 'नदीतीरे पञ्च फलानि सन्तीति वाक्यार्थस्य फलादेरनित्यत्वेऽपि वाक्यप्रामाण्यदर्शनात् वाच्यानित्यत्वेन वेदाप्रामाण्या-पादनमयुक्तमित्यत आह ॥ **वेदस्येति** ॥ वेदस्य नित्यत्वात् परेणाऽनित्यवेदानां

(अभिनवचन्द्रिका)

वाच्यत्वाङ्गीकारादप्रामाण्यापादनं युक्तमित्यर्थः । भवेद्वाच्यानित्यत्वेऽपि लौकिकवाक्यप्रामाण्यं, वाक्यस्याप्यनित्यत्वात् । नैवं वेदे सम्भवति । तस्य नित्यत्वादिति भावः । अस्तु वेदस्य नित्यत्वं तथापि लौकिकवाक्यवत् प्रामाण्यं किं न स्यादित्यत आह ।। **वाच्यहीनया इति** ।। वाचः वेदवाचः । इदमुक्तं भवति । भवेदनित्यार्थस्यापि लौकिकवाक्यस्य प्रामाण्यम् । तस्य विषयोत्पत्त्यनन्तरमेव प्रमाणान्तरेण तमर्थं निश्चितवता उत्पन्नत्वेन 'घटोऽस्ति' इत्यादि-वाक्यस्य वाच्यहीनत्वाभावात् । यत्तु घटविनाशानन्तरं घटोऽस्तीति वाक्यं तदप्रमाणमेव । अन्यच्च पूर्ववाक्यात्तद्वाक्यम् । एवम् 'आसीत् घट' इति वाक्यं घटस्य ध्वंसप्रतियोगित्वमाह । अस्ति च वाक्यसमये तद्वाच्यध्वंसप्रतीयोगित्वमिति वाच्यहीनत्वाभावात् भवति प्रमाणम् । एवं विद्यमानेऽपि घटे 'आसीदत्र घट' इति यदा ब्रूते तदपि वाक्यं प्रमाणं, विशेष्यस्य ध्वंस-प्रतियोगित्वाभावेऽपि तत्क्षणसम्बन्धरूपविशेषणविनाशेन विशिष्टस्य ध्वंसप्रतियोगित्वात् । एवं भविष्यदर्थानां लौकिकवाक्यानां प्रामाण्यमूह्यम् । नैवं वेदे सम्भवति, इन्द्रादिनाशानन्तरं तदागमनादिप्रतिपादकवाक्यानां वाच्यहीनत्वात् । न च लौकिकवाक्यवत् समानकालिकवाक्ये प्रामाण्यं प्रतिपत्तुं शक्यम्, अप्रमाणीभूतोत्तरवाक्याभिन्नत्वात् । न हीन्द्रादीनां वर्तमान-दशापन्नाद्वेदवाक्यादिदमन्यत् । येनाऽस्य वाक्यस्याऽप्रामाण्येऽपि तस्य प्रामाण्यं प्रतिपद्येमहि । एवमुक्तप्रकारेण वाच्याऽनित्यत्वे वेदप्रामाण्याऽसम्भवात् युक्तमप्रामाण्यापादनमिति । ननु चक्षुरादीन्द्रियविषयनाशे अनुत्पादे च सतश्चक्षुरादेः नाप्रामाण्यं दृष्टं, तत्कथमुच्यते विषयाभावे वाक्याप्रामाण्यमित्यत आह ।। **यावतेति** ।। सदा विषयीकारित्वात् वाक्यस्य विषयाऽसाहित्यं वाक्यस्याऽप्रामाण्यं न प्रत्यक्षस्येति भावः । ननु वेदप्रामाण्यसंरक्षणाय यदि तद्वाच्यानां नित्यत्वमुच्यते तर्हि तद्वाच्यानां सर्वपदार्थानां नित्यत्वं वाच्यम् । न च तद्युक्तं, वेदाप्रामाण्यप्रसङ्गात् । तथा हि वेदे तावत् आख्यायिकाः श्रूयन्ते । इन्द्रो वै वृत्रं हत्वा महानभवदित्याद्याः । न च वृत्रादीनां नित्यत्वे हत्वेति युज्यते बाधात् । नापि तन्महत्वस्य नित्यत्वे महानभवदित्यादि युज्यत इति चेत्, न आख्यायिकानामिन्द्रादिदेवतोत्कर्षमात्रपरत्वेन स्वार्थे तात्पर्याङ्गीकारात् । न ह्यतात्पर्यविषयार्थाभावेनाऽप्रामाण्यं दृष्टम् । अन्यथा 'तत्त्वमसि' इत्यादिवाक्यानामप्यप्रामाण्यं स्यादिति ।। **विप्रतिपन्नधर्मान्तरेति** ।। क्षणिकत्वादिसाधना-पातादित्यर्थः ।। **किं चेदं प्रमेयत्वमिति** ।। किमाक्षेपे । यावत्पदार्थातिरिक्तत्वात् गगनारविन्द-वदसदेवेति भावः । तदेवोपपादयति ।। **न तावत्सामान्यमिति** ।। जातिस्तावन्नेत्यर्थः ।

(अभिनवचन्द्रिका)

**केवलान्वयिधर्मत्वादिति** ॥ केवलान्वयिधर्मत्वादित्यर्थः । जातिस्तावत्सामान्यादौ व्यतिरेकोऽस्ति । न च प्रमेयत्वस्य तदुपलभ्यते । तस्मान्नेदं जातिरिति भावः । एतेन केवलान्वयिधर्मत्वादित्यनेन तस्य सत्वमङ्गीकृत्य तदाक्षेपोऽनुपपन्न इति परास्तम् । ननु प्रमेयत्वस्य जातित्वाभावेऽपि उपाधित्वात् गगनारविन्दवत् न निस्स्वरूपमित्यत आह ॥ **उपाधित्वेऽपीति** ॥ अपेक्षितत्वादित्यतः परम् अन्तर्भावाभावान्निस्स्वरूपत्वमेवेति ग्राह्यम् । ततश्चैवं योजना । उपाधित्वेऽपि न द्रव्यादिवदनन्तर्भाविन पदार्थत्वं किं तर्हि क्वचिदन्तर्भाविनैव । न चास्याऽन्तर्भावो दृश्यत इति निःस्वरूपत्वमेवेति । सम्भावितत्वात् सामान्यान्तर्भावं प्रथमतो निराकृत्य द्रव्यादिषु अन्तर्भावं निराकर्तुमाह ॥ **न तावदद्रव्यमित्यादिना** ॥ **अस्वातन्त्र्यादिति** ॥ नियमेन परधर्मतया प्रतीयमानत्वादित्यर्थः ॥ **गुणादावपीति वृत्तेरिति** ॥ अङ्गीकारादिति शेषः । एतेन गुणादौ वृत्तिः सिद्धा वा न वा । आद्ये न निःस्वरूपत्वं, सत्वात् । द्वितीये त्वसिद्धिरिति परास्तम् ॥ **असम्बन्धत्वादिति** ॥ सम्बन्धानिरूप्यत्वादित्यर्थः । एतेन समवायत्वसन्देहे सम्बन्धत्वसन्देहस्यापि भावात् सन्दिग्धासिद्धिरिति परास्तम् ॥ **अनित्येऽपि वृत्तेरिति** ॥ अङ्गीकारादिति शेषः । एतेनानित्यवृत्तित्वे सस्वरूपत्वापत्त्या निःस्वरूपत्वसाधनमयुक्तमिति परास्तम् ॥ **न चाभाव इति** ॥ अभावस्य प्रतियोगिसापेक्षत्वात् । अस्य च प्रतियोगिनिरपेक्षत्वादिति भावः । अतः परं टीकायां श्रूयमाणानि 'प्रमेयस्य भाव एव प्रमेयत्वं न तु ततोऽतिरिक्तमिति चेत् सत्यं भावभवित्रोर्भेदे पुनरुक्तानतिवृत्तेः, भावस्य पृथगभावे तच्छब्दयोः पर्यायतापातात् । एवं परत्वापरत्वादिगुणानामपि दत्तजलाञ्जलिता स्यात्' इति वाक्यानि प्रक्षिप्तानि, न टीकावाक्यानि । अवश्यं चैतदेवं विज्ञेयम् । प्रमेयत्वस्य गुणकर्मादिप्रमेयभावान्तर्भावस्य दूषितत्वेन पुनरन्तर्भावशङ्कानुदयात् । सत्यमित्यस्य पञ्चम्यन्तोत्तरवाक्यद्वयेनान्वयाच्च, प्रमेयत्वाख्यः सप्तपदार्थातिरिक्तः पदार्थ इति शङ्काभिप्रायवर्णनेऽपि भावभवित्रोर्भेदेऽपि पुनरुक्तानतिवृत्तेरिति परिहारासङ्गतेश्च । परत्वापरत्वादिनिरासस्य प्रकृतासङ्गतेश्च ।

अन्तर्भावसम्भवात् प्रमेयत्वमुपाधिरिति भावेन शङ्कते ॥ **प्रमा तद्विषयेति** ॥ **धर्मान्तरेऽपीति** ॥ अभिधेयत्वादावित्यर्थः । तथा च नोक्तसाध्ये हेतुत्वं सम्भवतीति भावः ॥ **शरीरिजन्यत्वोपाधेरिति** ॥ शरीरिजन्यत्वोपाधेरित्येव पाठः साधुः । एतेन साध्योपाध्योरैक्यं परास्तम ॥ **का नो हानिरिति** ॥ पर्वतेतरत्वादीनां व्याप्तिरस्तीति चेत् तेषामुपाधित्वं वास्तवमिति

(अभिनवचन्द्रिका)

तेषामुपाधित्वापादने का नो हानिरित्यर्थः ॥ **अनुमानेति** ॥ उपाधित्वप्रयोजकव्याप्तिशून्यत्वेन दृष्टत्वात् आपादनमेवायुक्तमिति भावः ॥ **तथात्व इति** ॥ असिद्धिवारकस्य विशेषणस्याप्रयोक्तव्यत्वे व्यभिचारवारकविशेषणस्यापि अप्रयोक्तव्यत्वं स्यात् । अविशेषादिति भावः ॥ **व्याप्तिवदिति** ॥ व्याप्तिवत् पक्षधर्मताया आवश्यकत्वात् तत्संपादकयोर्विशेषणयोरविशेष इति भावः ॥ **पामरप्रणीतत्वादाविति** ॥ पामरप्रणीतत्वादौ साध्ये वेदत्वस्य हेतोः व्यतिरेकसहचारसाम्यमित्यर्थः । ननु काळिदासप्रणीतवाक्ये पामरप्रतीतरूपसाध्यस्य सत्त्वेऽपि वेदत्वहेतोरभावेनाऽसाधारण्यमित्यत आह ॥ **असाधारण्यस्येति** ॥ सार्वज्ञादिमता प्रणीतभारतादौ साध्यसत्वेऽपि हेतोरभावेन पूर्वानुमानेऽप्यसाधारण्यमित्यर्थः ॥ **चक्रकापातादिति** ॥ अग्न्यादीनामसार्वज्ञासिद्धौ 'ऋग्वेद एवाग्नेरजायत' इति वाक्यसंप्रदायप्रवर्तकत्वप्रतिपादकत्वसिद्धिः । तत् सिद्धौ च 'तस्मात् यज्ञात्' इति वाक्यस्य ईश्वरप्रणीतत्वप्रतिपादकत्वसिद्धिः, तत्सिद्धौ च वेदप्रामाण्यसिद्धिः । तत्सिद्धौ च वेदेन अग्न्यादीनामसार्वज्ञसिद्धिरिति ॥ **ज्ञानत्ववदिति** ॥ ज्ञानत्वस्य जातित्वेन नित्यतया ज्ञानकारणातिरिक्तकारणनिरपेक्षत्वरूपसाध्यं द्रष्टव्यम् ॥ **ज्ञाने व्यभिचारापरिहारादिति** ॥ प्रमाप्रमाबहिर्भूते निर्विकल्पकज्ञाने गुणदोषयोरुभयोरपि अजनकत्वेन ज्ञानकारणमात्रजन्यत्वस्य वक्तव्यत्वात् कार्यत्वहेतोस्तत्र व्यभिचार इत्यर्थः । कुतस्तस्मिन् ज्ञाने गुणदोषयोरुभयोरपि अजनकत्वमिति चेत्, प्रमाप्रमाबहिर्भूतत्वादेव। यद्वा अप्रमात्वधर्मिणि ज्ञाने व्यभिचार इत्यर्थः । अप्रमात्वस्य परतस्त्वसिद्ध्ये तदाश्रयीभूतज्ञाने दोषजन्यत्वाभावस्य वक्तव्यत्वात् । अन्यथा तस्यापि स्वतस्त्वं स्यादित्यर्थः ॥ **ज्ञानातिरिक्तत्वेनेति** ॥ उक्तज्ञानद्वयातिरिक्तत्वेनेत्यर्थः ॥ **ज्ञानेऽपीति** ॥ निर्विकल्पकज्ञानादावपि कार्यत्वेन ज्ञानकारणमात्रजन्यत्वाभावसाधने व्यभिचारपरिहारस्य कर्तुं शक्यत्वेन किं हेतोर्विशेषणदानप्रयासेनेति परिहासः ॥ **तदिदमुक्तं सौलभ्यादिति** ॥ एतेन निर्विकल्पकज्ञानादौ ज्ञानकारणमात्रजन्यत्वाभावसाधनेन व्यभिचारपरिहारे परस्य नानिष्टं प्रत्युत तवैवानिष्टमिति परास्तम् । परिहासमात्रे तात्पर्येण तत्साधने अतात्पर्यात् । ननु नेदं साधने घटते । निर्विकल्पकज्ञानादेः गुणदोषाभ्यामजन्यत्वस्य सिद्धत्वेन ज्ञानकारणमात्रजन्यत्वाभावसाधने अजन्यत्वप्राप्त्या कार्यत्वं हेतुना व्याघातादित्यत आह ॥ **विशिष्टाभावविकल्पेनेति** ॥ प्रमापक्षकानुमाने विशिष्टाभावः किं प्रमात्वे साध्यते, उत सम्बन्धे, उत ज्ञाने इति विकल्पेन प्रथमद्वितीययोः नित्यत्वेन निरासे, तृतीये ज्ञानकारणातिरिक्तकारणजन्यमिति प्रतिज्ञापदयो-

(अभिनवचन्द्रिका)

व्याघात इत्यर्थः ॥ **प्रतिज्ञानिरासेनेति** ॥ गुणशब्देन ज्ञानसामग्रीविवक्षायाम् सिद्धसाधनप्रसङ्गेन ज्ञानकारणातिरिक्तसामग्रीविवक्षितेति वाच्यम् । तथा च पूर्वोक्तव्याघात इति प्रतिज्ञानिरासेन निरस्तमित्यर्थः । **उभयकारणत्वकल्पनोपपत्तेरिति** ॥ गुणनिरासेऽप्रमाण्ये च कारणत्वकल्पनोपपत्तेरित्यर्थः । **यादृच्छिकयथार्थवाक्यजनितप्रमायामिति** ॥ ननु यादृच्छिकवाक्यजनितज्ञानं न प्रमा, दुष्टकरणजन्यत्वात् । दोषस्य तावदसदर्थप्रतीतिजनकत्वं स्वभावः, संवादस्तु नास्त्येव । यादृच्छिकवाक्यजनितं ज्ञानं नदीतीरगतपञ्चफलान्यपहाय अप्रामाणिकपञ्चफलान्यवगाहते । करणस्य अप्रमाणत्वेन असदर्थावगाहित्वात् । न हि अन्यविषयाणि करणानि अन्यविषयकं ज्ञानं जनयन्तीति सांप्रतम् । चक्षुषो गन्धज्ञानजनकत्वप्रसङ्गात् । एवं च नदीतीर एव प्रत्यक्षादिना जायमानं सदर्थविषयकं ज्ञानं अन्यदेव ज्ञानविषययोर्विवेकाग्रहात् । ज्ञानयोः संवाद इत्यभिमानमात्रम् । अवश्यं चैतदेवं विज्ञेयम् । वाक्यप्रयोक्ता तावदविद्यमानफलतात्पर्येण वाक्यं प्रयुक्तवानिति तद्वाक्यं तत्परमेव । अन्यथा प्रतारको न स्यात् । यद्यपि पञ्चफलानि सन्तीत्येव वाक्यप्रयोगः, तथापि असत्फलपरमेव तद्वाक्यम् । तद्यथा गामानयेत्युपाध्यायप्रयुक्तं तद्वाक्यं गोविशेषपरं गोमात्रस्यानयनाऽसम्भवात् । अतश्च गोविशेषपरम् । यदि गामानयेत्युक्तः छात्रः अनभिमतां गामानयति, 'खण्डिकोपाध्यायः तस्मै च पेटिकां ददाति, 'अन्यां त्वं गामानयसि' इति । ततश्चासदर्थकवाक्याज्जायमानं ज्ञानं असदर्थविषयकमेव युक्तम् । करणफलयोरेकविषयत्वनियमादिति चेत्–

'ध्यात्वा वराहमतुलं मुहूर्तं तत्प्रसादतः ।
उच्यतेऽत्र समाधानं येनात्मा सम्प्रसीदति' ॥

तथाहि – यद्यपि वाक्यमप्रमाणम्, तथापि विज्ञानं प्रमा, प्रमाणादपि वेदवाक्यात् प्रतिपत्तृदोषवशात् अप्रमोत्पत्तिवत्, अप्रमाणादपि वाक्यात् भगवदिच्छावशेन प्रमोत्पत्तिसम्भवात् । यादृच्छिकसंज्ञापि एतमेवार्थमवगमयति । 'यदृच्छा च तदिच्छा स्यात्' इत्युक्तेः । प्रमाणानामप्रमाण्यस्येव अप्रमाणानां प्रामाण्यस्यापि परतस्त्वात् । अन्यथा वेदस्य यथार्थविषयकत्वेन असदर्थावगाहिज्ञानजनकत्वं न स्यात् । अन्यविषयकस्य करणस्य अन्यविषयकज्ञानजनकत्वासम्भव इति वक्तुं शक्यत्वात् । यच्चोक्तं संवादस्तु नास्त्येवेति, तत्तु वाक्यबोधितफलान्यन्यानि, प्रत्यक्षदृष्टानि त्वन्यानि'इत्यनुभवाभावात् प्रत्युत यदृच्छया संवादो जात इति

(अभिनवचन्द्रिका)

अनुभवाद्यायुक्तम् ॥ **व्याप्त्यभावादिति** ॥ धर्म्यंशप्रमायां गुणजन्यत्वाभावेऽपि जन्यप्रमात्वेन अजन्यप्रमात्वाभावात् व्यभिचार इति भावः ॥ **अनित्यत्वेऽप्रामाण्यमेव स्यादिति** ॥ घटनाशानन्तरं घटोऽस्तीति वाक्यस्येव देवविनाशानन्तरं तत्प्रतिपादकवेदवाक्यस्य अप्रामाण्यमेव स्यादित्यर्थः । ननु देवानामनादिनित्यत्वे द्वौ विरोधौ । उद्देशाभावेन कर्मणि विरोधो, वाच्याभावेन शब्दे विरोध इति । तत्र देवानामनुत्पन्नत्वेऽपि सजातीयदेवतान्तरभावेन कर्मणः सोद्देश्यत्वमङ्गीकृत्य यथा विरोधः परिहृतः तथा देवानां विनाशोऽपि सजातीयदेवतान्तरोत्पादने तैरैक्यविषयत्वमङ्गीकृत्य शब्देऽपि विरोधः परिह्रियतां किं नित्यत्वाङ्गीकारेणेत्याशङ्क्य निषेधति ॥ **न च वाच्यमिति** ॥ अभावशब्दोऽत्र परिहारवचनः । ततश्च कर्मविरोधपरिहारवदयमपि विरोधः परिहर्तव्य इति न च वाच्यमिति योजना । कुतो न वाच्यमिति चेत् न वैषम्यात् । अनित्यं तावत् कर्म, तच्चोद्देश्यमात्रमपेक्षते । प्रतिसांवत्सरिकश्राद्धादौ यः यदा ब्राह्मणः संपन्नः तद्भोजनेन तस्य श्राद्धस्य साद्गुण्यवत् यदा यो देवः सपंन्नः तस्योद्देश्यत्वमात्रेण कर्मणः साद्गुण्यं सम्भवति । न तु देवताप्रवाहेण वेदप्रमाणमपि सम्भवति । तथाहि वेदस्य नित्यत्वात् देवानाम-नित्यत्वात् न वाच्यवाचकभावसम्बन्ध औत्पत्तिकः । किं तु पूर्वदेवावसाने पुनरन्यभावे च सति इन्द्रादिशब्दान् तत्र तत्र संकेतयित्वा अयमस्य वाचक इति कल्पनीय इति काल्पनिकः सम्बन्धः । ततश्च कचतटपादिवर्णमालावत् अप्रामाण्यं दुष्परिहरमिति दूषणे । सत्यपि तच्छिष्यैरेवोह्यतामिति दूषणान्तरमाह ॥ **अतीतदेवताप्रवाह इति** ॥ **वर्तमानविषयता-वश्यम्भावादिति** ॥ देवताह्वानादेः फलदानायागमनार्थत्वादतीतस्य चागमनफलदानयोर-सम्भवात् वर्तमानविषयतावश्यंभावात् नातीतविषयत्वमित्यर्थः ॥ **स्वरूपनित्यत्वाभावेऽपीति** ॥ नन्वत्रोक्तं स्वरूपनित्यत्वाभावे शब्दार्थसम्बन्धः काल्पनिक आपततीति, सत्यमुक्तं दुरुक्तं तत्, वेदेनैव 'यथापूर्वमकल्पयत्' इति स्वविषयस्यैकरूपत्वमेव न त्वैक्यमित्यभिधानात् ।

अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ।
ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः ।
वेदशब्देभ्य एवासौ निर्ममे स महेश्वरः ॥

इति स्मृतेश्च । ततश्चार्थसम्बन्धस्य प्रामाणिकत्वात् कचतटपादिवत् नाऽप्रामाण्यमिति भावः ॥ **न चेयं श्रुतिरिति** ॥ 'सूर्याचन्द्रमसौ' इति श्रुतिः अतीतकल्पविषया । ततश्चाऽतीत-

**(अभिनवचन्द्रिका)**

कल्पेषु देवताप्रवाहनियमं प्रमापयति, नोत्तरकल्पेष्विति न वाच्यमित्यर्थः । अतः प्रभवात्' इति सूत्रखण्डार्थमाह ॥ **भाष्ये अत एव शब्दात्तेषां प्रभवनियमावगमादिति** ॥ **श्रुतिसंवादा-द्यनुमानेनेति** ॥ श्रुतिमात्रस्याविश्वसनीयत्वेऽपि अनुमानमात्रस्य कामचारित्वेऽपि मिलितयोः साधकमक्षतमेवेति भावः ।

## वाक्यार्थमुक्तावली

**शब्दे विरोध इत्येतद्योजयति अत्रापीति** ॥ आद्यन्तवत्व इति तदुपरीत्यस्याकृष्ट-स्यार्थतोऽनुवादः । नित्यत्वादित्यादि व्याचष्टे ॥ **वेदस्येत्यादिना** ॥ यावता यस्मात् तदेव वाच्यहीनत्वमेव ॥ **उपचारेति** ॥ बहुकालीनत्वेनोपचारमात्रमित्यर्थः । **कर्तृसार्वज्ञेति** ॥ अनन्तवेदविवक्षितार्थतत्वज्ञानस्य सार्वज्ञ्यरूपत्वादिति भावः ॥ **विवादपदमिति** ॥ वेदार्थभूतं सर्वमित्यर्थः ॥ **विप्रतिपन्नधर्मान्तरेति** ॥ सन्दिग्धास्मदादिप्रत्यक्षत्वस्यानित्यत्वादेव धर्मान्तर-स्येत्यर्थः ॥ **किं चेदमिति** ॥ हेतूकृतं प्रमेयत्वं च किमित्यर्थः ॥ **केवलान्वयीति** ॥ निः-सामान्यतया प्रसिद्धसामान्यादित्रिके अभावे च केवलान्वयितया सत्वात्तस्यासामान्यत्वा-योगादित्यर्थः ॥ **क्वचिदिति** ॥ सामान्य एवान्तर्भावस्तस्य जात्युपाधिभेदभिन्नत्वादिति चेन्न । उपाधिरूपसामान्येऽपि प्रमेयसद्भावेन सामान्यभेदोपाधित्वानुपपत्तौ तदतिरिक्तत्वकल्पनायां क्वचिदन्तर्भावस्य वक्तव्यत्वात् । अन्यथा पदार्थसाप्तविध्यभङ्गादित्याशयात् ॥ **अस्वतन्त्रत्वा-दिति** ॥ द्रव्यगुणाद्याश्रयं विना स्थातुमशक्यत्वादित्यर्थः । आश्रयप्रतीतिनिरपेक्षेण प्रत्येतु-मशक्यत्वादिति वः ॥ **प्रमेयस्य भाव इति** ॥ तत्प्रमेयस्य भाव इत्यर्थः । तथा च पदार्थ-सप्तकवृत्तित्वं युक्तमिति भावः ॥ **न तु तत इति** ॥ प्रमेयस्य भावादित्यर्थः ॥ **उक्तस्येति** ॥ न तावद्द्रव्यमित्याद्युक्तस्येत्यर्थः । तच्छब्दयोः प्रमेयप्रमेयत्वशब्दयोः ॥ **एवमिति** ॥ एवं सति प्रमेयस्य भावः प्रमेयत्वमित्यङ्गीकारे परस्य भावः परत्वमित्युपपत्तेः । परत्वादिगुणानां दत्तजलाञ्जलित्वमित्यर्थः ॥ **प्रमा तद्विषयेति** ॥ दण्डित्वं दण्ड इतिवत् प्रमेयत्वं प्रमा वा । भावभवित्रभेदेन प्रमेयं वा प्रमाप्रमेयसम्बन्धस्यापि प्रमेयधर्मतया सम्बन्धो वेत्यर्थः । तत्र प्रमेयत्वं न प्रमा प्रमायामपि वृत्तेः । भावभवित्रभेदस्तु शब्दपर्यायताप्रसङ्गेन निरस्तः । सम्बन्धपक्षं दूषयति ॥ **नेति** ॥ **तस्यापीति** ॥ विषयविषयीभावो नाम विषयत्वं विषयित्वं भावस्य भवितुः पृथगभावे पर्यायत्वापातात् । पृथक्त्वे वाच्ये द्रव्यादावन्तर्भाव्यत्वादित्यर्थः ॥ **लङ्घनेति** ॥

(वाक्यार्थमुक्तावली)
लङ्घनविषयेऽतिजवाभावादित्यर्थः । जङ्घालोऽतिजवस्तुल्य इत्यभिधानात् । यद्वा उक्तदोषनदी-लङ्घने जङ्घारहितत्वादित्यर्थः। प्राणिस्थादातोर्लजन्यतरस्यामिति जङ्घाशब्दान्मत्वर्थे लच्प्रत्ययः ॥

प्रमेयत्वस्य सार्वज्ञसाधकत्वाभावेऽपि अभिधेयत्वादिकं भविष्यतीत्यत आह ॥ **इयमेव दिगिति** ॥ अयमेव खण्डनमार्ग इत्यर्थः । तस्य सार्वज्ञसिद्धिरिति उपादानाद्यपरोक्षज्ञानवत एव कर्तृत्वादेकस्य सर्वकर्तृत्वे सर्वज्ञत्वलाभ इत्यर्थः ॥ **पक्षव्यावृत्तीति** ॥ साधनवतः पक्षादुपाधे-र्व्यावृत्यर्थत्वादित्यर्थः । पर्वतेतरत्वादीनां व्याप्तिरस्ति न वा । आद्यं दूषयति ॥ **का नो हानिरिति** ॥ पक्षे साध्यासिद्धौ अनुकूलतर्काभावेन तद्बाधविरहेण पर्वतेतरत्वादीनां व्याप्तिरस्ति चेत् तदा का नो हानिरित्यर्थः । द्वितीयं निराकरोति ॥ **अनुमानोपजीव्येनेति** ॥ अनुकूलेन तर्केणेति शेषः ।

अनुकूलेन तर्केण सनाथे सति साधने ।
साध्यव्यापकताभङ्गात् पक्षे नोपाधिसम्भवः ॥

इति न्यायादिति भावः । ननु शरीरिजन्यत्वं प्रयोजकमित्युक्तम् । तत्र जन्यत्वा-परपर्यायमस्मत्साधनकार्यत्वमेव प्रयोजकं भवतु व्यभिचाराभावात् । सकर्तृके घटादौ शरीरं कारणकोटिनिविष्टमनुभूयत इति चेदवर्जनीयसन्निधित्वेन शरीरस्य कारणत्वकल्पनावैयर्थ्या-दित्यत आह ॥ **सकर्तृकत्व इति** ॥ उत्तरत्र समयपादे सम्बन्धानुपपत्तेश्चेत्यत्रेत्यर्थः ॥ **लोकेति** ॥ रथाकर्षणादावनेककर्तृतादर्शनादिति भावः ॥ **अतिदुरवगममिति** ॥ सर्वज्ञत्वसिद्धौ धर्मादिसाक्षात्कारवतोऽज्ञानमूलकरागाद्यप्राप्तौ तन्मूलकविप्रलम्भस्याभावो ज्ञातव्य इत्यति-दुरवगममित्यर्थः । आप्त्यनिश्चयादिति भाष्यम् आप्तिमूलत्वादित्यपि व्याचष्टे ॥ **अस्तु वाप्ति-निश्चय इति** ॥ **वेदत्वस्येति** ॥ वेदः पामरप्रणीतः वेदत्वात् व्यतिरेकेण गगनवदित्यपि प्रयोक्तुं शक्यत्वादित्यर्थः । ननु सपक्षे कालिदासवाक्यादौ वेदत्वाभावादसाधारणानैकान्त्यमित्यत आह ॥ **असाधारण्यस्येति** ॥ तर्हि त्वदीयसाधनेऽप्यसाधारण्यं सार्वज्ञादिमता प्रणीतेऽपि भारतादौ वेदत्वाभावादिति भावः । न च इतिहासपुराणः पञ्चमो वेदानां वेद इति श्रुतेरस्त्येव वेदत्वं भारतादाविति वाच्यम् । तथात्वे तत्रैवान्वयव्याप्तिग्रहोपपत्तौ त्वयानुमानस्य केवलव्यतिरे-कत्वोररीकरणायोगाद्भारतादिव्यावृत्तवेदत्वस्यैव हेतुत्वेन वाच्यत्वादिति भावः ॥ **सर्वज्ञेश्वर-प्रणीतत्वमिति** ॥ ईश्वरसार्वज्ञस्यास्तु वेत्यङ्गीकृतत्वात्सिद्धवत्कृत्य सर्वज्ञेत्युक्तम् । यद्वा यदस्ति

(वाक्यार्थमुक्तावली)
तज्जानातीति व्युत्पत्या ज्ञपदमेव सर्वबोधकमिति भावः ॥ **उक्तदोषादिति** ॥ वेदप्रामाण्य-विवादादित्यर्थः । ज्ञानकारणेत्यत्र ज्ञानकारणपदं ज्ञानजनकशक्तिपरम् । करणानां तु ज्ञानजनकत्वशक्तिरेव स्वकारणासादिता प्रामाण्यजनकत्वशक्तिः । अप्रामाण्यजननं तु दोषवशादन्या शक्तिराविर्भवतीति प्रमाणपद्धत्युक्तेः ।

ननु दोषवशात् प्रमाजनकत्वशक्तिप्रतिबन्धेऽपि ज्ञानोत्पत्यनुदयात् कथं शक्त्यैक्यमिति चेन्न । ज्ञानजनकत्वशक्तेरेव प्रामाण्यजनकत्वमित्युत्सर्गः । दोषापवादे शक्तिर्ज्ञानमात्रं जनयतीत्यङ्गीकारात् । केचित् ज्ञानजननशक्त्योर्भिन्नत्वमेव द्वयोः सहजत्वमात्रेण स्वतस्त्वमित्याहुः ॥ **स्वतस्त्वमिति** ॥ अयाथार्थ्यं ज्ञानकारणातिरिक्तकारणानपेक्ष्यं न दोषोत्पन्नं वा ज्ञान-धर्मत्वात् याथार्थ्यवदिति प्रयोगो द्रष्टव्यः । उभयत्र साध्ये युगपदेव दोषमाह ॥ **दोषाभाव इति** ॥ दोषाभावे याथार्थ्याभाव नियमात् तद्विरहेण कार्याभावे तस्य कारणत्वनियमादप्रामाण्यं प्रति दोषाणां कारणत्वावधारणादप्रामाण्यानुमानस्य दोषकारणताग्राहकमानबाध इत्यर्थः । यद्यप्यन्वयव्यतिरेकाभ्यां कारणताऽवसेया तथापि यादृच्छिकसंवादिनि सत्यपि दोषे याथार्थ्य-दर्शनेनान्वयमनुक्त्वा व्यतिरेक एवोक्तः । यथोक्तं तत्वनिर्णयटीकादौ । यादृच्छिकसंवादिषु सत्यपि दोषे प्रमाणज्ञानोदयादिति । एतेनैतदपि निरस्तम् । गुणाभावेऽपि प्रामाण्याभावात् गुणस्यापि प्रामाण्यहेतुत्वमिति ॥ **स्वतस्त्वानुमानस्यापि बाध इति** ॥ गुणाभावेऽपि यादृच्छिकस्थले याथार्थ्योपलम्भेन व्यतिरेकव्यभिचारादिति भावः । ननु यादृच्छिकस्थले याथार्थ्याङ्गीकारे प्रमाणपद्धतौ यज्जातीयानन्तरं नियमेन कार्योत्पत्तिः तदत्र साधनं विवक्षितमतो न यादृच्छिकसंवादलिङ्गविभ्रमादिष्वतिव्याप्तिमाशङ्क्य परिहारो युक्त इति चेन्न । यादृच्छिकस्थले करणस्य प्रामाण्यं नास्तीत्यभिप्रायेण तत्रातिव्याप्तिः परिह्रियते । तत्वनिर्णय-टीकादौ तु करणे गुणाभावे प्रत्युत दोषे सत्यपि ज्ञानस्य प्रामाण्यमित्युच्यत इत्यविरोधात् । न च ज्ञानस्य प्रमात्वे तत्करणस्य कथं प्रमाकरणत्वं नास्तीति वाच्यं यज्जातीयानन्तरमिति करणलक्षणकथनेन तस्य करणत्वाभावात् । तथासति अकारणिकक्रियोत्पत्तिरापन्नेति चेन्न । लोके हि धूमत्वप्रकारेण धूमज्ञानस्य कारणत्वं दृष्टम् । तथा च यादृच्छिकस्यापि धूमत्व-प्रकारकधूमज्ञानत्वेन लोके करणत्वेऽपि पारिभाषिकसाधनत्वाभावस्योक्तत्वात् । यज्जातीयस्य सर्वत्र यथार्थज्ञानसाधनत्वं तदेव प्रमाणमित्यस्माकं विवक्षितत्वादित्यलं विस्तरेण । प्रपञ्चस्तु

(वाक्यार्थमुक्तावली)

सुधायां युक्तिपादेऽनुसन्धेयः । ननु प्रमेति प्रमात्वविशिष्टं वा पक्षः तदुपलक्षितं वा । तत्राद्यं विकल्प्य दूषयति ॥ **प्रमाया इत्यादिना** ॥ प्रमायाः ज्ञानसामग्रीव्यतिरिक्तसामग्रीजन्यत्वं हि विशेषणमादाय वा विशेष्यमादाय वा तत्सम्बन्धमादाय वेत्यर्थः । द्वितीयं शङ्कते ॥ **प्रमात्वयुक्तेति** ॥ अस्मिन् पक्षे चित्रगुमानयेत्युक्ते गवानयनक्रियाभाववत् प्रमात्वस्य जन्यतैव नास्ति । नापि केवलज्ञानस्य । क्रियानन्विततया तटस्थेनापि प्रमात्वेनोपलक्षितस्य जन्यत्वाङ्गीकारादिति भावः । तत्रापि जन्यत्वमङ्गीकृत्य ज्ञानसामग्रीव्यतिरिक्तमात्रजन्यत्वं साध्यते उत ज्ञानसामग्रीव्यतिरिक्तजन्यत्वम् ॥ आद्यं दूषयति– **तादृशेति** ॥ प्रमात्वाधारभूताया ज्ञानव्यक्तेरित्यर्थः ॥ **व्याघातेति** ॥ तथा हि सा व्यक्तिर्ज्ञानमेवोत सातिशयितम् । आद्ये व्याघातः । द्वितीये अतिशयोऽपि भावोऽभावो वा । नाद्यः ज्ञाने जात्यतिरिक्तभावानभ्युपगमात् । न द्वितीयः । प्रध्वंसातिरिक्तस्य तस्याजन्यत्वात् । प्रध्वंसस्य चात्रासम्भवात् । प्रमात्वसम्बन्धकृता प्रमात्वावृत्तिरेवातिशय इति चेत् । त्वन्मते अन्योन्याभावरूपाया व्यावृत्तेरनादिनित्यत्वेन बाधात्। मन्मते भेदापरपर्यायव्यावृत्तेर्ज्ञानस्वरूपत्वेन व्याघातानिस्तारादिति भावः । स्पष्टमेतत्सुधायां जिज्ञासाधिकरणे ।

द्वितीयमाशङ्कते ॥ **ज्ञानकारणेति** । व्याघातबाधव्यभिचारनिरासाय शङ्कते ॥ **ज्ञानकारणमात्रेति** । विशिष्टाभावश्चात्र ज्ञानकारणाजन्यत्वेन वा सर्वथैवाजन्यत्वेन त्रेधा घटते । तत्र घटादौ आद्यमादाय न व्यभिचारः । पक्षे द्वितीयपर्यवसानेन व्याघातनिरासः ईशप्रमांशे तृतीयमादाय बाधपरिहारश्चेति भावः ॥ **ज्ञाने व्यभिचारेति** ॥ प्रमाणस्य ज्ञानविशेषे ज्ञानसामान्यसामग्र्यतिरिक्तजन्यत्वं साधयता ज्ञानसामान्यस्य प्रमातिरिक्तत्वमेष्टव्यसामग्रीभेदे कार्यभेदेनैव व्याप्तत्वात् । एवं च घटादौ व्यभिचारपरिहारेऽपि ज्ञानसामान्ये त्रेधापि विशिष्टाभावस्योपपादयितुमशक्यम् । व्यभिचारापरिहारादित्यर्थः । ज्ञान्यतिरिक्तत्वेन हेतुरिति ज्ञानसामान्यातिरिक्तत्वे सति कार्यत्वादिति विशेष्यतामित्यर्थः ॥ **साधनसौलभ्यादिति** ॥ तथाचाभाससाम्यमिति भावः । ननु ज्ञानसामान्ये सामग्रीव जन्यत्वाभावः सिध्यन् जन्यत्वरूपविशेष्याभावेन वा अतिरिक्तजन्यत्वेन वा सिद्ध्यति । आद्ये हेतुवाक्येन व्याघातः । द्वितीये प्रतिज्ञापदयोरेव व्याघातः । ज्ञानकारणातिरिक्तेत्यत्र कारणपदेन तज्जन्यत्वस्यैव प्राप्तत्वेन तदतिरिक्तजन्यत्वस्य वक्तुमशक्यत्वादित्यत आह ॥ **विशिष्टाभावेति** ॥ प्रमाज्ञानकारणमात्र-

(वाक्यार्थमुक्तावली)

जन्याभाववति त्वदीयानुमानेप्येवं विशिष्टाभावं विकल्प्य आद्ये हेतुवाक्येन व्याघातः । द्वितीये प्रमयाः अपि ज्ञानत्वेन ज्ञानकारणातिरिक्तजन्यत्वे प्रतिपदव्याघात इति व्याघातस्य तुल्यत्वादित्यर्थः । ननु प्रमापक्षकेऽस्मदनुमाने न व्याघातादिकमपि दोषः । विशिष्टाभावस्य ज्ञानकारणजन्यत्वेन घटादौ पर्यवसानं तज्जन्यत्वेऽपि अधिकजन्यत्वात् प्रतिपदव्याघातः । सर्वथा जन्यत्वेन ईशप्रमादावयं प्रमाणाविरोधनिरास इति विशिष्टाभावं त्रेधा विभज्य व्याघातादिदोषस्य समाधानादित्यत आह ॥ **विशिष्टाभावेति** ॥ प्रमापक्षकानुमाने इव ज्ञानपक्षके विशिष्टाभावविकल्पेन व्याघातादेः समीकरणात् । समाधीयमानत्वादित्यर्थः ।

ननु प्रमायां ज्ञानकारणजन्यत्वमतिरिक्तजन्यत्वं च व्याहतं तस्य ज्ञानाविशेषत्वात् । ज्ञानस्य तु ज्ञानसामग्रीव जन्यत्वमेव वक्तव्यम् । अतिरिक्तजन्यत्वं तु व्याहतमेवेति चेन्न । भ्रमेऽपि धर्म्यंशे प्रमात्वस्य सत्वेन ज्ञानत्वसमनियतस्य प्रमात्वस्याधिकप्रयोज्यत्वे ज्ञानत्वेऽपि तथात्वसम्भवात् । ज्ञानत्वं भ्रमे गुणव्यभिचारि चेत् प्रमात्वमपि यादृच्छिकसंवादिनि तथेति सममिति भाव इति स्पष्टम् । चन्द्रिकायां प्रतिज्ञानिरासेनेति । स्वतस्त्ववादिनापि परतस्त्ववादिनापि प्रामाण्यकरणगुणत्वजातेरनङ्गीकारेण गुणशब्देन ज्ञानकारणातिरिक्तकारणस्यैव विवक्षणीयत्वं न प्रमात्वस्यैवंविधत्वेनेत्यादिना उक्तदोषेणैव निरस्तमित्यर्थः । कार्यत्वरूपहेतुदोषस्यात्र हेतावभावात् प्रतिज्ञानिरासेनेत्युक्तम् । हेतुं च निराह ॥ **किं चेति** ॥ **व्यभिचारादिति** ॥ कुलालपित्रन्वयव्यतिरेकित्वेऽपि घटस्य तदन्यत्वादिति भावः ॥ **उपक्षीणत्वादिति** ॥ न च गुणास्तु अकिञ्चित्करा इति पद्धतिवचनात्कथं गुणानां दोषनिरासकत्वमिति चेत् प्रकृतप्रामाण्यानुपयोगित्वेन तथोक्तिसम्भवादभ्युपगमवादेन वा इयमुक्तिरिति ज्ञेयम् । तथा चासिद्धिरिति भावः ॥ **न चोभयकरणत्वेति** ॥ प्रामाण्यजननदोषनिरासरूपोभयेत्यर्थः ॥ **नैवमिति** ॥ गुणानां दोषनिरासोपक्षीणत्वे दोषाणामपि गुणनिरासोपक्षीणत्वसम्भवात् ज्ञानकारणमात्रजन्यत्वरूपं स्वतस्त्वं स्यादित्यर्थः ॥ **दोषान्वयेति** ॥ दोषे सत्येवाप्रामाण्यं तदभावे तदभावः इत्यन्वयव्यतिरेकनिश्चयेनेत्यर्थः ।

ननु यादृच्छिकसंवादिनि सत्यपि दोषे ज्ञानाप्रामाण्याभावात् अन्वयव्यभिचारः इति वाच्यम् । दोषे सत्येवाप्रामाण्यमित्येवान्वयाविवक्षितत्वेनैवंविधान्वयस्य व्यभिचाराभावात् । विषयसत्वादेर्दोषप्रतिबन्धकस्य सत्वेन वा यादृच्छिकस्थले ज्ञानाप्रामाण्यानुदयोपपत्तेः । न

(वाक्यार्थमुक्तावली)

नैतत्सममिति **गुणान्वयव्यतिरेकनियमेन** प्रामाण्यस्य गुणानामुभयकारणत्वमिति न वाच्य-मित्यर्थः ॥ **यादृच्छिकयथार्थवाक्येति** ॥ तत्र गुणाभावेऽपि ततः प्रमाया जायमानत्वात् व्यतिरेकव्यभिचार इति भावः । अभ्युपगमवादेनाह ॥ **दोषाभावस्येति** ॥ अतः प्रकृत-वेदापौरुषेयत्वविरोधित्वादेवाङ्गीक्रियते । वस्तुतः इत्युक्तमन्यथादोषाभावेऽपि न प्रामाण्य-कारणयादृच्छिकसंवादिषु सत्यपि दोषे प्रमाणज्ञानोदयादिति तत्वनिर्णयटीकाविरोधात् । यथा दण्डगतदार्ढ्यवत्प्रयोजकत्वाभिप्रायेण कारणतोक्तिः । आगमोऽदुष्टवाक्यं च निर्दोषश्शब्द आगम इत्यादौ दोषाभावस्य कारणतावच्छेकतया प्रयोजकत्वमिति बोध्यम् । व्यतिरेकानुमान-माशङ्कते ॥ **प्रमेति** ॥ तथा च तदन्वयव्यतिरेकानुविधायित्वादित्यत्रोक्तदोषाभावप्राप्तिरिति भावः ॥ **अजन्यप्रमात्वमिति** ॥ अन्यप्रमात्वाभावादित्यर्थः । ततो नोक्तदोषः इति ज्ञेयम् ॥ **व्याप्तीति** ॥ यादृच्छिकसंवादिदुष्टवाक्यजन्यप्रमायां सत्यपि साध्ये उपाधेरभावादित्यर्थः । प्रतिपक्षे उपाध्युद्भावनानुपपत्तिस्तु नास्त्येव प्रतिपक्षोन्नायकत्वाभावेऽपि व्यभिचारोन्नायक-तयोपपत्तेरिति । यद्वा व्याप्तिग्रहदशायामेव व्यभिचारोन्नायकत्वात् तत्त्वेन दूषकत्वाभावेऽपि हेतोरप्रयोजकतोपपादकत्वेन उपाध्युद्भावनोपपत्तिरिति ज्ञेयम् । नित्यत्वाद्वेदस्येत्यादि योजयति ॥ **तस्यैवमिति** । पूर्वसूत्रेणैव गतार्थताशङ्कानिवारकत्वेन पुनरन्यभावेत्यादिभाष्यमवतार्य व्याचष्टे ॥ **न च वाच्यमित्यादिना** ॥

अतीतकालीनविरोधस्येति शब्दकर्मणि चेत्युभयत्रेत्यर्थः । द्वितीये कर्मणीति तृतीये शब्द इत्यैकैकग्रहणनिमित्तं सूत्रक्रमे स्फुटीभविष्यतीति । तथा च पूर्वं कर्मणीति शब्दस्याप्युप-लक्षणमिति भावः । कर्मण्यपि साम्यादिति शब्द इति सूत्रे कर्मणीति शब्दस्याप्युलक्षणमिति भावः ॥ **देवताह्वानेति** ॥ एह्यग्ने इन्द्र आगच्छेत्यादिरूपस्येत्यर्थः । सूत्रे नञः शब्दे विरोध इत्यनेनावृत्तेनान्वयः इति भावेन तेषां प्रभवनियमादिति भाष्यं व्याचष्टे ॥ **यदुदितमित्यादिना** । इत्यादेरत एव शब्दादित्यादि व्याचष्टे ॥ **न च तत्रेति** ॥ **अतीतविषय एवेति** ॥ अकल्पय-दिति लङःश्रवणादिति भावः ॥ **उपचारेणेति** ॥ तावेव सूर्याचन्द्रमसौ पूर्वमकल्पयदिति कल्पान्तरेति प्रकाशनाद्यर्थव्यवस्थापयदित्युपचारेणेत्यर्थः । यथर्तुष्वृतुलिङ्गानीति सम्भवपर्व-वाक्यस्यायमर्थः यथा वसन्तादिषु ऋतुषु पुष्पोद्गमादीनि यानि नानाविधानि ऋतूचितानि वर्तन्ते। पर्याये क्रमक्रतूनामादत्तौ सत्यां तानि तान्येव तत्सदृशान्येव दृश्यन्ते । यथा

(वाक्यार्थमुक्तावली)

युगमन्वन्तरकल्पेषु पूर्वपूर्वयुगादिस्थसदृशा एव पदार्था दृश्यन्ते इति यथैव काल इत्यस्यापि वसन्तादिकाले यथा तल्लिङ्गनियमः । एवं प्रतिकल्पं सुरादिनियम इत्यर्थः । उक्तं च मत्तर्क-दीपावल्याम् । यथा ऋतुष्वृतुलिङ्गानीति वचनात् । यथैव कालज्ञ नियम इत्यस्यार्थो ज्ञातव्य इति ॥ **परं प्रतीति** ॥ अप्रलयवादिनं प्रतीत्यर्थः ॥ **प्रमाणसिद्धत्वादिति** ॥ अपश्यमप्ययं मायया नासदासीदित्यादिप्रमाणसिद्धत्वादित्यर्थः । अत्र सूत्रविरोधः इत्यस्ति । अतःशब्दः प्रकृतशब्दपरः । उत्तरसूत्रादेवकारोऽनुकृष्यते । अत एवेत्यनुवादः । प्रभावशब्दस्तन्नियमावगम-परः । देवपदस्य तदुपरीत्युक्तिलब्धे स्वान्त्वेऽङ्गीकृते शब्दे नित्ये वेदे अप्रामाण्याख्यविरोधः स्यादिति चेन्न । अतश्शब्दात्प्रमाणत्वेन यथेत्यादेः प्रत्यक्षानुमानाभ्यां देवानां प्रभव-नियमावगमादिति सूत्रार्थः शब्दस्योपचरितत्वशङ्कानिवर्तके ये प्रत्यक्षस्योपयोगिना उभयत्रा-विश्वासशङ्कानिरासायानुमानस्य चोपदेशाच्च शब्दाभावः । शब्दप्रत्यक्षानुमानेभ्य इति वाच्ये उभाभ्यां शब्दप्राबल्यं सूचयितुं प्रत्यक्षानुमानयोर्द्वन्द्वनिर्देशः ।

## तत्त्वसुबोधिनी

देवानामाद्यन्तवत्त्वेऽपि वेदाप्रामाण्यं कुत इत्यतः तेषामनित्यत्वे वेदाप्रामाण्यमुपपादयति ॥ **वेदस्येति** ॥ वाच्यहीनत्वेऽपि वाचोऽप्रामाण्यं कुत इत्यत आह ॥ **यावतेति** ॥ नन्वित्यर्थे यावतेति निपातः ॥ **तदेवेति** ॥ वाच्यहीनत्वमेवेत्यर्थः ॥ **उपचारमात्रमिति** ॥ अनित्यत्वेऽपि कल्पादिस्थायित्वान्नित्यत्वोक्तिरिति भावः ॥ **कर्तृसार्वज्ञाविति** ॥ विवक्षितार्थतत्वज्ञानं करणपाटवाविप्रलिप्साप्रमादाभावश्चेति चतुष्टयस्य आप्तिशब्दार्थत्वेन आप्तिशब्दार्थान्तर्गतकरण-पाटवादिसङ्ग्रहाय सार्वज्ञादावित्यादिपदमिति ध्येयम् ॥ **विवादपदमिति** ॥ धर्माधिकमित्यर्थः ॥ **धर्मान्तरसाधनापातादिति** ॥ प्रमेयत्वेन विप्रतिपन्नास्मदादिप्रत्ययस्यापि साधनापातादित्यर्थः ॥ **न तावत्सामान्यमिति** ॥ न जातिरित्यर्थः ॥ **उपाधित्वेऽपीति** ॥ अत्र कश्चित् । सामान्यं द्विविधं जातिरुपाधिश्च तत्र प्रमेयत्वस्य केवलान्वयित्वेन जातित्वाभावेऽप्युपाधित्वं भविष्यति । न च तथात्वेऽपि क्वचिदन्तर्भावो वाच्यः । सामान्ये वान्तर्भावेन अन्यत्रान्तर्भावाभावात् । न चैवं प्रमेयत्वे नित्यानेकसमवेतत्वाभावेन सामान्यलक्षणासङ्गृहीतस्य कथं तत्रान्तर्भाव इति वाच्यम् । परम्परात्वासम्भवाया जातेरेव उपाधित्वात् । तर्हि जात्युपाधिभेदः किंनिमित्त इति चेत् साक्षात्सम्बन्धेन जातित्वस्य परम्परासम्बन्धेन उपाधित्वस्य च सम्भवादिति । तन्न । एवं

(तत्त्वसुबोधिनी)

हि परम्परया जनके व्याप्तिज्ञानादौ जनकत्वव्यवहारवत् परम्परासम्बन्धेन प्रमेयमिति बुद्धिविषये प्रमेये प्रमेति बुद्धिः स्यात् । प्रमेयत्वस्य प्रमासम्बन्धरूपत्वेन सम्बन्धप्रकारकाया बुद्धेः अदृष्टत्वान्न च तादृशी बुद्धिः कचित् दृष्टा तथा च उपाधिः सामान्यान्तर्गत एव पृथग्वक्तव्यः । तथा च कचिदन्तर्भावानुक्तौ सप्तपदार्था इति नियमभङ्गः स्यात्तस्मात् कचिदन्तर्भावो वक्तव्यः इति साधूक्तम् । उपाधित्वेऽपि कचिदन्तर्भावस्यापेक्षितत्वादिति । तत्र न तावत् द्रव्येऽन्तर्भावः इत्याह ॥ **न तावदिति** ॥ **निर्गुणत्वादिति** ॥ गुणवत एव द्रव्यत्वादिति भावः ॥ **अस्वतन्त्रादिति** ॥ आश्रयाविषयकप्रतीत्यविषयत्वादित्यर्थः ॥ **गुणादावपीति** ॥ गुणादौ गुणादेरनङ्गीकारादिति भावः ॥ **अनित्येऽपीति** ॥ विशेषस्य तेन नित्यमात्रवृत्तित्वाङ्गीकारादिति तत्सिद्धान्तादिति भावः ॥ **भावभवित्रोरिति** ॥ प्रमेयप्रमेयत्वयोरित्यर्थः । सहप्रयोगो न स्यादिति भावः । **एवं परत्वादीति** ॥ परस्य भावः परत्वमित्यपि वक्तुं शक्यत्वेन गुणादिविलोपः स्यादिति भावः ।

ननु प्रमाप्रमाविषयतत्सम्बन्धेषु मिलितेष्वन्तर्भावोऽस्तीति शङ्कते ॥ **प्रमेति** ॥ संयोगसमवायौ स्यातामित्यत आह ॥ **न हीति** ॥ स्वगुणस्यैव गुणिना समवायः द्रव्ययोरेव संयोग इति तद्राद्धान्तादिति भावः ॥ **उक्तदोषेति** ॥ उक्तदोषलङ्घने असमर्थत्वादित्यर्थः । मास्तु सर्वज्ञत्वे प्रमेयत्वं हेतुः ज्ञेयत्वादिकमेव भविष्यतीत्यत आह ॥ **एषैव दिगिति** ॥ तार्किकमते ज्ञेयत्वाभिधेयत्वादिरूपनिराकरणे एषैव दिगयमेव प्रकारः । प्रमेयत्वनिराकरणन्यायेन ज्ञेयत्वादिकमपि निराकरणीयमित्यर्थः ॥ **प्रतिपक्षश्चेति** ॥ एतच्चोपायैः व्यभिचारोन्नायकत्वमिति पराभिमतमभ्युपेत्य उक्तम् । तेन उपाद्युद्भावनेनैव प्रतिपक्षसिद्धेः पुनस्तदुद्भावनमनर्थकमिति शङ्कानवकाश इति ध्येयम् । तथा च तस्यापि नोक्तसाध्ये हेतुत्वं सम्भवतीति भावः । पर्वतेतरत्वादीनामपि साध्यव्यापकत्वमस्ति न वा । आद्यं निरस्यति । का नो हानिः पर्वतेतरत्वादीनामपि व्याप्तिरस्ति इति चेत्तथा च व्याप्तिसत्वे अस्तु तस्यापि उपाधित्वमिति भावः । द्वितीयं निराह । अनुमानोपजीव्येन बाधादव्याप्तौ स्वयं दुष्टत्वादिति । पूर्वानुमाने उपजीव्येनानुकूलतर्केण बाधात् पर्वतेतरत्वोपाधेः साध्यव्याप्यभावोपाधेः स्वयमेव दुष्टत्वादित्यर्थः । ननु व्यभिचारवारकविशेषणस्यैव उपादेयत्वात् कथं हेतावसिद्धिवारकविशेषणोपपादनमित्यत आह ॥ **न चेति** ॥ व्यभिचारवारकविशेषणदानेऽनुमानस्य व्याप्तिवैधुर्येणाभासत्वं स्यात् । अतो

(तत्त्वसुबोधिनी)

व्याप्त्यौपयिकत्वात् व्यभिचारवारकविशेषणोपादाने च पक्षधर्मौपयिकत्वात् । व्यभिचारवारकविशेषणादाने च पक्षधर्मतावैधुर्येणाभासत्वापत्तेः तदौपयिकमपि विशेषणमुपादेयमेवेत्याह ॥ **व्याप्तिवदिति** ॥ ननु सर्वकर्तृकत्वे कार्यत्वमेव प्रयोजकं न तु शरीरत्वं तथा चाप्रयोजकत्वान्न शरीरजन्यत्वमुपाधिः । प्रयोजकश्च उपाधिरुच्यते इत्युक्तेः इत्यत आह ॥ **सर्वकर्तृकत्व इति** ॥ **लोकानुकूल्येति** ॥ लोके विचित्रप्रासादादिनिर्माणे बहुकर्तृकत्वस्यैव दृष्टत्वादिति भावः । अस्तु वा सर्वज्ञत्वनिश्चयः अविप्रलम्भकत्वनिश्चयस्तु सर्वथा न सम्भवतीत्याह ॥ **अविप्रलम्भादीति** ॥ सर्वज्ञस्य बुद्धादेः विप्रलम्भकत्वदर्शनादिति भावः । आप्त्यनिश्चयादिति भाष्यम् आप्तिमूलकत्वनिश्चयादित्यपि व्याचष्टे ॥ **अस्तु वेति** ॥ **वेदत्वस्येति** ॥ यथा वेदत्वेन हेतुना सर्वज्ञत्वप्रणीतत्वं साध्यते तथा वेदत्वेनैव वेदस्य पामरप्रणीतत्वमपि साधयितुं शक्यमित्याभाससमानयोगक्षेमत्वं त्वदीयानुमानमित्यर्थः । ननु पामरप्रणीतकालिदासादिवाक्यरूपात् सपक्षात् व्यावृत्तत्वेन साधारण्यमिति चेत्तर्हि सर्वज्ञप्रणीतभारतादिरूपसपक्षाद्व्यावृत्तत्वेन त्वत्पक्षेऽप्यसाधारण्यमित्याह ॥ **असाधारण्यस्येति** ॥ **विवादादिति** ॥ तथा च हेत्वसिद्धिरिति भावः ॥ **उक्तदोषादिति** ॥ प्रामाण्ये विवादरूपोक्तदोषादित्यर्थः ॥ **चक्रकापातादिति** ॥ ईश्वरस्य सर्वज्ञत्वे सिद्धे तस्मात् यज्ञादित्यादिना वेदस्य सर्वज्ञप्रणीतत्वसिद्धिः । तत्सिद्धौ च वेदस्य प्रामाण्यसिद्धिः । तत्सिद्धौ वेदेन सार्वज्ञसिद्धिरिति चक्रकापातादित्यर्थः ॥ **अदृष्टादाविति** ॥ प्रत्यक्षस्य धर्मादिगोचरत्वाभावेन तस्य मूलप्रमाणत्वं न सम्भवतीति भावः ॥ **अदृष्टसम्भावनेऽपीति** ॥ देवदत्तशरीरादिकं देवदत्तविशेषगुणजन्यं कार्यत्वे सति देवदत्तस्य भोगहेतुत्वात् देवदत्तप्रबलजन्मवस्तुवदित्यनुमानेनादृष्टस्य सामान्यतः सिद्धावपीत्यर्थः । देवदत्तशरीरत्वमत्रापि उपाधिरस्तीति कथञ्चिद्युक्तम् । विशेषासिद्धिमेवाह– **न हीति** ॥ **श्रुतिसिद्धमिति** ॥ वाचा विरूपया नित्या इत्यादि श्रुतिसिद्धमित्यर्थः ॥ **आप्तोक्तत्वाभावादिति** ॥ ज्ञानगतयाथार्थ्यस्य गुणजन्यत्वात् वेदे चाप्तोक्तत्वगुणाभावात् यथार्थज्ञानकारणत्वरूपप्रामाण्याभाव इति भावः ।

भवेदेतद्यदि ज्ञानगतयाथार्थ्यरूपगुणजन्यत्वं स्यात् । तदेव तु नास्ति अतो नित्यत्वेन वेदस्य आप्तोक्तत्वगुणाभावेऽपि न प्रामाण्यासिद्धिरित्याशयेन परिहरति ॥ **नैवमिति** ॥ प्रामाण्यस्य स्वतस्त्वं साधयितुं प्रामाण्यं निर्वक्ति ॥ **प्रामाण्यं नामेति** ॥ प्रामाण्यस्य स्वतस्त्वे

(तत्त्वसुबोधिनी)

अनुमानमाह ॥ **याथार्थ्यमिति** ॥ सिद्धसाधनतावारणाय अतिरिक्तकारणपदं हेतौ प्रामाण्ये व्यभिचारवारणाय सत्यन्तम् । घटादौ व्यभिचारवारणाय विशेष्यम् ॥ **दोषाभाव इति** ॥ यथार्थत्वे दोषान्वयव्यतिरेकयोः सत्वेन दोषाभावेऽयथार्थत्वमेव न सिद्ध्यतीति । तथा च बाध इति भावः । **प्रमाज्ञानसामग्रीव्यतिरिक्तकारणजन्ये**त्यत्र प्रमात्वविशिष्टं वा पक्षः तदुपलक्षितं वा। तत्राद्यं विकल्प्य दूषयति ॥ **प्रमाया इत्यादिना** ॥ **अजन्यत्वादिति** ॥ तस्य जातित्वेन नित्यत्वादिति भावः । द्वितीयमाशङ्कते ॥ **प्रमात्वयुक्तज्ञानस्येति** ॥ अत्रापि किं ज्ञानकारणातिरिक्तप्रमाजन्यत्वं साध्यं किं वा ज्ञानत्वाप्रयोजककारणजन्यत्वे सति अतिरिक्त-जन्यत्वं वा । आद्ये प्रमात्वमुक्तज्ञानस्यापि ज्ञानत्वाद्व्याघात इत्याह ॥ **तादृशज्ञानस्यापीति** ॥ द्वितीयं शङ्कते ॥ **ज्ञानकारणेति** ॥ **ज्ञाने व्यभिचारापरिहारादिति** ॥ ननु ज्ञानं द्विविधम् । प्रमाऽप्रमा च । तत्राप्रमारूपज्ञानस्य दृष्टान्तत्वेन प्रमारूपज्ञानस्य पक्षीकृतत्वेन तदतिरिक्त-ज्ञानस्यैवाभावात् कुत्र व्यभिचारः इति चेन्न । प्रमारूपाज्ञानविशेषज्ञानसामान्यसामग्र्यतिरिक्तं जन्यत्वं साधयता सामान्यविशेषसामग्र्योः भेदो वाच्यः । तथा च सामान्यविशेष्यकार्ययोरपि भेदो वाच्यः । कार्यभेदं विना सामग्रिभेदासिद्धेः । तथा च ज्ञानसामान्ये व्यभिचारापरिहारा-दित्यर्थः । यद्वा आप्तिज्ञाने ज्ञानत्वं प्रमात्वं च । तत्र प्रमात्वावच्छिन्नज्ञानस्य पक्षत्वम् । प्रमात्वावच्छेदेन साध्यसन्देहात् । ज्ञानत्वावच्छिन्नस्य तु विपक्षत्वं तदवच्छेदेन साध्याभावस्य निर्णीतत्वात् । तथा च ज्ञानत्वरूपसामान्यधर्मावच्छिन्ने व्यभिचारापरिहारादित्यर्थः । नन्वत्र ज्ञानसामान्यकारणत्वाभावो वा ज्ञानसामान्यकारणातिरिक्तकारणमात्रजन्यत्वं वा साध्यमतः सामग्रीभेदसिद्ध्यर्थं कार्यभेदानङ्गीकारे न व्यभिचार इति चेन्न । इन्द्रियादिभिः सिद्धसाधनादिति भावः ।

वस्तुतस्तु यादृच्छिकसंवादिप्रमाया एवात्र ज्ञानपदेन ग्रहणम् । तस्याश्च न पक्षत्वमिति युक्तम् । तत्र व्यभिचारोद्भावनमिति न कश्चित्क्षुद्रोपद्रवः ॥ **ज्ञानातिरिक्तत्वेनेति** ॥ ज्ञान-सामान्यतिरिक्तत्वेनेत्यर्थः ॥ **ज्ञानेऽपीति** ॥ ज्ञानं ज्ञानकारणमात्रजन्यं कार्यत्वादित्यपि साधयितुं शक्यत्वादित्यर्थः । नन्वेवं व्याघात इत्यत आह ॥ **विशिष्टाभावविकल्पेन व्याघा-तस्य समीकरणादिति** ॥ यथा प्रमायां ज्ञानकारणातिरिक्तकारणमात्रजन्यत्वस्य व्याहतत्वेऽपि ज्ञानकारणतामात्रजन्यत्वरूपविशिष्टाभावो न व्याहतः । तस्य जन्यत्वाभावेन वा जन्यत्वेऽपि

(तत्त्वसुबोधिनी)

ज्ञानकारणातिरिक्तजन्यत्वेन वा उपपत्तेः । तथा ज्ञानेऽपि यादृच्छिकसंवादिस्थले अतिरिक्त-कारणं विनापि दृष्टायाः भ्रमस्याप्यधिष्ठानांशे प्रमात्वेन प्रमात्वरहितज्ञानव्यतिरिक्तत्वेन भावेन ज्ञानवदनुरक्तत्वेन द्रष्टायाश्च प्रमायाः अतिरिक्तजन्यत्वज्ञानस्यापि तज्जन्यत्वप्रसङ्गादित्यर्थः । व्याघात इत्युपलक्षणम् । ईशज्ञानस्य पक्षत्वेऽपि तत्र जन्यत्वाभावेन साध्यसम्बन्धादंशे बाधोऽपि नेति भावः । समीकरणादिति पाठे तु । ननु ज्ञानसामान्ये ज्ञानसामग्रीमात्रजन्यत्वाभावः । सिद्धिर्न जन्यत्वेन वातिरिक्तजन्यत्वेन वा सिद्ध्यति । आद्ये कार्यत्वादिति हेतुवाक्येन व्याघातः । द्वितीये प्रतिज्ञापदयोरेव व्याघातः । ज्ञानसामान्यहेतौ तदतिरिक्तत्वाभावादित्यत आह । **विशिष्टाभावविकल्पेनेति** ॥ प्रामाण्यमपि नाजन्यत्वेन विशिष्टाभाव पर्यवसानं पूर्ववत् । हेतुपदव्याघातादेव नाप्यतिरिक्तजन्यत्वेन । प्रमाया अपि ज्ञानत्वेन तत्कारणस्य ज्ञान-सामान्यातिरिक्तत्वासम्भवेन प्रतिज्ञापदयोः व्याघातादित्यत्रापि व्याघातस्य तुल्यत्वादित्यर्थः । अथवा ननु ज्ञानं ज्ञानकारणमात्रजन्यं न कार्यत्वादित्यत्र हि विशिष्टाभावः साध्यः । तथा च ज्ञानकारणातिरिक्तजन्यत्वे सति ज्ञानकारणजन्यत्वं विशिष्टम् । तदभाव इत्यर्थः । अयं हि विशिष्टाभावः । ज्ञानकारणजन्यत्वरूपविशेष्याभावाद्वा । ज्ञानकारणातिरिक्ताजन्यत्वरूप-विशेषणाभावाद्वा । नाद्यः एवं हि ज्ञानं ज्ञानकारणजन्यं नेति वक्तव्यम् । एवं चेत् ज्ञानं पुनः ज्ञानकारणजन्यं नेति उक्ते व्याघातः । न द्वितीयः ज्ञानं ज्ञानकारणातिरिक्ताजन्यं नेति उक्ते ज्ञानकारणातिरिक्तजन्यमिति वक्तव्यम् । ज्ञानकारणातिरिक्तं च ज्ञानकारणमेव । तथा ज्ञानकारणेन ज्ञानं जन्यते इत्यतिस्फुटो व्याघातः । तथा च न चैवं साधनं युक्तमित्यत आह । विशेषणाभावाद्द्वितीयः विकल्पः । तेन व्याघातस्य प्रमायामपि तुल्यत्वादित्यर्थः । प्रमायामपि ज्ञानकारणातिरिक्ताजन्यत्वे सति ज्ञानकारणजन्यत्वरूपविशिष्टाभावो विशेष्याभावाद्वा विशेषणाभावाद्वा । नाद्यः प्रमा ज्ञानकारणजन्यो नेत्युक्ते प्रमाया ज्ञानत्वेन ज्ञानकारण-जन्यत्वाभावे व्याघातः । न द्वितीयः । प्रमा ज्ञानकारणातिरिक्तजन्या इत्युक्ते ज्ञान-कारणातिरिक्तं ज्ञानाकारणमेव आयास्यति । तथा च प्रमाया अपि ज्ञानत्वेन ज्ञानकारण-जन्यत्वे स्फुटो व्याघातः स्यात् । न चाजन्यत्वेनोपपत्तिः । कार्यत्वादितिवाक्येन व्याघातादिति भावः । प्रमाज्ञाननिरासेनैव निरस्तमिति प्रमा ज्ञानसामग्रीव्यतिरिक्तकारणजन्येति प्रतिज्ञा-निरासेनैवेत्यर्थः । परतस्त्ववादिनापि गुणत्वजातेः अनङ्गीकारेण गुणशब्देन ज्ञानकारणाति-रिक्तकारणस्यैव विवक्षणीयत्वेन पूर्वोक्तव्याघाताद्यापत्तेः इत्यर्थः । कार्यत्वरूपहेतुदोषस्य

(तत्त्वसुबोधिनी)
घटज्ञानयोः व्यभिचारस्यात्र हेतावसम्भवात् प्रतिज्ञा निरासनेत्युक्तम् ॥ **अन्यत्रानुपक्षीणमिति** ॥ अनन्यथासिद्धमित्यर्थः ॥ **सामान्यं वेति** ॥ अन्यथासिद्धमनन्यथासिद्धसाधारणमित्यर्थः ॥ **व्यभिचारादिति** ॥ अन्यथासिद्धान्वयव्यतिरेकयोः देहत्वादौ सत्यपि कारणत्वाभावेन व्यभिचारान्नान्यथासिद्धान्वयव्यतिरेकमात्रेण कारणत्वसाधनं युक्तमित्यर्थः । न तु गुणस्य दोषनिरासे प्रमायां च कारणत्वमस्तु इत्यत आह ॥ **न चोभयेति** ॥ तथा चान्वयव्यतिरेकमूत्ररूपकल्पकाभावान्नोभयत्र कारणत्वं तस्येति भावः ।

नन्वेवमप्रमाया अपि स्वतस्त्वं स्यात्तत्रापि दोषस्य गुणनिरासोपक्षीणत्वादिति वक्तुं शक्यत्वादित्याशङ्क्य निषेधति ॥ **न चैवमिति** ॥ नन्वेवं गुणस्याप्यन्वयव्यतिरेकबलादुभयत्र कारणत्वं कल्प्यम् इत्यत आह ॥ **न चैतदिति** ॥ अभ्युच्चयवादेनाह ॥ **दोषाभावस्येति** ॥ **प्रमात्वादिति** ॥ तथा च तदन्वयव्यतिरेकित्वादित्यत्रोक्तदोषाप्राप्तेरिति भावः ॥ **तत्रैवेति** ॥ ईशप्रमायामित्यर्थः ॥ **घटादाविति** ॥ गुणजन्यत्वाभावरूपसाध्यसत्वेऽपि अजन्यत्वरूपो उपाधेरभावाद्व्यभिचार इत्यर्थः ॥ **अजन्यप्रमात्वमिति** ॥ जन्यप्रमात्वाभावादित्यर्थः । तेन न घटादौ साध्याव्यापकत्वमिति भावः ॥ **व्याप्त्यभावादिति** ॥ यादृच्छिकसंवादिदुष्टवाक्यजन्यप्रमायां गुणजन्यत्वाभावरूपसाध्यसत्वेऽपि जन्यप्रमात्वाभावरूपो उपाध्यभावादित्यर्थः ॥ **कर्तृगुणनिरपेक्षस्यापीति** ॥ ज्ञानगतयाथार्थ्यप्रमाजनकत्वेनाभिमतकर्तृगुणाप्तत्वनिरपेक्षस्यापि वेदस्य यथार्थज्ञानकारणत्वरूपप्रामाण्यसिद्धिरित्यर्थः ॥ **देवताह्वानादिरूपस्येति** ॥ एह्यग्न इत्यादिमन्त्राणां देवताह्वानार्थत्वात्तदा देवताभावे तदाह्वानाद्ययोगादिति भावः ॥ **अतीवविपर्ययैवेति** ॥ अन्यथा अकल्पयदिति लङ् न स्यादिति भावः ॥ **यथर्तुष्विति** ॥ ऋतुपक्षे प्रलय इत्यस्य संवत्सर इत्यर्थः । दार्ष्टान्तिके तु प्रतिकल्प इत्यर्थः ॥ **प्रलयस्येति** ॥ अनेनाप्रलयकालान्तत्वहेतुरित्युक्तं भवति ।

## वाक्यार्थविवरणम्

वेदानित्यत्वे पौरुषेयत्वे ॥ **उपचारमिति** ॥ बहुकालीनत्वमात्रेण नित्यत्वमुपचरितमिति भावः ॥ **केवलान्वयिधर्मत्वादिति** ॥ सामान्यं हि व्यावृत्तिप्रत्ययजनकम् । प्रमेयत्वस्य सामान्यत्वेऽप्रमेयेभ्यो व्यावृत्तिप्रत्ययजनकत्वं वाच्यम् । तच्च नास्ति । प्रमेयत्वस्य केवलान्वयित्वेन सर्वेषामपि प्रमेयत्वेनाप्रमेयाणामेवाभावादित्यर्थः ॥ **अस्वतन्त्रत्वादिति** ॥ घटः प्रमेय

(वाक्यार्थविवरणम्)

इत्यादिरूपेण पराधीनप्रतीतिमत्त्वादित्यर्थः ॥ **गुणादावपि वृत्तेरिति** ॥ गुणो न कर्मणि वृत्तेः । गुणे गुणानङ्गीकाराच्च । नापि कर्म । गुणेऽपि वृत्तेः । केवलान्वयित्वादेवेत्यर्थः ॥ **एवं परत्वेति** ॥ परस्य भावो हि परत्वम् । अपरस्य भाव अपरत्वम् । अत्रापि भावभवित्रोरभेद पर्यायत्वं भेदे । न तावत्सामान्यम् आकाशादिविभुद्रव्येषु वृत्तेः । नापि द्रव्यम् । बहुकालीनत्वादिरूपपरत्वादेर्गुणादावपि वृत्तेः । नापि गुणः । कर्मण्यपि वृत्तेरित्युक्तरीत्या परत्वादिगुणानामपि दत्तजलाञ्जलिता स्यादित्यर्थः । अव्याप्तौ व्याप्यभावेऽङ्गीकृत इत्यर्थः । तदुपपादनायानुमानोपजीव्येन बाधादित्युक्तम् । अनुकूलतर्केण पक्ष एव साध्यव्यापकताभङ्गेन व्याप्यभावेऽङ्गीकृते स्वयमेवोपाधिलक्षणाभावेन पर्वतेतरस्य दुष्टत्वेन नोपाधित्वमिति भावः । शरीरपदत्यागे दोषान्तरमाह ॥ **कार्यत्वमिति** ॥ तथा च कार्यत्वाख्यजन्यत्वस्य हेतुत्वेन न तस्यैवोपाधित्वम् । न ह्यनुमाने साधनमेवोपाधिः साधनव्यापकत्वादिति ध्येयम् ॥ **उत्तरत्रेति** ॥ सम्बन्धानुपपत्तेश्चेत्यत्र अशरीरत्वात्तस्य जगता सम्बन्धो न युज्यते कर्तृत्वेनेति समयपाद इत्यर्थः ॥ **लोकानुकूल्येति** ॥ विचित्रप्रासादादिनिर्माणस्यानेककर्तृकताया एव दर्शनादित्यर्थः ॥ **प्रामाण्यविवादादिति** ॥ आप्तप्रणीतत्वे सिद्धे तन्मूलकत्वेन प्रामाण्यसिद्ध्या हेतुसिद्धिः । तत्सिद्धौ च तत्सिद्धिरिति अन्योऽन्याश्रय इति भावः ॥ **उक्तदोषादिति** ॥ प्रणेतुरीश्वरस्य सार्वज्ञे मानाभावादिति भावः । **तद्वाक्यम्** ऋग्वेद इति वाक्यम् ॥ **ईश्वरेति** ॥ तस्माद्यज्ञादिति वाक्यादित्यर्थः ॥ **तद्वाक्यादिति** ॥ ऋग्वेद एवेत्यग्निजन्यताप्रतिपादकवाक्यादित्यर्थः । **अस्य** तस्मादितीश्वररचितवाक्यस्य । तेषामग्र्यादीनाम् । तत् सम्प्रदायप्रवर्तकत्वमेव कर्तृत्वमित्यर्थः । तत्प्रत्यक्षं प्रणेतुः प्रत्यक्षम् । तदप्रवेशात् तस्य वेदप्रणेतुः प्रत्यक्षस्य अदृष्टाद्यविषयकत्वात् । तादृशमदृष्टार्थावगाहि ॥ **श्रुतिसिद्धमिति** ॥ 'वाचा विरूप नित्यया' इत्यादिश्रुतिसिद्धमित्यर्थः। ज्ञानकारणातिरिक्तकारणमाप्तोक्तत्वाख्यगुणरूपं स्वतस्त्वं वाच्यमिति । 'अयाथार्थ्यं ज्ञानकारणातिरिक्तदोषाख्यकारणनिरपेक्षं ज्ञानधर्मत्वात् । प्रामाण्यवत् ।' इत्यनुमानेनेत्यर्थः ॥ **दोषेति** ॥ एवं चाप्रामाण्यस्य दोषान्वयव्यतिरेकानुविधायित्वात् तन्निरपेक्षतासाधने बाध इति भावः । प्रमात्वस्येत्यादिकं जातिविशिष्टायां व्यक्तौ शक्तिरिति तार्किकरीत्या । तादृशज्ञानस्य प्रमात्वयुक्तज्ञानस्य । ज्ञाने ज्ञानसामान्ये निर्विकल्पके वा ज्ञाने ॥ **व्यभिचारादिति** ॥ तादृशान्वयव्यतिरेकयोरसम्भवादिति भावः ॥ **उभयेति** ॥ गुणस्य दोषनिरासप्रामाण्योभयकारणत्वे इत्यर्थः ॥ **न चैवमिति** ॥ दोषस्यापि गुणनिरासोपक्षीणत्वमस्तु उभयकारणत्व-

(वाक्यार्थविवरणम्)

कल्पकं प्रमाणं नास्तीत्यर्थः ॥ **सममिति** ॥ गुणस्याप्युभयकारणत्वमस्त्वित्यर्थः । यादृच्छिकेत्यादिभ्रान्तप्रतारकवाक्यजन्यप्रमायां व्यतिरेकव्यभिचार इत्यर्थः ॥ **तावतेति** ॥ दोषाभावस्य प्रामाण्यकारणत्वे अपौरुषेयत्वं वेदस्य न व्याहन्यते । तत्तदैव व्याहन्येत यद्याप्तोक्तत्वं प्रामाण्यकारणं स्यादिति भावः ॥ **स्वरूपेति** ॥ स्वेषां यद्देवत्वविशिष्टं रूपमित्यर्थः ।

## वाक्यार्थमञ्जरी

देवतापदस्य यदि विनाशित्वे शब्दे नित्यवेदे अप्रामाण्याख्यविरोधः स्यात्पश्चाद्देवाभावेन वाच्यहीनस्य प्रामाण्यायोगादिति चेन्न । अतः धाता यथेति शब्दान्महतां प्रत्यक्षादन्येषामुपरितनकालो देवानां कालत्वादित्यनुमानाच्च प्रभवाद्देवानां प्रभवनियमावगमादित्यर्थः । तथा च देवाभावकाले वाच्यहीनत्वमेवेति भावः ॥ **तदेवेति** ॥ निरभिधेयत्वादिदोषशून्यवाक्यस्यैवावगमत्वादिति भावः ॥ **वाचेति** ॥ हे विरूप तस्मै भगवते नित्यया वाचा शोभनां स्तुतिं प्रेरयेत्यर्थः ॥ **उपचारेति** ॥ नित्यवद्बहुकालवृत्तित्वादिति भावः ॥ **प्रामाण्याभावेति** ॥ अनित्यत्वे पुरुषजन्यत्वेन विप्रलम्भादिदोषमूलत्वसम्भवादिति भावः । तार्किकः प्रत्यवतिष्ठते ॥ **आप्तिमूलत्वेनेति** ॥ विवक्षितार्थतत्त्वज्ञानाविप्रलिप्साकरणपाटवविवक्षितार्थरूपाप्तिमूलत्वेनेत्यर्थः । तथा च न दोषशङ्केति भावः ॥ **सार्वज्ञादाविति** ॥ विवक्षितार्थतत्त्वज्ञानादावित्यर्थः । वेदस्य सर्वार्थप्रतिपादकत्वात्सार्वज्ञोक्तिः । विवादपदं धर्माद्यतीन्द्रियापरोक्षिणः सार्वज्ञं कैमुत्यसिद्धमिति भावः । आभासतुल्यत्वमाह ॥ **प्रमेयत्वेनेति** ॥ विवादपदमस्मदादिप्रत्यक्षं प्रमेयत्वाद्घटवदिति विप्रतिपन्नास्मदादिप्रत्यक्षत्वसाधनापातादित्यर्थः । हेतोरनिर्वचनादसिद्धिश्चेत्यत आह ॥ **किं चेत्यादिना** ॥ न तेन सार्वज्ञसिद्धिरित्यन्तेन ॥ **केवलान्वयीति** ॥ व्यावर्तकधर्मस्यैव जातित्वादिति भावः ॥ **अस्वतन्त्रत्वादिति** ॥ द्रव्यादिसापेक्षप्रतीतित्वादिति भावः ॥ **गुणादावपि वृत्तेरिति** ॥ गुणकर्मणोश्च द्रव्यमात्रवृत्तेरितिभावः ॥ **अनित्येऽपीति** ॥ विशेषस्य यावन्नित्यद्रव्यमात्रवृत्तित्वादिति भावः । अप्रतियोगिसापेक्षित्वादिति छेदः ततः प्रमेयाभावात् ॥ **भावभवित्रोरिति** ॥ धर्मधर्मिणोरित्यर्थः ॥ **उक्तानतिवृत्तेरिति** ॥ अतिरिक्तत्वे क्वचिदन्तर्भावस्यावश्यकत्वेन तस्य च न तावद्द्रव्यमित्यादिनोक्तदोषमतिक्रम्यावृत्तेरित्यर्थः ॥ **एवमिति** ॥ यदि प्रमेयस्य भावः प्रमेयत्वं न ततोऽतिरिक्तं तर्हि परस्य भावः परत्वम्, अपरस्य भावः अपरत्वं, गुरोर्भावः गुरुत्वं, द्रवतो

(वाक्यार्थमञ्जरी)

भावः द्रवत्वं, पृथग्वृत्तेर्भावः पृथक्त्वं न ततोऽतिरिक्तमिति अङ्गीकारापातेन तेषां गुणानां तिलोदकाञ्जलिदानप्रसङ्गादित्यर्थः ॥ **प्रमेति** ॥ प्रमाविषयत्वरूपप्रमेयत्वेन प्रमाणाभास-मानत्वादिति भावः ॥ **अन्येनेति** ॥ तथाचायुतासिद्धत्वाभावान्न समवायः । प्रमाया गुणत्वादेव न संयोग इत्यर्थः ॥ **उक्तदोषेति** ॥ न तावद् द्रव्यमित्याद्युक्तदोषाणां लङ्घने अतिक्रमणे अजङ्घालुत्वाज्जङ्घाशून्यत्वादित्यर्थः । जङ्घालोऽतिजवस्तुल्य इत्यमरोक्तेः । अन्यसमये तार्किकसिद्धान्ते ॥ **धर्मान्तरेऽपीति** ॥ ज्ञेयत्वाभिधेयत्वादावपीत्यर्थः ।

तथा च तस्यापि नोक्तसाध्ये हेतुत्वं सम्भवतीति भावः । विप्रतिपन्नं भूभूधरादिकम् । सार्वज्ञसिद्धिरिति उपादानगोचरापरोक्षज्ञानवत एव कर्तृत्वादिति भावः ॥ **शरीरजन्यत्वेति** ॥ ईशस्य तन्मते अशरीरत्वादिति भावः ॥ **सत्प्रतिपक्षत्वाच्चेति** ॥ नन्वत्रोपाधेः सत्प्रति-पक्षोन्नायकत्वेनैव दूषकत्वमुत प्रकारान्तरेणापि नाद्यः चशब्दानुपपत्तेः ॥ **उपाधावित्यादि** ॥ पृथग्विशेषणकृत्यकथनानुपपत्तेश्च । नान्त्यः । स एवोपाधिदोषोऽपीति प्रमाणलक्षणविरोधात् । तत्र प्रतिज्ञायाः समबलप्रमाणविरोधरूपप्रतिपक्षातिरिक्तोपाधिदोषस्यैवकारेणाप्यावर्तनात् । उपपादितं चैतन्न्यायकल्पलतायामिति चेदुच्यते पक्षादिप्रविभागात्पूर्वं व्याप्तिग्रहकाले प्रतीत-स्योपाधेर्व्यभिचारोन्नायकत्वम् । अनन्तरं च प्रतिपक्षोन्नायकत्वमेव । व्याप्तेः पूर्वं गृहीतत्वेन व्यभिचारोन्नायकत्वासम्भवात् । उदाहृतवाक्यं चानन्तरोपस्थितोपाधिविवक्षयैव अन्यथा 'साध्य-साधनवैलोम्यमव्याप्तः साधनस्य च' इत्यनुव्याख्याने व्याप्तिचशब्दाभ्यां व्यभिचारसत्प्रतिपक्ष-योरुक्त्या तद्विरोधापत्तेः । स्पष्टं चैतत्पद्धत्यादौ तर्कताण्डवे च । तथा चात्र व्यभिचार सत्प्रतिपक्षाख्यदूषणद्वयाभिप्रायेण प्रवृत्तेर्न कोऽपि दोष इति ॥ **पक्षव्यावृत्त्यर्थत्वादिति** ॥ अन्यथा जन्यत्वमात्रस्य पक्षे सत्वेन साधनव्यापकत्वं स्यात् । विशेषणदाने नेश्वरस्य शरीराभावाद्भवति तद्व्यावृत्तिरिति भावः ॥ **पक्षेतरस्यापीति** ॥ तत्रापीतरत्वमात्रस्य पर्वते सत्वेन साधनव्यापकत्वपरिहाराय पक्षव्यावृत्त्यर्थं पर्वतेति विशेषणोपादानादिति भावः । पर्वतेतरत्वस्य व्याप्तिरस्ति न वा आद्यं निरस्यति ॥ **का नो हानिः पर्वतेतरत्वादीनामपि व्याप्तिरस्ति चेदिति** ॥ यद्वा वह्निरहितं पर्वतं पक्षीकृत्य वह्निः साध्यते तदा पक्षे साध्यव्याप्त्यभङ्गाद्भवत्येव पर्वतेतरत्वमुपाधिः । अत एव बाधोन्नीतपक्षेतरस्य पर्वतेरत्वादे-रुपाधित्वं संमतमिति भावः । द्वितीयं निराह ॥ **अनुमानोपजीव्येन बाधादव्याप्तिरिति** ॥

(वाक्यार्थमञ्जरी)

अनुमानस्योपजीव्येन यद्यग्निर्न स्यात्तर्हि धूमोऽपि न स्यादिति तर्केण पक्षे वह्निनिश्चयं तत्रैव साध्यव्यापकत्वभङ्गेन पर्वतेतरत्वस्योपाधिलक्षणराहित्येनैव दुष्टत्वम् । न तु पक्षव्यावर्तक-विशेषणवत्वादित्यर्थः । हेतौ व्यभिचारवारकविशेषणमेवोपादेयं न त्वसिद्धिवारकमिति मते प्रतिपक्षे विशेषणं व्यर्थमेवेत्यत आह ॥ **न चेति** ॥ व्यभिचारवारकविशेषणस्य व्याप्तिग्रहोप-योगित्वान्न वैय्यर्थ्यमित्यत आह ॥ **व्याप्तिवदिति** ॥ तदर्थमसिद्धिवारकविशेषणमपि सप्रयोजनमिति भावः । उपाधेरन्यथासिद्धिमाशंक्य निराह ॥ **सकर्तृकत्वेति** ॥ **उत्तरत्रेति** ॥ समयपादे सम्बन्धानुपपत्तेश्चेत्यत्र शरीराभावे ईश्वरस्य मृतपुरुषवज्जगतो कर्तृत्वेन सम्बन्धानु-पपत्तेरिति शरीरस्यापि कर्तृत्वे प्रयोजकत्वसमर्थनेन निराकरिष्यत इत्यर्थः । सकर्तृत्वे उक्तरीत्या सर्वज्ञत्वं प्राप्तमेवेत्यत आह ॥ **बहुकर्तृत्वेति** ॥ जगत्कर्तुरेकत्व एव तस्योक्तरीत्या सार्वज्ञं स्यादिति भावः ॥ **लोकानुकूल्यादिति** ॥ लोके विचित्रप्रासादादिनिर्माणस्यानेककर्तृकत्वस्यैव दर्शनादिति भावः ॥ **अविप्रलम्भादीति** ॥ प्रमाणाभावादिति भावः ।

सार्वज्ञस्योक्तरीत्या कथञ्चिच्छङ्कार्हत्वेऽपि अविप्रलम्भादेस्तदभावादतीत्युक्तम् । **आम्य-निश्चयादिति** भाष्यमाप्तिमूलकत्वानिश्चयादित्यपि व्याचष्टे ॥ **अस्तु वेति** ॥ कुतः प्रमाणादनु-मानादागमाद्वा वेदः पामरप्रणीतः वेदत्वात् व्यतिरेकेण गगनवदित्याभाससमानयोगक्षेमत्व-मनुमानस्येत्याह ॥ **वेदत्वस्येति** ॥ वेदत्वस्य पामरप्रणीतकालिदासादिवाक्यरूपात्सपक्षा-द्व्यावृत्तत्वेनासाधारण्यमिति चेत्तर्हि सर्वज्ञप्रणीतभारतादिरूपसपक्षाद्व्यावृत्तत्वेन त्वत्पक्षेऽप्य-साधारण्यमित्याह ॥ **असाधारण्यस्य चेति** ॥ **वेदानित्यत्व इति** ॥ तथा च वेदप्रामाण्यसिद्धौ प्रमाणवाक्यत्वेनाप्तिमूलत्वसिद्धिः । तत्सिद्धौ च तत्प्रामाण्यसिद्धिरित्यन्योन्याश्रय इति भावः ॥ **तस्मादिति** ॥ तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे इत्यत्र यज्ञशब्दवाच्येश्वरजन्यत्वं श्रूयत इति भावः ॥ **उक्तेति** ॥ ईश्वरसार्वज्ञासिद्धिरूपोक्तदोषादित्यर्थः ॥ **कारणेति** ॥ अग्निरचितत्व-रूपमुख्यार्थत्याग इति शेषः । एतत्संप्रदायप्रवर्तकत्वमीश्वरस्य तु सर्वज्ञत्वात्कर्तृत्वमेवेति भावः ॥ **चक्रकापातादिति** ॥ ईश्वरस्य सर्वज्ञत्वे तस्माद्यज्ञादित्यादिना वेदस्य सर्वज्ञप्रणीतत्व-सिद्धिस्तत्सिद्धौ च वेदप्रामाण्यसिद्धिस्तत्सिद्धौ च वेदेनेश्वरस्य सार्वज्ञसिद्धिरिति चक्रका-पातादित्यर्थः । तादृशम अदृष्टविषयम् ॥ **अनुमानमिति** ॥ देवदत्तशरीरं देवदत्तविशेषगुणजन्यं कार्यत्वे सति देवदत्तभोगहेतुत्वाद्देवदत्तप्रयत्नजन्यमालावदित्यनुमानमित्यर्थः ॥ **प्रतिपक्षादीति** ॥

(वाक्यार्थमञ्जरी)
देवदत्तशरीरादेः किं साक्षाद्देवदत्तविशेषगुणजन्यत्वं साध्यमुत परम्परया वा । नाद्यः धर्माधर्मयोरप्यारम्भकप्रेरणादिनैवोपयोगाङ्गीकारात् । देवदत्तशरीरं न साक्षाद्देवदत्तगुणजन्यं शरीरत्वाद्यज्ञदत्तशरीरवदिति सत्प्रतिपक्षाच्च । द्वितीये जन्मान्तरीयप्रयत्नाराधितदेवताद्वारेणोपपत्तेरर्थान्तरता देवदत्तविशेषगुणजन्यतया विनाप्यकाशादेरिवेश्वरेच्छया देवदत्तस्य भोगहेतुता सम्भवतीत्यप्रयोजकता चेत्यादिदुष्टत्वादित्यर्थः ॥ **अदृष्टसम्भावनेऽपीति** ॥ उक्तरीत्या सामान्यतो दृष्टसिद्धावपि नादृष्टविशेषसिद्धिरित्यर्थः । तदेव व्यनक्ति ॥ **न हीति** ॥ प्रामाण्यस्य करणप्रामाण्यस्य ॥ **स्वतस्त्वेनेति** ॥ ज्ञानजनकशक्त्यैव तद्गतयाथार्थ्यजनकत्वेनेत्यर्थः ॥ गुणेति ॥ कर्तृगुणोत्पादकेत्यर्थः । एतदेवोपपादयति ॥ **प्रामाण्यं नामेत्यादिना** ॥ याथार्थ्यं ज्ञाननिष्ठम् ॥ **याथार्थ्यमिति** ॥ अप्रामाण्यघटरूपयोर्व्यभिचारवारणाय विशिष्टग्रहणम् । विशेषणत्यागेनाप्याह ॥ **याथार्थ्यमिति** ॥ अप्रामाण्यं न दोषजन्यं ज्ञानधर्मत्वात्प्रामाण्यवदित्याभाससाम्यमाशंक्य निराकरोति ॥ **न चेति** ॥ **दोषाभावेति** ॥ तथा चान्वयव्यतिरेकाभ्यामप्रामाण्यदोषयोः कार्यकारणभावग्राहकप्रमाणबाधकमिति भावः । न चैवं गुणाभावे प्रामाण्याभावोऽपि नियत इति वाच्यम् । यादृच्छिकसंवादिस्थले व्यभिचारस्य वक्ष्यमाणत्वात् ।

प्रमा ज्ञानसामग्री व्यतिरिक्तकारणजन्येत्यत्र प्रमात्वविशिष्टं पक्षः तदुपलक्षितं वा । तत्राद्यं विकल्प्य दूषयति ॥ **प्रमाया इति** ॥ अत्र सर्वत्र कारणपदं सामग्रीपरं पूर्वोत्तरग्रन्थानुगुण्यात् एवंविधत्वेनातिरिक्तकारणजन्यत्वेन एतदुत्तराभ्यामप्यन्वितम् ॥ **व्याहतेरिति** ॥ सर्वस्यापि स्वसामग्रीमात्रजन्यत्वादिति भावः । द्वितीयं शङ्कते ॥ **प्रमात्वयुक्तज्ञानस्येति** ॥ अत्रापि ज्ञानसामग्रीव्यतिरिक्तकारणजन्यत्वं किं तन्मात्रजन्यत्वम् उत ज्ञानसामग्रीजन्यत्वे सति तदतिरिक्तजन्यत्वम् । आद्ये आह ॥ **तादृशज्ञानस्यापीति** ॥ द्वितीयं शङ्कते ॥ **ज्ञानकारणेति** ॥ **घटादौ व्यभिचारादिति** ॥ कार्यत्ववति घटादौ ज्ञानकारणजन्यत्वांशाभावादिति भावः ॥ **ज्ञानकारणमात्रेति** ॥ घटादावस्य सत्वान्न व्यभिचार इति भावः । ज्ञाने ज्ञानसामान्ये ॥ **ज्ञानातिरिक्तेति** ॥ ज्ञानसामान्यातिरिक्तेत्यर्थः ॥ **तत्साधनेति** ॥ ज्ञानकारणमात्रजन्यत्वाभावसाधनेत्यर्थः । तथाचाभाससाम्यमिति भावः । ननु ज्ञानसामान्ये ज्ञानसामग्रीमात्रजन्यत्वाभावः । सिद्ध्यनुजन्यत्वेन वातिरिक्तसामग्रीजन्यत्वेन वा सिद्ध्यति । आद्ये ज्ञानं अजन्यं कार्यत्वादिति प्रयुक्तं स्यात्तथा च प्रतिज्ञाहेत्वोर्व्याघातः । द्वितीये ज्ञानं ज्ञान-

(वाक्यार्थमञ्जरी)

सामग्र्यतिरिक्तसामग्रीजन्यमिति स्यात्तथा च प्रतिज्ञाहेत्वोर्व्याघातः । ज्ञानजनक ज्ञान-सामग्र्यतिरिक्तत्वाभावादित्यत आह ॥ **विशिष्टाभावविकल्पेनेति** ॥ ज्ञानसामग्रीमात्र-जन्यत्वाभावरूपविशिष्टाभावविकल्पेनाभिहितव्याघातस्य समीकरणात् तुल्यत्वादिति भावः । तथाहि प्रमायामपि नाजन्यत्वेन ज्ञानसामग्रीमात्रजन्यत्वाभावपर्यवसानं पूर्ववत्प्रतिज्ञा-हेत्वोर्व्याहतेः । नाप्यतिरिक्तसामग्रीजन्यत्वे प्रमाया अपि ज्ञानत्वेन तत्कारणस्य ज्ञानसामग्री-व्यतिरिक्तत्वाभावेन प्रतिज्ञापदयोर्व्याघातादिति ॥ **प्रतिज्ञानिरासेनेति** ॥ प्रमाज्ञानसामग्री-व्यतिरिक्तकारणजन्येति प्रतिज्ञानिरासेनेत्यर्थः । परतस्त्ववादिनापि गुणत्वजातेरनङ्गीकारेण गुणशब्देन ज्ञानकारणातिरिक्तकारणस्यैव विवक्षणीयत्वेन पूर्वोक्तव्याघातापत्तेरिति भावः । कार्यत्वहेतुदोषस्य घटज्ञानयोर्व्यभिचारस्यात्र हेतावसम्भवात्प्रतिज्ञानिरासेनेत्युक्तम् ॥ **अन्यत्रेति** ॥ अनन्यथासिद्धमन्यथासिद्धं वेत्यर्थः ॥ **व्यभिचारादिति** ॥ तादृशान्वयव्यतिरेकिण-स्तन्तुरूपस्य पटहेतुत्वादर्शनादिति भावः ॥ **उभयेति** ॥ दोषनिरासरूपप्रामाण्यरूपोभयेत्यर्थः । एवं दोषस्य गुणनिरासोपक्षीणत्वादिनेत्यर्थः । एतत् प्रमायाः गुणान्वयव्यतिरेकनियमेन तेषामुभयकारणत्वम् ॥ **व्यभिचारादिति** ॥ भ्रान्तप्रतारकवाक्ये गुणाभावेऽपि प्रमोत्पत्त्या व्यतिरेकव्यभिचारादित्यर्थः ॥ **कारणतयापन्न इति** ॥ प्रतिबन्धकाभावस्यापि कारणत्वादिति भावः ॥ **कारणत्वापत्तेरिति** ॥ न चेष्टापत्तिः प्रतिबन्धकाभावस्यापि कारणत्वे उत्सर्गापवादयोः क्वाप्यभावप्रसङ्गात् । औत्सर्गिककार्यापवादकविरहतारूपान्यथासिद्धत्वाच्चेति भावः ॥ **दोषा-भावस्य कारणत्वे चेति** ॥ नन्विदमयुक्तं पूर्वग्रन्थेन तर्हि दोषाभावः कारणमित्यायातमिति चेन्न तथासत्युत्सर्गापवादयोः क्वाप्यभावप्रसङ्गादिति सुधायाः दोषाभावोऽपि न कारणं यादृच्छिकसंवादादिषु सत्यपि दोषे प्रमाणज्ञानोदयादिति तत्वनिर्णयटीकायाश्च विरोधादिति चेदुच्यते । अभ्युच्चयवादेनात्र कारणत्वोक्तिरित्यदोषः ।

वस्तुतस्तु अत्र कारणपदं घटं प्रति कुलालपित्रादिसाधारणतद्व्यतिरेकप्रयुक्तव्यतिरेक-प्रतियोगित्वरूपप्रयोजकत्वमात्रपरम् । अत एव अदुष्टमिन्द्रियं त्वक्षं तर्को दुष्टस्तथानुमा । आगमो दुष्टवाक्यं चेति ब्रह्मतर्कवाक्ये निर्दोषार्थेन्द्रियसन्निकर्षः प्रत्यक्षमित्यादिप्रमाणलक्षणे च दोषाभावघटितलक्षणकथनमपि सङ्गच्छते । न चैवं प्रामाण्यस्य ज्ञानकारणातिरिक्तकारण-सापेक्षत्वेन परतस्त्वं मन्तव्यम् । दोषाभावस्य प्रयोजकत्वेऽपि कारणत्वाभावेनातिरिक्तकारणा-

(वाक्यार्थमञ्जरी)
नपेक्षितत्वात् । दोषाभावस्यापेक्षितत्वेऽपि प्रमाजननशक्तिः सहजा न तु भ्रमजनने शुक्तिवदाधेयेत्येतावतैव प्रामाण्यस्वतस्त्वसिद्धेश्च । उक्तं च सुधायाम् इन्द्रियादीनामौत्सर्गिकी शक्तिः प्रामाण्यजनने दोषापवादादप्रामाण्यमपि जनयतीति पूर्वग्रन्थादीनां च दोषाभावस्य कारणत्वनिषेधपरत्वमित्यविरोधः स्पष्टमेतत्तर्कताण्डव इति ॥ **अव्याघातादिति** ॥ प्रामाण्यार्थमाप्तोक्तत्वानङ्गीकारादिति भावः । व्यभिचारात् साध्याव्यापकत्वात् ॥ **अजन्यप्रमात्वमिति** ॥ जन्यप्रमात्वाभाव इत्यर्थः । तेन व्यभिचारनिरासः ॥ **व्याप्त्यभावादिति** ॥ यादृच्छिकविसंवादिदुष्टवाक्यजन्यप्रमायां गुणजन्यत्वाभावरूपसाध्ये सत्यपि जन्यप्रमात्वाभावरूपोपाध्यभावेन साध्याव्यापकत्वादित्यर्थः ॥ **कर्तृगुणनिरपेक्षस्यापीति** ॥ ज्ञानगतयाथार्थ्यं प्रयोजकत्वेनाभिमतगुणाप्तत्वनिरपेक्षस्यापि यथार्थज्ञानकारणत्वरूपप्रामाण्यसिद्धेरित्यर्थः । देवतानां भावः सत्ता तन्नियम इत्यर्थः ॥ **देवताह्वानादिरूपस्येति** ॥ एह्यग्ने इत्यादिमन्त्राणां देवताह्वानार्थत्वात्तदा देवताभावे तदाह्वानायोगादिति भावः ॥ **स्वरूपनित्यत्वाभावेऽपीति** ॥ देवत्वव्यवहारहेतुविशिष्टरूपस्य नष्टत्वादिति भावः ॥ **अतीतविषयतयैवेति** ॥ अन्यथा अकल्पयदिति लङ् न स्यादिति भावः ॥ **उपचारेणेति** ॥ प्रभवस्य बाहुलिकत्वेनेति भावः । तदनिश्चयः तादृशप्रत्यक्षानिश्चयः ॥ **यथेति** ॥ पर्यये ऋतूनां परिवर्तने संवत्सरान्तरप्राप्ताविति यावत् । ऋतुषु वसन्तादिषु **नानारूपाणि** अन्योऽन्यविलक्षणानि । तानि तान्येव वसन्ते कोकिलगानादीनि अन्यदा सारसगानादीनि ऋतुलिङ्गानि ऋतुज्ञापकानि यथा दृश्यन्ते तथा युगकल्पादिषु नानारूपास्त एव त एव भावाः पदार्थाः दृश्यन्ते इति भारतवाक्यार्थः । अत्र दृश्यन्त इत्यनुवादात्प्रत्यक्षं ज्ञायत इति भावः । व्यभिचारस्त्वद्रीत्या ॥ **परं प्रतीति** ॥ परेण पूर्वपक्षिणा प्रलयानभ्युपगमेन व्यावृत्याप्रसिद्धेरिति भावः ॥ **प्रमाणेति** ॥ यत्प्रयन्ति आकाशं प्रत्यस्तं यन्ति यमप्येति भुवनं यस्मिंश्च लयं यान्तीत्यादिरूपेत्यर्थः ॥

## सूत्रभाष्यम्

**॥ ॐ अत एव च नित्यत्वम् ॐ ॥ २९ ॥**

**अत एव शब्दस्य नित्यत्वादेव च देवप्रवाहस्य नित्यत्वं युक्तम् ॥**

## सत्तर्कदीपावली

वैदिकेन्द्रादिना तदर्थप्रवाहोच्छेद इत्याह ॥ अत इति ॥ गतैर्देवैः समाननामरूपत्याद्वर्तमानानां मुक्त्यनन्तरमपि अपुनरावृत्तावपि भविष्यद्देवेषु पूर्वेष्विव ब्रह्मरुद्रादिव्यवहाराविरोधः । तथा च श्रुतिः । यथा पूर्वमकल्पयदिति ।

## तत्त्वप्रदीपिका

अत एव शब्दस्य नित्यत्वहेतोरेव च देवप्रवाहनित्यत्वं सुसाधं भवति विनाऽपि हेत्वन्तरान्वेषणेन । यस्माद्धेतोः प्रामाण्यविरोध आशङ्क्यते । न ह्यनित्यत्वे वाच्यस्य शब्दनित्यत्वं समञ्जसं स्यात् । न च पदस्थानां देवादीनामेव नित्यत्वमाशङ्कनीयम् । अप्रलयप्रसङ्गात् । न च सर्गप्रलयाभावो वाच्यः । श्रुतिविरोधात् । अथापि स्यान्नालं श्रुतिः सृष्ट्यादिकं वेदादिकं च प्रमापयितुं विधिपरत्वादिति । मा भूत्तर्ह्यग्निहोत्रं जुहोतीत्यादिवाक्यानामग्निहोत्रादिसिद्धार्थवाचकत्वम् । ततश्चाग्निहोत्रहोमादौ प्रमाणाभावाद्वैदिकक्रियालोपः प्रसज्येत । नाग्निहोत्रादिसिद्धे तात्पर्यं कार्य एवेति वदतस्तद्विपरीतमेवोत्तरं स्यात् । तथा सति क्रियालोपः स्यादिति चेन्मैवम् । उच्छ्वासादिक्रियाकरणात् । विहितक्रियालोपः स्यादित्युक्तमिति चेत् कस्य विहिता क्रिया ? ब्राह्मणो यजेतेत्यादौ विहिता हि ब्राह्मणादिवर्णाश्रमिणामिति चेन्न । यजनविधिमात्रपरस्य वाक्यस्य ब्राह्मणादावमानत्वात् । अतश्चायं चण्डमतिश्चण्डालादेर्यज्ञाधिकारमप्यनुजज्ञिवान् । न चाग्निहोत्रमेव सायमादावेव हुतवह एव तत्तन्मन्त्रेणैवेत्थमेव होतव्यमिति नियमः । कस्यचित्कदाचित्कुत्रचिद्यथाकथञ्चित्केनचित्करणस्य यज्ञत्वं स्यात् । अहो यथोद्गतस्य कर्मतत्वमीमांसापरिखिन्नमनसो वेदतात्पर्यविचारणाकौशलपरिपाकः । उक्तं च 'यत्किञ्चित्करणस्यापि यज्ञतैवान्यथा भवेत्' इति भगवतैवानुभाष्ये ॥

अथ मतं न यजिविधिमात्रपरं वाक्यं ब्रूमः किन्तु द्रव्यकालकर्तृकरणादिकारकविशिष्टविधिपरमतो नोक्तदोष इति । तदपि हन्त तापसस्य हृदयतापातिरेकादुत्कासितमिव । सिद्धान्विते लिङादिपदशक्तिस्वीकारापत्तेः । ननु यद्यपि विध्यर्थतया सिद्धवस्तुकथनं न निषिद्ध्यते । कार्य एव तात्पर्यं पर्यवसितम् । अतो माऽपसिद्धान्त इति चैन्मैवम् । स्वर्गाद्यनुभावार्थत्वात्क्रियाविधेः सिद्धपरत्वं क्रियावाचिनामपि किं न स्यात् । प्रयोजनानुद्देशेनाधिकारिणः कर्तव्यतामात्रविधिपरत्वाभ्युपगमे वेदस्य तदादिष्टमकुर्वतः किं स्यात् । प्रत्यवायस्स्यादिति चेत्, तत्परिजिहीर्षवस्तर्हि विहितमनुतिष्ठन्तीति तत्परिहारार्थता विधेरभ्युपगता । अतस्सिद्धपरताऽपि पदानां बलादाश्रयणीया । तस्माच्छ्रुतिसिद्धं देवतादिकमपि नापलपनीयम् ।

(तत्त्वप्रदीपिका)

'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' इति सूत्रविरोधश्च तत्पक्ष एव भवति । क्रियातिरिक्तस्य कस्यचित्कार्यस्य लिङाद्यर्थत्वाभ्युपगमात् । ननु 'स्वर्गकामो यजेत' इत्यादि वाक्यप्रामाण्यार्थमेव क्रियातिरिक्तं किञ्चित्स्थायि कार्यं विध्यर्थत्वेनाभ्युपगन्तव्यम् । क्रियायाः क्षणविनाशित्वेन देहान्तरोपभोग्यस्वर्गादिफलदानायोगादिति । मैवम् । क्रियातिरिक्ते व्युत्पत्त्यसम्भवात् । न तावल्लोकतस्तत्र व्युत्पत्तिः । अलौकिकत्वात्तस्य । नापि जिह्वादाविव प्रसिद्धपदसमभिव्याहारात् । ज्योतिष्टोमादिवाक्येषु तद्वाचकपदाभावात् । क्रियामात्रवाचिनो हि धातवः । लिङादयस्तु कर्तव्यतामात्रनिष्ठाः । अतो नात्र कार्याभिधायि पदं पश्यामः । प्रामाण्यानुपपत्तितर्कावगम्यं कार्यं लिङाद्यर्थं ब्रूम इति चेत्तर्हि क्रियाकर्तव्यतायां प्रमाणाभावात्क्रियालोपः स्यात् । तर्कगम्यत्वे चापूर्वत्वं प्रत्यादिष्टं स्यात् । तथा च न वेदैकगम्यो नियोगः । न च वाच्यं तर्कस्य स्मृतिरूपत्वान्न प्रमाणान्तरतापत्तिरिति । अनुभूतविषयत्वादपरोक्षरूपत्वाच्च स्मृतेः । तर्कस्य लैङ्गिकत्वात् । सापेक्षज्ञानत्वं स्मृतिलक्षणं लक्षणविदो वदन्ति । अतो भाविभूतप्रमाणान्तरसापेक्षत्वान्न तर्कस्मृत्योर्भेद इति चेन्न । पूर्वानुभूतसंस्कारमात्रजं ज्ञानं स्मृतिरिति स्वाभ्युपगमविरोधात् । न च तर्कस्यानुमानादधिकं प्रमाणान्तरसापेक्षत्वं लभ्यते । अथ प्रमाणानुग्राहकत्वात्तर्कस्य स्वविषयभाविप्रमाणान्तरसापेक्षत्वमस्तितरामिति तदयुक्तम् । व्याप्तिमतस्तस्य स्वयमनुमानात्मकत्वेन प्रमाणानुग्राहकत्वमात्राभावात् । व्याप्तिविरहिणस्तु तदाभासत्वेनाननुग्राहकत्वात् । न च नियतावयवमेवानुमानं प्रमाणमिति नियमः । निजसमयनियमितावयवरहितेनापि तेन परपरिजल्पितेन साध्यार्थावगमात् । नियमसाधकप्रमाणाभावाच्च । न चानुमानात्तत्सिद्धिः । तत्साधकस्यानुमानस्य नियतावयवत्वाङ्गीकारेऽनवस्थाप्रसक्तेः । तर्कमात्रत्वे तत्प्रामाण्यं प्रथमत एव समाश्रयणीयम् । अतः किमनेनाजागलस्तनायमानेनावयवनियमकल्पनेन । नन्वसति नियमे प्रयोजकक्रमस्याभावान्न्यूनाधिकताविवेकानुपपत्तिरिति । मैवम् । दूषणोक्तिवदुपपत्तेः । न हि परप्रयुक्ते साधने दूषणं सनियममुपन्यस्यते । न चानवस्थादिदोषोक्तिरवयवनियमवती भवति । न च तत्र न्यूनाधिकविवेको दुरवबोधः एवमिहापि द्रष्टव्यम् ।

न च वेदप्रामाण्यानुपपत्त्या क्रियातिरिक्तस्थायिकार्यान्वेषणं युक्तम् । कालान्तरभाविफलदायिनः सर्वज्ञस्येश्वरस्य वेदसिद्धत्वोक्तेः । एतेनैवेतदप्यपास्तं यदाहुरेते जैमिनिमतसमाश्रयमानेन देवताद्यभावम् । वेदप्रमाणादेव देवतातद्देहदेशभेदसंवेदनस्य सौलभ्यसम्पादनात् । मध्वाद्युपास्तिषु प्राप्तपदत्वेन तत्प्राप्त्यसम्भवात्तद्दर्शित्वाच्च तत्फलाय देवानामनधिकारं ब्रुवता जैमिनिनाऽन्यत्राधिकारमभ्यनुजानता देवतासद्भावोऽभ्युपगतः । 'धर्मं जैमिनिरत एव'

(तत्त्वप्रदीपिका)

इत्यादिना चेश्वरग्वादित्वमावेदितं जैमिनेः । अतस्सुसाधीयः साधितं देवतोत्पत्त्यङ्गीकारेऽपि शब्दे प्रामाण्याविरोध इति ।

## तत्त्वप्रकाशिका

युक्त्यन्तरेण देवप्रवाहनित्यतां साधयत्सूत्रं पठित्वा व्याचष्टे ॥ **अत एवेति** ॥ न देवप्रवाहनित्यत्वसिद्ध्यर्थं युक्त्यन्तरं गवेषणीयं किं तु यत्परेण प्रतिपादितं वेदस्य नित्यत्वं तदन्यथानुपपत्त्यैव तत्सिद्ध्यति । न हि वाच्यानित्यत्वे वाचो नित्यत्वमुपपद्यत इति भावः । न चाप्रामाण्येनोपपत्तिः । तदभावादेव । नापि भारतादितदतीतविषयत्वेन । अनुपपत्तेरुक्तत्वात् । न च तद्वाच्यदेवतास्वरूपस्यैव नित्यत्वेनान्यथोपपत्तिः । 'सूर्याचन्द्रमसौ' इत्याद्युत्पत्तिश्रुतेः प्रलयश्रुतिबाहुल्याच्च । न च प्रलयश्रुतीनामयथार्थत्वम् । बाधकाभावात् । जातिसङ्केताद्यनुपपत्तेरिति चेन्न । ईश्वरविरचितत्वेनोपपत्तेः । ब्राह्मणादेव ब्राह्मण इति नियमस्य क्वचिदन्यथात्वोपपत्तेर्वृश्चिकताण्डुलीयकादिवदिति ॥

## गुर्वर्थदीपिका

ननु श्रुतेः स्वरूपतो नित्यत्वं 'यादृशो यक्षस्तादृशो बलिः' इति न्यायेन देवानां स्वरूपनित्यत्वमेवाक्षिपेन्न तु प्रवाहतो नित्यत्वम् । अतोऽनधिकारश्चेति गूढाभिसन्धिः शङ्कते– **न च तद्वाच्यदेवतेति** । मनुष्यादिवज्जातिभेदनियामकमातापित्रादिभेदरहितदेवानां स्वरूपनित्यत्वाभावे सर्वेषामुच्चजातेरेवापेक्षितत्वेन ब्रह्मपदस्थानामुच्चजातिमत्त्वं रुद्रादिपदस्थानां नीचजातिमत्त्वमिति जातिसङ्केतो न स्यादिति शङ्कते **जातिसङ्केतादीति** ॥ आदिपदेन स्थानसङ्केतादिकं गृह्यते । ननु ब्राह्मणादेव ब्राह्मणाः क्षत्रियादेव क्षत्रिया इत्यादिना लोके ब्राह्मणत्वजातिभेदस्य ब्राह्मणमूलत्वदर्शनेन तद्विना केवलं स्वकरचरणनाभ्यादिजातदेवेषु ब्रह्मादीनां ब्राह्मणत्वं सूर्यसोमादीनां क्षत्रियत्वमित्यादिजातिभेदं दृष्टानुसारीश्वरः कथं कुर्यादिति शङ्कां परिहरति **ब्राह्मणादेवेति** ॥ विश्वामित्रे तदभावेऽपि ब्राह्मणत्वदर्शनादिति भावः । लौकिकदृष्टान्तान्तरं चाह ॥ **वृश्चिकेति** ॥ तण्डुले जायमानः कृमिविशेषस्ताण्डुलीयकः । यथा सर्वत्र स्वस्वमातृतो जायमानाः वृश्चिकताण्डुलीयकाद्याः क्वचिदीश्वरेच्छया गोमयात्तण्डुलेभ्यश्च जायन्ते तद्वदिति भावः । आदिनिधनरहिताः अनादिनिधना उत्पत्तिनाशरहिता इत्यर्थः ।

## भावबोधः

**तदभावादेवेति** ॥ प्रामाण्यस्य साधितत्वेनाप्रामाण्यासम्भवादेवेत्यर्थः । **वृश्चिकताण्डुलीय-कादिवदिति** ॥ यथा गोमयतण्डुलकणादिविजातीयजन्यानामपि वृश्चिकताण्डुलीयकत्वादिजातिः तथैवाब्राह्मणाज्जातस्यापि सर्गादिकालीनस्य ब्राह्मणत्वजातिरित्यर्थः ।

## भावदीपः

**युक्त्यन्तरेणेति** ॥ पूर्वमनुमानपदेन युक्तेरुक्तत्वाद्युक्त्यन्तरेणेत्युक्तम् । सौत्रश्चकारः समुच्चयः इति भावः । एवकारतात्पर्यमाह ॥ **न देवेति** ॥ **यत्परेणेति** ॥ वाचा विरूप नित्ययेत्यादिनेत्यर्थः । अनुपपत्तिं व्यनक्ति ॥ **न हीति** ॥ यद्यपि शब्दशक्तिविषयस्य वाच्यस्य नाशेऽपि शक्तेस्तदाश्रयशब्दस्य चानाश उपपद्यते शक्त्यनाशे शक्तितदाश्रययोर्नाशानियमात् । प्रलये वाच्यस्य देवतादेरभावेऽपि वाचकसद्भावाद्भारतादिवदतीतविषयत्वोपपत्तेश्च । तथापि प्रागुक्तदिशा इन्द्रागच्छेत्यादिदेवताह्वानादिरूपाया वाचो नित्यत्वं वाच्यानित्यत्वेऽनुपपन्नमिति भावः । अत एव वक्ष्यति नापि भारतादीत्यादि ॥ **तदिति** ॥ प्रामाण्यस्य साधितत्वेन अप्रामाण्यस्याभावादेवेत्यर्थः ॥ **अनुपपत्तेरिति** ॥ देवताह्वानादिरूपस्य वर्तमानविषयत्वं विनाऽनुपपत्तेरुक्तत्वादित्यर्थः । सूर्येति श्रुतेरपि स्वरूपैक्यपरत्वोपपत्तेराह ॥ **प्रलयेति** ॥ ननु प्रलये ब्राह्मणादेरभावेन ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः परिकीर्तित इत्याद्युक्तजातिभेदः देवर्ष्यादिशब्दसङ्केतः वेदोक्तरूपकर्मलिङ्गादिव्यवस्था च नोपपद्यत इति शङ्कते ॥ **जातीति** ॥ **वृश्चिकेति** ॥ यथा गोमयतण्डुलकणादिविजातीयजन्यानामपि वृश्चिकताण्डुलीयकत्वादि-स्तथैवाब्राह्मणाज्जातस्यापि सर्गादिकालीनस्य ब्राह्मणत्वादिजातिरित्यर्थः । सङ्केताद्यनुपपत्तिरग्रे ऋषीणामिति स्मृतौ निरसिष्यत इत्यर्थः ॥

## अभिनवचन्द्रिका

**वेदस्य नित्यत्वमिति** ॥ आह्वानादिरूपस्य वेदस्य नित्यत्वं देवताप्रवाहनित्यत्वं विनाऽनु-पपद्यमानं तद्गमयतीति भावः । ननु यदि वेदप्रामाण्यार्थमुत्तरत्र देवप्रवाहोऽङ्गीक्रियते तर्हि 'इन्द्रो वै वृत्रं हत्वा महानभवत्' इत्यादि प्रामाण्यसिध्यर्थं वृत्रहननमहद्भवनादेरपि सर्वदाऽऽतीतत्वं स्यात् । अन्यथा वृत्रहननमहद्भवनादेर्वर्तमानत्वेन तदविषयकस्य प्रस्तुततद्वर्तमानतादशाया-

(अभिनवचन्द्रिका)

मतीतविषयस्याऽप्रामाण्यप्रसङ्गात् । किं च प्रलयेऽपि देवताप्रवाहोऽङ्गीकार्यः स्यात् । प्रामाण्याऽनुपपत्तेः साम्यात् । अथ तदभ्यवविषयत्वमात्रेण प्रामाण्यं, तर्हि उत्तरकल्पेष्वपि तथैवास्तु किं देवताप्रवाहाङ्गीकारेणेति चेत्, न 'इन्द्रो वा' इत्यादिवाक्यस्य तद्वर्तमानतादशायां तदतीतत्वस्याऽऽशुभावित्वाभिप्रायेण प्रवृत्तस्य, भाविविवाहस्य आशुभावित्वाभिप्रायेण जातो विवाह' इति व्यपदेशप्रामाण्यवत् प्रामाण्यसम्भवेन तद्वर्तमानतादशायामतीतत्वस्याऽकल्प्यत्वात्। एवं भविष्यतीत्यादिवाक्यानां तद्वाच्यस्य वर्तमानतादशायां तद्धर्माणां भविष्यत्वाभिप्रायेण प्रवृत्तस्य स्वर्गसम्बन्धस्य भावित्वाभिप्रायेण स्वर्गो भविष्यतीत्यादिवाक्यप्रामाण्यवद्धर्मिणो भविष्यत्वाभावेऽपि प्रामाण्यस्योपपत्त्या नाऽर्थस्य वर्तमानतादशायां भविष्यत्वं कल्प्यं प्रलयप्रतिपादकागमविरोधेन कुण्ठितशक्तिकस्य वेदप्रामाण्यस्य प्रलये देवताप्रवाहकल्पकत्वाभावेऽपि 'यथैव नियमः कल्प' इत्यादिप्रमाणानुगृहीतस्य सृष्टिकाले देवताप्रवाहकल्पकत्वस्य युक्तत्वाद्देवताप्रवाहोऽङ्गीकार्यः । **नापि भारतादिवदिति** ॥ यद्यपि वेदवद्भारतादेर्वर्तमानकल्पविषयत्वमेव तथापि परोऽतीतविषयत्वं मन्येत इति तदाशङ्क्य निषेधितम् ।

एतेन भारतादेः वेदसंवादित्वेन वेदवद्वर्तमानविषयत्वमेव वक्तव्यं, न तु अतीतविषयत्वकथनं युक्तमिति परास्तम् । **अनुपपत्तेरिति** ॥ आह्वानप्रार्थनाद्यनुपपत्तेरित्यर्थः । **वृश्चिकताण्डुलीयकादिवदिति** ॥ गोमयतण्डुलकणादिविजातीयजन्यानामपि यथा वृश्चिककर्कीटत्वादिजातिः, तथैव 'अब्राह्मणात् जातस्यापि सर्गादिकालीनस्य ब्राह्मणत्वजातिरित्यर्थः ।

## वाक्यार्थमुक्तावली

**युक्त्यन्तरेणेति** ॥ अनुमानपदेन प्रयुक्तयुक्त्यपेक्षयार्थापत्तिलक्षणयुक्त्यन्तरेणेत्यर्थः । एवकारव्यवच्छेद्यं दर्शयति ॥ **न देवप्रवाहेति** ॥ **न हि वाच्येति** ॥ वाच्यानित्यत्वे प्रमाणसूत्रार्थवाचो नित्यत्वं न युज्यते । वाच्यं विनाप्यवस्थाने प्रामाण्यत्वहानि तन्निर्वाहार्थः । नित्यत्वं त्याज्यं साधितं च नित्यत्वं न त्यक्तुं शक्यते तदन्यथानुपपत्या देवप्रवाहनित्यत्वमङ्गीकार्यमिति भावः । अन्यथोपपत्तिं द्वेधाशङ्क्य निषेधति ॥ **न चेत्यादिना** ॥ **तदभावादेवेति** ॥ अपौरुषेयत्वेन प्रामाण्याभावादेवेत्यर्थः । एतेन शब्दस्य नित्यत्वादेवेत्यस्य तात्पर्यान्तरमुक्तं ज्ञेयम् ॥ **अनुपपत्तेरुक्तत्वादिति** ॥ देवताह्वानादिरूपस्य वर्तमानविषयत्वं विनानुपपत्तेरुक्तत्वादित्यर्थः । आगच्छेत्यादिशब्दस्य नित्यत्वादेव नातीतविषयत्वोपपत्तिरिति तात्पर्यमुक्तं भवति ।

(वाक्यार्थमुक्तावली)

भाष्ये प्रवाहपदव्यावर्त्यं दर्शयनन्यथोपपत्यन्तरमाशङ्कते ॥ **न च तद्वाच्येति** ॥ ननु प्रलये ब्राह्मणादेरभावेन ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः परिकीर्तितः इत्युक्त जातिभेदः देव-ऋष्यादिशब्दसङ्केतवेदोक्तरूपकर्मलिङ्गादिव्यवस्था च नोपपद्यत इति शङ्कते ॥ **जातीति** ॥ **वृश्चिकेति** ॥ ताण्डुलीयकः तण्डुलोत्पन्नः कीटः । तथा च वृश्चिकादुत्पन्नस्य वृश्चिकत्वेऽपि गोमयादुत्पन्नस्यापि कीटत्वं तथा ब्राह्मणादुत्पन्नस्य ब्राह्मणत्वेऽपि ईश्वरमुखोत्पन्नस्यापि सर्गादिकालीनस्य ब्राह्मणत्वमित्यर्थः । सङ्केताद्यनुपपत्तिस्तु ऋषीणामिति स्मृतौ निरसिष्यत इति भावः । सूत्रार्थस्तु । देवप्रवाहस्येत्यध्याहारेण स्पष्टः ।

## तत्त्वसुबोधिनी

**तदभावादेवेति** ॥ प्रामाण्यस्य साधितत्वेनाप्रामाण्यस्याभावेनेत्यर्थः ॥ **अनुपपत्तेरिति** ॥ वेदस्य आह्वानादिरूपत्वेन वर्तमानविधेयत्वान्नातीतविषयत्वमित्यनुपपत्तेरुक्तत्वादित्यर्थः । ननु देवादीनां सादित्वे अयं देवः अयं ब्राह्मणः इति जातिसङ्केतो नोपपद्यते इति शङ्कते ॥ **जातीति** ॥ तर्हि ब्राह्मणादेव उत्पन्नस्य ब्राह्मणत्वजातिरिति नियमः कथमुपपद्यते इत्यत आह ॥ **ब्राह्मणादेवेति** ॥ तत्र दृष्टान्तमाह ॥ **वृश्चिकताण्डुलीयकादिवदिति** ॥ यथा गोमय-तण्डुलकारणादिविजातीयजन्यानामपि वृश्चिकत्वं ताण्डुलीयकत्वादिवदिति जातिः तथैव ब्राह्मणाज्जातस्यापि सर्गादिकालीनस्य ब्राह्मणत्वजातिरित्यर्थः ।

## वाक्यार्थविवरणम्

अन्यार्थत्वमवान्तरप्रलयार्थत्वमेवेत्यर्थः । महाप्रलयरूपमुख्यार्थाङ्गीकारे बाधकमाशङ्कते ॥ **जातीति** ॥ महाप्रलयाङ्गीकारे कस्याप्यभावात् पुनरादिसृष्टौ ब्राह्मणादिजात्युत्पत्त्यनुपपत्तिः । इदमनेन शब्देन वाच्यं भवत्विति सङ्केतानुपपत्तिश्च तदुभयकर्त्रभावादिति भावः । ननु ब्राह्मणादेव ब्राह्मण इति नियमस्य सत्त्वादीश्वरस्य च ब्राह्मणत्वजात्यनाक्रान्तत्वात् । कथं तस्मादादिसृष्टौ ब्राह्मणजात्युत्पत्तिरिति चेत्तत्राह ॥ **ब्राह्मणादेवेति** ॥ नियमस्य इदानीन्तनकाले विद्यमानस्येति शेषः । क्वचिदादिसृष्टौ नियमस्यापि क्वचिदन्यथात्वे दृष्टान्तमाह ॥ **वृश्चिकेति** ॥ वृश्चिकादेव वृश्चिकं क्रिमेरेव क्रिमिरिति नियमस्य गोमयतण्डुलादे-र्वृश्चिकाद्युत्पत्तिदर्शनेनान्यथात्वं दृष्टं तद्वदित्यर्थः ।

## वाक्यार्थमञ्जरी

अत एव चशब्दस्य नित्यत्वादेवत तदन्यथानुपपत्त्यैवेति यावत् । वेदप्रवाहस्य नित्यत्वमित्यर्थः । उपपत्तिः नित्यत्वस्य यथावस्थितार्थप्रतिपादनरूपप्रामाण्ये वाच्यार्थापेक्षायामपि स्वरूपसत्वे तदनपेक्षणादिति भावः ॥ **तदभावादेवेति** ॥ वेदप्रामाण्यस्य साधितत्वेनाप्रामाण्याभावादेवेत्यर्थः । विषयत्वेन उपपत्तिरिति वर्तते । उक्तत्वात् । तस्य देवताह्वानादीत्यादिना । स्वरूपस्य विशिष्टरूपस्य अन्यथा प्रवाहनित्यत्वं विना अयथार्थत्वम् अवान्तरप्रलयपरत्वम् ॥ **बाधकेति** ॥ मुख्यप्रलयाङ्गीकार इति शेषः । बाधकं शङ्कते ॥ **जातिसङ्केतेति** ॥ सर्वप्रलयाभ्युपगमे पुनरादिसृष्टौ ब्राह्मणादिजातिरनेन पदेनेदं वाच्यमिति सङ्केतग्रहश्च न स्यात् जनकोपदेशकयोरभावादिति भावः । ईश्वरोपदेशेन सङ्केतग्रहसम्भवेऽपि न तस्माद् ब्राह्मणादिजात्युत्पत्तिः 'ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः परिकीर्तित' इति नियमादित्यत आह ॥ **ब्राह्मणादेवेति** ॥ क्वचित् आदिसृष्टौ ॥ **वृश्चिकताण्डुलीयकादिवदिति** ॥ यथा गोमयतण्डुलकणादिविजातीयजन्यानामपि वृश्चिकत्वताण्डुलीयकत्वादिजातिस्तथैवाब्राह्मणाज्जातस्यापि सर्गाद्यकालीनस्य ब्राह्मणत्वजातिरित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॐ ॥ ३० ॥**

अतीतानागतानां देवानां समाननामरूपत्वात्प्राप्तपदानां मुक्त्याऽऽवृत्तावप्यविरोधः । 'यथापूर्वम्' इति (म.ना.उ.५-७) दर्शनात् ।

'अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ।
ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः ।
वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः' । इति स्मृतेश्च ॥

## सत्तर्कदीपावली

**समानेत्यादिना** ॥ स्वयम्भुवा महेश्वरेण विष्णुना वा वेदवागवादि निधनोत्सृष्टोच्चरिता तस्यामृषीणां ब्रह्मादीनां यानि नामानि स्थितानि यानि च दृश्यत्वात् दृश्याख्यानि

(सत्तर्कदीपावली)
रूपाण्युक्तानि तान्येव कल्पे स्वसृष्टानां ब्रह्मादीनां स महेश्वरो निर्ममे चकार । यन्नामरूपा ब्रह्मादयो वेदोक्तास्तन्नामरूपांस्तत्र कल्पे सृजतीत्यर्थः ।

## तत्त्वप्रदीपिका

अथ कथमेतर्हि तेपूद्भवाभिभवैः पूर्वापरीभावं गतेषु विभिद्यमानरूपनामकर्मसु रुद्रेन्द्रादिनाम्नां नीललोहिततुविग्रीववज्रधरवृत्रवधादिशब्दानां च वृत्तिनियमः सम्भाव्यत इत्यत आह– ॐ समाननामरूपत्वाच्चाऽवृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॐ । पौरस्त्यानां पाश्चात्यानां च देवानां समाननामरूपत्वात् समानधर्मकर्मत्वाच्च प्राप्तपदानां मुक्त्या स्वस्वपदादावृत्तावपि न तच्छब्दवाच्यत्वविरोधः । स्वपदेष्ववृत्तावपीति वाऽर्थः । यथापूर्वमिति समाननामरूपत्वेऽपि तामेव श्रुतिं प्रमाणीकरोति ॥

मुख्यवाच्यस्य विष्णोस्सर्वदा विद्यमानत्वाच्च न शब्दे विरोधः । तथा च योजना अत एव शब्दात्तेषां प्रभवनियमात् शब्दादेव देवानां प्रभवनियमनादिकर्ताऽवगम्यते । अतस्तस्मादेव शब्दे विरोधः परिहृतः । प्रत्यक्षश्च असौ महताम् । 'पुरुषमीक्षते' 'यमन्तः समुद्रे कवयोऽवयन्ति' इत्यादिश्रुतेः । यथा येन प्रकारेणेदानीं देवा भवन्ति यथाऽन्यदाऽपीत्यनुमानाच्च तदवगमः । अत एव च नित्यत्वम् । अत एव शब्दनित्यत्वादेव देवप्रवोढुर्नित्यत्वम् । समाननामरूपत्वाच्चाऽवृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॥ 'समानानि' सदृशानि नामानि येषां रूपाणां तानि 'समाननामानि' समाननामानि रूपाणि यस्य स भगवान् 'समाननामरूपः' योग्यनामरूप इत्यर्थः । 'नाम' इति सामान्यनामोक्तेरखिलनामविवक्षा । न हि विष्ण्वन्यरूपाणां सदृशनामत्वम् । शब्दप्रवृत्तिहेतुवैकल्यादकात्स्न्र्यपारतन्त्राभ्याम् । तत्साकल्याद्विष्णुरेव समाननामरूपः । अतो विष्णोस्समाननामरूपत्वात्तदभावाच्चान्येषां न तस्य सर्वशब्दवाच्यत्वविरोधः । यथापूर्वमिति दर्शनात् । यथापूर्वं पूर्णज्ञानस्सर्वस्वतन्त्रः अतस्समाननामरूपः स्थितस्तथैव सन् धाता सूर्यादीनकल्पयत् । अतस्सूर्यादिक्लृप्तेः प्रागपि शब्दप्रामाण्याविरोध इति सिद्धम् ॥

## तत्त्वप्रकाशिका

न देवानां प्रवाहनित्यत्वेनापि वेदप्रामाण्योपपत्तिः । तथा हि । किं पूर्वकल्पे मुक्ता एव देवा उत्तरकल्पे पुनरावर्तन्ते तदन्ये एव वा । नाद्यः । मुक्तेरपुनरावृत्तित्वात् । अतस्तदन्य एवेति वाच्यम् । तथा च तेषां नानाविधनामरूपवतां वाचकवेदस्य कथं नाप्रामाण्यम् । तस्य प्रतिकल्पं पाठभेदाभावात् । तद्भावे नित्यत्वव्याघातादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे

(तत्त्वप्रकाशिका)

॥ **समानेति** ॥ सम्भवत्येव देवप्रवाहनित्यत्वेन वेदप्रामाण्यम् । प्राचीनानां प्राप्तमुक्तित्वेन पुनः स्वपदेष्ववृत्तावपि तदन्येषां प्राचीनसमाननामरूपत्वात् तत्प्रतिपादकैकविधस्यापि वेदस्याप्रामाण्याप्राप्तेः । न च सर्वदेवानां समाननामरूपत्वे प्रमाणाभावः । 'यथापूर्वम्' इति श्रुतेः । एतच्छ्रुतेस्तत्स्वरूपकल्पनानियमपरत्वमपि सम्भवतीति नानया तन्निश्चय इति चेत् स्मृतिसंवादेन निश्चयोपपत्तेरिति भावः । ननु कथं वेदप्रवाहनित्यत्वे समाननामरूपत्वे वा नित्यवेदप्रामाण्योपपत्तिः । तद्वाचित्वेनेति चेन्न । तस्यैवासम्भवात् । न ह्येतावत्कालमयं देवो मयोक्तोऽतः परमेनं वक्ष्यामीत्यपौरुषेयस्य विमृश्य वृत्तिः सम्भवतीत्याशङ्काऽपि स्मृत्यैव परिहृता । स्वयम्भुवा स्वतन्त्रेण विष्णुना या वेदवागुच्चारिता तद्वेदगतशब्देभ्यो ब्रह्मादिविबुधानां नामानि निर्ममे । तान् शब्दांस्तेषु सङ्केतितवान् । याश्च तेषां वेदेषूक्ताः दृश्यन्त इति दृष्टयो रूपाणि तानि च तथैव निर्ममे । इति सर्वदेवानां समाननामरूपत्वस्यापौरुषेयवेदस्यापि स्वतन्त्रेण भगवता प्रतिकल्पं देवेषु सङ्केतितत्वस्य चोक्तेः । न च प्रलये वेदाप्रामाण्यं शङ्क्यम् । तदाऽतीतविषयत्वस्य भगवन्मात्रविषयत्वस्य चोपपत्तेः ॥

## गुर्वर्थदीपिका

अनङ्गीकुर्वतां शासने समर्थ इति सूचनाय स्वयम्भुवा स्वतन्त्रेणेत्युक्तम् ।

## भावबोधः

अनादिनिधनेति स्मृतेः देवानां समाननामरूपत्वप्रतिपादकत्वसिद्ध्यर्थमृषीणामित्येतद्योगवृत्तिमाश्रित्य ब्रह्मादिदेवतापरत्वेन व्याचष्टे– **ब्रह्मादिविबुधानामिति** । ऋष ज्ञान इति प्रसिद्धमिति भावः । नामधेयानां वेदशब्दानां वेदशब्दानतिरिक्तत्वान्नित्यत्वाच्च न तत्कारणकत्वमित्यतो व्याचष्टे– **तान् शब्दानिति** । संयोजितवानयं शब्दोऽत्र शक्त इति ज्ञापितवानित्यर्थः । शब्दार्थसम्बन्धस्यौत्पत्तिकत्वात् । देवताह्वानादिप्रतिपादकवेदस्यातीतविषयत्वानुपपत्तेराह **भगवन् मात्रविषयत्वस्य च इति** ।

## भावदीपः

सूत्रमवतारयितुं शङ्कामाह ॥ **नेति** ॥ सौत्रविरोधपदार्थो न प्रामाण्योपपत्तिरिति समानेत्यादेर्व्यावर्त्योक्तिस्तथा चेत्यादि । तस्य वेदस्य । आम्नायोऽनन्यथापाठादिति स्मृतेरिति

(भावदीपः)

भावः । अविरोध इत्यस्यार्थमाह ॥ **सम्भवत्येवेति** ॥ प्राप्तेत्यादेरर्थः **प्राचीनानामिति** ॥ अनागतानामित्यस्यार्थोऽन्येषामिति । अतीतपदार्थः प्राचीनेति । सौत्रश्चशब्दः समानधर्मकर्मत्वाच्चेत्यर्थ इति तत्वप्रदीपे । स्मृत्युक्तेरुपयोगं वक्तुमाह ॥ **एतच्छ्रुतेरिति** ॥ **स्वरूपेति** ॥ तामेव सूर्यादिव्यक्तिं पूर्वप्रकारेण अकल्पयदित्यर्थपरत्वेनेत्यर्थः । परिहृतेत्युक्तमेव स्मृत्यर्थोक्त्या व्यनक्ति ॥ **स्वयम्भुवेति** ॥ स्वयमेव भवति परापेक्षां विना वर्तत इति स्वयम्भूः स्वतन्त्रः । उत्सृष्टेत्यस्य उत्पन्नेत्यर्थत्वे प्रागुक्तनित्यत्वविरोधादाह ॥ **उच्चारितेति** ॥ **सङ्केतितवानिति** ॥ अयं शब्दोऽत्र वाच्य इति ज्ञापितवानित्यर्थः । देवताह्वानादिरूपस्य कथमतीतविषयत्वमित्यत आह ॥ **भगवन्मात्रेति** ॥

## अभिनवचन्द्रिका

**पुनरावर्तन्त इति** ॥ विनष्टदेहोन्मज्जनेनेति शेषः । एतेन मुक्तदेवानां पुनरावर्तिपक्षेऽपि नानाविधनामरूपवत्त्वप्रयुक्तस्य वेदाप्रामाण्यस्य साम्यादिमं पक्षं दूषयित्वा पक्षान्तरपरिशेषाभिधानमयुक्तमिति परास्तम् । **तथा चेति** ॥ तेषां वाचकत्वेनाभिमतवेदप्रतिपाद्यानां नामभेदेऽबोधकत्वं रूपभेदे विपरीतबोधकत्वमित्यर्थः । **पुनःस्वपदेष्विति** ॥ नष्टदेहोन्मज्जनेनेति शेषः । **समाननामरूपत्वादिति** ॥ अत्र समानपदं रूपविशेषणं न तु नाम्नः । एतेन नाम्न एकत्वात् समानत्वाभिधानमयुक्तमिति परास्तम् ॥ **न च प्रलय इति** ॥ विषयवैधुर्येणेति भावः ।

## वाक्यार्थमुक्तावली

**नानाविधेति** । प्रतिकल्पं नानाविधनामरूपवतां वाचकस्य स्वयमेकप्रकारकस्येत्यर्थः । **सम्भवत्येवेति** । तेन सूत्रे चोऽवधारणेऽविरोध इत्यनेनात्वेति विरोधो नास्त्येवेत्यर्थः उक्तो भवति । प्राप्स्येत्यादेरर्थः प्राचीनानामिति । अनागतानामित्यस्यार्थः ॥ **अन्येषामिति** ॥ अतीतपदार्थः ॥ **प्राचीनसमानेति** ॥ **उच्चारितेति** ॥ अनादित्वादुत्पत्त्ययोगादिति भावः ॥ **ब्रह्मादीनामिति** । ऋषज्ञान इति स्मरणादिति भावः ॥ **सङ्केतितवानिति** । वैदिकपदनिर्माणायोगात्प्रकृतानुपयोगाच्च । निर्मम इत्यस्यायं शब्दोऽत्र शक्त इति ज्ञापितवानित्यर्थः इति भावः । यद्वा शक्तिमाविर्भावयामासेत्यर्थः । शब्दार्थसम्बन्धस्यौत्पत्तिकत्वात् ॥ **न च प्रलय इति** ॥ तदा क्षुद्रनदीप्रवाहविच्छेदेन तद्विषयत्वेन प्रामाण्यायोगादिति भावः । देवताह्वानादि-

(वाक्यार्थमुक्तावली)

रूपस्यातीतविषयत्वानुपपत्तेराह ॥ **भगवदिति** ॥ एतेन समाननामरूपत्वाच्चेति शब्दस्यार्थान्तर-मुक्तं ज्ञेयम् । न च भगवन्मात्रविषयत्वेऽतीतविषयत्वं विरुद्धम् । स्तुतिमात्रा एव ते स्युरिति । श्रुतिविरुद्धत्वं च प्रलये जगद्वाचकत्वशक्तितिरोधानयुक्तिविरुद्धं चेति वाच्यम् । अन्यत्रास्माभिः समाहितत्वात् । सूत्रे तदुपरीत्यतो देवानामित्यन्वेति । आद्यश्चावधारणे समुच्चये च ॥ देवानां मुक्तत्वेन स्वपदेष्ववृत्तावपि तदन्येषां तत्समाननामरूपत्वात् च शब्दात्तत्वप्रदीपरीत्या समानधर्मकर्मत्वाच्च । प्रलयेऽतीतविषयत्वस्य भगवद्विषयत्वस्य चोपपत्तेश्च शब्दे विशेषे प्रामाण्यरूपो नैव । समाननामरूपत्वं कुत इत्यत उक्तम् ॥ दर्शनात् स्मृतेश्च समाननामरूप-त्वावगमादिति ।

## तत्त्वसुबोधिनी

ननु तस्य प्रतिकल्पं पाठभेदः कल्प्यत इत्यत आह– **तस्येति** । न च स्मृतेनादि-निधनेत्यनेतावत्पत्तिराहित्यस्योक्तत्वान्नित्येति किमर्थमिति वाच्यम् । प्रकृत्यादिवत् स्वतोऽ-प्युत्पत्तिविनाशराहित्यप्रतिपादकत्वादिति भावः । अनादिनिधनेति स्मृतेर्देवानां समाननाम-रूपत्वप्रतिपादकत्वसिद्ध्यर्थम् । ऋषीणामित्येतद्योगवृत्तिमाश्रित्य ब्रह्मादिदेवतापरत्वेन व्याचष्टे ॥ **ब्रह्मादिविबुधानामिति** ॥ ऋषं ज्ञानमिति प्रसिद्धमिति भावः । नामधेयानां वेदशब्दा-नतिरिक्तत्वात् नित्यत्वाच्च न तत्कारणत्वमित्यतो व्याचष्टे ॥ **तान्शब्दानिति संयोजित-वानिति** ॥ अयं शब्दोऽत्र शक्त इति ज्ञापितवानित्यर्थः । शब्दार्थसम्बन्धस्यौत्पत्तिकत्वात् । देवताह्वानादिप्रतिपादकवेदस्यातीतविषयत्वानुपपत्तेराह ॥ **भगवन्मात्रविषयत्वस्येति** ॥

## वाक्यार्थमञ्जरी

शङ्कते ॥ **न देवानामिति** ॥ **कथं नाप्रामाण्यमिति** ॥ अतन्नामरूपवतां तन्नामरूपवत्तया प्रतिपादकत्वादिति भावः । तत्तत्कल्पे तत्तन्नामवद्देवप्रतिपादकत्वमतो न दोष इत्यत आह ॥ **तस्य इति** ॥ **नित्यत्वव्याघातादिति** ॥ शब्दतो अर्थतश्चैकप्रकारत्वस्यैव तन्नित्यत्वादिति भावः ॥ ॐ समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॐ ॥ प्राचीनदेवानां मुक्तत्वेन स्वस्वपदेष्ववृत्तावपि तदन्येषां तत्समाननामरूपत्वात्तत्प्रतिपादकैकविधवेदस्या-प्रामाण्याख्यविरोधो नास्ति तदेव कुत इति चेत् यथा पूर्वमिति दर्शनात् श्रुतेः अनादिनिधना

(वाक्यार्थमञ्जरी)

नित्येति स्मृतेश्चेत्यर्थः ॥ **तत्स्वरूपेति** ॥ नामरूपकल्पनानियमत्यागेन देवकल्पनानियम-मात्रेत्यर्थः ॥ **तद्वाचित्वेनेति** ॥ तथात्वे यथावस्थितार्थप्रतिपादकत्वादिति भावः ॥ **अपौरुषेयेति** ॥ पौरुषेयत्वे तु पुरुषव्यापारेणैव तत्सम्भवतीति भावः । स्मृतिव्याख्यानपूर्वकं शङ्का-परिहारप्रकारं दर्शयति ॥ **स्वयम्भुवेत्यादिना** ॥ ऋषीणामित्यस्य प्रकृतोपयोगायाह ॥ **ब्रह्मादिविबुधानामिति** ॥ ऋषज्ञान इति धातुव्याख्यानादिति भावः । नामधेयानां वेदशब्दा-नतिरिक्तत्वेन नित्यत्वात्कथं तत्करणमित्यत आह ॥ **तान् शब्दानिति** ॥ संयोजितवान् अयं शब्द एतद्वाचक इति ज्ञापितवान् । शब्दार्थसम्बन्धस्यौत्पत्तिकत्वाद्रूपशब्दस्योक्तरीत्यान्वयः ॥ **अप्रामाण्येति** ॥ तदा देवताभावेन वाच्यहीनत्वादिति भावः । देवताह्वानादिप्रतिपादक-स्यातीतविषयानुपपत्तेराह ॥ **भगवन्मात्रेति** ॥ तस्य सर्वनामरूपादिमत्वादिति भावः ।

## सूत्रभाष्यम्

### ॥ ॐ मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॐ ॥ ३१ ॥

**'वसूनामेवैको भूत्वा'** (छां.उ.३-६-२) **इत्यादिना प्राप्यफलत्वात्प्राप्तपदानां देवानां मध्वादिविद्यास्वनधिकारं जैमिनिर्मन्यते ॥**

## सत्तर्कदीपावली

यदुक्तं देवादीनां ब्रह्मविद्यामधिकारोऽस्तीति तन्न । मध्वादिब्रह्मविद्यायां नाधिकारः सम्भवति । तथाहि । असौ वा आदित्यो देव मध्वित्यारभ्य एतदेवममृतं वेद वसूनामेवैको भूत्वाग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यतीत्यादिश्रुत्या मध्विति वसुरुद्रादित्यपदं श्रूयते । न हि तस्यां विद्यायां प्राप्तवस्वादिपदानां देवानामधिकारः सम्भवति मध्वित्यादि ।

## तत्त्वप्रदीपिका

'असौ वा आदित्यो देवमधु' इत्याद्या मधुविद्या श्रूयते । तत्र 'स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति' इत्यादिना तद्गतां वस्वादिपदं प्राप्य फलमवगम्यते । न च तत्प्राप्तपदानां वस्वादीनां सम्भवति । तस्मात्तत्रानधिकारं जैमिनिर्मन्यते ॥

## तत्त्वप्रकाशिका

अतो देवानामाद्यन्तवत्त्वेऽपि विरोधाभावाद्युक्तस्तेषां वेदविद्याधिकार इति । स्थितं पुनस्तमाक्षिपत्सूत्रमुपन्यस्य व्याचष्टे ॥ **मध्वादिष्विति** ॥ वेदविद्या द्विविधाः । मुक्तिफलार्था-स्तदितरफलार्था इति मोक्षेतरफलार्थाश्च द्विविधाः । ब्रह्मकर्मविद्याभेदात् । यथा मधुविद्या । यथा चाग्निष्टोमविद्या । तत्र न तावन्मोक्षेतरफलार्थद्विविधविद्यास्वधिकारो देवानां युज्यते । तत्रार्थित्वाभावात् । 'स य एतदेवममृतं वेद वसूनामेवैको भूत्वाग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति । देवो भूत्वा देवानप्येति । स ऊर्जमुपगच्छति' इत्यादिना मध्वादिविद्यासु वस्वादिपदा-नामुपासनाप्राप्यफलत्वश्रवणात् । देवानां च प्राप्ततत्पदत्वात् । न हि प्राप्तेऽर्थिता सम्भवति । एवं कर्मविद्यास्वपि वस्वादिपदानां फलत्वोक्तेर्नार्थिता सम्भवति । न च द्वितीयाद्यमृतविद्यादिषु वस्वादीनामप्यधिकारः सम्भवतीति वाच्यम् । तास्वपि रुद्रादिपदस्य फलत्वेन श्रवणात् । तत्र चायोग्यतयार्थिताऽयोगात् । एवं कर्मविद्यास्वपि रुद्रादिपदफलाभिधात्रीषु वस्वादीनामधिकारा-योगः । न चास्त्वेवं स्वस्वेतरपदफलाभिधात्रीषु ब्रह्मकर्मविद्यास्वनधिकारस्तथापि मोक्षेतर-सामान्यफलाभिधायकविद्यासु स्यादिति वाच्यम् । सामान्यफलानां च 'प्रकाशवानस्मिल्लोके भवति' इत्यादीनां तत्फलेऽन्तर्भावात् । 'न ह वा एवंविदि किञ्चनानन्नं भवति' इत्यादीनां सर्वायोग्यत्वात् योग्यैश्च रुद्रादिभिः प्राप्तत्वाच्च । अतो मोक्षेतरफलार्थं विद्याविचारे देवा-नामर्थित्वाभावात् न तास्वधिकारः । किं चैवमाप्ततमो जैमिनिराचार्योऽपि मन्यत इत्यर्थः ॥

## गुर्वर्थदीपिका

'तद्यत्प्रथमममृतं तद्वसव उपजीवन्ति । अथ यद्द्वितीयममृतं तद्रुद्रा उपजीवन्ति' इत्यादिना पञ्चधा सूर्यमण्डलप्राचीदक्षिणपश्चिमोत्तरोर्ध्वसूर्यरश्मीनाममृतत्वेन वर्णितत्वात्प्रथमामृते वसूनामधि-काराभावेऽपि द्वितीयामृतेष्वधिकारः स्यादिति शङ्कते– **न चेति** ॥ पदप्राप्तेरयोगान्न देवानां मधुविद्यायामधिकार इति ।

## भावबोधः

**वसूनामेवैको भूत्वाऽग्निनेति** ॥ भाष्यगतादिशब्देन रुद्रादिपदफलकद्वितीयमधुविद्यादि ब्रह्मविद्या वस्वादिपदफलककर्मविद्याश्चोपात्ता इति ज्ञातव्यम् ॥ **न च द्वितीयाद्यमृतविद्यादि-ष्विति** ॥ 'तद्यत्प्रथमममृतं तद्वसव उपजीवन्ति' इत्युक्तप्रथमामृतविद्याया वसुत्वफलकत्वेन तत्र

(भावबोधः)

वसूनामनधिकारेऽपि 'अथ य द्वितीयममृतं तद्रुद्रा उपजीवन्ति' इत्यादिनोक्तद्वितीयाद्यमृत-विद्यासु रुद्रत्वादेः फलत्वेन तत्राधिकारोऽस्त्विति न वाच्यमित्यर्थः । 'प्रकाशवानस्मिंल्लोके भवतीत्यादीनामिति' । प्रकाशवानस्मिंल्लोके भवति प्रकाशवतो ह लोकान् जयति इति 'इत्यादिनोक्तानाम्' एष वै सोम्य चतुष्कलः पादो ब्रह्मणः प्रकाशवानन्नमेतीत्यादिविद्या-फलानामस्मिंल्लोके प्रकाशवत्त्वादीनां मधुविद्यादिफलभूतवसुत्वादावन्तर्भावादित्यर्थः ।। **न ह वा एवंविदीति** । 'न ह वा एवंवित्' इत्यादिनोक्तेषु ते ह प्राणा अहं श्रेयसि व्यूदिर इत्यादि-प्राणविद्याफलेषु रुद्रादेरेव योग्यत्वादित्यर्थः । अनेन प्राचीनपक्षे दोषान्तरं चोक्तं भवतीति । न केवलमाद्यपक्षे पूर्वोक्तो वस्वादीनां मधुविद्याफले वसुत्वादावधिकाराभावदोषः किन्तु विद्यासाध्ये वसुत्वादिसाधने ज्ञानेऽप्यर्थित्वाभावदोषः । वस्वादीनां नित्यसिद्धज्ञानत्वादित्यर्थः ।

## भावदीपः

अतो देवानां प्रवाहतोऽनादिनित्यत्वात् समाननामरूपत्वाच्चेत्यर्थः ।। **तमाक्षिपदिति** ।। श्रुतफलोद्देशेनेति भावः ।। **यथा मधुविद्येति** ।। छान्दोग्ये तृतीयाध्याये । असौ वा आदित्यो देवमध्विति आदित्यस्थविष्णोः परमानन्दरूपत्वेन मधुत्वमुक्त्वा तस्य पूर्वदक्षिणपश्चिमोत्तरोर्ध्व-रश्मिषु स्थितानाममृतशब्दितवासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धनारायणाख्यपञ्चरूपाणां प्राच्यादि-रश्मिषु स्थितैर्वसुरुद्रादित्यमरुदजुनामकपञ्चगणस्थैर्देवैः क्रमेणाग्निवाय्विन्द्रसोमविरिञ्चमुखे-नोपासनायां कृतायां तदपरोक्षद्वारा वसुरुद्रादिपदप्राप्तिस्तद्गणस्थानामुच्यते ।। **यथाऽग्निष्टोमेति** ।। तत्र स्वर्गादिफलकत्वश्रवणादिति भावः । मध्वादीत्यादिभाष्यं व्याचष्टे ।। **तत्रेति** ।। वसूना-मित्यादि व्याचष्टे ।। **एतदेवामृतमिति** ।। वासुदेवाख्यं रूपमित्यर्थः । ऊर्जमन्नं प्राप्तेत्यादिभाष्यं व्याचष्टे ।। **देवानामिति** ।। सर्वयज्ञादिकर्मचेत्युत्तरस्मृत्यनुरोधादादिपदेन कर्मविद्यापि ग्राह्येति भावेनाऽऽह ।। **एवं कर्मेति** ।। यद्यप्यग्निष्टोमादौ स्वर्गादिः फलत्वेन श्रूयते न वस्वादिपदप्राप्तिः । तथापि यज्ञेनेति प्रागुक्तश्रुत्या यज्ञादिकर्मणो देवतापदप्राप्तिहेतुत्वोक्तेः स्वर्गादिशब्दस्योपलक्षणत्वं वा वस्वादिपदस्यापि स्वर्गत्वेन स्वर्गपदेनैव वा ग्रहणोपपत्तेरिति भावः । यद्वा वस्वादि-फलकासाधारणकर्मविशेषपरो वाऽत्र कर्मशब्दः ।। **न च द्वितीयेति** ।। यद्यत्प्रथमममृतं तद्वसव उपजीवन्तीत्युक्तप्रथमामृतविद्याया वसुत्वफलकत्वेन तत्र वसूनामनधिकारेऽपि अथ तद्द्वितीयाममृतं तद्रुद्रा उपजीवन्तीत्यादिनोक्तद्वितीयाद्यमृतविद्यासु रुद्रत्वादेः फलत्वेन तत्राधिकारोऽस्त्विति न

(भावदीपः)

वाच्यमित्यर्थः ॥ **स्वस्वेति** ॥ स्वयोग्यफलाभिधात्रीषु स्वेतरयोग्यफलाभिधात्रीषु प्रथमद्वितीयाद्यमृतविद्यास्वित्यर्थः ॥ **मोक्षेतरेति** ॥ छान्दोग्य एव चतुर्थेऽध्याये सत्यकामं प्रति वृषभाद्याविष्टवाय्वादिभिरुपदिष्टायाम् एष वै सोम्य चतुष्कलः पादो ब्रह्मणः प्रकाशवान्नामेत्यादिविद्यायां य एवं विद्वान् चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते प्रकाशवानस्मिल्लोके भवति प्रकाशवतो ह लोकान् जयतीत्यादिनोक्तानामस्मिल्लोके प्रकाशवत्त्वादीनां सर्वसाधारण्यात्तत्रास्त्वधिकार इति न वाच्यमित्यर्थः ॥ **तत्फलेति** ॥ मधुविद्याफलभूतवसुत्वादावित्यर्थः ॥ **न ह वा इति** ॥ तत्रैव पञ्चमे न ह वा एवं विदीत्यादिनोक्तेषु ते ह प्राणा अहं श्रेयसि व्यूदिर इत्यादि प्राणविद्याफलेषु सर्वभोक्तृत्वादिरूपेषु रुद्रादेरेव योग्यत्वेन सर्वेषामयोग्यत्वादित्यर्थः । एवं युक्तिभिरुपपादितस्य सर्वैरङ्गीकार्यत्वात् जैमिनिरिति कस्यचिन्मतत्वेनोक्तिः कथमित्यतो व्याचष्टे ॥ **किञ्चेति** ॥

## अभिनवचन्द्रिका

**स य इति** ॥ छान्दोग्ये आदित्यान्तर्गतस्य विष्णोः, असौ वा आदित्यो देवमध्वित्यादिना सुखरूपत्वात् मधुत्वमुक्तम् । तस्य च क्रमात्पूर्वदक्षिणपश्चिमोत्तरोर्ध्वदेशेषु रश्मयः सन्ति । तत्र क्रमेण वासुदेवसंकर्षणप्रद्युम्नाऽनिरुद्धनारायणाख्यानि भगवद्रूपाणि सन्ति । तत्र पूर्वभागे रश्मिस्थं वासुदेवं, वसुगणस्थाः अग्निमुखेनोपासते । दक्षिणभागे रश्मिस्थं सङ्कर्षणं, रुद्रगणस्था वायुमुखेनोपासते । पश्चिमभागे रश्मिस्थं प्रद्युम्नम् आदित्यगणस्थाः इन्द्रमुखेनोपासते । उत्तरभागे रश्मिस्थमनिरुद्धं मरुद्गणस्थाः सोममुखेनोपासते । ऊर्ध्वभागे रश्मिस्थं नारायणं, ऋजुगणस्थाः विरिञ्चिमुखेनोपासते ।

ततश्चायं श्रुत्यर्थः । स यः वसुगणस्थः एतदमृतम् रश्मिस्थं वासुदेवं उपास्ते । स वसूनामेवैको भूत्वा अग्निमुखेनैव एतदेवामृतं वासुदेवं दृष्ट्वा तृप्यति । देवो भूत्वा देवान्प्राप्नोति । स ऊर्ध्वं देवानुपगच्छति' इति । **तत्फले अन्तर्भावादिति** ॥ प्रकाशवत्त्वादीनां मधुविद्याफले अन्तर्भूतत्वादित्यर्थः । **जैमिनिराचार्य इति** ॥ एतेन जैमिनिमते विग्रहवती देवता नास्ति । चतुर्थ्यन्तशब्दो देवतेति जैमिन्यभिप्रायं वर्णयन्तो मीमांसकाः तन्मतानभिज्ञा इति सूचितं भवति । शब्दस्य देवतात्वे अधिकारप्रसक्त्यभावेन तन्निराकरणाऽयोगात् ।

## वाक्यार्थमुक्तावली

**मुक्तिफलार्था इति** ।। मुक्तिफलकविधानान्तरीयतया पुरुषार्थाधिकरणन्यायेनातिरिक्त-फलकत्वेऽपि मधुविद्याया आनन्दातिशयोपयोगेऽपि अग्निष्टोमविद्याया अनुसन्धानविशेषे मोक्ष-फलकत्वेऽपि मुखतः श्रुतफलविवक्षयाक्षेप इत्यग्रे स्पष्टीभविष्यति ।। **मधुविद्येति** ।। पूर्वादि-क्रमेण सूर्यमण्डलान्तर्यामिणः परमानन्दरूपहरेर्विद्या मधुविद्या छान्दोग्ये तृतीयाध्याये व्यक्ता। एतदेवामृतमिति वासुदेवाख्यममृतमित्यर्थः । ऊर्जमन्नम् । देवो भूत्वेत्यादि वाजसनेयमधु-विद्यास्थं वसूनामेवैको भूत्वेत्यादिपदेन रुद्रादिपदफलकद्वितीयादिमधुविद्या वस्वादिपदफलक-कर्माविद्या चोच्यते इति भावेन टीकयामूर्जमुपगच्छतीत्यादिना मध्वादिविद्यासु वस्वादीना-मित्याद्युक्तम् । एवं कर्मविद्यास्वित्युक्तम् । अत एव सर्वाङ्गादिकर्म चेति वक्ष्यतीति योज्यम् ।। **फलत्वोक्तेरिति** ।। यज्ञेन यज्ञमयजन्त देवा इत्यादौ इति भावः । **न च द्वितीयेति** । तद्यत्प्रथममृतं तद्वसव उपजीवन्तीत्युक्त प्रथमामृतविद्याया वसुत्वफलकत्वेन तत्र प्राप्तपदानां वसूनामनधिकारेऽपि अथ यद्द्वितीयममृतं तद्रुद्रा उपजीवन्तीत्याद्युक्तद्वितीयाद्यमृतविद्यासु रुद्र-त्वादेः फलत्वेन तत्र वस्वादीनाम् अधिकारोऽस्तीति न वाच्यमित्यर्थः । अत्राप्याद्यशब्दार्थमाह ।। **एवं कर्मेति** ।। एतेन वसूनामेवैको भूत्वेत्यादिपदेन रुद्राणामेवैको भूत्वेत्यादिग्रहणम् । तथा च रुद्राणामेको भूत्वेत्यादिना द्वितीयाद्यमृतविद्यासु कर्मविद्यासु च रुद्रादीनामेवोपासनाकर्मभ्यां प्राप्यफलत्वश्रवणात् प्रथमामृतोपासनाया प्राप्तपदानां वसुदेवानामयोग्यतयाधिकारासम्भवादिति सूत्रभाष्ययोरर्थान्तरमुक्तं ज्ञेयम् ।। **स्वस्वेतरेति** ।। स्वस्यैव पदाख्यफलाभिधात्रीष्वित्यर्थः । प्रकाशवानस्मिन्लोके भवतीत्यादीनामिति । छान्दोग्ये एष वै सोम्य चतुष्कलः पादो ब्रह्मणः प्रकाशवान्नामेत्यादि विद्यायां य एवं विद्वान् चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते । प्रकाशवानस्मिन् लोके भवति । प्रकाशवतो ह लोकान् जयतीत्यादिनोक्तानामस्मिन् लोके प्रकाशवत्वादीनां साधरण्यात्तत्रास्त्वधिकार इति न वाच्यमित्यर्थः ।। **तत्फल इति** ।। मध्वादि-विद्याफलभूतवसुत्वादावित्यर्थः । एतेन भाष्ये इत्यादिनेत्यादिपदेन प्रकाशवानित्यादीनामपि ग्रहणम् । तथा च सामान्यफलकविद्यासु प्रकाशत्वादीनां प्राप्यफलत्वश्रवणात् । प्राप्तपदानां च प्रकाशादिगुणानां मध्वादिविद्याफलपदान्तर्भूततया सिद्धत्वेनार्थिता सम्भवादिति सूत्रभाष्ययोरर्थः उक्तो भवति । **न ह वा एवंविदीति** ।। छान्दोग्ये ते ह प्राणा अहं श्रेयसि व्यूदिरे इत्यादिना प्राणविद्यामुक्त्वा तत्फलतयोक्तेषु सर्वभोक्तृत्वादिषु रुद्रादेरेव योग्यत्वेन सर्वेषामयोग्यत्वादित्यर्थः ।

(वाक्यार्थमुक्तावली)
तेन न ह वेत्यादिना सर्वभोक्तृत्वादेः रुद्रादिप्राप्यफलकत्वावगमात् प्राप्तवस्वादिपदानां तत्र योग्यताभावेनार्थित्वासम्भवात् तत्राप्यनधिकार इति प्रकारान्तरेण व्याख्यातं भवति ॥ **योग्यै-श्चेति** ॥ तेन प्रकाशत्वादीनां प्राप्यफलत्वश्रवणात् प्राप्तपदानां रुद्रादीनां पदप्राप्तिदशायामेव सर्वात्तृत्वादेः प्राप्तत्वात् अर्थितासम्भवात् नाधिकार इति प्रकारान्तरेण व्याख्यातं भवति । नन्वेवं युक्तिसिद्धत्वेन सर्वैरङ्गीकार्यत्वे किं जैमिनिग्रहणेनेत्यत आह ॥ **किं चेति** ॥ सूत्रे तदुपरीत्यतो देवानामित्यनुवर्तते । देवानां मध्वादिषु मोक्षेतरफलकासु ब्रह्मकर्मविद्यासु केषु-चित्प्राप्तफलत्वेनार्थित्वासम्भवात् । केषुचिदयोग्यतयार्थितासम्भवादनधिकारं जैमिनिर्मन्यत इति सूत्रार्थसङ्ग्रहः ।

## तत्त्वसुबोधिनी

वसूनामेवैकीभूत्वा इत्यादिनेति भाष्यगतादिशब्देन रुद्रादिपदफलकद्वितीयमधुविद्यादि-ब्रह्मविद्यायाः वस्वादिफलककर्मविद्याश्चोपात्ता इति ज्ञातव्यम् । मुक्तिफलकासु वा मुक्तीतर-फलकासु ब्रह्मकर्मविद्यासु वा देवाधिकार इति वक्तुं विद्याभेदमाह ॥ **वेदविद्या इति** ॥ **न च द्वितीयामृतविद्यादिष्विति** ॥ तद्यत्प्रथमममृतं तद्वसव उपजीवन्तीत्युक्तप्रथमामृतविद्याया वसुत्व-फलकत्वेन तत्र वसूनामनधिकारेऽपि अथ यद्द्वितीयममृतं तद्रुद्रा उपजीवन्तीत्यादिना उक्त-द्वितीयामृतविद्यासु रुद्रत्वादेः फलत्वेन तत्राधिकारोऽस्तु इति न वाच्यमित्यर्थः ॥ **प्रकाश-वानस्मिल्लोके भवतीत्यादीनामिति** ॥ प्रकाशवानस्मिन् लोके भवति प्रकाशवतोऽहं लोकान् जयतीत्यादिना उक्तानामेष वै सौम्य चतुष्फलः पादो ब्रह्मणः प्रकाशवान्नामेत्यादिविद्याफला-नामस्मिल्लोके प्रकाशत्वादीनां मधुविद्यादिफलभूतवसुत्वादावन्तर्भाव इत्यर्थः । '**न ह वा एवं विदितीति** । न ह वा एवंवित् इत्यादिना उक्तेषु सर्वभोक्तृत्वादिरूपेषु ते ह प्राणा अहं श्रेयसि व्यूदिर इत्यादिप्राणविद्याफलेषु रुद्रादेरयोग्यत्वादित्यर्थः ।

## वाक्यार्थमञ्जरी

मधुविद्याप्रभृतिषु देवानामनधिकारं जैमिन्याचार्यो मन्यते कुतः योग्यानां वस्वादिपदानां प्राप्तत्वादयोग्यानामकाम्यत्वेन तत्रार्थित्वासम्भवादित्यर्थः । मध्वादीत्यादिपदार्थकथनपूर्वकमाह ॥ **वेदविद्या इत्यादिना** ॥ फलार्थाः फलोद्देश्याः ॥ **यथा मधुविद्येति** ॥ असौ वा आदित्यो

(वाक्यार्थमञ्जरी)

देवमध्वित्यादिमधुविद्यास्वादित्यस्थादित्यनामा भगवान्परमानन्दत्वात् मधुदेवानामुपजीव्यत्वा-द्देवमध्विति भगवतो मधुत्वमुक्त्वा तदुपासकानां वसुरुद्रादित्यमरुद्गुनामकगणस्थानां पश्चानां वस्वादिपदप्राप्तेः फलत्वेनोक्तत्वादिति भावः ॥ **यथाग्निष्टोमेति** ॥ अग्निष्टोमेन स्वर्गकामो यजेतेत्यत्र स्वर्गफलकत्वश्रवणादिति भावः ॥ कुत इत्यत आह ॥ **स य एतदिति** ॥ योऽधिकारी एतत्प्रथमं वासुदेवाख्यममृतमेवमुक्तरीत्या वेद जानाति स वसूनामेको भूत्वा वसु-भोग्यदेशकालाधिपो भूत्वा अग्निना मुखेन प्रधानेन तदुपदेशेनेति यावत् । एतदेव वासुदेवाख्य-ममृतं दृष्ट्वा तृप्यति मुक्तिमाप्नोतीत्यर्थः ॥ **देवेति** ॥ स्वयं देवो भूत्वा देवान्प्राप्नोति, ऊर्जम्, अक्षयान्नं प्राप्नोतीत्यर्थः ॥ **एवं कर्मेति** ॥ यद्यप्यग्निष्टोमादौ स्वर्गाद्येव फलत्वेन श्रूयते न वस्वादिपदं तथापि यज्ञेनेति प्रागुक्तयज्ञादिकर्मणो देवतापदप्राप्तिहेतुत्वोक्तेः स्वर्गादिशब्द-स्योपलक्षणत्वं वा वस्वादिपदस्यापि स्वर्गत्वेन स्वर्गपदेनैव वा तद्ग्रहणोपपत्तेरिति भावः ॥ **न च द्वितीयामृतविद्यादिष्विति** ॥ तद्यत्प्रथमममृतं तद्वसव उपजीवन्तीत्युक्तप्रथमामृतवसुविद्यायाः वसुफलकत्वेन तत्र वसूनामनधिकारेऽप्यथ यद्द्वितीयममृतं तद्रुद्रा उपजीवन्तीत्यादिनोक्त-द्वितीयाद्यमृतविद्यासु रुद्रत्वादेः फलत्वेन तत्राधिकारोऽस्त्विति न वाच्यमित्यर्थः ॥ **स्वस्वेतर-पदेति** ॥ स्वपदस्वेतरपदेत्यर्थः । सामान्यफलं प्रकाशादि ॥ **प्रकाशवानस्मिँल्लोके भवतीत्या-दीनामिति** ॥ प्रकाशवानस्मिँल्लोके भवति प्रकाशवतोऽहि लोकाञ्जयतीत्यादिनोक्तानामपि वै सौम्य चतुष्कलः पादो ब्रह्मणः प्रकाशवान्नामेत्यादि विद्याफलानामस्मिँल्लोके प्रकाशवत्त्वादीनां मधुविद्यादिफलभूतवसुत्वादावन्तर्भावादित्यर्थः । वसुत्वप्राप्तौ तस्यापि प्राप्तत्वादिति भावः ॥ **न ह वेति** ॥ एवमुक्तरीत्या प्राणस्य सर्वभोक्तृत्वज्ञातरि किञ्चनानन्नं न भविष्यति सर्वमेवास्यान्नं भवतीत्युक्तं सर्वभोक्तृत्वादिरूपेषु ते ह प्राणा अहं श्रेयसि व्यूदिरे इत्यादिप्राणविद्याफलेषु रुद्रादेरेव योग्यत्वादित्यर्थः ॥

## सूत्रभाष्यम्

### ॥ ॐ ज्योतिषि भावाच्च ॐ ॥ ३२ ॥

**ज्योतिषि सर्वज्ञत्वे भावाच्च । आदित्यप्रकाशेऽन्तर्भाववत्तज्ज्ञाने सर्ववस्तूनामन्तर्भावात् । नित्यसिद्धत्वाच्च विद्यानाम् ॥**

## सत्तर्कदीपावली

हेत्वन्तरेणैतत्साधयति । ज्योतिरित्यादिना ।

## तत्त्वप्रकाशिका

**मास्तु मोक्षेतरफलार्थविद्यास्वधिकारो** देवानाम् । 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिमोक्षार्थविद्यासु भविष्यति अर्थित्वसम्भवादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **ज्योतिषीति** ॥ भावाद्वस्तूनामिति शेषः । कथं वस्तूनां ज्ञानेऽन्तर्भाव इत्यतः स्वपदे वर्णयति ॥ **आदित्येति** ॥ अभिप्रायं वक्ति ॥ **नित्येति** ॥ न मोक्षार्थविद्यास्वपि देवानामधिकारः सम्भवति । तदुक्तोपासनेऽर्थिताभावात् । द्विविधा हि अर्थिता विद्याविचारे भवति ज्ञानाय फलाय चेति । तत्र देवानां मोक्षार्थित्वेऽपि न तत्साधने विद्यासाध्ये ज्ञानेऽर्थिताऽस्ति । तेषां सार्वज्ञेन सर्वविद्योक्तज्ञानित्वात् । न हि स्वर्गार्थिनोऽपि कृतयज्ञस्य पुनर्यज्ञविद्याविचारेऽर्थिताऽस्तीति भावः । **अनेन प्राचीनपक्षे दोषान्तरं चोक्तं भवति** ॥

## गुर्वर्थदीपिका

प्राचीनपक्षे प्राप्तज्ञानत्वात् ज्ञानार्थमपि नाधिकार इति दूषणान्तरं समर्थितं भवतीति भावेनोक्तं **अनेनेति** ॥

## भावदीपः

कथमनेन भाष्येण पूर्वोक्तशङ्कानिरास इत्यत आह ॥ **न मोक्षार्थेति** ॥ **अनेनेति** ॥ नित्यसिद्धत्वाद्विद्यानामिति भाष्येणेत्यर्थः । प्राचीनपक्षे मोक्षेतरफलार्थविद्यास्वधिकार इति पक्षे । वसुत्वादिफलस्य प्राप्तत्वेनार्थित्वाभावान्मधुविद्यायामनधिकार इत्येव दोषो न किन्तु वसुत्वादिफलसाधनस्य ज्ञानस्य विद्यासाध्यस्य प्राप्तत्वाच्च न तत्राधिकार इति दोषान्तरं चोक्तमित्यर्थः । साधनफलयोर्द्वयोरपि प्राप्तत्वान्न मध्वादिविद्यास्वधिकार इत्युक्तं भवति ॥

## अभिनवचन्द्रिका

**प्राचीनपक्ष इति** ॥ मोक्षेतरफलासु विद्यासु अधिकार इति पक्षे तत्साध्यज्ञानसद्भावरूपं दोषान्तरं चोक्तं भवतीत्यर्थः ।

## वाक्यार्थमुक्तावली

सूत्रे चोऽप्यर्थः । देवानामित्यस्ति । पूर्वसूत्रादसम्भवादनधिकारं जैमिनिरित्यनुवर्तते । तथा ज्योतिषि सूर्यादिज्योतिषि इव च देवानां ज्योतिषि सर्वज्ञत्वे सर्वज्ञस्य भावः सर्वज्ञत्वं सर्वविषयं ज्ञानं तत्र सर्ववस्तूनां विषयतया भावादन्तर्भावाद्विद्यासाध्यसर्वविषयज्ञानस्य अनादियोग्यतया नित्यसिद्धत्वान्मोक्षसाधने ज्ञानेऽर्थित्वासम्भवात् । अपि च मोक्षफलकविद्यास्वप्यधिकारं जैमिनिर्मन्यत इति सूत्रार्थं हृदि निधाय भाष्यार्थमाह ॥ **न मोक्षेत्यादिना ॥ अनेन प्राचीनपक्षे इति ॥** मोक्षेतरफलकविद्यासु अधिकार इत्याद्यपक्षे न केवलं पूर्वोक्तवस्वादीनां मधुविद्यादि-फलवसुत्वादावधिकाराभावो दोषः किन्तु विद्यासाध्ये वसुत्वादिसाधनज्ञानेऽर्थित्वाभावो दोषः । वस्वादीनां सिद्धज्ञानत्वादित्यर्थः । सूत्रे ज्ञानाभावादिति वाच्ये ज्योतिषीत्युक्तिः दृष्टान्त-स्योदाहरणार्थमिति भावेन भाष्ये आदित्यप्रकाशेऽन्तर्भावादित्युक्तम् ज्ञेयम् ।

## तत्त्वसुबोधिनी

अनेन प्राचीनपक्षे दोषान्तरे चोक्तं भवति । न केवलं मुक्तीतरफलकासु कर्मब्रह्मविद्यासु नाधिकार इति य आद्ये पक्षे पूर्वोक्तवस्वादीनां मधुविद्यादिफले वसुत्वादावधिकाराभाव दोषः किन्तु विद्यासाध्ये वस्तुत्वादिसाधने ज्ञाने अर्थित्वाभावदोषो वस्वादीनां सिद्धज्ञानत्वादित्यर्थः ।

## वाक्यार्थमञ्जरी

ज्योतिषि देवानां ज्ञाने सर्ववस्तूनां विषयतासम्बन्धेन भावात्तेषां सर्वज्ञत्वादिति यावत् । मोक्षार्थविद्यास्वपि तत्साध्यज्ञानस्य प्राप्तत्वेनार्थित्वासम्भवादनधिकारं मन्यत इत्यन्वयः ॥ **देवानां मोक्षार्थित्वेऽपीति ॥** 'न चैकान्तानां न कस्यचिदर्थे नारायणो देव' इत्युक्त्या कथं देवानां मोक्षार्थित्वस्य भगवत्पूजार्थत्वात्तत्र केवलमोक्षकामनायाः निषिद्धत्वात् । उक्तं च विष्ण्वर्थं मोक्षमर्थयन्नित्यादि ॥ **अनेन प्राचीनपक्ष इति ॥** न केवलं मोक्षेतरफलार्थ-विद्यास्वधिकार इति पक्षे पूर्वोक्तो वस्वादीनां मधुविद्याफलेऽर्थित्वाभावो दोषः । किन्तु विद्या-साध्ये वसुत्वादिसाधने ज्ञाने चार्थित्वाभावश्च दोषः । वस्वादीनां नित्यसिद्धज्ञानत्वादित्यनेन सूत्रेणोक्तमित्यर्थः ।

## सूत्रभाष्यम्

॥ ॐ भावं तु बादरायणोऽस्ति हि ॐ ॥ ३३ ॥

फलविशेषभावात्प्राप्तपदानामपि देवानां मध्वादिष्वप्यधिकारं बादरायणो मन्यते । अस्ति हि प्रकाशविशेषः ।

'यावत्सेवा परे तत्वे तावत्सुखविशेषता ।
सम्भवाच्च प्रकाशस्य परमेकमृते हरिम् ॥
तेषां सामर्थ्ययोगाच्च देवानामप्युपासनम् ।
सर्वं विधीयते नित्यं सर्वयज्ञादिकर्म च' इति स्कान्दे ॥

उक्तफलानधिकारमात्रं जैमिनिमतम् । अतो न तन्मतविरोधः ।

'सर्वज्ञस्यैव कृष्णस्य त्वेकदेशविचिन्तितम् ।
स्वीकृत्य मुनयो ब्रूयुस्तन्मतं न विरुध्यत' इति (च) ब्राह्मे ॥

## सत्तर्कदीपावली

यदुक्तं फलाभावात् सर्वापरोक्षदर्शित्वेनोपासनवैयर्थ्याद्देवानां मध्वादिविद्यास्वनधिकार इति तत्पुराणवचनेन दूषयति । **यावदित्यादिना ।** आदित्य एव मध्वित्युक्तं परब्रह्म वस्वादयो देवाः यावद्यावदधिकमुपासते तावदधिकं सुखं लभन्ते । सूर्यादिषु प्रकाशतारतम्यवद्देवेष्वपि ज्ञानप्रकाशतारतम्यात् परतत्वस्य ज्ञानांशोपासनविध्युपपत्तिरित्यर्थः । मध्वादिष्वसम्भवादनधिकारं जैमिनिरित्युपन्यस्तेन जैमिनिमतेन भगवद्बादरायणमतस्य विरोधमाशङ्क्य परिहरति ॥ **उक्तफलेत्यादिना ॥** श्रुत्युक्तवसुरुद्रादित्यमात्रोद्देशेन देवानां ब्रह्मोपासनाधिकारो निषिद्धो न तु फलान्तरोद्देशेनेति जैमिनिमतम् । तच्च कृष्णद्वैपायनमतैकदेशेनोक्तं सर्वज्ञस्येति वचनेन । अतो नास्ति विरोध इत्यर्थः ।

## तत्त्वप्रकाशिका

एवं देवैर्मोक्षेतरयोग्यफलानां प्राप्तत्वादयोग्यानां प्राप्तुमशक्यत्वात् मोक्षस्याप्यर्थतो लब्धत्वादर्थित्वाभावेन तेषां कास्वपि विद्यास्वधिकाराभावे जैमिनिमतावलम्बिना समर्थिते पुनस्तं समर्थयत्सूत्रं पठित्वा व्याचष्टे ॥ **भावमिति ॥** बादरायणस्तु भगवान् देवानामशेषविद्या-

(तत्त्वप्रकाशिका)
स्वधिकारभावं मन्यते । मोक्षतदितरफलानां योग्यानां प्राप्तत्वेऽयोग्यानां प्राप्तुमशक्यत्वेऽपि विद्योक्तोपासनकर्मकरणाभ्यां योग्यस्य ज्ञानमात्रेणासाध्यस्य मोक्षफलेऽतिशयस्य सिद्ध्याऽर्थित्व-सम्भवात् । न च विद्यानां नित्यसिद्धत्वात्तद्विचारेऽर्थित्वाभावः । भगवदितरेषां निरुपचरित-सार्वज्ञाभावद्विद्याविचारेण ज्ञानविशेषसम्भवादित्यर्थः । ननु तत्तद्विद्योक्तानुष्ठानेन तत्रोक्ता-दन्यदपि फलं प्रकाशविशेषश्च भवतीत्येतत्कुतः इत्याशङ्कां परिहर्तुमुक्तार्थे स्मृतिं दर्शयति ॥ **यावदिति** ॥ नन्वस्त्येवमुक्तयुक्तिपराभवस्तथापि देवानामधिकाराभ्युपगतावाप्ततमजैमिनिमत-विरोध इत्यत आह ॥ **उक्तेति** ॥ न देवाधिकाराभ्युपगमे जैमिनिमतविरोधः । तत्तद्विद्या-सूक्तफलार्थं प्रागाप्तज्ञानार्थं च जैमिनिना देवाधिकारस्य निरस्तत्वात् । सूत्रकारेण च तदुक्त-मङ्गीकृत्य प्रयोजनान्तराय तस्य समर्थितत्वादित्यर्थः । किमनयोर्मतयोर्विषयवैलक्षण्यकल्पनेन । विरोध एव किं न स्यादित्यत आह ॥ **सर्वज्ञस्येति** ॥ अतो देवानां सर्वविद्याधिकारित्वात् तदुपास्यत्वं हरेर्युक्तमिति सिद्धम् ॥

## भावबोधः

**बादरायणस्त्विति** ॥ यथाश्रुते तु शब्दप्रयोजनाभावादिति भावः । अत्राद्ये– देवानां तदुपरीत्यनेन पदेन पदप्राप्त्यनन्तरमपि पूर्वमप्यधिकारं प्रतिज्ञाय तत्र सम्भवादित्यनेनाधिकार-सम्भवरूपहेतोस्तत्साधकविशिष्टबुद्ध्यादिसद्भावरूपहेतोश्चोक्तिः । द्वितीये– पूर्वं सूत्रे तदुप-रीत्यनेन देवतापदस्य सादित्वोक्तौ तत्र पूर्वदेवतोद्दिष्टकर्मवैयर्थ्यमाशङ्क्य 'यज्ञेन यज्ञमयजन्त' इति श्रुतिबलेन तत्पूर्वमन्येषां तत्पदप्राप्त्यभ्युपगमेन तत्परिहारोक्तिः । तृतीये– पूर्वसूत्रोपात्त-'तेऽह नाकम्' इति श्रुत्या देवतापदस्यानित्यत्वस्याप्युक्तौ सदा देवतासत्त्वप्रतिपादकवेदरूप-शब्दस्याप्यप्रामाण्यापत्तिरूपविरोधमाशङ्क्य श्रुत्याद्यवष्टम्भेन देवताप्रवाहनित्यत्वाभ्युपगमेन तत्परिहारोक्तिः । चतुर्थे– देवताप्रवाहानादिनित्यत्वे 'शब्द, इति चेत्' इति पूर्वसूत्रांश-सूचितवेदादिनित्यत्वरूपयुक्त्युक्तिः । पञ्चमे– श्रुत्यादिबलेन देवताप्रवाहस्यानादित्वसिद्धावपि तेषां देवानां प्रतिकल्पं भिन्नभिन्ननामरूपवत्त्वे एकप्रकारेण तत्प्रतिपादकवेदाप्रामाण्यं तदवस्थ-मित्याशङ्कापरिहाराय श्रुत्याद्यवष्टम्भेण देवानां सर्वकल्पेषु समाननामरूपत्वोक्तिः । सामान्यतो देवानां वेदविद्याधिकारे साधित एव विद्याविशेषविषयाक्षेपावसर इति, षष्ठे– मोक्षेतरफलक-ब्रह्मकर्मविद्यासु देवानामधिकाराक्षेपः । सप्तमे– मोक्षेतरवस्वादिपदादेः प्राप्तत्वेन वस्वादिदेवानां तत्फलकविद्यास्वधिकारासम्भवेऽप्यसिद्धमोक्षफलकविद्यास्वधिकारः सम्भवतीति सिद्धान्त्यभि-

(भावबोधः)

सन्धिनिरासाय देवानामपरोक्षज्ञानित्वेन मोक्षस्यापि प्राप्तप्रायत्वेन तदर्थितया सर्वविद्या-स्वप्यधिकाराक्षेपः । अष्टमे– अप्राप्तज्ञानमोक्षविशेषसत्वेन, तदर्थितया सर्वविद्यास्वप्यधि-कारोक्त्या सूत्रद्वयोक्ताक्षेपद्वयपरिहार इति सूत्रक्रमः ॥

## भावदीपः

**समर्थयदिति** ॥ समाहितमेतस्य साधुत्वं प्राक् । भाष्ये फले विशेषभावादित्येतत्सौत्रतु-शब्दार्थ इति भावेन देवानामित्यादिभाष्यं व्याचष्टे ॥ **देवानामिति** ॥ भगवानित्युक्त्या बादरायणपदं पूजार्थमिति सूचितम् । विमतिसूचनार्थत्वस्यादावुक्तत्वात् । प्राप्तपदानामपी-त्यस्यार्थः ॥ **मोक्षेति** ॥ फले विशेषभावादित्यस्यार्थो विद्योक्तेति ॥ अस्ति हि प्रकाशविशेष इत्येतद्व्याचष्टे ॥ **न चेति** ॥ **ज्ञानविशेषेति** ॥ एतेन सूत्रे तुशब्दः फलविशेषद्योतकः । अस्ति हीति तु ज्ञानातिशयोक्तिपरमिति सूचितम् । अप्रामाण्यमेवानुक्त्वा तन्मताविरोधोक्तिर्बीजोक्ति-राप्ततमेति । फलोक्त्योपसंहरति ॥ **अत इति** ॥ स्वपदविशिष्टानां देवानामाद्यन्तवत्त्वेन प्राप्तफलतत्साधनानामपि मोक्षे ज्ञाने च विशेषस्य सत्त्वेन चार्थित्वसम्भवादाद्यन्तवत्त्वेऽपि तेषां प्रवाहतोऽनादिनित्यत्वेन समाननामरूपत्वेन च शब्दकर्मणोरप्रामाण्याननुष्ठानाख्यविरोधा-भावाच्चेति समस्तसूत्रार्थः । तद्धेतुकप्रतिज्ञांशार्थमाह ॥ **देवानामिति** ॥

## अभिनवचन्द्रिका

**देवानां सर्वविद्याधिकारित्वादिति** ॥ ननु देवानामनधिकारित्वेऽपि न देवोपास्यत्व-मनुपपन्नम् । न हि मुक्ता नाधिकारिण इति न तदुपास्यो भगवान् भवति । ततश्च व्यर्थमिद-मधिकरणमिति चेन्न भवेदेव मुक्तानामनधिकारित्वेऽपि मुक्तप्रवृत्तेरानन्दात्मकत्वात्तेषां प्रवृत्त्या तदुपास्यो भगवान् । नैवम् देवानां तत्प्रवृत्तेः तात्कालिकदुःखसाधनत्वात्तेषां तत्र प्रवृत्तिरेव न स्यादिति न तदुपास्यः स्यादिति उपास्यत्वसिद्धये सार्थकमिदमधिकरणम् ।

पूर्वपक्षस्तु – न देवानां वेदविद्याधिकारः सम्भवति । तथा हि देवाः किं देवत्वप्रयोजकाऽ-नादिनित्यपदाः, उत विद्यादिना पदप्राप्तिमुक्तिमन्तः । पक्षद्वयेऽपि नाधिकारः न तावदनादिनित्य इत्याद्यकल्पेऽधिकारस्सम्भवति । देवानां प्राप्तपदत्वेनावाप्तमोक्षेतरसकलपुरुषार्थानां सर्वज्ञत्वेन मोक्षप्राप्तिं जनतां क्वापि कामनाऽसम्भवात् । नापि द्वितीयकल्पेऽधिकारः सम्भवति ।

(अभिनवचन्द्रिका)
देवानामसत्त्वात् । तथा हि देवानामुत्पत्तिविनाशवत्त्वे ततः पूर्वं देवताभावेन देवत्वप्राप्त्यर्थं देवैरनुष्ठीयमानशतक्रत्वादिकर्मणां व्यङ्ग्यत्वेन देवादिपदाप्रापकत्वात् । न हि व्यग्यं कर्म फल-जनकं, बाह्यकृतयज्ञादेरपि फलजनकत्वप्रसङ्गात् । एवं चासतो वन्ध्यापुत्रस्य अधिकारा-दर्शनाद्देवानामनधिकार इति ।

सिद्धान्तस्तु – न तावद्देवानां तिर्यगादीनामिव वेदविद्याधिकारोऽसम्भावितः । सम्भावकस्य विशिष्टबुध्यादेर्भावात् । सत्यां च सम्भावनायामयं प्रयोग उपजायते देवा वेदविद्याधिकारवन्तः, तदुपर्यपि देवत्वप्राप्त्युपर्यपि देवत्वादेवाऽधिकारोपयोगिनोः सामर्थ्यविद्वत्तयोरर्थित्वस्य मोक्ष-गतातिशययोग्यत्वादेव सम्भवात् । ननु देवा न विद्याधिकारिणः अमनुष्यत्वात्तिर्यगादिवदिति चेन्न विशिष्टबुध्यादिसाहित्यस्योपाधित्वात् । ननु जरितार्यादिषु अनधिकारेऽपि विशिष्टबुध्यादेः सत्त्वात् विशिष्टबुध्यादिसाहित्याभावेन साध्याव्यापकत्वान्नायमुपाधिरिति चेत्, न तेषामप्यधि-कारित्वेनाऽधिकाररूपसाध्यस्य तत्राभावात् । ननु तेषामप्यधिकारे पूर्वाधिकरणविरोधः, अमनुष्यत्वादित्यधिकारनिषेधादिति चेत्, न भावानवबोधात् । पूर्वाधिकरणेऽङ्गुष्ठाभावेन अङ्गुष्ठमात्रविद्यायां अनधिकार उक्तः । इह तु तत्रोक्तमङ्गीकृत्य विद्यान्तराऽधिकाराऽभिधानात् । ननु यद्देवानां सादिविनाशित्वमिति द्वितीयकल्पमङ्गीकृत्य वेदविद्याधिकारकथनं, तदयुक्तम् । तथा हि देवानां सादिविनाशित्वे ततः पूर्वं देवताभावेन पूर्वकल्पे वृत्तकर्मणि उद्देश्या-भावाद्वैयर्थ्याख्यविरोधादिति चेत्, न । भवेदयं विरोधः यदि पूर्वदेवताभावः । न चासावस्ति । एतद्देवानां पूर्वमभावेऽपि देवतान्तरसद्भावात् । न च तत्र प्रमाणाभावः, 'तेहनाकं महिमानः सचन्त' इति श्रुतेः । नन्वेवमपि द्वितीयपक्षाङ्गीकारो न घटते । वेदप्रामाण्यभङ्गप्रसङ्गात् । तथा हि वेदानित्यत्वे प्रामाण्यायोगेन नित्यत्वं तावदङ्गीकार्यम् । तद्वाच्या देवा यद्यनित्याः स्युः तर्हि पूर्वदेवतापरित्यागेनान्यदेवतावाचकत्वमभ्युपेयम् । न चैतत् घटते वाक्यस्यार्थेन स्वाभाविकसम्बन्धात् । न हि किमपि वाक्यं किञ्चिदर्थं प्रतिपाद्य तमपहाय कालान्तरे अर्थान्तरं प्रतिपादयतीति दृष्टचरम् । येन वेदेऽपि तथा स्यात् । वेदे तथात्वमङ्गीकुर्वाणेन वेदस्यार्थेन सम्बन्धः काल्पनिक इत्यङ्गीकार्यम् । तथा च काल्पनिकसम्बन्धस्य अप्रामाण्यप्रयोजकत्वात् वेदाप्रामाण्यम् ।

अस्तु वा काल्पनिकोऽपि सम्बन्धः प्रामाण्यप्रयोजकः, तथापि न वेदप्रामाण्यं घटते ।

(अभिनवचन्द्रिका)
प्रामाणिकत्वेन पूर्वदेवताप्रवाहनियमेऽपि प्रमाणाभावेनोत्तरकल्पेषु देवताप्रवाहनियमाभावेन काल्पनिकसम्बन्धस्याप्यभावादिति चेत्, न । 'सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत्' इति श्रुतेः । महतां प्रत्यक्षस्य, उत्तरकल्पः देवतावान् अप्रलयकालत्वादित्यनुमानस्य च भावात् । न च सम्बन्धस्य काल्पनिकत्वात् न प्रामाण्यप्रयोजकत्वमिति वाच्यम् । अन्यान्यदेवतासम्बन्धस्य 'अनादिनिधना' इति प्रमाणसिद्धत्वेन अकाल्पनिकत्वात् । किं च न देवताप्रवाहनित्यत्वे प्रमाणान्तरं मृग्यम् । यदेतत् परेण वेदस्य नित्यत्वमभिहितं तदन्यथानुपपत्त्यैव देवता-प्रवाहनित्यत्वं सिध्यति । न हि वाच्यस्य नित्यत्वाभावे एवं रूपाया वाचोनित्यत्वमुपपद्यते । ननु देवाताप्रवाहनित्यत्वेऽपि न वेदप्रामाण्यमुपपद्यते । तेषां नानाविधरूपवत्त्वात् । वेदस्य वैपरीत्येन प्रागभावादिति चेत्, न । वेदे इन्द्रादिदेवानां यादृशं रूपं प्रतिपाद्यते, यच्च नाम तदेव कल्पान्तरे जायमानानां देवानामित्यङ्गीकारेण बाधकाभावात् । न चैतदप्रामाणिकं, 'यथापूर्वमिति श्रुतेः । 'अनादि निधना' इति स्मृतेश्च प्रमाणत्वात् । ननु द्विविधा विद्याः । मोक्षार्थाः तदितरफलार्थाश्च । न तत्र तदितरफलार्थासु विद्यास्वधिकारः । अर्थित्वाभावात् । नापि मोक्षार्थविद्यासु, अनुष्ठितमोक्षसाधनत्वेन तदुक्तोपासने अर्थित्वाभावादिति चेत्, सत्यम् । उक्तफलार्थं देवानामनधिकार इति, तथापि मोक्षफले आनन्दातिशयरूपविद्याफलस्य भावेन तत्राधिकारसम्भवात् । एवं ज्ञानार्थमपि अधिकारः सम्भवति । भगवद्व्यतिरिक्तानां निरुपचरित-सार्वज्ञाभावेन विचारेण ज्ञानलाभसम्भवात् । ततश्च सर्वदेवोपास्यत्वं विष्णोर्युक्तमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

सूत्रे मध्वादिष्विति अधिकारस्येति देवानामिति चास्ति । तुशब्दो विशेषार्थः ।। **बादरायण-स्त्वित्यन्वेति** ।। फलविशेषः प्रकाशविशेषद्योतकश्चास्ति तस्मात् मध्वादिष्वधिकारस्य भावं मन्यत इति सूत्रार्थं हृदि निधाय भाष्यारोहं दर्शयति ।। **बादरायणस्त्वित्यादिना** ।। भगवा-नित्यनेन पदप्राप्त्यनन्तरेऽपि पदेन पूर्वमप्यधिकारं प्रतिज्ञाय सम्भवादित्यनेनाधिकारोपयोगिनो विशिष्टबुध्यादेर्भावादधिकारसम्भवादिति हेतुरुक्तः । तत्र तदुपरीति प्रतिज्ञाभावोक्तदेवता-पदसादित्वे बाधकपरिहाराय विरोधःकर्मणीत्यादि सूत्रचतुष्टयम् । सम्भवदित्युक्तत्वे अंशे बाधकपरिहाराय मध्वादिष्वसम्भवादित्यादिसूत्रत्रयम् । तत्र द्वितीयकर्मादिना देवादित्वमिति तदुपरीति साक्षादुक्तदेवतापदसादित्वे देवताप्रागभावदशायां तस्मिन्नेव देवतोद्दिष्टकर्मणि

(वाक्यार्थमुक्तावली)
वैय्यर्थ्यमाशङ्क्य यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्निति श्रुत्यवष्टम्भेन पूर्व-पूर्वदेवताप्रवाहस्यानादित्वोपपादनेन परिहारः । न तृतीये तदुपरीत्युक्तिलब्धतया पूर्वसुत्रोपात्तश्रुतौ ते ह नाकमिति सान्तत्वोक्त्या वा देवतापदस्य सान्तत्वे प्राप्ते तर्हि देवताप्रध्वंसदशायां दर्शनादिति प्राणतयोपात्तशब्दस्यैव वाच्यहीनत्वेनाप्रामाण्यं नित्यत्वाच्छब्दस्येति शङ्किते देवताप्रवाहानित्यत्वे प्राणान्नयोपन्यासः । चतुर्थे सूत्रद्वयोक्तप्रवाहानादिनित्यत्वे पूर्वसूत्रे शब्द इति चेदित्यंशसूचित-वेदनित्यत्वान्यथानुपपत्तिरूपयुक्त्यन्तरोक्तिः । पञ्चमे देवताप्रवाहस्यानादिनित्यत्वेऽपि प्रवाहिणां देवानां प्रतिकल्पं भिन्नभिन्नतमरूपत्वादेकप्रकारेण तत्प्रतिपादकवेदाऽप्रामाण्यं तदवस्थमित्या-शङ्क्य समाननामरूपत्वोक्त्या परिहारसम्भवादित्युक्तहेत्वाक्षेपपरिहाररूपत्रिसूत्र्या आद्ये षष्ठे ऐहिकामुष्मिकयोः ऐहिकस्य फलस्य प्राथमिकत्वान्मोक्षेतरफलकब्रह्मकर्मविद्यासु अर्थित्वा-सम्भवादधिकाक्षेपः द्वितीये सप्तमे मोक्षफलकविद्यासु फलसाधनयोः अर्थित्वासम्भवेनाधिकारा-क्षेपः । तृतीये अष्टमे पुनः अप्राप्तज्ञानमोक्षविशेषयोरर्थित्वोपपादनेन सर्वविद्यादिसमर्थनमिति सूत्रक्रमः।

## तत्त्वसुबोधिनी

**बादरायणस्त्विति** ॥ यथाश्रुते तुशब्दप्रयोजनाभावादिति भावः । अत्राद्ये देवानामधिकारं प्रतिज्ञाय तत्रासम्भवादित्यनेनाधिकारसम्भवरूपहेतोः तत्साधकविशिष्टबुद्ध्यादिमत्त्वहेतो-श्चोक्तिः । द्वितीये देवतापदसादित्वे प्राप्तकर्मविरोधपरिहार इति । तृतीये देवताप्रवाहस्य अनादिनित्यत्वमङ्गीकृत्य शब्दप्रमाणरूपविरोधपरिहारः । चतुर्थे देवताप्रवाहानादिनित्यत्वे वेदनित्यत्वरूपयुक्त्युक्तिः । पञ्चमे देवानां समाननामरूपवत्वकथनेन वेदाप्रामाण्यपरिहारः । षष्ठे मोक्षेतरफलकब्रह्मकर्मविद्यासु देवानामधिकाराक्षेपः । सप्तमे मोक्षफलकास्वपि अधिकारा-क्षेपः । अष्टमे अप्राप्तज्ञानमोक्षविशेषसत्वेन तदर्थितया सर्वविद्यास्वपि अधिकारोक्त्या सूत्र-द्वयोक्ताक्षेपद्वयपरिहार इति सूत्रक्रमः ॥

## वाक्यार्थमञ्जरी

बादरायणस्तु देवानां मध्वाद्यशेषविद्यास्वधिकारस्य भावं सद्भावं मन्यते कुतः हि यस्मा-न्मोक्षफले तद्धेतुज्ञाने चातिशयोऽस्ति तस्मादित्यर्थः । प्रागुक्ताधिकारिद्वयमप्युपपादयति । **विद्योक्तेत्यादिना** ॥

॥ इति देवताधिकरणम् ॥

# ९. अपशूद्राधिकरणम्

## सूत्रभाष्यम्

मनुष्याधिकारत्वादित्युक्तेऽविशेषाच्छूद्रस्यापि 'अह हारेत्वा शूद्र' (छां.उ. ४-२-३) इति पौत्रायणोक्तेरधिकार इत्यत आह–

॥ ॐ शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॐ ॥ ३४ ॥

नासौ पौत्रायणश्शूद्रः, शुचाऽऽद्रवणमेव शूद्रत्वम् (शूद्रशब्देनोक्तम्) । 'कम्वर एनमेतत्सन्तम्' (छां.उ.४-१-३) इत्यनादरश्रवणात् । 'स ह सञ्जिहान एव क्षत्तारमुवाच' (छां.उ.४-१-५) इति सूच्यते हि ॥

## सत्तर्कदीपावली

ननु यदि वेदविद्याधिकारिणो मनुष्यत्वविशेषणेऽपि देवानां विशिष्टबुद्ध्यादिभावेनाधिकारसम्भवान्निषेधाभावाच्च न तत्र नाधिकारः तद्धीनतिर्यगादिवत् । तर्ह्यनेन न्यायेन शूद्राणां सुतरामधिकारः मनुष्यत्वाविशेषात् । यदि निषिद्धस्तेषां तर्हि किमर्थं वैदिकाग्रणी रैक्वः शूद्रं पौत्रायणं वेदविद्यां श्रावयेत् । न चासावशूद्रः शूद्र इति तेन सम्बोधनादिति भावेनाशङ्क्यैतां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **मनुष्येत्यादिना** ॥ अहेति सम्बोधनम् । हारो उरो भूषणम्, इत्वा रथः तदुभयं हि गोभिः सह तेनोपनीतम् । न पौत्रायणः चतुर्थवर्णः किन्तु 'सन्तमुत्तमं सयुग्मानं रैक्वं प्रतीवकम्वेनम् एतद्वचनं आत्थ' इति हंसोक्तानादरश्रवणादतिशोकोपहतत्वाच्छूद्रेत्युक्तः । शोकाभावे शयनात्संजिहान एव स कथं रैक्वान्वेषणे क्षत्तारं नियुञ्ज्यादित्यर्थः ।

## तत्त्वप्रदीपिका

मनुष्याधिकारत्वादित्युक्ते शूद्रस्यापि वेदविद्यायामधिकारस्स्यात् । शूद्रस्यापि मनुष्यत्वाविशेषात् । 'अह हारेत्वा शूद्र तवैव सह गोभिरस्तु' इति पौत्रायणं प्रति रैक्वस्योक्तेश्च । पौत्रायणं वेदविद्यां श्रावयिष्यन्नेव हि रैक्वः शूद्रशब्देन सम्बोधयामास । अह शूद्र हार इत्वा च गोभिस्सह तवैवास्त्विति । इत्वा शकटः । अत्रोच्यते 'शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि' । शुचाऽऽद्रवणमेव शूद्रशब्दप्रवृत्तिहेतुः । शुचां प्रत्याद्रवणं, शुचा वा क्षत्तारं प्रत्याद्रवणं, रैक्वं प्रत्याद्रवणं वा । तदाद्रवणाच्छूद्र इत्युच्यते । तृतीयात्तृतीयस्याप्यतिशयार्थत्वात् । कस्मात्

(तत्त्वप्रदीपिका)
शुचाऽऽद्रवणमित्यत आह– **कम्वर इति ॥** 'कम्वर एनमेतत्सन्तं सयुग्वानमिव रैक्वमात्थ' इति हंसात्स्वानादरश्रवणात् । एतत्सन्तं निन्द्यं सन्तं, एतच्छब्देन दुःखादिरपरोक्षतयोच्यते । 'क्वचिद्विश्वं क्वचिद्ब्रह्म क्वचिन्निन्द्यमुदीर्यते' इति तन्त्रनिरुक्ते । 'स ह सञ्जिहान एव क्षत्तारमुवाच' इति वचनेनैव शुगस्य सूच्यते हि । अन्यथा नैवानादरश्रवणेऽपि शयनात्सञ्जिहान एव क्षत्तारं रैक्वोऽन्वेषणे नियुञ्जीत ॥

## तत्त्वप्रकाशिका

अत्र त्रिवर्णेतरस्य वेदोक्तब्रह्मविद्याधिकारनिरासादस्ति शास्त्रसङ्गतिः । प्रासङ्गिकत्वान्नाध्यायादिसङ्गतिरन्वेष्टव्या । श्रुत्यादिसङ्गतिं विषयादिकं च सूचयति ॥ **मनुष्येति ॥** वेदविद्यासु मनुष्याणामधिकृतत्वात्तेषां चाङ्गुष्ठसद्भावाद्युक्तं तान्प्रति विष्णोरङ्गुष्ठमात्रत्वाभिधानमित्युक्तम् । स च वेदविद्याधिकारो यदि शूद्रादीनां स्यात्तदा श्रुत्यादिविरोधादसौ निषेध्य एव । न चोक्तविरोधाभावादसङ्गतिः । स्वन्यायेन श्रुत्यादिविरोधप्राप्तेः । स एव ह्युक्ते विरोधो नाम यदुक्तं प्रमाणवाधितं स्यात् । स वेदविद्याधिकारो विषयः । शूद्रस्यास्ति न वेति सन्देहः । मनुष्यत्वमदर्शनं च सन्देहबीजम् । अस्ति शूद्रस्यापि वेदविद्याधिकार इति पूर्वपक्षः । मनुष्याधिकारत्वादिति मनुष्याणामधिकारस्योक्तत्वात् । मनुष्यत्वे च शूद्रस्य (अपि) द्विजातिभ्यो विशेषाभावात् । न मनुष्यत्वं वेदविद्याधिकारोपयोगि किं तु विशिष्टबुद्ध्यादिमत्त्वमेवेति चेत्तथापि शूद्राधिकारसिद्धिः । विशिष्टबुद्ध्यादिमत्त्वेऽपि शूद्रस्यान्येभ्योऽविशेषात् । न च वाच्यं शूद्रस्य वेदविचारादर्शनादनधिकार इति । छन्दोगोपनिषदि पौत्रायणस्य वैदिकसंवर्गविद्याध्ययनदर्शनात् । तस्य शूद्रत्वमेव कुत इति चेन्न । 'तमुह परः प्रत्युवाचाह हारेत्वा शूद्र तवैव सह गोभिरस्तु' इति पौत्रायणं प्रति रैक्वोक्तेरेव । न चाधिकाराभावेऽपि पौत्रायणो विद्यां विचारयामासेति किं न स्यादिति वाच्यम् । अनधिकारिणं प्रति मुनेरुपदेशासम्भवात् । न हि तस्यापरोक्षज्ञानिनो गवाद्याशयाऽप्यन्याय्या प्रवृत्तिः सम्भाविता । अतो युक्त्या लिङ्गदर्शनेन च शूद्रस्य वेदाधिकारसिद्धिरिति भावः । उक्ते इति सप्तमी पञ्चम्यर्थे । अधिकारोपयोगितयोक्ते मनुष्यत्वेऽविशेषादिति वा । अहेति सम्बोधनम् । हारो रथश्च गोभिः सह तवैवास्त्वित्यर्थः । हारेत्वेति सेदुराजेत्यादिवद्विसर्गलोपेन भवति । हारेत्वानाविति वा । तथात्वे पृथगन्वयः ।

सिद्धान्तयत्सूत्रमवतार्य तत्फलितार्थं तावदाह ॥ **अत इति ॥** यदुक्तं शूद्रस्यापि पौत्रायणस्य वेदविचारदर्शनादस्ति शूद्रस्य वेदविद्याधिकार इति तद्भवेद्यदि पौत्रायणः शूद्रो भवेन्न तु तदस्तीत्यर्थः । शूद्रेति सम्बोधितत्वात् कथमसौ न शूद्र इत्यतः तदाऽऽद्रवणादिति सूत्रांशं

(तत्त्वप्रकाशिका)
व्याचष्टे ॥ **शुचेति** ॥ शोकेनाऽऽद्रवणं शूद्रशब्दप्रवृत्तिनिमित्तम् । अतः शुचाऽऽद्रवणादेव शूद्रेति सम्बोधितो न तु वर्णावरत्वाभिप्रायेणेति नानेन पौत्रायणस्य शूद्रत्वसिद्धिरित्यर्थः । पौत्रायणस्य शुगेव किं निमित्तेत्यतः शुगस्य तदनादरश्रवणादिति सूत्रांशं व्याचष्टे ॥ **कम्वित** ॥ अरे हंसैतद्वचनं कमेनमुद्दिश्यात्थ सन्तं सयुग्वानं रैक्वमिवेति हंसकृतानादरश्रवणादस्य पौत्रायणस्य शुगित्यर्थः । तदिति श्रुत्युक्तपरामर्शः । श्रुतानादरस्यापि तस्य कुतः शोकोत्पत्तिर्ज्ञायते । परबुद्धेरप्रत्यक्षत्वात् । कारणस्य च कार्याविनाभावाभावादित्यतः सूत्रशेषं व्याचष्टे ॥ **सहेति** ॥ स श्रुतानादरः पौत्रायणः शयनादुत्तिष्ठन्नेव क्षत्तारं रैक्वगवेषणायोवाचेत्युक्तत्व्यग्रतया शोको ज्ञायतेऽतोऽनादरश्रवणात् पौत्रायणस्य शुगासीत्तयाशुचाऽऽद्रवणात् शूद्रेति सम्बोधितो न तु वर्णावरत्वाभिप्रायेणेति नेदं शूद्राधिकारे लिङ्गमिति भावः । शोकेनाऽऽद्रवणपरिज्ञानं च मुनेः सार्वज्ञादुपपद्यते । तदुक्तम् । 'राजा पौत्रायणः शोकाच्छूद्रेति मुनिनोदितः । प्राणविद्यामवाप्यास्मात्परं धर्ममवाप्तवान्' इति । दीर्घस्वरार्थत्वेनाऽऽद्रवणादित्युक्तम् । शुद्र एव शूद्रो रुद्र एव रुद्र इतिवत् ॥

## गुर्वर्थदीपिका

न चोक्ते विरोधाभावादित्यस्य शूद्राणामधिकारेऽपि प्रागुक्ते मनुष्याधिकारत्वे आक्षेपाभावादित्यर्थः । स्वन्यायेन श्रुत्यादिविरोधप्राप्तेरित्यत्र स्वस्य सूत्रकारस्य न्यायेन 'हृद्यपेक्षया तु मनुष्याधिकारत्वात्' इति सूत्रे उक्तन्यायेन मनुष्यत्वाविशेषाच्छूद्राणामप्यधिकारप्राप्तौ 'अध्ययने जिह्वाच्छेद' इति श्रुत्या आदिपदोक्तयुक्त्या च विरोध इत्यर्थः । युक्त्या विशिष्टबुद्ध्यादिमत्त्वयुक्त्या पौत्रायणं प्रति शूद्रेति श्रौतसम्बोधनाख्यलिङ्गेन चेत्यर्थः । सेदुराजेत्यादिवदित्यस्य सः ईत् उ इति पदकरणे विद्यमानो विसर्गः यथा संहितायां लुप्यते तथाऽत्रापीत्यर्थः । हारश्च इत्वा च हारेत्वानाविति द्वन्द्वसमासे कृते 'द्वा सुपर्णा' इत्यादाविव हारेत्वेति पदं भवतीत्याशयवानाह– **हारेत्वानाविति** ॥ तथात्वे पृथगन्वय इत्यस्य यौ हारेत्वानौ त्वयोक्तौ स हारः स इत्वा चेत्यर्थानुसारेण पृथक् पदं कृत्वा अस्त्वित्यनेनान्वय इत्यर्थः । शुचाऽऽद्रवणादिति वदन् टीकाकारः 'तदाद्रवणात्' इति सूत्रखण्डस्य तया शुचा आद्रवणादित्यर्थमभिप्रैति ।

तथाचायं सूत्रार्थः । तया शुचा आद्रवणादेव शूद्रत्वं, न तु जात्या । शुक्च तेषां हंसानामनादरश्रवणादस्य पौत्रायणस्य जाता । सा च तदाद्रवणात्तस्य पौत्रायणस्य आद्रवणात्क्षत्तारं प्रत्याद्रवणात्सूच्यते । दूरस्थस्यापि ऋषेः क्षत्तारं प्रत्याद्रवणपरिज्ञानं सर्वज्ञत्वप्रसिद्धेरिति हिशब्देन सूचितमिति ।

## भावबोधः

**वेदोक्तब्रह्मविद्येति** ॥ शूद्राणामपि तन्त्रोक्तब्रह्मविद्यायामधिकाराद्वेदोक्तेत्युक्तम् ॥ **श्रुत्यादिसङ्गतिमिति** ॥ यदि विशिष्टबुद्ध्यादिमत्त्वेन देवानां वेदविद्याधिकारः तर्हि शूद्राणामपि विशिष्टबुद्ध्यादिमत्त्वाविशेषात् वेदविद्याधिकारः स्यादिति पूर्वपक्षोत्थानादव्यवहितपूर्वाधिकरण-सङ्गतिरिति ज्ञातव्यम् । अत एवाविशेषादिति भाष्यमेवमपि व्याख्यातम् ॥ न चोक्त **विरोधाभावादसङ्गतिरिति** ॥ शूद्राणां वेदविद्याधिकारे श्रुत्यादिविरोधेऽपि मनुष्याधिकारत्वा-दित्यनेनोक्तमनुष्याधिकारे श्रुत्यादिविरोधो नास्ति । त्रिवर्णमनुष्याणां वेदविद्याधिकारस्य श्रुतत्वात् । तथा च यत्र श्रुत्यादिविरोधस्तत्र न शूद्रादिवेदविद्याधिकारः । न स पूर्वाधिकरणे उक्तः । यस्तूक्तो मनुष्याणामधिकारो न तत्र श्रुत्यादिविरोध इति न पूर्वाधिकरणेनास्य सङ्गति-रिति न वाच्यमित्यर्थः ॥ **स्वन्यायेन श्रुत्यादिविरोधप्राप्तेरिति** ॥ वेदविद्यासु मनुष्याणा-मधिकृतत्वात्तेषां चाङ्गुष्ठसद्भावाद्युक्तं तान् प्रति विष्णोरङ्गुष्ठमात्रत्वाभिधानमित्युक्तन्यायेन शूद्राणां मनुष्यत्वादङ्गुष्ठवत्त्वाच्च प्राप्ते वेदविद्याधिकारे श्रुत्यादिविरोधप्राप्तेरित्यर्थः ॥

ननु न्यायप्राप्ते श्रुत्यादिविरोधेऽपि उक्तविरोधाभावशङ्का न परिहृतेत्यत आह– स एव **हीति** ॥ उक्तमनुष्यत्वाङ्गुष्ठत्त्वादेरधिकारोपयोगित्वं श्रुत्यादिबाधादिति । श्रुत्यादिविरुद्धाधिकारे शूद्रादौ विद्यमानत्वादिति भावः ॥ **शूद्रस्यापीति** ॥ अत्र वेदविद्याधिकारः किं शूद्रस्यास्ति उत नास्तीति चिन्ता । तदर्थं विशिष्टबुद्ध्यादिमत्त्वं किं शूद्रस्य वेदविद्याधिकारसाधकं भवत्युत नेति । तदर्थं पौत्रायणकर्तृकविद्याविचाररूपं लिङ्गं किं तदुपोद्बलकं भवत्युत न भवतीति । तदर्थं रैक्वोपदिष्टः पौत्रायणः किं शूद्र उत क्षत्रिय इति । तदर्थमहहारे त्वा शूद्रेति रैक्वोक्त-वाक्ये पौत्रायणे प्रयुक्तः शूद्रशब्दः किं रूढ उत यौगिक इति । तदर्थमयमश्वतरीरथ इति पौत्रायणस्योक्तं चित्ररथित्वं शूद्रस्य न सम्भवत्युत सम्भवतीति । तदर्थं रथित्वव्यापक-वेदाध्ययनप्रयोजकोपनयनादिसंस्कारः किं शूद्रस्य युक्त उत न युक्त इति । तदर्थं 'नाग्निर्न यज्ञो न संस्कारः' इति श्रौतः संस्काराभावाभिलापः शूद्रस्य संस्कारयोग्यत्वेऽपि अभावोक्तिमात्ररूप उत तन्निषेधनिबन्ध इति । तदर्थं तस्य संस्कारनिषेधरूपत्वकल्पकोपनयनादिसंस्कारकरणे शूद्रत्वाभावनिश्चयापेक्षा नास्त्युतास्तीति । तदर्थमुपनयनादिसंस्कारसाध्ये वेदश्रवणादेर्निषेधकं प्रमाणं नास्त्युतास्तीति । तथा किं विशिष्टबुद्ध्यादिमत्त्वमेवाधिकारप्रयोजकमुत निषिद्धत्वा-

(भावबोधः)

भावविशिष्टमिति । तदर्थं शूद्रस्य वेदश्रवणादेर्निषेधकं प्रमाणं नास्त्युतास्तीति । पूर्वमविशेषा-दित्येतन्मनुष्यत्वे विशेषाभावादिति व्याख्याय शङ्कान्तरपरिहारकत्वेन प्रकारान्तरेण व्याचष्टे– **विशिष्टबुद्ध्यादिमत्त्वेऽपीति ॥ पौत्रायणं प्रति रैक्वोक्तेरिति ॥** अहहारे त्वेति वचनस्य पौत्रायणवक्तृकत्वाभावेन पौत्रायणस्योक्तेरिति षष्ठीतत्पुरुषाभावादिति भावः ॥ **अनधिकारिणं प्रति मुनेरुपदेशासम्भवादिति ॥** अनेन पौत्रायणोक्तेरित्यस्य पौत्रायणं प्रति रैक्वस्योपदेशा-दित्यपि व्याख्यानं सूचितं भवति ॥ **युक्त्या लिङ्गदर्शनेन चेति ॥** युक्तिर्मनुष्यत्वादिरूपा । लिङ्गं तु पौत्रायणस्य शूद्रेति सम्बोधितस्य वैदिकसंवर्गविद्याविचाररूपम् । मनुष्याधिकारत्वा-दित्युक्त इति भाष्यस्य मनुष्याधिकारस्योक्तत्वादिति स्वकृतं व्याख्यानमुपपादयति– **पञ्चमी सप्तम्यर्थ इति ॥ सेदुराजेत्यादिवदिति ॥** यथा स इत्यत्र च्छान्दसेन विसर्गलोपेन सेदिति गुणस्तथा हार इत्वेत्यत्रापि हारेत्वेति गुण इत्यर्थः । यद्वा हारेत्वेत्येकं पदम् । व्यत्ययेन द्विवचनस्यैकवचनम् । आदेशो वेत्याहहारेत्वानाविति चेति ॥ **शुचाद्रवणादेवेति ॥** अनेन तदा द्रवणादित्यत्र तच्छब्देन शुभस्येति प्रागुक्तशुचः परामर्श इत्युक्तं भवति ॥ **हंसकृतेति ॥** अनेन सूत्रे तदनादरेत्यत्र मध्यमपदलोपी समास इत्युक्तं भवति ॥ **श्रुत्युक्तेति ॥** श्रुत्युक्तहंसेत्यर्थः । स्मृतौ शोकादित्यस्य शोकेनाद्रवणादित्यर्थः । दीर्घस्वरार्थत्वेनाद्रवणादित्युक्तमिति–

'संहितायां यत्र दैर्घ्यं पदे यत्र न विद्यते ।
उक्तार्थस्य महाधिक्यं श्रुतेस्तत्र विवक्षितम् ॥'

इत्यादिवचनैः श्रुतौ दीर्घस्वरः शोकाधिक्यज्ञापनार्थ इति सूचयितुं सूत्रे आद्रवणा-दित्युक्तम् । शीघ्रगमनस्य शोकाधिक्यनिमित्तकत्वादित्यर्थः ॥ **रुद्र इति वदिति ॥** 'रुजं द्रावयते यस्मात्' इत्यादिस्मृत्या रुग्द्रावणकर्तृत्वेन रुग्द्र इति भवितव्ये रुद्र इति यथा तथैवेत्यर्थः ।

## भावदीपः

सङ्गतिपरत्वेन भाष्यं व्याचष्टे ॥ **वेदविद्यास्विति ॥ अविशेषादित्यादेर्भावस्य चेति ॥** वक्ष्यमाणदिशेत्यर्थः ॥ **श्रुत्यादीति ॥** श्रवणाध्ययनेति सूत्रोक्तश्रुत्यादीत्यर्थः ॥ **न चोक्त इति ॥** शूद्रस्याधिकारे उक्ते मनुष्याधिकारे विरोधो नास्ति । शूद्रस्यापि मनुष्यत्वात् । तथा चोक्ता-नाक्षेपादफलोऽयं विचार इति न वाच्यमित्यर्थः । स्वन्यायेन मनुष्यत्वविशिष्टबुध्यादिमत्व-

(भावदीपः)

रूपपूर्वोक्तसूत्राकारीयन्यायेन शूद्रस्याप्यधिकारप्राप्तौ वक्ष्यमाणश्रुतिस्मृतियुक्तिविरोधप्राप्तेरित्यर्थः । शूद्रस्यानधिकारोक्तौ प्राक्तनसामान्योक्तिः शूद्रेतरमनुष्यपरा स्यादिति भावः । पूर्वपक्षतद्युक्तिपरत्वेनापि भाष्यं व्याचष्टे ॥ **अस्ति शूद्रस्यापीति** ॥ सप्तमीयं पञ्चम्यर्थे इत्युपेत्याऽऽह ॥ **उक्तत्वादिति** ॥ अविशेषाच्छूद्रस्यापीत्येतन्मनुष्यत्वाविशेषादित्येवं व्याख्याय देवतानयोक्तन्यायाविशेषादित्यर्थान्तरपरतयाऽपि व्याख्यातुमाह ॥ **न मनुष्यत्वमिति** ॥ पौत्रायणोक्तेरिति वाक्यं पौत्रायणस्य श्रुतावधिकारोक्तेरित्यर्थकं व्याख्यातुमाह ॥ **न च वाच्यं शूद्रस्येति** ॥ पौत्रायणं प्रति रैक्केण शूद्रेत्युक्तेरित्यर्थान्तरं च व्याख्यातुमाह हारेत्वा शूद्रेत्यादिवाक्यमवतार्य व्यनक्ति ॥ **तस्येति** ॥ छान्दोग्ये चतुर्थे श्रुतसंवर्गविद्यायां प्रासादाग्रे शयानं पौत्रायणमुपर्युपरिपतन्तो हंसपक्षिणो रैक्कमुनिप्रशंसाकराणि पौत्रायणानादरकराणि च वाक्यानि परस्परं वदन्तोऽगमन् । तच्छ्रुत्वा परितप्तमनाः पौत्रायणः प्रातस्तल्पादुत्थित एव क्षत्तृमुखेन रैक्कस्थानं निश्चित्य तत्वबुभुत्सुर्गुरुदक्षिणां गृहीत्वा तत्समीपमुपेत्य तं सम्बोध्य दक्षिणां निवेद्य मह्यं विद्यां ब्रूहीत्युवाच । तदा तं पौत्रायणं परो रैक्कः प्रत्युवाच किमिति अह हारेत्वेत्यादि । हारः कण्ठमाला, इत्वा रथः । तवैवास्त्विति स्वाभिमतानवाप्तेः पौत्रायणानीतां दक्षिणां मुनिः प्रत्याचख्यौ इति श्रुत्यर्थः । पौत्रायणं प्रति रैक्केण विद्योक्तेरित्यार्थान्तरं भाष्यस्य वक्तुमाह ॥ **न चाधिकारेति** ॥ **अत इति** ॥ मनुष्यत्वात् विशिष्टबुद्ध्यादिमत्त्वात् मुनेरन्यायप्रवृत्तेरसम्भवाच्चेत्यर्थः । युक्त्या अविशेषादित्युक्तयुक्त्या । पौत्रायणं प्रति रैक्कस्य शूद्रेति शूद्रपदेन सम्बोध्य विद्योपदेशनरूपलिङ्गदर्शनेन च ॥ **सप्तमीति** ॥ भाष्यगतेत्यर्थः । श्रुत्यर्थमाह ॥ **अहेति** ॥ इत्वशब्दार्थमाह ॥ **रथश्चेति** ॥ अस्त्वित्येकवचनान्वयाय हारेत्वेत्यत्र हारो रथश्चेति पृथगन्वयः कृतः । तर्हि हार इत्वेति स्यात् । न तु हारेत्वेत्याशङ्क्योपपत्तिमाह ॥ **हारेत्वेतीति** ॥ यथा स इदित्यत्र छान्दसेन विसर्गलोपेन सेदिति गुणस्तथा हारेत्वेत्यत्रापि गुण इत्यर्थः । यद्वा हारेत्वेत्येकं पदं व्यत्ययेन द्विवचनस्यैकवचनमित्याह ॥ **हारेत्वा नाविति वेति** ॥ तथात्वे पृथक् हारो रथश्चास्त्विति अन्वय इत्यर्थः । नेत्यादिभाष्यं व्याचष्टे ॥ **यदुक्तमिति** ॥ **इति सूत्रांशमिति** ॥ सूत्रे तदित्यस्य प्रकृतशुक्परत्वमिति दर्शितम् । आङर्थोऽग्रे स्पष्टयिष्यते ।

भाष्ये शुगस्य तदिति पदत्रयस्यार्थाद्व्याख्यानं मत्वाऽऽह ॥ **इति सूत्रांशं व्याचष्ट इति** ॥ अयि भल्लक्ष जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसाङ्क्षीः तत्त्वा मा

(भावदीपः)

प्रधाक्षीरित्येकेन हंसेनोक्तोऽन्यो हंसः प्रतिवक्ति कम्वर इति । तदर्थम् अरे हंसेति सूत्रे अस्यानादरेति षष्ठ्याः क्रियाकर्तृभावसम्बन्धलब्धार्थमाह ॥ **हंसकृतेति** ॥ शेषमाह ॥ **अस्येत्यादि** ॥ पूर्वत्र सूत्रे काप्यप्रकृतत्वात् तदित्यस्य कथं हंसकृतेति व्याख्येन्यत आह ॥ **तदितीति** ॥ तदनादरेति सूत्रे तदिति तच्छब्देन व्याख्येयश्रुतिगतहंसपरामर्श इत्यर्थः । कारणस्य समग्रस्येत्यर्थः । इह च शोके सति न कार्यमुपलभ्यत इति भावः । हिशब्दो हेताविति मत्वाऽऽह ॥ **अत इति** ॥ व्यग्रताख्यकार्यलिङ्गदर्शनेन शोकस्य ज्ञापितत्वात् अनादरश्रवणात्कारणादित्यर्थः ॥ **तदुक्तमिति** ॥ छान्दोग्यभाष्योक्तपाद्यस्मृतावुक्तमित्यर्थः । शोकाच्छोकेन आद्रवणादित्यर्थः । तथा च शुगुपपदात् द्रुगताविति धातोः डप्रत्यये गकारस्य, दकारे रूपमित्यर्थः । तर्हि श्रुतौ शुद्रेति वक्तव्ये उकारस्य दीर्घेण शूद्रेति किमर्थमुक्तम् । सूत्रे च तद्द्रवणादित्येवपूर्तौ तदाद्रवणादित्याङ्प्रयोगश्च किमर्थम् इत्यत आह ॥ **दीर्घेति** ॥ दीर्घो यः स्वरः शूद्र इत्यत्र ऊकाररूपो वर्णः । अचः स्वरा इति शिक्षाग्रन्थेऽजक्षराणां स्वरत्वोक्तेः । तस्य योऽर्थः शोकाधिक्यरूपोऽर्थः तदर्थत्वेन तद्व्यक्त्यर्थत्वेन सूत्रे तदाद्रवणादित्युक्तमित्यर्थः । ''संहितायां (यत्र) तत्र दैर्घ्यं पदे यत्र न विद्यते । उक्तार्थस्य महाधिक्यं श्रुतेस्तत्र विवक्षितम् इत्याद्यैतरेयभाष्योक्तेः ॥ **रुद्र इतिवदिति** ॥ यथा रुजं द्रावयते यस्माद्रुद्रस्तस्माज्जनार्दन इति निरुक्तत्वात् गकारस्य दत्वेन रुद्र इति रूपं तथेत्यर्थः ॥

## अभिनवचन्द्रिका

**वेदोक्तेति** ॥ वेदोत्पादितब्रह्मज्ञानाधिकारनिरासादित्यर्थः । एतेन वेदोक्तस्यैव ब्रह्मणः तत्रोक्तत्वात् तस्य ज्ञाने शूद्राणामप्यधिकारसद्भावेन वेदाधिकारनिरासादित्येव वक्तव्यम्, न तु वेदोक्तब्रह्मज्ञानाधिकारनिरासादिति वक्तव्यमिति परास्तम् । भाष्यसूचिते श्रुत्यधिकरणसङ्गती विवृणोति – **वेदविद्यास्विति** ॥ पूर्वाधिकरणश्रुतिभ्यामस्याधिकरणस्य प्रासङ्गिकी सङ्गतिरिति भावः । स्मृतस्य उपेक्षानर्हत्वं प्रसङ्गः । शूद्राधिकारस्य स्मृत्युपपादनाय वेदविद्यासु मनुष्याधिकारत्वादित्याद्युक्तम् । तस्योपेक्षानर्हत्वद्योतनायाह – **स च वेद विद्याधिकारो यदीत्यादिना** ॥ **इदमुक्तं भवति** ॥ 'मनुष्याधिकारत्वात्' इति सूत्रे मनुष्याणामधिकार उक्तः । श्रुतौ चाङ्गुष्ठाभिधानेन मनुष्याधिकारोऽभिमतः । तद्दर्शने शूद्रा अपि स्मृता भवन्ति । तत्र सन्देह उपजायते । किमेते अधिकारिणः, उतानधिकारिण इति । न चासौ शूद्राधिकार उपेक्षार्ह इति

(अभिनवचन्द्रिका)

अवश्यं निर्णेतव्यः । ततश्च शूद्राधिकारः विचारस्य प्रासङ्गिकी सङ्गतिरिति । अवश्यं चैतदेवं विज्ञेयम् । टीकाकृता पूर्वपक्षावसाने पूर्वपक्षफलत्वेन प्रत्यधिकरणवत् पूर्वाधिकरणाक्षेपानभिधानात्, पूर्वपक्षायोगाच्च । न हि 'मनुष्याधिकारत्वात्' इत्यनेन शूद्राधिकारोऽपि उक्त इति कल्पयित्वा तदाक्षेपाय पूर्वपक्षयिता शूद्राणामधिकारोऽस्तीति शक्यते वक्तुम् । तस्य कल्पितप्रमेयाविरोधित्वात् नास्त्यधिकार इत्येव पूर्वपक्षः कर्तव्यः । न च तत् सम्भवति । तस्य सिद्धान्तत्वात् । प्रसङ्गसङ्गत्याऽधिकरणारम्भे तु न पूर्वपक्षाऽयोगः । नापि 'मनुष्याधिकारत्वात्' इत्यनेन शूद्राधिकार उक्त इत्यनुक्तोपालम्भः कर्तव्यो भवति । एतेन स च विद्याधिकारो यदि शूद्रादीनां स्यात् तदा श्रुत्यादिविरोधादसौ निषेध्य एवेत्ययुक्तम् । श्रुत्यादिविरोधादेव शूद्राधिकारस्य परित्यागसम्भवेन निषेधवैयर्थ्यादिति परास्तम् । आक्षेपपरिहारः सङ्गतिरिति मन्वानः शङ्कते – **न चेति** ॥ नाऽस्माभिराक्षेपपरिहारः सङ्गतित्वेनोक्तः । येनोक्ते विरोधाभावोऽसङ्गतिसाधकः स्यात् । किंनाम प्रासङ्गिकी सङ्गतिरिति भावेनाह – **स्वन्यायेनेति** ॥ 'स्वन्यायेन' इत्यतः परं 'स्मारिते शूद्राधिकार' इति शेषः । ततश्चैवं योजना । स्वन्यायेन 'मनुष्याधिकारत्वात्' इति पूर्वसूत्रेण स्मारिते शूद्राधिकारे श्रुत्यादि विरोधसद्भावात् प्रसङ्गसङ्गतिरिति । नन्वाक्षेपपरिहारसङ्गतिरेव भाष्यकृता विवक्षिता किं न स्यादित्यत आह– **स एव हि इति** ॥ भवेदेवाक्षेपपरिहारसङ्गतिः, यदि प्राक् शूद्राधिकार उक्तः स्यात् । उक्तस्यापि तत्र प्राप्तविरोधपरिहारेण समर्थनं स्यात् । न च प्राक् स उक्तः । नापीदानीं तत्समर्थ्यत इति नाक्षेपपरिहारसङ्गतिर्विवक्षितेति ज्ञायत इति भावः । **अदर्शनमिति** ॥ लोके अदर्शनमित्यर्थः । **मनुष्याणामधिकारस्योक्तत्वादिति** ॥ नन्विदमयुक्तम् । सूत्रकारोक्तप्रमेयदूषणाय प्रवृत्तेन पूर्वपक्षिणा स्वाभिमतप्रमेयसिद्धये सूत्रकारवचनस्यैव प्रमाणत्वेनोदाहरणायोगादिति चेत् ।

जयतीर्थमुनिं नत्वा ध्यात्वा तच्चरणाम्बुजम् ।
टीकाभावं प्रवक्ष्यामि यथाशक्ति यथाश्रुतम् ॥

न ब्रूमो वयमिदमधिकरणं स्वातन्त्र्येणाऽधिकरणान्तरवत् प्रमेयप्रतिपादनाय प्रवृत्तमिति । किं तर्हि स्वोक्त्यर्थाऽपरिज्ञानप्राप्तस्वशिष्यान् यथाप्रतिपन्नमेव पूर्वपक्षं विधाय तन्निराकरणद्वारा मनुष्याधिकारत्वादिति स्वाभिप्रायमेव विवरीतुं शिष्यहितैषिणा इदमधिकरणं प्रणीतमिति । ननु 'हृद्यपेक्षया त्रिवर्णाधिकारत्वात्' इत्येवं किं नोक्तं, तथा सति शिष्यस्य शूद्राधिकारभ्रमाभावेन

(अभिनवचन्द्रिका)

तत्परिहाराय स्वाभिप्रायाविष्करणार्थमस्याधिकरणस्याकर्तव्यत्वेन लाघवादिति चेत्, न 'त्रिवर्णाधिकारत्वात्' इत्युक्तेऽपि शूद्रस्यापि पौत्रायणस्य वैदिकसंसर्गविद्याऽध्ययनदर्शनात्, 'त्रिवर्णाधिकार' इत्यनुपपन्नमित्याशङ्कानिवृत्तयेऽस्याधिकरणस्यावश्यकत्वेन लाघवाभावात् । विशिष्टबुद्धिमत्त्वस्यैवाऽधिकारप्रयोजकत्वेन तस्य च 'मनोर्जातावञ्यतौ षुक् च' इति अवबोधार्थकमनुधातुप्रकृतिकमनुशब्दनिष्पन्नमनुष्यपदेन सूचनसम्भवेन मनुष्याधिकारत्वादित्येव वक्तव्यत्वाच्च । **द्विजातिभ्यो विशेषाभावादिति** ॥ नन्वत्र शूद्रेभ्यो द्विजातीनां विशेषाभावादिति वा द्विजातिभ्यः शूद्राणां साम्यादिति वा वक्तव्यं, न तु शूद्रस्य द्विजातिभ्यो विशेषाभावादिति । यदा मनुष्यत्वमात्रं द्विजातीनामधिकारापादकम्, सुतरां तेभ्योऽतिशयितमनुष्यत्वमधिकारापादकमिति अधिकारविरोधित्वाभावेन तन्निषेधस्य व्यर्थत्वादिति चेत्, मैवम् । भावानवबोधात् । न ह्यत्र शूद्रस्य मनुष्यत्वे विशेषो निषिध्यते । येनोक्तदोषः स्यात् । किं तर्हि द्विजातिभ्यः साम्यमेवोच्यते । इयमत्र योजना । शूद्रस्य मनुष्यत्वे प्राप्तव्ये द्विजातिभ्यो विशेषाभावात्, यथा द्विजातीनां स्वभावत एव मनुष्यत्वं, तथा शूद्रस्यापि इति यावत् ।

इदमुक्तं भवति । भवेत् शूद्राणामनधिकारः, यदि अधिकारप्रयोजकं मनुष्यत्वं द्विजातीनां स्वाभाविकम् । विश्वामित्रस्य ब्राह्मण्यमिव शूद्रस्यास्वाभाविकं भवेत् । न चैवं, किंनामोभयोरपि स्वाभाविकम् । ततश्च शूद्रस्याधिकारोऽवर्जनीय इति ॥ **विशिष्टबुध्यादिमत्त्वेऽपीति** ॥ यावता प्रयत्नेन द्विजातीनां विशिष्टबुध्यादिमत्त्वं तावतैव शूद्रस्यापीति साम्यमिति भावः । 'मनुष्याधिकारादित्युक्तेऽविशेषात्' इति भाष्यं व्याचष्टे – **इत्युक्त इतीति** ॥ हार इत्वेति पदद्वयमभिप्रेत्य हार इत्येतद्व्याचष्टे – **हारो रथश्चेति** ॥ हार इत्वेति पदद्वयाभिधानमयुक्तं, हारेत्वेति सन्ध्यभावप्रसङ्गात् इत्यत आह– **हारेत्वेति । सेदुराजेत्यादिवदिति** ॥ **विसर्गलोपेन** विसर्गस्य मूलप्रकृतिसुलोपेन, सेदुराजेत्यादिवत् हारेत्विति संहिता सिद्धिर्भवतीत्यर्थः । 'सोचि लोपे चेत्पादपूरण' इति सूत्रे अपादपूरणेऽपि छान्दसहारशब्दस्य सुलोपो भवतीति वक्तव्यमिति भावः । एतेन सेदुराजेत्यत्र विसर्गलोपाभावात् विसर्गलोपेनेत्ययुक्तमिति परास्तम् । यद्वा हारेत्वेत्येकं पदम् । द्विवचनस्य 'सुपां सुलुक्' इति एदादेश इति भावेनाह– **हारेत्वानाविति वेति** ॥ तथा सति अस्त्विति एकवचनांतेनाऽन्वयाऽनुपपत्तिरित्यत आह– **तथात्व इति** ॥ तथात्वेऽपि एकपदत्वेऽपि बुध्या विवेकेन पृथगन्वय इत्यर्थः । ननु पूर्वसूत्रे

(अभिनवचन्द्रिका)
हंसस्याप्रकृतत्वात् तदनादरश्रवणादिति तच्छब्देन हंसपरामर्शो न युक्त इत्यत आह– तदिति ॥ **श्रुत्युक्तपरामर्शेति** ॥ परबुद्धेरप्रत्यक्षत्वादिति ॥

यद्यपि सुखदुःखादीनां ज्ञातैकसत्त्वात् तदनुभव एवास्ति, तथापि तस्य परकीयत्वात् अस्मदादीन् प्रति **अप्रत्यक्षत्वम्** अर्थाऽसाधकत्वमित्यर्थः । एतेन दुःखस्य अप्रामाणिकत्व-व्युत्पादनाय दुःखस्य अप्रत्यक्षत्वादिति वक्तव्ये बुद्धेरप्रत्यक्षत्वादिति परास्तम् । अस्तु तर्हि अनुमानं शोकोत्पत्तिज्ञापकमित्यत आह– **कारणस्य चेति** ॥ शब्दाधिक्येऽर्थाधिक्यमिति न्यायात्, श्रुतौ शूद्र इति दीर्घोच्चारणस्य प्रयोजनम् आङा उक्तमित्याह– **दीर्घस्वरार्थत्वेन आद्रवणादित्युक्तमिति** ॥ नन्वत्र गकारलोपो न सम्भवति । विधायकाभावादित्यत आह– **शूद्र इति** ॥ 'रुजं द्रावयते यस्मात्' इति स्मृतौ रुग्द्र इति वक्तव्ये रुद्र इति यथा, तथैवेत्यर्थः ।

## वाक्यार्थमुक्तावली

**वेदोक्तेति** । अत्र विद्यापदेन ज्ञानविवक्षायां वेदोक्तेति तदुत्पादितेत्यर्थः । मध्वादि-विद्याविवक्षायां तदुदितेत्यर्थः । श्रुत्यादीति विशिष्टबुध्यादिमत्वेन देवानामधिकारश्चेत्तर्हि तेनैव न्यायेन शूद्राणामपि स्यादिति पूर्वपक्षोत्थानादनन्तरसङ्गतिः । शूद्रस्याप्यधिकारशब्दः त्रैवर्णिकशूद्रस्यापीति समुच्चायकः । अनौचित्यद्योतकश्च । अत एव श्रुत्यादिविरोधादित्युक्तम् ॥ **न चोक्ते विरोधाभावादिति** ॥ मनुष्याणामधिकारदित्युक्तम् । न तु सर्वेषां मनुष्याणामिति । तथा च शूद्राधिकारस्य श्रुत्यादिविरुद्धत्वेऽपि मनुष्याणामधिकारोक्त्या एवंविधप्रमाणाभावाद-सङ्गतिरिति न वाच्यमित्यर्थः ॥ **स्वन्यायेनेति** ॥ मनुष्यसामान्येन अधिकरणस्य श्रवणे त्रपुजतृभ्याम् शूद्राधिकारनिषेधकश्रुत्यादिना साक्षाद्विरोधाभावेऽपि न्यायसाम्येन विरोधप्राप्ति-रित्यर्थः विशिष्टबुध्यादिलक्षणाधिकारप्रयोजनवत्सु शूद्रेष्वधिकारं निषेधन्ती श्रुतिः मनुष्य-मात्रेऽपि तन्निषेधत्येव । अधिकारप्रयोजनत्वेनाभिमतस्य शूद्रेऽप्यधिकाराभावप्रतिपदानेनान्वय-व्यभिचारप्रतिपादनेनान्वयव्यभिचारप्रदर्शनेन विशिष्टबुध्यादिमत्वस्याधिकारप्रयोजकत्वस्य सिद्ध्या तद्वत्वेऽपि कस्यापि मनुष्यस्य नाधिकार इति प्राप्तेरिति भावः । तथाप्युक्ते साक्षा-च्छ्रुत्यादिविरोधाभावादसङ्गतिरित्यत आह ॥ **स एवेति** ॥ उक्ते साक्षाच्छ्रुतिविरोध एव विरोध इति न नियमः । किन्तु उक्तं श्रुत्यनुग्रहीतेन प्रमाणेन बाधितमिति यत्स एवेत्यर्थः ।

(तात्पर्यमुक्तावली)

भावबोधे तु स्वन्यायेनेत्यस्य मनुष्यत्वाङ्गुष्ठवत्वन्यायेन प्राप्तस्य शूद्राधिकारस्य श्रुत्यादि-विरोधप्राप्तेरित्यर्थः । न्यायप्राप्तेः श्रुत्यादिविरोधेत्युक्त विरोधाभावशङ्का न परिहृतेत्यत आह ॥ **स एवेति** ॥ उक्तमनुष्यत्वाङ्गुष्ठवत्वादेः अधिकारोपयोगित्वं श्रुत्यादिबाधितं श्रुत्यादिविरुद्धाधि-कारे शूद्रादौ विद्यमानत्वादिति भावः । चन्द्रिकायान्तु शूद्राधिकारे पूर्वपक्षिणा चोदिते उक्त मनुष्याधिकारविरोधो न । शूद्रस्यापि मनुष्यत्वात् । तथा तदाक्षेपासम्भवात् विपुलं विचार इति न वाच्यम् । शूद्रस्याधिकारे अह हारे त्वा शूद्रेत्यादिसत्ववदनाधिकारेऽपि तद्भावेन पूर्व-पक्ष्युक्तन्यायेन शूद्राधिकारस्य श्रुत्यादिविरोधे सामान्योक्तेः शूद्रेतरपरतया न विरोध इति साफल्यमिति नासङ्गतिरिति व्याख्यातम् । शूद्रस्य वेदाधिकारोऽस्ति न वेति चिन्ता तदर्थं संसर्गविद्याधिकारिणि पौत्रायणे श्रुतः शूद्रशब्दो रूढः उत यौगिक इति । तदर्थं रूढिबाधक-तयोक्तं रथित्वलिङ्गं शूद्रे सावकाशं न वेति । रथित्वव्यापकतयोक्तवेदाध्ययनप्रयोजकोप-नयनादिसंस्कारः शूद्रस्य युक्तः यत तदभावाभिलापाद्युक्त इति । तदर्थं न संस्कारः शूद्रस्येति श्रौतः तदभावाभिलापः संस्कारयोग्यत्वेऽप्यभावोक्तिमात्र उत नैतदब्राह्मणो विवक्तुमर्हतीति श्रुत्युक्तदिशा सत्यकामस्य ब्राह्मणशब्दित वेदाधिकारे त्रैवर्णिकेतरत्वाभावनिश्चयानन्तर-मेवोपनार्यगौतम प्रवृत्युक्त्यावगमात् । संस्कारयोग्यतानिमित्त इति तदर्थ ब्राह्मण शब्दित वेदाध्ययनयोग्यता किं विशिष्टबुध्यादिमत्वमात्ररूपोत विशिष्टबुध्यादिमतामपि शूद्रादीनां वेदाधिकारनिषेधेनानिषिध्यत्वे सति विशिष्टबुद्धादिमत्वरूपेति शूद्रस्य वेदविचारेति सामग्रीसत्वे कार्याभावस्यायोगात् । प्रतिबन्धदर्शनादधिकाराभावनिश्चयः इति भावः । पौत्रायणोक्तेरित्यस्य शूद्रेणापि पौत्रायणेन च संवर्गविद्योक्तेरध्ययनादित्यर्थमभिप्रेत्यावतार्य व्याचष्टे ॥ **न चेत्या-दिना** ॥ पौत्रायणं प्रति शूद्रेति सम्बोधनोक्तिरित्यभिप्रेत्यावतार्य व्याचष्टे ॥ **तस्य शूद्रत्व-मेवेत्यादिना** ॥ पौत्रायणं प्रति रैक्वेण विद्योक्तेरित्यर्थान्तरं वक्तुमाह ॥ **न चाधिकारेति** ॥ **गवाद्याशयेति** ॥ अत एव तवैव सह गोभिरस्त्वित्यधिकांशः पठितो ज्ञेयः ॥ **अत इति** ॥ मनुष्यत्वादिविशिष्टबुध्यादिमत्वाच्चेत्युक्तयुक्त्या मुनेरन्यायप्रवृत्तिविरहिणोऽपि शूद्रं पौत्रायणं प्रति वैदिकसंसर्गविद्योपदेशलिङ्गदर्शनेन चेत्यर्थः । उक्त इति भाष्यस्योक्तत्वादिति स्वकृतं व्याख्यानमुपपादयति ॥ **सप्तमीति** ॥ अस्त्वित्येकवचनान्वयसिद्ध्ये हारो रथश्चेति पृथगन्वयः कृतः । तर्हि हार इति स्यान्न तु हारेत्वेति गुण इत्यत आह ॥ **हारेत्वेतीति** ॥ यथा सः ईत् राजेत्यत्र विसर्गलोपेन सेदिति गुणः तथा हारेत्वेत्यत्रापि गुण इत्यर्थः ।

(वाक्यार्थमुक्तावली)

यद्वा हारेत्वेत्येकं पदं व्यत्ययेन द्विवचनस्यैकवचनमिति भावेनाह ॥ **हारेत्वानाविति वेति** ॥ तर्ह्यस्त्वित्येकवचनानन्वय इत्यत आह ॥ **तथात्व इति** ॥ द्विवचनत्वपक्षे बुध्या विवेकेन हारो रथश्चास्त्विति पृथगन्वय इत्यर्थः ॥ **यदुक्तमिति** ॥ युक्तेः प्रथममुपन्यस्तत्वेऽपि तदुपोद्बलकलिङ्गादर्शनस्य निरासरूपेण वहुवक्तव्यत्वाद्वक्ष्माणरीत्या मुक्तेरेतच्छेषत्वाच्चेति ज्ञेयम् ॥ **सूत्रांशमिति** ॥ अत एव च नित्यत्वमित्यत एवेत्यनुवर्तते । अर्थात् शूद्रेति सम्बोधित इत्यन्वेति ॥ **अस्येत्ययमिति** ॥ विपरिणम्यते तदिति प्रकृतशुक्परः तथाचायं शुचाद्रवणात् प्रवृत्तिनिमित्तादेव शूद्रेति सम्बोधितो न तु रूढ्या वर्णावरत्वाभिप्रायेणेति भावेन तदा द्रवणा-दिति सूत्रांशं व्याचष्टे इत्यर्थः । शुगस्य तदनादरश्रवणादिति सूत्रांशमिति भाष्ये श्रुतीत्य-ध्याहारेण श्रुत्यादिसूत्रांशव्याख्यानं बोध्यम् । हो हो अयि भल्लाक्ष भल्लाक्ष जानश्रुतः पौत्रायणस्य समं दिवा ज्योतिराततम् । तन्मा प्रसाक्षीः तत्वा मा प्रधासीरित्येकेन हंसेनोक्ते अन्यो हंसः प्रतिवक्ति कं वर इति तदर्थमाह ॥ **अरे हंसेति** ॥ सूत्रे तदनादरेत्यत्र मध्यम-पदलोपी समासः । **तस्यानादरेति** षष्ठ्याः क्रियाकर्तृभावसम्बन्धं वा सूचितमाह ॥ **हंस-कृतेति** । श्रुत्युक्तेति व्याख्येयतया बुद्धिस्थश्रुतिगतहंसपरामर्श इत्यर्थः । कारणस्य चेति कारणैकदेशस्य वा समग्रस्यापि प्रतिबन्धाद्वेति भावः ॥ **इत्युक्तत्व्यग्रतयेति** ॥ इति सूचित-राजचित्तक्षोभेनेत्यर्थः । हि शब्दार्थं वदन् समग्रसूत्रार्थमाह ॥ **अत इत्यादिना** ॥ हि यतो यस्य शुक् सूच्यते । ज्ञाप्यते शोकस्य प्रामाणिकत्वात् हंसकृत अनादरश्रवणात् कारणादस्य पौत्रायणस्य शुगासीत्तया चाद्रवणादेव प्रवृत्तिनिमित्तादयं शूद्रेति सम्बोधितो न तु रूढ्येति सूत्रार्थ इति भावः । मुनेरिति व्यग्रवचनस्य तेनाश्रुतत्वादिति भावः । स्मृतौ शोकादित्यस्य शोकेनाद्रवणादित्यर्थः ।

ननु सूत्रे तद्रवणादित्येव पूर्तौ तदाद्रवणादित्येव आङ्प्रयोगः किमर्थः इत्यत आह ॥ **दीर्घस्वरार्थत्वेनेति** ॥ शुगुपपदाद्धृगताविति धातोः 'उ' प्रत्यये 'ग'कारस्य 'द'कारे श्रुतौ शूद्रेति वक्तव्ये दीर्घो यः स्वरः 'ऊ'काररूपो वर्णः तस्य योऽर्थः आधिक्ये अधिकमिति शोकाधिक्यरूपो अर्थः । तदर्थत्वेन तद्व्यक्त्यर्थत्वेनाद्रवणादित्युक्तमित्यर्थः । शीघ्रगमनस्य शोकाधिक्यनिमित्तकत्वादिति भावः ।

ननु श्रुतौ शूद्र इति शुगुपपदाद्द्गताविति धातोः निष्पन्नत्वेन शुक्द्र इति भाव्यं इत्यत आह

(वाक्यार्थमुक्तावली)
॥ **शूद्र एवेति** ॥ यथा रुक्द्रावणकर्तृत्वेन रुक्द्र इति भाव्येऽपि 'ग'कारस्य 'द'कारेण रुद्र इति निष्पन्नमेवं प्रकृतेऽपीत्यर्थः ।

## तत्त्वसुबोधिनी

**वेदोक्तेति** ॥ शूद्राणामपि तन्त्रोक्तब्रह्मविद्यायामधिकारात् वेदोक्तेत्युक्तम् । अत्र पूर्वाधिकरणसिद्धान्तरीत्या पूर्वपक्षोत्थानादनन्तरसङ्गतिः ॥ **न चोक्ते विरोधाभावादसङ्गतिरिति** ॥ शूद्राणां वेदविद्याधिकारेऽपि श्रुत्यादिविरोधेऽपि मनुष्यादिकारत्वादित्यनेनोक्ते मनुष्याधिकारे श्रुत्यादिविरोधो नास्ति । त्रिवर्णमनुष्याणां वेदविद्याधिकारस्य श्रुतत्वात् । तथा च यत्र श्रुत्यादिविरोधः शूद्रादिवेदविद्याधिकारे न स पूर्वाधिकरणे उक्तः यस्तत्रोक्तो मनुष्याणामधिकारो न तत्र श्रुत्यादिविरोध इति न पूर्वाधिकरणेन अस्य सङ्गतिरिति न वाच्यमित्यर्थः ॥ **स्वन्यायेन श्रुत्यादिविरोधप्राप्तेरिति** ॥ वेदविद्यासु मनुष्याणामधिकृतत्वात् तेषां चाङ्गुष्ठसद्भावाच्च युक्तं तान्प्रति विष्णोरङ्गुष्ठमात्रत्वाभिधानमित्याद्युक्तन्यायेन शूद्राणां मनुष्यत्वादङ्गुष्ठमात्रत्वाच्च प्राप्ते वेदविद्याधिकारे श्रुत्यादिविरोधप्राप्तेरित्यर्थः । ननु न्यायप्राप्ते श्रुत्यादिविरोधेऽपि उक्ते विरोधाभावशङ्का न परिहृतेत्यत आह ॥ **स एव हीति** ॥ उक्तं मनुष्यत्वादेरधिकारोपयोगित्वं श्रुत्यादिबाधितं श्रुत्यादिविरुद्धाधिकारे शूद्रादौ विद्यमानत्वादिति भावः । पूर्वमविशेषादित्येतन्मनुष्यत्वे विशेषाभावादिति व्याख्याय शङ्कान्तरपरिहारकत्वेन प्रकारान्तरेण व्याचष्टे ॥ **विशिष्टेति** ॥ शुद्धस्यापि विशिष्टबुद्ध्यादिमत्वेन विशेषाभावादिति भावः । पौत्रायणं प्रतीति अहहारेत्वेति वचनस्य पौत्रायणवक्तृत्वाभावेन पौत्रायणस्योक्तेरिति षष्ठीतत्पुरुषासम्भवादिति भावः । **अनधिकारिणं प्रतीति** ॥ अनेन पौत्रायणोक्तेरित्यस्य पौत्रायणं प्रति रैक्वस्य उपदेशादित्यपि व्याख्यानं सूचितं भवति ।

ननु गवाद्याशया मुनिना उपदेशः कृतः किं न स्यादित्यत आह ॥ **न हीति** ॥ **युक्त्या लिङ्गदर्शनेन चेति** ॥ युक्तिः मनुष्यत्वादिरूपा लिङ्गन्तु पौत्रायणस्य शूद्रेति सम्बोधितस्य वैदिकसंसर्गविद्याविचाररूपम् । मनुष्याधिकारत्वादित्युक्ते इति भाष्यस्य मनुष्याधिकारस्य उक्तत्वादिति स्वकृतं व्याख्यानमुपपादयति ॥ **उक्त इति** ॥ **सप्तमी पञ्चम्यर्थ इति** ॥ **सेदुराजेत्यादिवदिति** ॥ यथा सेदित्यत्र छान्दसेन विसर्गलोपेन सेदितिगुणः तथा हार

(तत्त्वसुबोधिनी)
इत्वेत्यत्रापि हारेत्वेति गुण इत्यर्थः । यद्वा हारेत्वेत्येकं पदम् । व्यत्ययेन द्विवचनस्यैक-वचनमित्याह ॥ **हारेत्वानाविति** ॥ **त्वाशुचाद्रवणादेवेति** ॥ अनेन सूत्रे तदनादरेत्यत्र मध्यमपदलोपी समास इत्युक्तं भवति । ननु तदनादरेत्यत्र तच्छब्देन कस्य परामर्शः इत्यत आह ॥ **तदिति श्रुत्युक्तेति** ॥ श्रुत्युक्तहंसेत्यर्थः । नन्वयं शोकेनागत इति मुनिना कथं ज्ञायते इत्यत आह ॥ **शोकेनेति** ॥ स्मृतौ शोकादित्यस्य शोकेनाद्रवणादित्यर्थः । ननु सूत्रे आद्रवणादिति किमर्थमुक्तं द्रवणादित्येव किं नोक्तम् इत्यत आह ॥ **दीर्घस्वरार्थत्वेनाद्रवणा-दित्युक्तमिति** । 'संहितायां च यत्र दैर्घ्यं पदे यत्र न विद्यते । उक्तार्थस्य महाधिक्यं श्रुतेस्तत्र विवक्षितम्' इत्यादिवचनैः श्रुतौ शूद्र इति दीर्घस्वरः शोकाधिक्यज्ञापनार्थमिति सूचयितुं सूत्रे आद्रवणादित्युक्तमित्यर्थः । शीघ्रागमनस्य शोकाधिक्यनिमित्तकत्वादिति भावः । ननु शुग्द्र इति भवेत् शूद्र इति कथमित्यत आह– **शुग्द्र एवेति** ॥ रुजं द्रावयत इत्यादि स्मृतेरुक् द्रावणकर्तृत्वेन रुग्द्र इति भवितव्ये रुद्र इति यथा तथैवेत्यर्थः ।

## वाक्यार्थमञ्जरी

इत्युक्तहृद्यपेक्षयेत्यत्र ॥ **श्रुत्यादिति** ॥ श्रवणे त्रपुजतुभ्यामित्यादि वक्ष्यमाणश्रुत्या-दीत्यर्थः ॥ न चोक्तेति शूद्रस्यानधिकारेऽपि उक्तेऽधिकारे विरोधो नास्ति शूद्रस्यापि मनुष्यत्वात्तथाचोक्तानाक्षेपादफलोऽयं विचार इति न वाच्यमित्यर्थः ॥ **स्वन्यायेनेति** ॥ मनुष्यत्वविशिष्टबुध्यादिमत्वरूपपूर्वोक्तसूत्रकारीयन्यायेन शूद्रस्याप्यधिकारप्राप्तौ वक्ष्यमाणश्रुति-स्मृतियुक्तिविरोध प्राप्तेरित्यर्थः । शूद्रस्यानधिकारोक्तौ प्राक्तनसामान्योक्तिः शूद्रेतरमनुष्यपरा स्यादिति भावः । अदर्शनं शूद्राणां वेदविचारस्य ॥ **पौत्रायणस्येति** ॥ पुत्रायणस्य गोत्रापत्यं पौत्रायणस्तस्य जानश्रुतिनामकराज्ञ इत्यर्थः ॥ **संवर्गविद्येति** ॥ संवृक्तेसंहरत्यग्न्यादिदेवानिति संवर्गो वायुस्तद्विद्यामित्यर्थः ॥ **दर्शनादिति** ॥ वायुर्वाव संवर्गो यदा वाग्निरुद्वापयति वायुमेवाप्येतीत्यादिनेति शेषः ।

अत्रेदं बोध्यम् अत्युच्चप्रासादस्थे बहुदीपप्रभावति भवने निशायां पौत्रायणे शयाने सति तदानीमेव देवहंसा अन्तरिक्षमार्गेण तद्भवनोर्ध्वप्रदेशमाजग्मुः । तत्रैको हंसः पुरो गतः तं प्रति पश्चात्तनहंस उवाच । परमधार्मिकस्य पौत्रायणस्य प्रदीपज्योतिरतिक्रम्यगमनेन सत्वां दहेदिति । ततस्तं प्रत्यग्रगामी हंस उवाच । किमुच्यते तस्य राज्ञो माहात्म्यमेतदपेक्षयोत्तमरैक्वमुनेः

(वाक्यार्थमञ्जरी)

सद्भावात् । अत एवं वक्तुं अयोग्य इति ततस्तद्धंसकृतानादरश्रवणेन परितप्तमना: पौत्रायण: प्रातस्तल्पादुत्थित एव सारथिमुखेन रैकस्थानं निश्चिततत्वबुभुत्सुर्गवादिगुरुदक्षिणां गृहीत्वा शकटाधोभागनिवासिरैकसमीपमुपेत्य तं सम्बोध्य दक्षिणां निवेद्य मह्यं विद्यां देहीत्युवाच । ततो रैको मम विरक्तस्य न गवादिना कृत्यं मम शुश्रूषणाय ब्रह्मचार्येवापेक्षित: । कोपेनेदं गवादिकं तवैवास्त्वित्युवाच । ततो राजा तदपेक्षितं परिचारकं कल्पयित्वा रैकाद्वायुविद्यामवापेति । अनधिकाराज्ञानपरिहाराय मुनेरित्युक्तम् । गोधनाद्याशयोपदेशोऽस्त्वित्यत आह ।। **न हीति** ।। युक्त्या **लिङ्गदर्शनेन चेति** ।। युक्तिर्मनुष्यत्वादिरूपा लिङ्गं पौत्रायणस्य शूद्रेतिसम्बोधितस्य वैदिकं संवर्गविद्याविचाररूपं मनुष्याधिकारित्वादित्युक्त इति भाष्यस्य मनुष्याणामधिकार-स्योक्तत्वादिति । स्वकृतव्याख्यानमुपपादयति ।। **उक्तेति** ।। **सप्तमीपञ्चम्यर्थ इति** ।। मनुष्यत्वेऽपीत्यादिव्याख्यानं चोपपादयति ।। **अधिकारोपयोगितयेति** ।। श्रुतिं व्याचष्टे ।। **अहेतीति** ।। अयमर्थ: तं पौत्रायणं प्रति परो लोकविलक्षण: परमविरक्त इति यावत् । मुनि: प्रत्युवाच किमिति अह शूद्र शोकेनाद्रवणवन्पौत्रायण हार: मुक्ताहार: इत्वा रथश्च गोभि: सह तवैवास्त्विति ।। **हेत्याश्चर्य इति** ।। ननु हार इत्वेत्यत्र विसर्गलोपे आद्गुण इति गुणं च हारेत्वेति भवति न चैतद्युक्तम् । 'वा शरि' 'शर्परे वा' विसर्गलोप इति शरि:परत:सत्येव विसर्गलोपाभिधानेन प्रकृतेशर्परत्वाभावादित्यत आह ।। **हारेत्विति** ।। **सेदुराजेत्यादिवदिति** ।। यथा स इत्यत्र शर्परत्वाभावेऽपि छान्दसेन विसर्गलोपेन सेदिति गुणस्तथा हार इत्वेत्यत्र हारेत्वेति गुण इत्यर्थ: । हारत्वेत्येकं पदमित्याशयेनाह ।। **हारेत्वानाविति** ।। व्यत्ययेन द्विवचनस्यैकवचनमिति भाव: । तर्ह्यस्त्वित्येकवचनस्य कथमन्वय इत्यत आह ।। **तथात्व इति** ।। द्वितीयव्याख्याने बुद्ध्या विविक्तयोर्द्वयो: प्रत्येकमस्त्वित्यनेनान्वय इत्यर्थ: ।। ॐ शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॐ ।। अत्रत्यतच्छब्दौ क्रमात् श्रुतिसूत्रस्थ हंसशुकपरामर्शकौ श्रुतौ पौत्रायणस्तया शुचा द्रवणान्निमित्तादेव मुनिना शूद्रेत्युक्तो न तु रूढ्या अतो न शूद्रस्याधिकार इदं लिङ्गमित्यर्थ: । शोके किं निमित्तमित्यत उक्तं **शुगस्य तदनादरश्रवणादिति** ।। कम्वर एनमित्यादिना हंसकृतानादरश्रवणात्कारणादस्य पौत्रायणस्य शुगित्यर्थ: । कथं ज्ञायते शुगस्य ज्ञातेत्यत उक्तम् ।। **सूच्यते हीति** ।। हि यस्मात्सह संजिहान एव क्षत्तारमुवाचेति व्यग्रत्वोक्त्या सूच्यतेऽत: शुगस्य ज्ञायत इत्यर्थ: ।। **शूद्रशब्दप्रवृत्तीति** ।। पौत्रायण इति शेष: अनेन सम्बोधनेन ।। **अरे हंसेति** ।।

(वाक्यार्थमञ्जरी)

अयमर्थः ततस्तं पश्चात्तनं प्रति अग्रगामी हंस उवाच किमिति अरे हंस सन्तं निर्दुष्टं सयुग्वानं सशकटं शकटाधोभागे विद्यमानमिति यावत् । रैकं प्रतीव कमेनमुद्दिश्यैतद्वचनमात्थ वदसीति । अननुरूपमस्मिन्नुक्तम् । एवं वक्तुं रैक एव योग्य इति हंसस्य भावः । **श्रुत्युक्तेति** ॥ श्रुत्युक्तहंसेत्यर्थः । तेन नाप्रसक्तपरामर्शदोष इति भावः । ज्ञायते भवतां परबुद्धेः परकाय-शोकानुभवस्यानादरश्रवणरूपकारणेन नानुमीयत इत्यत आह ॥ **कारणस्य त्वेति** ॥ अविना-भावो व्याप्तिः । शयनीयात्तल्पात् क्षत्तारं सारथिम् ॥ **व्यग्रतयेति** ॥ यथोक्तं ततः सारथिमाहूय भूपालो विस्मयाश्रयः । सन्दिदेश महात्मा स रैक आनीयतामिति । तदुक्तं छान्दोग्यभाष्ये । शोकात् शोकेनाद्रवणात् अतः शोकमात्रस्य शूद्रशब्दप्रवृत्तिनिमित्तत्वाभावात्कथमेतदिति न शङ्क्यम् । यद्वा शोकेनातति गच्छतीति शोकात् अतसातत्यगमन इति धातोः । हेतुगर्भमेतत् अस्मान्मुनेः धारकत्वाद्धर्मो भगवान् ॥ **दीर्घस्वरार्थत्वेनेति** ॥ संहितायां यत्र दैर्घ्यं पदे यत्र न विद्यते । उक्तार्थस्य महाधिक्यं श्रुतेस्तत्र विवक्षितम् इत्यादिवचनात् श्रुतौ शूद्र इत्यत्र यो दीर्घस्वरः ऊकाररूपो वर्णः स शोकाधिक्यज्ञापनार्थ इति सूचयितुं सूत्रे आद्रवणादित्युक्तम् । शीघ्रगमनस्य शोकाधिक्यनिमित्तकत्वादित्यर्थः ।

ननु शुगुपपदात् द्रु द्रावण इति धातोर्डप्रत्यये शुग्द्र इति भवेत्कथं शूद्र इति तत्राह ॥ **शुग्द्र एवेति** ॥ रुजं द्रावयते यस्माद्रुद्रस्तस्माज्जनार्दन इत्यादिस्मृत्या रुज्द्रावणकर्तृत्वेन रुग्द्र इति भवितव्ये गकारलोपे रुद्र इति यथा तथैवेत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॐ ॥ ३५ ॥**

**अयमश्वतरीरथ इति चित्ररथसम्बन्धित्वेन लिङ्गेन पौत्रायणस्य क्षत्रियत्वावगतेश्च ।**

**'रथस्त्वश्वतरीयुक्तश्चित्र इत्यभिधीयत' । इति ब्रह्माण्डे (ब्राह्मे) ।**

**'यत्र वेदो रथस्तत्र न वेदो यत्र नो रथ' इति (च) ब्रह्मवैवर्ते ॥**

## सत्तर्कदीपावली

**ननु पद्मे पङ्कजशब्दनिरुक्तिवच्चतुर्थवर्ण एवायं किं न स्यादित्याशङ्क्य परिहारायोत्तर-**

(मतर्कदीपावली)

सूत्रमवतार्य व्याचष्टे ॥ **क्षत्रियत्वेत्यादिना** ॥ ध्रुवश्चित्ररथश्चरालीत्यादौ क्षत्रियस्य चित्ररथः प्रतीयते । न हि तथा विप्रवैश्ययोः क्वचित् । शूद्रस्य तु वेदाभावाद्रथ एव नास्ति कुतश्चित्ररथ इति भावः ।

## तत्त्वप्रदीपिका

क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ इतश्च न पौत्रायणश्शूद्रः । 'अयमश्वतरीरथः' इत्युक्त्वा स्वकीयस्य चित्ररथस्य रैक्वे निवेदनेन चित्ररथसम्बन्धित्वावगमात् । तेन लिङ्गेन क्षत्रियत्वावगमात् । अतो न शूद्रस्याधिकारः । गर्दभादश्वायां जाताः 'अश्वतर्यः' ।

## तत्त्वप्रकाशिका

ननु शूद्रशब्दोऽयं कुतो यौगिकोऽङ्गीक्रियते रूढार्थ एव किं न स्यात् । योगरूढ्यो रूढेरेव प्राबल्यात् । तथा च पौत्रायणनिदर्शनेन शूद्रस्य वेदविद्याधिकारसिद्धिरित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **क्षत्रियत्वेति** ॥ अयमश्वतरीरथ इति पौत्रायणस्याऽऽद्रवणाच्छूद्रशब्देन सम्बोधनाद्वोत्तरत्र चित्ररथसम्बधित्वलिङ्गं श्रूयते । तेन च लिङ्गेन तस्य क्षत्रियत्वमवगम्यते । अतो रूढेरेव प्राबल्येऽपि बाधकायोगाङ्गीकारो युक्त इति भावः । श्रुतावश्वतरीरथश्रवणात्कथं चित्ररथत्वमसूत्रयदित्यत आह ॥ **रथ इति** ॥ न च वाच्यं पौत्रायणेन दीयमानरथोऽत्रोच्यते न तु तस्य तदीयत्वमिति । बाधकाभावे तदीयत्वस्यैव प्राप्तत्वात् । ननु चित्ररथ(थि)त्वेऽपि पौत्रायणस्य वर्णावरत्वं किं न स्यादित्यत आह ॥ **यत्रेति** ॥ न च वर्णावरत्वे पौत्रायणस्य रथित्वं सम्भवति । रथस्य वेदाविनाभावाच्छूद्रे च वेदाभावादिति भावः । नन्वेवं वैदिकमात्रे विद्यमानं रथित्वं कथं क्षत्रियत्वे लिङ्गम् । क्षत्रियस्य स्वाभाविकत्वात् । अन्येषां कादाचित्कत्वात् । स्वाभाविकस्य नैमित्तिकादाधिक्यात् । अपलायनं च शूद्रस्य विप्ररक्षार्थमित्येतदपि पदातितयेति गमयितव्यम् ॥

## गुर्वर्थदीपिका

'तदादाय प्रतिचक्रमे' इति पौत्रायणस्य रैक्वं प्रत्याद्रवणादनन्तरमपि 'रैक्वेमानि षट्शतानि गवामयं निष्कोऽयमश्वतरीरथ' इति वाक्येऽश्वतरीरथ इति श्रूयते । 'अह हारेत्वा शूद्र' इति सम्बोधनादनन्तरमपि 'रैक्वेदं सहस्रं गवामयं निष्कोऽयमश्वतरीरथ इयं जाया' इति वाक्ये पुनरप्यश्वतरीरथः श्रूयते । अतष्टीकाकृता पौत्रायणस्याद्रवणात् शूद्रशब्देन सम्बोधनाद्वा

(गुर्वर्थदीपिका)

उत्तरत्रेत्युक्तम् । बाधकाभावादित्युपलक्षणम् । मनःक्लेशवशादतित्वरया रैक्वसमीपं गच्छतः पौत्रायणस्याभिनवरथकरणासम्भवात् प्रागेव स्वारोहाय कृतस्वगृहस्थितरथमेवाऽऽनीतवानिति युक्तेः । 'अह हारे त्वा शूद्र तवैव सह गोभिरस्तु' इति श्रुतौ इत्वा तवैवास्त्विति रैक्वेण तस्यैवाश्वतरीरथस्य तवैवेत्यवधारणपूर्वकमस्त्विति लोटा वाऽऽशीर्वादरूपतया पौत्रायणस्य दत्तत्वेन च तस्य तद्रथयोग्यतायाः स्पष्टमवगमाच्च । रथायोग्यत्वेऽयं रथस्तव माऽस्त्वित्यव-क्ष्यत् । न हि कोऽपि प्रेक्षावान् भिक्षोरयोग्यप्रमदां तवैवेयमस्त्विति दद्यादित्यप्यनुसन्धेयम् ।

## भाववोधः

**अयमश्वतरीरथ इतीति** ॥ इति चित्ररथसम्बन्धित्वं श्रूयत इति वक्ष्यमाणेनान्वयो द्रष्टव्यः । पौत्रायणस्य आद्रवणानन्तरं रैक्वेमानि षट्शतानि गवामयं निष्कोऽयमश्वतरीरथ इति वाक्य-स्याहहारे त्वा शूद्रेति रैक्वेन पौत्रायणं प्रति शूद्रशब्दे सम्बोधनादनन्तरं रैक्वेदं सहस्रं गवामयं निष्कोऽयमश्वतरीरथ इयं जायायं ग्रामो यस्मिन्नास्स इति वाक्यस्य विद्यमानत्वादेवमुक्तमिति ज्ञातव्यम् । चित्ररथसम्बन्धित्वं लिङ्गमित्यनेन सूत्रे चैत्ररथेनेति पदं भावप्रधानं सद्रथस्या-न्यदीयत्वशङ्कानिरासाय पौत्रायणस्य चित्ररथसम्बन्धित्वप्रतिपादकत्वमिति चित्ररथसम्बन्धि-त्वेनेति भाष्येणोक्तमिति सूचितं भवति ॥ **तेन च लिङ्गेनेति** ॥ एतेन सूत्रे तृतीयापञ्चम्यो-र्हेतुरूपैकार्थव्यत्ययेन तृतीयायाः पञ्चम्यादेशाद्वा चैत्ररथेन लिङ्गादिति सामानाधिकरण्य-मित्यभिप्रेत्य चित्ररथसम्बन्धित्वेन लिङ्गेनेति भाष्याभिहितमिति सूचितं भवति । **तदीयत्वस्यैव प्राप्तत्वादिति** ॥ रैक्वाय दानान्यथानुपपत्त्या षट्शतानि गवामित्यादौ पौत्रायणस्वामिकगवादिना सहपाठान्यथानुपपत्त्या च रथस्य पौत्रायणीयत्वस्य प्राप्तत्वादित्यर्थः ॥ **रथस्य वेदाविना-भावादिति** ॥ अनेन यत्र धूमस्तत्रैव वह्निरिति यद्यत्र वेदस्तत्रैव रथो यत्र न वेदः तत्र नो रथ इति 'यत्र वेद' इति स्मृतेर्योजना सूचिता भवति । क्षत्रियस्यास्य स्वाभाविकत्वादिति । तथा च प्राक् क्षत्रियत्वे रथित्वमेव लिङ्गत्वेन विवक्षितस्यैव लिङ्गत्वसम्भवात् । चित्रपदन्तु स्वरूप-कथनपरम् । अत एवास्याऽप्रयोजकत्वशङ्कापरिहाराय वेदव्याप्यरथित्वरूपविपक्षबाधक-तर्कसूचनाय रथमात्रस्य वेदव्याप्यत्वप्रतिपादकस्मृत्युदाहरणमिति भावः ।

नन्वपलायनश्च शूद्रस्य इत्यनेन प्राप्तयोद्धृत्वान्यथानुपपत्या शूद्रस्यापि रथित्वप्रतीतेर्व्यभिचार इत्यत आह– **अपलायनश्चेति** ॥ योद्धृत्वस्यान्यथानुपपत्तेर्न रथित्वाक्षेपकत्वमिति भावः ।

## भावदीपः

भाष्ये अयमश्वतरीरथ इत्यनन्तरमुत्तरत्रेति सौत्रं पदं श्रुतेनेति शेषश्च योज्यत इति भावेन कस्मादुत्तरत्र इत्यतः तन्निरूपकं द्वेधाऽऽह ॥ **पौत्रायणस्येति** ॥ अनेन पूर्वसूत्रादस्येति वृद्धि-विभागेनाऽऽद्रवणादिति च पदद्वयमत्र सूत्रे उत्तरत्र इत्यतः पूर्वमनुवर्त्यमिति दर्शितम् । पौत्रायणस्य रैक्कं प्रत्यागमनोक्त्यनन्तरमित्यर्थः ॥ **शूद्रेति** ॥ अह हारेत्वा शूद्रेत्युक्त्य-नन्तरमित्यर्थः ॥ **लिङ्गेनेति** ॥ सूत्रे तृतीयापञ्चम्योरेकार्थत्वाल्लिङ्गादित्युक्तमिति भावः । चैत्ररथेनेति सौत्रपदं भावप्रत्ययान्तं कृत्वा चित्ररथस्यायं चैत्ररथ इति सम्बन्धार्थाणप्रत्ययान्तस्य चित्ररत्रसम्बन्धित्वेनेति भाष्ये व्याखातम् । तस्यासिद्धिमाशङ्क्य निराह ॥ **न च वाच्य-मित्यादिना** ॥ भाष्ये यत्रेति स्मृतौ यत्र वेदो रथस्तत्र इत्युक्त्या वेदस्य रथव्याप्तत्वमुक्तम् । न वेदो यत्र नो रथस्तत्रेति व्यतिरेकोक्त्या वेदरथयोः समव्याप्तत्वोक्तेः प्रकृतोपयोग्यर्थमाह ॥ **रथस्येति** ॥ यद्वा रथस्तत्र तत्रैवेत्यर्थः । एवकारार्थस्यैव व्यक्तीकरणं न वेदो यत्रेति । अन्वयव्यतिरेकाभ्यां रथस्य वेदव्याप्तत्वमेव लब्धमिति भावेनोक्तम् ॥ **रथस्येति** ॥ सूत्रभाष्य-योश्चित्ररथेनेत्येव पूर्तौ चित्ररथसम्बन्धित्वेनेत्युक्ततात्पर्यं व्यनक्ति ॥ **नन्वेवमित्यादिना** ॥ नन्वपलायनं चेत्यष्टादशगीतातात्पर्योक्तवाक्येऽपलायनोक्त्या रथा गम्यते शूद्रेऽपीत्यत आह ॥ **अपलायनं चेति** ॥

## अभिनवचन्द्रिका

अत्र गुणसूत्रं 'क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात्' इति । अत्रावगतिग्रहणम्, उत्तरत्रग्रहणं, रथग्रहणं च शक्यमकर्तुम् । क्षत्रियश्चैत्रादित्येतावता पूर्णत्वात्, 'रथस्त्वश्वत-रीयुक्तश्चित्र इत्यभिधीयते' इति वचनात् चित्रशब्दस्यैवाश्वतरीयुक्तरथवाचकत्वात् । लघु चैवं सति सूत्रं स्यादिति चेत्,

> परिपूर्णं गुणैर्वक्ष्ये निर्दोषममरोत्तमैः ।
> स्तूयमानं व्यासदेवं ध्यात्वा सूत्रार्थमञ्जसा ॥

तथा हि – यत्तावदुक्तम्, अवगतिग्रहणं व्यर्थमिति, तदयुक्तम् । तस्य प्रत्यक्षरूपप्रमाण-सूचनार्थत्वात्तस्य पौत्रायणस्य क्षत्रियत्वं महद्भिरवगतमिति । उत्तरत्रग्रहणं तु लिङ्गस्यासिद्धि-

(अभिनवचन्द्रिका)

परिहारार्थम् । तथा हि श्रुतौ तावदश्वतरीरथ इति अश्वतरीरथः श्रूयते । न चित्ररथ इत्यसिद्धिः प्राप्नोति । उत्तरत्रग्रहणे पुनः क्रियमाणे न दोषो भवति । यदुत्तरत्र अश्वतरीरथ इति, अश्वतरीरथत्वमुच्यते तदेव चित्ररथत्वमिति सूचनात् । इममेवाऽभिप्रायं मनसि निधाय भाष्यकृता 'रथस्त्वश्वतरीयुक्तश्चित्र इत्यभिधीयत' इति व्याख्यातम् । अश्वतरीरथेनेत्येव किं नोक्तम्, तथा सत्यसिद्धिशङ्कानुदयेनोत्तरत्रग्रहणस्याऽकर्तव्यत्वात्, श्रुत्यनुगमश्चैवं सति सूत्रस्य भवति इति चेत्, सत्यम् । श्रुत्यनुगमाय 'अश्वतरीरथेन' इति वक्तव्यमिति, तथापि अश्वतरी-रथस्य क्षत्रियधर्मत्वेनाऽप्रसिद्धत्वात् ब्रह्मपुराणे चित्ररथत्वं क्षत्रियधर्मत्वेन प्रसिद्धमिति तथोक्तम् । एवमपि न रथसम्बन्धेन क्षत्रियत्वमवगन्तुं शक्यं तस्य वैदिकमात्रगतत्वादित्यत उक्तम् **लिङ्गादिति** । तस्य वैदिकमात्रसाधरणत्वेऽपि क्षत्रियस्य स्वाभाविकत्वादन्येषां नैमित्तिकत्वात् स्वाभाविकं तत् क्षत्रियत्वं साधयतीति भावः । यदत्रोक्तं चित्रशब्दस्यैव 'रथस्त्वश्वतरीयुक्तश्चित्र इत्यभिधीयत' इति व्याख्यानेन अश्वतरीयुक्तरथवाचकत्वात् रथशब्द-वैयर्थ्यमिति, तन्न । न हि इदं वाक्यं चित्रशब्दस्य अश्वतरीयुक्तरथवाचकत्वमाचष्टे । येनोक्त-दोषः स्यात् । किं नाम चित्ररथः क्षत्रिय इत्युक्ते किं तद्रथस्य चित्रत्वमित्याकाङ्क्षाया-मश्वतरीयुक्तत्वमेव रथस्य चित्रत्वमित्याचष्टे ।

नन्वेवमपि रथस्य क्षत्रियत्वाविनाभावात् तेनैव क्षत्रियत्वसाधनसम्भवेन रथेनेत्येवोच्यताम्, कृतं चित्रग्रहेणेति चेत् सत्यम्, रथ एव क्षत्रियत्वस्य साधक इति तथापि अश्वयुक्त एव रथः क्षत्रियस्य लिङ्गम् । अश्वतरीयुक्तस्तु शूद्रस्यापीति शङ्कानिरासाय तदपि क्षत्रियस्यैव । स्वाभाविकशूद्रस्य तु निषिद्धमिति द्योतनाय चैत्रग्रहणं कृतम् । सूत्रे उत्तरत्रग्रहणात् चित्ररथ-लिङ्गगवेषणाय यावद्विद्यासमाप्तिविचारेत्यनुपलम्भेन मनःखेदो न कार्य इति भावेन प्रवृत्तम् 'अयमश्वतरीरथ' इति भाष्यं व्याचष्टे – **अयमश्वतरीरथ इति** ॥ पौत्रायणस्याऽऽद्रवणाभि-धानात्, उत्तरत्र वा शूद्रशब्देन सम्बोधनात्, उत्तरत्र वा आलोचयतु भवान् यदेव अश्वतरीरथ इति श्रूयते, तदेव चित्ररथत्वं लिङ्गमिति विद्यासमाप्तिपर्यन्तं लिङ्गान्वेषणप्रयासो न कार्य इति भावः । सूत्रे श्रुत्यनुगमायाऽश्वतरीरथ इत्येव वक्तव्यमिति भावेन शङ्कते – **श्रुताविति** ॥ **भाष्ये रथ इति** ॥ चित्ररथः क्षत्रिय इति क्षत्रियलक्षणमुक्त्वा अश्वतरीयुक्तत्वमेव चित्रत्वमिति ब्राह्मे पुराणे व्याख्यानात् चित्ररथत्वमेव लक्षणत्वेन प्रसिद्धमिति सूत्रे तथोक्तमिति भावः ।

(अभिनवचन्द्रिका)

पौत्रायणस्य शूद्रत्वं मन्यमानः तटस्थः शङ्कते – **ननु चित्ररथित्वेऽपीति** ॥ इत्यत इत्यनन्तरं 'आह' इत्यतः प्राक् 'शूद्रस्य रथित्वमेव न सम्भवति, किमु चित्ररथित्वमिति भावेन' इति शेषः । **वेदाविनाभावादिति** ॥ यद्यपि स्मार्तान्वयपर्यालोचनया वेदस्य व्याप्यत्वं गम्यते, तथापि तद्व्यतिरेकपर्यालोचनया व्यापकत्वमप्यस्तीति भावः । ततश्च यदि पौत्रायणः शूद्रः स्यात् तर्हि वेदाधिकारो न स्यात् । यदि वेदाधिकारी न स्यात्, किमु चित्ररथ' इति विपक्षे बाधकतर्कसद्भावात् न प्रयोजकत्वमिति भावः ।

एतेन शूद्रत्वे वेदाभावेन रथित्वाभावप्रसङ्गः । न चाऽद्यापि शूद्रस्याऽनधिकारः सिद्धः, तत्सिध्यर्थमेव भवतां प्रयतनात् । एवं च पौत्रायणस्य क्षत्रियत्वसाधकहेतोरप्रयोजकतापरिहारे तेन तस्य शूद्रत्वाभावसिद्धिः । तत्सिद्धौ च शूद्राधिकारसिद्धिः । तत्सिद्धौ च अप्रयोजकता परिहार इत्यन्योन्याश्रय इति परास्तम् । शूद्रस्य वेदाधिकारमनङ्गीकुर्वाणं तटस्थं प्रति उत्तराऽभिधानात् । रथित्वेनैव क्षत्रियत्वं सिध्यति, किं सूत्राभिहितेन चैत्ररथेनेति भावेन रथमात्रस्य क्षत्रियत्वसाधकत्वासम्भवमाशङ्क्य समाधत्ते – **नन्वेवमित्यादिना, आधिक्यादित्यन्तेन** ॥ यद्यपि रथमात्रे न तत्साधकत्वं, व्यभिचारात् । तथापि स्वाभाविकसम्बन्धविशिष्टस्य रथस्याव्यभिचारात् साधकत्वमुपपन्नम् । न चासिद्धो हेतुः श्रुतौ तावत् 'अयमश्वतरीरथ' इति रथिकः श्रूयते । रथो द्विविधः । स्वाभाविकः अस्वाभाविकश्च । तत्र मुख्यासम्भव एवाऽमुख्यस्य ग्राह्यत्वेन स्वाभाविक एव रथोऽत्र विवक्षित इति भावः । ननु शूद्रस्यापलापनमुच्यते तेन तस्य रथः सिध्यतीत्यत आह – **अपलापनमिति** ॥

## वाक्यार्थमुक्तावली

भाष्ये अयमश्वतरीरथः इतीत्यनन्तरमुत्तरत्रेति श्रौतपदश्रुतेनेति शेषतश्च योज्य इति भावेनोत्तरत्रेत्यस्यावधिसापेक्षत्वात्तद्वेधा आह ॥ **पौत्रायणेति** ॥ **आद्रवणादिति** ॥ आद्रवणोक्त्यनन्तरमित्यर्थः । सम्बोधनादिति सम्बधनोक्त्यनन्तरमित्यर्थः ॥ **चित्ररथ सम्बन्धित्वमिति** ॥ तेन सूत्रे चित्ररथस्यायं स्वामी चैत्ररथ इति स्वामितासम्बन्धार्थअण्प्रत्ययान्तस्य चैत्ररथशब्दस्य भावप्रधानत्वविवक्षितत्वात् चित्ररथसम्बन्धित्वेनेति भाष्यं व्याख्यातमिति भावः ॥ **तेन च लिङ्गेनेति** ॥ श्रुतेन च लिङ्गेनेत्यर्थः । तेन च शब्दः न इत्यस्य समुच्चायक इत्युक्तं

(वाक्यार्थमुक्तावली)
भवति । सूत्रे तृतीयापञ्चम्योरेकार्थत्वात् । चैत्ररथेन लिङ्गादिति विभक्तिद्वयसामानाधिकरण्यमिति भावेन भाष्ये लिङ्गेनेति व्याख्यातमिति बोध्यम् ।

## तत्त्वसुबोधिनी

**अयमश्वतरीरथ इति ॥** उत्तरत्र चित्ररथसम्बन्धित्वं श्रूयत इत्यन्वयः । कस्मादुत्तरत्र श्रूयत इत्यत उक्तं पौत्रायणस्याद्रवणाच्छूद्रशब्देन सम्बोधनाद्वेति ॥ रैक्वं प्रतिपौत्रायणस्याद्रवणादनन्तरं रैक्वेमानि षट्शतानि गवामयं निष्कोऽयमश्वतरीरथ इति वाक्यस्य अहहारेत्वाशूद्रेति रैक्वेण पौत्रायणं प्रति शूद्रशब्देन सम्बोधनानन्तरं रैक्वेदं सहस्रं गवामयं निष्कोऽयमश्वतरीरथ इत्यर्थतया अयं ग्रामो यस्मिन्नास्ये स्म इति वाक्यस्य विद्यमानत्वादेव मुक्तमिति भावः । चित्ररथसम्बन्धित्वलिङ्गमित्यनेन सूत्रे चैत्ररथेनेति पदं भावप्रधानं सद्रथस्यान्यदीयत्वशङ्कानिरासाय पौत्रायणस्य चित्ररथसम्बन्धित्वप्रतिपादकमिति ॥ चित्ररथसम्बन्धित्वेनेति भाष्येणोक्तमिति सूचितम् ॥ **तेन च लिङ्गेनेति ॥** अनेन सूत्रे तृतीयापञ्चम्योः हेतुरूपैकार्थत्वाद्व्यत्ययेन तृतीयापञ्चम्यादेशाद्वा चैत्ररथेन लिङ्गादिति सामानाधिकरण्यमित्यभिप्रैत्य भाष्ये चित्ररथसम्बन्धित्वेन लिङ्गेनेत्यभिहितमिति सूचितमिति ॥

**ननु तस्य तदीयत्वमिति ॥** रथस्य पौत्रयणीयत्वमित्यर्थः ॥ **तदीयत्वस्यैव प्राप्तत्वादिति ॥** रैक्वाय दानान्यथानुपपत्त्या षट्शतानि गवामित्यादौ पौत्रायणस्वामिकगवादिना सहपाठान्यथानुपपत्त्या च रथस्य पौत्रायणीयत्वस्य प्राप्तत्वादित्यर्थः । **रथस्य वेदाविनाभावादिति ॥** अत्र यत्र वह्निस्तत्रैव धूम इतिवद्यत्र वेदस्तत्रैव रथः यत्र न वेदस्तत्र नो रथ इति स्मृतेर्योजना सूचिता भवति । ननु रथित्वेन क्षत्रियत्वसाधनमनुपपन्नं रथित्वस्य वैदिकेषु द्रोणादिष्वपि सत्वेन तत्र क्षत्रियत्वरूपसाध्याभावाद्व्यभिचार इति शङ्कते ॥ **नन्वेवमिति ॥** मुख्यरथित्वस्य हेतूकृतत्वात् तत्र नैमित्तिकरथित्वस्यैव सत्वेन मुख्यरथित्वाभावान्न व्यभिचार इति परिहरति ॥ **क्षत्रियस्येति ॥** तथा च प्राक् क्षत्रियत्वेन रथित्वमेव लिङ्गत्वेन विवक्षितं तस्यैव लिङ्गत्वसम्भवात् चित्रपदं तु स्वरूपकथनपरम् । अत एव अस्य प्रयोजकत्व शङ्कापरिहाराय वेदव्याप्यरथित्वरूपहेतूच्छित्तिरूपविपक्षबाधकतर्कसूचनाय रथमात्रस्य वेदव्याप्यत्वप्रतिपादकस्मृत्युदाहरणमिति भावः । नन्वपलायनं च शूद्रस्येत्यनेन प्राप्तयोद्धृत्वान्यथानुपपत्त्या

(तत्त्वसुबोधिनी)
शूद्रस्यापि रथित्वप्रतितेर्व्यभिचार इत्यत आह ॥ **अपलायनं चेति** ॥ योद्धृत्वस्यान्यथोपपत्तेर्न रथित्वाक्षेपकमिति भावः ॥

## वाक्यार्थमञ्जरी

उत्तरत्र अयमश्वतरीरथ इत्यत्र । चैत्ररथेन चित्ररथसम्बधित्वेन लिङ्गेन पौत्रायणस्य क्षत्रियत्वावगमाच्च शूद्रशब्दो न रूढ इत्यर्थः ॥ **अयमश्वतरीरथ इति** ॥ वडवायां रासभादुत्पन्नाश्वतरी ताभ्यां युक्तो रथः अश्वतरीरथः तव दक्षिणात्वेन वर्तत इत्यर्थः इति चित्ररथसम्बधित्वेनेत्यन्वयः। उत्तरत्रेत्यत्रास्य सावधिकत्वाद्वधावधिं दर्शयति ॥ **पौत्रायणस्येति** ॥ रैक्वं प्रति पौत्रायणस्याद्रवणानन्तरं रैक्वेमानि षट्शतानि गवामयं निष्कोऽयमश्वतरीरथ इति वाक्यस्याह हारेत्वा शूद्रेति रैक्वेण पौत्रायणं प्रति शूद्र इति सम्बोधनानन्तरं रैक्वेदं सहस्रं गवामयं निष्कोऽयमश्वतरीरथ इति वाक्यस्य विद्यमानत्वादेवमुक्तमिति ज्ञातव्यम् । दीयमानः गुरुदक्षिणात्वेन ॥ **तदीयत्वस्यैव प्राप्तेरिति** ॥ रैक्वाय दानान्यथानुपपत्या षट्शतानि गवामित्यादौ पौत्रायणस्वामिकगवादिना सह पाठान्यथानुपपत्त्या च चित्ररथस्य पौत्रायणीयत्वस्य प्राप्तत्वादित्यर्थः ॥ **रथित्वमिति** ॥ अनेन प्राग्रथित्वमेव क्षत्रियत्वे लिङ्गत्वेन विवक्षितं चित्रत्वं तु स्वरूपकथनार्थम् । अत एव रथमात्रस्य वेदाविनाभाव उक्त इति सूचयति । परिहरति ॥ **क्षत्रियस्येति** ॥ नन्वपलायनं चेति गीतातात्पर्ये युद्धे प्राप्ते सति पलायनमकृत्वा प्रयुध्य विप्रादिपालनं कर्तव्यमिति शूद्रस्य प्राप्तयोद्धृत्वं श्रूयते न च युद्धो रथेन विना युक्तः अतस्तदन्यथानुपपत्त्या शूद्रस्यापि रथोऽस्तीति ज्ञायते अतस्तत्र व्यभिचार इत्यत आह ॥ **अपलायनं चेति** ॥ पदातितया पादचारित्वेन । गमयितव्यं सङ्गमयितव्यं योद्धृत्वस्यान्यथोपपत्तेर्न रथित्वाक्षेपकत्वमिति भावः ॥

## सूत्रभाष्यम्

**॥ ॐ संस्कारपरामर्शात्तदभावाभिलापाच्च ॐ ॥ ३६ ॥**

**'अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीत' इत्यध्ययनार्थं संस्कारपरामर्शात् । 'नाग्निर्न यज्ञो न क्रिया न संस्कारो न व्रतानि शूद्रस्य' इति पैङ्गिश्रुतौ संस्काराभावाभिलापाच्च । उत्तमस्त्रीणां तु न शूद्रवत् । 'सपत्नीं मे पराधम' (मन्त्रप्रश्न.१-१६) इत्यादिष्वधिकारदर्शनात् । संस्काराभावेनाभावस्तु सामान्येन । अस्ति च तासां संस्कारः ।**

(सूत्रभाष्यम्)

'स्त्रीणां प्रदानकर्मैव यथोपनयनं तथा' इति स्मृतेः (व्यासस्मृतिः) ॥

## सत्तर्कदीपावली

ननु मास्तु पौत्रायणः शूद्रः वेदस्तु शूद्रस्यापि भवत्येव निषेधाभावादित्याशङ्कापरिहाराय सूत्रमवतार्य व्याचष्टे ॥ **संस्कारेत्यादिना** ॥ 'नाग्निर्न यज्ञो न संस्कारः' इति श्रुतौ संस्काराभाव एव शूद्रस्योच्यते न त्वसौ न कार्य इति अतः स कर्तव्य एव श्रेयोऽर्थिभिः कलिजैरिव सदाचारस्तदभावो वेदादिना नैतद्ब्राह्मण इति ।

## तत्त्वप्रदीपिका

इतश्च न शूद्रस्याधिकारः ॥ 'संस्कारपरामर्शात्तदभावाभिलापाच्च' । अन्यार्थवचनं 'परामर्शः' । अध्ययनस्याङ्गत्वेनोपनयनसंस्कारपरामर्शात् । शूद्रस्य संस्काराभावाच्च । पराधम पराणुद । 'सपत्नीं मे पराधम' 'किं भ्राता सयदनाथं भवति' 'किमेता वाचा कृणवा तवाहम्' इत्यादिषु शचीयम्यूर्वश्यादीनामधिकारदर्शनादुत्तमस्त्रीणां न शूद्रवदनधिकारः । यद्यपि स्त्रीणामुपनयनसंस्कारो नास्ति, तथाऽपि तत्प्रतिनिधिरन्योऽस्तीत्याह– **अस्ति चेति** ॥ अस्ति च स्त्रीणां संस्कारः, स्त्रीणां प्रदानकर्मेत्यादि व्यासवाक्यं चास्ति तत्प्रमाणम् ।

## तत्त्वप्रकाशिका

यदुक्तं रथित्वलिङ्गेन पौत्रायणस्य क्षत्रियत्वावगमान्न तल्लिङ्गेन शूद्रस्य वेदाधिकारसिद्धिरिति । तदयुक्तम् । शूद्रस्यापि रथित्वसम्भवात् । तस्य वेदाविनाभावान्नेति चेन्न । शूद्रेऽपि वेदाधिकाराङ्गीकारादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **संस्कारेति** ॥ न परेणाङ्गीकृतोऽपि शूद्रस्य वेदाधिकारः सम्भवति । वेदाध्ययनादेरुपनयनादिसंस्कारसापेक्षत्वात् । अष्टवर्षं ब्राह्मणमुपनयीतेति संस्कारमुक्त्वा तमुपनीतमध्यापयीतेत्यध्ययनार्थमुपनयनयपरामर्शात् । 'वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना' इति स्मृतेश्च । अस्तु तर्हि शूद्रस्यापि संस्कारः । मैवम् । 'नाग्निर्न यज्ञः' इति शूद्रस्य संस्काराभावाभिधानात् । अतः शूद्रस्य संस्काराभावेन वेदानधिकारान्न तस्य वेदाविनाभूतरथित्वमिति भावः । नन्वेवं संस्काराभावेन वेदानधिकारश्चेदुत्तमस्त्रीणामनधिकारप्रसङ्गः । संस्काराभावेऽपि तासामधिकारे शूद्रस्यापि तत्प्राप्तिरित्यत आह ॥ **उत्तमेति** ॥ नोत्तमस्त्रीणां शूद्रवत्संस्काराभावेन वेदविद्याधिकाराभावो वक्तव्यः । 'सपत्नीं मे पराधम' इत्यादिविद्यासु शच्यादीनां तद्द्रष्टृत्वेनाधिकारदर्शनादित्यर्थः । तर्हि

(तन्त्रप्रकाशिका)

उक्तन्यायभङ्ग इत्यत आह ॥ **संस्कारेति** ॥ संस्काराभावेन वेदाधिकाराभावः सामान्यन्यायेनोक्तो न तु नियमेन । अतस्तस्य विशेष(षे)णापवादे न दोष इति भावः । अनेनैव शूद्रप्रतिवन्दी विमोचिता भवति । सामान्यस्य बाधैकापोद्यत्वात् । एवं स्त्रीणामुपनयनाभावेऽपि पूर्वन्यायस्य सामान्यतयाऽपवादसम्भवादस्ति वेदाधिकार इत्युक्तम् । अथोपनयनप्रतिनिधिसद्भावाचास्त्यधिकार इत्याह ॥ **अस्ति चेति** ॥ यथा पुंसामुपनयनादिसंस्कारस्तथा स्त्रीणां प्रदानकर्मैव संस्कार इत्यर्थः । अत्रापवादोक्तिः प्रदानादिशून्यतिर्यगादीनामपि सङ्ग्रहार्था । तेषामपि 'अयमग्ने जरिता' इत्यादावधिकारदर्शनात् ॥

## भावबोधः

**तल्लिङ्गेनेति** ॥ पौत्रायणकर्तृकवेदविचाराख्यलिङ्गेनेत्यर्थः । **अध्ययनार्थमुपनयनपरामर्शादिति** ॥ न चोदाहृतश्रुतौ ब्राह्मणस्यैवाध्ययने उपनयनापेक्षा भातीति वाच्यम् । ब्राह्मणपदेन ब्रह्माणयनयोग्यानां त्रैवर्णिकानामुक्तेः । वेदः कृत्स्न इति स्मृतौ स्पष्टमुपनयनस्य द्वितीयजन्मवत एवाध्ययनविधानाच्चेति भावः । अत एवानुदाहृतापि स्मृतिः स्वयमुदाहृता इत्यादि विद्यास्विति । अत्रादिपदेन 'ईङ्खयन्तीरपस्युवः सोम एकेभ्यः पवते । उदसौ सूर्यो अगात्' इत्यादीनां देवमातृपौलोम्याष्टानां ग्रहणम् । अनेन भाष्यगतमादिपदमुक्ततात्पर्यकं भवति । **अनेन शूद्रप्रतिवन्दीति** । संस्काराभावेनाभाव इत्यस्य बाधकैकापोद्यसामान्यन्यायत्ववचनेनेत्यर्थः ॥ **बाधकैकापोद्यत्वादिति** ॥ शच्यादाविव शूद्रादौ वेदविद्याधिकारप्रतिपादकविशेषप्रमाणस्योक्तन्यायापवादकस्याभावादिति भावः ।

नन्वेवं स्त्रीणामप्यध्ययनस्य संस्कारपूर्वकत्वेनैवोपपत्तौ किमर्थं संस्काराभावेनाध्ययनाभावस्य सामान्यन्यायत्वं भाष्ये अङ्गीकृतमित्यत आह– **अत्रापवादोक्तिरिति** ॥

## भावदीपः

साध्यहेतू अध्याहृत्य तद्धेतुसाधकत्वेन भाष्यसूत्रोक्तहेतुं परम्परया योजयति ॥ **न परेणेति** ॥ संस्कारमुक्त्वेति भाष्ये शेषोक्तिः । तमित्यनुवादः । उपनीतमिति व्याख्या । नन्वध्यापयीतेत्यध्यापनाङ्गत्वमेव श्रूयते । न त्वध्ययनाङ्गत्वं संस्कारस्य तत्कथमध्ययनार्थमित्युक्तिः । मैवम् । स्वहितानभिज्ञौ बालो हितैषिपित्रादिना शासनीय इत्येवं परत्वेन

(भावदीपः)

स्वाध्यायोऽध्येतव्य इत्यध्ययनविधिश्रुत्यन्तरानुरोधेनाध्यापनवाक्यस्याप्यध्ययनार्थत्वादिति भावः। नन्वष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत इति श्रुतौ ब्राह्मणस्यैवाध्ययने उपनयनापेक्षा नान्यस्योच्यत इत्यतः सर्वशाखानयभाष्योक्तस्मृतिं चाऽऽह ॥ **वेद इति** ॥ द्विजन्मना उपनयनाख्यद्वितीयजन्मवतेति त्रैवर्णिकमात्रसाधारण्यस्यैव स्मरणादित्यर्थः। नाग्निरित्यादिभाष्यं व्याचष्टे ॥ **अस्त्विति** ॥ अतः संस्काराभावाभिधानादित्यर्थः। संस्कारेति भाष्यव्यावर्त्यमाह ॥ **संस्कारेति** ॥ पराधम पराणुद। इत्यादीत्यादिपदेन ईङ्खयन्ति (तीरपस्यवः) परस्यवः। इन्द्रं जातमित्यादिग्रहः। अनेन संस्कारेत्यादिभाष्येणेत्यर्थः। शच्यादीनामिव शूद्राणां संस्काराभावेऽपि अधिकारकल्पकप्रमाणाभावादित्यर्थः। तर्हि स्त्रीणां संस्काराभावमभ्युपेत्य पूर्वभाष्येऽपवादोक्तिः किमर्थेत्यतः कृतचिन्तायाः फलमन्यत्रेत्याह ॥ **अपवादेति** ॥ **निषेधेति** ॥ शूद्रं नोपनयीतेति निषेधेनेत्यर्थः। निषेधाभावेऽपि संस्काराभावोक्तिमात्रेणैवाध्ययनाभावः सुवचः तथाप्यभ्युपेत्यवाद इति चन्द्रिकोक्तिः ॥

## अभिनवचन्द्रिका

तटस्थं प्रति अप्रयोजकत्वशङ्कापरिहारेऽपि न पूर्वपक्षिणं प्रति तत्परिहारः। तेन शूद्रेऽपि वेदाङ्गीकारेण तं प्रति प्रागुक्ततर्कानुदयादित्याशङ्कते – **यदुक्तमित्यादिना** ॥ नामग्रहणे नामैकदेशग्रहणस्य भीम इत्यादौ सुप्रसिद्धत्वात् रथित्वलिङ्गेनेत्युक्तम् ॥ **सामान्यन्यायेनेति** ॥ उत्सर्गेणेत्यर्थः ॥ **तिर्यगादीनामपीति** ॥ आदिशब्देनोर्वश्यादीनां ग्रहणम्।

## तत्त्वसुबोधिनी

**लिङ्गेनेति** ॥ पौत्रायणकर्तृकवेदव्यभिचाराख्यलिङ्गेनेत्यर्थः। **अध्यापनार्थमिति** ॥ न चोदाहृतश्रुतौ ब्राह्मणस्यैवाध्ययने उपनयनापेक्षा भवतीति वाच्यम्। ब्राह्मणपदेन ब्रह्माणनयोग्यानां त्रैवर्णिकानामुक्तेः। वेदः कृत्स्न इति स्पष्टमुपनयनाख्यद्वितीयजन्मवत एवाध्ययनविधानाच्चेति भावः। इत्यादिविद्यास्विति ॥ अत्रादिपदेन ईंखयन्तीरपस्यवः सोम एकेभ्यः पवत इत्यादीनां ग्रहणम्। अनेन शूद्रप्रतिबन्दीति संस्काराभावेनाभाव इत्यस्य बाधकैकापोह्यसामान्यवचनत्वेनेत्यर्थः। **बाधकैकापोह्यत्वादिति** ॥ शच्यादाविव शूद्रादौ वेदाधिकारप्रतिपादकविशेषप्रमाणस्योक्तन्यायापवादकस्याभावादितिभावः। नन्वेवं स्त्रीणामपि अध्ययनस्य

(तत्त्वसुबोधिनी)

संस्कारपूर्वकत्वेनैव उपपत्तौ किमर्थं संस्काराभावेनाध्ययनाभावस्यासामान्यन्यायत्वं भाष्ये अङ्गीकृतमित्यत आह ॥ **अत्रादिपदोक्तिरिति निषेधाभावादिति** ॥ न कर्तव्य इति निषेधाभावादित्यर्थः ।

## वाक्यार्थमञ्जरी

**तल्लिङ्गेनेति** ॥ पौत्रायणकर्तृकवेदविचाराख्यलिङ्गेनेत्यर्थः ॥ ॐ संस्कारपरामर्शात्तद-भावाभिलापाच्च ॐ ॥ अध्ययनाङ्गत्वेन तमध्यापयीतेत्युपनयनाख्यसंस्कारपरामर्शाच्छूद्रस्य नाग्निर्नयज्ञो न संस्कार इति संस्काराभावाभिधानाच्च न शूद्रस्य वेदविद्याधिकार इत्यर्थः । श्रुतौ वक्ष्यमाणरीत्या ब्राह्मणशब्देन त्रैवर्णिका ग्राह्या इत्याशयेन साधारणमुदाहरति ॥ **वेद इति** ॥ सरहस्यः अर्थविशेषसहितः ॥ **सामान्येति** ॥ व्यक्तिविशेषाविषयकेणेत्यर्थः । नियमेन अव्यभिचारेण विशेषेण व्यक्तिविशेषविषयेण यथा 'न हिंस्यात्सर्वभूतानि' इति सामान्येनोक्तस्य अग्नीषोमीयं पशुमालभेत' इति विशेषरूपेण बाधे सङ्कोचरूपापवादस्तथात्र संस्काराभावेऽधि-काराभाव इति सामान्येनोक्तस्य सपत्नीं मे पराधमेति विशेषप्रमाणबाधेन संकोचरूपापवाद इत्यर्थः ॥ **अनेनेति** ॥ संस्काराभावे अधिकाराभाव इत्यस्य बाधकैकापोद्यसामान्य-न्यायवचनेनेत्यर्थः ॥ **बाधकैकापोद्यत्वादिति** ॥ शच्यादाविव शूद्रादौ वेदविद्याधिकार प्रतिपादकविशेषप्रमाणस्योक्तन्यायापवादकस्याभावादिति भावः । प्रदानकर्म विवाहः । नन्वेवं स्त्रीणामप्यध्ययनस्य संकारपूर्वकत्वेनोपपत्तौ किमर्थं संस्काराभावेनाध्ययनाभावस्य सामान्याय-त्वाङ्गीकार इत्यत आह ॥ **अत्रापवादोक्तिरिति** ॥

## सूत्रभाष्यम्

### ॥ ॐ तदभावनिर्धारणे च प्रवृत्तेः ॐ ॥ ३७ ॥

**'नाहमेतद्वेद भो यद्गोत्रोऽहमस्मि' इति (छां.उ.४-४) सत्यवचनेन सत्यकामस्य शूद्रत्वाभावनिर्धारणे हारिद्रुमतस्य 'नैतदब्राह्मणो विवक्तुमर्हति' इति (छां.उ.४-५) तत्संस्कारे प्रवृत्तेश्च ॥**

## सत्तर्कदीपावली

नैतद्ब्राह्मण इति शूद्र एव विवक्षितो न क्षत्रियादिः । तथाहि तद्भाष्ये सामसंहितालक्षण इति । यदि शूद्रस्याप्युपनयनादियोग्यत्वं तर्हि कथमाचार्यवर्यः शूद्राभावं निर्धार्य तत्र प्रवृत्त इत्यर्थः ।

## तत्त्वप्रदीपिका

'सोऽहं सत्यकामो जाबलोऽस्मि भोः' इति सत्यकामेनोक्ते नैतदब्राह्मणो विवक्तुमर्हतीति निर्धारणे सत्येव गौतमस्य तदुपनयनादौ प्रवृत्तेश्च न शूद्रोऽधिकारी ।

'आर्जवं ब्राह्मणे साक्षाच्छूद्रोऽनार्जवलक्षणः ।
गौतमस्त्विति विज्ञाय सत्यकाममुपानयत् ॥' इति सामसंहितायाम् ॥

## तत्त्वप्रकाशिका

यदुक्तमध्ययनस्य संस्कारसापेक्षत्वान्न शूद्रस्य वेदविद्याधिकार इति न तद्युक्तम् । शूद्रस्यापि संस्कारसम्भवात् । न च वाच्यं तदसम्भवोऽप्युक्त इति । संस्काराभावस्यैवोक्तेर्निषेधाभावात् । निषेधाभावेऽप्यभावोक्तिसम्भवादित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ **तदभावेति** ॥ न शूद्रस्योपनयननिषेधाभावः । 'नाहमेतद्वेद भो यद्गोत्रोऽहमस्मि' इति वचनेन सत्यकाम-स्याऽऽर्जवं ज्ञात्वा नैतदब्राह्मणो विवक्तुमर्हतीति शूद्रत्वाभावनिर्णय एव तदुपनयने गौतमस्य प्रवृत्तत्वात् । शूद्रोपनयननिषेधाभावे कथं तदभावनिर्धारण एव प्रवर्तेतेति भावः ॥

## गुर्वर्थदीपिका

अग्निर्नास्ति यज्ञो नास्त्त्याद्यभाववचनेनैव निषेधोऽपि कल्पित इत्यत आह **निषेधा-भावेऽपीति** ॥ दरिद्रस्य ब्राह्मणस्य तण्डुलाभावेऽपि तण्डुलनिषेधादर्शनादिति भावः ।

## भावबोधः

ननु सामान्यतः प्राप्तस्य संस्कारादेः 'नाग्निर्न यज्ञः' इत्यभावोक्तिरेव निषेध इत्यत आह- **निषेधाभावेऽपीति** ॥ स्वरूपकथनमात्रपरत्वेनाप्युपपत्तौ निषेधे तात्पर्यकल्पनायोगादिति भावः । यद्यपि निषेधाभावेऽपि संस्काराभावमात्रेण तत्सापेक्षाध्ययनाभावः सिद्ध्यति । तथापि नैतावता सिषाधयिषितवेदाधिकाराभावः शूद्रादौ सिद्ध्यति । संस्काराभावप्रयुक्ताध्ययनाभाववत्यनुपनीत-

(भावबोधः)

ब्राह्मणादौ वेदाधिकारस्य सत्वात् । अतोऽधिकाराभावसिध्यर्थं निषेधवचनेन भवितव्यम् । तच्च प्रकृते नास्तीति भावः । अत एवोक्तमध्ययनस्य संस्कारसापेक्षत्वान्न शूद्रस्य वेदविद्याधिकार इति । नैतदब्राह्मणो विवक्तुमर्हतीतिशूद्रत्वाभावनिर्धारण इति । अनेन भाष्येण नैतदब्राह्मणो विवक्तुमर्हतीत्येतद्वाक्यं शूद्रत्वाभावेत्यत्रान्वेतीत्युक्तं भवति । तर्हि सत्यत्ववचनेनेत्यस्य क्वान्वय इत्यत उक्तं– **आर्जवं ज्ञात्वेति** ॥ इदमुक्तं भवति । सत्यकामो न शूद्रः । ऋजुत्वात् न नैतद-सिद्धम् । सत्यवचनेन तज्ज्ञानात् । न च व्याप्त्यभावः । नैतदब्राह्मणो विवक्तुमर्हतीति व्यतिरेकव्याप्तेः सत्त्वादिति शूद्रत्वाभावानुमापकप्रवृत्तेरिति । तदभावनिर्धारण एवेति टीकायां सूत्रगतचशब्दोऽवधारणार्थत्वेनापि व्याख्यात इति द्रष्टव्यम् ।

## भावदीपः

साध्यमध्याहृत्य भाष्यं योजयति ॥ **न शूद्रस्येति** ॥ **नाहमिति** ॥ छान्दोग्ये चतुर्थे गुरूपसत्त्यर्थं प्राप्तेन गोतमेन किंगोत्रस्त्वमिति पृष्टस्सत्यकामो वक्ति ॥ **नाहमित्यादि** ॥ वेदेत्युत्तमपुरुषैकवचनम् ॥ **निर्णय एवेति** ॥ चोऽवधारणे भिन्नक्रम इति दर्शितम् ॥ **तदुपनयन इति** ॥ अनेन पूर्वस्मात्संस्कारपदं सप्तम्यन्ततया विभागेनात्र सूत्रेऽनुवर्त्यमिति सूचितम् ॥

## अभिनवचन्द्रिका

**शूद्रोपनयननिषेधाभाव इति** ॥ ननु शूद्रोपनयननिषेधकं वाक्यं सूत्रकारः पश्यति न वा । नेतिपक्षे तदभावः । सर्वज्ञादृष्टस्याऽप्रामाणिकत्वात् । आद्ये तद्वाक्यमुदाहर्तव्यम् । ननु हारिद्रुमतस्य तदभावनिर्धारणप्रवृत्त्यन्यथाऽनुपपत्तिर्वक्तव्या । श्रुतेरप्रत्यक्षत्व एवानुमातव्यत्वा-दिति चेत्, न । पश्यत्येव सूत्रकारः शूद्रोपनयननिषेधकं वाक्यं, तच्च 'नाग्निर्न यज्ञो न संस्कारो न व्रतानि' इति पैङ्गिश्रुतिगतमुदाहृतमेव । नेदं वाक्यं शूद्रस्य संस्कारनिषेधकं, किं तु तदभाव-प्रतिपादकमिति विवदमानं प्रति गौतमप्रवृत्त्यन्यथानुपपत्त्या तस्य वाक्यस्य निषेधपरत्वमनेन सूत्रेण साध्यत इति ज्ञेयम् ।

## तत्त्वसुबोधिनी

ननु सामान्यतः प्राप्तस्य संस्कारादेर्नाग्निः न यज्ञः इत्यभावोक्तिरेव संस्कारो न कर्तव्य इति

(तत्त्वसुबोधिनी)
निषेधः इत्यत आह ॥ **निषेधाभावेऽप्यभावोक्तिसम्भवादिति** ॥ नाग्निर्न यज्ञ इत्यादौ निषेधो नास्त्येव किं तर्ह्य भावोक्तिमात्रं संस्कारो न क्रियत इत्युक्तिमात्रमित्यर्थः । तथा च स्वरूप-मात्रकथनपरत्वेनाप्युपपत्तेः निषेधे तात्पर्यकल्पनायोगादिति भावः ॥ **नैतदब्राह्मणो** विवेक्तु-**मर्हतीति** ॥ **शूद्रत्वाभाव निर्धारण इति** ॥ अनेन भाष्ये नैतदब्राह्मणो विवेक्तुमर्हतीत्येतद्वाक्यं शूद्रत्वाभावेऽत्यत्रान्वेतीत्युक्तं भवति । तर्हि सत्यवचनेनेत्यस्य कान्वय इत्यत उक्तम्– आर्जवं **ज्ञात्वेति** ॥ इदमुक्तं भवति । सत्यकामः न शूद्र ऋजुत्वात् । न चैतदसिद्धम् । सत्यवचनेन तज्ज्ञानात् । न च व्याप्त्यभावः ।

## वाक्यार्थमञ्जरी

**निषेधाभावादिति** ॥ नाग्निरित्यादौ न कर्तव्य इत्यादेरश्रवणादिति भावः । ननु सामान्यतः प्राप्तसंस्कारादेर्नाग्निरित्यादिना अभावोक्तिरेव निषेध इत्यत आह ॥ **निषेधाभावेऽपीति** ॥ स्वरूपकथनमात्रपरत्वेनाप्युपपत्तेर्निषेधे तात्पर्यकथनायोगादिति भावः ॥ ॐ तदभावनिर्धारणे च प्रवृत्तेः ॐ ॥ शूद्रत्वाभावनिश्चये सत्येव सत्यकामोपनयनार्थं गौतमप्रवृत्तेर्न निषेधाभाव इत्यर्थः ॥ **नाहमेतद्वेदेति** ॥ जाबालः सत्यकामः स्वस्योपनयनार्थं हारिद्रुमतोऽपत्यं गौतममुपेत्य किं गोत्रोऽसीति गौतमेन पृष्टः सत्यकाम उवाच । किमिति भो मुने, अहं यद्गोत्रोऽस्मि नाहमेतद्वेदेत्यर्थः । आर्जवं मनोवाक्कायकर्मणामवैपरीत्यम् ॥ **नैतदिति** ॥ एतदार्जवसंयुक्तं वचनमब्राह्मणस्त्रैवर्णिकेतरो सर्वथा वक्तुं नार्हति आर्जवस्य ब्राह्मणलक्षणत्वादिति गौतमस्य भावः । इदमुक्तं भवति । सत्यकामो न शूद्रः ऋजुत्वात् । न चैतदसिद्धं सत्यवचनेन तज्ज्ञानात् न च व्याप्त्यभावः । नैतदब्राह्मणो वक्तुमर्हतीति व्यतिरेकव्याप्तेः सत्त्वादिति शूद्रत्वाभावमनुमाय प्रवृत्तेरिति ।

## सूत्रभाष्यम्

### ॥ ॐ श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॐ ॥ ३८ ॥

**'श्रवणे त्रपुजतुभ्यां श्रोत्रपरिपूरणम् । अध्ययने जिह्वाच्छेदः । अर्थावधारणे हृदय-विदारणम्' इति प्रतिषेधात् ।**

(सूत्रभाष्यम्)

'नाग्निर्न यज्ञाश्शूद्रस्य तथैवाध्ययनं कुतः ।
केवलैव तु शुश्रूषा त्रिवर्णानां विधीयत' इति स्मृतेश्च ।

विदुरादीनां तु उत्पन्नज्ञानत्वात्कश्चिद्विशेषः ॥

## सत्तर्कदीपावली

न केवलमुपनयनप्रतिषेधाच्छूद्रस्याध्ययनाभावः किन्तु प्रतिषेधादपीतिभावेनोत्तरं सूत्रमवतार्य व्याचष्टे ॥ **श्रवणेत्यादिना** ॥ न तु तर्हि कथं विदुरः सर्ववेत्ता त्रिपूज्यते । कथं चाक्षत्रसंस्कारयुतः कर्णो निखिलश्रुतीरधिजगावित्युच्यत इत्यत आह ॥ **विदुरादीनामिति** ॥ उत्पन्नापरोक्षज्ञानित्वात्कश्चिद्विशेषः कश्चिदितरशूद्रादिभ्य इत्यर्थः । अतोऽन्येषां शूद्रादीनां मनुष्यत्वेऽपि न विद्याधिकारः इति सिद्धम् ॥

## तत्त्वप्रदीपिका

विदुरादीनां तु जन्मान्तर एव वेदादुत्पन्नज्ञानत्वाद्विशेषः ॥

## तत्त्वप्रकाशिका

ननु श्रुतावब्राह्मणमात्रस्यानुपनयनाभिप्रायप्रतीतेः कथं शूद्रत्वाभावेत्यसूत्रयदभापत च । ब्राह्मणपदेन ब्रह्माणनयोग्यानां त्रैवर्णिकानामुक्तेः । शूद्रो वेदविद्याधिकारी विशिष्टबुद्ध्यादिमत्त्वात् द्विजवत् । अन्यथा विशिष्टबुद्ध्यादिमत्त्वेन देवताधिकारसिद्धिर्न स्यादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **श्रवणेति** ॥ न विशिष्टबुद्ध्यादिमत्त्वेन शूद्रस्य वेदाधिकारो वाच्यः । अनिषिद्धत्वे सति विशिष्टबुद्ध्यादिमत्त्वस्याधिकारप्रयोजकत्वेन केवलविशिष्टबुद्ध्यादिमत्त्वस्याधिकारासाधकत्वात् । शूद्रस्य वेदश्रवणाध्ययनार्थावधारणानां श्रुतौ प्रतिषिद्धत्वात् । श्रुतौ शूद्रशब्दाश्रवणाद्वर्णबाह्यविषयोऽसाविति न वाच्यम् । नाग्नि र्यज्ञः शूद्रस्य' इति स्मृतौ शूद्रस्यैव स्पष्टनिषेधात् श्रुतेरपि तदर्थत्वोपपत्तेः । अतोऽनिषिद्धत्वे सति विशिष्टबुद्ध्यादिमत्त्वं व्यावर्तमानं शूद्रात्स्वव्याप्यं वेदाधिकारं च व्यावर्तयतीति भावः । ननु शूद्रस्य वेदार्थावधारणादेर्निषिद्धत्वे कथं विदुरधर्मव्याधादीनां वैदिकार्थावधारणमस्ति । संस्काराभावेनानधिकारे च कथं कर्णोऽक्षत्रसंस्कारयुतोऽखिलाः श्रुतीरधिजगौ । न च वाच्यमसावपवादविषय इति । अविहितोपनयनानामेव वेदाधिकारिणामपवादविषयत्वसम्भवादित्यत आह ॥ **विदुरादीनामिति** ॥ तेषां पूर्वजन्मन्युत्पन्नापरोक्षज्ञा(न) नित्वेनेतरशूद्रादिभ्यो विशिष्टत्वात् वेदार्थावधारणादि न निषिद्धमिति भावः । अतो हरिः शूद्राद्यैर्वेदविद्याविज्ञेयो न भवतीति सिद्धम् ॥

## गुर्वर्थदीपिका

परशुरामनिकटं गत्वा 'अहं ब्राह्मण' इत्यभिधाय वेदादिसकलविद्याः कर्णः पठितवानिति पौराणिकप्रसिद्धेः अखिलाः श्रुतीरधिजगावित्युक्तम् ॥ १,३,९ ॥

## भावबोधः

**शूद्रत्वाभावेत्यसूत्रयदिति ॥** तदभावनिर्धारण इत्यत्र तच्छब्देन शुगस्येत्यादिसूत्रे उपक्षिप्त-शूद्रसत्वस्य परामर्शादिति भावः । ब्रह्मणनयोग्यानां त्रैवर्णिकानामिति । एतच्छ्रुतिव्याख्यान-रूपायाम् ।

''आर्जवं ब्राह्मणे साक्षाच्छूद्रो नार्जवलक्षणः''

इति स्मृतौ ब्राह्मणप्रतियोगित्वेन शूद्रस्योपादानाच्छुतावपि ब्राह्मणशब्दस्त्रैवर्णिकपर एवेत्यर्थः ॥ **अर्थावधारणादीनामिति** ॥ अर्थावधारण इति श्रुत्यनुसारेण सूत्रेऽप्यर्थपदेन तदवधारणं ग्राह्यमिति भावः ॥ **अविहितोपनयनानामेवेति** ॥ अविहितोपनयनत्वे सत्य-निषिद्धाध्ययनानामुत्तमस्त्रीतिर्यगादीनामेवापवादविषयता । न तु निषद्धाध्ययनानां शूद्राणा-मित्यर्थः । 'ज्ञेयो न वेदैः शूद्राद्यैः' इति संक्षेपं मनसि निधायाह– **अत इति** ॥

अत्राद्ये-पौत्रायणकर्तृकवेदविद्याविचारस्य पूर्वपक्षसाधकविशिष्टबुद्ध्यादिमत्त्वोपोद्बलकतया शूद्रस्य वेदविद्याधिकारे लिङ्गत्वनिरासाय पौत्रायणस्य शूद्रत्वाभावसिद्ध्यर्थमहहारे त्वा शूद्रेति वाक्यगतशूद्रशब्दस्य यौगिकत्वोक्तिः । द्वितीये– श्रौतशूद्रशब्दस्य यौगिकत्वकल्पकस्य रूढि-बाधकस्य पौत्रायणक्षत्रियत्वसाधकवाक्यशेषस्थरथित्वरूपलिङ्गस्योक्तिः । तृतीये– शूद्रेति रथित्वाभावसिद्ध्यर्थं रथित्वव्यापकवेदाध्ययनप्रयोजकोपनयनादिसंस्कारस्य श्रुत्यवष्टम्भेणा-भावोक्तिः । चतुर्थे– पूर्वसूत्रोक्तस्य शूद्रस्योपनयनादिसंस्काराभावाभिलापस्य शूद्रे तन्निषेध-निबन्धनत्वसिद्धय उपनयनादिसंस्कारकारणशूद्रत्वाभावनिश्चयेन प्रवृत्तिरूपलिङ्गस्योक्तिः । पञ्चमे– विशिष्टबुद्ध्यादिमत्त्वरूपयुक्तेर्न केवलमुपोद्बलकाभावेन दौर्बल्यम् । किन्त्वनिषिद्धत्व-सहितविशिष्टबुद्ध्यादिमत्त्वरूपोपाधिग्रस्तत्वेनापीत्याशयेनोपाधेः पक्षाद्व्यावृत्तिसिद्धये शूद्रस्य वेदश्रवणाध्ययनादेर्निषेधकप्रमाणोक्तिरिति सूत्रक्रमः ॥

## भावदीपः

**ब्रह्माणनेति** ॥ 'आर्जवं ब्राह्मणे साक्षात् शूद्रो नार्जवलक्षणः । गौतमस्त्विति' विज्ञाय 'सत्यकाममुपानयत्' इति श्रुतिव्याख्यानरूपस्मृतौ ब्राह्मणप्रतियोगित्वेन शूद्रस्योक्तेः श्रुतावपि ब्राह्मणशब्दो वेदाध्ययनयोग्यत्रैवर्णिकपर इत्यर्थः । हेतोरप्रयोजकत्वं निराह ॥ **अन्यथेति** ॥ भाष्यं योजयितुं साध्यं पूरयति ॥ **न विशिष्टेति** ॥ परोक्तहेतोरप्रयोजकत्वं वक्तुं प्राग्देवता-नयोक्ताधिकारप्रयोजकं हेतुं स्मारयित्वा शूद्रे तादृशप्रयोजकाभावपरतया भाष्यं व्याचष्टे ॥ **अनिषिद्धत्वे सतीति** ॥ यस्त्वया प्रयुक्तः स त्वप्रयोजकः यस्तु प्रयोजकत्वेन वेदाधिकारे विवक्षितः स तु शूद्रे नास्ति विशेषणाभावादिति भावः । स्मृत्युक्तेरुपयोगमाह ॥ **श्रुताविति** ॥ **अविहितेति** ॥ अविहितोपनयनत्वे सत्यनिषिद्धाध्ययनानामुत्तमस्त्रीतिर्यगादीनामेवापवाद-विषयता । न तु निषिद्धाध्ययनानामित्यर्थः । एवं चेत्सच्छूद्रादौ मुक्त्यभाव इति शङ्कां निरस्य-न्नुपसंहरति ॥ **अत इति** ॥ रथरूपलिङ्गेन क्षत्रिये शूद्रशब्दस्य यौगिकतया लिङ्गदर्शनाभावेन संस्कारशून्यत्वेन । गौतमप्रवृत्तिरूपलिङ्गदर्शनेन निषिद्धत्वेन च शूद्रस्याधिकाराभावादित्यर्थः ॥ **वेदेति** ॥ ज्ञेयो न वेदैः शूद्राद्यैरिति सङ्क्षेपभाष्योक्तेरिति भावः । वेदेत्युक्त्या 'स्त्रीशूद्र-ब्रह्मबन्धूनां तन्त्रज्ञानेऽधिकारिता' इत्यादेर्वेदादन्येन ज्ञेय इति दर्शितम् । फलं तु प्रागेवोक्तमिति भावः ॥

## अभिनवचन्द्रिका

**न च वाच्यमिति** ॥ शच्यादिषु वेदविचारदर्शनेनाऽधिकारानुक्तौ अनधिकारप्रतिपादक-संस्काराभावलिङ्गस्यापवादवत् कर्णेऽपि वेदविचाररूपलिङ्गदर्शनेनाऽपवादविषयोऽसाविति न वाच्यमित्यर्थः । **अविहितोपनयनानामेवेति** ॥ स्त्रीषु उपनयनविध्यभावेन वेदविचारदर्शन-स्याऽधिकारानुमापकत्वेऽपि कर्णस्य विहितसंस्कारलोपेन क्षत्रबन्धुत्वात् तदध्ययनस्याऽन्याय्य-त्वेन अधिकारानुमापकत्वायोगात् नासावपवादविषय इत्यर्थः । **निषिद्धमिति भाव इति** ॥ सताऽसता वा 'येन स्यात् केन स्यात् तेनेदृश एव' इति कामचारानुज्ञासद्भावात् तेषां निषेधा-गोचरत्वमिति भावः । इदमुक्तं भवति । नास्त्येव विदुरादीनामधिकारः, तथापि वेदार्थाऽव-धारणादिकं युज्यते । तेषामुत्पन्नज्ञानत्वेन कामचारित्वात् । लेपविधुरत्वेन अर्थाऽवधारणादीनां पापहेतुत्वाभावात् । तदिदमुक्तम् । 'उत्पन्नज्ञानत्वात् कश्चिद्विशेष' इति । अन्यथा

(अभिनवचन्द्रिका)
'अस्त्यधिकार' इत्यवक्ष्यत् । अत एव टीकायां 'वेदार्थावधारणादि न निषिद्धम्' इत्युक्तम् । अन्यथा विहितमित्यवक्ष्यत् इति ।

एतेन विदुरादीनामुत्पन्नज्ञानत्वेनाधिकारवत् पौत्रायणस्याप्युत्पन्नज्ञानत्वादेव वेदविद्याधिकार इति समाधातुं शक्यत्वात् तस्य शूद्रत्वनिरासाय सूत्रद्वयप्रणयनं व्यर्थम् । वस्तुस्थितिकथनस्यागतिकागतित्वादिति परास्तम् । अत एव च पौत्रायणस्य वेदाधिकारदर्शनात् शूद्राणामधिकार इतिवत् विदुरादीनामधिकारदर्शनेन शूद्राणामधिकार इत्याशङ्क्य, सूत्रकृता न समाहितम् । विदुरादीनामधिकाराभावेन दृष्टान्तीकर्तुमशक्यत्वात् । अत एव च 'मनुष्यत्वप्रदर्शनं च सन्देहबीजम्' इति टीकावाक्यमुपपन्नं भवति । यद्यपि सिद्धान्तसाधकत्वात् 'संस्कारपरामर्शात्' इत्यादिसूत्रत्रयं निर्माय, 'शुगस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते हि, क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात्' इति सूत्रद्वयं प्रणेयम्, तथापि पौत्रायणस्य शूद्रत्वनिरासाभावसिद्धान्तोदयो न स्यात् । शूद्रस्याप्यधिकारदर्शनेन बाधितविषयत्वात् । न च बाधितं साधनार्हम् । तथा सति मम कर्णं प्रविश्य गजो गर्जतीत्यस्यापि साधनप्रसङ्गात् । एवं च पौत्रायणस्य शूद्रत्वं सूत्रद्वयेन निषिध्य शूद्रानधिकारं सम्भावितं कृत्वा 'संस्कारपरामर्शादित्यादिसूत्रत्रयेणाऽधिकाराभावं साधितवानिति द्रष्टव्यम् ।

शिष्यास्तु मन्यन्ते ॥ अस्ति शूद्राणामधिकारो मनुष्यत्वात् । न च मनुष्यत्वेऽपि कुतोऽधिकार इति वाच्यम् । भगवता सूत्रकृताऽधिकारप्रयोजकतया 'मनुष्याधिकारत्वात्' इत्यनेन मनुष्यत्वस्याभिधानात् । अन्यथा त्रिवर्णानामपि न स्यात्, अविशेषात् । अधिकारप्रयोजकतया विशिष्टबुध्यादिमत्त्वमेव विवक्षितं न मनुष्यत्वमिति चेत्, एवमपि शूद्रस्याऽधिकारः विशिष्टबुध्यादेस्तत्रापि सत्त्वात् । शूद्रस्यापि पौत्रायणस्य वैदिकसंवर्गविद्याध्ययनदर्शनाच्चेति ।

**सिद्धान्तस्तु**– न शूद्राणामधिकारः । संस्कारविधुरत्वात् । अध्ययनादेः संस्कारसापेक्षत्वात् । ननु शूद्राणामपि संस्कारनिषेधाभावात् संस्कारस्स्यात् । ततश्च वेदविद्याधिकारोऽपीति चेत्, न । नाग्निर्न यज्ञो न क्रिया न संस्कारा न व्रतानि शूद्रस्य' इति निषेधसद्भावात् । न च नेयं श्रुतिः संस्कारनिषेधिका, किन्तु तदभावपरेति वाच्यम् । शूद्रत्वाभावं निश्चित्य सत्यकामोपनयने गौतमस्य प्रवृत्तेः अस्याः श्रुतेः शूद्रसंस्कारनिषेधपरत्वस्यैवोचितत्वात् । 'श्रवणे त्रपुजतुभ्यां श्रोत्रपरिपूरणम्, अध्ययने जिह्वाच्छेदः अर्थावधारणे हृदयविदारणम्' इति

(अभिनवचन्द्रिका)

निषेधात्। 'नाग्निर्न यज्ञः शूद्रस्य' इति स्मृतेश्च । ननु शूद्रस्यापि पौत्रायणस्य वैदिकसंवर्ग-विद्याध्ययनदर्शनात् अस्त्येव शूद्राणामधिकारः । न च पौत्रायणः शूद्र एव नेति वाच्यम् 'अहहारे त्वा शूद्र' (छा.४-२-३) इति सम्बोधितत्वेन तस्य शूद्रत्वादिति चेत्, न भवेदयं शूद्राणामधिकारः यदि पौत्रायणः शूद्रो भवेत्, न चासौ शूद्रः प्रमाणाभावात् । न च शूद्रशब्देन सम्बोधनमेव तत्र प्रमाणमिति वाच्यम् । शोकाद्रवणयोगेन तत्र शूद्रशब्दस्य प्रवृत्तत्वेन तस्य रूढिलभ्यवर्णावरत्वसाधकत्वायोगात् । किं च नासौ पौत्रयणः शूद्रः । क्षत्रियत्वानुभवात् । अन्येषाम् 'अयमश्वतरीरथ' इति चैत्ररथेन लिङ्गेन तत्र क्षत्रियत्वावगतेश्च । एवं च शूद्रादीना-मधिकाराभावात्, शूद्रादिभिः वेदविद्याविज्ञेयो न भवति भगवान् हरिरिति सिद्धमिति ।

## वाक्यार्थमुक्तावली

क्षत्रियत्वावगतेरित्यस्य तदाद्रवणात् प्रवृत्त्यनुबद्धतया व्याख्यातुं पूर्वसूत्रभाष्ययोः श्रुति-विसंवादमाशङ्क्य परिहरति ॥ **नन्विति** ॥ **त्रैवर्णिकानामिति** ॥ 'आर्जवं ब्राह्मणे साक्षाच्छूद्रो नार्जवलक्षणः' इति स्मृतौ ब्राह्मणप्रतियोगित्वेन शूद्रस्योपादानात् श्रुतावपि ब्राह्मणशब्दः त्रैवर्णिकपर एवेति भावः ।

ननु नात्र श्रुतौ शूद्रत्वाभावनिश्चयानन्तरं संस्कारे प्रवृत्तिरित्युच्यते । किन्तु अब्राह्मत्वा-भावनिश्चयानन्तरमिति । शूद्रोऽपि ब्राह्मणयोग्यत्वात् ब्राह्मण एव अत्र विवक्षितो न त्रैवर्णिक-मात्रः । आर्जवं ब्राह्मण इत्यत्र ब्राह्मणशब्दो जातिपर एवेत्याशयेन शूद्रस्य ब्रह्मशब्दित वेदविद्याधिकारो युक्तः इत्युक्तयुक्तिमाशंकते ॥ **शूद्रे इति** ॥ सूत्रे तदभावेति प्रकृतत्वात् शूद्रस्यान्वेति अर्थपदेन अर्थावधारणं गृह्यते । अनधिकारं जैमिनिरित्यतो नाधिकार इत्यन्वेति शिष्टं स्पष्टम् ॥ **न च वाच्यमिति** ॥ उत्तमस्त्रीतिर्यगादिव असावप्यपवादविषयः । इति न च वाच्यमित्यर्थः ॥ **विहितेति** ॥ अविहितोपनयनानाम् उत्तमस्त्रीणां संस्काराभावेऽपि अपवाद-विषयतया वेदाधिकारिणां जरितर्यादीनामेवापवादविषयता न तु निषिद्धतया वेदानधिकारिणा-मिति वा । ज्ञेयो न वेदैः शूद्राद्यैरिति संक्षेपं भाष्यं मनसि निधायाधिकरणार्थमुपसंहरति ॥ **अत इति** ॥ वेदविद्येत्युक्त्या सच्छूद्राणां तत्र ज्ञानेन, मोक्षः इति सूचयति । अत्राद्ये शूद्रस्याधिकार सिद्धये पौत्रायणे प्रयुक्तशूद्रश्रुतेः यौगिकतयाधिक्षत्रियेऽपि सावकाशत्वोक्तिः द्वितीये रूढिबाधकयोगात्मकरथित्वलिङ्गोक्तिः । तृतीये रथित्वलिङ्गस्य सावकाशतया बाधकत्वमिति

(वाक्यार्थमुक्तावली)
शङ्कानिरासाय तद्व्यापकवेदाध्ययनप्रयोजकोपनयनसंस्कारस्य श्रुत्यवष्टम्भेनाभावोक्तिः, चतुर्थे पूर्वे सूत्रोक्तस्य शूद्रस्योपनयनाभावाभिलापस्य शूद्रे तन्निषेधनिबन्धनत्वसिद्धये शूद्रत्वाभावनिश्चय एव संस्कारे प्रवृत्त्यन्यथानुपपत्त्युक्तिः । पञ्चमे तु नात्र शूद्रत्वाभावनिश्चयानन्तरसंस्कारे प्रवृत्ति- रुच्यते । किन्त्वब्राह्मणत्वाभावनिश्चये शूद्रश्च ब्रह्माणनयोग्यो विशिष्टबुध्यादिमत्वादिति पूर्वपक्षान्तरङ्गयुक्तिमाशङ्क्य युक्तेरनिषिद्धत्वे सति विशिष्टबुध्यादिमत्वमुपाधिरितिभावेन निषेधकप्रमाणोक्त्या पक्षाद्व्यावृत्युक्तिरिति सूत्रक्रमः ॥

## तत्त्वसुबोधिनी

नैतदब्राह्मणो विवेक्तुमर्हतीति व्यतिरेकव्याप्तेः सत्त्वादिति । शूद्रत्वाभावमनुमाय प्रवृत्तिरिति शङ्कते ॥ **ननु श्रुताविति** ॥ नैतदब्राह्मण इति श्रुतावित्यर्थः ॥ शूद्रत्वाभावेत्यसूत्रयदिति ॥ तदभावनिर्धारण इत्यत्र तच्छब्देन शुगस्येत्यादिसूत्रैरुपक्षिप्तशूद्रत्वस्य परामर्शादिति भावः । उत्तरमाह ॥ **ब्राह्मणपदेनेति** ॥ ब्रह्माणनयोग्यानां त्रैवर्णिकानाम् उक्तेरिति । एतत् श्रुति- व्याख्यानरूपम् 'आर्जवं ब्राह्मणे साक्षात् शूद्रो नार्जवलक्षण' इति स्मृतौ ब्राह्मणप्रतियोगित्वेन शूद्रस्योपादानाच्छ्रुतावपि ब्राह्मणशब्दः त्रैवर्णिकपर एवेत्यर्थः । तथा च श्रुतौ ब्राह्मण- प्रतियोगित्वेन शूद्रस्याभिप्रेतत्वात् सूत्रे भाष्ये तदुक्तिः युक्तेति भावः ॥ **अर्थावधारणादिना- मिति** ॥ अर्थावधारण इति श्रुत्यनुसारेण सूत्रेऽपि अर्थपदेन तदवधारणं ग्राह्यमिति भावः ॥ **अविहितोपनयनानामेवेति** ॥ अविहितोपनयनत्वे सति अनिषिद्धाध्ययनानामुत्तमस्त्रीतिर्य- गादीनामेवापवादविषयता न तु निषिद्धाध्ययनानां शूद्राणामित्यर्थः । अत्राद्ये सूत्रे पौत्रायणस्य शूद्रत्वाभावसिद्ध्यर्थम् । अह हारेत्वाशूद्रेति वाक्यगतशूद्रशब्दस्य यौगिकत्वोक्तिः । द्वितीये तस्य क्षत्रियत्वसाधकरथित्वरूपलिङ्गोक्तिः । तृतीये शूद्रे रथित्वव्यापकवेदाध्ययनप्रयोजकोप- नयनादिसंस्कारस्याभावोक्तिः । चतुर्थे उपनयनादिसंस्काराभावाभिलापस्य शूद्रे तन्निषेध- निबन्धनत्वसिद्धये उपनयनादिसंस्कारकरणे शूद्रत्वाभावनिश्चयेन प्रवृत्तिरूपलिङ्गस्योक्तिः । पञ्चमे शूद्रस्य वेदश्रवणाध्ययनादेः निषेधप्रमाणोक्तिरिति सूत्रक्रमः ॥

## वाक्यार्थमञ्जरी

**शूद्रत्वाभावेत्यसूत्रयदिति** ॥ तदभावनिर्धारण इत्यत्र तच्छब्देन शुगस्येत्यादिपूर्वसूत्रै-

(वाक्यार्थमञ्जरी)

रुपक्षिप्तशूद्रत्वस्य परामर्शादिति भावः । उत्तरयति ॥ **ब्राह्मणपदेनेति** ॥ 'आर्जवं ब्राह्मणे साक्षाच्छूद्रो नार्जवलक्षण' इति श्रुतिसमाख्यानरूपायां स्मृतौ ब्राह्मणप्रतियोगित्वेन शूद्रस्योपादानात् श्रुतावपि ब्राह्मणशब्दो वेदज्ञानयोग्यत्रैवर्णिकपर इति भावः । शङ्कते ॥ **शूद्र इति** ॥ अप्रयोजकत्वं परिहरति ॥ **अन्यथेति** ॥ ॐ श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॐ ॥ अर्थपदेन अर्थावधारणमुच्यते । वेदश्रवणाध्ययनार्थावधारणानां श्रवण इत्यादिना प्रतिषेधान्नाग्निरित्यादिस्मृतेश्च न शूद्रस्याधिकार इत्यर्थः । धर्मो यमः व्याधः एकलव्यः अधिजगौ अधीतवान् ॥ **अविहितोपनयनानामेवेति** ॥ अविहितोपनयनत्वे सत्यनिषिद्धाध्ययनानामुत्तमस्त्रीतिर्यगादीनामेवापवादविषयत्वम् । न तु निषिद्धाध्ययनानामपीत्यर्थः ।

॥ इति अपशूद्राधिकरणम् ॥

# १०. कम्पनाधिकरणम्

## सूत्रभाष्यम्

'यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम् ।
महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति' (क.उ. २-३-२)

इत्युद्यतवज्रज्ञानान्मोक्षः प्रतीयत (श्रूयत) इत्यतोऽब्रवीत् ।

॥ ॐ कम्पनात् ॐ ॥ ३९ ॥

एजतीति कम्पनवचनादुद्यतवज्रो भगवानेत्र । 'को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्' (तै.उ.२-७) इति हि श्रुतिः । 'प्राणस्य प्राणमुत चक्षुषश्चक्षुः' इति (बृ.उ.६-४-१८) च ।

'नभस्वतोऽपि सर्वाः स्युश्चेष्टाः भगवतो हरेः ।
किमुतान्यस्य जगतो यस्य चेष्टा नभस्वत' इति (च) (हि) स्कान्दे ॥

'चक्रं चङ्क्रमणादेष वर्जनाद्वज्र(म्) उच्यते ।
खण्डनात्खड्ग एवैष हेतिनामा स्वयं हरिरिति ब्रह्मवैवर्ते ॥

## सत्तर्कदीपावली

ऊर्ध्वं प्राणमुन्नयतीत्यत्र विष्णुः प्रतिपाद्यत इति यदुक्तं तद् दृढीकर्तुं तत्प्रकरणस्थं वाक्यमुदाहृत्य विचारयति ॥ **यदिदमित्यादिना** ॥ नात्र वज्रशब्दाभिधेयायुधविशेषः प्रतिपाद्यते । भयादग्निस्तपति भयात्तपति सूर्य इत्युत्तरवाक्यविरोधात् । 'भीषास्माद्वातः पवते' इत्यादौ विष्णुभयाद्धि सर्वकम्पनं श्रूयते । अतो दैत्यैर्दूरादेव वर्ज्यते परिह्रियते न संमुखीक्रियत इति वज्रशब्दाभिधेयो विष्णुरित्यनवद्यम् ॥

## तत्त्वप्रदीपिका

यदिदं जगद्दृष्टं श्रुतं च तत्सर्वं प्राण एजति प्राणाधारं कम्पते । एजृ कम्पन इति धातोः । प्राणान्निस्सृतं च तदेतद्वज्रं ये विदुस्तेऽमृता भवन्ति । भाययतीति भयम् । 'कम्पनात्' ॥

(तत्त्वप्रदीपिका)

सर्वजगतस्तदाधारकम्पनवचनाद्वज्रो विष्णुरेव । न ह्यन्यस्य सर्वचेष्टकत्वं युक्तम् । नापि सदोद्यतत्वम् । चंक्रमयतीति चक्रम् ।

## तत्त्वप्रकाशिका

अत्र लोकप्रसिद्ध्या भगवल्लिङ्गेन च साधारणवज्रनाम्नो हरौ समन्वयप्रतिपादनादस्ति शास्त्रादिसङ्गतिः । श्रुत्यादिसङ्गतिं विषयादिकं च सूचयति ॥ यदिदमिति ॥ तमेवं विद्वा-नित्यादौ भगवज्ज्ञानादेव मोक्ष इत्युक्तम् । काठके तु यदिदं किञ्चेति वज्रज्ञानान्मोक्षः श्रूयते । तस्य च विष्णोरन्यत्वेऽन्यज्ञानान्मो(क्षापत्त)क्षोपपत्तेरवश्यं निर्णेयत्वम् । स वज्रोऽत्र विषयः । किं विष्णुरिन्द्रायुधं वेति सन्देहः । उक्तसाधारण्यं सन्देहबीजम् । इन्द्रायुधमेवेदं वज्रमिति पूर्वः पक्षः । वज्रश्रुतेस्तत्र रूढत्वादुद्यतत्वलिङ्गाच्च । तद्धि आयुध एवोपपद्यते । न च वज्रज्ञानेन मोक्षोक्तेर्विष्णुरिति वाच्यम् । लिङ्गमात्राच्छ्रुतिलिङ्गयोः प्राबल्यात् । न च लिङ्गस्य निरव-काशतया प्राबल्यम् । श्रुतिलिङ्गयोरपि तथात्वात् । अतो वज्रमिन्द्रायुधमेवेति न विष्णुज्ञानादेव मोक्ष इति भावः । यत्किंच सर्वं जगत्प्राणे स्थितं प्राणान्निःसृतं तदिदं जगद्यस्मादेजति यत्प्रेरणया चेष्टते तन्महद्भयङ्करं वज्रं ये विदुस्तेऽमृता भवन्तीत्यर्थः । प्राणः सर्वमिदं किं च जगच्च यस्मान्निःसृतं चेष्टते चेति वा । सर्वं जगद्यस्मान्निःसृतं स प्राणो यस्माच्चेष्टत इति वा । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ अयं वज्रो भगवानेव । वज्रस्य सर्वजग-च्चेष्टकत्वश्रवणात् । न चोद्यतत्वलिङ्गविरोधः । उद्यमित्वार्थतयोपपत्तेरिति भावः । लिङ्गमात्रेण कथमयं निश्चयः । लिङ्गस्य निरवकाशत्वादेवेत्याह ॥ को हीति ॥ यदा सामान्यतो जगच्चेष्टकत्वमेव विष्ण्वेकनिष्ठं तदा सुतरां वज्रस्योक्तं सर्वप्रवर्तकप्राणचेष्टकत्वं तदेकनिष्ठमिति भावेनाऽऽह ॥ प्राणस्येति ॥ ननूद्यतत्वलिङ्गस्य सावकाशत्वेऽपि वज्रश्रुतेर्निरवकाशत्वान्निरव-काशेनापि लिङ्गेन कथं निर्णय इत्यतः श्रुतेरपि विष्णाववकाशं स्मृत्या दर्शयति ॥ चक्र-मिति ॥ न च योगस्य रूढेर्दौर्बल्यादनिर्णय इति वाच्यम् । स्मृत्युक्तत्वेन विद्वद्रूढेरपि सत्त्वात् । आयुधानामहं वज्रम् । वज्रं प्रहरणोत्तमम् इति च । नन्वेवं सावकाशत्वे श्रुतिलिङ्गयोर्य एतद्विदुरित्युक्तलिङ्गं विहाय किं लिङ्गान्तरग्रहणेन । मैवम् । तदविहायैव लिङ्गान्तरस्याप्युक्त-त्वात् । एतदन्यत्राप्यनुसन्धेयम् । अतो विष्णुरेव वज्र इति तज्ज्ञानादेव मोक्ष इति सिद्धम् ॥

## भावबोधः

अत्र लोकप्रसिद्ध्या भगवल्लिङ्गेन च साधारणेति ॥ न चैवं प्राणादिशब्दादीनामप्युभयत्र

(भावबोधः)

प्रसिद्धिः स्यादिति वाच्यम्, लिङ्गानां तत्पादद्वयसिद्धभगवत्परत्वमुपजीव्य ब्रह्मलिङ्गस्य विष्णौ वज्रशब्दादिप्रसिद्धिद्योतकत्वाङ्गीकारात् । प्राणादिशब्दसमभिव्याहृतभगवल्लिङ्गस्य न प्रथमपादतः पूर्वं विष्णौ समन्वयः केनचित् सिद्धः । येन तद्बलात्तेषां विष्णुपरत्वसिद्ध्योभयत्र प्रसिद्धत्वं स्यात् । तदुक्तमनुव्याख्याने–

'उभयगतत्वं च स्यादतो लिङ्गशब्दयोः' ।

इति । न चैवं नामपादन्यायैरादित्यादिनाम्नामपि ब्रह्मणि समन्वयस्योक्तप्रायत्वात् । तत्साहित्येन सर्वगतत्वादिलिङ्गानामप्युभयत्र प्रसिद्धता स्यादिति वाच्यम्, ततः पूर्वं नामपादे लिङ्गस्यानुक्ततया सर्वपुरुषाभिमुख्यादिभिरादित्ये प्रसिद्धैर्लिङ्गैरादित्यशब्दस्यान्यत्र प्रसिद्धेरुप-जीवनस्योक्तत्वादिति द्रष्टव्यम् ॥ **श्रुत्यादिसङ्गतिमिति** ॥ अव्यवहितपूर्वाधिकरणसङ्गतिस्तु पूर्वाधिकरणे रुद्रशब्दवच्छूद्रशब्दस्य यौगिकत्वाङ्गीकारेण तद्रूढेः पूर्वपक्षसाधकत्वनिरासवदिहापि वज्रशब्दस्य यौगिकत्वाङ्गीकारेणैव तद्रूढेः पूर्वपक्षसाधकत्वनिरासात् ।

यद्वा मनुष्याधिकारत्वादित्युक्ते स्मारितस्य देवानां वेदविद्याधिकारस्य शूद्राणां तदभावस्य चोपेक्षानर्हतया प्रसङ्गप्राप्तौ तदुभयविचारेऽधिकरणद्वयेन कृते प्रतिबन्धकजिज्ञासाविच्छेदो ह्यवसर इति समन्वयप्रतिपादनेवावसरप्राप्ते प्राणप्रेरक इति संक्षेपानुसारेण वामनाधिकरणे विष्णुनिष्ठत्वेन निर्णीतेन प्राणादिव्यवस्थापकत्वरूपप्राणादिचेष्टकत्वलिङ्गेनात्र वज्रशब्दस्य विष्णौ समन्वयसमर्थनादस्याधिकरणस्य वामनाधिकरणेनैव सङ्गतिरिति ज्ञातव्यम् ॥ **किं विष्णुरिति** ॥ अत्र 'महद्भयं वज्रम्' इत्युक्तवज्रशब्दवाच्यं किमिन्द्रायुधमुत विष्णुरिति चिन्ता । तदर्थं वज्रशब्दोद्यतत्वलिङ्गाभ्यां सर्वचेष्टकत्वलिङ्गबाध उत तेन लिङ्गेन तयोर्बाध इति । तदर्थं श्रुतिलिङ्गयोर्विष्णावनवकाशे सर्वचेष्टकत्वस्य विष्णुमात्रनिष्ठत्वे च प्रमाणं नास्त्युतास्तीति । वज्रश्रुतेस्तत्र रूढत्वादुद्यतलिङ्गाच्चेति । उद्यतवज्रज्ञानादिति भाष्याभिप्रायं वदतानेन ग्रन्थेन वज्रशब्दउद्यतत्वलिङ्गं चेति न्यायविवरणमपि व्याख्यातं भवति ॥ **लिङ्गमात्राच्छ्रुतिलिङ्गयोः प्राबल्यादिति** ॥ अनेन तादृग्द्वयमिति न्यायविवरणतद्वयशब्दाभिप्राय उक्तो भवति । श्रुतिलिङ्गयोरपि तथात्वादित्यनेन तद्गततादृगित्येतदुक्ततात्पर्यमिति ज्ञातव्यम् ॥ **प्राणे स्थितं प्राणान्निःसृतमिति** ॥ प्राण इति सप्तमीमङ्गीकृत्य तद्बलात् स्थितमित्यध्याहृत्य निःसृतशब्दानु-रोधात् प्राणादित्यध्याहृत्य वा प्राण इत्यस्य निमित्तसप्तमीत्वं वा विवक्षित्वा यस्मादित्यर्थत्वेन

(भावबोधः)

यदिदं किञ्चेति वाक्यं योजितमिति ज्ञातव्यम् । सर्वं जगादिति तृतीयव्याख्याने यदित्यस्यावृत्तिः । यच्छब्दबलात् प्राणवाचकतया स इति तच्छब्दलाभ इति द्रष्टव्यम् । अत्र को ह्येवान्यात् इत्यादिभाष्यउदाहरिष्यमाणश्रुत्यनुसारेणाद्यं व्याख्यानद्वयम् । प्राणं 'नभस्वतोऽपि सर्वा स्युः' इति प्रमाणानुसारेण तृतीयं व्याख्यानमिति ज्ञेयम् ॥ **उद्यमित्यार्थतयोपपत्तेरिति भाव इति** । उद्यतवज्र इति भाष्ये उद्यतशब्दप्रयोगाभिप्रायं प्रतिपादयतानेन ग्रन्थेनोद्यतत्वलिङ्गस्य च विष्णावेवावकाशः । उद्यमित्वमेवोद्यमत्वमिति न्यायविवरणं व्याख्यातं भवति ॥ **श्रुतेरपि विष्णाववकाशम् इति** ॥ अनेन वज्रश्रुतेर्विष्णोरेवावकाश इति न्यायविवरणभागोऽप्युक्तार्थो भवति । यद्यपि काठकभाष्ये–

'वज्रवद्भयदं चैव स्वधर्मस्यातिलङ्घनम्' ॥

इति वज्रशब्दस्य गौणत्वमुक्तम् । तथापि तद्वाक्यस्य तावतापि विष्णुपरत्वं सिध्यतीति तत्तत्रोक्तम् । इह तु समन्वयसूत्रप्रतिज्ञातमुख्यार्थत्वोपयोगादिदमेवोक्तमिति भावः । **सावकाशत्वे श्रुतिलिङ्गयोरिति** ॥ तथा च पूर्वपक्षप्रापकाभावेन मोक्षजनकज्ञानविषयत्वस्यान्यगतत्वशङ्काया अयोगेन सिद्धान्ते निर्णायकत्वसम्भवादिति भावः ॥ **एतदन्यत्राप्यनुसन्धेयमिति** ॥ यत्र पूर्वाधिकरणसिद्धसमन्वयश्रुतिलिङ्गादेर्विष्णुनिष्ठत्वाक्षेपः पूर्वपक्षप्रापकश्रुत्यादेः सिद्धान्ते विष्णाववकाशाभिधानञ्च तत्र पूर्वाधिकरणसिद्धस्य श्रुतिलिङ्गादेराक्षेपायोगेन विष्णुमात्रनिष्ठत्वानपायात् सिद्धान्तनिर्णायकत्वं सम्भवतीत्यनुसन्धेयमित्यर्थः । यथा अत एव प्राण इत्यादौ प्राणादिशब्दानां विष्णाववकाशो महान् भोगः इत्युक्तपूर्णानन्दत्वादेरिति ॥

## भावदीपः

न्यायविवरणेऽनुक्तेर्भाष्यदिशा स्वयं साधारण्यमाह ॥ **लोकेति** ॥ एवं हि प्राणाकाशाद्याद्यपादीयनाम्नामप्येवं स्यादिति चोद्यनिरासादि तु चन्द्रिकायां व्यक्तम् । सङ्गतिपरत्वेन तावद्भाष्यं व्याचष्टे ॥ **तमेवमिति** ॥ नेतरोऽनुपपत्तेरिति सूत्रभाष्ये उक्तमित्यर्थः । शेषोऽयम् । उद्यतवज्रेति पदद्वयभावमाह ॥ **तस्य चेति** ॥ वज्रश्रुतेरुद्यतत्वलिङ्गाचेन्द्रायुधत्व इत्यर्थः । अध्याहृतवाक्यभावमाह ॥ **अन्यज्ञानेति** ॥ इतिसङ्गतिसम्भवान्निर्णेयत्वं तस्येत्यन्वयः । पूर्वपक्षतद्युक्तितत्फलोक्तिपरत्वेनापि भाष्यं व्याचष्टे ॥ **इन्द्रायुधमिति** ॥ वज्रशब्द उद्यतत्वलिङ्गं

(भावदीपः)

चेति तादृग्द्वयमिति न्यायविवरणानुरोधेनोद्यतवज्रेति पदद्वयं श्रुतिलिङ्गरूपयुक्तिपरत्वेन व्याचष्टे ॥ **वज्रश्रुतेरिति** ॥ योगवृत्या श्रुतिर्विष्णावस्त्वित्यत आह ॥ **तत्र रूढत्वादिति** ॥ तथात्वे सर्वशब्दानां सर्वत्र यौगिकत्वसम्भवेनाव्यवस्थानात् प्राणाकाशादिशब्देष्वपि हरौ योगवृत्तिरिह पूर्वपक्षे न सम्मतेति भावः । लिङ्गस्यापि निरवकाशत्वमाह ॥ **तद्धीति** ॥ तेनेन्द्रो वज्र-मुद्गच्छन् । 'उद्यतायुधदोर्दण्डा' इत्यादावायुधे प्रसिद्धत्वादिति हेरर्थः । श्रुतिलिङ्गोपयोक्तरुपयोगं वक्तुमाह ॥ **न चेति** ॥ द्वयोरपि निरवकाशत्वोक्तेः फलमाह ॥ **न च लिङ्गस्येति** ॥ एतेन तादृग्द्वयमित्येतद्विवृतं ध्येयम् । फलोक्त्योपसंहरति ॥ **अत इति** ॥ निरवकाशश्रुतिलिङ्ग-भावादित्यर्थः । श्रुतित्वनिरवकाशत्वाभ्यां प्रबलवज्रश्रुत्यैव निरवकाशस्वभावदुर्बललिङ्गबाधः सुशकः । तथाप्यभ्युच्चयतया लिङ्गोक्तिः कम्पकत्वरूपसिद्धान्तलिङ्गस्य वज्रनिष्ठताद्योतनाय । 'प्राणाख्ये तु हरौ सर्वमेजत्यस्माच्च निःसृतम् । वज्रवद्भयदं चैव स्वधर्मस्यातिलङ्घनः' इति काठकभाष्यानुरोधेन को हीति वक्ष्यमाणवाक्यानुगुणं श्रुत्यर्थमाह ॥ **यत्किञ्चेति** ॥ स्थित-मित्युक्त्या तद्भाष्योक्तस्मृतावपि शेष इति दर्शितम् । स्मृतावस्मादिति पदं पूर्वत्रोत्तरत्र चान्वेतीति मत्वा श्रुतौ प्राणपदस्याऽऽवृत्तिविपरिणामाभ्यामर्थमाह ॥ **प्राणादिति** ॥ यदित्युक्तिलब्धोक्तिस्तदिति । यदित्यस्याऽऽवृत्या वा यत्तच्छब्दावध्याहृत्य वाऽर्थमाह ॥ **यस्मादिति** ॥ प्राणस्य प्राणमिति वक्ष्यमाणश्रुत्यनुरोधेन क्रमेणार्थान्तरद्वयमाह ॥ **प्राण इत्यादिना** ॥ यद्वा द्वितीयोऽपि को हीति वाक्यानुगुणः । तृतीयस्तु प्राणस्येत्यादिश्रुति-स्मृत्यनुगुण इति ध्येयम् ॥ एजतीत्यादिभाष्यं व्याचष्टे ॥ **अयमिति** ॥ प्रागुक्तमाद्यं श्रुत्यर्थ-मुपेत्याह ॥ **वज्रस्येति** ॥ उद्यमित्वमेवोद्यतत्वमिति न्यायविवरणदिशोद्यतवज्र इत्युक्तोद्यतपद-प्रयोगतात्पर्यमाह ॥ **न चेति** ॥ उत्पूर्वस्य यती प्रयत्न इत्यस्य कर्तर्यकारप्रत्यये सति उद्यतः उत्कृष्टप्रयत्नवानित्यर्थः । को हीति श्रुत्यर्थस्तु तद्धेतुसूत्रे प्रागेवोक्त इति भावः ॥ **सर्वप्रवर्त-केति** ॥ यद्यपि श्रुतौ प्राणमिति द्वितीयान्तद्वितीयप्राणस्य प्राणादयो वाक्यशेषादित्यग्रे वक्ष्यमाणदिशा विष्णुत्वेऽपि प्राणस्येत्यस्य न सर्वप्रवर्तकत्वं श्रुतम् । तथा नभस्वत इति स्मृत्यनुरोधात् यस्मिन्पञ्च पञ्चजना इति प्रतिशरीरन्तस्थत्वोक्त्या सर्वप्रवर्तकत्वमार्थिक-मित्यभिप्रेत्य सर्वप्रवर्तकप्राणेत्युक्तम् । वज्रशब्दस्योद्यतत्वस्य च विष्णावेवावकाश इति न्यायविवरणे द्वयोः सावकाशत्वमुक्त्वा उद्यमित्वमेवोद्यतत्वमिति लिङ्गस्य तद्विवृतम् । श्रुतेः सावकाशत्वस्य तत्राविवृतत्वाच्चक्रमित्यादिभाष्यं श्रुतेः सावकाशत्वविवरणपरतया व्याख्याति ॥ **नन्वित्यादिना** ॥ वर्जनात्सर्वदोषवर्जनादिति स्मृतावर्थः ।

(भावदीपः)

यत्तु काठकभाष्ये वज्रवद्भयदं चेति गौणत्वमुक्तं तत्तावताऽपि तद्वाक्यस्य ब्रह्मपरत्वसिद्धेः । इह तु समन्वयसूत्रे प्रतिज्ञातमुख्यार्थत्वाय योग एवोक्त इत्युक्तं चन्द्रिकायाम् । अत एव भाष्यद्वये श्रुतेः सावकाशताया द्वेधा विवृतत्वान्न्यायविवरणेनैतद्विवृतम् । स्मृत्या योगप्रदर्शनस्य कृत्यमाह ॥ **न चेत्यादिना** ॥ **विद्वद्रूढेरिति** ॥ 'विद्वद्रूढिर्वैदिका स्यात्सा योगादेव लभ्यत' इत्युक्तेरिति भावः । एतच्च कर्मनिर्णयटीकायां 'रूढियोगौ विना कश्चिन्नैवार्थो वेदगो भवेत्' इत्यस्य न केवलं रूढो नापि केवलयौगिकोऽस्तीत्यर्थः इतीतरेतरद्वन्द्वमाश्रित्य रूढियोगरूप-वृत्तिद्वयसमुच्चयपरत्वेन व्याख्यातत्वात्तदनुरोधेन रूढिमपि वक्तुमुक्तम् । वस्तुतस्तु । श्रुत्यर्थ-निर्णयार्थत्वात्स्मृतेस्तत्र निरूपितोऽर्थो ग्राह्यो वेदवाक्ये तदभावे तु लौकिक इति चन्द्रिकोक्त-दिशा केवलश्रौतस्मार्तयोगस्यापि निरवकाशत्वेन अज्ञरूढितोऽपि प्राबल्यम् । अन्यथा स्मृत्यादौ वैदिकपदानां योगोक्तिरनर्था स्यादिति ध्येयम् । न केवलमार्थिकी रूढिः प्रयोगसिद्धा चेति भावेन प्रयोगमाह ॥ **आयुधानामिति** ॥ गीतायाम् । वज्रमिति स्थलान्तरे ॥ **नन्वेव-मिति** ॥ पूर्वं श्रुतिलिङ्गयोर्निरवकाशत्व एव अमृतत्वहेतुवेदनत्वलिङ्गमाक्षिप्तम् । तयो-स्सावकाशत्वेनेतर इत्यत्र ब्रह्मधर्मतया निर्णीतस्याक्षेपकाभावात् सिद्धान्ते साधकं भवत्येवेति भावः ॥ **अन्यत्रापीति** ॥ शब्दादेवेत्यत्र विश्वदेवोपास्यत्वम् अन्तस्तद्धर्मेत्यादिष्वदृश्यत्व-महाभोगत्वादिकमित्यर्थः । यथा वाऽऽकाशोऽर्थान्तरत्वादीत्यत्र ब्रह्मश्रुतेरत्यागेन लिङ्गान्त-रोक्तिः । एवं तत्र तत्र । अत एव चन्द्रिकायाम् आनन्दमयनयमारभ्य प्रतिनयं तत्तत्प्रकरण-स्थानेकश्रुतिलिङ्गाद्युपदर्शनं कृतम् । प्रपञ्चितं चास्माभिः सङ्क्षेपभाष्यविवृतौ प्रतिनयम् । एतेन भूमेत्यत्र पूर्वपक्षिणाऽऽक्षिप्तस्यैव सम्प्रसादपदोक्तपूर्णसुखत्वस्य भूमा विष्णुरित्यत्र हेतुत्वम् । द्युभ्वाद्यायतनमित्यत्राऽऽक्षिप्तपरविद्याविषयत्वेन प्रकरणादिति प्रकरणस्य वैष्णवत्वोज्जीवन-मित्यादि समाहितं ध्येयम् । फलोक्त्योपसंहरति ॥ **अत इति** ॥ निरवकाशलिङ्गाभावा-दित्यर्थः । इति हेतोरित्यर्थः ॥

## अभिनवचन्द्रिका

**श्रूयत इति** ॥ अनेन मोक्षसाधनज्ञानविषयप्रतिपादकत्वम्, अस्याधिकरणस्य पूर्वाधिकरणेन सङ्गतिरित्युक्तं भवति ॥ **श्रुतिलिङ्गयोरपि तथात्वादिति** ॥ ननु मोक्षसाधनीभूतज्ञानविषयत्वं निरवकाशमित्यनुमतं न वा । नेति पक्षे श्रुतिलिङ्गयोरपि तथात्वादिति व्यर्थम् । जात्या श्रुतेः

(अभिनवचन्द्रिका)

प्राबल्येन श्रुतिमात्रेणैव बाधकसम्भवात् । आद्ये मोक्षसाधनीभूतज्ञानविषयत्वस्यौपचारिकत्वापातेन विष्णुज्ञानादेव मोक्ष इति पूर्वोक्ताक्षेपानुपपत्तिरिति चेत्, उच्यते । पूर्वपक्षिणा मोक्षसाधनीभूतज्ञानविषयत्वं लिङ्गं निरवकाशमित्यनुमतमेव । न चेन्द्रायुधे मोक्षजनकज्ञानविषयत्वलिङ्गस्यौपचारिकत्वापातेन विष्ण्वेकनिष्ठात्वाविघातात् पूर्वोक्ताक्षेपानुपपत्तिरिति वाच्यम् । भावानवबोधात् । तथा हि इदमिह पूर्वपक्षी मन्यते 'तमेवं विद्वानमृत' इति श्रुत्या मोक्षजनकज्ञानविषयत्वं तावत् भगवदेकनिष्ठमित्यभ्युपगन्तव्यम् । 'नान्यः पन्था' इति निषेधात् । 'तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तत' इति वचनात्, श्रुतिः प्राणिनां निःश्रेयसाय प्रवृत्ता यज्ज्ञानात्प्राणिनां मोक्षः तदेव प्रतिपादयतीत्यवश्यमभ्युपेयम् । 'यदिदं किं च जगत्सर्वं प्राण एजति निःसृतम्' इति वाक्यं तु निरवकाशवज्रश्रुतिः उद्यतत्वलिङ्गबलादिन्द्रायुधस्यैव प्रतिपादकं, न तु विष्णोः । ततश्च 'य एतद्विदुरमृतास्ते भवन्ति' इत्युक्तमोक्षजनकज्ञानविषयत्वं तस्याऽभ्युपेयम् । इयांस्तु विशेषः भगवदिन्द्रायुधयोः मोक्षजनकज्ञानविषयत्वं समानम् । परन्तु भगवति तत्फलोपहितं, तज्ज्ञानादेव सर्वेषां मोक्षात् । इन्द्रायुधे तु अरण्यस्थदण्डवत् स्वरूपयोग्यम् । एवं च सति मोक्षजनकविषयत्वस्य लिङ्गस्य निरवकाशत्वं फलोपधानापेक्षया, स्वरूपयोग्यतापेक्षयाऽऽक्षेपश्चोपपन्नः । सिद्धान्तिमते इन्द्रायुधे योग्यताया अप्यभावेन तस्यानिष्टत्वादिति । मूले 'प्राणे' इति सप्तम्यन्तपदात् परतः 'स्थितम्' इति शेषो बोध्य इत्यभिप्रायेण व्याचष्टे – **प्राणे स्थितमिति** ॥ श्रुतौ 'प्राण' इति प्रथमान्तं ततश्च प्राणो जगच्च यस्मान्निःसृतं, चेष्टते चेति श्रुतेर्योजनान्तरमाह – **प्राणः सर्वमिति** ॥ श्रुतौ 'प्राण' इति पदं प्रथमान्तमेव, तथापि जगदपेक्षया प्राणस्य कश्चनातिशयो वर्तत इत्यभिप्रेत्य श्रुतिं प्रकारान्तरेण व्याचष्टे– **सर्वं जगदिति ॥ श्रुतेरपि विष्णाववकाशमिति** ॥ श्रुतित्वेनाभिमतस्य वज्रशब्दस्य योगेन विष्णाववकाशं दर्शयतीत्यर्थः । एतेन वज्रशब्दस्य रूढेरप्रदर्शितत्वाच्छ्रुतरवकाशं दर्शयतीत्ययुक्तमिति परास्तम् ।

नन्वत्र सूत्रे श्रुत्यनुगमाय 'एजनात्' इति वक्तव्यं, न तु 'कंपनात्' इति चेत्, मैवम् एजनादित्युक्ते एजनमेव हेतुतया विवक्षितमिति विज्ञायेत, तन्मा विज्ञायि । 'य एतत् विदु'-रित्युक्तलिङ्गमपि विवक्षितमिति ज्ञापनार्थत्वात् । 'कंपनात्' इत्युक्ते हि श्रुत्यनुगमाय 'एजनात्' इति वक्तव्ये कम्पनात्' इति यदाह; "तत् ज्ञापयत्याचार्यः, 'अन्यदपि लिङ्गमिह विवक्षितम्'

(अभिनवचन्द्रिका)

इति शिष्या जानीयुरिति । य एतत् विदुरित्युक्तं **लिङ्गं विहायेति** ॥ नन्विदमचोद्यं चोद्यते 'य एतत् विदुः' इत्युक्तमोक्षजनकज्ञानविषयत्वस्यैवाक्षेप्यत्वात् । न हि यदेवाक्षिप्यते तत्साधनाय तदेव हेतुरिति शक्यते वक्तुम् । अन्योन्याश्रयत्वात् । मोक्षजनकज्ञानविषयत्वस्य विष्ण्वेक-निष्ठत्वसिद्धौ वज्रश्रुतेरिन्द्रायुधपरत्वाभावसिद्धिः । तत्सिद्धौ च वज्रस्य विष्णुत्वसिद्ध्या मोक्ष-जनकज्ञानविषयत्वस्य विष्णुमात्रनिष्ठत्वसिद्धिरितीति चेत्, उक्तं किमुक्तम् । यदिह पूर्वपक्षिणो निरवकाशतयाऽभिमतं फलोपहितमोक्षजनकज्ञानविषयत्वं, तदेवेह हेतुतया किं न विवक्षितमिति चोद्यत इति । न चैवं सति अन्योन्याश्रयो भवति । अयं वज्री विष्णुः, 'अमृतास्ते भवन्ति' इति फलोपहितमोक्षदातृत्वाभिधानादिति प्रयोगाङ्गीकारात् । **तदविहायैवेति** ॥ अत एव सूत्रे श्रुत्यनुगमाय 'एजनात्' इति वक्तव्ये 'कम्पनात्' इत्युक्तम् । श्रुत्यनुगमं विहाय कम्पना-दित्युक्तिः, लिङ्गान्तरमप्यूह्यमित्यभिप्रायवत्त्वादिति भावः ।

**पूर्वपक्षस्तु**– 'यदिदं किं च' इत्यत्रोक्तं वज्रं इन्द्रायुधमेव भवेत् । वज्रश्रुतेः, उद्यतत्व-लिङ्गाच्च । तद्ध्यायुध एवोपपद्यते । न च वज्रज्ञानेन मोक्षोक्तेः विष्णुरिति वाच्यम् । लिङ्ग-मात्राच्छ्रुतिलिङ्गयोः प्राबल्यात् । न च लिङ्गस्य निरवकाशतया प्राबल्यम् । श्रुतिलिङ्गयोरपि निरवकाशत्वात् । न चैवं सति मोक्षजनकज्ञानविषयत्वलिङ्गस्य विष्ण्वेकनिष्ठत्वाऽविघातादस्य वज्रस्येन्द्रायुधत्वं नानिष्टत्वमिति वाच्यम् । फलोपहितस्य मोक्षजनकज्ञानविषयत्वलिङ्गस्याऽ-विघातेऽपि तद्योग्यत्वरूपलिङ्गस्य विष्ण्वेकनिष्ठत्वविघातात् । ततश्च वज्रमिन्द्रायुधमेवेति न विष्णुज्ञानादेव मोक्ष इति ।

**सिद्धान्तस्तु** – अयं वज्रो भगवानेव । एजतीति कम्पनवचनात् । 'अमृतास्ते भवन्ति' इति फलोपहितमोक्षजनकज्ञानविषयत्वाभिधानाच्च । न चोद्यतत्वलिङ्गविरोधः । उद्यमित्वार्थत्वेन सावकाशत्वात् । न च वज्रश्रुतिविरोधः । 'वर्जनात् वज्र उच्यत' इति वचनात् । तस्यापि सावकाशत्वात् । ततश्च विष्णुरेव वज्र इति तज्ज्ञानस्यैव मोक्षजननयोग्यता नान्यज्ञानस्येति सिद्धम् ।

## वाक्यार्थमुक्तावली

**लोकप्रसिध्या भगवल्लिङ्गेन चेति** ॥ नन्वेवं प्राणादिशब्दानामप्युभयत्र प्रसिद्धिस्स्यात् ।

(वाक्यार्थमुक्तावली)

श्रीपतित्वादिलिङ्गेन लोकप्रसिध्या च तदुपपत्तेरिति चेन्न । प्रथमपादे लिङ्गेन नामसमन्वयो शिक्षिते तन्न्यायलोकतश्चान्यत्रप्रसिद्धत्वात् । उभयसाधारण्यमिति विवक्षितत्वात् । न च प्रथम-पादात् पूर्वलिङ्गादिना नामसमन्वयः शिक्षितो येन तन्न्यायेन तत्पादीयशब्दानां भगवत्परत्वस्य सिद्धत्वात् लोकप्रसिद्ध्योभयत्रप्रसिद्धत्वं स्यात् । न चैवं तृतीयपादवैयर्थ्यं प्रथमपादन्यायेन वज्रादिनाम्नां समन्वयस्य सिद्धत्वेऽपि पुनः समन्वये प्रथमपादीयशब्दानां पुनः समन्वय प्रसङ्गाच्चेति वाच्यम् । तृतीयेऽस्मिन् पादे स्वतः प्रसिद्धोभयप्रसिद्धानां पादद्वयापादितोभय-प्रसिद्धानां च स्वतोऽनवसेयावधारणानामन्यत्र प्रसिद्धिं त्याजयित्वा ब्रह्मण्येव समन्वयः इत्यवधारणार्थत्वात् । न चैवं नामपादीयन्यायैरादित्यादिनाम्नां ब्रह्मणि प्रयोगस्योक्तप्रायत्वात् । तत्साहित्येन सर्वगतत्वलिङ्गानामप्युभयत्र प्रसिद्धता स्यादिति वाच्यम् । ततः पूर्वं नामपादे लिङ्गसमन्वयस्यानुक्ततया सर्वपुरुषादिभिरादित्ये प्रसिद्धलिङ्गैः आदित्यशब्दस्यान्यत्र प्रसिद्धे-र्जीवनात् वज्रप्रसिध्यै उद्यतत्वादिलिङ्गैस्तु न वज्रादिशब्दानामन्यत्र प्रसिध्युज्जीवनमितः पूर्वं लिङ्गपादे उद्यतत्वादिलिङ्गानामपि समन्वयस्योक्तप्रायत्वात् । न चैवं बीजाभावात् पूर्वपक्षानुदयः सावकाशलिङ्गैरप्यवधारणपूर्वपक्षसम्भवात् । अत एवोक्तमनुव्याख्याने । 'आहोभयत्र गतत्वं च स्यात्' अतो लिङ्गशब्दयोरित्यास्ताम् । प्रपञ्चविस्तारस्तु चन्द्रिकायाम् । या श्रुत्यादिसङ्गति-स्तु । अव्यवहितसङ्गतिस्तु पूर्वं शूद्रश्रुत्या पूर्वपक्षितेरयित्वादिलिङ्गेन श्रुतेः सावकाशत्वमुक्तम् इह तु तद्वैषम्येन वज्रश्रुत्योद्यतत्वादिलिङ्गेन च पूर्वपक्षितेति प्रबलकल्पकत्वलिङ्गेनैव वज्रश्रुतिः सावकाशमिति पूर्वन्यायेनैव सिद्धान्तप्रवृत्तेरिति ध्येयम् ॥

यद्वा अधिकरणद्वयस्य प्रासङ्गिकत्वात् । वामनादिईशानशब्दसमन्वयोक्त्या लब्धप्रमाणादि-प्रेरकत्वलिङ्गस्येह सिद्धान्तत्वेन उपादानात्तेन अनन्तरसङ्गतिरिति बोध्यम् । यथोक्तं संक्षेपे प्राणप्रेरक इति ॥ **मोक्ष इत्युक्तमिति** ॥ नेतरोनुपपत्तेरित्यत्रेत्यर्थः ॥ **किं विष्णुरिति** ॥ अत्र वज्रं किमिन्द्रायुधम् उत विष्णुरिति चिन्ता । तदर्थं किं वज्रस्य श्रुत्योद्यतत्वादिलिङ्गानुसारेण कम्पकत्वादिब्रह्मलिङ्गं नेत्यन्तविपरीतमिति । तदर्थं वर्जनाद्वज्रमिति स्मार्तयोगे श्रौतवज्रशब्दस्य रूढित्यागोऽपि किं न युक्तमुत युक्तमिति । उद्यतवज्रज्ञानादिति भाष्यसूचितं पूर्वपक्षमात्रम् इन्द्रेति रूढित्वादिति एतेन योगेन सावकाशत्वमयुक्तमिति सूचयति **तद्धीति** ॥ तेनेन्द्रो वज्रमुद्यच्छन् । यथा उद्यतायुधदोर्दण्डा इत्यादावायुधे प्रसिद्धत्वादिति हेरर्थः । द्वयोरुक्तोरुपयोगं

(तत्त्वार्थमुक्तावली)

वक्तुमाह **न चेति** ॥ द्वयोरपि निरवकाशत्वोक्तेः फलमाह– **न च लिङ्गस्येति** ॥ श्रुतेर्योगेन सावकाशत्वेन च प्रबलश्रुत्यैव दुर्बललिङ्गबाधसम्भवेऽप्यभ्युच्चयेन लिङ्गोक्तिरिति ज्ञेयम् । प्राण इति सप्तमीमङ्गीकृत्याधिकरणसप्तमीबलाल्लब्धमाह ॥ **स्थितमिति** ॥ निःसृतशब्दबला-न्निमित्तसप्तमीत्वं च विवक्षित्वाह– **प्राणादिति** ॥ **यस्मादिति** ॥ यदित्यस्यावृत्तिरिति भावः । एवं प्राणाख्ये तु हरौ यस्मादेजत्यस्माच्च निःसृतम् । वज्रवद्भयदं वैवेति काठकभाष्यानुसारेण व्याख्याय 'को ह्येवान्यात्' 'प्राणस्य प्राणं' 'नभस्वतोऽपि' इति वक्ष्यमाणश्रुतिस्मृत्यनुरोधेन प्रकारान्तरेण द्वेधा व्याचष्टे ॥ **प्राण इत्यादिना** ॥ तृतीय व्याख्यानेऽपि यदित्यस्यावृत्तिः । यच्छब्दश्रवणात् प्राणवाचकतच्छब्दलाभ इति द्रष्टव्यम् । वज्रो भगवानित्यनुक्त्वा उद्यतेति युक्त्या लिङ्गं च सावकाशमिति भावेनाह– **चेति वेति** ॥ **उद्यमीति** ॥ उत्पूर्वस्य यतीप्रयतन इत्यस्य कर्तर्यकारप्रत्यये सति उद्यतः उत्कृष्ट प्रयत्नवानित्यर्थ इति भावः ।

**यद्यपि प्राणस्येति** ॥ षष्ठ्यन्तनिर्दिष्टस्य मुख्यप्राणस्य न सर्वप्रवर्तकत्वं प्रतीयते । तथापि न स्वत इति स्मृत्यनुरोधात् 'यस्मिन् परं पञ्च पञ्च जना' इति प्रतिशरीरस्थत्वोक्त्यार्थाद्वा सर्वप्रवर्तकत्वलाभ इति बोध्यम् ॥ **सावकाशत्वेऽपीति** ॥ उपपदविशेषमन्तरा धात्वर्थ-पर्यालोचनया सावकाशत्वेऽपीत्यर्थः । अनिर्णय इति रूढ्या श्रुतेः प्राबल्यं निरवकाशतया लिङ्गस्येति साम्यादनिर्णय इति ॥ **विद्वद्रूढेरिति** ॥ स्मृतौ योगप्रदर्शनपूर्वं हेति नामेति रूढ्युक्तेः विद्वद्रूढिर्वैदिका स्यात्सा योगादेव लभ्यते इत्युक्तेरिति भावः । न केवलमार्थिकी रूढिः प्रयोग-सिद्धा चेति भावेनाह **आयुधानामिति** ॥ उक्तलिङ्गं परविद्याविषयत्वरूपम् **अन्यत्रेति** ॥ यद्वा शब्दादेवेत्यत्र विश्वदेवोपास्यत्वम्, अन्तस्तद्धर्मेत्यादिष्वदृश्यत्वमहाभोगत्वादिकम् आकाशोऽ-र्थान्तरेत्यग्रे ब्रह्मश्रुत्यत्यागेन लिङ्गान्तरोक्तिः । भूमनये पूर्वपक्षिणाक्षिप्तस्यैव सम्प्रसादि-तशब्दितपूर्णसुखत्वस्य भूमत्वसाधकतयोक्तिः । द्युभ्वादिनये आक्षिप्तपरविद्याविषयत्वेन प्रकरणादिति प्रकरणस्य वैष्णवत्वोज्जीवनमिति बोध्यम् । ननु काठकभाष्ये वज्रवद्भयदं चैवेति वज्रशब्दस्य भयप्रदत्वे दृष्टान्तीभूतेन्द्रायुधपरत्वस्वीकारात् । कथमिह भगवत्परत्वोक्तिरिति चत्तत्र वज्रशब्दस्यैव गौण्या भगवत्परत्वं अत्र तु समन्वयसूत्रप्रतिज्ञामुख्यार्थत्वाय योगवृत्तिरुक्तेत्युभयत्र भगवत्परत्वानपायात् । भाष्ये चंक्रमणात् । नित्यविक्रान्तिरूपे वर्जनाद्दोषवर्जनाद्दोषिभि-र्वर्जनादिति वार्थः । सूत्रे योग्यतया वज्र इत्यन्वीयते । तत्वित्यस्ति एजतीति कम्पवचना-

(वाक्यार्थमुक्तावली)
ज्जगच्चेष्टकत्वलिङ्गाद्वज्रो ब्रह्मैवेत्यर्थः । सूत्रे श्रुत्यनुसारादेजतीति वक्तव्ये कम्पनादित्युक्तिम्तु भयादस्याग्निस्तपति भयात्तपति सूर्य इत्यादि वाक्यशेषे सर्वकम्पकत्वश्रवणात् तत्सूचनार्थमिति प्रमेयमुक्तावल्यामस्माभिः सत्तर्कदीपावल्यां वाक्योदाहरणपूर्वं निपुणतरं प्रतिपादितम् ।

## तत्त्वसुबोधिनी

अत्र पूर्ववैषम्येण वा पूर्वाक्षेपेण वा पूर्वपक्षोत्थानादनन्तरसङ्गतिः ॥ **वज्रश्रुतेरिति** ॥ रूढेश्च योगापेक्षया बलवत्त्वादिति भावः । नन्विदं विष्णुलिङ्गमेव किं न स्यादित्यत आह ॥ **तद्धीति** ॥ तथा च लिङ्गं निरवकाशमिति भावः ॥ **तथात्वादिति** ॥ निरवकाशत्वादित्यर्थः । अत्र प्राण इति सप्तमीमङ्गीकृत्य तद्बलात् स्थितमित्यध्याहृत्यार्थत्वेन यदित्यावृत्या यदिदं किंचेति वाक्यं योजयति ॥ **प्राणे स्थितमित्यादिना** ॥ सर्वं जगदिति तृतीये व्याख्याने यदित्यस्यावृत्तिः । यच्छब्दबलात् प्राण वाचकतया स इति तच्छब्दलाभ इति द्रष्टव्यम् । अत्र को ह्येवान्यादिति भाष्यम् उदाहरिष्यमाण श्रुत्यन्तरेणाद्यं व्याख्यानद्वयम् । प्राणस्य प्राणम् । नभस्वतोऽपि सर्वाःस्युरिति । प्रमाणानुसारेण तृतीयं व्याख्यानमिति ज्ञेयम् । शङ्कते । लिङ्गमात्रेण कथमयं निश्चय इति । उत्तरमाह ॥ **लिङ्गस्येति** ॥ **सावकाशत्वोक्तिश्रुतिलिङ्गयोरिति** ॥ तथा च पूर्वपक्षप्रापकाभावेन मोक्षजनकज्ञानविषयत्वस्यान्यगतत्वशङ्कायाः अयोगेन सिद्धनिर्णायकत्वसम्भवादिति भावः ॥ **एतदन्यत्राप्यनुसन्धेयमिति** ॥ अत एव प्राण इत्यादौ पूर्वपक्षप्रापकश्रुत्यादीनां सिद्धान्ते सावकाशत्वात् पूर्वाधिकरणसिद्धसमन्वयमहाभोगत्वादिति लिङ्गादेरेतत्प्राणस्य विष्णुत्वनिश्चयोपपत्तेः किं लिङ्गान्तरेणेत्यतः तत्रापि तदविहायैव लिङ्गान्तरमुक्तमिति अनुसन्धेयमित्यर्थः ॥

## वाक्यार्थमञ्जरी

**भगवल्लिङ्गेनेति** ॥ मोक्षसाधनज्ञानविषयत्वरूपेणेत्यर्थः ॥ **उद्यतत्वेति** ॥ उद्धृत्य धृतत्वेनेत्यर्थः ॥ **तद्धीति** ॥ तेनेन्द्रो वज्रमुदयच्छत् । उद्यदायुधदोर्दण्डा इत्यादावायुधे प्रसिद्धिं हिशब्देन दर्शयति ॥ **प्राणे स्थितं प्राणान्निःसृतमिति** ॥ प्राण इति सप्तमीमङ्गीकृत्य तद्बलात् स्थितमित्यध्याहृत्य निसृतशब्दानुरोधात्प्राणादित्यध्याहृत्य निमित्तसप्तमीत्वं वा विवक्षयित्वा यस्मादित्यर्थत्वेन यदित्यावृत्य यदिदं किंचेति वाक्यं योजितमिति ज्ञातव्यम् ॥ सर्वं

(वाक्यार्थमञ्जरी)

**जगदिति** ॥ तृतीयव्याख्याने यदित्यस्यावृत्तिः यच्छब्दबलात्प्राणवाचकतया स इति तच्छब्द-लाभ इति द्रष्टव्यम् । अत्र को ह्येवान्यादिति भाष्ये उदाहरिष्यमाणश्रुत्यनुसारेणाद्यव्याख्यानद्वयं प्राणस्य प्राणं नभस्वतोऽपि सर्वाः स्युरिति प्रमाणानुसारेण तृतीयव्याख्यानं द्रष्टव्यम् ॥ ॐ कम्पनात् ॐ ॥ वज्रमुद्यतमित्युक्तवज्री भगवानेव एजतीति जगच्चेष्टकत्वरूपकम्पनवचना-दित्यर्थः ॥ **उद्यमित्वेति** ॥ उत्कृष्टप्रयत्नवत्वेत्यर्थः । तस्य उत्पूर्वस्य यते रूपत्वादिति भावः । शङ्कते ॥ **लिङ्गमात्रेणेति** ॥ परिहरति ॥ **लिङ्गस्येति** ॥ भाष्ये चङ्क्रमणात् पादविक्षेपात् वर्जनाद्दोषवर्जनात् प्रयोगं चाह ॥ **आयुधानामिति** ॥ प्रहरणोत्तमम् आयुधोत्तमम् ॥ **श्रुतिलिङ्गयोः सावकाशत्व इति** ॥ तथा च पूर्वपक्षप्रापकाभावेन मोक्षजनकज्ञानविषयत्वस्य अन्यगतत्वशङ्कायोगेन सिद्धान्तनिर्णायकत्वासम्भवान्न तत्त्यागेन चेष्टकत्वग्रहणं युक्तमिति भावः ॥ **एतदन्यत्राप्यनुसन्धेयमिति** ॥ यत्र पूर्वाधिकरणसिद्धसमन्वयश्रुतिलिङ्गादेः विष्णुनिष्ठत्वाक्षेपः पूर्वपक्षप्रापकश्रुत्यादेः सिद्धान्ते विष्णाववकाशाभिधानं च तत्र पूर्वाधिकरणसिद्धस्य श्रुति-लिङ्गादेराक्षेपायोगेन विष्णुमात्रनिष्ठत्वानपायात्सिद्धान्तनिर्णायकत्वं सम्भवतीत्यनुसन्धेयमित्यर्थः। यथा त एव प्राण इत्यादौ प्राणादिशब्दानां विष्णाववकाशे महायोग इत्युक्तपूर्णानन्दत्वादेरिति ॥

॥ इति कम्पनाधिकरणम् ॥

# ११. ज्योतिरधिकरणम्

## सूत्रभाष्यम्

हृदय आहितं ज्योतिः परमात्मेत्युक्तम् । तत्र 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्त-ज्योतिः पुरुष' (बृ.उ.६-३-७) इत्यत्र 'उभौ लोकावनुसञ्चरति' (बृ.उ.६-३-७) इति वचनाज्जीव इति प्रतीयत इत्यत उच्यते–

**॥ ॐ ज्योतिर्दर्शनात् ॐ ॥ ४० ॥**

'विष्णुरेव ज्योतिर्विष्णुरेव ब्रह्म विष्णुरेवाऽऽत्मा विष्णुरेव बलं विष्णुरेव यशो विष्णुरेवाऽऽनन्द' इति दर्शनाच्चतुर्वेदशिखायां ज्योतिर्विष्णुरेव । 'प्राज्ञेनाऽऽत्मनाऽन्वारूढ उत्सर्जयाति' (बृ.उ.६-३-३५) इति वचनात्तस्यापि लोकसञ्चरणमस्त्येव ॥

## सत्तर्कदीपावली

ननु हृद्यन्तर्ज्योतिः पुरुष आत्मा अतो जीवो भवितुमर्हति समानः सन्नुभौ लोकावनु-सञ्चरन्तीति वाक्यशेषादतो हृदय आहितं ज्योतिः परमात्मेति यदुक्तं तन्न सिध्यतीति न वक्तव्यम् । विष्णुः एव ज्योतिरित्यादिश्रुतिविरोधात् । लोकद्वयसंचरणं तु परेशस्याप्यस्ति स्वेच्छावशादकर्मबद्धस्य । तथाहि श्रुतिः । शारीर आत्मा प्राज्ञेनात्मनान्वारूढ उत्सर्जयातीति तदेतद् हृदय आहितमित्यादिना ।

## तत्त्वप्रदीपिका

'कतम आत्मा' इति प्रश्ने 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समान-स्सनुभौ लोकावनुसञ्चरति' इत्युत्तरं पठ्यते । तत्र संशयः । किमयं ज्योतिश्शब्दवाच्यः शारीर-स्स्यादाहोस्वित्परमात्मेति । उभयलोकसञ्चरणात् । 'प्राणेषु' इति प्राणोपहितत्वाच्च शारीर इति पूर्वपक्षः । 'ज्योतिर्दर्शनात्' । 'विष्णुरेव ज्योतिः' इति विष्णोरेव मुख्यज्योतिष्ट्वोक्तेः, 'प्राणेषु' इति प्राणनियन्तृत्वेन स्थित्याख्यानात् 'प्राज्ञेनाऽऽत्मनाऽन्वारूढ उत्सर्जयाति' इति, प्रकर्षेण आ समन्तात्, ज्ञेन परमात्मनाऽन्वारूढो जीवः शरीरमुत्सृजन् यातीति तस्यापि लोकचरणकथनाद्विष्णुरेव ज्योतिरिति सिद्धान्तः । विष्णुरेव बलम्, 'स वै बलं बलिनां चापरेषाम्' इति हि भागवते । विष्णुरेव यशः, 'तस्य नाम महद्यशः' इति हि श्रुतिः ।

(तत्त्वप्रदीपिका)
'विज्ञानमयः प्राणेषु' इत्यादि शब्दलिङ्गानां जीव एव सावकाशत्वप्रतीतेः पुनरुक्तिर्ज्योतिश्शब्दसमन्वयस्य ।

## तत्त्वप्रकाशिका

अत्र जीवेशयोर्ज्ञानरूपत्वेन हृदयाहितत्वेन च साधारणस्य ज्योतिर्नाम्नो विष्णौ समन्वयप्रतिपादनादस्ति शास्त्रादिसङ्गतिः । श्रुत्यादिसङ्गतिं विषयादिकं च दर्शयति ।। **हृदय इति** ।। 'ज्योतिश्चरणाभिधानात्' इति हृदयाहितं ज्योतिः परमात्मेत्युक्तम् । वाजसनेयके च तच्छ्रुयते ।। **योऽयमिति** ।। तच्च यदि विष्णोरन्यत्स्यात्तदा पूर्वोक्तमप्यन्यत्प्रसज्यत इत्यवश्यं निर्णेयम् । तज्ज्योतिर्विषयः । किं विष्णुर्जीवो वेति सन्देहः । उक्तसाधारण्यं सन्देहबीजम् । जीव एवेदं ज्योतिरिति पूर्वः पक्षः । 'स समानः सन्नुभौ लोकावनुसञ्चरति' इति जीवलिङ्गात् । तस्य हि कर्मवशादुभयलोकसञ्चरणं युक्तम् । 'इमं लोकमतिक्रामति मृत्यो रूपाणि' 'स वा अयं पुरुषो जायमानः शरीरमभिसम्पद्यमानः पाप्मभिः संसृज्यते । स उत्क्रामन् म्रियमाणः पाप्मनो विजहाति' । 'उभयानपि पाप्मन आनन्दांश्च पश्यति स यत्र प्रस्वपिति' । स्वप्रान्त उच्चावचमीयमानो' 'भयानि पश्यन्' इत्यादि जीवलिङ्गाच्च । किं च 'किं ज्योतिरयं पुरुष इत्यादित्यज्योतिः सम्राडिति होवाच' इत्यादिना यस्य पुरुषस्याऽऽदित्यादिज्योतिष्ट्वमुक्तं तस्यैव 'आत्मैवास्य ज्योतिर्भवति' इति सु(षु)प्त्यादावात्मज्योतिष्ट्वोक्तौ 'कतम आत्मा' इति तदात्मप्रश्ने ज्योतिरुच्यते । न ह्यादित्यादिज्योतिष्ट्वं विष्णोः सम्भवति । 'न तत्र सूर्यो भाति' इत्यादेः । न च वाच्यं यस्यादित्यादिज्योतिष्ट्वमुक्तं स जीव एवास्तु तस्य चात्मैवास्येत्यत्र परमात्मज्योतिष्ट्वमुच्यते । तदात्मप्रश्ने च ज्योतिराम्नानात् परमात्मैव ज्योतिरिति । जीवस्य परमात्मज्योतिष्ट्वस्यैवायोगात् । तथात्वे परमात्मनोऽस्तमयादिशून्यस्य जाग्रत्यपि ज्योतिष्ट्वप्राप्त्या तदा 'आदित्येनैवायं ज्योतिषाऽऽस्ते' 'चन्द्रमसैवायं ज्योतिषाऽऽस्ते' इत्यवधारणानुपपत्तेः । तदा विशिष्याऽऽत्मज्योतिष्ट्वोक्त्यनुपपत्तेश्च । अत्रायं पुरुषः स्वयं ज्योतिर्भवतीत्यस्यैवार्थस्य प्रत्यभिज्ञानाच्च । अतो जीव एवेदं ज्योतिरिति प्रागुक्तमपि स एवेति भावः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ।। **अत इति** ।। विष्णुरेवेदं ज्योतिर्न तु जीवः । ज्योतिःश्रुतेर्विष्ण्वेकवाचित्वश्रवणादित्यर्थः । ज्योतिर्विष्णुश्चेदुभयलोकसञ्चरणलिङ्गविरोध इत्यत आह ।। **प्राज्ञेनेति** ।। जीवमादायेश्वरस्यैवोभयलोकसञ्चरणोक्तेर्न तद्विरोध इत्यर्थः ।

न चेमं लोकमतिक्रामति मृत्यो रूपाणीत्याद्युक्तलिङ्गविरोधः द्रष्टुश्चक्षुष इत्यादिवदन्तर्णीतणिच्त्वेनोपपत्तेः । न चादित्यादिज्योतिष्ट्वविरोधः । आदित्यादिज्योतिष्मतोऽयं पुरुष इत्युक्तस्य

(तत्त्वप्रकाशिका)

जीवत्वेनाभ्युपगमात् । न च तस्यैव स्वयञ्ज्योतिष्ट्वेनोक्तस्य ज्योतिष्ट्वमुच्यत इति वाच्यम् । 'आत्मैवास्य ज्योतिर्भवति' इति 'कतम आत्मा' इत्यात्मशब्दोदितस्य विष्णुत्वात् । न चैवं सत्यवधारणविरोधः । अवधारणस्य वाह्यज्योतिपां मध्ये सूर्यादीनां प्राधान्यज्ञापनार्थत्वेनोपपत्तेः। अन्यव्यावर्तकत्वस्य वागादिसत्त्वेनायोगात् । न च विशिष्योक्तिविरोधः । ज्योतिरन्तराभावाभिप्रायेणोपपत्तेः । तदुक्तम् । 'भावेऽभावेऽपि सूर्यादेर्जीवानां विष्णुरेव हि । ज्योतिस्तथाप्यभावे तु तज्ज्ञेयं हि विशेपतः ॥' इति । न च प्रत्यभिज्ञा विरोधः । 'अत्रायं भगवान्विष्णुर्जीवस्य स्वयमेव तु । ज्योतिर्विशेपतो भूयान्नैवान्यज्ज्योतिरत्र यत्' इत्युक्तरीत्योपपत्तेः । नन्वेवं बाधकाभावात्कथं लिङ्गानामन्यार्थता श्रुतिमात्रस्य वहुलिङ्गानुसारेणामुख्यार्थत्वोपपत्तेरिति । मैवम् । जीवपक्षे वहुवाधकसद्भावात् प्रसिद्धत्वेन 'कतम आत्मा' इति प्रश्नायोगात् सुखदुःखविशेषवत्त्वेनोभयलोकसञ्चरणे समानत्वायोगात् स्वाप्नपदार्थकर्तृत्वाभावात्स्वप्नेन शरीरमित्यादिमन्त्रासङ्गतेश्च । तस्मादिदं प्रागुक्तं च ज्योतिर्विष्णुरेवेति सिद्धम् ॥

## गुर्वर्थदीपिका

'मृत्यो रूपाणीत्यत्र अतिक्रामति' इति पूर्वक्रियया सम्बन्धः । 'द्रष्टुश्चक्षुप' इति श्रुतौ दर्शनकरणस्य चक्षुषो द्रष्टृत्वासम्भवात् दर्शयितुश्चक्षुष इति विशेषणविशेष्यभावस्याभिप्रेतत्वात् तामेव श्रुतिं दृष्टान्तीकरोति द्रष्टुश्चक्षुष इत्यादिवदिति । बाह्यज्योतिषां मध्य इत्यत्र वहिरेव ज्योतींषि बाह्यज्योतींषि तेषां मध्ये सूर्यस्यैव प्राधान्यम् । परमात्मा तु वहिरन्तर्ज्योतिरिति भावः । 'अस्तमित आदित्य' इति वाक्यादुत्तरत्र 'चन्द्रमसैवायं ज्योतिपाऽऽस्ते' इत्युक्तचन्द्रमसः 'चन्द्रमस्यस्तमिते' इति वाक्यादुत्तरत्र 'अग्निनैवायं ज्योतिषाऽऽस्ते' इत्युक्ताग्नेश्च आदित्याख्यज्योतिषा सहावस्थानाभावेन आदित्यस्याग्नेश्चन्द्रमसा सहावस्थानाभावेन अस्तमितयोरादित्यचन्द्रमसोरग्निना सहावस्थानाभावेन कदाचिच्चन्द्रस्याष्टम्यादावग्नेश्च सर्वदा आदित्येन सहावस्थानेऽपि अग्नेश्च कदाचिच्चन्द्रेण सहावस्थानेऽपि आदित्यप्रभाग्रे उभयोरपि निष्प्रभत्वेन चन्द्रप्रभाग्रे अग्नेर्निष्प्रभत्वेन अग्नावस्तमिते 'किं ज्योतिरेवायं पुरुष' इति प्रश्ने 'वागेवास्य ज्योतिर्भवति' इति ज्योतिष्ट्वेनोक्तवाचा त्रयाणामपि सहावस्थानस्यैवाभावेन च स्थानचतुष्टये च यथायोग्यमन्योन्यव्यावर्त्यत्वसम्भवेऽपि वागाख्याज्योतिषः स्थानत्रयेऽपि स्पष्टतयैव सत्त्वेन पुनरेवकारेण व्यावृत्तेरसम्भव एवेति भावेनाह ॥ **वागादीति** ॥ आदिपदेनाऽऽत्माख्यज्योतिर्गृह्यते । न च विशिष्योक्तिविरोध इत्यत्र आत्माख्यज्योतिषः अवस्थात्रयेऽपि विद्यमान-

(गुरुर्थदीपिका)
त्वेन सुप्तावेव तस्य विशिष्य ज्योतिष्ट्वोक्तिविरोध इत्यर्थः । सुप्तौ सर्वज्योतिषामभावेऽपि परमात्मज्योतिषः सत्त्वाभिप्रायेण विशिष्योक्तिरिति भावेन परिहरति ॥ ज्योतिरन्तरेति ॥ उक्तरीत्येति वदता अयं पुरुष इति न जीवपरामर्शः किन्तु प्राक्प्रस्तुतपरमात्मपरामर्श एवेति परिहारः सूचितः । एतत्प्रकरणस्थस्वाप्नपदार्थस्रष्टृत्वानुपपत्तिश्चेति भावेनोक्तं स्वाप्नपदार्थेति । स्वप्नेन शरीरमित्यादीत्यत्र आदिपदेन ''स्वप्नेन शारीरमभिप्रहत्य असुप्तः सुप्तानभिचाकशीति'' इत्यादयः श्लोका गृह्यन्ते । मन्त्रासङ्गतेरित्युपलक्षणम् । स्वस्यैव ज्योतिष्ट्वे आत्माश्रयाख्य-महादोषोऽपि स्यात् । ज्योतिरन्तराभावार्थत्वे एवकारवैयर्थ्यं मुख्यार्थपरित्यागश्चेति द्रष्टव्यम् ॥

## भावबोधः

**ज्ञानरूपत्वेन हृदयाहितत्वेन चेति** ॥ तथा च ज्योतिःशब्दस्य लोकप्रसिद्धेरग्निमात्र-निष्ठत्वेऽपि ज्ञानरूपत्वलक्षणप्रवृत्तिनिमित्तस्य हृद्यन्तर्ज्योतिरिति विष्णौ प्रतिपन्नवाक्ये श्रुत-हृदयाहितत्वलिङ्गस्य च जीवेशयोः साम्यादेतन्निबन्धनोभयत्रप्रसिद्धिः ज्योतिःशब्दस्य उक्तेति भावः ॥ **श्रुत्यादिसङ्गतिमिति** ॥ अत्र प्राणे हृद्यन्तर्ज्योतिरितिवाक्येन चेष्टकतया प्राणेषु विद्यमानत्वेनोक्तस्य ज्योतिषो विष्णोरन्यत्वे 'यदिदं किञ्च जगत्सर्वं प्राण एजति' इत्युक्त-प्राणचेष्टकवज्रस्यापि विष्णोरन्यत्वं स्यादित्यपि पूर्वाक्षेपसम्भवादव्यवहितपूर्वाधिकरणसङ्गतिरपि ज्ञेया ॥ **किं विष्णुरिति** ॥ अत्र हृद्यन्तर्ज्योतिरिति वाक्योक्तं ज्योतिः किं विष्णुरुत नेति चिन्ता । तदर्थमुभौ लोकावनुसञ्चरणादिलिङ्गानुरोधेन विष्णुरेव ज्योतिरिति, श्रुतिर्मुख्यार्थेति, श्रुत्यनुसारेण लिङ्गप्रतिपादकवाक्यानि विष्णुविषयाणीति उत नेति । तदर्थं ज्योतिष उक्तानि समानत्वस्वप्नपदार्थकर्तृत्वादीनि किं जीवस्य युज्यन्ते उत न युज्यन्त इति । तथा प्रथम-चिन्तानन्तरं तदर्थं कतम आत्मेति प्रश्नवाक्यस्थात्मशब्दः किं जीवपर उत विष्णुपर इति तदर्थं ज्योतिरयं पुरुष इति प्रश्नोक्तरूपात्मैवास्य ज्योतिरिति तत्पूर्ववाक्यात्मशब्दः किं जीवपर

(भावबोधः)
पदप्रकृतजीवस्य स्वप्रकाशत्वप्रदर्शनपरम् । तृतीयपुरुषादिपदानां परमात्मपरतया जीवस्य विशेषतः परमात्मज्योतिष्ट्वप्रतिपादनपरमिति ।

ननु लोकसञ्चरणं विष्णावेव सम्भवतीति कथं जीवलिङ्गत्वमित्यत आह– **तस्य हि कर्मवशादिति** । अनेनादित्यादिज्योतिष्ट्वमुभयलोकसञ्चरणमादित्येनैवायं ज्योतिषास्त इत्यवधारणमित्यादीनां परमात्मन्यवकाशाभावो बहुताद्दक्त्वमिति न्यायविवरणमुभयलोकसञ्चरणमित्ययं भागोऽपि व्याख्यात इति द्रष्टव्यम् । न्यायविवरणगतादिशब्दसङ्गृहीतान्यपि लिङ्गान्याह– **इमं लोकमभिक्रामतीत्यादिना** । आदित्यादिज्योतिष्ट्वमिति न्यायविवरणं व्याख्याति– **किं ज्योतिरित्यादिना** ॥ **तस्यैवेति** ॥ अस्यैवेतीदंशब्दस्य प्रकृतजीवपरामर्शकत्वादिति भावः ॥ **आत्मज्योतिष्ट्वोक्ताविति** ॥ स्वप्रकाशत्वोक्तावित्यर्थः । आत्मज्योतिःशब्दयोः स्वरूपज्ञानार्थत्वादिति भावः । आदित्यादिज्योतिष्ट्वमित्युक्तहृद्यन्तर्ज्योतिर्निष्ठत्वाभावशङ्कानिवर्तकतया आदित्येनैवायं ज्योतिषास्त इत्यवधारणमिति न्यायविवरणांशं व्याख्याति– **न च वाच्यं यस्येत्यादिना** ॥ न्यायविवरणगतादिशब्दस्य अर्थान्तरमाह– **तदा विशिष्येत्यादिना** ॥ परमात्मनोऽस्तमयादिशून्यस्य जाग्रत्यपि ज्योतिष्ट्वप्राप्त्येत्येतदत्रापि सम्बध्यत इति बोध्यम् ॥ **अत्रायं पुरुष इति** ॥ आत्मप्रश्नोत्तरोपसंहाररूपेणात्रायं पुरुषः स्वयंज्योतिरिति वाक्येनात्मैवास्य ज्योतिरित्युक्तस्यैवार्थस्य प्रत्यभिज्ञानादित्यर्थः । तथा चात्रायं पुरुष इत्यत्र वाक्ये स्वयं शब्दानुरोधेन स्वप्रकाशत्वस्यैवोक्त्या तत्समानार्थत्वायात्मैवास्य ज्योतिरित्यस्यापि स्वप्रकाशार्थकत्वं आत्मप्रश्नोत्तरस्य ज्योतिःशब्दस्य जीवपरत्वमेवेति भावः ॥ **विष्ण्वेकवाचित्व** इति ॥ विष्णुरेवेति भाष्योदाहृतश्रुतावन्ययोगव्यवच्छेदार्थकावधारणश्रवणादिति भावः ॥ **जीवमादायेति** ॥ अनेन लोकसञ्चरणं तु जीवमादाय तस्यैवादुःखेन स्वातन्त्र्यादिति न्यायविवरणं व्याख्यातं भवति । कुतो न विरोध इत्यतो जायमानो म्रियमाणो प्रस्वपतीत्यादि तु । 'कृत्वा विवाहं तु कुरुप्रवीराः' 'जज्ञे बहुज्ञं परमाभ्युदारम्' 'तदेतन्मे विजानीहि यथाहं मन्दधीर्हरे ।' 'सुखं बुध्येय दुर्बोधं योषा भवदनुग्रहात् ।' 'द्रष्टुश्चक्षुषो नास्ति जिह्वा' इत्यादिवदन्तर्णीतणिच्त्वेन भवतीति बृहदारण्यकभाष्योक्तोपपत्तिमाह– **द्रष्टुश्चक्षुष इत्यादाविति** ॥ **अन्तर्णीतणिच्त्वेनेति** ॥ यथा चेमं लोकमतिक्रामतीत्यादावतिक्रामयतीत्याद्यर्थ इत्यर्थः । आदित्यज्योतिष्ट्वं संसारिण एव । अयं पुरुष इति संसारीति न्यायविवरणार्थमाह– **न चादित्यादीति** ॥

(भावबोधः)

आत्मशब्दोदित एव विष्णुरिति न्यायविवरणार्थमाह– **न च तस्यैवेति** ॥ आदित्यनैवेत्यवधारणं तु बाह्यज्योतिषु प्राधान्यापेक्षयेति न्यायविवरणं व्याचष्टे– **न चैवं सतीति** ॥ **अन्यव्यावर्तकत्वस्येति** ॥ जागरावस्थायामपि ज्ञानकरणानां वागादीन्द्रियाणां सत्त्वेनैवकारस्य ज्ञानकारणान्तरव्यवच्छेदकत्वायोगादित्यर्थः । प्राधान्यापेक्षयेत्यादीति न्यायविवरणगतादिशब्दार्थमाह– **न च विशिष्येत्यादिना** ॥ आदिशब्दस्योक्तार्थकत्वं कुत इत्यतो बृहदारण्यकभाष्यसम्मतिमाह– **तदुक्तमिति** ॥ **इत्युक्तरीत्योपपत्तेरिति** ॥ तथा चात्रायं पुरुषः स्वयञ्ज्योतिरित्यत्र स्वयंशब्दस्य परमात्मपरत्वेन परमात्मज्योतिष्ट्वमेवोच्यते जीवस्य न स्वप्रकाशत्वमिति नैतदनुरोधेनात्मैवास्य ज्योतिरित्यस्य स्वप्रकाशत्वार्थकत्वमिति भावः ॥ **श्रुतिमात्रस्येति** ॥ प्राणेषु हृद्यं ज्योतिरित्यादौ विष्णुत्वनिश्चायकलिङ्गाद्यसमभिव्याहृतज्योतिःशब्दस्येत्यर्थः । किं तद्बहुबाधकमित्यतो जीवपक्षे प्रसिद्धत्वात् कतम आत्मेति प्रश्नो न युक्तः । न च जीवः समानः सन्नुभौ लोकौ सञ्चरति । सुखदुःखविशेषवत्त्वादिति कथमन्यथा स्वयं निहत्य स्वयं निर्माय स्रवन्त्यः सृजते स हि कर्ता स्वप्नेन शरीरमभिप्रहत्या असुप्तः सुप्तानभिचाकशीति इत्यादि युज्यते । उक्तार्थे च स्वप्नेन शरीरमित्यादिर्जीवेश्वरभेदमन्त्रा युक्ता प्रमाणत्वेनेति बृहदारण्यकभाष्योक्तबाधकानि क्रमेणाह– **प्रसिद्धत्वेनेत्यादिना** ॥ सुखदुःखविशेषवत्त्वादित्यनेन दुःखेनास्वातन्त्र्यादिति न्यायविवरणस्याभिप्राय उक्तो भवतीति ज्ञातव्यम् ॥

## भावदीपः

अत्र न्यायविवरणे साधारण्यबीजानुक्तेः योऽयमिति भाष्योक्तवाक्यानुरोधेन द्वेधा साधारण्यं स्वयमाह ॥ **अत्र जीवेति** ॥ ज्योतिःपदप्रवृत्तिनिमित्तं हि प्रकाशत्वं ज्ञानत्वमपि प्रकाशत्वमेवेति भावः । अग्न्यादौ ज्योतिःपदप्रसिद्धावपि इह तस्य पूर्वपक्षकोटित्वाप्रसक्तेः प्रवृत्तिनिमित्तसाम्यमेवोक्तम् । सङ्गतिपरतया भाष्यं व्याचष्टे ॥ **ज्योतिरिति** ॥ तत्रेत्येतत्प्रथमान्तं व्याचष्टे ॥ **तच्छ्रुयते इति** ॥ षष्ठेऽध्याये ज्योतिर्ब्राह्मणे योऽयमित्यत्र वाक्य इत्यर्थः । उभौ लोकावित्यादेस्तात्पर्यं **तच्चेति** ॥ उभयलोकसञ्चरणाद्यदि जीवः स्यादित्यर्थः । उक्तमित्यन्तस्य तात्पर्यमाह ॥ **तदेति** ॥ इतिसङ्गतिसम्भवादित्यर्थः । पूर्वपक्षतद्युक्त्यादिपरतयाऽपि भाष्यं व्याख्यातुं तत्र तज्जीव इति षष्ठेऽध्याये प्रतीयत इति प्रतिज्ञार्थमाह ॥ **जीव एवेति** ॥ सञ्चरतीत्यत्र कर्तृवाचकं दर्शयन्नुभावित्यादिभाष्यं व्याचष्टे ॥ **स समान इति** ॥ निराकाङ्क्षाणि

(भावदीप:)

पदानि वाक्यमित्युक्तदिशाऽस्य वाक्यत्वेऽपि तद्बोध्यस्यासाधारणधर्मत्वाल्लिङ्गादित्युक्तम् । आदित्यादिज्योतिष्ट्वमुभयलोकसञ्चरणं 'आदित्येनैवाऽयञ्ज्योतिषाऽऽस्त' इत्यवधारणमित्यादीनां परमात्मन्यवकाशाभावो बहुतादृक्त्वमिति न्यायविवरणोक्तमनवकाशत्वमस्य व्यनक्ति ॥ **तस्य हीति** ॥ ब्रह्म तु कर्मातीतम् अन्यत्र धर्मादन्यत्राधर्मादित्यादेः । भूमा सम्प्रसादादित्यत्रोक्तदिशोत्क्रमणक्रियावदणुत्वयुक्ते हरौ सञ्चरणक्रियोपपत्तावपि कर्माधीनं यदुभयलोकसञ्चरणं तज्जीव एव युक्तं न तु हराविति भावः ।

भाष्यमुपलक्षणं मत्वाऽन्यत्रोक्तादिपदोपात्तलिङ्गानि चाह ॥ **इममिति** ॥ पृथिवीलोकं मृत्युसाधनमिति वा मृत्युसाधनानि चेति वाऽऽप्नोतीत्यर्थः । जीवस्यानादिनित्यत्वाज्जायमानत्वम्रियमाणत्वे व्यनक्ति । शरीरमभिसम्पद्यमान उत्क्रामन्निति च । उभयानित्यस्य व्याख्या पाप्मनः पापफलानि दुःखानि पुण्यफलान्यानन्दांश्च पश्यत्यनुभवतीति । स्वप्नान्ते स्वप्नदेशे ईयमानः प्राप्नुवन् । लिङ्गानां हरावनवकाशत्वं स्पष्टमिति भावः । आदित्यादिज्योतिष्ट्वमितीममंशम् अन्यत्रोक्तम् आत्मैवास्य ज्योतिरित्यत्र इदंशब्दस्य जीवार्थत्वसाधकतया व्यनक्ति ॥ **किं चेति** ॥ अयं पुरुषः जीवः किं ज्योतिः ज्ञानसाधनं यस्येति व्युत्पत्त्या जनकराजेन जीवस्य ज्ञानसाधने पृष्टे सति याज्ञवल्क्यः आदित्यज्योतिः सम्राडिति होवाचेत्युत्तरमुक्त्वा आदित्येनैवाऽयं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीत्युपपाद्य अस्तमित आदित्ये किं ज्योतिरेवायं पुरुष इति चन्द्रमा एवास्य ज्योतिर्भवतीत्यादिना आदित्यचन्द्राग्निवाचां पूर्वपूर्वास्तमये उत्तरोत्तरस्य ज्ञानसाधनत्वरूपं ज्योतिष्ट्वं प्रश्नोत्तराभ्यां यस्य जीवस्य जाग्रद्दशायामुक्तं तस्यास्तमितआदित्ये याज्ञवल्क्यचन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किं ज्योतिरयं पुरुष इति प्रश्ने आत्मैवास्य ज्योतिर्भवतीति सुप्तिस्वप्नयोः स्वप्रकाशत्वरूपात्मज्योतिष्ट्वोक्तौ कतम आत्मेति ज्योतिष्ट्वेनोक्तात्मविषयप्रश्ने कृते सति योऽयं विज्ञानमयः प्राणेषु हृद्यं तज्योतिरित्युच्यत इत्यर्थः । अस्य लिङ्गस्यान्यत्रोक्तं हरावनवकाशत्वं व्यनक्ति ॥ **न हीति** ॥ न तत्रेत्येतद्विष्णुपरमित्यनुकृतिनये व्यक्तम् । एवं लोकसञ्चरणादेरादित्यादिज्योतिष्ट्वस्य चानवकाशत्वमुपपाद्य आदित्येनैव ज्योतिषाऽऽस्ते इत्यवधारणमित्यंशमात्मपदस्य स्वरूपार्थकत्वसाधनपरतया व्याख्यातुमाह ॥ **न च वाच्यमिति** ॥ तदा जाग्रद्दशायामित्यर्थः ॥ **अवधारणानुपपत्तेरिति** ॥ किं त्वादित्येन ज्योतिषेति वा आदित्येन चेति वा स्यादित्यर्थः ।

(भावदीपः)

तदा सुप्त्यादिदशायामित्यर्थः । परमात्मनोऽस्तमयादिशून्यस्य जाग्रत्यपि ज्योतिष्ट्व-प्राप्त्येत्यनुकर्षः ।

एतेनावधारणमित्यादीनामिति न्यायविवरणस्थादिपदस्योक्तरूपयुक्त्यन्तरसङ्ग्राहकत्व-रूपमर्थान्तरमुक्तं भवति । नन्वात्मशब्दस्य परमात्मार्थत्व इव स्वरूपार्थत्वेऽप्यवधारणस्य विशिष्य सुप्त्यादौ स्वयं ज्योतिष्ट्वोक्तेश्चानुपपत्तिसाम्यात् जीवस्यापि स्वगतज्ञानहेतुस्वरूप-स्वात्मज्योतिष्ट्वस्य सुप्त्यादाविव जाग्रत्यपि सत्त्वात् ब्रह्मैव कुतो नाऽऽत्मेत्यतोऽन्यत्राऽऽदि-पदोक्तयुक्त्यन्तरेणात्मपदस्य स्वरूपार्थत्वमाह ॥ **अत्रायं पुरुष इति** ॥ आत्मप्रश्नोत्तरोपसंहारपरे अत्रायं पुरुषः स्वयं ज्योतिरिति ज्योतिरिति वाक्येऽभिहितार्थस्येह स्वयंशब्दपर्यायात्मशब्देन प्रत्यभिज्ञानादात्मशब्दः स्वरूपपरो न परमात्मपर इत्यर्थः । फलोक्त्योपसंहरति ॥ **अत इति** ॥ निरवकाशलिङ्गादिभावादित्यर्थः । उक्तमित्यन्तभाष्यतात्पर्यं **प्रागुक्तमिति** ॥ विष्णुरेवेत्यन्त-भाष्यमाकाङ्क्षाक्रमेण व्याख्याति ॥ **विष्णुरेवेति** ॥ प्राज्ञेनेति श्रुतौ जीवः प्राज्ञेनान्वारूढः प्राक्तनदेहं त्यजन्यातीति जीवस्यैव सञ्चरणप्रतीत्या श्रुतेः प्रकृतानानुगुण्यं निरस्यँल्लोकसञ्चरणं तु जीवमादाय तस्यैवादुःखेन स्वातन्त्र्यादिति न्यायविवरणानुरोधेन भाष्यं व्याचष्टे ॥ **जीव-मादायेति** ॥ बृहदारण्यकभाष्योक्तं समाधिमाह ॥ **द्रष्टुरिति** ॥ दर्शयितुरित्यर्थः । एतेनेमं लोकमतिक्रामयति जनयति मारयतीत्यादिरूपेण विषयवाक्ये अर्थो दर्शितः । अयं पुरुष इति संसारी आत्मशब्दोदित एव विष्णुः अत आदित्यादिज्योतिष्ट्वं संसारिण एव आदित्येनैवेत्यव-धारणं बाह्यज्योतिषु प्राधान्यापेक्षया इत्यादिन्यायविवरणं भिन्नभिन्नशङ्कानिरासकतया खण्डशोऽत्र योजयति ॥ **न चादित्यादीत्यादिना** ॥ उच्यते आत्मैवाऽस्येति वाक्य इत्यर्थः । अन्यत्रोक्तादिपदोपात्तयुक्तिं वक्तुं तदा विशिष्येत्यादिना प्रागुक्तमनुवदति ॥ **न च विशिष्येति** ॥ **तदुक्तमिति** ॥ वाजसनेयभाष्य इत्यर्थः । तद्भाष्यरीत्यैवाऽऽदिपदोक्तं युक्त्यन्तरं प्रागुक्त-शङ्कानिवर्तकतयाऽऽह ॥ **न च प्रत्यभिज्ञेति** ॥ **उक्तरीत्येति** ॥ अत्र सुप्त्यादावयं पुरुषो विष्णुर्जीवस्य स्वयं ज्योतिरित्युपसंहारस्य स्मृत्यैव व्याख्यानेन आत्मापि विष्णुरेवेत्युपपत्ते-रित्यर्थः । बृहद्भाष्योक्तजीवपरत्वबाधकान्यपि न्यायविवरणस्थादिपदसङ्गृहीतानीति भावेन तानि शङ्कोत्तराभ्यां विशदयति ॥ **नन्वेवमिति** ॥ श्रुतिमात्रस्य ज्योतिःश्रुतिमात्रस्येत्यर्थः । विष्णु-रेवेदं ज्योतिरिति श्रुत्या विष्णौ मुख्यः स्यादपीत्यर्थः ॥ **स्वाप्नेति** ॥ अथ रथान् रथयोगान्पथः

(भावदीपः)
सृजत इत्यादिनोक्त इत्यर्थः ॥ **स्वप्नेनेति** ॥ स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीतीत्याद्युदाहृतमन्त्रे जीवस्य स्वप्नसम्बन्धं कृत्वा स्वयमसुप्त एव तान्पश्यतीत्युक्तार्थस्य जीवेऽनुपपत्तेरित्यर्थः । फलोक्त्योपसंहरति ॥ **तस्मादिति** ॥ ज्योतिःश्रुतिरूपसाधकभावात् बाधकाभावात् जीवपरत्वे बहुबाधकभावाच्चेत्यर्थः ॥

## अभिनवचन्द्रिका

**वाजसनेयके चैतच्छ्रुयत इति** ॥ अनेन ज्योतिःप्रतिपादकत्वमस्याधिकरणस्य पूर्वाधिकरणेन सङ्गतिरित्युक्तं भवति ॥ **विष्ण्वेकवाचित्वश्रवणादिति** ॥ ज्योतिःश्रुतेः विष्णौ मुख्यत्वस्य प्रमाणसिद्धत्वात् बाधकाभावे मुख्यस्यैव ग्राह्यत्वात् वाजसनेयश्रुतिस्थज्योतिःशब्देन विष्णुरेव विवक्षितो न तु जीव इति भावः ॥ **सञ्चरणोक्तेरिति** ॥ अनेन ज्योतिर्विष्णुः उभयलोकसञ्चरणस्य तत्र श्रुतिसिद्धत्वेन बाधकाभावादिति सूत्रं प्रकारान्तरेण व्याख्यातमिति द्रष्टव्यम् ॥ **द्रष्टुश्चक्षुष इत्यादिवदिति** ॥ द्रष्टुश्चक्षुष इत्यत्र द्रष्टुरित्यस्यान्तर्णीतणिच्त्वेन दर्शयितुरित्यर्थत्ववत् 'अभिक्रामति' इत्यादावपि अन्तर्णीतणिच्त्वेनोपपत्तेरित्येतावताऽलमिति 'द्रष्टुश्चक्षुष' इत्यादिवदिति दृष्टान्ताभिधानं व्यर्थम् । तथापि यथावस्थित व्याख्यानमपहायाऽन्तर्णीतणिच्त्वेन व्याख्यानमयुक्तमिति शङ्कापरिहाराय दृष्टान्तोक्तिः ॥ **'कतम आत्मा' इत्यात्मशब्दोदितस्येति** ॥ कतमवाक्यगतात्मशब्दस्य विष्णुत्वात् पूर्ववाक्यप्रतिपाद्यत्वं विष्णोरेवेति भावः ॥ **न चैवं सतीति** ॥ 'आदित्येनैवाऽयं ज्योतिषाऽऽस्त' इत्यवधारणविरोध इति न वाच्यमित्यर्थः ॥ **न च प्रत्यभिज्ञाविरोध इति** ॥ 'अत्राऽयं पुरुषः स्वयंज्योतिर्भवति' इत्यत्रोक्तजीव एव 'आत्मैवास्य ज्योतिर्भवति' इत्यत्रोच्यत इति प्रत्यभिज्ञाविरोध इति न वाच्यमित्यर्थः ॥ **इत्युक्तरित्योपपत्तेरिति** ॥ 'अत्रायं भगवान्' इति प्रमाणोक्तरीत्या 'अत्रायं पुरुषः स्वयंज्योतिः' इति वाक्यस्य विष्णुपरत्वेन प्रत्यभिज्ञाया विष्णुपक्ष एवोपपत्तेरित्यर्थः ॥ **तस्मादिदं प्रागुक्तं चेति** ॥ तस्मात् वाजसनेयगतज्योतिःशब्दः 'विमेकर्णापतयत' इति वाक्यगतश्च ज्योतिःशब्दो विष्णुपर एवेति भावः । एतेन अत्रोक्तप्रागुक्तज्योतिषोर्भेदाभावात् इदं प्रागुक्तं च ज्योतिर्विष्णुरेवेति वचनमयुक्तमिति परास्तम् ।

**पूर्वपक्षस्तु** – जीव एवेदं ज्योतिः । 'स समानः सन्नुभौ लोकावनुसञ्चरति' इति जीवलिङ्गात् । 'इमं लोकमभिक्रामति मृत्योरूपाणि स वा अयं पुरुषो जायमानः शरीरमभि-

(अभिनवचन्द्रिका)

संपद्यमानः पाप्माभिः स सृज्यते स उत्क्रामन् म्रियमाणः पाप्मनो विजहाति उभयानपि पाप्मनः अनन्दांश्च पश्यति, स यत्र स्वपिति, स्वप्रान्ते उच्चावचमीयमानः, भयानि पश्यति इत्यादेश्च । किं च 'अस्यादित्यज्योतिः सम्राडिति होवाच' इत्यादिना आदित्यादिज्योतिष्ट्वमुक्त्वा तस्यैव 'आत्मैवास्य ज्योतिः' इत्यादिना आत्मज्योतिष्ट्वमुक्त्वा 'कतम आत्मा' इति प्रश्ने ज्योतिराम्नायते । न च तद्विष्णोः सम्भवति, 'न तत्र सूर्यो भाति' इत्यादेः । न च यस्यादित्यज्योतिष्ट्वमुक्तं स जीव एवाऽस्तु तस्यैवेत्यत्र परमात्मज्योतिष्ट्वमुक्त्वा 'कतम आत्मा' इति प्रश्ने ज्योतिष आम्नानात् ज्योतिर्विष्णुरिति । तथा सति परमात्मनः उदयास्तमयादिशून्यत्वेन सदा सद्भावात् 'आदित्येनैव अयं ज्योतिषाऽऽस्त' इत्याद्यवधारणं न स्यात् । अत्रायं पुरुषः स्वयं ज्योतिर्भवति' इत्यस्यैव अर्थस्य प्रत्यभिज्ञानाच्च । तस्मादिदं ज्योतिर्जीव एवेति प्राचीनस्य ब्रह्मत्वोपपादनमयुक्तमिति ।

**सिद्धान्तस्तु** – विष्णुरेवेदं ज्योतिः । श्रुतेः विष्ण्वेकवाचित्वात् । मुख्यार्थासम्भव एवाऽमुख्यार्थस्य ग्राह्यत्वात् । न च विष्णुपक्षे उभयलोकसञ्चरणानुपपत्तेः । अमुख्योऽपि जीवरूपोऽर्थो ग्राह्य इति वाच्यम् । तस्यापि 'प्राज्ञेनात्मनान्वारूढ उत्सर्जद्याति' इति तस्मिन् प्रमाणसिद्धत्वेन मुख्यार्थग्रहणे बाधकाभावात् । न च 'इमं लोकमभिक्रामति मृत्योरूपाणि' इत्याद्युक्तलिङ्गविरोधः । अन्तर्णीतणिच्त्वेन तेषामपि सावकाशत्वोपपत्तेः । न च आदित्यादिज्योतिष्ट्वविरोधः । तस्य जीवत्वाङ्गीकारात् । न च तस्यैव स्वयं ज्योतिष्ट्वमुच्यत इति वाच्यम् । आत्मैवास्य ज्योतिर्भवति' इत्युक्तस्यात्मनः 'कतम आत्मा' इति प्रश्ने ज्योतिष्ट्वाभिधानेन जीवस्य प्रसिद्धत्वेन प्रश्नायोग्यतया ज्योतिष्ट्वानभिधानात् । न चैवं सति परमात्मनोऽस्तमयशून्यत्वेन सदा सद्भावात् 'आदित्येनैवायं ज्योतिषाऽऽस्त' इत्यवधारणानुपपत्तिः । अवधारणस्य बाह्यज्योतिषु तस्य प्राधान्यज्ञापनार्थत्वात् । अन्यव्यावर्तकत्वस्य वागादिसत्त्वेनाऽयोगात् । विशिष्य भगवतो ज्योतिष्ट्ववचनं तु स्वापे ज्योतिरन्तराभावाऽभिप्रायेणेति द्रष्टव्यम् । न चेश्वरपक्षे जीवपक्षे प्राप्तः दुःखविशेषवत्त्वेनोभयसञ्चरणे समानत्वाऽयोगः स्वप्नपदार्थकर्तृत्वाभावः 'स्वप्ने न शरीरम्' इत्यादि मन्त्राऽसङ्गतिश्च दोषो भवति । तस्मादिदं ज्योतिः विष्णुरिति 'ज्योतिश्चरणाऽभिधाना' इति प्राक् व्युत्पादितविष्णुत्वं न बाधितमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

'अत्र योऽयं विज्ञानमयः प्राणेषु हृद्यन्तः' इत्येतदनुसारेण साधारण्यमाह ॥ अत्रेति ॥ ज्योतिःशब्दस्यादौ लोकतः प्रसिद्धत्वे संशयकोट्योर्जीवविष्ण्वोर्ज्ञानरूपत्वेन प्रवृत्तिनिमित्त-प्रकाशस्य साम्यादुभयत्र प्रसिद्धता ॥ **श्रुत्यादिसङ्गतिमिति** ॥ प्राणेषु हृद्यन्तरित्युक्तस्य प्रेरकतया प्राणस्थस्य ज्योतिषो विष्ण्वन्यत्वे प्राणचेष्टकवज्रस्याप्यन्यत्वं स्यादित्याक्षेपणोत्थाना-दनन्तरसङ्गतिरिति ज्ञेयम् । तत्र योऽयं विज्ञानमय इति भाष्ये तस्य तदित्यर्थमाह ॥ तच्छ्रूयत इति ॥ **किं विष्णुरिति** ॥ उभयोर्लोकसञ्चरणादिजीवलिङ्गात् ज्योतिर्जीव उत विष्णुरेव ज्योतिरिति विशेषश्रुत्या विष्णुरिति तदर्थं लिङ्गानुसारेण श्रुतिरमुख्येति तच्छ्रुत्यनुरोधेन लिङ्गानि सावकाशानीति । आदित्यादिज्योतिष्ट्वमुभयलोकसञ्चरणम् आदित्येनैवायं ज्योति-षाऽस्ते इत्यवधारणामित्यादीनां परमात्मन्यवकाशाभावः इति न्यायविवरणानुसारेण लिङ्गस्यानवकाशत्वमाह ॥ **तस्य हीति** ॥ यद्यपि भूमनयदिशोत्क्रमणक्रियावदणुत्वयुक्ते हरौ सञ्चरणक्रियोपपद्यते । तथापि उत्क्रमणं म्रियमाणः पाप्मानः इत्यादि प्रकरणात् कर्माधीनं न हरौ युक्तमिति भावः । भाष्य इति वचनादित्यत्रेतिशब्द आद्यर्थे । इत्यादिलिङ्गप्रतिपादक-वचनादित्यर्थः । इत्यभिप्रेत्य न्यायविवरणदिशोक्तलिङ्गान्याह **इममिति** ॥ इमं लोकं भूलोकं मृत्यो रूपाणि मृत्युनिरूपकं मृत्युसाधनानि चाप्नोतीति वा पाप्मानः पापफलानि दुःखानि, स्वप्नस्थानेनाप्रमातः प्राप्नुव इति वचनात् । कतम आत्मेति जीवप्रश्नवचनात् परिहारतया हृद्यन्तर्ज्योतिरिति परिहारवचनात् । प्रश्नपरिहाराभ्यां ज्योतिर्जीव इति प्रतीयते इति भाष्यार्थं मनसि निधाय न्यायविवरणानुसारेणाह ॥ **किं चेति** ॥ अयमाशयः ॥ कतम आत्मेति जीवप्रश्नोत्तररूपत्वात् हृद्यन्तर्ज्योतिरित्युक्तम् । ज्योतिर्जीव एव कतम आत्मेति प्रश्नवचनं कथं जीवविषयमवगतमिति चेत् आत्मैवास्य ज्योतिर्भवतीति सुप्तिस्वप्नयोः स्वप्रकाशतयोक्तजीवस्यैव कतम आत्मेति पृष्टत्वात् । आत्मैवास्येत्यत्रास्येति निर्दुष्टः कुतो जीवोऽवसीयते इति चेत् । किं ज्योतिरयं पुरुषः इत्ययं पुरुषः किं रूपं ज्योतिर्ज्ञानसाधनं किम् इति किं ज्योतिरिति जीवस्य ज्ञानसाधनप्रश्ने आदित्येनैवायं ज्योतिषाऽस्ते अस्तमिति आदित्ये किं ज्योतिरिवायं पुरुष इति चन्द्रमसैवायं ज्योतिषाऽऽस्त इत्यादिना यस्य पुरुषस्यादित्यचन्द्राग्निवागाख्यज्योतिष्ट्वमुक्तम् । तस्यैवात्मेति श्रुत्यादौ स्वप्रकाशत्वोक्तेः विष्णोश्चादित्यादिज्योतिष्ट्वानुपपत्तेरिति ।

(वाक्यार्थमुक्तावली)

नन्वात्मैवास्येत्यत्रास्येति पदेन जीव उच्यते इत्यस्तु । आत्मशब्दस्तु न समभिव्याहृत-स्वात्मपरः । किं तु परमात्मपर इत्याशङ्क्य आदित्येनैवायं ज्योतिषाऽऽस्ते इत्यवधारणमिति न्यायविवरणानुसारेणैव परिहरति **न चेत्यादिना** ॥ न केवलं परमात्मनि जाग्रत्यपि ज्योतिष्ट्वप्राप्त्यादिनैवत्याद्यवधारणायोगः । किन्तु सर्वत्रोक्तन्यायेन परमात्मनो ज्योतिष्ट्वात् सुप्तावात्मा ज्योतिरिति विशिष्योक्त्या योगश्चेत्याह ॥ **तदेति** ॥ इति स्वात्मशब्दो न विष्णुपर इत्याह ॥ **अत्रायमिति** ॥ आत्मप्रश्नोपसंहाररूपेणात्रायमिति वाक्ये नात्मैवास्य ज्योति-रित्युक्तस्य प्रत्यभिज्ञानादेवेत्यर्थः । तथा चात्रायमिति वाक्ये स्वयं शब्दानुसारेण स्वप्रकाशत्व-लाभात् । तत्समानार्थकतयात्मैवेति वाक्येऽपि स्वयमेवास्य ज्योतिरिति स्वप्रकाशार्थकत्वं ग्राह्यमित्यात्मप्रश्नोत्तरस्य ज्योतिःशब्दस्य जीवपरत्वमेवेति भावः । प्राज्ञेनात्मनाऽन्वारूढो जीवः प्राक्तनदेहं त्यजन् यातीति जीवस्यैव सञ्चरणप्रतीत्या श्रुतेः प्रकृतानानुगुण्यमित्यत आह ॥ **जीवमादायेति** ॥ अन्यथा प्राज्ञेनेति व्यर्थमिति भावः । तस्यापि लोकसञ्चरणमिति भाष्ये लोकसञ्चरणमपि शब्दाल्लिङ्गान्तरं चास्तीत्यर्थं मत्वाऽऽह ॥ **न चैवमित्यादिना** ॥ इत्यादिवदित्यादिपदेन कृत्वा विवाहं तु कुरुप्रवीरा इत्यादिबृहद्भाष्योक्तं गृह्यते । एतेनातिक्रम-यति मारयतीत्यादिरूपेण श्रुत्यर्थ उक्तो भवति । आदित्यादिज्योतिष्ट्वं संसारिण एवेति न्यायविवरणानुसारेण विरोधोऽपि नास्तीत्यपिशब्दार्थमाह ॥ **न चादित्येति** ॥ विष्णुरेवात्मेति श्रुतेस्तस्यात्मशब्दोऽप्यस्त्येवेति भाष्यार्थं मत्वाह ॥ **आत्मशब्दोदितस्येति** ॥ उक्तं चात्मशब्दोऽदितो विष्णुरिति ।

न्यायविवरणे तु आदित्येनैवेत्यवधारणं बाह्यतेजःसुप्राधान्यपेक्षयेत्यादीनि । न्यायविवरणानु-सारेणापि शब्दार्थतया विरोधान्तरं परिहरति ॥ **न चैवमित्यादिना** ॥ यथा कस्मिन् पुरे कस्यचिदमात्यादिबहूपकारेऽपि प्रधानराज्ञोपकारे अङ्गोपकारकाणां मध्ये अमात्योपकारप्राधान्य-विवक्षया अस्मिनुपुरे अमात्येनैवायमास्त इति व्यपदेशस्तथेति भावः ॥ अपि शब्द-समुच्चयान्तरमाह ॥ **न च विशिष्योक्तीति** ॥ सर्वदाभावेऽपि तदात्मा ज्योतिरिति विशिष्येत्यर्थः । अत एव न्यायविवरणे आदिशब्द इति भावः ॥ **तदुक्तमिति** ॥ बृहद्भाष्य इत्यर्थः । समुच्चयान्तरमाह ॥ **न च प्रत्यभिज्ञेति** ॥ **इत्युक्तरीत्येति** ॥ अत्र समभिव्याहृत-विष्णुपरत्वोक्तेः आत्मैवेत्यत्रापि विष्णुपरत्वं न स्वात्मपरत्वमिति भावः ॥ **श्रुतिमात्रस्येति** ॥

(वाक्यार्थमुक्तावली)
विष्णुरेव ज्योतिरिति श्रुत्या विष्णावेवामुख्यस्यापि ज्योतिःश्रुतिमात्रस्येत्यर्थः । एतदाशङ्का-परिहाराय परपक्षे बृहद्भाष्योक्तबाधकसमुच्चायकत्वेनापि पदं व्याचष्टे ॥ **जीवपक्षे** इति ॥ **विशेषवत्वेनेति** ॥ भगवान् विष्णुरेवानन्द इति भाष्योदाहृतश्रुत्यैकप्रकारानन्दरूपत्वेन समान इति भावः । अत उक्तं जीवमादाय लोकसञ्चरणं तस्यैवादुःखेन स्वातन्त्र्यादिति न्यायविवरणे ॥ **स्वाप्नेति** ॥ अथ रथान् रथयोगान् पथः सृजत इत्यादिनेत्यर्थः ॥ **स्वप्नेनेति** ॥ उपनिष-दुदाहृतमन्त्रे जीवस्य स्वप्नसम्बन्धं कृत्वा स्वयमसुप्तमेव तान् पश्यतीत्युक्तार्थस्य जीवेऽनुपपत्ते-रित्यर्थः ।

## तत्त्वसुबोधिनी

**ज्ञानरूपत्वेन हृदयाहितत्वेन चेति** ॥ तथा च ज्योतिःशब्दस्य लोकप्रसिद्धे अग्निमात्र-निष्ठत्वेऽपि ज्ञानरूपलक्षणप्रवृत्तिनिमित्तस्य हृद्यन्तरज्योतिरिति विप्रतिपन्नवाक्ये श्रुतहृदयाहि-तत्वलिङ्गस्य च जीवेशयोः साम्यादेतन्निबन्धनोभयत्वप्रसिद्धिः ज्योतिःशब्दस्य युक्तेति भावः ॥ **श्रुत्यादिसङ्गतिमिति** ॥ अत्र प्राणेषु हृद्यन्तर्ज्योतिरितिवाक्येन चेष्टकतया प्राणेषु विद्य-मानत्वेनोक्तस्य ज्योतिषः विष्णोरन्यत्वे यदिदं किञ्च जगदित्युक्तप्राणचेष्टकस्यापि विष्णोरन्यत्वं स्यादित्यपि पूर्वाक्षेपसम्भवादव्यवहितपूर्वाधिकरणसङ्गतिर्ज्ञातव्या । ननु लोकसञ्चरणं विष्णावपि सम्भवतीति कथं तस्य जीवलिङ्गत्वमित्यत आह ॥ **तस्य हि कर्मवशादिति** ॥ **तस्यैवेति** ॥ अस्यैवेतीदंशब्दस्य प्रकृतजीवपरामर्शकत्वादिति भावः । **आत्मज्योतिष्ट्वोक्ताविति** ॥ स्वप्रकाशत्वोक्तावित्यर्थः । आत्मज्योतिः स्वरूपज्ञानार्थत्वादिति भावः । ननु आत्म-ज्योतिष्ट्वं परमात्मनोऽप्यस्तु इत्यत आह ॥ **न हीति** ॥ कुतो नेत्यत आह– **न तत्रेति** ॥ **अवधारणानुपपत्तेरिति** ॥ तस्यान्ययोगव्यवच्छेदकत्वादिति भावः ॥ **तदा विशिष्येति** ॥ परमात्मनोऽस्तमयादिशून्यस्य जाग्रत्वेऽपि ज्योतिष्ट्वस्य प्राप्त्या इतरत्रापि सम्बध्यते । अत्रायं पुरुष इति आत्मप्रश्नोपसंहाररूपेण अत्रायं पुरुषः स्वयञ्ज्योतिरिति वाक्येन आत्मैवास्य ज्योतिरित्युक्तार्थस्यैव अर्थस्य प्रत्यभिज्ञानादित्यर्थः । तथा च अत्रायं पुरुष इति वाक्ये स्वयं शब्दानुरोधेन स्वप्रकाशत्वस्यैवोक्त्या तत्समानार्थात्वाद्येव आत्मैवास्य ज्योतिरित्युक्तस्यापि स्वप्रकाशकत्वार्थकत्वे आत्मप्रश्नोत्तरस्य ज्योतिःशब्दस्य जीवपरत्वमेवेति भावः ॥ **विष्ण्वैकवाचित्वेति** ॥ **विष्णोरेवेति** ॥ भाष्योदाहृतश्रुतौ अन्ययोगव्यवच्छेदार्थकावधारण-

(तत्त्वसुबोधिनी)

श्रवणादिति भावः । कुतो न विरोध इत्यतो जायमान इत्यादेः अन्तर्णीतण्यर्थत्वेनोपपत्तेः न तद्विरोध इत्याह ॥ **द्रष्टुश्चक्षुष इत्यादाविति** ॥ तथा चेमं लोकम् अतिक्रामतीत्यादावति-क्रामतीत्याद्यर्थ इत्यर्थः । नन्ववधारणस्य प्राधान्यज्ञापकत्वं कुतः अन्यव्यावर्तकत्वमर्थः किं न स्यादित्यत आह– **अन्यव्यावर्तकत्वस्येति** ॥ जाग्रदवस्थायामपि ज्ञानकारणानां वागिन्द्रियाणां सत्वेनैवकारस्य ज्ञानकारणान्तरव्यवच्छेदकत्वायोगादित्यर्थः । विशेष्योक्तिः ज्योतिरन्तराभावाभिप्रायेणेत्युक्तं तत्कुतः इत्यतस्तत्र बृहदारण्यकभाष्यसंमतिमाह ॥ **तदुक्त-मिति** ॥ **इत्युक्तरीत्योपपत्तेरिति** ॥ तथात्रायं पुरुष इत्यत्र स्वयंशब्दस्य परमात्मपरत्वेन परमात्मज्योतिषामेव उच्यते जीवस्य न स्वप्रकाशत्वम् इति न तदनुरोधेन आत्मैवास्य ज्योति-रित्यस्य स्वप्रकाशत्वार्थकत्वमिति भावः ॥ **श्रुतिमात्रस्येति** ॥ प्राणेषु हृद्यन्तर्ज्योतिरित्यादौ विष्णुत्वनिश्चायकलिङ्गाद्यसमभिव्याहृतज्योतिःशब्दस्येत्यर्थः । किं तद्बहुबाधकमित्यतः तान्याह प्रसिद्धत्वेनेत्यादिना स्वाप्नेति । अथ रथान् रथयोगान् पथः सृजत इत्युक्तस्य स्वाप्नपदार्थ-कर्तृत्वस्य असम्भवादित्यर्थः ॥

## वाक्यार्थमञ्जरी

ज्योतिःशब्दप्रवृत्तिनिमित्तं प्रकाशत्वं, ज्ञानमपि प्रकाशरूपमिति भावः ॥ **योऽयमिति** ॥ कतम आत्मेत्यस्येदमुत्तरम् । यो विज्ञानमयः विज्ञानपूर्णः प्राणेष्विन्द्रियेष्वन्तः हृद्यन्तश्च वर्तमानः ज्योतिर्जीवस्य बुध्यादिद्योतनेन प्रवृत्तिहेतुः पुरुषः पूर्णषड्गुणः अयमात्मा तस्यैव महिमान्तरं स इति स आत्मा समानः सन् अविकारात्सदैकप्रकारः सन् उभौ लोकौ भूलोक-द्युलोकौ जाग्रत्सुषुप्ती वा जीवमादायानुसञ्चरतीत्यर्थः । लिङ्गान्तराण्याह ॥ **इमं लोक-मित्यादिना** ॥ स हि स्वप्नो भूत्वेति पूर्ववाक्यं स आत्मा स्वप्नो भूत्वा स्वापको भूत्वा जीवस्य स्वप्नमानयन् मृत्यो रूपाणि बहुपापैकहेतुत्वान्मृत्युरूपात्मकमिमं लोकं जाग्रदाख्यमतिक्रामति तारयति हि प्रसिद्धम् । यद्वा स आत्मा स्वप्नो भूत्वान्तरिक्षलोकान्तर्गतो भूत्वा मृत्यो रूपाणि बहुमृत्युसरूपात्मकं पापहेतुभूतं चेमं लोकं भूलोकमतिक्रामति जीवमन्तरिक्षगं कुर्वन् तारयति सजीवं प्रति ज्योतिष्ट्वेनोक्तः अयं समानः सन्नित्यादिनोक्तः पुरुषो जायमानो वैतस्यैव व्याख्यानं शरीरमभिसम्पद्यमान इति जीवगतशरीराभिसम्पत्तिनियामकः सन् पाप्मभिः संसृज्यते जीवेन पापानि कारयित्वा तत्फलदानाय तानि गृह्णाति स आत्मा म्रियमाणः न मरणमात्रमत्र

(वाक्यार्थमञ्जरी)
विवक्षितं किन्तु उत्क्रमन् ऊर्ध्वं गच्छन् जीवगतोत्क्रमणनियामकः सन्पाप्मनो विजहाति जीवकृतपापफलं न ददातीत्यर्थः ॥ **उभयानिति** ॥ उभयानित्यस्यैव विवरणं पाप्मन आनन्दांश्चेति । सभगवान् जाग्रदवस्थायां जीवानुभूयमानानि पापफलानि दुःखानि सुप्तावनुभूयमानानन्दांश्च पश्यतीत्यर्थः ।

जीवस्य पूर्वोक्तात्मज्योतिष्ट्वं कदेत्युच्यते ॥ **स यत्रेति** ॥ स आत्मा यत्र यदा स्वपिति जीवं प्रस्वापयति तदेत्यर्थः । तस्यैव महिमान्तरमुच्यते ॥ **स्वप्नान्त इति** ॥ देवः स्वप्नान्ते स्वप्नावस्थायामुच्चावचमीयमानः वासनारूपेषूच्चनीचेषु गजपिपीलिकादिषु प्रविशन्स्वस्य बहूनि रूपाणि कुरुत इत्यर्थः ॥ **भयानीति** ॥ स भगवान् जीवस्य भयानि पश्यन्नपि जक्षदिवास्त इति पूर्वेणान्वयः ॥ **किं ज्योतिरिति** ॥ हे याज्ञवल्क्य अयं पुरुषः संसारी किं ज्योतिर्यस्यासौ किं ज्योतिरस्य पुरुषस्य प्रवृत्त्यादिव्यापारे स्वयमसमर्थत्वेन किञ्चिज्ज्योतिरपेक्षितं किं तज्ज्योतिरिति ज्योतिरिति जनकेन पृष्टो याज्ञवल्क्यो हे सम्राड्राजन् अयं पुरुषः आदित्य एव ज्योतिर्यस्यासावादित्य ज्योतिरित्युवाचेत्यर्थः ॥ **तस्यैवेति** ॥ अस्येतीदंशब्दस्य प्रकृतजीवपरामर्शकत्वादिति भावः ॥ **आत्मज्योतिष्ट्वोक्ताविति** ॥ स्वप्रकाशत्वोक्तावित्यर्थः ॥ **तदात्मेति** ॥ ज्योतिष्ट्वेनोक्तात्मेत्यर्थः ॥ **तदाविशिष्येति** ॥ सुषुप्तौ विशेषेणेत्यर्थः ॥ **अत्रायं पुरुष इति** ॥ आत्मप्रश्नोपसंहारेणायं पुरुषः स्वयञ्ज्योतिरिति वाक्ये नात्मैवास्य ज्योतिरित्युक्तस्यैवार्थस्य प्रत्यभिज्ञानादित्यर्थः । तथा चात्रायं पुरुष इति वाक्ये स्वयं शब्दानुरोधेन स्वप्रकाशत्वस्यैवोक्त्या तत्समर्थनार्थत्वायात्मैवास्य ज्योतिरित्यस्यापि स्वप्रकाशत्वार्थकत्वे आत्मप्रश्नोत्तरस्य ज्योतिःशब्दस्य जीवपरत्वमेवेतिभावः ॥ ॐ ज्योतिर्दर्शनात् ॐ ॥ हृद्यन्तर्ज्योतिरित्युक्तज्योतिर्विष्णुरेव कुतः दर्शनात् ज्योतिःश्रुतेर्विष्णुमात्रवाचित्वप्रतिपादकविष्णुरेव ज्योतिरितिश्रुतेरित्यर्थः । श्रुतावुत्सृजन्पूर्वदेहं त्यजन् द्रष्टुश्चक्षुष इति स्वातन्त्र्यस्नेहयोरन्तर्णिजितिसूत्रं स्वातन्त्र्यस्नेहयोर्विवक्षितयोःसतोर्णिजन्तर्गतो न तु प्रयुज्यत इति सूत्रार्थः । तथा च यथा द्रष्टुश्चक्षुषो नातिजिह्वेत्यत्र द्रष्टुरित्यस्य दर्शयितुरित्यर्थः तथेहापि स्वातन्त्र्यस्य विवक्षितत्वात् णिचोऽन्तर्गतत्वेनातिक्रामतो इत्यादेरतिक्रामयतीत्याद्यर्थत्वमितिभावः ॥ **वागादिसत्वेनेति** ॥ जागरावस्थायामपि ज्ञानकारणानां वागादीनां सत्वेन ज्ञानकारणान्तरव्यवच्छेदकत्वायोगादित्यर्थः । तदुक्तं बृहद्भाष्ये ॥ **भाव इति** ॥ यद्यपि जाग्रति सूर्यादिभावे सत्वे सुषुप्ताव-

(वाक्यार्थमञ्जरी)

भावेऽपि स्वयं साक्षाद्विष्णुरेव जीवानां ज्योतिस्तथापि सूर्याद्यभावे सति तद्विष्णोर्ज्योतिष्ट्वं विशेषतो ज्ञेयमित्यर्थः ॥ **अत्रेति** ॥ अत्र सुप्तौ भगवान् स्वयं विष्णुरेव जीवस्य ज्योतिः जाग्रद्यपि तथात्वात् किं विशिष्योच्यत इत्युक्तम् ॥ **विशेषत इति** ॥ तदेव कथमित्यत उक्तम् ॥ **नैवेति** ॥ यद्यस्मादत्र सुप्तावन्यज्ज्योतिर्नास्तीत्यर्थः ॥ **इत्युक्तेति** ॥ बृहद्भाष्योक्तेत्यर्थः । तथाचात्रायं पुरुषः स्वयंज्योतिरित्यत्र स्वयंशब्दस्य परमात्मपरत्वेन परमात्मज्योतिष्ट्वमेवोच्यते न जीवस्य स्वप्रकाशत्वमिति नैतदनुरोधेनात्मैवास्य ज्योतिरित्यस्य स्वप्रकाशार्थकत्वमिति भावः । एवमन्यार्थतेति सम्बन्धः । अतो बाधकाभावस्य पूर्वमनुक्तेरेवमिति परामर्शायोग इति न शङ्क्यम् ॥ **स्वाप्नपदार्थेति** ॥ अथ रथान् रथयोगान्पथः सृजत इत्यनेनोक्त इत्यर्थः ॥ **असङ्गतेरिति** ॥ ज्योतिषो जीवत्वे तत्र भगवत्प्रतिपादकमन्त्रोदाहरणासङ्गतेरित्यर्थः ।

तदेते श्लोका भवन्ति स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीतीत्यस्यायमर्थः । तत् तत्र पूर्वोक्तार्थे एते वक्ष्यमाणाः श्लोकाः मन्त्राः प्रमाणत्वेन भवन्ति । के ते हिरण्मयः परमात्मा स्वप्नेन सुषुप्त्या शारीरं जीवमभिप्रहत्य संयोज्य स्वयमसुप्तः सुप्तान् शारीरानभिचाकशीति पश्यतीति ॥

॥ इति ज्योतिरधिकरणम् ॥

## १२. आकाशाधिकरणम्

सर्वाधारत्वं विष्णोरुक्तम् । तच्च 'आकाशो वै नाम नामरूपयोर्निर्वहिता' (छां.उ. ८-१४-१) इत्यत्राऽऽकाशस्य प्रतीयते । वै नामेति प्रसिद्धोपदेशात् प्रसिद्धाकाशश्चाङ्गीकर्तव्य इत्यत उच्यते–

॥ ॐ आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॐ ॥ ४१ ॥

'ते यदन्तरा तद्ब्रह्म' (छां.इ.८-१४-१) इत्यर्थान्तरत्वादिव्यपदेशादाकाशो हरिरेव । 'अवर्णं' (अवर्णमचक्षुः श्रोत्रम् इत्याद्याथर्वणी श्रुतिः) 'यतो वाचो निवर्तन्त' (तै.उ. २-४) इत्यादिश्रुतेस्तस्यैव हि तल्लक्षणम् ।

'अनामा सोऽप्रसिद्धत्वादरूपो भूतवर्जनात्' इति (हि) ब्राह्मे ॥

## सत्तर्कदीपावली

नन्वाकाशो वै नाम नामरूपयोर्निर्वहितेत्यत्र सर्वाधिकतयाप्याम्नातोऽप्याकाशो न विष्णुः किं तु भूताकाश एव । वै नामेति प्रसिद्धिद्योतकनिपातश्रवणाल्लोकप्रसिद्धाकाशो हि भूताकाश इति न वक्तव्यम् । ये यदन्तरा तद् ब्रह्मेति वाक्यशेषविरोधात् । यतो यमाकाशस्ते नामरूपे विना ताभ्यामस्पृष्टो वर्तते । अतो नामरूपात्मकभूतभौतिकादिप्रपञ्चानिर्वाहत्वात् अर्थान्तरभूत इत्यर्थः । तद्ब्रह्म तदमृतं स आत्मेति निर्दिष्टमानत्वाच्च नायमाकाशः । वै नामेत्यनेन प्रकाशमानो भगवान्नामरूपनिर्वहितेत्यत्र प्रसिद्धिद्योतकेन नामरूपातीतत्वं विष्णोरेव युज्यते । 'अगोत्रमवर्णमचक्षुःश्रोत्रं' 'यतो वाचो निवर्तन्त' इत्यादिश्रुतेः । अनामासौऽप्रसिद्धत्वादरूपो भूतवर्जनादिति वचनान्नात्र विरोधः शङ्कनीयः । तदिदमुक्तम् सर्वाधारत्वमित्यादिना ।

## तत्त्वप्रदीपिका

'आकाशस्तल्लिङ्गात्' इत्यत्र विष्णोर्यौगिकाकाशत्वप्रसाधनाद्यद्यपि न विष्णुर्विहातुं शक्यते । तथाऽप्यत्र वै नाम्मेति प्रसिद्ध्यतिशयद्योतकनिपातद्वययोगेन रूढेर्बलवत्त्वात्प्रसिद्धाकाशोऽप्यङ्गीकर्तव्यः । आकाशशब्दस्योभयत्र प्रसिद्धेरिति पूर्वः पक्षः । अयं चास्मिन्पादे प्रत्यधिकरणमनुगमयितव्यो न्यायः । 'आकाशोऽर्थान्तरत्वादिव्यपदेशात्' । ते यदन्तरा ते नामरूपे अन्तरा, यन्नाम च रूपं च न भवतीति यावत्, यद्वा नामि च रूपि च न

(तत्त्वप्रदीपिका)
भवति तद्ब्रह्मेति नामरूपाभ्यामर्थान्तरत्वतद्रहितत्वब्रह्मत्वव्यपदेशादाकाशो हरिरेव । अर्थान्तरत्वनामान्तरत्वादिव्यपदेशादिति वा । 'अवर्णमचक्षुश्श्रोत्रम्' इत्याद्याथर्वणी श्रुतिः । अवर्णं न वर्णः, शुक्लादिवर्णरहितं च, न च वर्ण्यते नापि वर्णात्मकमिति । अनामा सोऽप्रसिद्धत्वात् सर्वात्मना स्वात्मनोऽन्यस्य । अरूपो भूतवर्जनात् भौतिकदेहवर्जनात् ॥

## तत्त्वप्रकाशिका

अत्र प्रयोगवशाद् गगने भगवति च साधारणस्याकाशनाम्नो हरौ समन्वयप्रतिपादनादस्ति शास्त्रादिसङ्गतिः । श्रुत्यादिसङ्गतिं विषयादिकं च सूचयति ॥ **सर्वेति** ॥ द्युभ्वाद्यायतनं स्वशब्दादित्यादौ सर्वाधारत्वं विष्णोरुक्तम् । तच्छन्दोगश्रुतावाकाशस्य प्रतीयते । 'आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतम्' इति । स च विष्णोरितरश्चे-त्सर्वाधारत्वमन्यस्य प्रसज्येत इत्यवश्यं निर्णयः । स आकाशोऽत्र विषयः । किं विष्णुः प्रसिद्धाकाशो वेति सन्देहः । उक्तसाधारण्यं सन्देहबीजमिति भावः । सयुक्तिकं पूर्वपक्षयति ॥ **वै नामेति** ॥ अयमाकाशः प्रसिद्ध एव भवेत् । आकाशशब्दस्य तत्र रूढत्वात् । न च वाच्य-माकाशशब्दस्य विष्णावपि वृत्तेः सावकाश इति । यौगिकत्वात् । योगस्य रूढेर्दौर्बल्यात् । सर्वाधारत्वलिङ्गेन योगोऽप्याश्रीयत इति चेन्न । प्रसिद्धाकाशपरित्यागेनात्र विष्ण्वङ्गीकारे वै नामेत्युक्तनिपातद्वयविरोधात् । तस्योक्तार्थप्रसिद्धिद्योतकत्वात् । न हि विष्णुस्तन्निर्वहितृत्वं वा प्रसिद्धम् । अतः प्रसिद्धाकाश एवायमिति तस्य सर्वाधारत्वमिति भावः । सिद्धान्त-यत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ अयमाकाशो हरिरेव । अस्याकाशस्य ते यदन्तरेति नामरूपराहित्याख्यविलक्षणार्थत्वव्यपदेशात् । 'तद्ब्रह्मेति' ब्रह्मत्वव्यपदेशाच्चेत्यर्थः । अर्थान्तरत्वमिति रूपराहित्यमादिपदेनानामत्वमिति वा ते नामरूपे अन्तरा विना वर्तत इत्यर्थः । अरूपत्वादिलिङ्गेन कुतो विष्णुत्वनिश्चय इत्यत आह ॥ **अवर्णमिति** ॥ रूपस्य वाच्यान्तर्भावेन प्राधान्यात् क्रमोल्लङ्घनम् । ननु हरेः कथमनामरूपत्वमुक्तविरोधादित्यत आह ॥ **अनामेति** ॥ न च विष्णुपक्षे निपातद्वयविरोधः । भगवतो नामादिनिर्वहितृत्व-स्यालोकप्रसिद्धत्वेऽपि 'एको दाधार भुवनानि विश्वा' इत्यादिवेदप्रसिद्धत्वेन तदर्थत्वेनोपपत्तेः । अन्यथा अनामरूपत्वविरोधात् । अव(आ)काशस्यापि नाम(रूप)वत्त्वात् । अतोऽयमाकाशो विष्णुरेवेति तस्यैव सर्वाधारत्वमिति स्थितम् ॥

## गुर्वर्थदीपिका

उक्तसाधारण्यमित्यत आकाशाधिकरणन्यायेन भगवति प्रयोगवशादस्मिन्नधिकरणे वै नामेति बाधकसहितत्वेन मन्दानामन्यत्र प्रयोगवशाच्चेत्यर्थः । प्रसिद्धिद्योतकत्वादित्यस्य एकार्थकनिपातद्वयस्यैकत्रैव प्रयोगेनातिशतियप्रसिद्धिद्योतकत्वादित्यर्थः । न हि विष्णोस्तन्निर्वहितृत्वमित्यत्र अनेनाकारेण प्रसिद्धं न हीति योजना । ते नामरूपे नामात्मकरूपात्मकजगती । रूपस्य वाच्यान्तर्भाविनेत्यत्र वाच्यान्तर्भाविन वाच्यार्थरूपत्वेन अर्थानां चान्नोदकक्षेत्रकटकमुकुटादिरूपाणां सर्वोपजीव्यत्वेन प्राधान्यम् । नाम्नां तु तद्बोधकत्वमात्रेणोपादेयानामप्राधान्यमिति भावः । उक्तविरोधादित्यत्र आनन्दमयाधिकरणे शिरःपाण्यादिरूपोक्त्या आकाशाधिकरणे नामोक्त्या चोक्तविरोधादित्यर्थः । भगवतो नामादिनिर्वहितृत्वस्येत्यत्र आकारान्तरेण प्रसिद्धावप्यनेनैवाकारेण प्रसिद्धिर्नेति न शङ्कनीयम् । तद्वाचकपदान्तरेण प्रसिद्धावपि तत्प्रसिद्धेरेवोक्तत्वात् । अन्यथा सार्वजनीनतया घटपदवाच्यतया प्रसिद्धे घटेऽपि अर्घ्यपात्रादिपदानामसाधकत्वप्रसङ्गात् । आकाशस्यापि नामरूपवत्त्वादित्यत्र आकाशादिनामवत्त्वादवकाशदायकविरळाकाशवत्त्वाच्च । अन्यथा आकाशस्य रूपप्रपञ्चाद्बहिर्भावप्रसङ्गः । सत्यस्य वस्तुनो निःस्वरूपत्वयोगेनासत्त्वापत्तेश्च । कथं तर्हि नामरूपविभाग इति चेत् कुरुपाण्डवन्यायेनेति द्रष्टव्यम् ॥

## भावबोधः

**प्रयोगवशादिति** ॥ 'तद्धेतुव्यपदेशात्' इत्याद्युक्तरीत्या 'को ह्येवान्यात् कः प्राण्यात् य एष आकाश आनन्दो न स्यात्' इत्यादौ विष्णौ यः प्रयोगः 'आत्मन आकाशः' इत्यादौ यश्च भूते प्रयोगस्तद्वशादित्यर्थः ॥ **श्रुत्यादिसङ्गतिमिति** ॥ अव्यवहितपूर्वाधिकरणसङ्गतिस्तु तद्ब्रह्म तदमृतम्' इत्यमृतत्वेनोक्ताकाशस्य विष्णोरन्यत्वे 'बहिः कुलायादमृतश्चरित्वा' इत्यमृतत्वेन पूर्वोक्तज्योतिषोऽप्यन्यत्वं स्यादित्यपि पूर्वाक्षेपसम्भवादिति ज्ञातव्यम् ॥ **स्वशब्दादित्यादाविति** ॥ 'अक्षरमम्बरान्तधृतेः' इत्यादावपि अम्बरान्तधृतिरूपहेतुत्वादिना सर्वाधारत्वस्योक्तत्वादिति भावः ॥ **किं विष्णुरिति** ॥ आकाशो ह वै नामरूपयोर्निर्वहितेत्युक्ताकाशः किं प्रसिद्धभूताकाश उत विष्णुरिति चिन्ता । तदर्थं तस्य विष्णुत्वे

(भावबोध:)

प्रसिद्धिद्योतक 'वै नाम' इति निपातद्वयं किं विरुध्यते न वेति । तदर्थं द्योत्याप्रसिद्धि: किं लौकिकी उत वैदिकीति । तदर्थं लौकिकग्रहणे बाधकं वैदिकग्रहणे च साधकं नास्त्युतास्तीति । तदर्थं ते यदन्तरेत्याद्युक्तनामरूपराहित्यब्रह्मत्वादिकमाकाशे सावकाशमुत निरवकाशमिति । तदर्थं तस्य निरवकाशत्वे प्रमाणं नास्त्युतास्तीति ॥ **प्रसिद्ध एवेति** ॥ अनेन भाष्ये प्रसिद्धाकाशश्चेति 'च'शब्द एवार्थे इत्युक्तं भवति । 'वै नाम' इति प्रसिद्ध्युपदेशादिति, भाष्यव्याख्यानपरेण प्रसिद्धाकाशपरित्यागेनात्र विष्ण्वङ्गीकार इत्यादिना ग्रन्थेन 'वै नाम' इति प्रसिद्धिद्योतकनिपातद्वयं रूढित्यागेनोक्तयौगिकार्थस्वीकारे विरोधीति न्यायविवरणमपि व्याख्यातं भवति ॥ **निपातद्वयविरोधादिति** ॥ 'यद्यप्याकाशस्तल्लिङ्गात्' इति सूत्रस्य विषयवाक्ये 'अस्य लोकस्येत्यत्र सर्वाणि ह वै' इति 'वै'शब्दाख्यनिपातो वर्तते । तथापि तत्र 'वै'शब्दस्य सर्वभूतशब्दमध्यपतितत्वेन सर्वभूतान्वयान्नाकाशप्रसिद्धिद्योतकत्वम् । इह तु 'वै' शब्दस्याकाशशब्दसन्निधानान्नान्यथासिद्धि: । नामेत्येतदधिकं चेति वैषम्यम् । अत एव भाष्ये 'वै नाम' इति निपातद्वयमुक्तम् । न्यायविवरणे च प्रसिद्धिद्योतकनिपातद्वयमित्युक्तमिति भाव: ॥ **न हि विष्णोस्तन्निर्वहितृत्वं वा प्रसिद्धमिति** ॥ यद्यपि वेदे 'यदेष आकाश आनन्दो न स्यात्' । आकाश: परायणम् इत्यादौ विष्णोर्नामरूपादिसर्वसाधारणतया आकाशशब्दार्थत्वेन प्रसिद्धिरस्ति तथापि प्रसिद्धाकाशस्य स्वरूपेण नामरूपावकाशदानात्तन्निर्वाहकतया च लोके वेदे च प्रसिद्धिवद्विष्णो: स्वरूपेण नामरूपनिर्वाहकतया न लोकवेदयो: प्रसिद्धिरस्ति । न हि निपातद्वयेनासङ्कुचितप्रसिद्धिद्योतनं सम्भवति । सङ्कुचितप्रसिद्धिद्योतनं युक्तमिति भाव: । अत एव वक्ष्यति **भगवतो नामादिनिर्वहितृत्वस्यालोकप्रसिद्धत्वेऽपीति** ॥ अर्थान्तरत्वादीति सूत्रभाष्यगतादिशब्दार्थमाह– **तद्ब्रह्मेति** ॥ ब्रह्मत्वव्यपदेशाच्चेत्यर्थ: । अनेन भाष्ये तद्ब्रह्मेति श्रुत्यंशोदाहरणेन सूत्रगतादिशब्दो ब्रह्मत्वव्यपदेशार्थ इति सूचितमित्युक्तं भवति ॥ **आदिपदेनानामत्वमिति वेति** ॥ अस्मिन् पक्षे भाष्ये तत् ब्रह्मेति श्रुत्यंशोदाहरणं सूत्रानुक्तब्रह्मत्वव्यपदेशरूपयुक्तिसूचनार्थम् । सूत्रे तदनुक्ति:, स्फुटत्वादिति भाव इत्यवधेयम् ।

यद्वा सूत्रभाष्ययोरादिशब्देनानामत्वं ब्रह्मत्वव्यपदेशश्चेति द्वयमपि ग्राह्यमिति भाव: । अत्र ब्रह्मत्वव्यपदेशस्य कण्ठतोऽनुक्तिस्तु ब्रह्मत्वव्यपदेशाच्चेति । पूर्वमुक्तत्वादिति द्रष्टव्यम् ।

ननु ते यदन्तरेत्यत्र तच्छब्देन नामरूपयोरिति प्रकृतनामरूपयो: परामर्शो न नामरूप-

(भावबोधः)

राहित्यमर्थः । तथा च तत्र प्रमाणत्वेन प्रथमं 'यतो वाचो निवर्तन्ते' इत्यनन्तरम् 'अवर्णम्' इति श्रुतिरुदाहर्तव्या । तत्कुतो वैपरीत्यमित्यत आह– **रूपस्य वाच्यान्तर्भावेनेति** ॥ अनेनार्थान्तरत्वमिति व्याख्याने सूत्रेऽनामत्वादिव्यपदेशादित्येव वक्तव्यम् । कुतोऽर्थान्तरत्वादि व्यपदेशादित्युक्तमिति शङ्का परास्ता भवति ॥ **उक्तविरोधादिति** ॥ 'ईक्षतेर्नाशब्दं' 'रूपोप-न्यासाच्च' इत्युक्तविरोधादित्यर्थः ॥ **अनामेतीति** ॥ अत्रानामरूपत्वं साकल्येन शब्दा-गोचरत्वम्, प्राकृतरूपरहितत्वं विवक्षितमिति न तेन विरोध इति भावः । कथं न निपा-तद्वयविरोध इत्यतः 'वै नाम' इति निर्वहितृत्वे श्रुत्यादिप्रसिद्धिबाहुल्यमिति न्यायविवरणोक्त-युक्तिमाह– **भगवत इति** ॥ अवैदिकलोकप्रसिद्ध्यपेक्षया वैदिकप्रसिद्धेः प्राबल्यम् । वैदिक-प्रसिद्धिश्च विष्णौ तदीयनामरूपनिर्वहितृत्वे चाकाशापेक्षया बहुलेति सैव निपातद्वयद्योत्येति भावः । न चानामा सोऽप्रसिद्धत्वात् इति भाष्यविरोध इति वाच्यम्, तत्राप्रसिद्धशब्देन साकल्येनाप्रमितत्वस्य निपातद्वयद्योत्यतया नामादिनिर्वहितृत्वेन निर्णीतस्वरूपेण च प्रसिद्धे-र्विवक्षितत्वादिति भावः । प्रसिद्धाकाशस्योक्तनामरूपत्वं विरुद्धमिति न्यायविवरणं व्याचष्टे– **अन्यथेति** ॥ **अवकाशस्यापि नामरूपवत्त्वादिति** ॥ साकल्येन स्वप्रतिपादकनाम-प्राकृतरूपवत्वादित्यर्थः ॥

## भावदीपः

न्यायविवरणेऽनुक्तेर्भाष्यपर्यालोचनया लब्धं साधारण्यबीजमाह ॥ **प्रयोगेति** ॥ आकाश-स्तल्लिङ्गादित्याकाशशब्दस्य विष्णौ प्रयोगस्य दर्शितत्वात् गगने च प्रयोगस्य प्रसिद्धत्वा-दित्यर्थः । यद्वाऽत्र प्रयुक्तवैनामेति निपातद्योतितप्रसिद्धेर्व्यावर्त्यत्वेनाप्रसिद्धब्रह्मण्याकाशशब्द-प्रयोगस्य पूर्वपक्षिणाऽङ्गीकृतत्वादित्यर्थः । सङ्गत्यर्थतया भाष्यं व्याचष्टे ॥ **द्युभ्वादीति** ॥ अक्षरमम्बरान्तधृतेः दहर उत्तरेभ्य इत्यादावित्यादिपदार्थः तच्चेत्यादि व्याचष्टे ॥ **तच्छन्दोगेति** ॥ अष्टमान्ते । यद्यपि नामेति शब्दप्रपञ्चोक्तावपि रूपपदेनात्रावर्णमित्याद्युक्त्या वर्णविशेषोक्तेर्न सर्वाधारत्वलाभः । तथाप्यस्य वाच्यरूपार्थप्रपञ्चमात्रोपलक्षणत्वमिति भावः । एतेन इत्यत्रेत्ये-तद्व्याख्यातम् । रूपेत्यर्थमात्रोपलक्षणम् । नामरूपयोः शब्दार्थप्रपञ्चयोः निर्वहिता निर्वोढा आश्रय इत्यर्थः । ते निर्वाह्यतया प्रकृते प्राकृतनामरूपे अन्तरा विना तद्रहितमिति यावत् । साकल्येन नामावाच्यं प्राकृतरूपरहितं च यद्वर्तत इति फलितार्थः । वैनामेत्यादिभाष्यभावमाह

(भावदीपः)

॥ **स चेति** ॥ वक्ष्यमाणदिशेति भावः । उक्तमित्यन्तस्य तात्पर्यं **सर्वेति** ॥ इति सङ्गतिसम्भवादित्यर्थः । पूर्वपक्षादिपरत्वेनापि व्याख्यातुं पूर्वपक्षतद्युक्तिकथनपरांशमवतार्य प्रसिद्धाकाशश्चाङ्गीकर्तव्य इति प्रतिज्ञातार्थमाह ॥ **सयुक्तिकमित्यादिना** ॥ प्रसिद्धपदसूचितां युक्तिमाह ॥ **आकाशेति** ॥ पूर्वेण गतार्थत्वमाशङ्कते ॥ **न चेति** ॥ **विष्णावपीति** ॥ आकाशस्तल्लिङ्गादित्युक्तन्यायादिति भावः ॥ **यौगिकत्वादिति** ॥ यच्छब्दा योगवृत्तय इति सङ्क्षेपभाष्योक्तेः । अन्यथा ब्रह्मपदोक्तगुणपूर्त्यसिद्धेस्तदर्थत्वात् समन्वयस्येति भावः ॥ **दौर्बल्यादिति** ॥ तथा च प्रबलरूढित्यागेन यौगिकग्रहणे निरवकाशानन्तत्वादिलिङ्गादाकाश इति होवाच इत्यादौ यौगिकस्यापि विष्णोर्ग्रहणेऽपीह कारणाभावादिति भावः । कारणमप्यत्राऽऽशङ्कते ॥ **सर्वेति** ॥ तथा चाऽऽकाशस्तल्लिङ्गादित्यनेनैव गतार्थमिदमिति भावः । एतदुपमर्दकतयाऽधिकां शङ्कां वक्तुं वैनामेति प्रसिद्धिद्योतकनिपातद्वयं रूढित्यागेनोक्तयौगिकार्थस्वीकारविरोधीति न्यायविवरणं योजयित्वा वै नामेति भाष्यं योजयति ॥ **प्रसिद्धेति** ॥ प्रसिद्धाकाशश्चाङ्गीकर्तव्य इत्युक्तिलब्धमेतदापादकम् । तस्येत्यादि तु भाष्ययोजना । तद्धि निपातद्वयम् । य आकाशः प्रसिद्धः स नामरूपनिर्वहितेत्युद्देशेन वाऽन्वितं स्यात् । य आकाशः स नामरूपनिर्वहिता वै नाम तस्य नामरूपनिर्वोढृत्वं प्रसिद्धमिति विधेयेन वाऽन्वितं स्यात् द्वेधाऽपि न विष्णौ युक्तमित्याह ॥ **न हीति** ॥ य आकाशो विष्णुः प्रसिद्ध इति वा य आकशशब्दितो विष्णुस्स नामरूपयोर्निर्वहिता प्रसिद्ध इति वाऽर्थः स्यात् । न हि विष्णुर्वा तस्य निर्वोढृत्वं वा लोकतः प्रसिद्धम् । औपनिषदत्वात् तस्येति भावः । श्रौतपदानुकरणरूपत्वान्निर्वहितृत्वमित्युक्तम् । फलोक्त्योपसंहरति ॥ **अत इति** ॥ वै नामेति प्रसिद्धोपदेशादित्यर्थः । उक्तमित्यन्तवाक्यस्य तात्पर्यं **तस्येति** ॥ आकाङ्क्षाक्रमेण भाष्यं व्याचष्टे ॥ **अयमाकाश इति** ॥ आदिपदार्थमाह ॥ **तद्ब्रह्मेति** ॥ पूर्वमर्थान्तरत्वपदेन नामरूपोभयराहित्यं विवक्षित्वा आदिपदेन ब्रह्मत्वं गृह्यत इति मत्वा व्याख्यातम् ।

इदानीं प्रकारान्तरेण व्याचष्टे ॥ **अर्थान्तरत्वमिति** ॥ अस्मिन्पक्षे भाष्ये तद्ब्रह्मेत्यंशोक्तिः सौत्रलिङ्गोक्तेरुपलक्षणत्वाभिप्राया । कम्पनादित्यत्र तदविहाय लिङ्गान्तरस्यापीत्युक्त्वा एतदन्यत्राप्यनुसन्धेयमित्युक्तत्वादिति भावः ॥ **इत्यत आहेति** ॥ अवर्णमिति श्रुतिरदृश्यत्वनये ब्रह्मपरत्वे सिद्धम् । यतो वाच इति तु वाक्यमानन्दमयनय इति भावः । नन्वादिपदेनानामत्वं

(भावदीपः)

ग्राह्यमिति व्याख्याने सूत्रभाष्ययोरनामत्वादिव्यपदेशादिति वाच्यम् । तत्क्रमेणैव च वैष्णवता व्युत्पाद्या । नामरूपयोरिति ते इति च श्रौतक्रमानुरोधात् शब्दलाघवाच्चेत्यत आह ॥ **रूपस्येति** ॥ नाम्नो वाच्यसापेक्षत्वादप्राधान्यमिति भावः ॥ **उक्तेति** ॥ ईक्षतेर्नाशब्दमित्यत्र वाच्यत्वोक्त्या नामवत्त्वस्य रूपोपन्यासादित्यत्र रुग्मवर्णमिति रूपस्य चोक्तस्तद्विरोधा-दित्यर्थः । अप्रसिद्धत्वात् साकल्येनागोचरत्वात् ॥ **भूतेति** ॥ भौतिकरूपराहित्यादित्यर्थः । ते नामेति निर्वहितृत्वे श्रुत्यादिप्रसिद्धिबाहुल्यमिति न्यायविवरणोक्तमत्र योजयितुमाह ॥ न चेति ॥ 'अन्नाध्येव खल्विमानि भूतानि जायन्त' इत्यादौ प्रसिद्धेर्विधेयान्वयदर्शनादिहापि तथेति नामरूपनिर्वहितुत्वस्येत्युक्तम् । साधुत्वं प्राग्वत् ॥ **अलोकेति** ॥ लोकतोऽप्रसिद्धत्वेऽपीत्यर्थः । वेदवैदिकप्रसिद्धेरेवासम्भाव्याज्ञानादिमूलकत्वेनान्तरङ्गत्वेन च ग्राह्यत्वादिति भावः । प्रसिद्धाकाशस्योक्तमनामरूपत्वं विरुद्धमिति न्यायविवरणांशमर्थतो योजयति ॥ **अन्यथेति** ॥ प्रसिद्धाकाशत्व इत्यर्थः । नन्वाकाशे नीलिमादेतीति श्रुतेर्भूताकाशस्य रूपादिमत्त्वेऽपि अत्राभिमताव्याकृताकाशस्य त्वनामरूपत्वमस्तु । तस्मिन् रूपाश्रुतेरचाक्षुषत्वाच्चारूपत्व-निश्चयादित्यत आह ॥ **अवकाशस्यापीति** ॥ अनामत्वहेत्वप्रसिद्धत्वस्यावकाशेऽभावेन नामवत्त्वादित्यर्थः ॥ **अत इति** ॥ निरवकाशश्रुतिलिङ्गभावादित्यर्थः ॥

## अभिनवचन्द्रिका

**साधारणस्येति** ॥ यद्यप्ययं शब्दोऽन्यत्र प्रसिद्धः तथापि पुरुषविशेषं प्रति उभयत प्रसिद्ध इति भावः । **तच्छन्दोगश्रुताविति** ॥ अनेन अस्याधिकरणस्य द्युभ्वाद्यधिकरणप्रतिपाद्य-निष्ठसर्वाधारत्वधर्मवदर्थप्रतिपादकत्वं तेनाधिकरणेन सङ्गतिरित्युक्तं भवति । नन्वाकाशस्वीकारे निपातद्वयविरोधः । आकाशस्य प्रसिद्धत्वेऽपि तन्निर्वाहकत्वस्याप्रसिद्धत्वादित्यत आह– **न हि विष्णुरिति** ॥ विष्णुपक्षे विष्णुस्तन्निर्वाहकत्वं चेत्युभयमपि अप्रसिद्धम् । आकाशपक्षे तु तन्निर्वाहकत्वमात्रस्याऽप्रसिद्धत्वेऽपि आकाशस्य प्रसिद्धत्वाद्विष्णुपक्षवत् निपातद्वयविरोधा-भावात् प्रसिद्धाकाश एव स्वीकार्य इति भावः । एतेन आकाशस्य नामरूपनिर्वाहकत्वस्य प्रसिद्धत्वे पूर्वपक्षोदयात्प्रागेव सिद्धत्वात् न पूर्वपक्षफलत्वं, तथा सिद्धान्तेऽपि 'आकाशो वैनाम' इत्युक्ताकाशस्य विष्णुत्वसाधनेऽपि प्रसिद्धिप्रयुक्ताऽन्यगामित्वशङ्कानिरासाभावात् अधिकरणवैयर्थ्यम् । अप्रसिद्धत्वे निपातद्वयविरोधसाम्यमिति परास्तम् । तस्यैव

(अभिनवचन्द्रिका)

**सर्वाधारत्वमिति** ॥ 'आकाशाद्वायुः' इत्यादिप्रमाणेनाकाशस्य साक्षात्परंपरया वा सर्वोपादानत्वात्, कार्यस्य कारणाश्रितत्वदर्शनात्, आकाशस्यैव सर्वाधारत्वं सम्भावितं, न विष्णोरिति तस्यैव सर्वाधारत्वमभ्युपेयमिति भावः । ननु भाष्ये 'ते यदन्तरा तद्ब्रह्म' इति एक एव अर्थान्तरत्वव्यपदेशः प्रदर्शितः न त्वादिशब्दगृहीतव्यपदेशः प्रदर्शित इति न्यूनतेत्यत आह – **आकाशस्येति** ॥ अत्र बुध्या विवेकेन सम्बन्धे व्यपदेशद्वयस्यापि भावात्, न न्यूनतेति भावः । अत्र टीकायां 'तद्ब्रह्मेति ब्रह्मत्वव्यपदेशाच्च' इत्यर्थ इत्यतः परम्, अर्थान्तरत्वमिति रूपराहित्यम्, आदिपदेनाऽनामत्वम्' इति वाक्यं श्रूयते । नैतट्टीकाकृद्वाक्यम्, अपितु प्रक्षिप्तम् । अवश्यं चैतदेवं विज्ञेयम् । 'इति वा अर्थ' इति पूर्वेण सम्बन्धस्य कर्तुमशक्यत्वात् । 'अथ विवक्षितम्' इत्यध्याहृत्य तेन सम्बन्धं मन्यसे, तथापि भाष्ये 'तद्ब्रह्मे'ति श्रुत्युदाहरण-वैयर्थ्यं प्राप्नोति ।

किं चार्थान्तरत्वमित्यनेनैव नामरूपराहित्यस्य 'ते यदन्तरा' इति श्रुत्यनुसारेण सङ्ग्रह-सम्भवात् सूत्रे' अर्थान्तरम्' इत्यनेन रूपराहित्यं आदिशब्देन नामराहित्यं विवक्षितमित्यत्र न नियामकं पश्यामः । न ह्यल्पाक्षरसूत्रे एकेनैव पदेनोभयराहित्यग्रहणसम्भवे तदर्थमेवादि-शब्दप्रयोगो युक्तः । किं चैवं सति यदि परो ब्रूयादर्थान्तरत्वमिति नामराहित्यम्, आदिपदेन रूपराहित्यमुच्यत इति, तर्हि किन्नियामकमुदाहृत्य परो बोधनीयः । ननु भाष्ये 'ते यदन्तरा' इति श्रुत्युदाहरणमयुक्तं, नामरूपराहित्यस्य तत्रानभिधानादित्यतः श्रुतिं व्याख्याति – **ते नामरूपे इति** ॥ ननु श्रुतौ नामरूपयोर्निर्वहितेति नाम प्रथमं निर्दिष्टं रूपन्तु पश्चात् । अतः भाष्यकृतापि 'यतो वाचो निवर्तन्त' इति श्रुतिमुदाहृत्य 'अवर्णमिति श्रुतिरुदाहर्तव्येत्यत आह– **रूपस्य वाच्यान्तर्भावेनेति** ॥ **उक्तविरोधादिति** ॥ 'ईक्षतेर्नाशब्दं, रूपोपन्यासाच्च' इत्युक्तविरोधादित्यर्थः । **अन्यथेति** ॥ 'ते यदन्तर' इत्यस्य स्मृत्युक्तार्थानङ्गीकारे श्रुतेर्निरर्थकत्वं स्यात् । अनामरूपवत्त्वविरोधेन आकाशपरत्वाङ्गीकाराऽयोगादिति भावः ॥ **आकाश-स्यापीति** ॥ विष्णुवदाकाशस्यापि नामरूपवत्त्वादित्यर्थः ।

**पूर्वपक्षस्तु** – अयमाकाशः प्रसिद्धाकाश एव भवेत् । आकाशशब्दस्य तत्र रूढत्वात् । न चाकाशशब्दस्य विष्णावपि वृत्तेरसौ विष्णुरिति वाच्यम् । आकाशशब्दस्य विष्णौ यौगिकत्वात् । योगस्य रूढेर्दुर्बलत्वात् । ननु सर्वाधारत्वलिङ्गेन विष्णुः किं न स्यादिति चेत्

(अभिनवचन्द्रिका)
प्रसिद्धाकाशपरित्यागेन विष्ण्वङ्गीकारे 'वै नाम' इत्युक्त निपातद्वयविरोधः स्यात् । न च वाच्यमाकाशपक्षेऽपि निपातविरोधस्समः। नामरूपनिर्वाहकत्वस्य तत्राप्रसिद्धत्वादिति । विष्णुपक्षे विष्णुस्तन्निर्वाहकत्वं चेति द्वयमप्यप्रसिद्धम् । आकाशपक्षे तु तन्निर्वाहकत्वमात्रमप्रसिद्धमिति वैषम्यात् । नामरूपनिर्वाहकत्वलिङ्गन्तु आकाशस्योपादानत्वात्सम्भावितं न तु विष्णोः । तस्मात्प्रसिद्धाकाश एवायमिति तस्यैव सर्वाधारत्वमिति ।

**सिद्धान्तस्तु** – अयमाकाशो विष्णुरेव । अस्याकाशस्य 'ते यदन्तरा' इति नामरूपराहित्याख्यविलक्षणार्थत्वव्यपदेशात् 'तद्ब्रह्म' इति ब्रह्मत्वव्यपदेशाच्च । अस्त्वनामरूपत्वं कुतोऽसौ विष्णुरिति चेत्, अनामरूपत्वस्य तल्लक्षणत्वेन 'अवर्ण, यतो वाचो निवर्तन्त' इत्यादिश्रुतिसिद्धत्वात् । न च 'वै नाम' इति निपातद्वयविरोधः 'एको दाधार भुवनानि विश्वा' इति श्रुतिप्रसिद्धत्वाभावात् । लोकप्रसिध्यपेक्षया श्रुतिप्रसिद्धेः प्रबलत्वेन तस्या एव ग्राह्यत्वात् प्रत्युत आकाशस्य नामरूपत्त्वेन आकाशग्रहण एव विरोधः । अतोऽयमाकाशो विष्णुरेवेति तस्यैव सर्वाधारत्वमिति सिद्धमिति ।

## वाक्यार्थमुक्तावली

**प्रयोगवशादिति** ॥ 'यदेष आकाश आनन्दो न स्यात्' इति विष्णौ आत्मन आकाशः सम्भूत इति गगने च प्रयोगादित्यर्थः । न चैवं प्रथमपादे तल्लिङ्गादित्यत्राप्याकाशशब्दस्योभयत्रप्रसिद्धसमन्वयपरत्वप्रसङ्ग इति वाच्यम् । तत्र यदेष आकाश इत्युक्तस्यैव पूर्वपक्षिणाक्षिप्यत्वेन ततः पूर्वं भगवत्परत्वसिध्योभयत्र प्रसिध्ययोगादिहेतुतल्लिङ्गादित्यत्र आकाशशब्दस्य विष्णुपरत्वं सिद्धे यदेष आकाश इत्याकाशशब्दस्यापि विष्णुपरत्वनिर्णयात् । प्रयोगादुभयत्र प्रसिद्धत्वमित्युपपत्तेरिति भावः ॥ **श्रुत्यादीति** ॥ तद्ब्रह्मतदमृतमित्यमृतत्वा' इनोक्ताकाशस्य विष्णोरन्यत्वे बहिः कुलायादमृतश्चरित्वेत्यनेन पूर्वोक्त ज्योतिषोऽप्यमृतत्वं न स्यादित्याक्षेपेणोत्थानादनन्तरसङ्गतिरिति भावः ॥ **किं विष्णुरिति** ॥ अत्राकाशः किं भूताकाशः किं वा ब्रह्मेति चिन्ता तदर्थं ब्रह्मग्रहणे प्रसिद्धिद्योतकौ वै नामेति निपातौ विरुध्यते न वेति । तदर्थं तद्योतकप्रसिद्धिः किं लौकिकी उत वैदिकीति । तदर्थं लौकिकग्रहणे बाधकं वैदिकग्रहणे च साधकं नास्तीति ॥ **प्रसिद्ध एवेति**॥ अनेन प्रसिद्धाकाशश्चेति चशब्द एवार्थक इत्युक्तं

भवति। प्रसिद्धपदसूचितयुक्तिमाह ॥ **रूढत्वादिति** ॥ तल्लिङ्गादित्यनेन गतार्थतामाशङ्क्य निराकरोति ॥ **न च वाच्यमिति** ॥ **यौगिकत्वादिति** ॥ आसमन्तात् काशते यदकाशो मुख्यतो हरिरित्युक्तरीत्या यौगिकत्वादित्यर्थः । नन्वन्यत्र शब्दानामङ्गरूढिः हरौ विद्वद्रूढिरिति प्रत्यधिकरणमाम्नातत्वात् । अथ विष्णुलिङ्गाच्च योगो विद्वद्रूढिश्चाश्रीयतेऽत आकाशो विष्णुरेव गतार्थं चेदमधिकरणमिति शङ्कते ॥ **सर्वाधारत्वलिङ्गेति** ॥ सर्वगत्वं चाकाशादेव समुत्पद्यन्त इत्यादावनन्तत्वादिनिरवकाशलिङ्गेन महायोगविद्वद्रूढिभ्यां विष्णोः परिग्रहः । तथापीह वैनामेति निपातद्वयस्येति प्रसिद्धिर्न ब्रह्मणि युक्ता । लोके तस्याप्रसिद्धत्वाद्वेदप्रसिद्धत्वेऽप्यनादिर्वा अयमाकाश इत्यादौ गगनस्यापि प्रसिद्धेः । व्यावृत्यप्रसिध्याऽऽकाशस्यैवाभावेन निपातवैय्यर्थ्यात् । गगनपक्षे तु शास्त्रयोनित्वेन लोकप्रसिद्धत्वान्न ब्रह्माकाशस्य व्यावर्त्यलौकिकप्रसिद्धिद्योतकनिपातवैय्यर्थ्यम् । सर्वाधारत्वं तु आकाशेऽप्यवकाशदानत्वे युज्यत इति भावेन परिहरति ॥ **प्रसिद्धाकाशेति** ॥ ननु वेदे विद्वद्रूढिरूपाप्रसिद्धिं गगनं व्यावर्त्यत इत्यत आह ॥ **न हीति** ॥ निपातद्वयं वैनामप्रसिद्ध आकाशः निर्वहितेत्युद्धेशेन च । यः आकाशः स नाम रूपनिर्वहित वै नाम तस्य नाम रूपनिर्वोढृप्रसिद्धिमिति । विधेयेनान्वितं स्यात् द्वथापि न विष्णौ युक्तम् । वेदतः प्रसिद्धत्वेऽपि लोकतोऽप्यसत्वात् । गगनं तु लोके वेदे च स्वरूपेण नामरूपावकाशदानतन्निर्वाहकतया प्रसिद्धमिति भावः । यद्यपि लोके निर्वोढृ शब्द एव साधुस्तथापि टीकादौ श्रुत्यनुकरणार्थनिर्वहितृशब्द इति ज्ञेयम् ।

एतेन 'सर्वाणि ह वा इमानि भूतान्याकाशादेवेति' प्रथमपादीयाकाशनयविषयवाक्येऽपि प्रसिद्धिद्योतकसत्वात् तत्रापीयं शङ्का समेति निरस्तम् । तत्र निपातस्य भूतान्वितत्वेनाकाशान्वयभावादेकत्वादत्र निपातद्वयस्याकाशेन निर्वहितृत्वेन चान्वितत्वादिति । आकाशो वै नाम' इति श्रुतेः । आकाशो भगवन्नामरूपयोर्नामरूपात्मकस्य वाच्यवाचकरूपस्य प्रपञ्चस्य निर्वहिता वै नाम श्रुतिशतप्रसिद्धं किल ये तु यस्याकाशः ते नाम रूपेतराद्भिना वर्तते । अत्र रूपपदेन वाच्यान्तर्गतप्राकृतभौतिकं शुक्लादि च गृह्यते । साकल्ये वा प्रसिद्धः प्राकृतभौतिकशरीरेण शुक्लादिवर्णेन च रहित इति यावत् । किं च तद्वस्तु ब्रह्म पूर्णमित्यर्थं मनसि निधाय सिद्धान्तभाष्यं व्याचष्टे **अयमित्यादिना** ॥ सूत्रभाष्यगगनादि शब्दार्थमाह ॥ **तद्ब्रह्मेति** ॥ उपलक्षणमेतत् । तद्ब्रह्म तदमृतं स आत्मेति निर्दिश्यमानत्वाच्चायं न जडाकार इति

(वाक्यार्थमुक्तावली)

सत्तर्कदीपावल्युक्तमपि ग्राह्यम् । भूमिपूर्वसर्वपदार्थानां नामरूपत्वादाकाशस्य ते यदन्तरेत्युक्त्या नामराहित्याख्यसर्ववस्तुवैलक्षण्यव्यपदेशादाकाशो न विष्णुरिति व्याख्यातम् । प्रकारान्तरेण व्याचष्टे ।। **अर्थान्तरत्वमिति** ।। वाच्यवाचकयोः प्रकृतत्वात् अर्थः वाच्यः रूपमन्तरा वर्तत इत्यर्थान्तरं तस्य भावोऽर्थान्तरत्वम् इति । अर्थान्तरत्वमिति पदेन रूपराहित्यं लक्ष्यते इत्यर्थः ।। **आदिपदेनेति** ।। ब्रह्मत्वमिवानात्मत्वमप्यादिपदेन गृह्यते इति भावः । ननु नामरूपयोरित्ये-तदनुसारेण ते यदन्तरं यत्र नामरूपे इत्यर्थस्य सिद्धत्वात् । भाष्ये पूर्वमनामत्वे यतो वाच इति प्रमाणमुदाहृत्य पश्चात् रूपत्वे अवर्णमिति प्रमाणमुदाहरणीयम् । क्रमोल्लङ्घनं किमर्थमित्यत आह ।। **रूपस्येति** ।। द्वितीयव्याख्याने सूत्र एव क्रमोल्लङ्घनमिति वा । अत एव श्रौतक्रममनुसृत्यानामेति स्मृतिप्रवृत्तिरिति भावः ।। **उक्तविरोधादिति** ।। ईक्षतेर्नाशब्दं, रूपोपन्यासाच्चेत्युक्तविरोधादित्यर्थः । साकल्येन वाचकशब्दप्राकृतरूपराहित्यं चात्र विवक्षितम् । वस्तुतस्तु इत्यधिकरणाद्युक्तन्यायेन निखिलश्रुतसमधिगम्यो प्राकृतरूपवांश्चेति भावः । विरोधपरिहारमुखेन परमात्मनो वैदिकप्रसिध्युपपादकस्य प्रयोजनं वक्तुमाशङ्क्य परिहरति ।। **न चेति** ।। उक्तं च न्यायविवरणे । वै नामेति निर्वहितृत्वे च श्रुत्यादिबाहुल्यमिति अलौक-प्रसिद्धत्वेऽपीत्युक्त्या आकाशस्य स्वरूपतो वेदप्रसिद्धत्वेऽपि निर्वहितृत्वे वा न वेदप्रसिद्धिः । किन्तु लोकत एव लौकिकप्रसिध्यपेक्षया वैदिकप्रसिद्धेरसम्भाव्या ज्ञानादिमूलत्वेन प्राबल्यात् । विजातीयबहिरङ्गलौकिकप्रसिद्धिसङ्ग्रहाय सजातीयान्तरङ्गवैदिकप्रसिद्धिपीडनायोगाच्च सैवात्र ग्राह्येति सूचयति । सूत्रे तत्वित्यनुवर्तते । आकाशो विष्णुरेव नान्यः नामरूपराहित्यलक्षण-विलक्षणार्थत्वव्यपदेशाद्ब्रह्मत्वादिव्यपदेशाच्चेति सूत्रार्थो भाष्ये निरूपितः । तत्र नामरूप-राहित्यप्रसिध्या आकाशव्यावर्तकमित्यत्र आकाशस्योक्तमनामरूपत्वं विरुद्धमिति न्यायविवरणानुसारेणाह ।। **अन्यथेति** ।। वैदिकबाधितप्रसिद्धमतिलङ्घ्य लौकिकाल्प-प्रसिद्ध्याकाशस्वीकार इत्यर्थः ।। अवकाशस्यापीति भूताकाशस्य '**आकाशो नीलीमोदेति न प्रदेशः कथञ्चनेति** श्रुतेर्नामरूपत्वादिति भावः । न चाकाशपदमव्यावृतशक्तमिति वाच्यम् । आकाशशब्दप्रवृत्तिनिमित्तस्याकाशत्वस्य श्रुतेर्भूतेऽपि साम्यात् । क्वचित् श्रुतेऽपि तत्प्रयोग-सम्भवात् । तदुक्तं सुधायाम् आकाशशब्दप्रवृत्तिनिमित्तमवकाशत्वं श्रुतेर्निरवधिकमिति । उक्तं च सत्तर्कदीपावल्यां सर्वाधारतयाम्नातोऽप्याकाशो न विष्णुः किं तु भूताकाश एव वै नामेति प्रसिद्धिद्योतकनिपातश्रवणात् ।। **लोकप्रसिद्धाकाशो हि भूताकाश इति** ।। चन्द्रिकायां तु

अवकाशस्यापि नामत्वादित्येव टीकापाठमाश्रित्यावकाशपदमनुसृत्याव्याकृताकाश एवात्र पूर्वपक्षाभिमत इति निरूपितम् । विस्तरस्तु प्रमेयमुक्तवल्याम् ॥

## तत्त्वसुबोधिनी

**प्रयोगवशादिति** ॥ तद्धेतुव्यपदेशादित्युक्तरीत्या को ह्येवान्यात्कः प्राण्यात् यदेष आकाश आनन्दो न स्यात् इत्यादौ विष्णौ यः प्रयोगः आत्मनः आकाश इत्यादौ च यश्च भूते प्रयोगः तद्वशादित्यर्थः । यद्वा तल्लिङ्गादित्यत्र ब्रह्मण्यपि आकाशशब्दप्रयोगस्य दर्शितत्वात् वा वै नामेति निपातद्योतितप्रसिद्धे व्यावर्त्यत्वेन प्रसिद्धे ब्रह्मणि आकाशशब्दप्रयोगस्य पूर्वपक्षिणापि अङ्गीकृतत्वाद्वा । उभयत्र प्रसिद्धमिति भावः ॥ **श्रुत्यादिसङ्गतिमिति** ॥ अत्र तद् ब्रह्म तदमृतमित्यमृतत्वेनोक्ताकाशस्य विष्णोरन्यत्वे 'बहिः कुलायादमृतश्चरित्वा' इत्यमृतत्वेन पूर्वोक्तज्योतिषोऽप्यन्यत्वं स्यादिति पूर्वाक्षेपेणोत्थानादिति भावः ॥ **स्वशब्दादित्यादाविति** ॥ अक्षरमम्बरान्तधृतेः इत्यादावपि सर्वाधारत्वस्योक्तत्वादिति भावः ॥ **आकाशादिति** ॥ अत्र वै नामेति निपातौ । आकाशः नामरूपयोः निर्वहिता नामरूपधारकः ते नामरूपे यदन्तरा यद्बिना तदमृतं मरणरहितं ब्रह्मेत्यर्थः ॥ **प्रसिद्ध एवेति** ॥ एवं च भाष्ये प्रसिद्धाकाशश्चेति चशब्द एवार्थ इति भावः ॥ **निपातद्वयविरोधादिति** ॥ यद्यपि आकाशस्तल्लिङ्गादिति सूत्रस्य विषयवाक्ये अस्य लोकस्येत्यत्र सर्वाणि ह वा इति वैशब्दः निपातो वर्तते । तथापि तत्र वैशब्दस्य सर्वशब्दभूतशब्दमध्यपतितत्वेन सर्वभूतान्वयात्राकाशप्रसिद्धद्योतकत्वम् । इह तु वैशब्दस्य आकाशशब्दसन्निधानान्नान्यथासिद्धिः । नामेत्येतदधिकं चेति वैषम्यम् । अत एव भाष्ये वै नामेति निपातद्वयमुक्तमिति भावः । ननु कथं विष्णुपरत्वे निपातद्वयविरोधः विष्णोरपि 'यदेष आकाशः आनन्दो न स्यात्' 'आकाशः परायणम्' इत्यादौ नामरूपादिसर्वाधारतया आकाशशब्दार्थत्वेन प्रसिद्धत्वादित्यत आह ॥ **न हीति** ॥ तथाचाकाशस्यावकाशत्वेन स्वरूपे वा नामरूपावाकाशदानात्तन्निर्वाहकलोके वेदे च प्रसिद्धवत् विष्णोः स्वरूपेण नामरूपनिर्वाहकतया च न लोकवेदयोः प्रसिद्धिरस्ति । न च वेदे प्रसिद्धिरस्तीति वाच्यम् । निपातद्वयेनासङ्कुचितप्रसिद्धिद्योतने सम्भवति सङ्कुचितवेदमात्रप्रसिद्धिद्योतनस्यायुक्तत्वादिति भावः । अत एवाग्रे अलोकप्रसिद्धत्वेऽपीत्युक्तम् । अर्थान्तरत्वादिव्यपदेशादिति सूत्रभाष्यगतादिशब्दो ब्रह्मत्वव्यपदेशार्थक इति सूचितम् ॥ **आदिपदेनेति** ॥ अस्मिन्पक्षे भाष्ये

(तत्त्वसुबोधिनी)
तद्ब्रह्मेति श्रुत्यंशोदाहरणं सूत्रानुक्तब्रह्मत्वव्यपदेशरूपयुक्तिसूचनार्थं सूत्रे तदनुक्तिस्तु स्फुटत्वादिति भावः ।

यद्वा सूत्रभाष्ययोः आदिशब्देनानामत्वब्रह्मत्वव्यपदेशश्चेति द्वयमपि ग्राह्यमिति भावः । अत्र ब्रह्मत्वव्यपदेशस्य कण्ठतोऽनुक्तिः ब्रह्मत्वव्यपदेशाच्चेति पूर्वमुक्तत्वादिति ज्ञेयम् ।

ननु ते यदन्तरा इत्यत्र तच्छब्देन नामरूपयोरिति प्रकृतनामरूपयोः परामर्शेन नामरूप-रहितमित्यर्थः । तथा च तत्र प्रमाणत्वेन प्रथमं यतो वाचो निवर्तन्ते इति अनन्तरम् अवर्णमिति श्रुतिरुदाहर्तव्या तत्कुतो वैपरीत्यमत आह ।। **रूपस्य वाच्यान्तर्भावेनेति** । वाच्ये परमात्मनि अन्तर्भावेनेत्यर्थः । एवं च प्राधान्यकथनेन अर्थान्तरत्वमिति रूपराहित्यमिति व्याख्याने सूत्रे अनामत्वादिव्यपदेशादित्येव वक्तव्यं कुतोऽर्थान्तरत्वादिव्यपदेशादित्युक्तमिति शङ्का परास्ता भवति ।। **उक्तविरोधादिति** ।। 'ईक्षतेर्नाशब्दं' 'रूपोपन्यासाच्च' इत्यत्र शुक्लादिरूपत्वस्य वाच्यस्य उक्तत्वेन तद्विरोधादित्यर्थः ।। **अनामेतीति** ।। अनामरूपत्वं च विवक्षितमिति न तेन विरोध इति भावः । कथं निपातद्वयविरोध इत्यत आह ।। **भगवत इति** ।। वैदिकेऽर्थे लोकप्रसिद्ध्यपेक्षया वैदिकप्रसिद्धेः प्राबल्यम् । वैदिकप्रसिद्धेश्च विष्णौ तदीयनामरूपनिर्वहितृत्वे चाकाशापेक्षया बहुलेति सैव निपातद्वयद्योत्येति भावः ।। **तदर्थत्वेनोपपत्तेरिति** ।। निपातद्वयस्य चेदं प्रसिद्धार्थत्वेनोपपत्तेरित्यर्थः ।। **अन्यथेति** । वैदिकप्रसिद्धार्थत्वाभाव इत्यर्थः । आकाशस्यापि अनामरूपकत्वं भविष्यतीत्यत आह ।। **आकाशस्येति** । साकल्येन स्वप्रतिपादकनामप्राकृतरूपवत्वादित्यर्थः ।।

## वाक्यार्थमञ्जरी

**प्रयोगवशादिति** ।। यदेष आकाश इति हरावन्यत्र तु प्रसिद्धिरेवेति भावः ।। **आकाशो वै नामेति** ।। आसमन्तात्काशमानत्वादाकाशनामा भगवान्नामरूपात्मकप्रपञ्चस्य निर्वहिता निर्वोढा आश्रय इति यावत् । निपातद्वयेनास्यार्थस्य प्रसिद्धत्वमाह । ते नामरूपे अन्तरा विना यद्वर्तते तदमृतं नित्यमुक्तं ब्रह्मेत्यर्थः ।। ॐ आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॐ ।। आकाशो वै नामेत्युक्ताकाशो विष्णुरेव ते यदन्तरेत्याकाशस्य विष्णुमात्रनिष्ठनामरूपराहित्याख्य-लिङ्गोपदेशादित्यर्थः ।। **विलक्षणार्थत्वेति** ।। अनेन अन्तरः विलक्षणोऽर्थोऽर्थान्तरस्य

(वाक्यार्थमञ्जरी)

भावोऽर्थान्तरत्वमिति व्याख्यातं भवति । आदिपदोपात्तमाह ॥ **तद्ब्रह्मेति** ॥ नन्वादिपदेनानामत्वमिति व्याख्याने सूत्रभाष्ययोरनामत्वादीति वाच्यं तेनैव क्रमेण श्रुत्युदाहरणं कार्यं किमर्थं श्रौतक्रमोल्लङ्घनमित्यत आह ॥ **रूपस्येति** ॥ नाम्नो वाच्यसापेक्षत्वादप्रधान्यमिति भाव: ॥ **उक्तविरोधादिति** ॥ ईक्षतेर्नाशब्दम् । रूपराहित्यं च विवक्षितं प्राक्त्वावाच्यत्वाभाव: अप्राकृतरूपत्वं च विवक्षितमिति न तद्विरोध इति भाव: ॥ **अलोकेति** ॥ लोकतोऽप्रसिद्धत्वेऽपीत्यर्थ: । अन्यथा आकाशपक्षे नन्वाकाशो नीलिमोदेतीति श्रुतेर्भूताकाशस्य रूपत्वेऽप्यत्राभिमताव्याकृताकाशस्य तद्राहित्यं युक्तमित्यत आह ॥ **आकाशस्यापीति** ॥ अनामत्वप्रयोजकाप्रसिद्धत्वस्याकाशे अभावेनानामत्वाभावादित्यर्थ: ॥

॥ इति आकाशाधिकरणम् ॥

## १३. सुषुप्त्यधिकरणम्

असङ्गत्वं परमात्मन उक्तम् । तच्च 'स यत्तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुप' (बृ.उ. ६-३-१५) इति स्वप्नादिद्रष्टुः प्रतीयते । स च जीवः प्रसिद्धेरित्यतो वक्ति–

**॥ ॐ सुषुप्त्युत्क्रान्त्योर्भेदेन ॐ ॥ ४२ ॥**

'प्राज्ञेनाऽऽत्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नाऽऽन्तरम्' (बृ.उ. ६-३-२१) 'प्राज्ञेनाऽऽत्मनाऽन्वारूढ उत्सर्जद्याति' (बृ.उ. ६-३-३६) इति भेदव्यपदेशान्न जीवः, पर एवासङ्गः । स्वप्नादिद्रष्टृत्वं च सर्वज्ञत्वात्तस्यैव युज्यते ॥

## सत्तर्कदीपावली

नन्वसङ्गत्वेन श्रुताज्जीवादर्थान्तरत्वं परमात्मनः कथमित्याशङ्क्य परिहरति ॥ प्राज्ञे-**नेत्यादिना ॥ सुषुप्तीत्यादिना ॥** सन्ध्यं तृतीयं स्वप्नस्थानमित्यारभ्य स यत्तत्र किञ्चित्पश्यति। अनन्वागतस्तेन भवति असङ्गो ह्ययं पुरुप इत्येतत्परमात्मनि घटयति **॥ स्वप्रादीति ॥** न हि कर्मबद्धस्य जीवस्यासङ्गत्वमुपपद्यते । अतोऽर्थान्तरभूतः परमात्मा जीवात् । प्राज्ञेनात्मना सम्परिष्वक्त इत्यादिश्रुतेरित्यर्थः ॥

## तत्त्वप्रदीपिका

असङ्गत्वं परमात्मन उक्तं 'अतमोऽवाय्वनाकाशमसङ्गमरसम्' इत्यक्षरब्राह्मणे । 'ॐ सुपुप्त्युत्क्रान्त्योर्भेदेन ॐ' । असङ्गात्स्वाप्रादिद्रष्टुरीश्वराज्जीवस्य भेदव्यपेशान्न जीवोऽसङ्गः । अपि तु पर एवासङ्गः । अथ च पराज्जीवस्य भेदव्यपदेशान्न जीवः पर एव सन् असङ्गः । अत्र हि 'तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नाऽन्तरमेवायं पुरुषः प्राज्ञेन' इत्यादिना 'तद्यतां नस्सुसमाहितमुत्सर्जयादेवमेवायं शरीरम् आत्मा प्राज्ञेनाऽत्मन' इत्यादिना च सदृष्टान्तं भेदो व्यपदिश्यते । न चायमभिधीयमानो जीवेशभेदो व्यावहारिक इति वाच्यम् । तदर्थानिरूपणात् । अनिर्वाच्यस्य निरस्तत्वात् । भेदस्य चाबाधात् । न च व्यवहारसम्बन्धित्वं व्यावहारिकत्वं, तथाव्यावहारिकस्यापि ब्रह्मणः सत्यत्वात् । अव्यावहारिकत्वे प्रतिवादिदूषितेऽपि ब्रह्मणि मूकतापत्तेरिति ॥

## तत्त्वप्रकाशिका

अत्रासङ्गत्वलिङ्गेन लोकप्रसिद्ध्या चेशजीवयोः साधारणस्य स्वप्नादिदर्शनलिङ्गस्य भगवति समन्वयप्रतिपादनादस्ति शास्त्रादिसङ्गतिः । श्रुत्यादिसङ्गतिं विषयादिकं च सूचयति ॥ **असङ्गत्वमिति** ॥ असङ्गमरसमित्यसङ्गत्वं परमात्मन उक्तम् । तद्वाजसनेयके स्वप्नादिद्रष्टुः प्रतीयते । 'स वा एष एतस्मिन्सम्प्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्यां द्रवति स्वप्नायैव स यत्तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुषः' इति । तस्य च विष्णोरन्यत्वेऽन्यस्यासङ्गत्वप्रसङ्गादवश्यनिर्णेयत्वम् । तत्स्वप्नादिद्रष्टृत्वं विषयः । विष्णोर्जीवस्य वेति सन्देहः । उक्तसाधारण्यं सन्देहबीजमिति भावः । सयुक्तिकं पूर्वपक्षयति ॥ **स चेति** ॥ स्वप्नादिद्रष्टृत्वं जीवस्यैव भवेत् । प्रसिद्धत्वात् । न चासङ्गत्वलिङ्गादीशस्येति वाच्यम् । जीवेशयोरभेदेन जीवेऽपि चैतन्यविवक्षयाऽसङ्गत्वोक्तिसम्भवात् । न च मुख्यतोऽसङ्गत्वादीश्वरस्य स्वप्नादिद्रष्टृत्वम् । तस्याशरीरतया स्वप्नाद्यवस्थानुभवानुपपत्तेः । न च मन्तव्यं यथा स्वप्नादिदर्शनस्य जीवे मुख्यत्वेनाऽसङ्गत्वमभेदाभिप्रायेण नीयते तथाऽसङ्गत्वस्येश्वरे मुख्यत्वेन स्वप्नादिदर्शनस्याप्यभेदाभिप्रायेण नेतुं शक्यत्वात् किं जीव एवात्रोच्यत इति निर्बन्धे कारणमिति । चैतन्यैक्याभिप्रायेण तद्गतासङ्गत्वस्य जीवेऽमुख्यवृत्तिवदीश्वरे स्वप्नादिद्रष्टृत्वस्य विशिष्टनिष्ठस्यामुख्यतोऽपि वक्तुमयोगात् । न च जीवेशाभेद एव कुत इति वाच्यम् । विशेषणद्वयसामानाधिकरण्यान्यथानुपपत्त्यैव तत्सिद्धेः । अतो जीव एवायं स्वप्नादिद्रष्टेति न प्रागुक्तासङ्गत्वं विष्णोरेवेति भावः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ स्वप्नादिद्रष्टा परमात्मैवासङ्गत्वलिङ्गात् । यतोऽसङ्गः पर एव न जीवः । न चेश्वराभेदेन जीवेऽप्यसङ्गत्वोक्तिः सम्भवतीति वाच्यम् । सुषुप्त्युत्क्रान्तिप्रकरणयोर्भेदेनैव जीवेशयोरुक्तत्वेन तदभेदस्यैवाभावादिति भावः । न चायं भेदो व्यावहारिक एवेति युक्तम् । सुषुप्तिप्रकरणस्य मोक्षपरताया अपि भावात् । यद्वक्ष्यति 'स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि' इति । अनन्वागतं पुण्येनानन्वागतं पापेनेत्याद्युपपत्तेश्च । मोक्षे च सतो भेदस्य व्यावहारिकता नाम परिभाषामात्रं स्यात् । ननु कथमशरीरस्येश्वरस्य स्वप्नादिदर्शनं युक्तं स्यादित्यत आह ॥ **स्वप्नादीति** ॥ न विष्णोः स्वप्नादिदर्शनायोगः किं नाम तस्यैव तन्मुख्यं जीवादपि । स्वाप्नपदार्थानां जीवगतावस्थायाश्च सत्यत्वात् परमात्मनश्च सर्वज्ञत्वेन तद्विशेषदर्शनोपपत्तिरिति भावः । एवं स्वप्नादिदर्शनासङ्गत्वयोः परमात्मनि मुख्यत्वोक्त्या तदन्यथानुपपत्त्याऽभेदः इति परास्तम् । तत्र प्रतीतोभयविधलिङ्गान्तरोपपत्तिस्तु तद्भाष्यादवगन्तव्या । अतो विष्णुरेव स्वप्नादिद्रष्टाऽसङ्गश्चेति सिद्धम् ॥

## गुर्वर्थदीपिका

असङ्गमरसमित्यनेन 'अन्यभावव्यावृत्तेश्च' इति सूत्रसूचिता 'स्थूलमनण्वह्रस्वम्' इति श्रुतौ परिपठितम् 'असङ्गमरसमगन्धमचक्षुष्कम्' इति वाक्यं गृह्यते । 'विशेषणद्वय' इत्यत्र असङ्गत्वं स्वाप्नादिद्रष्टृत्वमित्येतद्वाक्योक्तमेव विशेषणद्वयं 'स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि' इति वक्ष्यमाणसूत्रस्यायमभिप्रायः । 'तीर्णो हि तदा सर्वान्शोकान्हृदयस्य भवति' इति वाक्योक्तं सर्वशोकोत्तरणं स्वर्गस्थस्य भवतु न तु मुक्तस्येत्याशङ्क्य सूत्रं प्रवृत्तम् । स्वाप्ययः सुप्तिः सम्पत्तिर्मोक्षः तदुभयापेक्षयैव सर्वशोकोत्तरणमुच्यते न तु स्वर्गस्थापेक्षया । 'अत्र पिता अपिता भवति अनन्वागतं पुण्येन अनन्वागतं पापेन' इति वाक्यशेषे तदुभयविषयत्वमाविष्कृतं हि । अत्र मोक्षे सुप्तौ च पिता अपिता भवतीत्यर्थः । स्वर्गस्थस्य त्वपितृत्वं न घटते । 'अस्मत्पितः' इत्युद्दिश्य पुत्रेण श्राद्धकरणात् । नापि पुण्यपापाननुगमनम् । पुण्येनैव स्वर्गप्राप्तेः । पापेन पुनः स्वर्गादधःपाताच्चेति । 'स वा एष एतस्मिन्सम्प्रसाद' इत्यादिश्रुतेरयमर्थः । स एष जीवनियामकः परमात्मा सम्यक् प्रसीदति बाह्यदुःखादिकं विस्मृत्य सुखी भवत्यत्रेति सम्प्रसादः सुप्तिः तस्मिन् रत्वा स्वसुखं स्वयमनुभूय जीवं च तत्स्वरूपसुखेन रमयित्वा चरित्वा तावत्पर्यन्तं सुषुम्नायामेव सञ्चरणं कृत्वा । जीववद्द्वरेः सुप्त्यभावसूचनाय चरित्वेत्युक्तम् । नाडीषु सञ्चरद्वायुना सह नाडीस्थभगवतोऽप्यूर्ध्वाधः सञ्चरणसद्भावाच्च चरित्वेत्युक्तम् । तस्य जीवस्य पुण्यं च पापं च दृष्ट्वैव न तु जीववत्ताभ्यां स्वयमालिप्य । पुनस्तदनन्तरं प्रति न्यायं यस्यां नाड्यां जीवस्य स्वप्नः श्रुतिविहितः तन्न्यायमनुसृत्य प्रतियोनि योनिं योनिं प्रति मनुष्यपशुपक्ष्यादिनानायोनिषु स्वप्नान्ताय स्वप्नदर्शनयोग्यनाडीस्थानाय कण्ठदेशमध्यस्थनाडीस्थानायेत्यर्थः । आद्रवति शनैर्गच्छति आनन्देन वा गच्छति । जीवेषु दयार्द्रत्वादेव गच्छति न तु स्वप्रयोजनाय गच्छतीति सूचनाय आद्रवतीत्युक्तम् । परमात्मा तत्र स्वप्ने यत्किञ्चिज्जीवेन क्रियमाणं स्वाप्नदेवताराधनादिपुण्यं स्वाप्नविद्वेशादिपापं वा पश्यति ।

यद्वा यत्किञ्चित् स्वप्ने जीवस्य भयदायकं व्याघ्रसिंहादिकं पश्यति तेनानन्वागतो भवति तेन भयादिदायकदर्शनेन अनन्वागतो भवतीत्यर्थः । जीवो यथा भीतः सन्पश्यति तथा न भगवानिति भावः । तत्र हेतुः 'अयं पुरुषः असङ्गो हि' इति । 'तद्यथा अस्मिन्नाकाशे श्येनो वा सुपर्णो वा दिवि परिपत्य श्रान्तः संहृत्य पक्षौ सल्लयायैव ध्रियते एवमेवायं पुरुषः श्रान्तः

(गुर्वर्थदीपिका)

स्वप्नान्ताय धावति यदेव जाग्रद्भयं पश्यति तदत्राविद्यया मन्यत' इत्यादि श्रुत्युक्तमुभयविध-जीवेष्वेवोपपद्यमानं भगवत्यनुपपद्यमानमिव स्थितं लिङ्गान्तरं तदपि 'यं विष्णुं श्येनवच्छ्रान्तो जीवो जागारिते भ्रमन् । स्वप्ने च सुप्तावभ्येति संश्रान्तः सद्गृहं यथा । सद्गृहं यथेत्युक्त्या समीचीनाय लयाय आलयायेति सल्लयशब्दार्थं सूचयति । 'अ इत्यादिश्यते विष्णुरविद्या तन्निरीक्षणम् । तेन स्वप्नानयं पश्येत् जीवो जागरितं तथा । स्वाप्नान्पश्यति जाग्रद्वद्भयं च प्रतिपद्यते' इत्यादि बृहदारण्यकभाष्योक्तरीत्या योजनीयमित्याह– **तत्र प्रतीतेति** ॥ तत्र तस्मिन्प्रकरणे । तन्निरीक्षणमिति भाष्यस्थवाक्यस्य तस्य परमात्मनः निरीक्षणं कृपाकटाक्षः कदाचित्पापभूतभयादिप्रतिपत्तये क्रूरकटाक्षश्च तन्निरीक्षणमित्यर्थः ॥

## भावबोधः

लिङ्गं स्वप्नादिप्रदर्शनमिति न्यायविवणोक्तलिङ्गस्योभयत्र प्रसिद्धत्वमाह– **असङ्गत्वलिङ्गेन लोकप्रसिद्ध्या चेति** । अत्र लिङ्गप्रसिद्ध्योरुभयत्र प्रसिद्धिहेतुत्वोपपादनप्रकारो वज्राधि-करणोक्तन्यायेन द्रष्टव्यः ॥ **श्रुत्यादिसङ्गतिमिति** ॥ 'ते यदन्तरेति' 'अर्थान्तरं त्वेति' श्रुति-सूत्रयोररूपोभूतवर्जनादिति प्रमाणानुसारेण रूपराहित्ये भूतासङ्गत्वस्य हेतुत्वेनाभिप्रेतत्वात् । असङ्गो ह्ययमित्यसङ्गतयोक्तस्वप्नादिद्रष्टुर्विष्णोरन्यत्वे प्रागभिप्रेतासङ्गत्वमप्यन्यस्यैव स्यादित्याक्षेपसम्भवाद् व्यवहारे जीवेशयोर्भेदोक्तेरिति न्यायविवरणानुसारेणात्र भेदेनेत्यतः पूर्वसूत्रात् व्यपदेशादित्यनुवृत्तौ पूर्वाधिकरणसिद्धान्तन्यायेन सौत्रव्यपदेशेनैवात्र सिद्धान्त-करणाद्वा अव्यवहितपूर्वाधिकरणसङ्गतिरपि द्रष्टव्या । भाष्योदाहृते स यत्तत्र किञ्चित्पश्य-तीत्यादिश्रुत्यंशे तत्रेत्यनेन परामृश्यापरिज्ञानात् स्वप्नादिद्रष्टृत्वस्य प्रत्येतुमशक्यत्वात् पूर्वांश-मुदाहरति– **स वा एष इत्यादिना** ॥ लिङ्गं स्वप्नादिदर्शनं कस्येति न्यायविवरणानुसारेण सन्देहप्रकारमाह– **विष्णोर्जीवस्य वेति** ॥ अत्र स यत्तत्रेत्याद्युक्तस्वप्नादिद्रष्टृत्वं किं जीवस्योत विष्णोरिति चिन्ता । तदर्थमसङ्गत्वस्य प्रसिद्धिबाधकत्वं न सम्भवत्युत सम्भवतीति चिन्ता । तदर्थमसङ्गत्वं जीवस्येशाभेदेन युक्तमुतायुक्तमिति । तदर्थं जीवेशाभेदः किं व्यावहारिकः किं वा पारमार्थिक इति । तदर्थं तत्पारमार्थिकत्वज्ञापकं नास्त्युतास्तीति । कुतो न वाच्यमित्यतो जीवेश्वराभेदे ईश्वरोक्तावप्यर्थाज्जीव एवोच्यत इति न्यायविवरणोक्तहेतुमाह– **जीवेशयोरभेदे-नेति**। अनेन न्यायविवरणेऽभेद इति निमित्तसप्तमीत्युक्तं भवति ॥ **विशेषणद्वयेति** ॥ असङ्गत्वस्वप्नादिद्रष्टृत्वरूपविशेषणद्वयसामानाधिकरण्यान्यथानुपपत्त्येत्यर्थः ।

(भावबोधः)

**यतोऽसङ्गः पर एव न जीव इति** । अनेनासङ्गत्वादि चेश्वरस्यैवेति न्यायविवरणांश आदिपदपरित्यागेन जीवेन तद्युक्तेरिति च तदंशः जीवस्यासङ्गत्वस्यायुक्तेरिति च व्याख्यातो भवति ॥ **सुषुप्त्युत्क्रान्तिप्रकरणयोरिति** ॥ सुषुप्त्युत्क्रान्त्योर्जीवेश्वरयोर्भेदोक्तेर्भेद एव भवतीति न्यायविवरणांशोऽप्यनेन व्याख्यातो भवति ।

भेदेनोक्तेरित्यनेन सूत्रे उक्तेरिति शेषो वा पूर्वसूत्रात् व्यपदेशादित्यस्यानुवृत्तिर्वेत्युक्तं भवति। अनन्वागतं पुण्येनानन्वागतं पापेनेत्याद्यनुपपत्तेश्चेति । आदिपदेनात्र पिताऽपिता भवतीति तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवतीत्यादेर्ग्रहणम् । सुषुप्तिप्रकरणस्य मोक्षपरताया अभावे अनन्वागतमित्याद्यनुपपत्तेरित्यर्थः । तस्यैव तन्मुख्यं जीवादपीत्यादिना जीवस्य तद्युक्तेरिति न्यायविवरणांशस्तस्यासङ्गत्वस्यायुक्तेरितीशे सावकाशत्वाच्चेति न्यायविवरणांशश्च व्याख्यातो भवति । असङ्गत्वादि चेश्वरस्यैवेत्यर्थात् भेद एवेति न्यायविवरणांशं योजयति– **एवमिति** ॥ भेद एवेत्यस्यार्थः । **अभेद इति परास्तमिति** ॥

ननु स्वप्नादिद्रष्टृत्वस्योक्तरीत्येश्वरनिष्ठत्वेनासङ्गत्वेन सह विरोधाभावेऽपि 'सम्प्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च' इत्याद्युक्तलिङ्गानामनन्वागतस्तेन भवतीत्याद्युक्तेश्वरलिङ्गैः कथं सामानाधिकरण्योपपत्तिरित्यत आह– **तत्र प्रतीतेति** ॥

'शुभाशुभं तु दृष्ट्वैव स्वप्ने जागरितेऽपि च ।
असंस्पृष्टः सदा दुःखैश्वरतीशः पुनः पुनः ॥'

इत्यादिबृहदारण्यकभाष्यादुक्तोभयलिङ्गोपपत्तिर्द्रष्टव्येत्यर्थः ॥

## भावदीपः

भाष्यसूचितं साधारण्यबीजमाह ॥ **असङ्गत्वेति** ॥ अलेपत्वरूपासङ्गत्वलिङ्गेनेत्यर्थः । सङ्गत्यर्थतया भाष्यं व्याचष्टे ॥ **असङ्गमिति** ॥ अक्षरनये अन्यभावेति सूत्र इत्यर्थः । तच्चेत्यादि व्याचष्टे ॥ **तद्वाजसनेयक इति** ॥ षष्ठ इत्यर्थः । स यत्तत्रेति तच्छब्दपरामृष्टं दर्शयितुं पूर्वशेषमाह ॥ **स वा इति** ॥ सम्यक्प्रसीदत्यस्यामिति सम्प्रसादः सुप्तिः तस्मिन् रत्वा रमणं कृत्वा प्रतिन्यायम् अवस्थान्तरं प्राप्तव्यमिति न्यायमनुसृत्य प्रतियोन्यापदव्या तेन स्वाप्नपदार्थदर्शनिना-

(भावदीपः)

नन्वागतो निर्लेप: लेपे सर्वप्रमाणाभावं वक्तुमसङ्गो ह्ययमिति वाक्यशेष: । स चेत्यादेस्तात्पर्यं **तस्य चेति** ॥ प्रसिद्ध्या जीवत्व इत्यर्थ: । उक्तमित्यन्तभाष्यस्य तात्पर्यम् **अन्यस्येति** ॥ न च न हि सङ्गोऽस्ति वह्निवायुविवस्वतामिति न्यायेनानेकेषामसङ्गत्वं तथा च न पूर्वाक्षेप इति शङ्क्यम् । अनन्यापेक्षस्यानेकेषामयोगादिति तात्पर्यात्तस्यैव श्रुतौ प्रतीतेरिति । पूर्वपक्षादि-परत्वेनापि व्याकुर्वत्स च जीव इति प्रतिज्ञार्थमाह ॥ **स्वप्नेति** ॥ स्वप्नादिद्रष्टृत्वं चेति सिद्धान्त-भाष्यानुरोधादत्रापि तथैव व्याख्या कृतेति बोध्यम् ।

ननु यथा पूर्वत्र नामरूपनिर्वोढृत्वरूपब्रह्मलिङ्गाद्वै नामेति प्राप्तलोकप्रसिद्धिबाधस्तथाऽत्राप्य-स्त्विति भावेन शङ्कते ॥ **न चेति** ॥ जीवेश्वराभेदे ईश्वरोक्तावप्यर्थाज्जीव एवोच्यत इति न्यायविवरणांशोक्तमाह ॥ **जीवेशयोरिति** ॥ विशिष्टस्य सङ्गित्वादुक्तं **चैतन्येति** ॥ ननु विनैवाभेदमीशलिङ्गेन जीवलिङ्गमीशे नीयतामिति शङ्कते ॥ **न चेति** ॥ तस्येशेऽनवकाशतामाह ॥ **तस्येति** ॥ सर्वत्र प्रसिद्धेत्यत्राशरीर: प्रज्ञात्मेत्युक्तेरिति भाव: । ईश्वरोक्तावप्यर्थाज्जीव एवोच्यत इत्यंशतात्पर्यं व्यक्तीकर्तुमाह ॥ **न च मन्तव्यमिति** ॥ **चैतन्येति** ॥ जीवस्य येन चैतन्यात्मना ब्रह्मैक्यं तदभिप्रायेणेत्यर्थ: ॥ **विशेषणेति** ॥ उक्तदिशा निरवकाशासङ्गत्व-स्वप्नादिद्रष्टृरूपविशेषणेत्यर्थ: । एतच्चासङ्गत्वं प्रसिद्धेरिति भाष्योक्त्या ज्ञायत इति भाव: ॥ **अत इति** ॥ असङ्गत्वरूपब्रह्मलिङ्गस्य जीवे तदभेदेनोपपत्त्या जीवलिङ्गस्य चेशेऽनुपपत्त्या च निर्बाधनिरवकाशप्रसिद्धिभावादित्यर्थ: । उक्तमित्यन्तस्य भावोक्तिर्न प्रागिति । अभेदेन जीवेऽ-प्युपपन्नतोक्त्या विष्णावनिरासादेवेत्युक्तम् । स्वप्नादिद्रष्टृत्वं च तस्यैवेति प्रतिज्ञांशं व्याचष्टे ॥ **स्वप्नादिद्रष्टेति** ॥ असङ्गत्वादि चेश्वरस्यैवेति न्यायविवरणानुरोधेन हेतुमाह ॥ **असङ्गत्वेति** ॥ अनन्वागतस्तेनेति वाक्योक्तादित्यर्थ: । तावता कुतो विष्णुरित्यतो न जीव इत्यादि व्याचष्टे ॥ **यत इति** ॥ असङ्गो ह्ययमिति हेतूकृतासङ्ग इत्यर्थ: । अनन्वागतस्तेन भवतीत्यत्रासङ्गो ह्ययं पुरुष इत्यसङ्गत्वं हेतु: । प्रसिद्धमेव च हेतुत्वयोग्यम् असङ्गमस्पर्शमित्यादिश्रुतिषु च ब्रह्मण्येव प्रसिद्धमिति भाव: । सुषुप्त्युत्क्रान्त्योर्जीवे(श्वरयो)शयोर्भेदोक्तेरिति न्यायविवरणानुरोधेन प्राज्ञे-नेत्यादिभाष्यं व्याचष्टे ॥ **न चेति** ॥ सुषुप्तिपदलब्धयुक्तिं वक्तुमाह ॥ **न चायमिति** ॥ **यद्वक्ष्यतीति** ॥ चतुर्थ इत्यर्थ: । तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवतीति वाक्यं न मुक्तविषयं किन्तु स्वर्गस्थविषयं स्वर्गे लोके न भयं किञ्चनास्तीत्यादेरित्यत: स्वाप्ययेति

(भावदीपः)
सूत्रम् । स्वाप्ययः सुप्तिः सम्पत्तिर्मुक्तिः । अन्यतरशब्दोऽत्र उभयपरः । तीर्णो हीति वाक्यं सुप्तिमुक्त्युभयपरं न स्वर्गिविषयम् । कुतः हि यस्मात् अविष्कृतं तदुभयविषयत्वमस्य वाक्यस्य विस्पष्टमत इति सूत्रार्थः । तत् किञ्चिद् व्यनक्ति ॥ **अनन्वागतमिति** ॥ अन्यथा अत्र पिताऽपिता भवति अनन्वागतं पुण्येनेत्यादिनोक्तापितृत्वपुण्यपापाद्यसङ्गत्वलिङ्गानां स्वर्गिणः श्राद्धादिभोक्तुरनुपपत्तेः सुप्तिप्रकरणस्य मुक्तिपरत्वमुपेयमित्यर्थः । व्यक्तमुक्तमस्य सूत्रस्योभयपरत्वाद्यर्थकत्वं बृहदारण्यकभाष्ये । कर्मनिर्णयटीकायां च । विवृतं तन्त्रदीपिकायामस्माभिश्चतुर्थे ।

अस्तु तावता व्यावहारिको भेद इत्यत्र किमागतमित्यत आह ॥ **मोक्षे चेति** ॥ प्रतिज्ञापरत्वेन व्याख्यातमपीदानीं स्वप्नादीत्यशेषभाष्यं प्रागुक्तशङ्कानिवर्तकतयाऽवतार्य जीवस्य तदयुक्तेरीशे सावकाशत्वाच्चेति न्यायविवरणविवरणपरतया व्याचष्टे ॥ **नन्वित्यादिना** ॥ सन्ध्ये सृष्टिराह हीत्यादिना तृतीयस्य द्वितीयपादे वक्ष्यमाणत्वात्सत्यत्वस्येति भावः । एतल्लिङ्गद्वयानुपपत्तिपरिहारेऽपि लिङ्गान्तरसामानाधिकरण्यानुपपत्त्याऽभेदशङ्कायां कथं तदुपपत्तिरित्यत आह ॥ **तत्र प्रतीतेति** ॥ सम्प्रसादे रत्वेत्यादिना प्रागुदाहृतवाक्ये प्रतीतजीवलिङ्गान्तराणाम् अनन्वागतं पुण्येनेतीदानीमुदाहृतवाक्यप्रतीतपुण्यपापलेपरूपब्रह्मलिङ्गान्तराणामुपपत्तिस्तु 'शुभाशुभं तु दृष्ट्वैव स्वप्ने जागरितेऽपि च । असंसृष्टः सदा दुःखैश्चरतीशः पुनः पुनः' इत्यादिवाजसनेयभाष्यादवसेयेत्यर्थः । फलोक्त्योपसंहरति ॥ **अत इति** ॥ परमात्मनि मुख्यत्वादित्यर्थः ॥

## अभिनवचन्द्रिका

अत्र द्वे दर्शने । 'आकाशोऽर्थान्तरत्वादिव्यपदेशात्' इत्यारभ्य, द्विसूत्री एकमधिकरणमित्येकम् । सूत्रद्वयं पृथक्पृथगधिकरणमित्यपरम् । द्वितीयमपि दर्शनं द्विविधम्, सूत्रद्वयस्य भिन्नाधिकरणत्वेऽपि आद्येऽधिकरणे आकाशशब्दसमन्वयः । द्वितीये स्वप्नादिद्रष्टृत्वलिङ्गसमन्वय इति । तत्राद्यं सत्तर्कदीपावलीकृतो दर्शनम् । तथा हि 'नन्वसङ्गत्वेन श्रुताज्जीवादर्थान्तरत्वं परमात्मनः कथमित्याशङ्क्य परिहरति **सुपुप्तीत्यादिना** ॥ 'सन्ध्यं तृतीयं स्वप्नस्थानम्' इत्यारभ्य 'स तत्र किञ्चित्पश्यत्यनन्वावगतस्तेन भवति, असङ्गो ह्ययं पुरुष' इत्येतत् परमात्मनि घटयति – **स्वप्नादीति** ॥ न हि कर्मबद्धजीवस्याऽसङ्गत्वमुपपद्यते । अतोऽर्थान्तरभूतः परमात्मा जीवात् 'प्राज्ञेनात्मना संपरिष्वक्त' इत्यादिश्रुतेरित्यर्थः' इति

(अभिनवचन्द्रिका)

सत्तर्कदीपावल्युक्तः । द्वितीयस्याद्यं तु तत्वप्रदीपकृतो दर्शनम् । तथा हि – 'असङ्गत्वं परमात्मन उक्तं' 'अतमोऽवाय्वनाकाशं अगन्धमरस' इत्यक्षरब्राह्मणे सुषुप्त्युत्क्रान्त्योर्भेदेन, असङ्गात्स्वप्नादिद्रष्टुरीश्वराज्जीवस्य भेदव्यपदेशात् न जीवोऽसङ्गः । अपि तु पर एवाऽसङ्गः । 'अथ च पराज्जीवस्य भेदव्यपदेशाच्च जीवः पर एवाऽसङ्ग' इति तत्वप्रदीपोक्तः । द्वितीयस्य द्वितीयं तु टीकाकृतो दर्शनमिति सिद्धमेव । तत्राद्यमते 'सुषुप्त्युत्क्रान्त्योर्भेदेन' इति सूत्रे समन्वेतव्यशब्दं सिद्धान्तहेतुं चाऽनभिधाय भेदव्यपदेशोक्तिर्लिङ्गम् । भाष्यकारीयं चाणुवेदान्ते समन्वेतव्यशब्दमनुक्त्वा 'अन्यश्च जीवत' इति उक्तिर्लिङ्गम् । अधिकरणभेदे तु अनुव्याख्याने–

'लिङ्गं साधारणं शब्दो स्थानं लिङ्गमनुग्रहः ।
पुनःशब्दा लिङ्गशब्दौ विचार्या द्विरिथता इह'

इत्यादिना द्वादशाधिकरणविषयपूर्वपक्षसिद्धान्तयुक्तीरभिधाय । अधिकारश्च तद्धानिः प्रसङ्गादेव चिन्तितावित्यनेन देवताऽधिकरणाऽपशूद्राधिकरणयोः प्रासङ्गिकत्वोक्तिर्लिङ्गम् । सुषुप्त्युत्क्रान्त्योर्भेदेन' इत्यधिकरणे असङ्गत्वलिङ्गसमन्वय इति मते तु 'भेदव्यपदेशात् न जीवः, पर एवासङ्ग' इति भाष्योक्तिर्लिङ्गम् । अन्यथा 'भेदव्यपदेशात् जीवः स्वप्नादिद्रष्ट' इत्यवक्ष्यत् । अस्मिन्नधिकरणे स्वप्नादिद्रष्टृत्वलिङ्गसमन्वय इति मते तु 'असङ्गो ह्ययं पुरुष' इति स्वप्नादिद्रष्टुः प्रतीयते । स च जीवः प्रसिद्धेरित्यतो वक्ति' इति भाष्ये स्वप्नादिद्रष्टृत्वस्य विषयत्वोक्तिः लिङ्गम् ।

विष्णोरर्थान्तरत्वं तु सूत्रेणाऽनेन सिध्यति ।
तदिदं पूर्वशेषं स्यादसङ्गत्वमपि स्फुटम् ॥
सिध्यत्यनेन सूत्रेण ततोऽधिकरणं पृथक् ।
स्वप्नादिदर्शनं चापि सिध्यत्येवामुना स्फुटम् ।
इत्याशयेन सर्वं च सूचयामास भाष्यकृत् ।
इत्येतदखिलं टीकाकारा जानत एव हि ॥ ३ ॥
बोधयामसुरेकैकं शिष्यबुद्धिविशुद्धये ।

तथाहि – न विष्णुर्जीवादर्थान्तरः । विष्ण्वसाधारणधर्मस्याऽसङ्गत्वस्य जीवे श्रवणात्

(अभिनवचन्द्रिका)

इत्याशङ्कापरिहारस्य सुषुप्त्युत्क्रान्त्योर्भेदाभिधानेन भेदं साधयता कर्तुं शक्यत्वात् भवेदिदं सूत्रं पूर्वाधिकरणशेषः । तथा 'असङ्गमरसमगन्धम्' इत्यसङ्गत्वं परमात्मन उक्तम् । तद्वाजसनेयके कस्यचित्प्रतीयते । 'स वा एष एतस्मिन्संप्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्या द्रवति, स्वप्नायैव । स तत्र किञ्चित्पश्यति । अनन्वागतस्तेन भवति । असङ्गो ह्ययं पुरुष' इति सोऽयमसङ्गः जीवविशेष एव ज्ञानी भवितुं युक्तः । 'तद्यथा पुष्करपालाश आपो न श्लिष्यन्त एवमेवं विदि पापं कर्म न श्लिष्यत' इति असङ्गत्वस्य तत्र श्रुतिसिद्धत्वात् । सर्वे जीवा वा असङ्गाः 'प्रतिन्यायं प्रतियोन्या द्रवती'ति जीवलिङ्गात् । न च बद्धस्यासङ्गत्वासम्भवः । जीवस्य स्वरूपविवक्षया असङ्गत्वोक्त्युपपत्तेः । एवं च अत्रोक्तोऽसङ्गो जीव इति प्रागुक्तोऽपि स एव । ततश्च तत्रोक्तगुणान्तरमपि तस्यैवेति चेत्, न विष्णु-रेवायमसङ्गः । स्वप्नादिद्रष्टृत्वलिङ्गात् । तद्धि सर्वज्ञत्वाद्विष्णोरेवोपपद्यते । न तु जीवस्य । तस्य स्वप्रदर्शनसम्भवेऽपि सर्वस्वप्नदर्शनासम्भवात् । प्रतियोन्या द्रवणं च जीवमादाय तस्यैव युज्यते । असङ्गत्वं तु सार्वकालिकं न ज्ञानिनः । नापि सर्वजीवानामुपपद्यते । बद्धत्वात् । नापीशाभेदेन, सुषुप्त्युत्क्रान्त्योर्भेदव्यपदेशादित्यस्यार्थस्यानेन लाभात् । इदं सूत्रं पृथगधिकरणं सत् असङ्गत्वलिङ्गसमन्वयपरम् । स्वप्नादिद्रष्टृत्वलिङ्गसमन्वयपरत्वं तु टीकायामेव व्यक्तं व्युत्पादितमिति तत्परं चेति न मतानां परस्परं विरोध इति ॥ **स्वप्नादिद्रष्टुः प्रतीयत** इति ॥ अस्याधिकरणस्य, परमात्मधर्मतया अक्षराधिकरणोक्तासङ्गत्वादिधर्माक्रान्तस्वप्नादिद्रष्टृप्रति-पादकत्वम्, अक्षराधिकरणेन सङ्गतिरित्युक्तं भवतीति ज्ञेयम् ॥ **स वा एष इति** ॥ स एषः परमात्मैव, **संप्रसादे** सुप्तिकाले, **रत्वा** रमणं कृत्वा, जीवस्य पुण्यं च पापं च दृष्ट्वा, चरित्वा =सञ्चरणं कृत्वा, **प्रतिन्यायं** प्रतिकालं प्रतिदिनमिति यावत्, प्रतियोनि=प्रतिजीवं, पुनः जीवानां **स्वप्नायैव** स्वप्नावस्थाप्रेरणायैव, **आद्रवति** आयाति । **स तत्र** स्वप्नाद्यवस्थायां, किञ्चित्पश्यति । यज्जीवपापं च पश्यति, **तेन** पापफलेन **अनन्वागतः** असम्बद्धो भवति, यस्मादयं पुरुषः, **असङ्गः** सङ्गरहित इति सिद्धान्तरीत्या श्रुत्यर्थः ॥ **उक्तसाधारण्यमिति** ॥ उभयपरतया सम्भवनार्हत्वं साधारण्यमित्यर्थः ॥ **जीवेशयोरभेदेनेति** ॥ नन्वयं पूर्वपक्षो न युज्यते, स्वप्नादिद्रष्टुः विष्णोः अन्यत्व एवाऽन्यस्यासङ्गत्वप्रसङ्गेन अस्य निर्णेतव्यत्वस्योक्तत्वेन अभेदेन पूर्वपक्षे चाऽन्यस्यासङ्गत्वप्राप्त्यभावेनाऽनिर्णेतव्यत्वापातात् । न च जीवेश्वरयोरभेदः रामकृष्णादिरूपाणाम्, ईश्वरेणेव नात्यन्ताभेदः, किं नाम अविद्यावच्छिन्नशुद्धचैतन्यस्य

(अभिनवचन्द्रिका)

जीवत्वमित्यभेद इत्यभिमानः । एवं च असङ्गत्वप्रसङ्गान्निर्णेतव्यत्वमिति वाच्यम् । एवमपि असङ्गत्वस्य जीवे औपचारिकत्वेन तस्येश्वरैकनिष्ठत्वाविघातादनिर्णेतव्यत्वपरिहारात् 'अभेदाभिमान' इति वदता पूर्वपक्षिणा वस्तुतो जीवेशभेदस्याङ्गीकृतत्वेन, सिद्धान्ते 'सुषुप्त्युत्क्रान्त्योर्भेदेन' इति भेदाभिधानवैय्यर्थ्याच्च । एवं चाभेदेन पूर्वपक्षेऽसङ्गत्वाक्षेपानुपपत्त्या अधिकरणवैयर्थ्यम् । भेदेन पूर्वपक्षे च सिद्धान्ते भेदाभिधानवैयर्थ्यमित्युभयतस्पाशारज्जुरिति चेत् ॥

पदवाक्यप्रमाणज्ञान् गुरून् सत्यनिधीनहम् ।
टीकाभावं प्रवक्ष्यामि नत्वा तेषां कृपाबलात् ॥

तथा हि – जीवेशाभेदेनैवेह पूर्वपक्षो युक्तः । सिद्धान्ते भेदाभिधानात् । न च ईशनिष्ठाऽसङ्गत्वस्याऽन्यनिष्ठत्वप्राप्त्यभावात् अधिकरणवैय्यर्थ्यमिति वाच्यम् । पूर्वपक्षिणाऽसङ्गत्वस्य जीवधर्मत्वानङ्गीकारेऽपि ईशधर्मस्याप्यसङ्गत्वस्य जीवनिष्ठत्वाङ्गीकारात् । तन्निरासायाऽधिकरणस्यावश्यकत्वात् ।

नन्वेवमपि इदमधिकरणमनारम्भणीयम् । जीवेऽसङ्गत्वस्य स्वतोऽभावात् । अभेदाभिप्रायेणासङ्गत्वाभिधाने च तस्य तत्रौपचारिकत्वापत्तेः । औपचारिकत्वस्य निरासायाऽधिकरणस्याऽकर्त्तव्यत्वादिति चेत् न । न ह्यत्र पूर्वपक्षी सिंहशब्दस्य माणवके औपचारिकत्वमिव असङ्गशब्दस्याऽर्थाभावेऽपि प्रयोगमात्रं मन्यते । येनोक्तदोषः स्यात् । न चैवं, किं नाम बद्धस्यासङ्गत्वगुणकत्वायोगेऽपि ईशाभेदेन ईशगुणस्याप्यसङ्गत्वस्य राजधनस्यामात्यनिष्ठत्ववत् जीवनिष्ठत्वं मन्यते । ततश्च असङ्गत्वस्य ईशमात्रनिष्ठत्वहान्यापत्त्याऽधिकरणमिदमारम्भणीयमेवेति । ततश्चैवं योजना । चैतन्यविवक्षया जीवेशयोरभेदेन राजधनस्यामात्यनिष्ठत्ववत् जीवेऽपि ब्रह्मधर्मस्य असङ्गत्वस्योक्तिसम्भवादिति । नन्वसङ्गत्वमीश्वरस्य स्वाभाविकं, तदीयमेव जीवेशाभेदात् जीवनिष्ठमित्युक्तम् । एवं च सति ईशे मुख्यमन्यत्राऽमुख्यमिति स्यात् । यस्य स्वतः स एव धनिको भवति, यस्यान्यदीयं धनमस्ति नासौ मुख्यतया धनिको भवतीति दर्शनात् । मुख्याऽमुख्ययोर्मुख्यस्यैव ग्राह्यत्वात् । मुख्याऽसङ्गत्वेनेश्वर एव स्वप्नादिद्रष्टेत्याशङ्क्य निषेधति – **न चेति ॥ न च मन्तव्यमिति ॥** यथा जीवेशयोर्भेदाभावात् ईशगतमसङ्गत्वं जीवनिष्ठमुच्यते तथा तत एव जीवनिष्ठं स्वप्नादिद्रष्टृत्वमीशगतमस्तु, किं जीव एव स्वप्नादिद्रष्टेत्याग्रहेणेति न मन्तव्यमित्यर्थः । **अमुख्यतोऽपि वक्तुमयोगादिति ॥**

(अभिनवचन्द्रिका)

कारणगतस्य कार्ये दर्शनवत् कार्यगतस्य कारणेऽदर्शनादिति भावः । **विष्णोरेवेति** भाव इति ॥ यद्यपि असङ्गत्वमीशस्यैव स्वतः, तथापि तन्नेशमात्रवृत्ति, किं तु जीवेऽपि । राजधनस्याऽमात्यवृत्तित्ववत् । एवं च सिद्धान्त्यभिमतेशमात्रवृत्तित्वमयुक्तमिति भावः । **असङ्गत्वलिङ्गादिति** ॥ 'असङ्गो ह्ययं पुरुष' इति उक्तासङ्गत्वलिङ्गादित्यर्थः । ननु जीव परसाधरणमसङ्गत्वं कथं हेतुः स्यादित्यत आह– **यत इति** ॥ सत्यमसङ्गत्वमीश्वराऽ-साधरणधर्मः तथापि नेश्वरस्य स्वप्नादिद्रष्टृत्वसिद्धिः । अत्राऽमुख्यस्यैव श्रवणादित्याशङ्क्य निषेधति– **न चेति** ॥ **अनन्वागतं पुण्येनेति** ॥ न केवलं 'स्वाप्ययसंपत्त्योः' इत्युक्तिबलात् अस्य प्रकरणस्य मोक्षपरत्वम्, अपि तु सुषुप्तिमात्रपरत्वपक्षे 'अनन्वागतं पुण्येन' इत्याद्यनु-पपत्तेश्च मोक्षपरत्वमभ्युपेयमिति भावः । ननु माभूत्पूर्वोक्तोभयविधलिङ्गाऽन्यथानुपपत्त्या जीवेशाभेदसिद्धिः । 'संप्रसादेरत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च' इति स्वप्नावस्थाभोक्तृत्व-पुण्यपापफलभोक्तृत्वलक्षणजीवलिङ्गस्य अनन्वागतस्तेन भवतीति ईश्वरलिङ्गसामानाधि-करण्यान्यथानुपपत्या अभेदसिद्धिरवर्जनीयैवेत्यत आह – **तत्र प्रतीतेति** ॥

शुभाशुभं तु दृष्ट्वैव स्वप्ने जागरितेऽपि च ।
असंस्पृष्टः सदा दुःखैश्चरतीशः पुनः पुनः ॥

इति बृहदारण्यकभाष्यात् उभयविधलिङ्गोपपत्तिः ईश्वरे द्रष्टव्येत्यर्थः । **अतो विष्णुरेवेति** ॥ मुख्यासङ्गत्वात्स्वप्नादिद्रष्टा विष्णुरेव न जीवः । ततश्च जीवेशाभेदरूपकल्पकाभावात्, अमुख्यमप्यसङ्गत्वं तत्र नेति सिद्धान्त्यभिमतम्, असङ्गत्वस्य विष्णुमात्रवृत्तित्वं सिद्धमिति भावः । एतेन असङ्गत्वस्य हेतुत्वात् स्वप्नादिद्रष्टृत्वं विष्णोरेव सिद्धमिति वक्तव्यं न त्वसङ्गत्वं चेत्यपि, तस्य हेतुत्वेन साध्यत्वाभावदिति परास्तम् । नन्वेवं समाधानमुत्सूत्रम् । सूत्रे जीवेश-भेदस्यैवाभिधानेन सिद्धान्तहेतोरसङ्गत्वस्यानभिधानादिति चेत्, न सिद्धान्तहेतोरसङ्गत्वस्य सूत्रसूचितत्वात् । यावान्सूचितोऽर्थः, स सर्वोऽपि सूत्रार्थ इत्यसङ्गत्वस्यापि सूत्रार्थत्वात् । तथा हि जीवेशभेदाभिधानस्योत्क्रान्त्यौ भेदेन' इत्येतावता पूर्णत्वात् तावत्येव वक्तव्ये यत्सुषुप्तिग्रहणं करोति तज्ज्ञापयत्याचार्यः 'न केवलं भेदेन व्यपदेशमात्रमिह विवक्षितम्, सुषुप्तिप्रकरणे यदन्यदसङ्गत्वादि श्रूयते, तदपीह विवक्षितम्' इति । नन्वत्र प्रधानत्वादसङ्गत्वं कण्ठतो निरूप्य, जीवेशभेद एव सूचनीयः, कुतो वैपरीत्यमिति चेत्, न अस्य सूत्रस्य पूर्वाधिकरण-शेषत्वेनार्थान्तरत्वसाधकत्वमप्यस्त्वित्याशयेन वैपरीत्यकरणात् ।

(अभिनवचन्द्रिका)

**पूर्वपक्षस्तु** – अयं स्वप्नादिद्रष्टा जीवो भवेत् । तस्य तस्मिन्प्रसिद्धत्वात् । न च असङ्गत्वलिङ्गादीशः स इति वाच्यम् । जीवेशयोरभेदेन जीवेऽप्यमुख्यस्यासङ्गत्वस्य सम्भवात् । न चाऽसङ्गशब्दस्य जीवे प्रयोगसम्भवेऽपि ईशे मुख्यत्वेन मुख्यस्यैव ग्राह्यत्वात् तदनुरोधेनेश एव स्वप्नादिद्रष्टेति वाच्यम् । अशरीरस्य तस्य स्वप्नादिद्रष्टृत्वायोगात् । न च जीवेशाभेदेन जीवेऽसङ्गत्ववत् तत एवेशे स्वप्नादिद्रष्टृत्वं किं न स्यादिति वाच्यम् । कारणगतस्य कार्ये सम्भवेऽपि कार्यगतस्य कारणेऽयोगात् । न च जीवेशाऽभेद एव कुत इति वाच्यम् विशेषणद्वयसामानाधिकरण्याऽन्यथाऽनुपपत्त्यैव तत्सिद्धेः । अतो जीव एवायं स्वप्नादिद्रष्टेति ईशाऽसाधारणधर्मस्याप्यसङ्गत्वस्य नेशमात्रवृत्तित्वम्, अपि तु राजाऽसाधारणधर्मस्यापि कोशस्य अमात्यगतत्ववत् श्रुतिबलात् जीवगतत्वमिति ।

**सिद्धान्तस्तु** – स्वप्नादिद्रष्टा परमात्मैव असङ्गत्वलिङ्गात् । तद्धि विष्णोरेवोपपद्यते न तु जीवस्य बद्धत्वात् । न च जीवेशाऽभेदात् जीवस्याप्यसङ्गत्वमिति वाच्यम् । सुषुप्त्युत्क्रान्ति-प्रकरणयोः भेदाभिधानेन तदभेदाभावात् । अतो गुणगुणिभावापन्नासङ्गत्वलिङ्गाद्विष्णुरेव स्वप्नादिद्रष्टा । असङ्गत्वमपि ईशमात्रनिष्ठम् । ततश्च 'असङ्गो ह्ययं पुरुष' इति प्रमाणभावात् राजधनवदपि असङ्गत्वं नाऽन्यनिष्ठमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**असङ्गत्वलिङ्गेनेति** ।। लिङ्गप्रसिद्ध्योरुभयत्र प्रसिद्धिहेतुत्वोपपादनप्रकारोऽवज्ञाताधिकरण-न्यायेन द्रष्टव्यः ।। **श्रुत्यादिसङ्गतिमिति** ।। अनन्तरसङ्गतिस्तु पूर्वाधिकरणे सिद्धान्त-साधकतयोक्तप्राकृतभौतिकशरीरराहित्यस्यैवेह पूर्वपक्षसाधकत्वादिति बोध्यम् । यद्वक्ष्यति तस्य शरीरतया स्वप्नाद्यवस्थानुभवानुपपत्तेरिति । पूर्वाधिकरणे अरूपो भूतवर्जनादित्यत्र भौतिक-शरीरराहित्यस्याप्युक्तत्वात् । शुक्लादिवर्णवर्तनाद्भौतिकदेहवर्जनादिति तत्वप्रदीपोक्तेः ।। **असङ्गत्वमुक्तमिति** ।। अक्षरत्वनये अन्यभावव्यावृत्तेश्चेत्यत्रेति भावः । स यत्तत्रेति तच्छब्द-परामृष्टं दर्शयितुं पूर्वशेषमाह ।। **स वा इति** ।। सम्यक् प्रसीदत्यस्यामिति सम्प्रसादः सुप्तिः तस्मिन् सवा एष विष्णुः रत्वा रमणं दत्वा पुण्यं च पापं च दृष्ट्वैव चरति । चरित्वा प्रतिन्यायं प्रतिकालं प्रतियोनि प्रतिजीवं स्वप्नायैव जीवस्य स्वप्नप्राप्तये एवाद्रवति । दृष्ट्वैवेत्येवकारे

(वाक्यार्थमुक्तावली)

व्यवच्छेद्यमाह ॥ **स इति** ॥ स परमात्मा यत्पापं पश्यति तेन तत्फलेनान्वगतो स सृष्टो भवति। कुत इत्यत आह ॥ **सङ्गो हीति** ॥ सिद्धान्तरीत्या श्रुत्यर्थम् । पूर्वपक्षे तु स वा एष इति जीवो ग्राह्य: ॥ **विष्णोरिति** ॥ अत्र स्वप्नादिद्रष्टृत्वं किं जीवस्योत ब्रह्मण इति चिन्ता। तदर्थं किं प्रसिद्धिबाधकं नास्त्युतास्तीति । तदर्थम् असङ्गतत्वादिकं ब्रह्माभेदेन नेतुं शक्यमुताशक्यमिति । तदर्थं सुषुप्त्युत्क्रान्त्योपदिष्टो भेद: किं मिथ्या उत सत्य इति ॥ **जीवस्यैवेति** ॥ एतेन सत्त्वादिकं जीवे ब्रह्माभेदेन नेतुं शक्यमित्युक्तं भवति ।

ननु यथा पूर्वत्र नामरूपनिर्वोढृत्वरूपब्रह्मलिङ्गात् । वै नामेति प्राप्तलोकप्रसिद्धिबाध: । तथाऽत्राप्यस्तीति भावेन शङ्कते ॥ **न चेति** ॥ तत्र नामरूपराहित्यस्य गगने निरवकाशत्वात् । जडे ब्रह्माभेदाभावेनापि ब्रह्मधर्मस्य तत्र नेतुमशक्यत्वाच्च । लोकप्रसिद्धिबाधेऽपीहाभेदेन ब्रह्मधर्मस्यासङ्गत्वस्य जीवे सावकाशत्वेन न तेन प्रसिद्धिबाधो युक्त इति भावेन परिहरति ॥ **जीवेशयोरिति** ॥ विशेषैक्यस्य बाधितत्वात् । विशिष्टस्य सङ्गतत्वाच्चोक्तम् ॥ **चैतन्येति** ॥ ननु असङ्गो ह्ययं पुरुष इत्यत्र पुरुषत्वोक्त्या जीवस्य चैतन्यैक्यद्वारकमसङ्गत्वं वक्तव्यम् । ईश्वरस्य मुख्यतो निर्लेपत्वात् । तद्बलात् स्वाप्नादिदृष्टृत्वं लोकप्रसिद्धिमनादृत्य नियतमित्याशङ्क्य परिहरति ॥ **न च मुख्यत इति** ॥ **अशरीरतयेति** ॥ शरीराभावस्य पूर्वाधिकरणयोरुक्तत्वात् । अशरीर: प्रज्ञात्मेत्यादिश्रुतेश्चेति भाव: । विशिष्टनिष्ठस्यामुख्यतोऽपीति जीवस्य येन चैतन्यात्मना ब्रह्माभेदस्तस्मिन् शुद्धचैतन्ये सङ्गतत्वात् । ब्रह्मणो येन चैतन्यात्मना जीवभेदस्तस्मिन् चैतन्ये स्वप्नादिद्रष्टृत्वायोगादिति भाव: ॥ **विशेषेणेति** ॥ असङ्गत्वस्वप्नादिदृष्टृत्वरूपनिरवकाशविशेषणद्वयेत्यर्थ: । एतेन स्वप्नादिदृष्टृजीवे एव प्रसिद्धि: । चशब्दायोगोऽपि जीव एव विशेषणमहिम्ना भेदप्रतीते: । एवशब्दार्थकचशब्दान्नेश्वर: । स्वप्नादिद्रष्टा तस्याशरीरत्वप्रसिद्धेरिति भाष्येण जितं भवति । न जीव: पर एवासङ्ग: इति भाष्ये स्वप्नादिद्रष्टृत्वमिव वक्ष्यमाणानुसारेण स्वप्नादिद्रष्टेत्यन्वेति । तथा च स्वप्नादिद्रष्टा पर एव न जीव: यतो सङ्ग इति योजयति ॥ **स्वप्नादिद्रष्टेति** ॥

असङ्गत्वलिङ्गस्य निरवकाशत्वप्रतिपादनपरत्वेनापि साध्यं योजयति ॥ **यतोऽसङ्ग इति** ॥ असङ्गमस्पर्शमित्यादिश्रुतौ प्रसिद्धेरिति भाव: । प्राज्ञेनात्मनेत्यादियोजयितुमाह ॥ **न चेति** ॥ सूत्रे सुषुप्तिपदलब्धयुक्तिं वक्तुमाह ॥ **न चायमिति** ॥ स्वाप्यय: सुप्ति: सम्पत्तिर्मुक्ति: अन्यतर

(वाक्यार्थमुक्तावली)

शब्दयुक्तिउभयपरः । श्रुतिप्रकरणं सुप्तिमुक्त्युभयपरं हि यस्मादुभयविषयत्वमाविष्कृतं **स्पष्टमिति** ॥ न केवलं सूत्रबलात्सुप्तिप्रकरणस्य मुक्तिपरत्वं किन्तु तत्प्रकरणे मुक्तिलिङ्गाच्चेत्याह ॥ **एतेनाविष्कृतमिति** युक्तम् । इत्यादीत्यादिपदेन अत्र पिता भवतीति तीर्णो हि तद् सर्वान् शोकानित्यादेः सङ्ग्रहः । स्वप्नादिद्रष्टृत्वं चेति भाष्येष्वेवकारमयोगव्यवच्छेदकतया । तस्य स्वप्नादिद्रष्टृत्वं सर्वज्ञत्वाद्युज्यत एवेति सङ्गततया व्याचष्टे ॥ **न विष्णोरिति** ॥ अन्ययोगव्यवच्छेदकतयापि तद्व्याचष्टे ॥ **किं नामेति** ॥ विद्यमानाशेषार्थज्ञत्वं हि सर्वज्ञत्वं वैधर्म्याच्च । नन्वित्यादिनेति तदसत्वमुच्यते । कथमीश्वरस्य तज्ज्ञानमित्यत आह ॥ **पदार्थानामिति** ॥ तदारोपितजाग्रत्वस्यासत्वं वैधर्म्यसूत्रोक्तमिति भावः । स्वाप्नपदार्थदर्शनस्य तत्र मुख्यत्वं च सर्वजीवगतस्वप्नावस्थानिर्मातृत्वेन तत्प्रदर्शकत्वेनेत्यादिरूपेण ध्येयम् । उक्तं हि चन्द्रिकायां कार्त्स्न्येन स्वानां वस्तूनां द्रष्टा सर्वस्य हीश्वरः । न युज्यते **सङ्कोचोत्यसङ्कोचस्य** सम्भवेति । विशेषणद्वयसमानाधिकरण्यान्यथानुपपत्तेरिति परोपन्यस्तभेदप्रमाणमिति पर एवासङ्गः । स्वप्नादिद्रष्टृत्वं च तस्यैवेति भाष्येणैवोपस्थितमित्याह ॥ **एवमिति** ॥

ननु सम्प्रसादेरत्वेत्यादिना दृष्ट्वैव पापं चेति पुण्यपापवत्वादिरूपजीवलिङ्गानां स अनन्वागतं पुण्येनानन्वागतं पापेनेत्यादिब्रह्मलिङ्गानां च स्वप्नादिद्रष्टरि प्रतीयमानत्वादन्यथानुपपत्त्यैक्यविवक्षा ज्ञायत इत्यत आह ॥ **तत्र प्रतीतेति** ॥ 'शुभाशुभन्तु दृष्ट्वैव स्वप्ने जागरितेऽपि च । असंसृष्टः सदा दुःखैश्चरतीशः पुनः पुनः' इति बृहदारण्यकभाष्यादित्यर्थः । सूत्रे व्यपदेशादित्यनुवर्तते । स्वप्नादिदृष्टेति योग्यतया लभ्यते । असङ्गत्वव्यपदेशाद्विष्णुरेव स्वप्नादिद्रष्टा न जीवः । न चासङ्गत्वं जीवे सावकाशं विष्णुरेवासङ्गो न जीवः असङ्गमस्पर्शमित्यादिव्यपदेशात् । न चाभेदविवक्षया जीवोऽसङ्ग इति वाच्यम् । सुपुप्त्युत्क्रान्तिप्रकरणयोर्भेदेन जीवेशयोर्व्यपदेशादिति सूत्रार्थः ।

## तत्त्वसुबोधिनी

अथ ते यदन्तरेति अर्थान्तरत्वेति श्रुतिसूत्रयोः 'अरूपो भूतवर्जनादिति' प्रमाणानुसारेण रूपराहित्ये भूतासङ्गतत्वस्य हेतुत्वेनाभिप्रेतत्वात् ॥ **असङ्गो ह्ययमिति** ॥ असङ्गतयोक्तस्वप्नादिद्रष्टुः विष्णोरन्यत्वे प्रागभिप्रेतासङ्गत्वमप्यन्यस्यैव स्यादित्याक्षेपसम्भवादिति पूर्वाधिकरणसङ्गतिः द्रष्टव्या । भाष्योदाहृते स यत्तत्रेत्यादिश्रुत्यंशे तत्रेत्यनेन परामृश्यापरिज्ञानात्

(तत्त्वसुबोधिनी)

स्वप्नादिद्रष्टृत्वस्य प्रत्येतुमशक्यत्वात्तत्पूर्वांशमुदाहरति । **स वा एप इत्यादिना** ॥ **विशेपणद्वय-सामान्याधिकरण्येति** ॥ असङ्गत्वस्वप्नादिद्रष्टृत्वविशेपणद्धयसामानाधिकरण्यान्यथानुपपत्तेरित्यर्थः ॥ **सुपुप्तिप्रकरणस्येति** ॥ तथा च मोक्षे विद्यमानत्वान्न तस्य व्यावहारिकत्वमिति भावः ॥ **अनन्वागतपुण्येनेति** ॥ आदिपदेन अत्र पिताऽपिता भवति' इत्यादेः 'तीर्णो हि सर्वान्शोकान्हृदयस्य भवति' इत्यादेर्ग्रहणम् । सुपुप्तिप्रकरणस्य मोक्षपरतायाः अभावे जीवपरत्वे तस्य पुण्यादिनाऽनन्वागतत्वाद्यनुपपत्तेरित्यर्थः ।

ननु स्वप्नादिद्रष्टृत्वस्योक्तरीत्येश्वरनिष्ठत्वेन असङ्गतत्वेन सह विरोधाभावेऽपि सम्प्रसादे रत्वा चरित्वेत्याद्युक्तलिङ्गानामनन्वागतस्तेन भवतीत्याद्युक्तेश्वरलिङ्गैःसह कथं सामानाधि-करण्योपपत्तिरित्यत आह– **तत्र प्रतीतेति** ॥ 'शुभाशुभं तु दृष्ट्वैव स्वप्ने जागरितेऽपि च । असंसृष्टः सदा दुःखैश्वरतीशः पुनः पुनः इत्यादिबृहदारण्यकभाष्यादुक्तोभयविधलिङ्गोक्तिः युक्तेत्यन्वयः ॥

## वाक्यार्थमञ्जरी

उक्तम् अक्षराधिकरणे ॥ **स वा एप इति** ॥ स एव परमात्मैव सम्प्रसादे सम्यक् प्रसीदति जीवोऽस्यामिति सम्प्रसादः सुप्तिस्तस्मिन् रत्वा रमणङ्कृत्वा पुण्यं च पापं च दृष्ट्वैव चरति चरित्वा च प्रतिन्यायं प्रतिकालं प्रतियोनि प्रतिजीवं पुनःस्वप्नायैत्र जीवस्य स्वप्नप्राप्तय एवाद्रवति दृष्ट्वैवेत्येवकारव्यवच्छेद्यमाह ॥ **स इति** ॥ स परमात्मा तत्र सुप्तौ यत्किञ्चित्पापं पश्यति तेन पापफलेन दुःखेनानन्वागतः असंसृष्टो भवति । कुत इत्यत उक्तम् ॥ **असङ्ग इति** ॥ हि यस्मादयं पुरुषः असंगः तत्तत्कृतपापफलसंसर्गशून्यस्तस्मात्तेनानन्वागत इत्यर्थः ॥ **जीवेऽ-पीति** ॥ देहेन्द्रियान्तःकरणचैतन्यसङ्घातरूपेऽपीत्यर्थः ॥ **मुख्यतोऽसङ्गत्वादिति** ॥ जीवेत्वेक-देशविवक्षयोक्तमसङ्गत्वममुख्यमिति भावः । ईश्वरे शुद्धे ॥ **विशिष्टेति** ॥ देहादिविशिष्टेत्यर्थः ॥ **विशेपणद्वयेति** ॥ असङ्गत्वस्वप्नादिद्रष्टृत्वरूपविशेपणद्वयेत्यर्थः ॥ ॐ सुपुप्त्युत्क्रान्त्योर्भेदेन ॐ ॥ नोक्तरीत्या जीवेशयोरभेदो मन्तव्यः प्राज्ञेनात्मना सम्परिष्वक्त इति सुप्तिप्रकरणे प्राज्ञेनात्मनान्वारूढ इत्युत्क्रान्तिप्रकरणे च जीवेशयोर्भेदेनोक्तत्वादित्यर्थः । वक्ष्यति चतुर्थाध्याये ॥ **स्वाप्ययेति** ॥ तीर्णो हि तदा सर्वाञ्छोकान्हृदयस्य भवतीति वाक्यस्य स्वर्गस्थविपयत्व-

(वाक्यार्थमञ्जरी)

शङ्कापराकरणायेदं सूत्रम् । स्वाप्यया मुक्तिः सम्पत्तिःसुप्तिः तीर्णो हीति वाक्यं सुप्तिमुक्ति-विषयमेव न स्वर्गस्थविषयं कुतः अत्र पिताऽपिताभवत्यनन्वागतं पुण्येनानन्वागतं पापेनेत्यादिना पितृत्वपुण्यपापाद्यसङ्गत्वादिलिङ्गश्रवणादस्य वाक्यस्य सुप्तिमुक्तिविषयत्वस्याविष्कृतत्वात् स्फुटं प्रतीयमानत्वात्स्वर्गस्थस्य श्राद्धादिभोक्तुः तदसम्भवादिति सूत्रार्थः । मोक्षपरत्वाभावे बाधकं चाह ॥ **अनन्वागतमिति** ॥ पुण्याद्यश्लेष्यस्य मुक्तिमात्रलिङ्गत्वादिति भावः । नन्वस्त्वेवं सुषुप्तिप्रकरणस्य मोक्षपरत्वं ततःकिमायातं भेदोव्यावहारिक इत्यत्रेत्यत आह ॥ **मोक्षे चेति** ॥ परिभाषामात्रं सङ्केतमात्रं न तु पराभिप्रेतमविद्यातत्कार्ययोरन्यतरत्वरूपं तदानीमविद्यायाः निःशेषनाशादिति भावः । ननु स्वप्नादेर्मिथ्यात्वात्तद्रष्टृत्वे ईश्वरस्य भ्रान्तत्वप्राप्त्या कथं तत्र तन्मुख्यमित्यत आह ॥ **स्वप्नपदार्थानामिति** ॥ ननु स्वप्नादिद्रष्टृत्वस्योक्तरीत्या ईश्वरनिष्ठत्वेना-सङ्गतत्वेन सह विरोधाभावेऽपि सम्प्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं पापं चेत्याद्युक्तलिङ्गानाम-नन्वागतस्तेन भवतीत्याद्युक्तेश्वरलिङ्गैः सह कथं सामानाधिकरण्योपपत्तिरित्यत आह ॥ **अत्र प्रतीतेति** ॥ 'शुभाशुभन्तु दृष्ट्वैव स्वप्ने जागरितेऽपि च । असंसृष्टः सदा दुःखैश्वरतीशः-पुनःपुनः' इति बृहदारण्यकभाष्यादुक्तोभयलिङ्गोपपत्तिर्द्रष्टव्येत्यर्थः ॥

॥ इति सुषुप्त्यधिकरणम् ॥

## १४. ब्राह्मणाधिकरणम्

'एष नित्यो महिमा ब्राह्मणस्य' (बृ.उ.६-४-२२) इति ब्राह्मणस्यापि नित्यमहिमा प्रतीयते । स च ब्राह्मणः 'स वा एष महानज आत्मा' (बृ.उ.६-४-२४) इत्यज-शब्दाद्विरिञ्च इति प्राप्तम् । देवानां च विद्याकर्मणोः पदप्राप्तिः सूचिता तदुपर्यपीति । अतो ब्रवीति–

**॥ ॐ पत्यादिशब्देभ्यः ॐ ॥ ४३ ॥**

'सर्वस्याधिपतिः सर्वस्येशानः ... स वा एष नेति नेति' (बृ.उ. ६-४-२१) इत्यादिशब्देभ्यो नित्यमहिमा विष्णुरेव । 'उतामृतत्वस्येशानः । यदन्नेनातिरोहति' (तै.आ.३-१२) 'सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि' (ऋ.सं. १-१६४-३६) 'स योऽतोऽश्रुत' (ऐ.आ.३-२-४) इत्यादिश्रुतिभ्यस्तस्यैव हि ते शब्दाः ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये प्रथमाध्यायस्य तृतीयः पादः ॥

## सत्तर्कदीपावली

न च स वा एष महानज आत्मेति सन्निहितवाक्यबलादेष नित्यो महिमा ब्राह्मणस्येति तदपि हिरण्यगर्भविषयं सर्वस्याधिपतिरित्यादिबहुवाक्यविरोधापत्तेः । 'हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्' इत्यादिश्रुत्या हिरण्यगर्भस्याजातालोकाधिपत्यनिषेधेन सर्वाधि-पत्याभावात् । न चेन्द्रादिवद्विद्याकर्मलब्धपदत्वेन देवाधिकारिणो हिरण्यगर्भस्य नित्यमहिमत्वं युज्यते । न च हिरण्यगर्भेतरदेवविषयं तद्वाक्यं, तत्र प्रमाणाभावात् 'स्वधर्मनिष्ठः शतजन्मभिः पुमान्विरिञ्चतामेति' इत्यादिवचनविरोधाच्च । उतामृतस्येशान इत्यादिश्रुत्यन्तरविरोधात् । सर्वस्याधिपतिः सर्वेशानः एष सेतुर्विधारण एषां लोकानामसम्भेदाय स एष नेति नेत्यात्मा गृह्यो न हि गृह्यत इत्यादिवाक्यं विष्णुविषयमेव । तस्माद् ब्रह्मशब्दवाच्यवेदेन गम्यत्वाद् ब्राह्मणशब्दवाच्योऽजातत्वादजशब्दवाच्यो विष्णुरिति सिद्धम् । दशप्रमतिवरदः प्रीयताम् ।

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमद्ब्रह्मसूत्रभाष्यटीकायां पद्मनाभतीर्थभट्टारकविरचितायां सत्तर्कदीपावल्यां प्रथमाध्यायस्य तृतीयः पादः ॥

## तत्त्वप्रदीपिका

'पतिं विश्वस्याऽऽत्मेश्वरं शाश्वतम्' इत्यादिना नित्यमहिमा परस्योक्तः । स ब्राह्मणस्यापि प्रतीयते । विरिञ्चस्य कादाचित्कपदप्राप्तेर्न नित्यमहिमेत्याशङ्क्याऽऽह– **देवानां चेति** । चकारोऽवधारणे । अन्यदेवानामेव विद्याकर्मणोः सकाशात्पदप्राप्तिः सूचिता देवताधिकरणे न विरिञ्चस्य । तस्माद्विरिञ्चोऽपि नित्यमहिमेति प्राप्त आह ॐ पत्यादिशब्देभ्यः ॐ । पतिशब्दादीशानशब्दादग्राह्याश्रुतत्यादिशब्देभ्यश्च नित्यमहित्वेनोक्तो ब्राह्मणो विष्णुरेव । ब्रह्मणा वेदेन गम्यत इति 'ब्राह्मणः', ब्रह्म अणति वाच्यत्वेनेति वा । अण गताविति धातोः । 'उतामृतत्वस्येशानः' इत्यादिना 'पुरुष एवेदम्' इति प्रतिज्ञाते सर्वेशत्वे हेतुरुच्यते । अमृतस्य मुक्तस्यापीशानोऽयं पुरुष इति यत्तस्मादिदं सर्वं पुरुष एव पुरुषाधीनमेवेत्यर्थः । न च सर्वस्य पुरुषैक्यमिहोच्यते । तथासत्यनिवृत्तेरयुक्तेश्च । तस्मात्तदधीनत्वमेव प्रतिज्ञातम् । पुरुषेणैवेदं व्याप्तमिति वाऽर्थः । तथा च पैङ्गिश्रुतिरिमां श्रुतिं व्याचष्टे । 'पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यमिति पुरुषेणैवेदं व्याप्तं यद्भूतं यच्च भाव्यम् आतृणादाकरीषात्सर्वं भगवानिति मिथ्यादृष्टिरेषा' इति । 'सर्वं समाप्नोति ततोऽसि सर्वः' इति च भगवद्गीतासु । 'यदन्नेनातिरोहति' इत्यन्नशब्दोक्तो मर्त्यस्संसारी । एतदत्रोक्तं भवति । मुक्तसमुदायस्यापीशो विष्णुः यदयं संसारिसमुदायमत्यगात् । यद्ययं मुक्तिगानामनीशः स्यात्, नैव संसारिणः संसारान्मोचयेत् । मोचयति च, तस्मान्मुक्तानामपीश एव । 'सदाऽमृतस्याभयस्येशो मर्त्यमन्नं यदत्यगात्' इति च भागवते । अमृतत्वस्येति धर्मधर्म्यभेदाभिप्रायेण । अमृतत्वस्येशान इति वाऽर्थः । मुक्तेरपि तदधीनत्वात् ॥

इति श्रीत्रिविक्रमपण्डिताचार्यविरचितायां ब्रह्मसूत्रभाष्यटीकायां प्रथमाध्यायस्य तृतीयः पादः ।

## तत्त्वप्रकाशिका

अत्र नित्यमहिमत्वलिङ्गेनाजश्रुत्या च विष्णुविरिञ्चयोः साधारणस्य ब्राह्मणनाम्नो विष्णौ समन्वयप्रतिपादनादस्ति शास्त्रादिसङ्गतिः । श्रुत्यादिसङ्गतिं विषयादिकं च सूचयति ॥ एष इति ॥ प्राचीनाधिकरणेषु विष्णोर्नित्यमहिमत्वमभिसंहितम् । अनन्यापेक्षया जगत्स्रष्टृत्वादेरुपपादितत्वात् । तद्वाजसनेयके कस्यचिद् ब्राह्मणस्य प्रतीयते । 'एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान्' इति । तस्य च विष्णोरितरत्वेऽन्यस्यापि नित्यमहिमत्वप्रसङ्गादवश्यनिर्णेयत्वम् । स ब्राह्मणो विषयः । किं विष्णुर्विरिञ्चो वेति सन्देहः ।

(तत्त्वप्रकाशिका)
उक्तसाधारण्यं सन्देहबीजमिति भावः । सयुक्तिकं पूर्वपक्षयति ॥ **स इति ॥** स ब्राह्मणो विरिञ्चो भवेत् । अस्मिन्बहुशो अजशब्दश्रवणात् । अजशब्दस्य च तस्मिन् प्रसिद्धत्वात् । न च वाच्यं न जायत इत्यजशब्दो विष्णावपि सावकाशः । तत्र यौगिकोऽसाविति चेत् विरिञ्चेऽपि विष्णुजातत्वयोगेन प्रवृत्तत्वादिति । ब्राह्मणशब्देन सहपठितस्य विष्णावनवकाश(शात्)त्वात् । वर्णादिशून्यादीश्वराद्व्यावर्तमानस्य ब्राह्मणशब्दस्य सहश्रुताजशब्दव्यावर्तकत्वात् । महत्तत्त्वाभिमानितया महच्छब्दोऽपि विरिञ्चिवाची । ब्राह्मणशब्देन सह श्रवणादजशब्दो यथा विरिञ्चिवाचीत्युच्यते तथाऽऽत्मशब्देन सह श्रवणाद्विष्णुवाची किं न स्यादिति चेन्न । 'आत्मा विरिञ्चः सुमनाः सुधौतश्चेति कथ्यते' । इत्यादेरात्मशब्दस्य विरिञ्चेऽपि वृत्तेः । अतोऽजशब्दाद्विरिञ्च एवायं ब्राह्मण इति भावः ।

ननु कथं ब्राह्मणो विरिञ्चो भवेत् । 'तदुपर्यपि बादरायणः सम्भवात्' इत्यत्र देवानां विद्याकर्मभ्यां पदप्राप्तेः समर्थितत्वेन ब्राह्मणे श्रुतनित्यमहिमत्वस्य विरिञ्चेऽसम्भवात् सादिपदस्य चानित्यत्वनियमादित्यत आह ॥ **देवानां चेति ॥** देवताधिकरणे देवानामेव विद्याकर्मणोः सकाशात्पदप्राप्तिः समर्थिता न त्वीश्वरस्य । विरिञ्चश्चेश्वरस्वरूपमेव । अतस्तस्य नित्यमहिमत्वं युक्तमेव । न च विरिञ्चस्येश्वरस्वरूपत्वमेव कुत इति वाच्यम् । अन्यत्रैतत्प्रकरणानुपपत्तेरेव तत्सिद्धेः । तथाहि– अत्र तावद् ब्राह्मणाजशब्दौ श्रूयेते । नित्यमहिमत्वलिङ्गं 'स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान्' इति पापायलेपलिङ्गं च । न च एतद्विष्णुविरिञ्चान्यतरमात्रग्रहणे युक्तम् । विष्णौ शब्दानवकाशाद्विरिञ्चे लिङ्गानवकाशात् । न च भिन्नतयोभयग्रहणेनोपपत्तिः । एकनिष्ठत्वात् । अत एतदन्यथानुपपत्त्या विष्णुविरिञ्चयोरभेदसिद्धेर्युक्तं विरिञ्चस्यापि नित्यमहिमत्वमिति स एवात्रोक्तब्राह्मणः । 'सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते । स्थित्यादये हरिविरिञ्चिहरेति संज्ञा' इत्यादेश्च । तर्हि विरिञ्च एवेति निर्बन्धे को हेतुः । मैवम् । कारणशब्दानां कार्ये प्रवृत्त्युपपत्तिवत्कार्यशब्दानां कारणे तदनुपपत्तेरिति भावः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति ॥** अयं ब्राह्मणो विष्णुरेव 'सर्वस्य वशी सर्वस्येशानः । सर्वस्याधिपतिः एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गो न हि सज्यतेऽसितो न व्यथते न रिष्यति स एष आत्माऽजरोऽमरोऽमृतोऽभयः' इति सर्वाधिपत्यादिवाचिशब्दसद्भावात् । तथा च तस्यैव नित्यमहिमत्त्वमिति भावः । सर्वाधिपत्यादिवाचिशब्दसद्भावेऽपि कुतो विष्णुत्वनिश्चय इत्यत आह ॥ **उतेति ॥** यद्भूतं भविष्यद्वर्तमानं सर्वं तत्परमपुरुषाधीनम् । न

(तत्त्वप्रकाशिका)

केवलममुक्तसर्वाधिपतिः पुरुषः किन्तु मुक्तसमुदायस्यापि यस्मात्संसारिसमूहमतिशेते । मुक्तावनधीनत्वे सर्वज्ञस्य बुद्धिमतः स्वाधीनसंसारिभ्यो मोक्षप्रदानायोगादित्यर्थः । ईशान-पदोक्तसर्वप्रेरकत्वे द्वितीया श्रुतिः । नेति नेतीत्युक्तश्रुतदृष्टवैलक्षण्ये तृतीया । सर्ववशित्वादौ श्रुत्यन्तराण्यादिपदेन सूचयति । न च विष्णोर्ब्राह्मणत्वेऽजशब्दविरोधः । न जायत इति योगेनोपपत्तेः । न च विष्णौ ब्राह्मणशब्दानुपपत्त्याजशब्दापहारः । ब्रह्मणा वेदेन गम्यते इति योगेनोपपत्तेः । स्वरव्यत्ययस्याधिक्यार्थत्वात् । अण गताविति धातोः । अन्यथा पत्यादि-शब्दविरोधात् । न चाभेदात्पतित्वादिर्विरिञ्चेऽपि सम्भवतीति वाच्यम् । तदभेदे मानाभावात् । ब्राह्मणाजशब्दयोरुक्तरीत्याऽन्यथाप्युपपत्तेः । स्मृतेस्तदन्तर्गतेश्वररूपापेक्षयोपपत्तेः । 'स्वधर्म-निष्ठः शतजन्मभिः पुमान् विरिञ्चतामेति ततः परं हि माम्' इति वचनाद्विरिञ्चस्य कर्मफलाभावायुक्तेर्नित्यमुक्तेन परमात्मना भेदस्यैवोपपन्नत्वात् । 'तत एते व्यजायन्त विश्वो हिरण्यगर्भः' इत्यादिभेदश्रुतिबाहुल्याच्च । अतो विष्णुरेवायं ब्राह्मणो नित्यमहिमा (मः) चेति सिद्धम् ॥ ४३ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रभाष्यस्य टीकायां
श्रीमज्जयतीर्थमुनिविरचितायां तत्त्वप्रकाशिकायां प्रथमाध्यायस्य तृतीयः पादः ॥

## गुर्वर्थदीपिका

'स वा एष महाजन आत्मा योऽयं विज्ञानमयः' 'स वा एष महानज आत्मा आनन्दः' 'स वा एष महानात्मा अजरो अमरो अमृतः' इत्यस्मिन्नेव प्रकरणे स्थानत्रयेऽप्यजशब्दस्य विद्यमानत्वादस्मिन्बहुशः अजशब्दश्रवणादित्युक्तम् । अस्मिन्प्रकरणे इत्यर्थः । 'य आत्मा नेति नेति' इत्यन्यनिषेधरूपेण गृह्यः गृहीतुं योग्यः स एवागृह्यश्चेत्यावृत्त्या योजनीयम् । कस्मादगृह्य इत्यत उक्तं न हि गृह्यत इति । साक्षात्स्वमहिमप्रतिभासनपूर्वकं न गृह्यत इत्यर्थः । अतो न पूर्ववाक्यस्यापूर्तिः नाप्युक्तप्रायपाठविरोधः । असितो न व्यथते न रिष्यति इत्यत्र 'षीञ् बन्धने' इति धातो बन्धजनितक्लेशमरणादिरहित इत्यर्थः । सर्वस्येशाः ब्रह्माद्याः तानपि अनयति प्रेरयतीति सर्वस्येशान इति व्युत्पत्तिमभिप्रेत्योक्तमीशानपदोक्तेति । सर्वप्रेरकत्वे इत्युपलक्षणम् । महदहङ्कारपञ्चमहाभूताख्यसप्तपदार्थान्तर्गतब्रह्मरुद्रयोरपि विष्ण्वाज्ञाधारित्वस्य श्रुत्यैवोक्तेस्सप्तार्धगर्भा श्रुतिः तत्तन्नामवत्त्वेनैव योज्येत्यपि द्रष्टव्यम् ।

(गुर्वर्थदीपिका)

'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुतेः सर्वथा अश्रुतत्वादृष्टत्वादेरयोगात् 'स योऽतोऽश्रुतः' इत्यादिश्रुतेः लोके यत् श्रुतं यच्च दृष्टं तद्विलक्षण इत्यादिरेवार्थो वक्तव्य इत्यभिप्रेत्योक्तं तृतीयेति । 'अण पण गतौ' इति धातोः गत्यर्थानां च ज्ञानार्थकत्वात् ब्रह्मणा अण्यते ज्ञायत इति व्युत्पत्तिमभिप्रेत्योक्तं **ब्रह्मणेति** ॥ स्वरव्यत्ययस्याधिक्यार्थत्वादित्यनेन ब्रह्मपदोक्तवेदे समन्तादित्यर्थकदीर्घरूपाकारस्य योगे सकलवेदप्रतिपाद्यत्वरूपाधिक्यस्य लाभेन ब्राह्मणपदस्य ब्रह्मादिष्वयोग्यतां हरावेव योग्यतां चाभिप्रैति । नित्यमुक्तेन परमात्मनेति वदता एकजन्मवतोऽपि न परमात्मनैक्यं किं शतजन्मवत इति सूचितम् । अपुनर्भवाख्या मुक्तिः क्व? शतवारं पुनर्भवाः क्व? इति भावः । भेदश्रुतिबाहुल्याचेत्युपलक्षणम् । चतुर्मुखस्य विष्णुनिष्ठनित्यमुक्तत्वप्रापणाय । तयोः कार्यकारणभावं च वदता त्वया तद्भेदस्यैव वाचोभङ्ग्यन्तरेणोक्तत्वाच्चेत्यपि द्रष्टव्यम् ॥

**इति श्रीवादिराजतीर्थविरचितायां गुर्वर्थदीपिकायां प्रथमाध्यायस्य तृतीयः पादः ॥**

## भावबोधः

शब्दो ब्राह्मण इति न्यायविवरणोक्तशब्दस्योभयत्र प्रसिद्धत्वमाह– **नित्यमहिमत्वलिङ्गेनाजश्रुत्या चेति** ॥ एकैकनिष्ठयोर्लिङ्गश्रुत्योरुभयत्र प्रसिद्धत्वसम्पादकत्वं कम्पनादित्यत्र च द्रष्टव्यम् । प्राचीनाधिकरणेष्वित्यनेन सुषुप्त्युत्क्रान्त्योर्भेदेनेत्यधिकरणस्य जगत्स्रष्टृत्वादे इत्यादिपदेन स्वप्नादिस्रष्टृत्वोदेरपि ग्रहणेन टीकायामेवाव्यवहितपूर्वाधिकरणसङ्गतिरुक्तेति द्रष्टव्यम् ॥ **अभिसंहितमिति** ॥ कण्ठतोऽनुक्तत्वादिति भावः । केवलादव्यवहितत्वं ज्ञायत इत्यत आह– **अनन्यापेक्षयेति** ॥ **किं विष्णुरिति** ॥ अत्र एष नित्यो महिमा ब्राह्मणस्येति श्रुत्युक्तब्राह्मणः किं विरिञ्चः किं वा विष्णुरिति चिन्ता । तदर्थमेतत्प्रकरणगता अज-आत्ममहच्छब्दाः किं विरिञ्चपरा उत विष्णुपरा इति । तदर्थं तत्समभिव्याहृतब्राह्मणशब्दः किं रूढ उत यौगिक इति । तदर्थं पत्यादिशब्दनित्यमहिमत्वपापाद्यलेपत्वादिलिङ्गजातं विरिञ्चे सम्भवत्युत न सम्भवतीति । तदर्थं 'तदुपर्यपि' इति विष्णुभिन्नसर्वदेवपदसादित्वोक्तिः किं विरिञ्चपदविषयिणी न भवत्युत तदर्थं विरिञ्चस्य विष्णुनाऽभेद उत भेद इति । तदर्थं 'स्थित्यादये हरिविरिञ्चहरेति संज्ञा' इत्यादिवाक्यं किं प्रतीतार्थपरं किमुतार्थान्तरपरमिति । तदर्थं तदभेदे

(भावबोधः)

श्रुत्यादिप्रमाणविशेषो नास्त्युतास्तीति ॥ **बहुशोऽजशब्दश्रवणादिति** ॥ 'स वा एष महानज आत्मा योऽयं विज्ञानमयः । स वा एष महानज आत्मा अन्नमयः । स वा एष महानज आत्माऽजरोऽमरः' इत्यादिवाक्येषु बहुशोऽजशब्दश्रवणादित्यर्थः । अत एव भाष्येऽज-शब्दयुक्तोदाहृतबहुवाक्यग्रहणाय स 'वा एषा महानज आत्मा' इत्येतावदेवोदाहृतमिति भावः ॥ **विष्णुजातत्वयोगेनेति** ॥ यद्यपि विरिञ्चेऽअजशब्दस्य रूढिरप्यस्ति । तथापि तस्मादहमज स्मृतः इति भारतवचनाद्विष्णावपि रूढिरस्तीति विष्णुविरिञ्चयोरजशब्दस्य साम्यमेवेति भावः ॥ **ब्राह्मणशब्देन सहपठितस्येति** ॥ अत एव न्यायविवरणे विरिञ्चप्रापकतया ब्राह्मण-शब्दोपादनस्य ब्रह्मणा वेदेनेत्यादिसिद्धान्तन्यायविवरणानुरोधेनाभिप्राय उक्तो भवति ॥ **वर्णादिशून्यादिति** ॥ 'अगोत्रमवर्णम्' इत्यादि श्रुतेरित्यर्थः

'विष्णोर्ब्राह्मणजातिः सन् यज्ञे ब्रह्मा चतुर्मुखः' इति

चतुर्मुखस्य ब्राह्मणजातित्वात्तत्र ब्राह्मणशब्दः सम्भवतीति भावः । कथं विरिञ्चेश्वर-योरैक्याभावे एतत्प्रकरणानुपपत्तिरित्यतो ब्राह्मणशब्दस्य पापाद्यलेपलिङ्गस्य च चतुर्मुखेन सह परमात्मनो भेदं विना सावकाशराहित्यात् अर्थादभेदप्राप्तिरिति न्यायविवरणं मनसि निधायाह– **तथा हीति** ॥ इत्यादेश्चेति 'आदि'पदेन 'स त्रेधा बभूवैषां गुणानामुपादानाय विष्णुर्वा सत्त्वस्य रजसो ब्रह्मा ईशानो नाम तमसः' इत्यादिश्रुतिग्रहणम् । तथा च न केवलमेतत्प्रकरणा-न्यथानुपपत्त्या विष्णुविरिञ्चयोरैक्यसिद्धिः । किन्तूदाहृतागमादपीति भावः । विरिञ्चस्यापि स्वावरपतित्वादिना पत्यादिशब्दवाच्यत्वसम्भवेन सौत्रपत्यादिशब्दानां विष्णुत्वानिश्चायकत्वात् श्रुतावपि सर्वस्याधिपतिरित्यादिश्रवणाच्चाह– **सर्वाधिपत्यादीति** ॥ 'उतामृतत्वस्येशानः' इति वाक्येनैव सर्वाधिपतित्वं न प्रतीयत इत्यतो भाष्याभिप्रेतं 'पुरुष एवेदं सर्वम्' इति तत्पूर्व-वाक्यमपि व्याचष्टे– **यद्भूतं भविष्यद्वर्तमानमिति** ॥ पुरुष एवेत्यस्य व्याख्यानं परमपुरुषाधीनमिति ।

'यदधीना यस्य सत्ता तत्तदित्येव भण्यते ।'

इत्यादेरिति भावः । न जायत इति योगेनेति । अनेनाजशब्दोऽपि तस्मिन्नेवेति न्यायविवरणं व्याख्यातं भवति । ब्रह्मणा वेदेनेति । अनेन वेदेन गम्यत इति ब्राह्मणशब्दो विष्णावेव युज्यत इति न्यायविवरणमुक्तार्थमिति ज्ञातव्यम् ।

(भावबोधः)

ननु ब्राह्मणशब्दस्य ब्रह्मणा वेदेनेत्याद्युक्तरीत्या यौगिकत्वे ब्रह्माण इति भवेत् । ब्राह्मण इति कथमित्यत आह– **स्वरव्यत्ययस्याधिक्यार्थत्वादिति ।। अन्यथा पत्यादिशब्द-विरोधादिति ।।** अनेनोक्तविरोधश्चेति न्यायविवरणं व्याख्यातं भवति । चतुर्मुखस्य कर्मफला-भावायुक्तेस्तयोर्भेदोऽर्थादापद्यत इति न्यायविवरणं सप्रमाणकं व्याचष्टे– **स्वधर्मनिष्ठ इत्यादिना ।।** तत्रैव भेदश्रुतिबाहुल्यादिति न्यायविवरणं भेदश्रुत्युदाहरणपूर्वकं व्याचष्टे– **तत एव इत्यादिना ।।** ततश्चतुर्मुखस्येशाद्भेदसिद्धेर्न तदभेदेन चतुर्मखे पापाद्यलेपलिङ्गं पत्यादि-शब्दश्च सावकाश इति वक्तुं शक्यमिति तल्लिङ्गं स शब्दश्च ईशे(चतुर्मुखे)ऽनवकाश इति समस्तमेतदिति न्यायविवरणं प्रवृत्तमिति ज्ञातव्यम् ।

अत्राद्याधिकरणं द्युभ्वाद्यायतनत्वलिङ्गसमन्वयरूपैकार्थप्रतिपादकमेका पेटिका । तदुत्तरमधिकरणत्रयं शब्दसमन्वयप्रतिपादकत्वेन एका पेटिका । तत्राद्ये– भूमशब्दस्य, द्वितीये अक्षरशब्दस्य, तृतीये– सच्छब्दस्य समन्वयप्रतिपादनम् । तदुत्तरमधिकरणद्वयं लिङ्गसमन्वय-रूपैकार्थप्रतिपादकतयैका पेटिका । तत्राद्ये– हृत्पद्मस्थत्वलिङ्गस्य, द्वितीये– आनुकूल्येन गृह्यमाणत्वलिङ्गस्य समन्वयप्रतिपानम् । तदुत्तरमधिकरणमीशानशब्दसमन्वयप्रतिपादकमेका पेटिका । तदुत्तरमधिकरणद्वयं प्रसङ्गप्राप्तवेदविद्याधिकाररूपैकार्थप्रतिपादकत्वेनैका पेटिका । तत्राद्ये देवानां वेदविद्याधिकारसद्भावसमर्थनम् । द्वितीये– त्रिवर्णेतरेषां तदभावसमर्थनम् । तदुत्तराधिकरणत्रयं शब्दसमन्वयरूपैकार्थप्रतिपादकमेका पेटिका । तत्र यथाक्रमं वज्रज्योति-राकाशशब्दानां समन्वयप्रतिपादनम् । तदुत्तरादिकरणद्वयं जीवेशाभेदभेदाभ्यां पूर्वपक्षसिद्धान्त-समर्थनपरमेका पेटिका । तत्राद्ये सर्वजीवेशाभेदभेदाभ्यां पूर्वपक्षसिद्धान्तसमर्थनपरमेका पेटिका । तत्राद्ये सर्वजीवेशाभेदभेदाभ्यां पूर्वपक्षसिद्धान्तौ । द्वितीये– विरिञ्चेश्वरयोरभेद भेदाभ्यां पूर्वपक्षसिद्धान्ताविति ।।

नन्वेवं चेल्लिङ्गसमन्वयप्रतिपादकं द्युभ्वाद्यायतनमित्याद्यधिकरणचतुष्टयम्, नामसमन्वय-प्रतिपादकं, भूमा सम्प्रसादादित्याद्यधिकरणाष्टकमेकैकपेटिकात्वेन कुतो न निबद्धमिति चेत्, न; एतेषामधिकरणानां यथास्थितक्रमेऽनन्तरसङ्गतिकथनावसरे निमित्तस्योक्तत्वादिति ।।

इति श्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यरघूत्तमयतिकृते श्रीमज्जयतीर्थपूज्यचरणविरचित-
तत्त्वप्रकाशिकाभावबोधे प्रथमाध्यायस्य तृतीयः पादः ।। ३ ।।

## भावदीपः

भाष्यसूचितं साधारण्यबीजमाह ॥ **अत्र नित्यमहिमत्वेति** ॥ सङ्गतिपरतया भाष्यं व्याकुर्वन् ब्राह्मणस्यापीत्यपिपदसूचितमाह ॥ **प्राचीनेति** ॥ साक्षादनुक्तेराह ॥ **अभिसंहित-मिति** ॥ तद्व्यनक्ति ॥ **अनन्येति** ॥ एष इत्यादि व्याचष्टे ॥ **एतदिति** ॥ षष्ठेऽध्याय इत्यर्थः । स चेत्यादेस्तात्पर्यं **तस्य चेति** ॥ वक्ष्यमाणदिशा विरिञ्चत्व इत्यर्थः । अपिपदसूचिताभि-संहितमित्यन्तवाक्यस्य भावोऽन्यस्यापीति ॥ **विरिञ्चो वेति** ॥ विप्रमात्रे ब्राह्मणपदस्य लोकप्रसिद्धावपि इहाजश्रुत्या न तस्य सन्देहनिविष्टत्वमिति भावः । पूर्वपक्षादिपरत्वेनाप्यवतार्य स च ब्राह्मणो विरिञ्च इति प्रतिज्ञार्थमाह ॥ **सयुक्तिकमिति** ॥ स वा एष इति भाष्योपात्त-वाक्यस्यास्मिन्प्रकरणे बहुकृत्वः श्रवणादाह ॥ **बहुश इति** ॥ प्रसिद्धत्वादिति रूढत्वादित्यर्थः ॥ **यौगिक इति** ॥ उपलक्षणमेतत् । विरिञ्चे रूढत्ववत् 'तस्मादहमजः स्मृत' इति भारतवाक्यादजशब्दस्य विष्णौ रूढेरपि सत्वादित्यपि ध्येयम् । अन्यथा विरिञ्चे योगरूढ्योः केवलयोगात्प्राबल्येन पूर्वपक्षसम्भवात् । ब्राह्मणपदसाहित्येनोज्जीवनायोगात् । एवं भाष्योक्त-मजशब्दं सावकाशं कृत्वा ब्राह्मणशब्दस्य पापालेपलिङ्गस्य च चतुर्मुखेन सह परमात्मनो भेदं विनाऽवकाशराहित्यादर्थादप्राप्तिरिति न्यायविवरणे ब्राह्मणश्रुतितो विरिञ्चप्राप्तेरुक्त्या तत्साहित्येनाजश्रुतेर्नि रवकाशतामाह ॥ **ब्राह्मणेति** ॥ **वर्णादीति** ॥ अगोत्रमवर्णमित्यादे-र्ब्राह्मण्यादिवर्णगोत्रशून्यादित्यर्थः ॥ **व्यावर्तकत्वादिति** ॥ ईश्वरादित्यनुषङ्गः । विरिञ्चस्य तु विप्रत्वात् विप्रत्वजातौ निरूढब्राह्मणश्रुतिर्युक्तेति भावः । उत्कृष्टत्ववाचिमहच्छब्दविरोध इत्यत आह ॥ **महत्तत्वेति** ॥ द्वितीये वक्ष्यमाणाभिमानिनयन्यायादिति भावः । प्रथमेऽध्याये बृहद्भाष्योक्ताभिधानमाह ॥ **आत्मेति** ॥ इत्यादेरित्यादिपदेन बुद्धेरात्मा महान्पर इति प्रयोगग्रहः । अत इति विष्णावनवकाशब्राह्मणश्रुतिसाहित्यात् बाधकाभावाच्चेत्यर्थः । ब्राह्मणो ब्राह्मणशब्दार्थः । प्रागुक्तन्यायविवरणोक्तश्रुतिलिङ्गे भाष्योक्ताजश्रुतिर्नित्यमहिमत्त्वलिङ्गयो-रप्युलक्षणमिति भावेन न्यायविवरणभाष्याभ्यामुक्तविरुद्धश्रुतिलिङ्गानि व्यक्तीकृत्याभेदं विनाऽवकाशराहित्यादिति न्यायविवरणोक्तदिशाऽभेदप्रापकतां व्यनक्ति ॥ **तथा हीत्यादिना** ॥ ननु श्रुत्युपेतम् अजआत्मेत्यादिकं विरिञ्चविषयं विष्णुलिङ्गोपेतवाक्यं तु विष्णुविषय-मित्यन्यथोपपत्तिं श्रुत्यादेराशङ्क्य निराह ॥ **न च भिन्नेति** ॥ वाक्यभेदमाश्रित्येति योज्यम् ॥

(भावदीपः)

**एकेति** ।। एकार्थनिष्ठत्वेनैकवाक्यत्वावगमादित्यर्थः ।। **स एवेति** ।। पूर्वाधिकरणपूर्वपक्षन्यायात् वक्ष्यमाणदिशा वेति भावः । विवरिष्यते चैतदग्रे इति भावः । न केवलमर्थापत्त्येत्याह ।। **सत्त्वमिति** ।। भागवते प्रथमस्कन्धे परमपुरुषस्यैकस्यैव क्रमेण सत्वादिगुणै रक्षासृष्टिसंहारार्थं हरिविरिञ्चिहरात्मना रूपत्रयोक्तेरित्यर्थः । इत्यादेरित्यादिपदेन तृतीयस्कन्धे एकादशाध्याये तात्पर्योदाहृतं 'स त्रेधा बभूवैषां गुणानामुपादानाय विष्णुर्वाव सत्त्वस्य रजसो ब्रह्मा ईशानो नाम तमस' इत्यादिश्रुतिवाक्यं च गृह्यते ।। **ब्राह्मणशब्दो विष्णावेवेति** ।।

न्यायविवरणानुरोधात् ब्राह्मणपदमध्याहृत्य नित्यमहिमा विष्णुरेवेति प्रतिज्ञार्थमाह ।। **अयं ब्राह्मणो विष्णुरेवेति** ।। भाष्ये पत्यादीति सूत्रोपात्तशाखान्तरस्थवाक्यस्यैवोदाहृतत्वेन स्वयमेव तत्प्रकरणस्थवाक्यमुदाहृत्य पत्यादिशब्देभ्य इति हेतुपरभाष्यं व्याचष्टे ।। **सर्वस्येति** ।। **सेतुर्विधारण इति** ।। धारणसमर्थ आश्रय इत्यर्थः ।। **इति नेति** ।। इति नेति श्रुतदृष्टवत्ते-त्यर्थः । असितः अबद्धः । षिञ्बन्धने । न रिष्यति न नश्यति । रिषहिंसायाम् । सूत्रे पत्यादिशब्दः सर्वाधिपत्यादिवाचिपर इति मत्वाऽऽह ।। **सर्वाधिपत्येति** ।। तेन सर्वस्य वशीत्याद्यपि शाखान्तरस्थवाक्यमिह सङ्गृहीतमिति भावः । नित्यमहिमा विष्णुरेवेत्येतद् व्याचष्टे ।। **तथा चेति** ।। भाष्ये सर्वस्य वशीत्यादावुदाहर्तव्ये सर्वस्याधिपतिरित्युक्तिः शाखान्तरणामुपसङ्ग्रहार्थेत्यस्य धृतेश्च महिम्न इति सूत्रे एवमन्यत्रापीत्युक्त्या उक्तप्रायत्वादत्रा-नुक्तिः । उतशब्दाकाङ्क्षितं पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यमिति पूर्ववाक्यार्थमाह ।। **यद्भूत-मिति** ।। उपलक्षणं मत्वोक्तं वर्तमानमिति । इदं हि विश्वं भगवानिवेतरो यतो जगत्स्थान-निरोधसम्भव इत्याद्यानन्दमयनयभाष्योक्तस्मृतेरधीनमित्युक्तम् । पुरुष एवेदं सर्वं भूतं भव्यं भवच्च यत् । इत्युच्यते तदीशत्वाच्च तु सर्वस्वरूपत इति प्रथमे बृहद्भाष्योक्तभारतस्मृतेरिति भावः । उतेत्यस्यार्थो न केवलमिति । अमृतत्वस्येत्यस्यार्थः ।। **मुक्तसमुदायस्येति** ।। विचित्रा हि तद्धितगतिरिति समुदाये भावप्रत्ययः । भावभवित्रोरभेदादमृतत्वशब्दोऽत्र मुक्तसमुदायपर इति वा भावः । द्वितीया सप्तार्थगर्भेति श्रुतिरित्यर्थः । इयमक्षरनये व्याख्यातत्वान्नेह व्याख्याता ।। **तृतीयेति** ।। स योऽत इति श्रुतिः । इयं च सर्वत्र प्रसिद्धेतिनये व्यक्ता । ब्रह्मणा वेदेन गम्यत इति ब्राह्मणशब्दो विष्णावेव युज्यत इत्यर्थादजशब्दोऽपि तस्मिन्नेवेति न्यायविवरणं प्रागुक्तशङ्काव्यावर्तकत्वेन योजयितुं शङ्कामनूद्याकाङ्क्षाक्रमेण योजयति ।। **न चेत्यादिना** ।।

(भावदीपः)

**स्वरेति** ॥ ब्रह्मणा वेदेन गम्यत इति विग्रहे ब्रह्माण इति वाच्ये ब्राह्मण इति स्वरशब्दित-दीर्घव्यत्यासः आधिक्येऽधिकमित्येव हरिणा सूत्रमीरितमिति ऋग्भाष्योक्त्या वेदेन गम्यत्वाधिक्यद्योतनार्थ इत्यर्थः ।

ननु गम्यत इति व्युत्पत्तौ ब्रह्मगम इत्यादि स्यात् स्वरव्यत्यय इति कथमित्यत आह ॥ **अणगताविति** ॥ उक्तविरोधश्च तत्रैवेति न्यायविवरणोक्तमाह ॥ **अन्यथेति** ॥ **मानाभावादिति** ॥ अभेदः किमर्थापत्त्याऽथ पुराणवाक्येन । नाद्यः । श्रुत्या यौगिकत्वोक्तिपरन्यायविवरणेन परिहृतत्वादित्याह ॥ **ब्राह्मणेति** ॥ स्मृतिस्तु तात्पर्यं स्मृत्यैव व्याख्यातेति मत्वाऽऽह ॥ **स्मृतेस्त्विति** ॥ सत्त्वं रजस्तम इत्यादेः 'ब्रह्मणि ब्रह्मरूपोऽसौ शिवरूपी शिवे स्थितः' इत्यादिस्मृतेरिति भावः । चतुर्मुखस्य कर्मफलाभावायुक्तेस्तयोर्भेद एवार्थादापद्यत इति न्यायविवरणोक्तमत्र व्यनक्ति ॥ **स्वधर्मेति** ॥ इति **वचनादिति** ॥ चतुर्थस्कन्धे त्रयोविंशोऽध्याये । मां लक्ष्मीमित्यर्थः ॥ **नित्यमुक्तेनेति** ॥ तथा न परमात्मनो नित्यमुक्तत्वेन कर्मफलाभावात् विरिञ्चस्य चोदाहृतवचनेन कर्मफलसद्भावावगमेन तदभावायुक्तेरित्यर्थः । भेदश्रुतिबाहुल्यादित्यन्यत्रोक्तं व्यनक्ति ॥ **तत इति** ॥ अदृश्यत्वनयभाष्योक्तेयं श्रुतिः ॥ **अत इति** ॥ निरवकाशप्रापकसद्भावादित्यर्थः । नित्यमहिमा चेति फलोक्तिः । अकारान्तत्वमुपेत्य क्वचिन्नित्यमहिमश्चेति पाठः ॥

इति श्रीमद्भाष्यटीकाभावदीपे श्रीराघवेन्द्रयतिकृते प्रथमाध्यायस्य तृतीयः पादः ॥

## अभिनवचन्द्रिका

**साधारणस्येति** ॥ अत्र ब्राह्मणशब्दस्य साधारण्यं नाम उभयपरत्वसम्भावनाविषयत्वमिति बोध्यम् । एतेन विष्णुलिङ्गाऽजश्रुत्योः एकस्मिन्नेव वाक्ये श्रवणात् तयोश्च विरुद्धत्वात् नोभयपरत्वनिश्चयरूपं साधारण्यं सम्भवतीति परास्तम् । **ब्राह्मणस्य प्रतीयत इति** ॥ अस्याधिकरणस्य पूर्वाधिकरणाऽभिसंहित नित्यमहिमत्वधर्माक्रान्तब्राह्मणप्रतिपादकत्वं, पूर्वाधिकरणैः सङ्गतिरित्युक्तमिति बोध्यम् । **ब्राह्मणशब्देन सहपठितस्येति** ॥ अजशब्दो द्विविधः । आज्ञात इति विरिञ्चिगतवृत्तिविशिष्टः, न जायत इति विष्णुगतवृत्तिविशिष्ट इति । ब्राह्मणशब्दसामानाधिकरण्यात् आज्ञात इति योगविशिष्ट एवायमजशब्दः । न चाऽसौ विष्णा-

(अभिनवचन्द्रिका)

ववकाशमर्हतीति भावः ॥ **विरिञ्चिश्चेश्वरस्य रूपमेवेति** ॥ नन्वभेदेन पूर्वपक्षो न युज्यते । सिद्धान्ते भेदानाभिधानात् । अभेदेन नित्यमहिमत्वादिघटनवत् सिद्धान्तप्रापकपत्यादिशब्दानामपि घटयितुं शक्यत्वेन सिद्धान्ताऽनुदयाऽप्रसङ्गाच्चेति चेत्, न अभेदेन पूर्वपक्षस्य सूत्रज्ञापितभेदावतारिकारूपत्वेन वक्तव्यत्वात् । तथा हि सूत्रकारस्तावत् ब्राह्मणस्य विष्णुत्वसमर्थनाय पतिशब्दमात्रस्य पूर्णत्वात् सूत्रस्याल्पाक्षरत्वाय 'पतिशब्दात्' इत्येव वक्तव्ये यत् 'पत्यादिशब्देभ्य' इत्याह, तेनेदं सूचयां बभूव । चतुर्मुखासाधारणाजश्रुति, विष्ण्वसाधारणनित्यमहिमत्वयोरस्मिन् ब्राह्मणे श्रवणात् तदन्यथानुपपत्त्या विष्णुविरिञ्चयोरैक्यमङ्गीकृत्य, कारणशब्दानां कार्ये सम्भवाभिप्रायेण 'नित्यो महिमा' इत्युक्तनित्यमहिमत्वं ब्राह्मणे घटयित्वा, ब्राह्मणो विरिञ्च एवेति न मन्तव्यम् । कुत इति चेत्, भवेदिदं तयोरैक्यं यदि उभयप्रापकयोः साम्यं स्यात् । न चैवम् किं नाम विष्णुप्रापकाणां बहुत्वात्, निरवकाशत्वाच्च, अल्पसावकाशविरिञ्चप्रापकबाधसम्भवेन अन्यथानुपपत्तेरभावादिति । अत एव – इममेवाभिप्रायं मनसि निधाय, सत्तर्कदीपावल्यां तस्माद्वेदेन गम्यत्वात्, ब्राह्मणशब्दवाच्यत्वात्, अजातत्वात्, अजशब्दवाच्यो विष्णुरिति सिद्धमित्युक्तम् । अत एव सिद्धान्तानुदयोऽपि परास्तः । तत्वप्रदीपे तु 'देवानां च' इति भाष्यम्, 'विरिञ्चस्य कादाचित्कपदप्राप्तिः न नित्यमहिमेत्याशङ्क्याह – **देवानां चेति** ॥ चकारोऽवधारणे । अन्यदेवानामेव विद्याकर्मणोः सकाशात्पदप्राप्तिः सूचिता देवताधिकरणे न विरिञ्चस्य तस्माद्विरिञ्चोऽपि नित्यमहिमेति प्राप्त आह पत्त्यादिशब्देभ्य' इति व्याख्यातम् । यद्यपि देवताधिकरणे न विरिञ्चेतरस्य पदप्राप्तिः सूचिता किंतु विरिञ्चस्यापीति नित्यमहिमत्वासम्भव एव तथापि अङ्गीकारवादेन सूत्रकृता समाहितमिति तत्वप्रदीपकृतोऽभिप्रायो बोध्यः । **सर्वस्य वशीति** ॥ 'पत्यादिशब्देभ्य' इति सूत्रे शाखान्तरस्थं वाक्यं विषयवाक्यत्वेनाऽभिसंहितमिति भावेन भाष्यकृता 'सर्वस्याधिपतिः सर्वस्येशान' इति शाखान्तरस्थं वाक्यमुदाहृतम् । टीकाकृता तु तत्समानार्थत्वात् वाजसनेयवाक्यमपि विषयवाक्यमित्यभिप्रेत्य 'सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः' इति वाक्यमुदाहृतमिति बोध्यम् ।

एतेन वाजसनेयके 'सर्वस्याऽधिपतिः' इत्यस्य प्राथम्याभावात् भाष्यकारीयं 'सर्वस्याधिपतिः सर्वस्येशान' इति श्रुत्युदाहरणमयुक्तमिति परास्तम् । सूत्रकाराऽभिमतशाखान्तरस्थवाक्यस्यैव भाष्यकृता उदाहृतत्वात् । एतेन 'सर्वस्य वशि' इति वशीत्यस्य प्राथम्यात्

(अभिनवचन्द्रिका)

'वश्यादिशब्देभ्य' इति सूत्रपाठेन भाव्यमिति परास्तम् । 'पत्यादिशब्देभ्य' इत्यत्रादिशब्दगृहीतं शब्दान्तरं वक्तुमाह– **एष सर्वेश्वर इति** ॥ एषां लोकानामसम्भेदाय=असाङ्कर्याय, विधारणः= धारणसमर्थः, सेतुः=आश्रयश्चेत्यर्थः । **एष नेति नेतीति** ॥ स एषः आत्मा इति न, इति न श्रुतवन्न, दृष्टवन्न, श्रुतदृष्टविलक्षण इति यावत् । अगृह्यः=साकल्येन ग्रहीतुमशक्यः । कुत इत्यत उक्तं **न हि गृह्यत इति** ॥ हि यस्मात् कारणात् केनापि न गृह्यते । एवं 'न हि शीर्यते' इत्यादेरपि व्याख्या द्रष्टव्या । **अशीर्यः** विदारणायोग्यः । **असङ्गः** सङ्गरहितः । **असितः** बन्धनायोग्यः । **न रिष्यति** न नश्यतीत्यर्थः । **स एष आत्मेति** ॥ 'आत्माऽजरोऽमृतोऽभय' इत्येव श्रुतिग्रहणम्, 'स एष' इति टीकाकारीयपूर्वोक्तपरामर्शः । एतेन 'सवा एष महानज आत्माऽजरोऽमृतोऽभय' इति श्रुतौ पाठदर्शनात् स एष आत्मेति श्रुत्युदाहरणमयुक्तमिति परास्तम् । 'पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यमित्यस्यार्थमाह – **यद्भूतमिति** ॥ 'उतामृतत्व-स्येशान' इत्येतद्व्याचष्टे – **यस्मादिति** ॥ अन्नेनेत्येतत् विभक्तिपरिणामेन संसारिसमूहमिति व्याख्यातमिति बोध्यम् । अमुक्ताधिपत्यं मुक्ताधिपत्ये कथं हेतुरित्यत आह – **मुक्ताविति** ॥ **न च विष्णाविति** ॥ ननु शङ्कैव तावदनुपपन्ना । अन्योन्याश्रयात् । तथा हि ब्राह्मणशब्दस्य विष्णावयोगेन अजशब्दापहारः, तस्मिंश्च सति विष्णोरब्राह्मणत्वमिति । ततो ब्राह्मणशब्दस्य यौगिकत्वेन समाधानं व्यर्थमिति चेत्, मैवम् न ब्रूमो वयमजश्रुत्या विष्णौ ब्राह्मणशब्दापहार इति, तस्य जातिविशेषप्रवृत्तिनिमित्तकस्य जातिविधुराद्विष्णोर्नित्यनिवृ-त्तत्वात्, किं नाम अजश्रुत्या विरिञ्चत्वनिर्णयो भवतीति । एवं चान्योन्याश्रयाभावात् शङ्केयमुपपन्नेति सार्थकं समाधानम् । **स्वरव्यत्ययस्येति** ॥ ब्रह्म अण इति स्थिते सवर्णदीर्घे ब्रह्माण इति जातं, एवं च ब्रह्मेत्यस्याऽऽकारः ब्रेत्यकारस्थाने, स च आकारस्थान इति स्वरव्यत्ययः आधिक्यार्थ इत्यर्थः । **स्मृतेरिति** ॥ 'सत्त्वं रजस्तम' इति स्मृतेरित्यर्थः ॥ **स्वधर्मनिष्ठ इति** ॥ शतानां ऋजूनां जन्मभिः शतजन्मसमानकाले स्वधर्मनिष्ठः पुमान् विरिञ्चतामेतीत्यर्थः ।

**पूर्वपक्षस्तु** – अयं ब्राह्मणो विरिञ्चो भवेत् । अस्मिन् बहुशोऽजशब्दश्रवणात् । न च अजातत्वयोगेनाजशब्दः विष्णौ सावकाश इति वाच्यम् । ब्राह्मणशब्दसहपठितस्य विष्णाव-नवकाशात् । न च आत्मशब्देन सह पाठादजशब्दो विष्णौ सावकाश इति वाच्यम् । 'आत्मा विरिञ्चः सुमनाः सुधौतश्चेति कथ्यते' इत्यादेः आत्मशब्दस्य विरिञ्चेऽपि वृत्तेः । न च

(अभिनवचन्द्रिका)

असङ्गत्वलिङ्गानवकाशात् न विरिञ्चो ब्राह्मण इति वाच्यम् । विष्णुविरिञ्चयोरभेदेन तस्य तत्र सम्भवात् । ततश्चायं ब्राह्मणो विरिञ्च इति नित्यमहिमत्वं तस्यापीति प्रागुक्तं नित्यमहिमत्वं विष्णोरेवेत्यनुपपन्नमिति ॥

**सिद्धान्तस्तु** – अयं ब्राह्मणो विष्णुरेव । 'सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः' इत्यादौ पत्यादिशब्दस्य सद्भावात् । न च विष्णोर्ब्राह्मणत्वेऽजशब्दविरोधः 'न जायत' इति योगेनोपपत्तेः । न च विष्णौ ब्राह्मणशब्दानुपपत्त्या अजशब्दापहारः ब्रह्मणा वेदेन अण्यते गम्यते इति योगेनोपपत्तेः । न च अभेदात् पतित्वादिविरिञ्चेऽपि सम्भवतीति वाच्यम् । तदभेदे मानाभावात् । ब्राह्मणाजशब्दयोरुक्तरीत्या अन्यथाप्युपपत्तेः । 'तत एते व्यजायन्त विरञ्चो हिरण्यगर्भ' इति भेदश्रुतिबाहुल्याच्च । अतो विष्णुरेवायं ब्राह्मणो नित्यमहिमादिरिति सिद्धम् ।

इति श्रीमत्सत्यनिधितीर्थ श्रीचरणाराधक श्रीसत्यनाथयतिविरचितायां
तत्वप्रकाशिकाभिनवचन्द्रिकायां प्रथमाध्यायस्य तृतीयः पादः ॥

## वाक्यार्थमुक्तावली

अत्र ब्राह्मणशब्दस्य विप्रत्वजातौ प्रसिद्धत्वेऽपि तत्समभिव्याहृतलिङ्गश्रुतिभ्यां विष्णु-विरिञ्चोभयप्रसिद्धिमाह ॥ **अत्रेति** ॥ अतिप्रसङ्गस्तु वज्राधिकरण एव परिहृतोऽनुसन्धेयः ॥ **श्रुत्यादीति** ॥ असङ्गो बहिः स जात इत्यत्र श्रुतस्यासङ्गस्याब्रह्मत्वे असङ्गोऽह्ययं पुरुष इति पूर्वोक्तस्याप्यब्रह्मत्वं स्यादित्याक्षेपेणोत्थानादिति द्रष्टव्यम् ॥ **अभिसंहितमिति** ॥ कण्ठतोऽ-नुक्तत्वादिति भावः ॥ **तदुपपादयत्यन्यथेति** ॥ अन्यापेक्षायां हि कर्तृत्वादेर्महिम्नो नित्यत्वं स्यादिति भावः ॥ **किं विष्णुरिति** ॥ ब्राह्मणस्येत्युक्तो ब्राह्मणः विरिञ्च उत विष्णुरिति चिन्ता । तदर्थं ब्राह्मणशब्दः किं रूढ उत यौगिक इति । तदर्थं रूढिबाधकः नास्त्युतास्तीति । तदर्थं स वा एष इत्यादिकं किं चतुर्मुखे ब्रह्माभेदाभिप्रायेण नेतुं शक्यमुताशक्यमिति । बहुशोऽजशब्दश्रवणादिति ॥ स वा एष महानज' आत्मा योऽयं विज्ञानमयः स वा एष महानज आत्मान्नादः स वा एष महानज आत्माजरामर इत्यादि बहुवाक्येष्वजशब्दस्याभ्य-स्तत्वादित्यर्थः । अत एव भाष्ये बहुवाक्यसूचनाय प्रतीकग्रहणं कृतमिति भावः । प्रसिद्धत्वादिति रूढत्वादित्यर्थः ॥ **योगेन प्रवृत्तत्वादिति** ॥ आज्जायत इत्यज इति

(वाक्यार्थमुक्तावली)
योगेनेत्यर्थः । न च विरिञ्चे रूढिरप्यस्तीति वाच्यम् । तस्मादहमजः स्मृतः । इति भारतवचनाद्विष्णावपि रूढिसाम्यात्तथा च नाजश्रुत्या ब्राह्मणस्य विष्णुत्वनिर्णय इति भावः । प्रवृत्त्यत्वादित्यस्य न च वाच्यमिति पूर्वेणान्वयः । कुतो वाच्यमित्यतो न्यायविवरणे ब्राह्मण-शब्दस्य पापालेपलिङ्गस्य च चतुर्मुखस्य परमात्माभेदं विनावकाशराहित्यादभेदप्रतीतिरिति ब्राह्मणश्रुतितो विरिञ्चप्राप्युक्तस्तदविरोधाय तत्साहित्येनात्मश्रुतेर्निरवकाशत्वमाह ॥ **ब्राह्मण-शब्देनेति** ॥ **वर्णादीति** ॥ अगोत्रमवर्णमित्यादेर्ब्राह्मणादितिशब्दादित्यर्थः ॥ **विष्णो-र्ब्राह्मणशब्देनेति** ॥ जातिः सन् जज्ञे ब्रह्मा चतुर्मुख इति वचनाच्चतुर्मुखस्य ब्राह्मणजातित्वात् । तत्र ब्राह्मणांशः स भवतीति भावः ।

नन्वजश्रुतेः ब्राह्मणश्रुत्या निरवकाशत्वोपपादने ब्राह्मणश्रुत्यैव पूर्वपक्षोपपत्तौ भाष्ये अज श्रुतिग्रहणं व्यर्थमन्योन्याश्रयत्वं च ब्राह्मणश्रुत्याऽजश्रुतेर्निरवकाशत्वमुपपाद्याजश्रुत्या ब्राह्मण-शब्दस्य चतुर्मुखादितरत्रानवककाशोक्तेरिति चेन्न । भावानवबोधात् । न ब्राह्मणश्रुतिमात्रेण पूर्वपक्षो युज्यते । ब्राह्मणशब्दस्य द्विजत्वजातिविशिष्टरूढत्वेऽपि विशिष्टचतुर्मुखे प्रसिद्धत्वात् । अजश्रुत्या पूर्वपक्षो युक्तः । अजश्रुतेरप्युभयत्र रूढिसाम्येन सावकाशत्वे च चोदिते तस्या-जातिवाचकब्राह्मणशब्दसामानाधिकरण्यात् । वर्णादिशब्दादीश्वराद्व्यावर्तमानस्य ब्राह्मणशब्दस्य सहश्रुताजशब्दव्यावर्तकत्वात् । सामान्यतो जातिवाचकब्राह्मणशब्दबलादजशब्दस्य योग-रूढिभ्यां विष्णुपरस्याप्यत्र प्रकरणे विष्णुतो व्यावर्तते । सिद्धायां ब्राह्मणजातिमतोऽन्यस्याज-शब्दस्याभावात् । अजश्रुत्या ब्राह्मणशब्दवांश्चतुर्मुख एवेति विवक्षितत्वादिति ॥ अत एव वक्ष्यति ॥ अतोऽजशब्दाद्विरिंच एवायं ब्राह्मण इत्यजशब्दस्यैव साधकत्वमिति ज्ञेयम् । भाष्येऽजशब्दादित्युपलक्षणम् । महच्छब्दादित्यपि बोध्यमत एव भाष्ये तदुदाहरणं दिवा नक्तं महतः समुत्पन्नं चतुर्मुखादिति प्रयोगात् ॥ असामान्यधिकरणन्यायाच्च ॥ न च तस्योक्तस्पष्ट-वाचित्वादीश्वरपरिग्रहो युक्तः । प्रयोगनिमित्ताभ्यां विशेषपरत्वसम्भवे सामान्यवाचित्वा-योगादिति भावेनाह ॥ **महत्तत्त्वेति** ॥ प्रवृत्तिनिमित्तपौष्कल्ये भगवत्परत्वनिर्बन्धेऽपि बाधकमाह ॥ **ब्राह्मणशब्देन सहश्रवणादिति** ॥ अथवैतदुत्तरत्र शङ्काग्रन्थ एव सम्बध्यते । भाष्ये स एष महानज इत्येतावता पूर्तौ आत्मेत्यन्तग्रहणम् आत्मशब्दविरोधमाशङ्क्य तस्यापि सावकाशत्व-प्रदर्शनार्थमिति । इत्यादेरित्यादिपदेन बुद्धेरात्मा महान् पर इत्यादिग्रहणम् । भाष्योक्त-

(वाक्यार्थमुक्तावली)
विरिञ्चेश्वरयोरैक्ये पठितन्यायविवरणार्थापत्तिं प्रमाणमाह ॥ **अन्यथेति** ॥ **न चाभिन्नेति** । विरिञ्चेशयोर्भेदमङ्गीकृत्यात्रश्रुतिबलाद्विरिञ्चस्य लिङ्गबलाद्विष्णोर्ग्रहणेनार्थापत्तिरन्यथोपपत्तिरिति नेत्यर्थः ॥ **एकेति** ॥ एष नित्यो महिमा ब्राह्मणस्येति नित्यमहिमत्वब्राह्मणत्वयोरेक-निष्ठत्वावगमात् । स न साधु नेत्यादौ ब्राह्मणपरामर्शाच्च । वाक्यभेदमाश्रित्य पृथगुभयग्रहणा-योग इति भावः ।

ननु पूर्वाधिकरणे नित्यतानुग्राहकविशेषप्रमाणसद्भावाद्भेदव्यपदेशास्तदतिरिक्तपर इति भावेनाह ॥ **सत्त्वमिति** ॥ आदिपदेन सत्रे बभूवैषां गुणानामुपादानाय विष्णुर्वाव सत्त्वस्य रजसो ब्रह्मा ईशानो नाम तमस इत्यादिग्रहणम् । न च शास्त्रदृष्ट्येत्युक्तन्यायेनैक्य-व्यपदेशोपपत्तिः । तस्य जीवमात्रसाधारण्येन विशिष्टाभेदोक्त्ययोगादिति भावः ॥ **कारण-शब्दानामिति** ॥ नित्यमहिमत्वपापाद्यलेपलिङ्गबोधकानां जीवचैतन्यमुख्यहिरण्यगर्भादौ सावकाशत्वं न तु विशिष्टबोधकानां ब्राह्मणादिशब्दानां निर्गुणे वृत्तिरनुपपन्ना घटे मृत्वानु-स्मृत्या मठशब्दात् मृदादिघटपदाप्रयोगादिति भावः । सूत्रे तत्विति अनुवृत्तिः सिद्धा ब्राह्मण इत्यध्याहारः । पतित्वादीनां प्रत्येकलिङ्गत्वसूचनाय बहुवचनमित्यभिप्रेत्य व्याचष्टे ॥ **अयमिति** ॥ नित्यमहिमा विष्णुरेवेति भाष्ययुक्तितत्प्रदर्शनपरमिति भावेनोक्तम् ॥ तथा च **तस्यैवेति** ॥ सूत्रे पत्यादीत्यनुसारेण भाष्ये सर्वस्याधिपतिरिति शाखान्तरपठितम् टीकायां तु वाजसनेयवाक्यं पठितम् ॥ **स एष आत्मा इति** ॥ यस्मादिदानीं न गृह्यतेऽतो ग्रहणायोग्य इति योज्यम् । असितो अबद्धः । न रिष्यति । न नश्यति । ऋषहिंसायाम् ॥ **कुत इति** ॥ सर्वस्मै देवा महिमावहन्तीति चतुर्मुखस्यापि सर्वाधिपत्योपपत्तेरिति भावः ।

पुरुष एवेदं सर्वमित्याद्यैक्यपरं वाक्यं 'यदधीना यस्य सत्ता तत्तदित्येव भण्यत' इति न्यायमनुसृत्य व्याचष्टे ॥ **यद्भूतमित्यादिना** ॥ अमृतत्वस्येत्यस्यायमर्थः मुक्तसमुदायस्येति ॥ विचित्रा हि तद्धितगतिरिति न्यायात् । अमृतशब्दसमुदायार्थे त्वप्रत्ययः । जातिवाचक-शब्दमहिम्नैवेतदवच्छिन्नसर्वलाभो वेति भावः । यदन्नेनातिरोहतीत्यत्र यदित्यस्यार्थो यस्मादिति । अन्नेन अलम् अघं मर्त्यमिति विवक्षित्वोक्तं **संसारीति** ॥ अतिरोहतीत्यस्य अतिरोहित इति एवं सर्वस्याधिपतिरित्युक्तसर्वाधिपत्ये उतेति श्रुतिं व्याख्याय सप्तार्थगर्भेति द्वितीयस्य आदिपदोपात्तस्य एको वशी सर्वभूतान्तरात्मेत्यादिवाक्यस्य च विषयमाह ॥ **ईशानेति** ॥

(वाक्यार्थमुक्तावली)

सर्वस्येशान इतीशानपदोक्तेत्यर्थः । एवम् इत्यादि श्रुतिभ्यस्तस्यैव ते शब्दा इति भाष्यं पत्यादि शब्दश्रुतिभिर्निरवकाशत्वप्रदर्शनपरत्वेन व्याख्याय अजब्राह्मणमहच्छब्दा अपि तस्यैवेति पूर्वपक्षप्रापकाणां सावकाशत्वप्रदर्शनपरतया व्याचष्टे ॥ **न च विष्णोरित्यादिना** ॥ उक्तं च न्यायविवरणे ब्रह्मणा वेदेन गम्यते इति ब्राह्मणशब्दो विष्णावेव युज्यते इत्यर्थादजशब्दोऽपि तस्मिन्नेवेति ॥ **स्वरेति** ॥ ब्रह्मणाण्यते । भाष्ये ब्रह्मेत्यतःपरं विद्यमानदीर्घाकारतया गम्यत इत्याधिक्यज्ञापनार्थ इत्यर्थः । धातुव्याख्यानं पठति ॥ **अण गताविति** ॥ ब्राह्मणशब्दादे-र्जात्यादौ रूढत्वात् । मुख्ययोगाङ्गीकारो युक्त इत्यतो भाष्ये इतिशब्दसूचितम् । उक्तविरोधश्च तत्रैवेति न्यायविवरणे स्पष्टमुक्तम् । बाधकमाह ॥ **अन्यथेति** ॥ भाष्ये पत्यादिशब्दा ब्राह्मणादिशब्दाश्च विष्णोरेवेत्युक्त्या यदुक्तमुभयप्रापकशब्दान्यथानुपपत्या भेद इति तदपि निरस्तमित्याशयेन तदाशङ्क्य दूषयति ॥ **न चाभेदादित्यादिना** ॥ एवमर्थापत्यादि निरस्य श्रुतिस्मृत्योः सावकाशत्वमाह ॥ **स्मृतेरिति** । तेन सर्वस्याधिपतिरित्यादौ विष्णोर्हरहिरण्य-गर्भोत्तमत्वात्तत्प्रेरक तया तदन्तर्गतत्वस्य तद्भिन्नत्वस्य च सर्वस्याधिपतिः सर्वस्येशानः नेति नेतीत्युक्तत्वात् उतामृतत्वस्येत्यादावस्यार्थस्य स्पष्टमुक्तत्वाच्च । श्रुतिस्मृतिरूपा ऐक्यपरशब्दा अपि तदन्तर्गतिश्चैरैक्यपरा एव न तु प्रतीतार्थपराः । अन्यथा विरोधादिति भाष्यार्थ उक्तो भवति। तदुक्तं न्यायविवरणे उक्तविरोधश्चातत्पक्षे इति । चतुर्मुखस्य कर्मफलाभावायुक्तेः तयोर्भेद एवार्थादापद्यत इति । भेदश्रुतिबाहुल्यादिति न्यायविवरणं मनसि निधाय ऐक्यपर-शब्दान्तर्गतस्वरूपापेक्षयैव चतुर्मुखविष्णोरैक्यपरा इत्यत्र द्विशब्दसूचितलिङ्गं श्रुतिं चाह ॥ **स्वधर्मेत्यादिना** ॥ अधिकरणफलितार्थमाह ॥ **अत इति** ॥ नित्यमहिमा चेति क्वचित्पाठः नित्यमहिमश्चेति क्वचित्पाठः । अत्र पादे चतुर्दशाधिकरणानि । तत्र अधिकरणद्वयं प्रासङ्गिकम् । अधिकरणचतुष्टयं लिङ्गसमन्वयपरम् । अधिकरणाष्टकं नामसमन्वयविषयम् । अनन्तरसङ्गतिविशेषवशादधिकरणसङ्कलनमिति सर्वमनवद्यम् ।

श्रीमद्विठ्ठलाचार्यतनूजेन श्रीमत्तीर्थार्यचरणसेविना श्रीनिवासेन रचितायां
श्रीमत्तत्वप्रकाशिकावाक्यार्थमुक्तावल्यां प्रथमाध्यायस्य तृतीयः पादः समाप्तः ॥

## तत्त्वसुबोधिनी

प्राचीनाधिकरणेष्वित्यनेन सुषुप्त्युत्क्रान्त्योः भेदेन इति अधिकरणस्य जगत्स्रष्टृत्वादे-रित्यादिपदेन स्वप्नादिस्रष्टृत्वादेरपि ग्रहणेन टीकायामेवाव्यवहितपूर्वाधिकरणसङ्गतिरुक्ता इति द्रष्टव्यम् ।। **अभिसंहितमिति** ।। कण्ठतोऽनुक्तत्वादिति भावः । किं बलादभिसंहितत्वं ज्ञायत इत्यत आह ।। **अनन्यापेक्षयेति** ।। **बहुशोऽजशब्द श्रवणादिति** ।। 'स वा एष महानज' 'आत्मा योऽयं विज्ञानमयः' स वा एष महानज आत्मा इत्येतावदेव उदाहृतमिति भावः । अस्त्वजशब्दश्रवणं ततः किमित्यत आह ।। **अजशब्दस्येति** ।। **विष्णुजातत्वयोगेनेति** ।। यद्यपि विरिञ्चेऽजशब्दस्य रूढिरप्यस्ति तथापि तस्मादहमजः स्मृतमिति भारतवचनाद्विष्णावपि रूढिरस्तीति विष्णुविरिञ्चयोरजशब्दस्य साम्यमेवेति भावः । ब्राह्मणशब्देन सहपाठेऽपि विष्णौ अनवकाशः कुत इत्यत आह ।। **वर्णादिशून्यादिति** ।। अगोत्रमवर्णमित्यादेरित्यर्थः । विष्णोः ब्राह्मणजातिः । 'सञ्जज्ञे ब्रह्मा चतुर्मुख' इति वचनात् चतुर्मुखस्य ब्राह्मणजातित्वात्तत्र ब्राह्मणशब्दः सम्भवतीति भावः । ननु विरिञ्चपक्षे महच्छब्दो न सम्भवतीत्यत आह । **महत्त्वेति** ।। **तत्सिद्धेरिति** ।। विरिञ्चेश्वरयोरैक्यसिद्धेरित्यर्थः । कथं विरिञ्चेश्वरयोरैक्याभावे एतत्प्रकरणानुपपत्तिरित्यत आह ।। **तथाहीति** ।। स ब्राह्मणः साधुना पुण्येन कर्मणा भूयान् श्रेष्ठो न भवति अधुना पापकर्मणा कनीयान्नीचो न भवतीत्यर्थः ।। **एतदिति** ।। पापाद्यलिङ्गमित्यर्थः । ननु पापाद्यलिङ्गत्वेन विष्णुरजशब्दार्थत्वेन विरिञ्च इति पृथगेव उभय-ग्रहणं क्रियते इत्यत आह ।। **न चेति** ।। **एकनिष्ठत्वादिति** ।। लिङ्गद्वयस्य एकवस्तु-निष्ठत्वादित्यर्थः ।। **अत एवेति** ।। लिङ्गद्वयस्य एकनिष्ठत्वादेवेत्यर्थः । विरिञ्चस्य ईश्वररूपत्वे प्रमाणं चाह ।। **सत्वमिति** ।। इत्यादेश्चेत्यादिपदेन । 'स त्रेधा बभूव एषां गुणानाम् उपादानाय विष्णुर्वा सत्त्वस्य रजसो ब्रह्मा ईशानो नाम तमस' इत्यादि श्रुतिग्रहणम् । तथा च न केवलं एतत्प्रकरणान्यथानुपपत्त्या विष्णुविरिञ्चयोः ऐक्यसिद्धिः । किन्तूदाहृतप्रमाणादपीति भावः । विरिञ्चस्यापि स्थावरपतित्वादिनापत्यादिशब्दसम्भवेन सौत्रपत्यादिशब्दानां विष्णुत्वानिश्चाय-कत्वात् श्रुतावपि सर्वस्याधिपतिः इत्यादिश्रवणाच्चाह ।। **सर्वाधिपत्यादीति** ।। उतामृत-त्वस्येशान इति वाक्येनैव सर्वाधिपतित्वं न प्रतीयते इत्यतो भाष्याभिप्रेतं पुरुष एवेदं सर्वमिति तत्पूर्ववाक्यमपि व्याचष्टे ।। **यद्भूतं भविष्यद्वर्तमानमिति** ।। पुरुष एवेत्यस्य व्याख्यानं

(तत्त्वसुबोधिनी)

परमपुरुषाधीनमिति । 'यदधीना यस्य सत्ता तत्तदित्येव भण्यते' इत्यादेरिति भावः । उत शब्दस्यार्थो न केवलमिति । यच्छब्दस्य हेतुपरत्वम् अन्नशब्दस्य संसारिसमूहपरत्वम् अतिरोहतीत्यस्य अतिशयार्थत्वमाश्रित्याह ॥ **यस्मादित्यादिना** ॥ **ईशानपदोक्तेति** ॥ ईशानपदस्यार्थद्वयं सर्वाधिपत्यं सर्वप्रेरकत्वं च तथा च उतेति श्रुतिः उभयत्र प्रमाणम् । सप्तेति श्रुतिस्तु सर्वप्रेरकत्वे प्रमाणम् । तत्राऽज्ञाधारकत्वस्य उक्तत्वादिति भावः ।

ननु ब्राह्मणशब्दस्य ब्रह्मणा वेदन इत्याद्युक्तरीत्या यौगिकत्वे ब्रह्मण इतिवत् ब्राह्मण इति कथमित्यत आह ॥ **स्वरव्यत्ययस्य अधिकारार्थत्वादिति** ॥ आधिक्येऽधिकमित्येव हरिणा सूत्रमीरितमिति ऋग्भाष्ये उक्तत्वात् ब्रह्मणा वेदन गम्यत्वाधिक्यविवक्षया दीर्घ इत्यर्थः ॥ अत्राण इत्यस्याश्रुतत्वाद्गम्यत इति कथमित्यत आह ॥ **अणगताविति** ॥ **अन्यथेति** ॥ यौगिकार्थानङ्गीकारे इत्यर्थः । उपसंहरति ॥ **अत इति** ॥

**इति पाण्डुरङ्गि श्रीनिवासाचार्यविरचितायां श्रीमत्तत्वप्रकाशिकातत्त्वसुबोधिन्यां प्रथमाध्यायस्य तृतीयः पादः ॥**

## वाक्यार्थविवरणम्

भाष्योदाहृतसप्तार्धेति श्रुत्यर्थः । महदहङ्कारपञ्चभूताख्यसप्तदेवताः ब्रह्माण्डाख्यातिसमृद्धगर्भस्तदावरणभूताः भुवनस्य रतिप्रदाः सारभूताः वा भुवनस्य रतिप्रदस्य विष्णोराज्ञया विविधविश्वधारणे तिष्ठन्तीत्यर्थः ॥ **स्वधर्मनिष्ठेति** ॥ स्वधर्मनिष्ठ इति वाक्यस्येत्थं योजना । यथा पुमान् ऋजुजीवसमुदायः भागवतः अनादितो ज्ञानभक्त्यादिसम्पन्नोऽपि विशेषेणापरोक्षज्ञानानन्तरं शतजन्मभिः शतसङ्ख्याकब्रह्मकल्पैः स्वधर्मनिष्ठः विशेषेण हर्युपासनारूपधर्मानुष्ठानवान् विरिञ्चितामेति ब्रह्मपदं प्राप्नोतीति ब्रह्मणो हरिप्रसादप्राप्तपदवत्त्वात् । हरेर्भेदः सिध्यत्येवेत 'स्वधर्मनिष्ठःपुमान् विरिञ्चतामेति' इत्येतदयुक्तं कथमुच्यत इति चोद्यानवकाशः ॥

## वाक्यार्थमञ्जरी

किम्बलादभिसंहितत्वं ज्ञायत इत्यत आह ॥ **अनन्यापेक्षयेति** ॥ एष इति ॥ ब्रह्मणा वेदेनाण्यते गम्यत इति ब्राह्मणशब्दवाच्यस्य विष्णोरेव पूर्वोक्तमहिमा नित्यः आद्यन्तरहितः ॥

(वाक्यार्थमञ्जरी)

**नेति** ।। एष महिमा पुण्येन कर्मणा नाभिवर्धते पापेन कर्मणा न कनीयानपकृष्टो न भवतीत्यर्थः ।। **बहुशोऽजशब्दश्रवणादिति** ।। स वा एष महानज आत्मा योऽयं विज्ञानमयः स वा एष महानजः आत्मान्नादः स वा एष महानज आत्माजरोमर इत्यादिवाक्येषु ब्राह्मणनिष्ठतया बहुशोऽजशब्दश्रवणादित्यर्थः । ब्राह्मणस्य विरिञ्चत्वे हेत्वन्तरमाह ।। **महत्तत्त्वाभिमानितयेति** ।। आत्मा विरिञ्च इति बृहद्भाष्योक्ताभिधानम् । नियमादिति जन्यभावस्य विनाशव्याप्तत्वादिति भावः ।। **स इति** ।। सब्राह्मणः साधुकर्मफलेन सुखेन भूयानुच्चोऽसाधुकर्मफलेन दुःखेन नीचश्च नैव भवतीत्यर्थः । एतत् श्रुतिद्वयं लिङ्गद्वयञ्च एकनिष्ठत्वात् एकनिष्ठत्वावगमात् । विरिञ्चेश्वरयोरैक्ये प्रथमभागवतसंमतिमाह ।। **सत्त्वमिति** ।। पुरुषः पूर्णषड्गुणो हरिः प्रकृतेःपरोऽपि अप्राकृतविग्रहोऽपि 'सत्त्वं रजस्तम इति' प्रकृतेर्येगुणास्तैर्युक्तस्तेषामाश्रयः सन् इह जगति एक एव हरिविरिञ्चिहरेति संज्ञा नामानि धत्ते किमर्थमित्यत उक्तम् अस्य जगतः स्थित्यादये उपलक्षणमतेत् स्थित्युत्पत्तिसंहरान्कर्तुमिति । कारणमीश्वरः कार्यं विरिञ्चः मृच्छब्दस्य घटे प्रवृत्तिवद्घटस्य मृद्यप्रयोगादितिभावः ।। ॐ पत्यादिशब्देभ्यः ॐ ।। एष नित्यो महिमा ब्राह्मणस्येति उक्तब्राह्मणो विष्णुरेव सर्वस्याधिपतिः सर्वस्येशानः स वा एष नेति नेतीति सर्वाधिपतित्वसर्वप्रेरकत्वश्रुतदृष्टविलक्षणत्वप्रतिपादकशब्दसद्भावादित्यर्थः । सर्ववशीत्यादिश्रुतिर्दहराधिकरणे व्याख्यातेत्यत्र न व्याख्यायते ।। **स इति** ।। स वा एष आत्मा ब्राह्मणः नेतिश्रुतविलक्षण इति नेति दृष्टविलक्षण इति चोच्यते तदेवोपपादयति ।। **अगृह्य इति** ।। हि यस्मान्न गृह्यते अतो अगृह्य इत्युच्यत इत्यर्थः । कुत इत्यत आह **गृह्यत इति** ।। एवमग्रेऽपि शीर्यते सज्जते सम्बध्यते असितः अव्ययः न रिष्यति न नश्यति ऋषहिंसायामिति धातोः उतामृतत्वस्येशान इति वाक्येनैव सर्वाधिपतित्वं न प्रतीयत इत्यतः पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यमिति पूर्वार्धेन सह व्याचष्टे ।। **यद्भूतं भविष्यदित्यादिना** ।। ततश्चेयमक्षरयोजना यद्भूतमतितं भव्यं भविष्यच्च शब्दाद्वर्तमानं च तदिदं सर्वं पुरुष एव पुरुषाधीनमेव यदधीना यस्य सत्ता तत्तदित्येव भण्यत इत्युक्तेः । पुरुषः यद्यस्मादन्नेनेति तृतीया द्वितीयार्थे अद्यते विनश्यत इत्यन्नं संसारिजातं अतिरोहति अपि शेते तदधिपतिरिति यावत् तस्मादमृतत्वस्येति भवितृप्रधानोऽयं निर्देशः । अमृतत्वस्य मरणादिभयरहितस्यापि मुक्तवर्गस्य ईशानः प्रेरकः । सोऽमृतस्याभयस्येशो मर्त्यमन्नं यदत्यगादिद्विभागवतोक्तेरिति हेतुहेतुमद्भावस्य स्पष्टमप्रतीतेराह ।। **मुक्ताविति** ।। मुक्तावनधीनत्वाज्ज्ञानेन मोक्षप्रदानं किं न स्यादित्यत उक्तम् ।। **बुद्धिमत इति** ।।

(वाक्यार्थमञ्जरी)

भविष्यद्बुद्धिमत इत्यर्थः । तदेव कुत इत्यत उक्तम् ॥ **सर्वज्ञस्येति** ॥ योगेनेत्युपलक्षणं तस्मादहमजः स्मृत इति रूढिरप्यस्तीति द्रष्टव्यम् । ननु ब्राह्मणशब्दस्य ब्रह्मणा वेदनेत्या-द्युक्तरीत्या यौगिकत्वे ब्रह्मण इति भवेद् ब्राह्मण इति तु कथमित्यत आह ॥ **स्वरव्यत्या-सेति** ॥ आधिक्येऽधिकमित्येवहरिणा सूत्रमारितमिति ऋग्भाष्योक्तेर्ब्रह्मणा वेदेन गम्यत्वाधिक्य-विवक्षया दीर्घस्वरव्यत्यास इत्यर्थः ॥ **तदन्तर्गतेति** ॥ ब्रह्मणि ब्रह्मरूपोऽसौ शिवरूपी शिवे स्थित इत्युक्तेरिति भावः ॥ न केवलमभेदे मानाभावः किन्तु भेदसाधकमानविरोधश्चेत्याशये-नाह ॥ **स्वधर्मनिष्ठ इत्यादिना** ॥

इदमुक्तं भवति । हरिविरिञ्चौ भिन्नौ कर्मफलभोगतदभावरूपविरुद्धधर्माधिकरणत्वात् । न चासिद्धिः । विरिञ्चेर्कर्मफलभोगस्योदाहृतवचनसिद्धत्वादिति वचनार्थस्तु पुमान् ऋजुर्जीवः अनादितो भगवज्ज्ञानभक्त्यादिसम्पन्नोऽपि विशेषेणापरोक्षज्ञानानन्तरं शतजन्मभिः एकोन-शतसङ्ख्याकब्रह्मकल्पैः स्वधर्मनिष्ठहर्युपासनादिस्वयोग्यधर्मनिष्ठावानेव विरिञ्चतां प्राप्नोति ततःपरं मां श्रियमेतीति यथा श्रुते तु विरिञ्चजन्मन एकोत्तरशतत्वप्राप्त्या ऋजूनामपरोक्षज्ञानानन्तरं शतकल्पैरेव मोक्ष इति नियमानुपपत्तिः ब्रह्मणस्त्वेव तावत्त्वमित्यनुव्याख्यानव्याख्यानसुधायां ब्राह्मणस्तु तावत्वमेव ब्रह्मकल्पानां शतेनैव कर्मक्षयवत्वमित्युक्त्या एकोत्तरशतजन्मवतो विरिञ्चस्य प्रारब्धभोगाभावप्रसङ्गश्च न चेष्टापत्तिः प्रारब्धकर्मशेषस्तु विरजातरणावधि 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इत्यादिविरोधात् । एवमेव लिङ्गाल्लब्धव्यतः पूर्वमृजोर्ब्रह्मत्वतः शतादित्यनुव्याख्यानं शतजन्मप्रयत्नत इत्यादिचतुर्थतात्पर्यादिकमपि व्याख्येयं यत्तूदाहृतानु-व्याख्यानसुधायां यस्यैतस्माद् ब्रह्मकल्पादारभ्य ब्रह्मकल्पानां शतङ्गते ब्रह्मत्वं भविष्यतीत्युक्तं तदप्यनुव्याख्यानानुवादमात्रं शते आगते इतिपदच्छेदो वेत्यदोषः अत एव सन्न्यायरत्नावल्या-मुदाहृतानुव्याख्यानव्याख्यानावसरे एकोनशतब्रह्मस्वतीतेष्वित्युक्तमिति संक्षेपः । विश्वो वायुः ॥

इति श्रीमत्तत्त्वप्रकाशिकावाक्यार्थमञ्जर्यां शर्कराश्रीनिवासविरचितायां
प्रथमाध्यायस्य तृतीयः पादः समाप्तः ॥

॥ इति ब्राह्मणाधिकरणम् ॥

# अथ प्रथमाध्यायस्य चतुर्थः पादः

## १. आनुमानिकाधिकरणम्

॥ ॐ श्रुतिलिङ्गादिभिरन्यत्रैव प्रसिद्धानामपि शब्दानां सामस्त्येन विशेषहेतुभिर्विष्णावेव प्रवृत्तिं दर्शयत्यस्मिन्पादे ।

**॥ ॐ आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॐ ॥१॥**

'तत्तु समन्वयात्' (ब्र.सू.१-१-४) इति सर्वशब्दानां परमेश्वरे समन्वय उक्तः तन्न युज्यते । यतो 'अव्यक्तात्पुरुषः परः' (क.उ.१-३-११) इति साङ्ख्यानुमानपरिकल्पितं प्रधानमप्येकेषां शाखिनामुच्यत इति चेन्न तस्यैव पारतन्त्र्याच्छरीररूपकेऽव्यक्ते विन्यस्तस्य परमात्मन एवाव्यक्तशब्देन गृहीतेः । कप्रत्ययः कुत्सने । परमात्मन एवाव्यक्तशब्दः । तत्तन्त्रत्वेन तच्छरीररूपत्वादितरस्याप्यव्यक्तशब्दः । 'तुच्छे(च्छ्ये)नाभ्वपिहितं यदासीत्' (ऋ.सं.१०-१२९-३) इति दर्शयति च ।

'अव्यक्तमचलं शान्तं निष्कलं निष्क्रियं परम् ।
यो वेद हरिमात्मानं स भयादनुमुच्यत' इति पिप्पलादशाखायाम् ।

'अक्षरं ब्रह्म परमम्' इत्युक्त्वा 'अव्यक्तोऽक्षर उच्यते' (भ.गी.८-३,२१) इति वचनाच्च ॥

## सत्तर्कदीपावली

अधिगते सर्वाधिकासाधारणे समन्वये अतिमुख्याधिकारिविषये महासमन्वये दुर्गमेऽपि बुद्धिरप्रभवतीत्यधुना सोऽभिधीयते भगवत इति भावेन पादार्थमाह ॥ **श्रुतिलिङ्गादिभिरिति** ॥ न चान्यत्र प्रसिद्धानामन्नप्राणेन्द्रादिशब्दानां समन्वयः प्रथमपाद एवोक्तः, न हि विष्ण्वात्रपि प्रसिद्धाः । तथा च सति तृतीयपादभेदानुपपत्तिरित्यत उक्तम् ॥ **श्रुतिलिङ्गादिभिरिति** ॥ अत्र प्राणेन्द्रादिशब्दानां बलवच्छ्रुत्यादिभिः विष्णौ समन्वय उक्तः । दुःखादिशब्दानां तु तैरप्यन्यत्रैव प्रसिद्धेः । प्रसिद्धश्चायं विशेषोऽन्नादिशब्देभ्यो दुःखादिशब्दानाम् । न चैतत्पादतया गोचरः कोऽपि वैदिकशब्दः दुर्गमत्वेऽपि शिष्यत इति वोत्तराधिकरण एकस्मिन्नेव स्वरवर्णपदात्मनापि सर्ववेदसमन्वयाभिधानात् वा सामस्त्येनेति । न चैवं सति भगवतः पुनरुक्तिसम्भवो वा

(सत्तर्कदीपावली)

शङ्कनीय इत्याह ।। **विशेषहेतुभिरिति** ।। ननु येषां वेदवचसामन्यपरत्वं ब्रह्मलक्षणमतिव्यापकं स्यात्तेषामेव समन्वयोऽभिधेयो न तु सर्वेषामिति शङ्कां परिहरत्सूत्रमुपन्यस्य तदंशोक्तं पूर्वपक्षं सविपयलक्षणमुक्तं सर्वजगज्जन्मादिकारणत्वात्सम्पूर्णं ब्रह्मेति । तदुभयं चास्य मूलम् । न ह्यानुमानिकमपि गुणसर्वस्वं शास्त्रं विना विशेषेण ज्ञातुं शक्यम् ।। **अयमयं भगवद्गुण इति** ।। अतस्तद्विशेषतो विज्ञापयितुं सर्वशब्दसमन्वयश्चतुर्थसूत्र उक्तः ।। **तत्र युज्यते इति** ।। यस्मात्साङ्ख्यानुमानकल्पितमचित्प्रधानमप्यादिकार्यात्, महतः परं त्रिविधकार्याश्रयत्वेन व्याप्तमपि तत्तद्दोपानोक्तमिति सूक्ष्मं चेत्यादि महागुणमुच्यते । नायमव्यक्तशब्दार्थो भगवान् अव्यक्तात्पुरुषः पर इत्यस्य पुरुषादवरत्वावगमात् । पुरुषश्च अव्यक्तात्परतोऽत्र जीवो भवितुमर्हति तस्य योनिमन्ये प्रपद्यन्त इत्यादिदुःखसम्बन्धावगमात् । न च भगवान् दुःखी बद्धो अवरो वा सर्वप्रमाणविरोधात् । अतोऽत्र गुहां ब्रह्मेत्यादिवाक्यपर्यालोचनया अर्थाज्जीवपरयोरैक्यमागच्छतीत्यनया दिशा पूर्वपक्षकरणन्यायेन पूर्वपक्ष इति भावः । सिद्धान्तांशं व्याचष्टे ।। **नेत्यादिना** ।। जीवे हिंसाहेतुत्वात्तत्प्रेर्यमाणत्वाच्छरीररूपकमव्यक्तम् । तस्यैव भगवत एव । जीवस्य तच्छरीरत्वावगमात् । य आत्मा शरीरं यस्य तेजः शरीरमित्यादौ शरीरतद्गतोश्च एकनियम्यत्वदर्शनात् । तद्गतस्य हरेरेव अव्यक्तनाम्ना उक्तेर्न उक्तदोष इत्यर्थः । शरीरस्य रूपमिव रूपमस्येति शरीररूपम् । जडाव्यक्तं तु शरीररूपमपि सम्यक् न भवति तुच्छशब्दादित्येतदर्थः कप्रत्यय इत्याह ।। **कप्रत्यय इति** ।। ननु मञ्चस्थे मञ्चशब्दवदव्यक्तगहराव्यक्तशब्दश्चौपचारिकः तत्र स्यादित्यत आह ।। **परमात्मन एवेति** ।। तुच्छतमेतत् जडाव्यक्तिं विन्यस्तं चात्र परमात्मेत्येतदर्थत्वेन सूत्रोपात्तश्रुतिं दर्शयति ।। **तुच्छेनेति** ।। तुच्छं न भवति गुणतो तमः शब्दोक्तम् आसमन्तात् सर्वैर्गुणैः भूमात्मकम् । आनीदवातमित्युक्तं ब्रह्म । एवमव्यक्तविन्यस्तस्य परमात्मन एवाव्यक्तशब्दः सांख्यश्चेत्तत्र तस्य प्रयोगो योगश्चापेक्षितः । तत्र तावत्प्रयोगश्च शब्दसूचितश्रुतीतिहासयोरस्तीत्याह ।। **अव्यक्तमित्यादिना** ।।

## तत्त्वप्रदीपिका

'महतः परमव्यक्तमव्यक्तात्पुरुषः परः' इति काठकानां शाखायामव्यक्तशब्देन प्रधानं परिपठ्यते । तस्य महतः परत्वात्पुरुषादवरत्वाच्च । न ह्यवरत्वं परस्य कयाऽपि विधया पश्याम इत्याशङ्का । परिहारभाष्यस्यायमर्थः । तस्यैव विष्णोः शरीररूपमव्यक्तम् । तदधीनत्वाच्छरीरमिव रूपमस्येति शरीररूपं, न तु हरेश्शरीरत्वात्तस्येति शरीररूपमित्युक्तम् । न च शरीरकल्पनायोग्यं तदिति कप्रत्ययेन कुत्सयामास । तस्मिन्नव्यक्ते नियामकत्वेन वर्तमानो विष्णुरेवाव्यक्तशब्देन

(तत्त्वप्रदीपिका)

गृह्यते। परमात्मन एवाव्यक्तशब्दो मुख्यः। तत्तन्त्रत्वेन तदावरकत्वेन च तच्छरीररूपकत्वादि-तरस्याव्यक्तशब्दः। 'तुच्छ'मल्पं गुणतः। परमापेक्षयाऽल्पत्वं प्रकृतेः। आ समन्ताद्भूमात्म-कत्वादाभु ब्रह्म। यत् ब्रह्म प्रकृत्याऽपिहितमासीत् तदेव 'तपसो' ज्ञानस्य महत्तया प्रधानमासीत्। अव्यक्तमिति ज्ञातुमसुशकम्, अचलं न चाल्यं, शान्तं पूर्णसुखं, निष्कलं षोडशकलावर्जितं, निष्क्रियं न क्रियत इति ॥

## तत्त्वप्रकाशिका

एतत्पादप्रतिपा(द्यं दर्शयति)द्यमाह ॥ **श्रुतीति** ॥ अन्यत्रोभयत्र च प्रसिद्धानां नाम-लिङ्गात्मकानां शब्दानां भगवति समन्वये सिद्धेऽवसरप्राप्तमन्यत्रैव प्रसिद्धानामुभयविधशब्दानां विष्णौ समन्वयं वक्त्यस्मिन्पादे सूत्रकार इत्यर्थः। नन्विन्द्रादिशब्दानामन्यत्रैव प्रसिद्धानां विष्णौ समन्वयस्य प्रथमपाद एव सिद्धत्वाद् व्यर्थः इ(ए)वायं पादः प्रतिभाति। न च तेषामन्यत्रैव प्रसिद्धताभावः। तथा सति तृतीयवैयर्थ्यात्। अन्यत्रैवान्यत्रापीत्यतः प्रकारान्तराभावादित्यत उक्तम् ॥ **श्रुतिलिङ्गादिभिरिति** ॥ लोकप्रसिद्ध्याऽन्यत्र रूढानामिन्द्रादिशब्दानां श्रुतिलिङ्गादिबलाद्विष्णौ समन्वयः प्राक्प्रतिपादितः। इदानीं तु श्रुतिलिङ्गादिभिरेवान्यत्र प्रसिद्धानामपि शब्दानां समन्वयनिरूपणान्नैतत्पादवैयर्थ्यम्। अनेनैवाभिप्रायेणा (न्यत्रान्यत्रैवेत्युक्ति) न्यत्रैवेत्युक्तिरिति भावः।

पूर्वं कचिच्छ्रुत्यादिनैवान्यत्र प्रसिद्धशब्दसमन्वयोक्तावप्येतत्पादीयश्रुत्यादीनां प्राबल्यादिय-मुक्तिः। पूर्वं स्रष्टृत्वादिगुणाभिधायकानां शब्दानां तत्सङ्गतानां च समन्वयो निगदितोऽत्र पुनः स्वरवर्णपदात्मकानां समस्तशब्दानामिति वाऽवैयर्थ्यमिति भावेनोक्तम् ॥ **सामस्त्येनेति** ॥ यदुक्तं बलवच्छ्रुत्यादिभिरन्यत्र प्रसिद्धशब्दानां समन्वयोऽत्र कथ्यत इति तदयुक्तम्। असम्भवादित्यत उक्तम् ॥ **विशेषेति** ॥ ततोऽपि प्रबलहेतुभिरित्यर्थः। यदुदितमत्र समस्तशब्दसमन्वयनिरूपणादवैयर्थ्य-मिति। तदसत्। अंशे वैयर्थ्यादित्य(तो वा)तश्चाऽऽह ॥ **विशेषेति** ॥ प्रागनुक्तहेतुभिरित्यर्थः। स्यादेतत्। न समस्तशब्दसमन्वयोक्तिरुपपन्ना। वैयर्थ्यात्। जन्माद्यस्येत्युक्तजन्मादिकारणत्वे हि शास्त्रं प्रमाणीकृतम्। जन्मादिकारणत्वाभिधायकवाक्यानामेव परमात्मपरत्वं चतुर्थसूत्रे प्रतिज्ञातम् तच्चातीतैः पादैः समर्थितमिति। मैवम्। चतुर्थसूत्रे सर्वशब्दानां परमात्मपरत्वस्य प्रतिज्ञातत्वात्। जन्मादिसूत्रे हि न जन्मादिकारणत्वमात्रं विवक्षितम्। किं तु 'किं तद् ब्रह्म' इत्याकाङ्क्षायां निखिल-गुणपरिपूर्णत्वस्यैव वक्तव्यत्वात्। न हि ब्रह्मशब्दः कतिपयगुणाभिधायकः। जन्मादिकारणत्व-गुणग्रहणं तु तस्याखिलगुणसाधकत्वेनान्योपलक्षणाभिप्रायेणैव। तृतीयसूत्रे च तत्रैव सर्वं शास्त्रं

(तत्त्वप्रकाशिका)

प्रमाणमुक्तम् । कतिपयशब्दानां निखिलगुणाभिधायकत्वायोगादिति ॥ सूत्रमेत्रादौ पठति ॥ **आनुमानिकमिति** ॥ अत्रावरत्वादिलिङ्गैर्भगवति विरुद्धतयाऽन्यत्रैव प्रसिद्धाव्यक्तादिशब्दानां भगवति समन्वयप्रतिपादनादस्ति शास्त्रादिसङ्गतिः । श्रुत्यादिसङ्गतिं विषयादिकं च सूचयन् सौत्रं पूर्वपक्षांशं तावद् व्याचष्टे ॥ **तत्त्विति** ॥ तत्तु समन्वयादिति सूत्रे सर्वशब्दानां परमात्मपरत्वमुक्तम् । सर्वान्तर्गताव्यक्तादिशब्दैश्च काठकादौ किञ्चिदुच्यते । 'महतः परमव्यक्तमव्यक्तात्पुरुषः परः' । 'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्ये तु संयान्ति यथा कर्म यथा श्रुतम्' । 'जीवा एव तु दुःखिनः' इति । तस्याव्यक्तादेर्विष्णोरन्यत्वे न तस्य सर्वशब्दवाच्यतेत्यवश्यनिर्णेयता । तदव्यक्तजीवादिपदवाच्यं विषयः । किं विष्णुरन्यद्वेति सन्देहः । समन्वयसूत्रमन्यत्रैव प्रसिद्धिश्च सन्देहबीजम् । प्रधानाद्येवाव्यक्तादिपदवाच्यं न तु विष्णुरिति पूर्वः पक्षः । अव्यक्तादिशब्दानां प्रधानादावेव प्रसिद्धेः । न च तेषां विष्णावपि सावकाशतेति वाच्यम् । तत्राव्यक्तस्य पुरुषावरत्वश्रवणात् । तच्च प्रधानस्य युक्तं न तु विष्णोः । 'न तत्समश्चाभ्यधिकश्च दृश्यते' इत्यादिप्रमाणविरोधात् । तथाऽव्यक्तस्य महत्परत्वश्रवणात् । तदपि प्रधानस्यैवोपपन्नम् । 'महान्तं च समावृत्य प्रधानं समवस्थितम्' । इत्यादेः विष्णोरव्यक्तादपि परत्वात् । जीवानां च दुःखिबद्धत्वादिप्रतीतेः । तच्च विष्णोः प्रमाणविरुद्धम् । तस्मादव्यक्तादिशब्दवाच्यं प्रधानाद्येव । यत एवं केषाञ्चिच्छाखास्वव्यक्तादिशब्दैः प्रधानाद्येवोच्यतेऽतो यत्तत्तु समन्वयादिति सर्वशब्दानां परमेश्वराभिधायकत्वम् उक्तं तन्न युज्यत इति भावः ।

सिद्धान्तांशं व्याचष्टे ॥ **नेति** ॥ यतः परमात्मैव अव्यक्तादिशब्दवाच्यो न प्रधानादि । अतः परमात्मन एवाव्यक्तादिशब्दवाच्यत्वग्रहणात् यत्सर्वशब्दानां परमात्मपरत्वं न युज्यत इत्युक्तं तन्न इत्यर्थः । यस्मिन्समन्वयः प्रतिज्ञातः तस्यैवेति स्वपदं परमात्मन एवेति व्याख्यातम् । परमात्मन एवाव्यक्तादिशब्दवाच्यत्वे कथं प्रधानादौ तद्व्यवहारः । अवाचकत्वेऽप्यनभिज्ञानादिना व्यवहार इत्युक्तमिति चेन्न । तथा सत्यवाचकत्वाविशेषेण घटादिशब्दानां पटादौ व्यवहारप्रसङ्गादित्याशङ्कानिरासायोक्तं शरीररूपकविन्यस्तेति । तद्व्याचष्टे ॥ **पारतन्त्र्यादिति** ॥ यथा शरीरं पुरुषतन्त्रं तथा परमात्मतन्त्रत्वेन शरीरसमे प्रधानादौ स्थितस्य इत्यर्थः । नन्वत्र पारतन्त्र्याभिप्रायेण प्रधानादेः परमात्मशरीररूपत्वमसूत्रयदिति कुतो ज्ञायते शरीरत्वाभिप्रायेण किं न स्यादित्यत आह ॥ **कप्रत्यय इति** ॥ न प्रधानादेः परमात्मशरीरत्वाभिप्रायेणैतत्पदं प्रायुंक्त सूत्रकारः यावता तत्कप्रत्ययेन कुत्सयामास । न हि कुत्सनार्हं परमात्मशरीरमिति भावः । अन्यथा रूपपदवैयर्थ्याच्च । शरीररूपकविन्यस्तपदं व्याख्याय तदभिप्रायमाह ॥ **परमात्मन एवेति** ॥ यद्यपि परमात्मन एवाव्यक्तादिशब्दा वाचकास्तथापि न प्रधानादौ तद्व्यवहारायोगः । प्रधानादौ परमात्मनो

(तत्त्वप्रकाशिका)

विन्यस्ततया तत्सम्बन्धेन तत्रापि शब्दप्रवृत्तेः । न च वाच्यमुभयोरपि मुख्यवाच्यत्वं विपरीतं वा किं न स्यादिति । प्रधानादेः भगवत्तन्त्रत्वेनोभयोर्मुख्यवाच्यत्वस्योक्तविपर्ययस्य चायोगादिति भावः । तदुक्तं गारुडे । 'एवमेव हि शब्दानां प्रसिद्धिरपि लौकिकी । वाचकत्वं प्रधानस्य त्वितरस्य तदन्वयात्' इति । न च मञ्चादावुक्तव्यभिचारः शङ्कनीयः । समाकर्षादिति वक्ष्यमाण-न्यायस्यात्राभिप्रेतत्वेन लक्षणानाश्रयणादिति । अत्र सर्वत्राव्यक्तपदं जीवाद्युपलक्षणार्थम् । ननु परमात्मन एवाव्यक्तादिशब्दाभिधेयत्वं प्रधानादेस्तु तत्सम्बन्धादेवेति युज्यते यदि प्रधानादेरल्पत्वं परमात्मनः स्वातन्त्र्यं प्रधानादिविन्यस्तत्वं च भवेत्तदेव कुत इत्यत आह ॥ **तुच्छेनेति** ॥ अल्पेनाव्यक्तेन विभुब्रह्मापिहितमासीदित्यर्थः । 'य आत्मनि तिष्ठन्नित्यादिश्रुत्यन्तरं चात्रोदा-हर्तव्यम् । परमात्मनोऽव्यक्तादिशब्दवाच्यत्वे सिद्धे भवेत्प्राचीनचिन्ता । तदेव कुत इत्यतो दर्शयति चेतिशब्दाभ्यां सूचिते श्रुतिस्मृती पठति ॥ **अव्यक्तमिति** ॥ अचलमीश्वरभावात् । शान्तं निर्विकारम् । निष्क्रियम् अक्लिष्टकारित्वादेः । आत्मानमादानादेः । यस्याक्षरस्य ब्रह्मत्वमुक्तं तस्यैवाव्यक्तत्वमुच्यत इत्यर्थः । 'अनेन जीवेनाऽऽत्मना' इत्यादिश्रुतिः 'जीवो विनयिता साक्षी' इत्यादिस्मृतिश्चोदाहर्तव्या ॥

## गुर्वर्थदीपिका

'श्रुतिलिङ्गादिभिः' इत्यत्र श्रुतिः दुःखिबद्धावरादिशब्दश्रवणम् । 'निरनिष्टो निरवद्य' इत्यादिश्रुतिश्च । दुःखिबद्धावरादिपदप्रतिपाद्यदुःखवत्त्वादिलिङ्गं परत्वावधितया प्राप्तमवर-त्वाख्यलिङ्गं च । आदिपदेन रूढिप्रकरणादिकं गृह्यते । अंशे वैयर्थ्यादित्यस्य पादत्रये प्राक् समन्वितनामलिङ्गात्मकशब्दांशे पुनः समन्वयकथनस्य वैयर्थ्यादित्यर्थः । प्रागनुक्तहेतुभि-रित्यत्राज्ञरूढितो विद्वद्रूढिसहितमहायोगप्राबल्यस्य 'तं शतं वर्षाण्यभ्यार्चत्' इत्यादिप्रबल-श्रुत्याख्यप्रमाणोपादानेन 'ता वा एताः सर्वा ऋचः' इति कैमुत्येन भगवतः सकलवेदार्थत्व-प्रतिपादकश्रुत्युपादानेन च पादत्रयार्थेऽप्युपकारिणः सूत्रकृतैवोपात्तत्वादयो विशेषहेतव इत्यर्थः । जन्मादिकारणत्वगुणग्रहणमित्यस्य ब्रह्म सकलगुणपूर्णं भवितुमर्हति जन्मादिकारणत्वात् व्यतिरेकेण देवदत्तवदित्यस्यासम्भावनापरिहारहेतुत्वेन साक्षादुपलक्षणतया द्वितीयसूत्रे सकलगुणपूर्णत्वस्याप्यभिप्रेतत्वात्तृतीयसूत्रेऽपि जन्मादिकारणत्वे अखिलगुणपूर्णत्वे च शास्त्रं प्रमाणीकृतम् । तदेव चतुर्थसूत्रे समर्थितम् । अतश्चतुर्थपादार्थोऽपि प्राक्प्रतिज्ञात एवेति नासङ्गतिरित्यर्थः । लक्षणानाश्रयणादिति' परममुख्यवृत्तिः परमात्मनि अवान्तरमुख्यवृत्तिः

(गुर्वर्थदीपिका)
प्रधानादाविति मुख्यवृत्तावेव द्वैविध्यं लक्षणादिरूपाऽमुख्यवृत्तिस्त्वन्यैवेति च सूचितम् । आ समन्ताद्भवनशीलत्वादाभु इति श्रौतस्याऽऽभुपदस्यार्थकथनं विभ्विति । रामः समागतो लक्ष्मणश्चेत्यादौ समागत इति क्रियावृत्तिवत् चशब्देन श्रुत्यन्तरं स्मृतिं चेति समुच्चये कृतं दर्शयतीति क्रियाया आवृत्तेरावश्यकत्वादेतत्समानार्थकश्रुतिस्मृत्योरेव लाभ इति भावेनाह दर्शयति चेतिशब्दाभ्यां सूचित इति ।

## भावबोधः

**प्रागनुक्तहेतुभिरिति** ॥ 'तदधीनत्वादर्थवत्' इति । 'तथा ह्यधीयत एके' इत्यादि-प्रागनुक्तहेतुभिरित्यर्थः ।

जन्माद्यस्येति सूत्रेण गुणसर्वस्वसिद्धये ।
ब्रह्मणो लक्षणं प्रोक्तं शास्त्रमूलं यतस्ततः ।
अन्वयः सर्वशब्दानां गुणसर्वस्ववेदकः ॥
शब्दप्रवृत्तिहेतूनां तस्मिन् मुख्यसमन्वयात् ॥

इत्यनुव्याख्यानं मनसि निधायाऽऽह– **चतुर्थसूत्रेऽपीत्यादि** ॥ **गुणपरिपूर्णत्वस्यैवेति** ॥ किं तद्ब्रह्मेति लक्षणाकाङ्क्षायां जिज्ञास्ये प्रयुक्तब्रह्मनिर्वचनलभ्यानन्तगुणपरिपूर्णत्वमेव लक्षणत्वेन वक्तव्यम्; न तु जन्मादिकारणत्वमात्रमिति भावः । एवं सति यथाश्रुतसूत्रानुपपत्तिरित्यतस्तत्तात्पर्यमाह– **जन्मादिकारणत्वगुणग्रहणं त्विति** ॥ सूत्रे गुणान्तरपरित्यागेन जन्मादिकारणत्वस्यैवोपलक्षकत्वेनोपादाने किं निमित्तमित्याशङ्कापरिहारार्थमुक्तम्; **तस्याखिलगुणसाधकत्वेनेति** ॥ एतच्च 'जन्माद्यस्य यत' इति सूत्रस्यान्तःसमुद्रगमित्याद्यनुव्याख्यानकृतव्याख्यानान्तरानुसारेणेति द्रष्टव्यम् ॥ **श्रुत्यादिसङ्गतिमिति** ॥ अव्यवहितपूर्वाधिकरणसङ्गतिस्तु वर्णशून्ये विष्णौ ब्राह्मणशब्दवाच्यत्वासम्भव इति समन्वेतव्यशब्दानुपपत्त्या पूर्वाधिकरणपूर्वपक्षवदत्रापि विष्णौ सर्वप्रमाणविरुद्धावरत्वदुःखित्वादिप्राप्त्या श्रौताव्यक्तादिशब्दवाच्यत्वासम्भव इति समन्वेतव्यशब्दानुपपत्त्यैव पूर्वपक्षकरणादिति ज्ञातव्यम् । 'दुःखिबद्धावराद्यास्तु' इत्यनुव्याख्यानेनाव्यक्तादिशब्दानामिति न्यायविवरणानुसारेण भाष्यमुपलक्षणपरमित्यभिप्रेत्याह– **योनिमन्ये प्रपद्यन्त इत्यादि** ॥ अत एव वक्ष्यति अत्र सर्वत्राव्यक्तपदं जीवाद्युप-

(भावबोधः)
लक्षणार्थमिति ॥ **किं विष्णुरिति** ॥ अत्र 'अव्यक्तात् पुरुषः परः' 'जीवा एव तु दुःखिनः' इत्यादिवाक्यगताव्यक्तादिर्जीवादिशब्दमुख्यार्थः किं प्रधानादिरुत विष्णुरिति चिन्ता । तदर्थं शब्दमुख्यार्थत्वसाधकं लोकप्रसिद्ध्यादिकमुत प्रमितशक्तिमूलकप्रयोगप्रवृत्तिनिमित्तातिशयो वेति । तदर्थमुभयबलाद् विष्णोः श्रौताव्यक्तादिशब्दमुख्यार्थत्वाङ्गीकारे प्रमाणविरुद्धावरत्व-दुःखित्वादिकं किं प्राप्नोत्युत न प्राप्नोतीति । तदर्थमनाद्यनन्तमित्यादिमोक्षार्थज्ञेयत्ववचनं किं प्रधानपरमुत विष्णुपरमिति तदर्थं शब्दमुख्यार्थत्वप्रयोजकं किं तत्प्रवृत्तिनिमित्ताधिकरणत्वमेवोत तन्नियामकत्वमपीति । तदर्थं शब्दप्रवृत्तिनिमित्तनियामकत्वेन तच्छब्दार्थमुख्यार्थत्वे प्रमाणं नास्त्युतास्तीति । तथा प्रसिद्ध्यादिना प्रधानस्य श्रौताव्यक्तशब्दवाच्यत्वाङ्गीकारे बाधकं नास्त्युतास्तीति । तदर्थम् 'अन्या वाचो विमुञ्चथ' इति मोक्षार्थं ज्ञेयत्वनिषेधविषयत्वं किं प्रधानस्य नास्त्युतास्तीति । तदर्थं महतः परत्वरूपप्रधानलिङ्गं किं विष्णावनवकाशमुत सावकाशमिति । तदर्थम् ''अनाद्यनन्तम्'' इति वाक्यस्य विष्णुपरत्वनिश्चायकं नास्त्युता-स्तीति । न तत्समश्चाभ्यधिकश्च दृश्यत इत्यादिप्रमाणाविरोधात् तच्च विष्णोः प्रमाण-विरुद्धत्वमिति वाक्यद्वयेनाव्यक्तादिशब्दानां परमात्मविषयत्वाङ्गीकारे सर्वमानविरोध इति न्यायविवरणमुक्ततात्पर्यमिति ज्ञातव्यम् ॥ **प्रधानाद्येवोच्यत इति** ॥ अनेन सूत्रभाष्ययोः अपि शब्दो अवधारणार्थक इत्युक्तं भवति । परमेश्वराभिधायकत्वमिति समन्वय उक्तस्तन्न युज्यत इति भाष्ये लिङ्गव्यत्यासः परिहृतो भवति ।

यतोऽतःशब्दावध्याहृतपरमात्मन एव अव्यक्तशब्द इति भाष्यं परमात्मन एवाव्यक्तशब्देन गृहीतेरित्यनेनापि सम्बध्यत इति तद्वाक्यद्वयं व्याचष्टे– **यतः परमात्मैवेत्यादिना** ॥ परमात्मैवेत्यनन्तरं सर्वश्रुत्यादिष्विति परमात्मन एवेत्यनन्तरम् अव्यक्तात् पुरुषः पर इति वाक्य इति च द्रष्टव्यम् ॥ **रूपपदवैयर्थ्यादिति** ॥ शरीरस्य रूपमिव रूपं यस्येति विग्रहबलेन शरीर-पदोक्तप्रधानादेरमुख्यशरीरत्वप्रतिपादकरूपपदवैयर्थ्यादित्यर्थः । **न च मञ्चादावुक्तव्यभिचार इति** ॥ प्रधानादेः भगवत्तन्त्रत्वेनेत्यत्र शब्दामुख्यार्थत्वसाधकत्वेन यत्परतन्त्रत्वमुक्तं तस्य 'मञ्चाः क्रोशन्ति' 'मार्गाश्चलन्ति' इत्यादि प्रयोगस्थमञ्चादिशब्दमुख्यार्थे मञ्चादौ पुरुष-तन्त्रत्वेन पारतन्त्र्ये विद्यमानेऽपि मञ्चादिशब्दामुख्यार्थत्वाभावाद् व्यभिचार इति नाशङ्क्य-मित्यर्थः ॥ **लक्षणानाश्रयणादिति** ॥ "प्रधानादौ पारतन्त्र्येणाव्यक्तादिशब्दलक्ष्यार्थत्वं न

(भावबोधः)
साधितम् । येन व्यभिचारः स्यात् । किन्तु शक्यत्व एव हीनशक्तिविषयत्वं साधितम् । तच्च मन्त्रशब्दहीनशक्तिविषयत्वमस्तीति न व्यभिचार इति भावः ।

यद्वा एकपदयोर्वाक्ययोर्मध्ये यस्यैकस्यापरार्थाधीनत्वं तदपेक्षया तस्यामुख्यत्वमिति वक्ष्यमाणन्यायस्य प्रधानादेर्भगवत्तन्त्रत्वेनेत्यत्राभिप्रेतत्वेन प्रधानादावव्यक्तशब्दलक्षणानाश्रयणात् । तथा च मश्वादिशब्दवाच्येश्वराधीनमश्वादौ तदपेक्षयाऽमुख्यार्थत्वरूपस्य साध्यस्य सत्त्वेन मश्वादेस्तत्स्थपुरुषतन्त्रत्वेऽपि पुरुषादेर्मश्वादिशब्दवाच्यत्वाभावेन हेत्वभावान्न मश्वादौ व्यभिचार इति भावः ।

अथ वा भगवत्तन्त्रत्वेनेत्यनेन शब्दस्यामुख्यवृत्तौ निमित्तत्वेनोक्तपरतन्त्रत्वस्य पुरुषतन्त्रे मश्वे सत्त्वेऽपि मश्वशब्दाऽमुख्यवृत्तेरभावात् आदिपदोक्तमश्वातन्त्रे पुरुषे मश्वशब्दाऽमुख्यवृत्तेर्दर्शनात् । अन्वयतो व्यतिरेकतश्च व्यभिचार इति नाशङ्क्यमिति– न च मश्वादाविति वाक्यार्थः । यतो भगवत्तन्त्रत्वेनेत्यत्र परतन्त्रत्वं लक्षणावृत्तौ न निमित्तत्वेनोक्तम् । किन्तु अभिधावृत्तावेव हीनशक्तौ निमित्तत्वेनोक्तमित्युत्तरवाक्यार्थः ॥ **अल्पत्वमिति** ॥ परतन्त्रत्वमित्यर्थः । उदाहरिष्यमाणश्रुतिगतपदार्थत्वेनैवमुक्तम् । श्रुत्यन्तरं चोदाहर्तव्यमिति जीवादिविन्यस्तत्वादिप्रतिपादार्थमिति ज्ञातव्यम् । एवमनेन जीवेनेत्यादिश्रुत्याद्युदाहरणस्य प्रयोजनं द्रष्टव्यम् ।

## भावदीपः

पूर्ववत्कृत्स्नपादार्था(र्थत्वा)प्रतीतेराह ॥ **एतदिति** ॥ अत्रैतत्समन्वये का सङ्गतिरित्यत आनन्दमयनये प्रागुक्तं स्मारयति ॥ **अन्यत्रेति** ॥ भाष्ये शब्दपदं नामलिङ्गपरमित्युपेत्याऽऽह ॥ **उभयविधेति** ॥ श्रुतिलिङ्गादिभिरित्यस्योपयोगं वक्तुमाह ॥ **नन्विति** ॥ **पूर्वं क्वचिदिति** ॥ द्वितीयपाद इत्यर्थः ॥ **प्राबल्यादिति** ॥ श्रुतेरर्थान्तरपरत्वमपि विनाऽनुपपद्यमानत्वरूपात्प्रबल्यादित्यर्थः । तादृशश्रुत्यादिकं च प्रतिनयं दर्शयिष्याम इति भावः । **सामस्त्येनेत्येतद्** व्याचष्टे ॥ **पूर्वमिति** ॥ त्रिपाद्यामित्यर्थः ॥ **स्पष्टत्वेति** ॥ जन्मादिसूत्रे कण्ठोक्तेरित्यर्थः ॥ **तत्सङ्गतानां चेति** ॥ आनन्दमयाकाशादिशब्दानामित्यर्थः ॥ **ततोऽपि प्रबलेति** ॥ विष्णुपरत्वं विनाऽनुपपद्यमानैस्तदधीनत्वज्ञेयत्वावचनादिभिरित्यर्थः । विशेषहेतुभिरित्येतत्प्रकारान्तरेण व्याचष्टे ॥ **यदुदितमिति** ॥ **प्रागनुक्तेति** ॥ तदधीनत्वादिभिरित्यर्थः । तदधीनत्वादित्युक्तिः

(भावदीपः)

सूत्रकृताऽत्रोक्तैव भाष्यादौ पूर्वमुक्तेति भावः । तत्त्वित्याद्यग्रेतनभाष्योपपत्तिं जन्माद्यस्येति सूत्रेण गुणसर्वस्वसिद्धये इत्याद्यानन्दमयनयानुभाष्यदिशा वक्तुमाह ॥ **स्यादेतदिति** ॥ **न हीति** ॥ सङ्कोचकाभावादिति भावः । अन्योपलक्षकत्वेनोक्तौ बीजमाह ॥ **तस्याखिलगुणेति** ॥ पूर्वत्रैव सङ्गतिभाष्यभ्रान्तिनिरासायाऽऽह ॥ **सूत्रमेवेति** ॥ **अवरत्वादीति** ॥ दुःखित्वादि-रादिपदार्थः । तस्य प्राबल्यायोक्तं भगवति विरुद्धतयेति ॥ **श्रुत्यादीति** ॥ समन्वयसूत्रे सर्वश्रुतिगतसर्वशब्दार्थत्वोक्त्या तदधिकरणेन तद्विषयभूतसर्वश्रुतिनिचयेन च सङ्गतिमित्यर्थः । उच्यत इत्यन्तं भाष्यं सङ्गतिसूचकत्वेन तावद् व्याख्यातुम् उक्त इत्यन्तस्यार्थमाह ॥ **तच्चि-त्यादिना** ॥ तत्रेत्यादेरर्थः सर्वेत्यादि ॥ **अव्यक्तादीति** ॥ दुःखिवद्धावरादिदोषवाचिनः सर्वेऽपि शब्दा आदिपदार्थाः । उक्तं चानुभाष्ये ॥ **दुःखिवद्धावराद्यास्त्विति** ॥ पूर्वपक्षे युक्तिसूचनाय महतः परमित्यंशोक्तिः । सूत्रभाष्ये उपलक्षणं मत्त्वाऽऽह ॥ **योनिमिति** ॥ अनेन बद्धत्वमुच्यते ॥ **जीवा इति** ॥ 'अदुःखमितरत् सर्वं जीवा एव तु दुःखिनः । तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तत' इति श्रुतौ किञ्चिदुच्यत इत्यर्थः । विष्णोरन्यत्वे वक्ष्यमाणादि-शेति भावः । उक्त इत्यन्तवाक्यस्य भावोक्तिः ॥ **न तस्येति** ॥ इति सङ्गतिसम्भवादितीति शब्दो हेत्वर्थः । एवमव्यक्तादिशब्दास्सर्वेऽन्यत्र प्रसिद्धा अपीति वक्ष्यमाणभाष्यानुरोधेन विषयादिकमाह ॥ **तदव्यक्तेति** ॥ तत्रेत्यादिभाष्यं पूर्वपक्षादिपरत्वेनापि व्याख्यातुं प्रधान-मप्युच्यत इति प्रतिज्ञामुपलक्षणत्वेन व्याचष्टे ॥ **प्रधानाद्येवेति** ॥ एतेनापिरेवार्थ इति दर्शितम् । तत्र हेत्वाकाङ्क्षायां वक्ष्यमाणभाष्यसूचितां युक्तिमाह ॥ **अव्यक्तेति** ॥ अव्यक्तादिशब्दानां परमात्मविषयत्वाङ्गीकारे सर्वमानविरोध इति न्यायविवरणमत्र योजयितुं शङ्कामाह ॥ **न चेति** ॥ नामपादीयन्यायेनेति भावः । 'महतः परं ध्रुवम्' इत्याद्यग्रेतनभाष्यलब्धां युक्तिमाह ॥ **तथाऽव्यक्तस्येति** ॥ महान्तं महत्तत्त्वम् । इत्येकादशगीताभाष्योक्तस्मृतेरित्यर्थः ॥ **विष्णो-रिति** ॥ अदृश्यत्वनये तथा निर्णयादिति भावः । न्यायविवणस्थादिपदार्थं व्यञ्जयन् तत्रापि मानविरोधयुक्तिमाह ॥ **जीवानामिति** ॥ **तच्चेति** ॥ दुःखित्वादिकं निरनिष्टो निरवद्य इत्यादिप्रमाणविरुद्धमित्यर्थः ।

ननु भाष्ये प्रधानमप्युच्यत इति प्रतिज्ञामात्रं श्रूयते न तूक्तहेतुवाचि किमपीत्यतः तत्रेत्यत्र तच्छब्दः पञ्चम्यन्ततया इहाप्युक्तसर्वहेतुपरामर्शितयाऽन्वेतीति भावेनाऽऽह ॥ **तस्मादिति** ॥

(भावदीपः)

अव्यक्तादिशब्दानां प्रधानादौ प्रसिद्धत्वात् अक्षरत्वादीनां श्रुतानामपि तत्परत्वे प्रमाणाविरोधाच्चेत्यर्थः । एवं सानुषङ्गप्रतिज्ञांशं व्याख्याय समग्रभाष्यं यत इत्याद्युक्त्या अतो यदित्यध्याहृत्य योजयति ॥ **यत एवमिति** ॥ उपक्रमादिलिङ्गकशक्तितात्पर्यावधारणरूपसमन्वयस्य तत्रोक्तिराह ॥ **परमेश्वरेति** ॥ भाष्ये तत्रेति समन्वयशब्दाभिमतस्य परमेश्वरवाचित्वपरामर्श इति भावः ॥ परमात्मन एवाव्यक्तशब्देन गृहीतरित्येतत् नेत्यत्र हेत्वाकाङ्क्षापूरकं मत्वा हेतोरसिद्धिनिरासायाऽनुवादलब्धविधेयमाह ॥ **परमात्मैवेति** ॥ अत इत्यस्यैवार्थः परमात्मन एवेत्यादि । नेत्यत्र प्रतियोग्यपेक्षायां तन्न युज्यत इत्येतदन्वेतीत्याशयेनाऽऽह ॥ **यत्सर्वेति** ॥ सूत्रेऽदर्शनादाह ॥ **स्वपदमिति** ॥ तस्यार्थो यस्मिन्नित्यादि । अपौनरुक्त्यायाऽऽह ॥ **इति व्याख्यातमिति** ॥ परमात्मन एवेत्यादिभाष्ये तात्पर्योक्त्यनुरोधेन सूत्रांशमवतारयति ॥ **परमात्मन एवेति** ॥ साक्षादप्यविरोधं जैमिनिरित्यनेन गतार्थत्वमाशङ्क्य निराह ॥ **अवाचकत्वेऽपीति** ॥ **शरीरसम इति** ॥ रूपशब्दः समार्थ इति दर्शितम् । प्रायुङ्क्त प्रयुक्तवान् । प्रोपाभ्यां युजेरयज्ञपात्रेष्वित्यात्मनेपदम् । अन्यथा मुख्यशरीरत्वे शरीरविन्यस्तेत्येव सामञ्जस्यात् । अस्मत्पक्षे तु शरीरस्य रूपमिव रूपं यस्येति विग्रहसूचनार्थत्वेन सार्थक्यादिति भावः । पुनरुक्तिप्रतीतिराह ॥ **शरीरेति** ॥ अनेन भाष्येण प्रागुक्तशङ्कानिरासप्रकारं दर्शयति ॥ **यद्यपीत्यादिना** ॥ **विपरीतं वेति** ॥ प्रधानसम्बन्धाच्छब्दवृत्तिरिति ॥ एवमित्युक्तं व्यनक्ति ॥ **वाचकत्वमिति** ॥ प्रधानस्य स्वतन्त्रस्य हरेः । कर्मणि षष्ठी । इतरस्य जगतः । वाचकत्वं शब्दानां तदन्वयात् । प्रधानहरिसम्बन्धादित्यर्थः ॥ **न च मञ्चादाविति** ॥ पारतन्त्र्यादमुख्यत्वमिति व्यभिचरितं मञ्चशब्दस्य अमुख्यार्थत्वदर्शनादिति न शङ्क्यमित्यर्थः । समाकर्षादित्यत्र परममुख्यमुख्यवृत्तिभेदेन वृत्तितारतम्यस्य मुख्यवृत्तावेव वक्ष्यमाणत्वेनेहापि हरौ परममुख्यत्वं तत्सम्बन्धात्प्रधानादौ मुख्यत्वं न लक्षणावृत्तिरिति मुख्यवृत्तावेव हीनत्वे प्रवृत्तिनिमित्तपारतन्त्र्यं हेतुः न लक्षणायामित्यभिमतत्वेन पारतन्त्र्याभावेऽपि मञ्चादिशब्दे लक्षणायासम्भवादित्यर्थः । अव्यक्तादीत्यग्रे भाषणादाह ॥ **अत्रेति** ॥ अधिकरण इत्यर्थः । सर्वत्र सूत्रेषु भाष्ये चेत्यर्थः । अल्पत्वं पारतन्त्र्यमित्यर्थः । तुच्छेनेत्यस्यार्थोऽल्पेनेति । परतन्त्रेणेत्यर्थः । अव्यक्तेनेति विशेष्यम् । अनेन प्रधानस्य पारतन्त्र्यं हरेस्तत्र स्थितत्वं च सिद्धमिति भावः ।

(भावदीपः)

जीवस्य अस्वातन्त्र्ये हरेर्जीवविन्यस्तत्वे च अन्तर्यामिनये ब्रह्मपरत्वेन सिद्धश्रुत्यन्तरमाह ॥ **य आत्मनीति** ॥ **प्राचीनेति** ॥ अव्यक्तशब्दवाच्यभगवत्सम्बन्धादन्यत्र शब्दवृत्तिविचार इत्यर्थः । निष्क्रियमित्यनेनापौनरुक्त्यायाऽऽह । अचलमीश्वरभावादिति ॥ **अक्लिष्टेति** ॥ अकर्माक्लिष्टकारित्वात् इत्येकादशस्कन्धतात्पर्योक्तेरिति भावः । प्राकृतादिक्रियाराहित्यमादि-पदार्थः । अन्यभावव्यावृत्तेरित्युक्तेः । निष्कलं प्राकृतषोडशकलारहितमिति स्पष्टमिति भावः । स्वात्मानमिति भ्रमनिरासायाऽऽह ॥ **आत्मानमिति** ॥ भाष्ये इत्युक्त्वेत्यन्तोक्तेरुपयोगायार्थमाह ॥ **यस्येति** ॥ **उक्तमिति** ॥ गीतायामष्टमेऽध्याये उक्तमित्यर्थः । जीवशब्दवाच्यत्वेऽपि श्रुति-स्मृती आह ॥ **अनेनेति** ॥ छान्दोग्ये षष्ठे श्रुतेयं श्रुतिः । तत्र जीवशब्दस्य ईशपरत्वं चेमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीत्यादौ जीवानु-प्रवेशात्पूर्वमेव देवतापदप्रयोगेण चेतनत्वावगमेन पुनर्जीवप्रवेशोक्तेः वैय्यर्थ्येन जीवाख्या-निरुद्धरूपात्मना भगवत एवानुप्रवेश इति तत्वनिर्णयछान्दोग्यभाष्यादौ व्यक्तमिति भावः ॥ **जीव इति** ॥ सहस्रनामसु ॥

## अभिनवचन्द्रिका

**एतत्पादप्रतिपाद्यमिति** ॥ 'अध्यायस्यैकार्थत्वात् पादभेदः किं निबन्धन इत्यतः समन्वयेऽप्यवान्तरभेदेनेति भावेन' ति वर्तते । तस्य 'एतत्पादप्रतिपाद्यं दर्शयति' इत्यनेन सम्बन्धः । **किं तद्ब्रह्मेत्याकाङ्क्षायामिति** ॥ तद्विजिज्ञासस्व तद्ब्रह्म इति वाक्ये ब्रह्मशब्देन किमुच्यत इति ब्रह्मशब्दार्थाकाङ्क्षायामित्यर्थः । एनेन 'ब्रह्मलक्षणजिज्ञासानिवृत्तेः यत्किञ्चि-ल्लक्षणोक्त्यैव कृतत्वात् 'निखिलगुणपूर्णत्वस्यैव वक्तव्यत्वात्' इति निर्बन्धोऽनुपपन्नः । तथा च 'ब्रह्मशब्दः कतिपयगुणाभिधायको न' इत्यनुपपन्नं ब्रह्मशब्दस्य सर्वगुणाभिधायकत्वेऽपि कतिपयगुणानां ब्रह्मणो लक्षणत्वाऽनपायात्' इति परास्तम् । ननु यदीदं सूत्रं ब्रह्मशब्दार्थ-निरूपणपरं, कथं तर्हि जन्मादिकारणत्वस्यैव ग्रहणमित्यत आह– **जन्मादीति** ॥ जन्मादि-कारणत्वगुणग्रहणन्तु अन्योपलक्षणाभिप्रायेणैवेति सम्बन्धः । गुणान्तरमेव अन्योपलक्षणत्वेन कुतो नोपात्तमित्यत उक्तं– **तस्याखिलेति** ॥ अस्मिन् गुणे विशेषसद्भावादिदमेवोपात्तमिति भावः । **तृतीयसूत्रे चेति** ॥ तत्रैव गुणपूर्तावेव । सर्वशास्त्रं=सर्वे वेदाः, सर्ववेदान्तर्गतपदानि च प्रमाणत्वेनोक्तानीत्यर्थः । न च पदानामप्रमाणत्वेन प्रमाणत्वेनोपन्यासो न युक्त इति वाच्यम् । यौगिकपदानां वाक्यतुल्यत्वेन प्रमाणत्वात् ।

(अभिनवचन्द्रिका)

एतेन तृतीयसूत्रे शास्त्रस्य प्रमाणत्वेन प्रतिज्ञातत्वेऽपि स्वरवर्णपदात्मकानां समस्तशब्दानां प्रमाणत्वेनाप्रतिज्ञातत्वात् तेषां समन्वयनिरूपणमयुक्तमिति परास्तम् । स्वरवर्णपदात्मकानामपि शब्दानाम् अधिकारिविशेषं प्रति योगेनार्थबोधकत्वेन तेषां प्रमाणत्वेन प्रतिज्ञानात् । **काठकादौ किञ्चिदुच्यत इति** ॥ अनेन समन्वयसूत्रप्रतिपाद्यशब्दराश्यन्तर्गतप्रधानादिशब्दप्रति- पादकत्व-मस्याधिकरणस्य तेनाऽधिकरणेन सङ्गतिरित्युक्तं भवति ॥ **तस्याव्यक्तादेरिति** ॥ परममुख्यया वृत्त्या अव्यक्तादिशब्दवाच्यस्य विष्णोरन्यत्वे, विष्णोः परममुख्यया वृत्त्या सर्वशब्दवाच्यत्वं न स्यादित्यर्थः ॥ **केषाञ्चिच्छाखास्विति** ॥ अनेन सूत्रे 'एकेषाम्' इत्यतः परं शाखास्विति शेषो बोध्यः । भाष्येऽपि 'शाखिनाम्' इत्यतः परं शाखास्विति शेषो बोध्य इति सूचितमिति बोध्यम् । नन्वत्र भाष्यं 'तस्यैव पारतन्त्र्याच्छरीररूपकेऽव्यक्ते विन्यस्तस्य परमात्मन एवाव्यक्तशब्देन गृहीतेः' इति तदयुक्तमिवाभाति । अव्यक्तशब्दस्यान्यत्रैव प्रसिद्धत्वात् अत्राव्यक्तशब्देनान्यदेव ग्राह्यम्, न तु विष्णुरित्याक्षेपे तत्परिहाराय हेतुमनुपन्यस्य 'परमात्मन एव गृहीतेः' इत्युक्त्ययोगादित्यतः तद्व्याख्याति – **यतः परमात्मैवेति** ॥ **कथं प्रधानादाविति** ॥ वाच्य इव अव्यक्तादिशब्दनां प्रधानादौ सार्वजनीनो व्यवहार इत्यर्थः । एतेनावाच्येऽपि तीरादौ गङ्गाशब्दप्रयोगदर्शनात् कथमित्याक्षेप एवायमनुपपन्न इति परास्तम् । **अवाचकत्वेऽपीति** ॥ अव्यक्तादिशब्दानामव्यक्ताद्यवाचकत्वेऽपि पामराणामव्यक्ताद्यनभिज्ञानादिप्रसङ्गभिया प्राज्ञैरव्यक्तादि ज्ञानतद्व्यवहारसिध्यर्थं तत्र प्रयोगः क्रियते । तत्प्रयोगेण च पामराणां शक्तिभ्रमो भवति । तेन च प्रयोगः इत्युक्तप्रायमित्यर्थः ॥ **तथा सतीति** ॥ घटादिशब्दानां घटवाचकत्वं, पटावाचकत्वमिति विशेषाभावेन निरङ्कुशत्वात् प्राज्ञानां घटादावेव घटादिशब्दव्यवहार इति नियमो न स्यात् । किंतु कस्यचित् प्राज्ञस्य पटेऽपि घटशब्दव्यवहारः स्यात्, नियामक-विशेषमन्तरा अनेकेषामैकमत्यासम्भवात् । तथा च तन्मूलकाज्ञव्यवहारस्यापि अनियमः स्यादित्यर्थः । एतेन अवाचकत्वस्यान्यत्र व्यवहारमूलत्वाभावेन अवाचकत्वाविशेषात् घटादि-शब्दानां पटादौ व्यवहारः स्यादित्यापादनमयुक्तमिति परास्तम् ।

ननु शरीररूपकेत्युक्त्या कथं घटादिशब्दानां पटादौ व्यवहारप्रसङ्गपरिहार इत्यत आह – **तदभिप्रायमाहेति** ॥ **तथापीति** ॥ तत्तद्भगवद्रूपसम्बन्धेन तच्छरीररूपकाणां घटादीनां घटादि-शब्दवाच्यतया, न प्राज्ञव्यवहारस्य निरङ्कुशत्वम् । तथा च न पामरव्यवहाराणामव्यवस्थाप्रसङ्ग

(अभिनवचन्द्रिका)

इति भावः । यद्यपि सर्वान्तर्गतभगवद्रूपाणां सर्वशब्दवाच्यत्वमस्ति, तथापि ईश्वरसङ्कल्पवशात् दशरथकुमारस्य रामत्वं, वसुदेवकुमारस्य कृष्णत्वमित्यादिव्यवस्थावत्, अव्यक्तान्तर्गतस्य अव्यक्तशब्दवाच्यत्वं, घटान्तर्गतस्य घटशब्दवाच्यत्वमिति व्यवस्थासद्भावात् न घटादिषु अव्यक्तशब्दव्यवहारप्रसङ्ग इति बोध्यम् । ननु मञ्चादौ सत्यपि भगवत्तन्त्रत्वे मञ्चशब्द-लक्ष्यत्वाभावात्, यच्छब्दवाच्याधीनं यद्वस्तु तत् तच्छब्दलक्ष्यमित्युक्तनियमस्य व्यभिचार इत्यत आह– **न च मञ्चादाविति** ।। कुतो न शङ्कनीयमित्यत आह– **समाकर्पादिति** ।। स्यादिदं व्यभिचारशोधनं यदि यत्प्रवृत्तिनिमित्तं यदधीनं न तत् तच्छब्दवाच्यम् । अपि तु लक्ष्यमेवेति ब्रूमः । न चैवं, किं नाम यत्प्रवृत्तिनिमित्तं यदधीनं न तत् तत्समकक्ष्यतया तच्छब्दवाच्यमिति । न च एवं सति मञ्चादौ व्यभिचारो भवति, तत्र भगवत्तन्त्रत्वमिव तत्समकक्ष्यतया तच्छब्द-वाच्यताऽभावस्यापि सत्त्वादिति भावः । घटादाविति वक्तव्ये मञ्चादावित्युक्तिः मञ्चशब्दस्यापि मञ्चे लक्षणैवेति न व्यभिचार इति शङ्कानुदयार्था । तथाहि – यदि मञ्चशब्दस्य मञ्चे लक्षणा स्यात् तर्हि मञ्चशब्दात् पुरुषमञ्चप्रतीत्योरविशेषः स्यात् । न चैवं तस्मान्मञ्चशब्दस्य मञ्चे शक्तिः पुरुषे लक्षणेति बाधकतर्कसद्भावात् शङ्कानुदयः । घटादावित्यभिधाने तु घटशब्दस्यापि घटे लक्षणेति शङ्का स्यादेव । न च तत्र घटशब्दात् घटवल्मीकप्रतीत्योरविशेषप्रसङ्ग इति बाधकमुद्रेति । घटशब्दस्य घटे रूढिलक्षणा । वल्मीके तु लक्षणामात्रमिति परिहारसम्भवात् । न चायं परिहारो मञ्चशब्देऽपि भवति । मञ्चशब्दस्य पुरुषे रूढलक्षणया प्रवृत्तत्वादिति । न्यायविवरणे 'अव्यक्तादिशब्दानाम्' इत्यभिधानात् भाष्ये एकस्यैवाव्यक्तशब्दस्य समन्वतव्य-त्वाभिधानमयुक्तमित्यत आह– **अत्र सर्वत्रेति** ।। ननु भाष्ये 'अव्यक्तोऽक्षर उच्यते' इति वाक्योदाहरणेन नार्थः, अनेन वाक्येनाक्षरस्याव्यक्तत्वसिद्धावपि ब्रह्मणस्तदसिद्धेरित्यत आह– **यस्येति** ।। 'अक्षरं ब्रह्म परमम्' इति पूर्ववाक्ये यस्याक्षरस्य ब्रह्मत्वमुक्तं तस्यैवाक्षरस्य 'अव्यक्तोऽक्षर उच्यत' इति वाक्येनाऽव्यक्तत्वमुच्यत इति एतद्वाक्योदाहरणस्य अर्थः प्रयोजनमस्तीत्यर्थः ।

## वाक्यार्थमुक्तावली

जन्माद्यस्येति सूत्रेण गुणसर्वस्वसिद्धये ।
ब्रह्मणो लक्षणं प्रोक्तं शास्त्रमूलं यतस्ततः ।।

(वाक्यार्थमुक्तावली)

इत्याद्यनुव्याख्यानं मनसि निधाय परिहारमाह ॥ **चतुर्थसूत्र इत्यादिना** ॥ किं तद्ब्रह्मेति ब्रह्मशब्देन जिज्ञास्यस्य जीवत्वापवादे कृते तज्जिज्ञास्यं ब्रह्म कीदृशमिति लक्षणाकाङ्क्षया-मन्तरङ्ग ब्रह्मशब्दप्रवृत्तिनिमित्तगुणपूर्णत्वस्यैव लक्षणत्वेन वक्तव्यत्वादित्यर्थः । गुणान्तर-परित्यागेन जन्मादिकारणत्वस्य मुखत उपादानं किमर्थमित्यत उक्तं निखिलगुणसाधकत्वे-नेति ॥ अयोगादित्यतः परं चतुर्थसूत्रे समन्वयमुक्त्वेन, गुणपूर्त्युक्त्यर्थं सर्वशब्दसमन्वयः प्रतिज्ञातः त्रिपाद्यां जन्मादिसूत्रोक्तकतिपयगुणपरबहवः शब्दाः समन्विताः । इह तु ब्रह्म-शब्दार्थभूतगुणसर्वस्वसिद्धये स्वरवर्णपदात्मकाः सर्वशब्दाः समन्वीयन्त इति सार्थकोऽयं पाद इति पूरणीयम् ।

ॐ आनुमानिकमप्येकेषामिति चेन्न, शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॐ ॥ **सूत्र-मेवेति** ॥ **सङ्गत्यादिजिज्ञासाजननायेत्यर्थः** ॥ **श्रुत्यादिसङ्गतिमिति** ॥ अव्यवहितसङ्गतिस्तु, नाव्यक्तादिशब्दवाच्यत्वं हरेर्युक्तम् । तथात्वेऽवरत्वादिप्राप्तेरीश्वरस्य च, सर्वस्याधिपतिः सर्वस्येशान इति सर्वोत्तमत्वोक्तेरन्यथा तत्र स्यादिति पूर्वाधिकरणसिद्धान्तन्यायेन विपक्षेण, तदाक्षेपेण च पूर्वपक्षोत्थानादिति ज्ञेयम् । दुःखीवद्धावराद्यास्तु तदधीनत्वहेतुतः ॥ शब्दा ब्रह्मणि वर्तन्ते, इत्यनुव्याख्यानानुसारेण भाष्यमुपलक्षणं मत्वाह ॥ **योनिमन्ये इत्यादिना** ॥

वक्ष्यति चात्र सर्वत्राव्यक्तपदं जीवास्तूपलक्षणमिति । स्थाणुं स्थावरम् ॥ **किं विष्णु-रिति** ॥ अव्यक्तजीवादिपदवाच्यं किं प्रधानमुत विष्णुरिति चिन्ता । तदर्थं विष्णुपक्षे साधकाभि प्रयोगवृत्तिनिमित्ततात्पर्यज्ञापकानि न सन्ति । व्यवहारविलोपावरत्वदुःखित्वादिप्रसिद्धरूप-बाधकानि सन्ति उत साधकानि न सन्ति बाधकानि न सन्तीति । तदर्थं तात्पर्यज्ञापकतया सिद्धान्ताभिमतं मोक्षार्थं ज्ञेयत्वं महतःपरत्वलिङ्गेन प्रधाने सावकाशमुत विष्णुप्रकरणात् त्रयाणामेव प्रश्नोपन्यासाभ्यां च निरवकाशमिति । प्रयोगोऽपि प्रवृत्तिनिमित्तसद्भावाल्पत्वात् प्रधानादौ बहुप्रयोगात्र मुख्यत्वहेतुः उत महच्छब्दवच्चमसशब्दवच्च मुख्यत्वहेतुरिति । एवं तत्रेत्यन्तभाष्यं, तत्तुसमन्वयादिति सर्वशब्दानां समन्वयः उक्तः तत्र यद्यव्यक्तादिपदवाच्य-मन्यत्स्यात्तर्हि तत्र युज्यत इति सङ्गतिप्रदर्शनपरत्वेन व्याख्यायाधुना पूर्वपक्षफलपरत्वेनापि व्याख्यातुं प्रधानमपीति प्रतिज्ञामुपलक्षणत्वेन व्याचष्टे प्रधानाद्येवेति ॥ एतेनापिरेवार्थ इति दर्शितम् । यद्वा यथा त्रिपाद्युक्तन्यायेन विष्णुः कासुचिच्छाखासूच्यते एवं प्रधानमप्येकेषां

(वाक्यार्थमुक्तावली)

शाखिनामुच्यते । तथा च न विष्णोः सर्वत्र प्रवेश इति भाष्यार्थतात्पर्यकथनम् ।। **प्रधाना-द्येवेति** ।। तत्र हेत्वाकांक्षायां प्रधानमुच्यत इत्येतदेव प्रकारान्तरेण व्याचष्टे **अव्यक्तादीति** ।। गतार्थतामाशङ्कते **न चेति** ।। नामपादीयन्यायेन महायोगविद्वद्रूढिभ्यामिति भावः । कुतो न वाच्यमित्यतो भाष्ये महतःपरमव्यक्तमिति प्रथमवाक्यं परित्यज्य यतोऽव्यक्तात्पुरुषः पर इति सर्वोत्तमत्वविरोधद्धितीयवाक्यग्रहणेन सूचितं सर्वमानविरोध इत्युक्तन्यायं विवृणोति ।। **अत्राव्यक्तस्येति** ।। प्रथमवाक्योक्तं लिङ्गमप्याह **तथेति** ।। **बद्धत्वादिति** ।। योनिमन्ये इत्यादौ देहसम्बन्धादिप्रतीतेरित्यर्थः । पूर्वपक्षफलप्रदर्शनपरतया तत्र युज्यत इत्यादि उच्यत इत्यन्तं व्याचष्टे ।। **यत एवमित्यादिना** ।। नेत्यादिसिद्धान्तभाष्ये नेत्यत्रत्वेत्याकांक्षापूरकत्वेन परमात्मन एवाव्यक्तशब्देन गृहीतेरित्येतत्सम्बध्यते । हेतोरसिद्धिनिरासाय परमात्मन एवाव्यक्तशब्द इति वक्ष्यमाणं सम्बध्यत इत्यभिप्रेत्य ततोऽत इति पदद्वयमध्याहृत्य नेत्यत्र निषेधप्रतियोगितया तत्र युज्यत इत्येतदन्वीयत इति चाभिप्रेत्य योजयति ।। **यत इत्यादिना** ।। यतः परमात्मैव अव्यक्तादिशब्दोक्तस्तत्र शब्दशक्तेः सिद्धत्वान्महतः परमव्यक्तमित्यादौ परमात्मन एवाव्यक्त-शब्दवाच्यत्वग्रहणादित्यर्थः । तस्यैवेति प्रधानस्येति प्रतीयते परमात्मन इत्यर्थकत्वे तस्यैव परमात्मन एवेत्येतदुक्तं भवति । स्वपदमिति तु तत्त्वित्यस्य षष्ठ्यन्ततया विपरिणम्य स्वयमर्थस्योक्तत्वादिति ज्ञेयम् । साक्षादप्यविरोधं जैमिनिरित्यनेन गतार्थतामाशङ्क्य निराह ।। **अवाचकत्वेऽपीति** ।। रूपशब्दार्थमाह **शरीरसममिति** ।। शरीरस्य रूपमिव रूपं यस्येति साम्यं लभ्यत इति भावः ।। **शरीरत्वाभिप्रायेणेति** ।। शरीरस्वरूपप्रधानेष्ठ इत्येवार्थोपपत्तेरिति भावः । एवमित्युक्तं व्यनक्ति **वाचकत्वमिति** ।। प्रधानस्य स्वतन्त्रस्य कर्मणि षष्ठी । इतरस्य जगतः तदन्वयात् स्वतन्त्रहरिसम्बन्धात् ।। **न च मञ्चादाविति** ।। पारतन्त्र्यादमुख्यत्वमिति व्यभिचरितं मञ्चादौ । भगवत्पारतन्त्र्ये विद्यमानेऽपि अमुख्यवृत्तिविषयत्वाभावादिति न शङ्क्यम् । यतः प्रधानादौ पारतन्त्र्येण्याव्यक्तादिशब्दलक्ष्यार्थत्वं न साधितं किं तु परममुख्य-वृत्त्यविषयत्वं मञ्चादावपि वाच्यत्वेऽपि परममुख्यवृत्तिविषयत्वाभावात् । समाकर्षादित्यत्र मुख्यवृत्तावेव तारतम्यस्य वक्ष्यमाणत्वादिति भावः ।

यद्वा एकपदवाच्ययोर्मध्ये यद्यदधीनं तस्य तदपेक्षयामुख्यत्वमिति न्यायस्याभिप्रेतत्वेन लक्षणाश्रयणात् । मञ्चादेः पुरुषाधीनत्वेऽपि एकपदवाच्यत्वाभावान्न व्यभिचार इत्यर्थः । एतेन

(वाक्यार्थमुक्तावली)

स्वातन्त्र्यान्मुख्यत्वमिति यदभिप्रेतं तन्मश्रस्वामिनि पुरुषे व्यभिचरितमिति निरस्तम् । अथवा पारतन्त्र्यममुख्यत्वप्रयोजकमिति यदुक्तं तदयुक्तं मश्रेऽन्वयतो व्यभिचारात् । प्रयोजकाभावेऽपि प्रयोज्यसद्भावादिति न शङ्क्यम् । परतन्त्रत्वं न लक्षणावृत्तौ प्रयोजकत्वेनोक्तं किं त्वभिधा-वृत्तावेव हीनवृत्तौ प्रयोजकत्वेनोक्तमित्यर्थः । अव्यक्तादीत्यग्रेतनभाष्यानुसारेणाह अत्रेति ॥ **वाच्यत्वे सिद्ध इति** ॥ परमात्मन्यव्यक्तादिशब्दशक्तौ सिद्धायां सिद्धशक्तिकस्य तस्यैवाव्यक्त-शब्देन गृहीतेः पूर्वपक्ष्युक्तं न युज्यत इति चिन्ता । शरीररूपकविन्यस्तेत्युक्ततत्सम्बन्धादन्यत्र शब्दशक्तिरिति चिन्ता च भवेदित्यर्थः ॥ **शब्दाभ्यामिति** ॥ पदद्वयेनेत्यर्थः । अचलं निष्क्रिय-मित्यनयोः पौनरुक्त्यं, प्रमाणविरोधं च परिहरति ॥ **अचलमीश्वरभावादिति** ॥ ईश्वरभावादचलं सदापीश्वरम् । सूत्रे अपिरवधारणे सिद्धान्तांशे विन्यस्तेत्यस्य विशेष्यतया तत्वित्यन्तं स्वस्यैवेत्यनुवर्तते । बुध्या विवेकेनान्वयः । यतस्तस्मादिति योज्यम् ॥ ततश्च एकेषां शाखिनां कासुचिच्छाखासु आनुमानिकं, सांख्यानुमानगम्यं प्रधानमेवाव्यक्तशब्दवाच्यं प्रतीयते न विष्णुरिति चेन्न । यतोऽव्यक्तमचलमिति श्रुतिः परमात्मन्यव्यक्तशब्दशक्तिः स्वयं प्रयुज्य दर्शयति ॥ स्मृतिश्च ज्ञापयत्यतः शरीररूपकविन्यस्तस्य पारतन्त्र्याच्छरीरे कुत्सितेऽप्रधाने नियामकतया विन्यस्तस्य परमात्मन एवाव्यक्तासु पुरुषः पर इति श्रुतावव्यक्त इति न गृहीतेरितरत्र तच्छब्दात्वृत्यङ्गीकारेण व्यवहारविलोपबाधकाभावाच्च ब्रह्मैवाव्यक्तशब्दवाच्यं न प्रधानमिति सूत्रार्थः । प्रधानमिति वक्तव्ये आनुमानिकग्रहणं मुख्यार्थतया साङ्ख्यानुमान-परिकल्पनामात्रं नत्वीश्वर इव शक्तिग्राहकं प्रमाणमस्तीति सूचयितुम् ॥

## तत्त्वसुबोधिनी

**तथा सति तृतीयेति** ॥ द्युभ्वाद्यायतनमिति तृतीयपादं व्यर्थं स्यादित्यर्थः । कुत इत्यत आह ॥ **अन्यत्रैवेति** ॥ इन्द्रादिशब्दाः अन्यत्र प्रसिद्धा इति कोऽर्थः । किमन्यत्रैव प्रसिद्धा इति किं वा अन्यत्र प्रसिद्धा इति । तथा च इन्द्रादिशब्दानामन्यत्रैव प्रसिद्धत्वाभावे अन्यत्रापि प्रसिद्धत्वं स्यात् । तथा च तेषां प्रथमपाद एव समन्वयस्य उक्तत्वेन तृतीयपादं व्यर्थं स्यादिति भावः ॥ **अनेनैवेति** ॥ उक्तेनैवेत्यर्थः । नन्वग्निश्रुत्यादिसाहित्येन सर्वगतत्वादेरपि अन्यत्र प्रसिद्धत्वात् अन्यत्रैव प्रसिद्धत्वापत्तिरित्यत आह ॥ **पूर्वं कचिदिति** ॥ भाष्ये सामस्त्येनेति । प्रकारान्तरेण पादवैयर्थ्यपरिहारार्थमित्यभिप्रेत्य पूर्वं स्रष्टृत्वासम्भवादिति । बलवद्युक्त्यादिभिः

(तत्त्वसुबोधिनी)

अन्यत्रप्रसिद्धानां विष्णुपरत्वस्यैवासम्भवादित्यर्थः ॥ **अंशेति** ॥ एषां शब्दानां समन्वय उक्तः तदंशः इत्यर्थः । प्रागनुक्तहेतुभिरिति तदधीनत्वादर्थवदिति । तदा ह्यधीयत एक इत्यादि प्रागनुक्तहेतुभिरित्यर्थः । ननु तत्र सर्वशब्दसमन्वय प्रतिज्ञानं कुतः कारणानभिधायक-शब्दसमन्वयः प्रतिज्ञानं कुतः कारणाभिधायकशब्दसमन्वयप्रतिज्ञानमेव किं न स्यादत आह ॥ **जन्मादिसूत्र इति** ॥ कुत इत्यत आह ॥ **किं तद्ब्रह्मेति** ॥ लक्षणाकाङ्क्षायां जिज्ञास्ये प्रयुक्तब्रह्मशब्दनिर्वचनाय अनन्तगुणपरिपूर्णत्वमेव लक्षणत्वेन वक्तव्यम् । न तु जन्मादि-कारणत्वमिति भावः । ननु जिज्ञास्ये ब्रह्मपदप्रयोगेऽपि गुणपरिपूर्णत्वमेव लक्षणत्वेन कुतो वक्तव्यमित्यत आह– **न हीति** ॥ ननु तर्हि जन्माद्यस्य यत इति सूत्रानुपपत्तिरित्यत आह ॥ **जन्मादीति** ॥ सूत्रे गुणान्तरपरित्यागेन जन्मादिकारणत्वस्यैव उपलक्षणत्वेन उपादाने किं निमित्तमित्याशङ्कापरिहारार्थम् उक्तं तस्याखिलगुणसाधकत्वेनेति ॥ **कतिपयेति** ॥ कतिपय-शब्दसमन्वये कतिपयशब्दगुणस्यैव सिद्धेः पूर्वगुणवत्वसिद्ध्यर्थं सर्वशब्दसमन्वयो वक्तव्य इति भावः ।

अत्र वर्णशून्ये विष्णौ ब्राह्मणशब्दवाच्यत्वाभावासम्भव इति समन्वेतव्यशब्दानुपपत्त्या पूर्वाधिकरणपूर्वपक्षवदत्रापि विष्णौ सर्वप्राणविरुद्धावरत्वदुःखित्वादिप्राप्त्या श्रौताव्यक्तादिशब्द-वाच्यत्वाभावसम्भव इति समन्वेतव्यशब्दानुपपत्त्यैव पूर्वपक्षकरणादनन्तरसङ्गतिः । भाष्य-मुपलक्षणपरम् । अनुव्याख्याने दुःख्यादिशब्दसमन्वयस्य उक्तत्वादिति भावेन दुःख्यादि-शब्दप्रतिपादकवाक्यमुदाहरति ॥ **योनिमिति** ॥ अन्ये देहिनं शरीरत्वाय शरीरप्राप्त्यर्थं योनिं प्रपद्यन्ते । अन्ये तु स्थाणुं वृक्षादिशरीरं यथाकर्म कर्मानुसारेण यथाश्रुतं श्रुतानुसारेण अनु-संयन्ति प्राप्नुवन्तीत्यर्थः ॥ **प्रधानाद्येवेति** ॥ अनेन सूत्रभाष्ययोः अपिशब्दः अवधारणार्थकः इत्युक्तं भवति । ननु विष्णोरपि तस्य सम्भवात्र तस्य प्रधानसाधकमुपपन्नमित्यर्थः ॥ **परमेश्वराभिधायकत्वमिति** ॥ समन्वय उक्तः तत्र युज्यते इति भाष्ये लिङ्गव्यत्यासः परिहृतो भवति । यतः परमात्मा एवाव्यक्तशब्देन गृहीतः इत्यनेनापि सम्बध्य तद्वाक्यद्वयं व्याचष्टे ॥ **यतः परमात्मैवेत्यादिना** । अत्र परमात्मैवेत्यनन्तरं सर्वश्रुत्यादिष्विति । परमात्मन एवेत्यनन्तरं अव्यक्तात्पुरुषः पर इति वाक्य इति न द्रष्टव्यम् । **तस्यैव परमात्मन इति** पदद्वयस्यान्वया-प्रतीतेराह ॥ **यस्मिन्निति** ॥ **अन्यास्रूपवैयर्थ्याच्चेति** । प्रधानस्य मुख्यशरीरत्व इत्यर्थः ।

(तत्त्वसुबोधिनी)

शरीरस्य रूपमिव रूपं यस्येति विग्रहबलेन शरीरपदोक्त प्रधानादे: अमुख्यत्वशरीरत्व-प्रतिपादकपदवैय्यर्थ्यादित्यर्थ: । च शब्द: कप्रत्ययवैयर्थ्यसमुच्चयार्थ: । शब्द: प्रधानेऽर्थे मुख्य: तदधीने तु इत्यत्र प्रमाणमाह ॥ **तदधीनेति** ॥ ननु प्रधानादे: भगवत्तन्त्रत्वेन इत्यत्र शब्दा-मुख्यार्थसाधकत्वे यत्परतन्त्रत्वमुक्तं तदयुक्तम् । मञ्चा: क्रोशन्ति मार्गाश्चलन्तीत्यादिप्रयोग: स्यात् । मञ्चशब्दमुख्यार्थे मञ्चादौ पुरुषतन्त्रत्वेन पारतन्त्र्ये विद्यमानेऽपि मञ्चादिशब्दे मुख्यार्थत्वाभावेन व्यभिचारादित्याशङ्क्य निषेधति ॥ **न च मञ्चादाविति** ॥ **लक्षणा-नाश्रयणादिति** ॥ प्रधानादौ पारतन्त्र्येण अव्यक्तादिशब्दलक्ष्यार्थत्वं न साधितम् । येन व्यभिचार: स्यात् । **शक्यत्व** एव हीनशक्तिविषयत्वं साधितम् । तत्र मञ्चादौ मञ्चशब्दे हीनशक्तिविषयत्वम् अस्तीति न व्यभिचार: ।

अथवा भगवत्तन्त्रत्वेनेत्यनेन शब्दस्यामुख्यत्वमिति तत्वेनोक्तपरतन्त्रत्वस्य पुरुषतन्त्रे मञ्चे सत्वेऽपि मञ्चशब्दामुख्यवृत्तेरभावात् आदिपदोक्तमञ्चातन्त्रे पुरुषे मञ्चशब्दामुख्यवृत्तः दर्शनात् अन्वयतो व्यतिरेकतश्च व्यभिचार इति नाशङ्क्यमिति । न च मञ्चादाविति वाक्यार्थ: । यतो भगवत्तन्त्रत्वेनेत्यत्र परतन्त्रत्वं न लक्षणावृत्तौ निमित्तत्वेनोक्तं किन्तु अभिधावृत्तावेव हीनशक्तौ निमित्तत्वेनोक्तमित्युत्तरवाक्यार्थ: । अत्र चाद्ये पक्षे परतन्त्रत्वस्यामुख्यार्थे हेतुत्वपुरस्कारेण द्वितीये च मुख्यवृत्तौ परतन्त्रत्वस्य प्रवृत्तिनिमित्तत्वेन तत्पुरस्कारेण प्रवृत्त: भेद इति भाव: । ननु पूर्वं जीवादिशब्दानामपि समन्वेतव्यतया उक्तत्वात् सिद्धान्ते तेषां भगवत्परत्वप्रतिपादकं किमपि न प्रतीयते अत: कथमेतदित्यत आह ॥ **असर्वत्रेति** ॥ **अल्पत्वमिति** ॥ परतन्त्रत्व-मित्यर्थ: । उदाहरिष्यमाणश्रुतिगतपदार्थत्वेनैवमुक्तम् ॥ **श्रुत्यन्तरं चेति** ॥ जीवादिविन्यस्तत्व-प्रतिपादनार्थमिति भाव: । एवमनेन जीवेनेत्यादिश्रुत्युदाहरणस्य प्रयोजनं द्रष्टव्यम् । प्राचीन-चिन्तेति प्रधानपरमात्मनो: स्वातन्त्र्यपारतन्त्र्यचिन्तेत्यर्थ: । दर्शयति चेति शब्दाभ्यामिति । दर्शयतिशब्द: चशब्दश्चेति शब्दाभ्यामित्यर्थ: । अचलत्वे पर्वतवत् अचेतनत्वं स्यादित्यत उक्तम् ईश्वरभावादिति । जाग्रत्सर्जनादिरूपक्रियावत्त्वात् निष्क्रियत्वं कथमित्यत उक्तम् ॥ **अक्लिष्टेति** ॥

## वाक्यार्थविवरणम्

**तथा सतीति** ॥ अन्यत्रैव प्रसिद्धत्वाभावे उभयत्रप्रसिद्धत्वप्राप्त्या तृतीयपादवैय्यर्थ्यादिति भावः । आनन्दमयाधिकरणे प्रायेणान्यत्र प्रसिद्धानामित्युक्तिः अत्र पादेऽन्यत्रैवेत्युक्तिरिति ध्येयम् । स्यादेतदित्याद्युत्तरशङ्कोत्थापनाय योजनान्तरमाह ॥ **यदुदितमिति** ॥ **प्रधानस्येति** ॥ श्रेष्ठस्य उत्तमस्येत्यर्थः । आभु इत्यस्यार्थो विभ्विति । तुच्छेनेत्यल्पत्वम् । आभ्वित्यनेन स्वतन्त्रत्वम् अव्यक्तेनापि हितत्वोक्त्या तदन्तर्विन्यस्तत्वमुक्तमिति द्रष्टव्यम् ।

## वाक्यार्थमञ्जरी

**अवसर प्राप्तानामिति** ॥ आनन्दमयनयोक्तरीत्यान्यत्रैव प्रसिद्धानां समन्वयस्य प्रथमं बुध्यनारोहात्प्रथममन्यत्रोभयत्र प्रसिद्धानां समन्वयजिज्ञासायां तन्निरूपणेन तज्जिज्ञासा-विच्छेदादिति भावः ॥ **प्रकारान्तराभावादिति** ॥ तथाचेन्द्रादिशब्दानामन्यत्रैव प्रसिद्धत्वाभावे अन्यत्रापि प्रसिद्धत्वप्राप्त्या तादृशशब्दसमन्वयपरतृतीयपादवैय्यर्थ्यं दुर्वारमिति भावः । तर्हि सर्वत्र प्रसिद्धोपदेशादित्यादावादिश्रुत्यादिभिरन्यत्रप्रसिद्धसर्वगतत्वादेः समन्वयनिरूपणेन तेषा-मप्यन्यत्रैवप्रसिद्धत्वप्रसङ्ग इत्यत आह ॥ **पूर्वं कचिदिति** ॥ अत्र वक्तव्यमानन्दमयनय एवास्माभिरुक्तं तत्रैवानुसन्धेयम् । अल्पानल्पविपयत्वाभ्यां चावैय्यर्थ्यमित्याह ॥ **पूर्वमिति** ॥ न च वर्णानामपि वाचकत्वे विभक्त्यन्तत्वेन पदत्वमेवेति पृथग्ग्रहणमयुक्तमिति वाच्यम्, एकानेक-वर्णात्मकविवक्षया तदुपपत्तेः ॥ **असम्भवादिति** ॥ प्रबलहेतुभिरन्यत्र प्रसिद्धत्वे कथमपि भगवत्परत्वस्य वक्तुमशक्यत्वादिति भावः ॥ **अंश इति** ॥ एषां शब्दानां समन्वयः प्रागुक्तस्तदंश इत्यर्थः ॥ **प्रागनुक्तहेतुभिरिति** ॥ तदधीनत्वादर्थवदिति तथा ह्यधीयत इत्यादि-प्रागनुक्तहेतुभिरित्यर्थः । तदेवोपपादयति ॥ **जन्मादीति** ॥ प्रमाणीकृततृतीयसूत्रे ।

ननु उक्तरीत्या कतिपयशब्दसमन्वये प्रतिज्ञातव्ये सर्वशब्दसमन्वयप्रतिज्ञा न सङ्गतेत्यत आह ॥ **जन्मादिसूत्रे हीति** ॥ **गुणपरिपूर्णस्यैवेति** ॥ किं तद् ब्रह्मेति लक्षणाकांक्षायां जिज्ञास्ये प्रयुक्तब्रह्म शब्दनिर्वचनलभ्यानन्तगुणपूर्णत्वमेव लक्षणत्वेन वक्तव्यं न तु जन्मादि-कारणत्वमात्रमिति भावः ॥ **न हीति** ॥ येन जन्मादिकारणत्वमात्रोक्त्या कृती स्यादिति भावः । एवं सति यथाश्रुतसूत्रानुपपत्तिरित्यतस्तत्तात्पर्यमाह ॥ **जन्मादिकारणत्वेति** ॥ सूत्रे

(वाक्यार्थमञ्जरी)

गुणान्तरत्यागेन जन्मादिकारणत्वस्यैवोपलक्षकत्वेनोपपादने किं निमित्तमित्याशङ्कापरिहारार्थमुक्तम् ॥ **तस्याखिलगुणसाधकत्वेनेति** ॥ साधकत्वं चान्तःसमुद्रगमित्याद्यनुव्याख्याने व्यक्तम्। तत्रैव गुणपूर्णत्व एव ॥ **कतिपयेति** ॥ तथा च न यत्किञ्चिच्छाखस्य तत्र प्रामाण्यमिति भावः ॥ ॐ आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॐ ॥ आनुमानिकमपि साङ्ख्यानुमानगम्यं प्रधानादिकमेवाव्यक्तात्पुरुषः पर इत्यादि केषाञ्चिच्छाखासूच्यते अतो न विष्णौ सर्वशब्दसमन्वय इति चेन्न तत्राव्यक्तादिशब्दैर्विष्णुग्रहणात् कुतः यतो दर्शयति अव्यक्तमचलं शान्तमिति श्रुतिः चशब्दादव्यक्तोऽक्षर उच्यत इति स्मृतिश्च विष्णोरेवाव्यक्तादिशब्दवाच्यत्वे कथमन्यत्र व्यवहार इत्यतो अव्यक्तादिशब्दवाच्यब्रह्मसम्बन्धात्प्रधानादावव्यक्तादिशब्दव्यवहार इत्याशयेनोक्तम् ॥ **शरीरेति** ॥ शरीरस्य रूपमिव रूपं यस्य तच्छरीररूपं कुत्सितं शरीररूपं शरीररूपकं प्रधानादिकं तत्र विन्यस्तस्य स्थितस्य विष्णोरव्यक्तादिपदेन गृहीतेरित्यर्थः ॥ **महत इति** ॥ महतो महत्तत्वात्तदभिमानिचतुर्मुखाद्वा अव्यक्तं प्रधानं तदभिमानिश्रीतत्वं वापरम् अव्यक्तात्परुषः पूर्णषड्गुणो भगवान्पर इत्यर्थः ॥ **योनिमिति** ॥ अन्ये केचिद्देहिनो मृताः सन्तो शरीरत्वाय मनुष्यादियोनिं प्राप्नुवन्ति । अन्ये च स्थाणुं वृक्षादिजन्म अनुगच्छन्ति कुत एवं वैषम्यमित्यत उक्तम् ॥ **यथेति** ॥ कर्मानुसारेण ज्ञानानुसारेण चेत्यर्थः । समावृत्यातिक्रम्येतियावत् ॥ **अव्यक्तादपीति** ॥ तथा च न तस्य साक्षान्महतः परत्वमिति भावः ॥ **प्रमाणेति** ॥ निरनिष्ठो निरवद्य इत्यादीत्यर्थः । शङ्कते ॥ **परमात्मन इति** ॥ उक्तं साक्षादप्यविरोधं जैमिनिरित्यत्र प्रायुङ्क्त प्रयुक्तवान् यावता येन प्रकारेण कुत्सयामास गर्हयामास ॥ **अन्यथेति** ॥ अव्यक्तादेर्मुख्यशरीरत्वे शरीरसमत्वप्रतिपादकरूपपदवैयर्थ्यादित्यर्थः । परमात्मन एवेत्यादिनोक्तशङ्कापरिहारप्रकारं दर्शयति ॥ **यद्यपीति** ॥ विपरीतं प्रधानादेर्मुख्यवाच्यत्वम् ॥ **एवमेव हीति** ॥ शब्दानां मुख्यतः प्रधानवाचकत्वं प्रधानान्वयादप्रधानवाचकत्वमित्येवं लौकिकप्रसिद्धिरप्यस्तीत्यर्थः ॥ **न च मञ्चादावुक्तव्यभिचार इति** ॥ प्रधानादेर्भगवत्तन्त्रत्वेनेत्यत्र शब्दामुख्यार्थत्वसाधकत्वेन यत्परतन्त्रत्वमुक्तं तस्य मञ्चाःक्रोशन्ति मार्गाश्चरन्तीत्यादिप्रयोगस्थमञ्चादिशब्दमुख्यार्थे मञ्चादौ पुरुषतन्त्रत्वेन विद्यमानत्वेऽपि तत्र मञ्चादिशब्दामुख्यार्थत्वाभावाद्व्यभिचार इति न शङ्क्यमित्यर्थः ॥ **समाकर्षादिति** ॥ सर्वशब्दानां ब्रह्मणःसकाशाज्जगति सम्यगाकर्षणाद्व्यवहारो न तु लक्षणयेति न्यायस्येत्यर्थः ॥ **लक्षणानाश्रयणादिति** ॥ प्रधानादौ परतन्त्रत्वेनाव्यक्तादि-

(वाक्यार्थमञ्जरी)
शब्दलक्ष्यार्थत्वं न साधितं येन व्यभिचारः स्यात्किन्तु शक्यत्व एव हीनशक्तिविषयत्वं साधितं मञ्चादौ च मञ्चशब्दहीनशक्तिविषयत्वमस्तीति न व्यभिचार इति भावः ॥ **अल्पत्वमिति** ॥ परतन्त्रत्वमित्यर्थः । उदाहरिष्यमाणश्रुतिस्तत्तुच्छपदार्थत्वेनैवमुक्तम् । अभिवत्यस्यार्थो विभिर्वति तेन स्वतन्त्रत्वम् अव्यक्तादितत्वोक्त्या तदन्तर्गतत्वं चोक्तं बोध्यम् । श्रुत्यन्तरश्चोदाहर्तव्यमिति जीवादिविन्यस्तत्वादिप्रतिपादनार्थमिदम् । एवमनेन जीवेनेत्यादि श्रुत्युदाहरणप्रयोजनं द्रष्टव्यम् । प्राचीनचिन्ता परमात्मनो मुख्यवाच्यत्वं तत्सम्बन्धादन्यस्येति चिन्तां दर्शयति । शब्दश्च शब्दश्च ताभ्याम् ईश्वरभावात् ईश्वरत्वात् निष्कलं प्राकृतषोडशकलाहीनम् उक्तं गीतायाम् । तस्य चाक्षरस्यान्यत्वशङ्कानिरासाय पूर्वांशोदाहरणमितिभावः ॥ **अनेनेति** ॥ अनेन जीवेनात्मना अनिरुद्धरूपेणेमा स्तिस्रो देवताः अनुप्रविश्य नामरूपे व्याकरणवाणीत्यर्थः ।

## सूत्रभाष्यम्

### ॥ ॐ सूक्ष्मं तु तदर्हत्वात् ॐ ॥ २ ॥

सूक्ष्ममेवाव्यक्तशब्देनोच्यते । तद्ध्यव्यक्ततामर्हति । सूक्ष्मत्वं च मुख्यं तस्यैव ।

'यत्तत्सूक्ष्मं परमं वेदितव्यं नित्यं पदं वैष्णवं ह्यामनन्ति ।
यत्तल्लोका न विदुर्लोकसारं विन्दन्त्येतत्कवयो योगनिष्ठाः ॥'

इति च पिप्पलादशाखायाम् । मुख्ये च विद्यमाने नामुख्यं युक्तम् ॥

## सत्तर्कदीपावली

योगोऽप्यस्ति न व्यज्यत इत्यव्यक्तमिति । तद्योगस्तु सूक्ष्ममेव । तच्च परं ब्रह्मैव विष्ण्वाख्यमित्येवं सप्रमाणकं प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **सूक्ष्मं त्वित्यादिना** ॥ प्रधानस्यापि सूक्ष्मत्वात् तत्राप्ययं किं न स्यादित्यत आह ॥ **मुख्ये चेदिति** ॥ यदीशवदति सूक्ष्मत्वाभावादानुमानिकस्याव्यक्तत्वम् अव्यक्तशब्दप्रवृत्तिनिमित्तभूतार्थरहितमनतिमुख्यं तर्ह्यवर-दुःखिबद्धादिशब्दप्रवृत्तिनिमित्तजाड्यदुःखबद्धाद्यर्थरहितमवरत्वदुःखिबद्धत्वादिकमौपचारिकमेव स्यात् भगवतः । अतोऽत्र प्रधानजीवावेवाव्यक्तपुरुषशब्दोक्ताविति शङ्कापरिहारत्वेनोत्तरसूत्र-मवतार्य व्याचष्टे । तदधीनत्वादित्यादिना । न केवलं प्रकृतिजीवयोः अव्यक्तत्वपरत्वपुरुष-

(रानकदीपावली)
त्वादीनामीशापेक्षया अत्यल्पसूक्ष्मत्वादतिसूक्ष्मस्य सर्वोत्तमस्यानिपूरुषपड्गुणस्येव अव्यक्त-त्वादिकमव्यक्तशब्दादिप्रवृत्तिनिमित्तार्थवत् । किन्तु तद्गताव्यक्तत्वपरत्वपुरुपत्वादीनामपि ईशाधीनत्वाच्च । ईश्वरस्य तु निरनिष्टो निरवद्य इत्यादिश्रुत्या दोपासंस्पर्शनियमात् । अवरत्व-दुःखित्ववद्धत्वादीनामन्यगतानामेव ईशाधीनत्वात् । तस्यैवावरत्वादिकमर्थवत् प्रकृत्यादि-गतादित्येपा दिक् । अतोऽसावेवातिमुख्यतो अव्यक्तपुरुपपरावरदुःखिशब्दार्थः ।

## तत्त्वप्रदीपिका

सूक्ष्मं ह्यव्यक्ततामर्हति । सूक्ष्माः खलु परमाण्वाकाशादयोऽव्यक्ता लक्ष्यन्ते । वैष्णवं पदं विष्णुस्वरूपम् ।

> ''उत्तमानां हि पादेन सर्वरूपं हि कथ्यते ।
> विष्णोः पदमिति ह्यस्मात्प्रथितिर्वैदिकी स्मृता'' इति वैश्वानरविद्यायाम् ॥

लोकसारं लोकोत्तमम् । योगनिष्ठाः ब्रह्मणि मनोयोगनिष्ठाः ॥

## तत्त्वप्रकाशिका

नन्वस्त्वेवं श्रौतस्मार्तप्रयोगवलेनाव्यक्तादिशब्दानां भगवद्वाचित्वम् । तत्र तेषां मुख्यत्वं तु कुतः प्रयोगस्यामुख्यवाच्येऽपि (अमुख्येनापि) सम्भवादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **सूक्ष्ममिति** ॥ अव्यक्तत्वस्यैवाव्यक्तशब्दप्रवृत्तिनिमित्तत्वात्कथं सूक्ष्ममेवाव्यक्तशब्देनोच्यत इति तत्राऽऽह ॥ **तद्धीति** ॥ अस्तु सूक्ष्मस्यैवाव्यक्तशब्दप्रवृत्तिनिमित्ताव्यक्ततार्हत्वात्तद-व्यक्तशब्दवाच्यम् । तथापि प्रकृते किमायातमित्यत आह ॥ **सूक्ष्मत्वं चेति** ॥ युक्तं परमात्मन्यव्यक्तशब्दस्य मुख्यत्वम् । तदर्थभूताव्यक्तत्वस्य परमात्मनि सत्त्वात् । अव्यक्त-त्वोपयोगिनः सूक्ष्मत्वस्य तत्र सद्भावात् । न च वाच्यं प्रधानस्यापि सूक्ष्मत्वेनाव्यक्तत्वसम्भवात् कथमव्यक्तशब्दस्य परमात्मनि मुख्यतेति । विष्णोरतिसूक्ष्मत्वेना(स्या)त्यन्तमव्यक्तत्वादति-शयेन प्रवृत्तिनिमित्तवत्त्वेव शब्दस्य मुख्यत्वादिति भावः । कुतो विष्णोः मुख्यसूक्ष्मत्वं येन तस्य मुख्याव्यक्तत्वमिति तत्राऽऽह ॥ **यदिति** ॥ 'यत्तल्लोकोत्तमं नित्यं विष्णोः स्वरूपं परमसूक्ष्मं वेदितव्यम्' 'एपोऽणुरात्मा चेतसा वेदितव्यः' इत्याद्यामनन्ति । यच्च पृथग्जना न विदुस्तदेतदुपायसिद्धा ज्ञानिनः पश्यन्तीत्यर्थः । एवं जीवादिशब्दप्रवृत्तिनिमित्तानां प्राणधारणा-दीनां भगवति मुख्यत्वेन तच्छब्दानां तत्र मुख्यत्वं द्रष्टव्यम् । तदुक्तं 'स जीवनामा भगवान्

(तत्त्वप्रकाशिका)
**प्राणधारणहेतुतः । उपचारेण जीवाख्या संसारिणि निगद्यते' इत्यादि । नन्वस्तु त्रिष्णौ मुख्यं शब्दप्रवृत्तिनिमित्तं प्रधानादावपि किञ्चिदव्यक्तत्वादिसद्भावादव्यक्तात्पुरुषः पर इत्यादौ तद्वाच्यं किं न स्यादिति चेत् । तत्किं परमात्मनो मुख्यवाच्यत्वमङ्गीकृत्य मुख्यतयाऽन्यस्यापि वाच्यत्वं स्यादित्युच्यते । उतान्यस्यैव । आद्ये न विरोधः । न चोभयार्थत्वे वाक्यभेदः । प्रधानविशिष्टस्यैव परमात्मनः शब्दवाच्यत्वाभ्युपगमात् । द्वितीयं निराह ॥ मुख्ये चेति ॥ मुख्यतोऽव्यक्तादिशब्दार्थवति विष्णावव्यक्तादिशब्दवाच्यतया सम्भवति तत्परित्यागेनामुख्यतः शब्दार्थवतां प्रधानादीनामत्र वाच्यतया ग्रहणं न युक्तम् । मुख्यासम्भव एव गौणाश्रयणस्य न्यायत्वा(प्राप्तत्वा)दिति भावः ॥**

## गुर्वर्थदीपिका

लोका न विदुरिति वक्ष्यमाणाज्ञेयत्वघटकतया परमसूक्ष्ममित्येव पदसम्बन्ध इति भावेनाह 'परमसूक्ष्मम्' इति । लोकसारमिति भगवत्परमत्त्वस्य पृथगुक्तत्वाल्लोका इत्यस्यार्थकथनं पृथक् जना इति पामरा इत्यर्थः । 'मुख्ये च विद्यमान' इत्यत्र सम्भवदन्वये मुख्य इत्यर्थः ।

## भावबोधः

**अतिसूक्ष्मत्वेनेति** ॥ अनेन सूक्ष्मत्वं तु मुख्यमिति भाष्यगतमुख्यशब्दाभिप्राय उक्तो भवति ॥ **गौणाश्रयणस्येति** ॥ अमुख्याश्रयणस्येत्यर्थः ।

## भावदीपः

**मुख्यत्वमिति** ॥ परममुख्यत्वमित्यर्थः । एवं पदार्थानुक्त्वा तात्पर्योक्त्या उक्तशङ्कां निराह ॥ **युक्तमित्यादिना** ॥ मुख्यमित्युक्तमुख्यपदतात्पर्यं व्यनक्ति ॥ **न चेत्यादिना** ॥ लोकसारं लोकोत्तमम् । पदं स्वरूपम् । 'उत्तमानां स्वरूपं तु पादशब्देन भण्यत' इत्युक्तेः । एषोऽणुरित्याथर्वणे । पृथग्जनाः पामरा इत्यर्थः । यच्च पृथग्जना न विदुः । तदेतदिति तच्छब्दद्वयस्य च योजना । योगनिष्ठा उपायसिद्धाः । कवयो ज्ञानिनः । विन्दन्तीत्यस्य योगनिष्ठा इत्याद्युक्त्यनुरोधेनार्थमाह ॥ **पश्यन्तीति** ॥ साक्षात्कुर्वन्तीत्यर्थः ॥ **तदुक्तमिति** ॥ गीतातात्पर्ये द्वितीय इत्यर्थः । मुख्यवाच्यत्वं परममुख्यवाच्यत्वम् ॥ **अमुख्यतयेति** ॥ परममुख्यवृत्त्यपेक्षया एवमुक्तिः । लोकसिद्धयोगरूढ्यादिरूपमुख्यवृत्त्येत्यर्थः । न तु लक्षणादिनेति भ्रमितव्यम् ।

(भावदीपः)
लक्षणानाश्रयणादिति प्रागेवोक्तत्वात् । एवमग्रेऽपि बोध्यम् । शरीररूपकविन्यस्तगृहीतेरित्यंश-तात्पर्यमाह ॥ **प्रधानविशिष्टस्यैवेति** ॥ लोकसिद्धन्यायमाह ॥ **मुख्यासम्भव इति** ॥ यद्वा परममुख्यापेक्षया गौणेत्युक्तिः ॥

## अभिनवचन्द्रिका

ननु भाष्ये 'सूक्ष्मत्वं च मुख्यं तस्यैव' इत्यभिधानं व्यर्थं कस्यचिद्धर्मस्यातिशयेन कस्यचिच्छब्दस्य मुख्यतादर्शनादित्यत आह – **युक्तं परमात्मनीति** ॥ ननु तदर्थभूताव्यक्तत्वस्य परमात्मनि सत्त्वात् अव्यक्तशब्दः परमात्मनि मुख्य इत्युक्तम् । तत्प्रवृत्तिनिमित्तस्य प्रधानेऽपि सत्त्वेन तत्रापि शब्दस्य मुख्यत्वापातात् । न च प्रधानेऽव्यक्तत्वमेव नेति युक्तं तत्प्रयोजकत्वस्य सूक्ष्मत्वस्य परमात्मनीव प्रधानेऽपि भावादित्याशङ्क्य निषेधति – **न च वाच्यमिति** ॥ कुतो न वाच्यमित्यतस्तदभिप्रायमाह– **विष्णोरित्यादिना** ॥ नात्र प्रवृत्तिनिमित्तातिरिक्तधर्मातिशयात् मुख्यत्वमभिप्रेतं, नापि प्रवृत्तिनिमित्ताधिकरणत्वमात्रात्, किं तु सूक्ष्मत्वातिशयप्रयुक्त-प्रवृत्तिनिमित्तपौष्कल्यं शब्दमुख्यत्वे तन्त्रत्वेनाऽभिमतमिति भावः । अत्र टीकायां, लेखकदोषात् 'तदधीनत्वादर्थवत्' इति सूत्रव्याख्यानटीकायां पतितम् 'एतेन प्रधानादेरतिसूक्ष्मत्वाद्य-भावेन नाऽमुख्यार्थत्वम् । अल्पपङ्कजेऽपि पद्मे पङ्कजशब्दस्यामुख्यतादर्शनादिति शङ्का निरस्ता भवति' इति वाक्यं द्रष्टव्यम् । तस्यार्थः यद्भाष्ये प्रवृत्तिनिमित्तातिरिक्तसूक्ष्मत्वातिशयेन अव्यक्तशब्दस्य विष्णौ मुख्यत्वम् । तस्य प्रधानेऽल्पत्वादमुख्यत्वमभिमतम् । तदयुक्तं, प्रवृत्ति-निमित्तातिरिक्तपरिमाणतारतम्येऽपि अल्पमहापङ्कजयोः पङ्कजशब्दप्रवृत्तितारतम्याऽदर्शनादिति शङ्का, एतेन भाष्याभिप्रायकथनेन निरस्ता भवतीति । एतेनाल्पपङ्कजे निमित्तपङ्कस्याऽल्पत्वेऽपि प्रवृत्तिनिमित्तभूतपङ्कजनिकर्तृत्वस्यालपत्वाभावात्, अल्पपङ्कजेऽपि पद्मे, पङ्कजशब्दस्या-मुख्यताऽदर्शनादिति शङ्काऽयुक्तेति परास्तम् । भाष्याभिप्रायकथनात्पूर्वं शङ्काप्राप्तिसद्भावात् । अवश्यं चैतदेवं विज्ञेयम् । अस्य वाक्यस्य 'अत्राऽव्यक्तग्रहणेनाऽव्यक्तशब्दस्य द्वेधापि परमात्मनि वृत्तिरिति दर्शयति' इत्यतः परमसङ्गतत्वात्, न हि अव्यक्तशब्दस्य द्वेधा परमात्मनि वृत्तिकथनेनोक्तशङ्कानिरासो भवति । येनेदं तत्र सङ्गतं स्यात् ॥ **न चोभयार्थत्व इति** ॥ वाक्यस्योभयत्र तात्पर्ये अन्वयभेदस्याऽवर्जनीयत्वेन वाक्यभेदः स्यादिति न वाच्यमित्यर्थः ॥ **प्रधानविशिष्टस्यैवेति** ॥ प्रधानविशिष्टस्यैवाऽन्वयप्रतियोगित्वाङ्गीकारेणाऽन्वयद्वयानङ्गीकारा-दिति भावः ।

(अभिनवचन्द्रिका)

**इदमुक्तं भवति ।** योगरूढशब्देन युगपद्योगरूढिभ्यामिवाऽव्यक्तशब्देनापि – युगपत्परम-मुख्यमुख्यवृत्तिभ्यामर्थद्वयस्यैकोपस्थितौ महत्परत्वं युगपदुभयत्रान्वेति । एकोपस्थिति-विषयोभयपरत्वन्तु युगपदेव पुरुषेऽन्वेति । न चैवं सति वाक्यभेदः । अन्वयबोधद्वयानङ्गी-कारात् । अन्यथा 'देवदत्तयज्ञदत्तौ साध्वसाधू' इत्यत्रापि वाक्यभेदः स्यादिति ।। **गौणाश्र-श्रयणस्येति** ।। मुख्यपरित्यागपूर्वकं गौणाश्रयणस्येत्यर्थः ।

## वाक्यार्थमुक्तावली

**मुख्यत्वमिति** ।। परममुख्यत्वमित्यर्थः ।। **अमुख्येति** ।। परममुख्यत्वरहितेऽपि प्रधानादौ भवद्भिः प्रयोगाङ्गीकारात्तद्वदित्यर्थः ।। **अस्तु सूक्ष्मस्यैवेति** ।। एतेन सूत्रे तुरवधारणे । तदर्हत्वादिति तन्त्रम् । तथा च सूक्ष्ममेव लोकेऽव्यक्तशब्देनोच्यते । तस्य सूक्ष्मस्यैव तदर्हत्वात् प्रकृताव्यक्तशब्दप्रवृत्तिनिमित्ताव्यक्तताऽर्हत्वादिति सूत्रार्थ उक्तो भवति । प्रकृत इति ब्रह्मणो व्यक्तशब्दमुख्यार्थत्वे किमायातमित्यतः सूत्रस्यार्थान्तरमाहेत्यर्थः । भाष्ये सूक्ष्मत्वं चेति च प्रकरणाल्लभ्यते । तुशब्दो विशेषार्थः । ततश्च ब्रह्मैवाव्यक्तशब्दमुख्यवाच्यं तदर्हत्वादव्यक्तशब्द-प्रवृत्तिनिमित्ताव्यक्तताऽर्हत्वात् तद्वत्वादिति यावत् । तदपि कुतः ब्रह्म सूक्ष्मं सूक्ष्मत्वेऽप्यव्यक्तत्वं कुतः सूक्ष्मस्यैवाव्यक्तताऽर्हत्वादिति सूत्रार्थं मनसि निधायात्र यदुक्तमित्यादिना तुशब्दार्थतया भाष्ये मुख्यमित्युक्तम् । तद्व्यावर्त्याशङ्काप्रदर्शनपूर्वकं तात्पर्यतो व्याचष्टे ।। **न च वाच्य-मित्यादिना** ।। **यत्तल्लोकोत्तममिति** ।। अत्र तदिति प्रसिद्धमित्यर्थः । विष्णोः स्वरूप-मित्यन्तमेकं कर्म परमं सूक्ष्मं वेदितव्यमित्यपरम् । तथाचामनन्तादिह कर्मके के आमनन्तीत्यत एषोऽणुरात्मा चेतसा वेदितव्य इत्यध्याहारः । यच्च पृथग्जना अज्ञजना न विदुस्तदेतदिति तच्छब्दद्वयस्यैतच्छब्दस्य च योजना दर्शिता ।। **तदुक्तमिति** ।। गीतातात्पर्य इत्यर्थः ।। **मुख्यवाच्यतामिति** ।। परममुख्यवाच्यतामित्यर्थः ।। **अमुख्यत एवेति** ।। परममुख्यवृत्त्यपेक्षया हीनमुख्यवृत्त्येत्यर्थः ।। **उतान्यस्यैवेति** ।। अमुख्यतयान्यस्यैवेत्यर्थः ।। **गौणेत्यमुख्येयर्थः** ।।

## तत्त्वसुबोधिनी

**अतिसूक्ष्मत्त्वेनेति** ।। अनेन सूक्ष्मत्वं मुख्यमिति । भाष्यगतमुख्यशब्दाभिप्राय उक्तः । अस्तु अतिसूक्ष्मत्वेनाप्यव्यक्तत्वं तथाप्यव्यक्तशब्दस्य तत्राव्यक्तशब्दस्य मुख्यत्वं कुत इत्यत

(तत्त्वप्रबोधिनी)

आह ॥ **अतिशयेनेति** ॥ जीवशब्दप्रवृत्तिनिमित्तस्य भगवदधीनत्वे प्रमाणमाह ॥ **तदुक्तमिति** ॥ ननु जीवस्य भगवति मुख्यत्वे संसारिणि कथं तत्प्रयोग इत्यत आह ॥ **उपचारेणेति** ॥ **गौणाश्रयणस्येति** ॥ अमुख्याश्रयणस्येत्यर्थः ।

## वाक्यार्थविवरणम्

**वाक्यभेद इति** ॥ अर्थैकत्वादेकवाक्यमित्युक्तत्वादिति भावः ।

## वाक्यार्थमञ्जरी

सूक्ष्मन्तु सूक्ष्ममेवाव्यक्तशब्दवाच्यं ब्रह्म चातिसूक्ष्ममिति तदेव मुख्यतोऽव्यक्तपदवाच्यम् । अव्यक्तत्वस्यैवाव्यक्तपदनिमित्तत्वात्कथं सूक्ष्ममव्यक्तपदवाच्यमित्यत उक्तम् ॥ **तदर्हत्वादिति** ॥ तस्य सूक्ष्मत्वस्यैवाव्यक्तशब्दप्रवृत्तिनिमित्ताव्यक्ततार्हत्वात् सूक्ष्ममेवाव्यक्तपदवाच्यमित्यर्थः । कुत इत्यत आह ॥ **अव्यक्तत्वोपयोगीति** ॥ अणुर्वेदितव्य इत्यन्वयः । पृथग्जनाः पामराः । तदुक्तं गीतातात्पर्ये । प्राणधारणहेतुतो जीवानामिति सम्बन्धः जीवप्राणधारण इति धातोरिति भावः ॥ **वाक्यभेद इति** ॥ अर्थैकत्वादेकं वाक्यमित्युक्तेरिति भावः ॥ **प्रधानविशिष्टेति** ॥ प्राधान्येनोभयग्रहण एव तस्य दोषत्वमिति भावः ॥ **गौणाश्रयणस्येति** ॥ अमुख्याश्रयणस्येत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ तदधीनत्वादर्थवत् ॐ ॥ ३ ॥**

**तदधीनत्वाच्चाव्यक्तत्वादीनां तस्यैवाव्यक्तत्वपरावरत्वादिकमर्थवत् ।**

**'यदधीनो गुणो यस्य तद्गुणी सोऽभिधीयते ।**
**यथा जीवः परात्मेति यथा राजा जयीत्यपि' इति च स्कान्दे ॥**

## सत्तर्कदीपावली

**कथमन्यथा राज्ञि जयशब्दप्रयोगो अतिबहुभिः । यद्भृत्यविषयं तदाह ॥ यदधीन इति ॥ यथा परात्मा जीव इत्युच्यते । अनेन जीवेनेत्यादावित्यर्थः ।**

## तत्त्वप्रदीपिका

तदधीनत्वादर्थवत् । तदधीनत्वाच्चाव्यक्तादेरव्यक्तपरावरत्वादिधर्माणां तस्यैवाव्यक्तत्वादि-धर्मजातं मुख्यम् । अतस्तस्यैवाव्यक्तादिशब्दजातमर्थवत् । अव्यक्तस्थं तद्रूपमव्यक्त-स्याप्यव्यक्तत्वं महतः परत्वं चाऽपादयतीति 'महतः परमव्यक्तम्' इत्युच्यते । तदेव तस्य पुरुषादवरत्वं साधयतीत्यवरशब्दार्थः । न तु स्वयमवरत्वात् । यथाऽमृतत्वापादकत्वादमृत-मित्युच्यते मृतिशीलत्वापादकत्वाच्च मृत्युरिति, एवम् । 'यथा जीवः परात्मेति' । अयमर्थः । यथा जीवगुणस्य प्राणधारणस्य परमात्माधीनत्वात्परमात्मा जीव इत्युच्यते 'अनेन जीवे-नाऽत्मनाऽनुप्रविश्य' इत्यादौ । न तु तत्र संसारिप्रवेशविवक्षा । 'तत्तेज ऐक्षत' 'ता आप ऐक्षन्त' 'इमास्तिस्रो देवताः' इत्यादिना पूर्वमेव तत्र संसारिस्थित्यवगमात् । अनेनैव न्यायेन दुःखित्वादिशब्दा अपि परमात्मनि परममुख्यत्वेन व्युत्पादिता भवन्ति । स्वातन्त्र्यस्य प्रवृत्तिहेतोस्तत्रैव विद्यमानत्वात् ॥

## तत्त्वप्रकाशिका

नन्वस्त्वेवं परमात्मन्येवाव्यक्तादिशब्दानां मुख्यत्वम् । तथाप्यव्यक्तात्पुरुषः पर इत्यादौ प्रधानाद्येवोच्यते । न विष्णुः । अव्यक्तादीनां महत्परत्वस्य पुरुषावरत्वस्य दुःखिवद्धत्वादेश्च श्रवणात् । तस्य च प्रधानादावेव सम्भवात् । सर्वप्रमाणविरोधेन परमात्मन्यसम्भवात् । अतो विष्णोः मुख्यार्थत्वेऽपि तद्ग्रहणे परावरत्वादिश्रुतेः नैरर्थ्यादमुख्यमपि प्रधानादिग्राह्यमित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ **तदधीनत्वादिति ॥** नाव्यक्तादिशब्दैः परमात्मनो वाच्यत्व-ग्रहणे परावरत्वादिश्रुतिनैरर्थ्यं येन मुख्यार्थं परित्यज्याऽमुख्यार्थाभ्युपगतिः । किं नाम तस्मिन्नेवावरत्वादिवाचिशब्दजातमर्थवत् । प्रधानादिगतपरावरत्वादिधर्माणां भगवदधीनत्वात् । अन्यगतशब्दार्थनियन्तृत्वं तदधिकरणत्वं चेति द्विधा हि प्रवृत्तिनिमित्तम् । तत्र परमात्मनो निरनिष्टो निरवद्य इत्यादिनावरत्वादिदोषात्यस्पृष्टिनियमात्तदन्यथानुपपत्त्या तत्तन्नियामकत्वेन तत्तच्छब्दवाच्यतापातात् । न च तदवाच्यताऽन्यथोपपत्तिः । 'नामानि सर्वाणि यमाविशन्ति' इत्यादिश्रुतिविरोधात् । न च सङ्कोचः । सर्वाणीत्यस्य निरवकाशत्वात् बाधकाभावाच्चेति भावः । अत्र अव्यक्तत्वग्रहणेनाव्यक्तशब्दस्य द्वेधापि परमात्मनि वृत्तिरिति दर्शयति । अत एव भाष्ये चशब्दः । अनेन प्रधानादेरतिसूक्ष्मत्वाद्यभावेऽपि नामुख्यार्थत्वमल्पपङ्कजेऽपि पद्मे पङ्कज-शब्दस्यामुख्यार्थताऽदर्शनादिति शङ्का च निरस्ता भवति । ननु भवेदेतत्प्रधानादिगतशब्दप्रवृत्ति-निमित्तप्रेरकत्वेनेश्वरस्यावरत्वादिशब्दवाच्यत्वम् । यद्यन्यगतशब्दप्रवृत्तिनिमित्तप्रेरकेऽसौ शब्दो

(तत्त्वप्रकाशिका)

वर्तत इति सिध्येत्तदेव कुत इति तत्राह ॥ **यदधीन इति** ॥ यथा परमात्मा जीवगतप्राणधारणस्य तदधीनत्वेनानेन जीवेन इत्यादौ जीवशब्देनोच्यते । यथा च भृत्यगतजयस्य राजाधीनत्वादसौ जयीत्युच्यते इत्यर्थः । न च अन्यगतशब्दप्रवृत्तिनिमित्तप्रेरके शब्दप्रवृत्तिरमुख्या । राजनि विजयिशब्दस्य बहुलप्रयोगात् यमादौ मृत्युप्रमुखशब्दानां च तथात्वात् बहु(ल)प्रयोगसिद्धस्यैव मुख्यत्वात् । अवरयतीत्यादिव्युत्पत्त्युपपत्तेश्च । तथा च श्रुतिः । स बद्धः स दुःखी स बन्धयति स दुःखयतीति स जीवः सा प्रकृतिः स जीवयति स प्रकरोति सोऽवरः सोऽनित्यः सोऽवरयति सोऽनित्ययति' इत्यादिका । एवं प्रयोगप्रवृत्तिनिमित्तातिशयाभ्यां परमात्मन्येवाव्यक्तादिशब्दानां मुख्यत्वात् मुख्यार्थस्यैव ग्राह्यत्वात् स एवाऽव्यक्तात्पुरुषः पर इत्यादावुच्यते न प्रधानादीत्युक्तम् ॥

## गुर्वर्थदीपिका

परावरत्वादिश्रुतीत्यत्र महतःपरत्वपुरुषादवरत्वप्रतिपादिकेयमेव श्रुतिर्गृह्यते । आदिपदेन दुःखिबद्धत्वादिश्रुतिरपि गृह्यते । सूत्रसमाधेयतया अवरत्वादेरेव वक्तव्यत्वेऽपि भाष्यकृता अव्यक्तत्वस्यैवाऽऽदौ ग्रहणं 'तदधीनत्वात्' इति सूत्रं न केवलमवरत्वादेरेव समाधायकं किन्तु व्यक्तं न भवतीति अव्यक्तमिति प्रसिद्धव्युत्पत्तौ सत्यामेवावरत्वादिप्रायपठितत्वादव्यक्तयति प्रधानमिति अव्यक्तमित्यव्यक्तशब्दस्यापि समाधायकमिति सूचनार्थमित्यभिप्रेत्याह **अत्रेति** ॥ इदं चोपलक्षणम् । तदेवाव्यक्तं महतः परयतीति पर इत्यपि ग्राह्यम् । इति शङ्का च निरस्ता भवतीत्यस्य पद्मान्तरेऽदृष्टस्यान्योन्याधीनत्वस्येह भगवदधीनाव्यक्ते सद्भावेन परोक्तदृष्टान्तवैषम्यादिति भावः । अङ्गीकृत्य चेदमुदितम् । वस्तुतस्तु बहुपङ्कवति तटाके स्थितमपि पङ्कजमल्पपङ्कजपद्मं यावति पङ्के उत्पद्यते तावति पङ्क एवोत्पद्यत इति शङ्कैवानुपपन्नेत्यपि ग्राह्यम् । अवरत्वादिशब्देत्यत्रावरत्वप्रवृत्तिनिमित्तकशब्दो गृह्यते । यथा मारकत्वात् मृत्युपदवाच्यदेवतायां स्थितं मारकत्वं यमाधीनमिति हेतोः तद्वाचकमृत्युपदं यमेऽपि प्रयुज्यते । तथेहापीति भावेनाह **यमादाविति** ॥ अवरयतीत्यादिव्युत्पत्त्युपपत्तेश्चेति वदता न केवलं श्रुतिः किन्तु अवरयतीत्यवर इत्यादि सुब्विभक्तेर्वैयाकरणैरप्यङ्गीकृतत्वादिति सूचितम् । अत्रेयं श्रुतिसूत्रयोः सङ्गतिः । अव्यक्तान्मुख्यत परममुख्यतश्चाव्यक्तशब्दवाच्याधिष्ठेयाधिष्ठातृरूपेण प्रधानविशिष्टपरमात्मनः पुरुषः पर इत्युक्ते प्रधानात्तदन्तस्थनारायणाच्च पुरुषनामकस्य नारायणस्याधिक्यं प्रतीयते । प्रधानस्य प्रधाननियामकहरेश्चावरत्वं प्रतीयते । तत्र पुरुषनामकात्स्वस्मादेव

(गुर्वर्थदीपिका)
स्वाभिन्नप्रधानान्तस्थरूपस्यावरत्वं प्रतीयते । स्वस्मात्तस्मादेव पुरुषस्य परत्वं चात्माश्रयदोषेण 'य इह नानेव पश्यति' इत्यादि श्रुत्या च विरुद्धमिति प्राप्ते भटनिष्ठजयस्य राजाधीनत्वमात्रेण राजा जयतीतिवत् गोष्ठस्थगृष्टीनां देवदत्ताधीनत्वमात्रेण गोमान् देवदत्त इतिवत् कोशस्थधनस्य राजाधीनत्वमात्रेण राजा धनीतिवच्च प्रधाननिष्ठावरत्वस्य तदन्तर्गतभगवदधीनत्वात् सोऽप्य-वरत्ववान् अवरशब्दवाच्यश्च न तु पुरुषादवरत्वस्यैव स्वनिष्ठत्वात् । अव्यक्तात्परत्वव्यपदेशस्तु स्वाधिष्ठानभूतप्रधानं प्रति परत्वादेव । न तु स्वस्मादपि परत्वात् ।

नन्वेवमवरत्वमपि स्वाधिष्ठानप्रकृतेरवरत्वादेव योज्यम् । पञ्चम्यास्तावतैव चरितार्थत्वात् । एवं च तन्निष्ठभगवद्रूपस्यावरत्वाप्राप्तेः 'तदधीनत्वात्' इति सूत्रस्यासङ्गतिरिति चेत् सत्यं, तथा सत्यवरादिशब्दानां भगवत्यमुख्यत्वेन सर्वशब्दमुख्यवाच्यत्वभङ्गप्रसङ्गात्तधीनत्वादिति सूत्रोक्ता वृत्तिराश्रयणीया । प्रकारान्तरेण भगवत्यवरत्वादेरयोगात् स्वस्मिन् स्वपरमत्वस्यासत्त्वेऽपि न हरेः परमशब्दामुख्यार्थता । स्वेतरसकलजगत्परमत्वेनैव तस्य शब्दस्य तत्र सावकाशत्वात् । स्वस्मादन्यस्माच्च सर्वथा अवरत्वरहिते परमात्मनि उक्तवृत्त्यनङ्गीकारे अवरादिशब्दानां केनापि प्रकारेण भगवत्यवकाशासम्भवादवरादिशब्दवाच्यतैव वहिर्गच्छेत् । तच्चायुक्तमिति भावेन भगवान् व्यासः 'तदधीनत्वादर्थवत्' इत्यसूत्रयत् । अतो न परोदीरितश्रुतियुक्तिविरोधः । नापि सर्वशब्दवाच्यत्वभङ्गप्रसङ्गश्च । यदि चाव्यक्तशब्दस्येव प्रायपाठविरोधात्परशब्दस्यापि द्वयी गतिरश्रयणीया 'सूचनात्सूत्रम्' इति मन्यसे? तदा प्रधानगतस्य महतः परत्वस्य प्रधानात्पश्चा-न्महत्तत्वस्रष्टृपुरुषाधीनत्वादस्तु पुरुषस्य परत्वनियन्तृत्वात्परता । महत्तत्त्वाच्च परता । स्वयं स्वशक्त्यैव परः । अन्ये तु परमपुरुषशक्त्यैव परा इति प्रमेयविशेषस्यापि एतत्सूत्रादेव लाभा-त्कृतकृत्यो भगवान् सूत्रकारः । बुद्धेस्सरस्वतीतत्त्वाद्यथा ब्रह्मणोऽपि परस्य बुद्धिपरत्वमुच्यते तथाऽव्यक्तात्परस्यापि महत्परत्वमिति भावः ।

## भावबोधः

**अवरत्वादीति** । अत्राऽऽदिपदेन न केवलं भाष्यगतादिपदगृहीतदुःखित्वादिग्रहणम् । किन्तु साक्षान्महत्परत्वलिङ्गस्य सावकाशत्वज्ञापनाय यत्परावरत्वादीति परत्वमुक्तं तदपि ग्राह्यम् । भाष्ये परावरत्वादीति वाच्येन वाचकशब्दस्योपलक्षणमित्यभिप्रेत्यावरत्वादिवाची-

(भावबोधः)

त्युक्तम् । अवरत्वादिधर्मनियन्तृत्वं तदात्मत्वं चेति द्विविधम् ह्यवरत्वादि । 'निरनिष्टो निरवद्य' इत्यादिश्रुतेः तद्दोषतादात्म्यात्यसृष्टिनियमाद्विष्णौ नियन्तृत्वेनैवावरत्वादिकमित्यापततीति न्यायविवरणं मनसि निधायाऽऽह अन्यगतशब्दार्थनियन्तृत्वमित्यादि । तदधिकरणत्वं चेत्यनेन न्यायविवरणगतं तत्तदात्मत्वं चेत्युक्ततात्पर्यम् । शब्दप्रवृत्तिनिमित्तमित्यनेन तत्रत्यमवरत्वादीत्येतदवरत्वादिवाचिशब्दप्रवृत्तिनिमित्तमिति व्याख्यातम् । तत्तच्छब्दवाच्यतापातादित्यनेन तद्गतमवरत्वादिकमापततीत्येतदवरत्ववाचकशब्दवाच्यत्वमापततीति व्याख्यातमिति ज्ञातव्यम् । 'नामानि सर्वाणि यमाविशन्ति' इति श्रुतिबलाच्चेति न्यायविवरणं तन्निवर्तनीयाशङ्कानिरासपूर्वकं व्याचष्टे– **न च तदवाच्यतयेत्यादिना** ।। श्रुतिद्वयस्यापि निरवकाशत्वादिति न्यायविवरणं तन्निवर्तनीयाशङ्काप्रदर्शनपूर्वकं व्याचष्टे– **न च सङ्कोच इत्यादिना** ।। उपलक्षणञ्चैतत् । 'निरनिष्ट' इत्यस्यापि निरवकाशत्वादित्यपि द्रष्टव्यम् ।

ननु तर्हि 'न हिंस्यात् सर्वा भूतानि' इति 'केवलो निर्गुणश्च' इत्यादावपि सङ्कोचो न स्यादित्यत आह– **बाधकाभावाच्चेति** ।। अत एव भाष्ये च शब्द इति । सूक्ष्मत्वं त्वित्यक्ताव्यक्तशब्दप्रवृत्तिनिमित्ताधिकरणत्वसमुच्चयार्थमित्यर्थः । अव्यक्तत्वादीनामित्यादिपदोक्तावरत्वादौ तु सोऽवरयतीत्यादिकर्तृव्युत्पत्तिसमुच्चय इति भावः । इति शङ्का निरस्ता भवतीति । अव्यक्तत्वादिग्रहणेनेत्यनुवर्तते । तथा च पूर्वं नाल्पप्रवृत्तिनिमित्तत्वमात्रं प्रधानस्याव्यक्तशब्दामुख्यार्थत्वे हेतुत्वेनाभिप्रेतम् । किन्त्वव्यक्तशब्दप्रवृत्तिनिमित्ताव्यक्तत्वस्य पराधीनत्वमपीति भावः । अभ्युपेत्य चेदमुदितम् । भृत्यादौ जयीप्रभृतिशब्दानाम् अमुख्यत्वेऽन्याधीनप्रवृत्तिनिमित्तकत्वमात्रस्याल्पज्ञानादौ विद्वदादिशब्दानाममुख्यत्वे प्रवृत्तिनिमित्ताल्पत्वमात्रस्य निमित्तत्वदर्शनात् । अल्पकअपङ्कजपद्मादौ पङ्कजादिशब्दानां योगरूढत्वेन रूढिनिमित्तपद्मत्वादिजातौ तारतम्याभावेन तदपेक्षयाऽमुख्यत्वाभावेऽपि अवयवार्थाल्पत्वप्रयुक्तामुख्यत्वस्याल्पज्ञादौ विद्वदादिशब्दानामिव सत्त्वेन व्यभिचाराभावाच्च प्रधानादेरव्यक्तादिशब्दामुख्यार्थत्वे प्रत्येकमुभयोरपि हेतुत्वाविरोधाद्यावद्राज्ञीत्यनुव्याख्यानोक्तं हेतुमाह– **राजनीति** ।। 'मृत्युशब्दादिषु प्रसिद्धेश्च' इति न्यायविवरणोक्तहेतुमाह– **यमादाविति** ।। प्रसिद्धत्वात् कर्तृव्युत्पत्तेरिति न्यायविवरणं हृदि निधायाह– **अवरयतीत्यादीति** ।। तथा च श्रुतिरित्यनेन न्यायविवरणे प्रसिद्धत्वादित्यस्य श्रुतौ प्रसिद्धत्वादित्यर्थ उक्तो भवति । उपलक्षणमेतत् । न्यायविवरणोदाहृते 'तमेव मृत्युममृतं तदेवं

(भावबोधः)

सर्वात्मना वै हि परं परायणम्' इति भागवतादौ मारयितृमोचकरूपभगवति कर्तृव्युत्पत्तिमभिप्रेत्य मृत्युशब्दामृतशब्दादिप्रयोगाच्चेत्यपि द्रष्टव्यम् । तत्र मृत्युआदिशब्दानामौपचारिकत्वमिति शङ्का उपचारकल्पनायाश्च क्लिष्टत्वात् प्रमाणाभावाच्चेति न्यायविवरण एव परिहृतेति ।

## भावदीपः

मुख्यासम्भवोऽसिद्ध इति शङ्कते ॥ **नन्विति** ॥ **परावरत्वादि श्रुतेरिति** ॥ परशब्दः परत्वश्रुतिः । अव्यक्तादिति पञ्चमी त्ववरत्वाक्षेपकावधित्वावचित्वादवरत्वश्रुतिरित्युच्यत इति ध्येयम् । उक्तशङ्कानिवृत्तिपूर्वं तस्यैवेति सूत्रांशभाष्यं व्याचष्टे ॥ **नाव्यक्तेति** ॥ तस्येति पदं सप्तम्यन्तं व्याचष्टे ॥ **तस्मिन्निति** ॥ तदित्यादिभाष्यार्थमाह ॥ **प्रधानेति** ॥ अवरत्वसमवायादेरवरादिशब्दप्रवृत्तिहेतोरीशेऽभावेन तच्छब्दवाच्यता नेत्यस्य किमुत्तरमनेनोक्तं स्यादित्यतः अवरत्वादिधर्मनियन्तृत्वं तत्तादात्म्यवत्त्वं चेति द्विवि(धं ह्यवरत्वादि)धमवत्त्वं निरनिष्टो निरवद्य इत्यादिश्रुतेः तत्तद्दोषतादात्म्यात्यस्पृष्टिनियमाद्विष्णोः नामानि सर्वाणि यमाविशन्तीति श्रुतिबलाच्च नियन्तृत्वमवरत्वादिकमित्यापतति । श्रुतिद्वयस्यापि निरवकाशत्वादिति न्यायविवरणमत्र योजयति ॥ **अन्यगतेति** ॥ द्विधा हीति हिशब्देन भाष्ये वक्ष्यमाणप्रसिद्धिर्दर्शिता । अस्त्ववरत्वादिवाधकात्सङ्कोच इति तत्राऽऽह ॥ **बाधकेति** ॥ तस्य समाहितत्वादिति भावः । ननु भाष्ये तदधीनत्वाच्चावरत्वादीनामिति वाच्येऽव्यक्तत्वादीनामित्याद्युक्तिः किमर्था । अव्यक्तशब्दप्रवृत्तिनिमित्तस्य सूक्ष्मं तु इत्यत्रेशे प्रतिपादनेन तस्मिन् शब्दे अमुख्यत्वशङ्कानुदयादित्यत आह ॥ **अत्राव्यक्तत्वेति** ॥ अत एव पूर्वनिमित्तस्योक्तत्वादेवेत्यर्थः । प्राचीननिमित्तेनैव अव्यक्तादिशब्दस्येशे मुख्यत्वोपपत्तौ तदधीनत्वन्यायः किमर्थं तत्र सञ्चारित इत्यत आह ॥ **प्रधानादेरिति** ॥ एतच्च तुष्यतु दुर्जन इति न्यायेनोक्तम् । वस्तुतस्तु प्रवृत्तिनिमित्तस्य हरौ मुख्यत्वेनैव मुख्यत्वोपपत्तेरिति वक्ष्यमाणत्वेन तन्न्यायस्याव्यभिचारात् । पद्मत्वजातेरेव निमित्तत्वेन विवक्षिततया तस्याल्पपङ्कजेऽपि सत्वेन अमुख्यत्वानापत्तेः । अन्यथाऽग्रेतनवाक्यविरोधादिति ध्येयम् ॥ **निरस्तेति** ॥ अव्यक्तत्वग्रहणेनेत्यनुषङ्गः । लौकिकं च दृष्टान्तं व्यनक्ति ॥ **यथा चेति** ॥ अभिधीयत इत्युक्ताभिधावृत्तिं साधयितुं न हि भृत्यस्य विजयिशब्दस्तावत्प्रयुज्यते ॥ यावद्राज्ञ्यन्यगत्वेऽपि स्वातन्त्र्याभासमात्रत इत्यनुभाष्योक्तमत्र योजयितुं शङ्कामाह ॥ **न चेति** ॥ मृत्युशब्दादिषु प्रसिद्धेश्च

(भावदीपः)

प्रसिद्धत्वाच्च कर्तृव्युत्पत्तेरिति न्यायविवरणोक्तमाह ॥ **यमादावित्यादिना** ॥ स्वातन्त्र्येण निमित्तेन मुख्यत्वादित्यर्थः । यद्यपि न्यायविवरणे तमेव मृत्युममृतमिति हरावेव मृत्युप्रभृति-शब्दस्य श्रुतौ प्रसिद्धिर्दर्शिता । तथाप्येतदुदाहरणान्तरमित्यदोषः । नियामकाभावादन्यथापि व्युत्पत्तिः स्यादित्यतो माण्डूकभाष्योक्तश्रुतिमाह ॥ **तथाचेति** ॥ एतेन प्रसिद्धेश्चेत्युक्त-प्रसिद्धिरुपपादिता । एतच्चावरत्वाक्षेपकावधित्ववाचिपञ्चमीभिन्नावरादिशब्दविषयम् ॥ **स एवेति** ॥ प्रधानादिविशिष्ट एवेत्यर्थः ॥ **न प्रधानादीति** ॥ प्रधानाद्येवेत्यर्थः । यद्वा मुख्यत्वा-दित्यादिमुख्यशब्दस्य परममुख्यार्थत्वे तु यथान्यासमेव योज्यम् । अन्यथा अन्यस्यापि वाच्य-त्वाभ्युपगमादित्यादिपूर्वेण विरोधात् । एवमग्रेऽपि विष्णोरेवेत्यादौ ध्येयम् ॥

## अभिनवचन्द्रिका

**महत्परत्वस्येति** ॥ यद्यपि महत्वपरत्वं विष्णोर्न विरुद्धं तथापि महत्परत्वस्याव्यक्त-लिङ्गत्वेन प्रसिद्धत्वात् प्रसिद्धिविरोध इति भावेन तदुपन्यासः कृतः । **अत एव भाष्ये चशब्द इति** ॥ इतः परं टीकायां श्रूयमाणम्, 'एतेन प्रधानादे'रित्यादि 'भवति' इत्यन्तं वाक्यं नात्रत्यम् । किन्तु पूर्वसूत्रटीकागतं लेखकदोषादत्र पतितमिति द्रष्टव्यम् । अव्यक्तशब्दस्य द्वेधा प्रवृत्तिप्रदर्शनेनोक्तशङ्कानिरासाऽभावात् ।

## वाक्यार्थमुक्तावली

मुख्यासम्भवोऽसिद्ध इति शङ्कते ॥ **नन्विति** ॥ **परावरत्वादीति** ॥ पुरुषः पर इति परत्वश्रुतिः स्पष्टा । अव्यक्तादिति पञ्चमी त्ववरत्वाक्षेपकावधित्ववाचित्वादवरत्वश्रुतिरित्युच्यत इत्यवधेयम् ॥ **भाष्ये तस्यैवेति** ॥ तस्मिन्नित्यर्थः । परावरत्वादिकमिति लक्षणया तत्प्रतिपादकशब्दजातमित्यर्थः ॥ **इति वदन् उक्तशङ्कापरिहारकतया व्याचष्टे नाव्यक्तादि-शब्दैरित्यादिना** ॥ ननु परावरादिशब्दप्रवृत्तिनिमित्तं परोवरत्वादि तदन्यत्र गतं तदधीन-मित्येतावता तच्छब्दवाच्यस्य कथं तदपगतमित्यत अवरत्वादिधर्मनियन्तृत्वं तत्तादात्म्यं चेति द्विविधं ह्यवरत्वादि । निरनिष्टो निरवद्य इत्यादिश्रुतेः तद्दोषतादात्म्यास्पृष्टिनियमात् विष्णो-र्नियन्तृत्वेनैवावरत्वादिकमापततीत्यादिन्यायविवरणं मनसि निधाय भाष्यभावमाह अन्यगते-त्यादिना ॥ **बाधकाभावाच्चेति** ॥ अवरत्वादिबाधकस्य परिहृतत्वादिति भावः । नन्वव्यक्त-

(वाक्यार्थमुक्तावली)

शब्दस्य परमात्मन्यव्यक्तत्वप्रवृत्तिनिमित्तत्वयोगेनैव वृत्तेरुपपादित्वादवरत्वादिवदसम्भवाभावात्तेन सहोक्तिर्व्यर्थेत्यत आह ॥ **अव्यक्तेति** ॥ **द्वेधाऽपीति** ॥ परगताव्यक्तत्वनियन्तृत्वेन तदाश्रयत्वेन चेत्यर्थः । अव्यक्तत्वस्य तदधिकरणत्वसमुच्चये चशब्द इत्यर्थः । यद्यप्यवरयतीत्यादि-व्युत्पत्त्युत्पत्तेश्चेति वक्ष्यमाणरीत्यावरादिशब्दानामप्यन्यगतावरत्वनियन्तृत्वेन कर्तृव्युत्पत्त्यावर-त्वाधारत्वेन चेति द्वेधा वृत्तिर्वक्तुं शक्या, तथाप्युक्तद्वैविध्यस्य श्रुतावपरादिशब्देन वक्तुं शक्यत्वेऽप्यव्यक्तात्पुरुषः पर इत्यवरत्वाक्षेपिकावधित्ववाचिपञ्चम्याः कर्तृव्युत्पत्त्ययोगात् । तल्लब्धाव्यक्तगतावरत्वं प्रति नियामकतयैव पञ्चमीवाच्यत्वमिति पञ्चमीरूपावरत्वबोधकशब्द-विवक्षयैकधा वृत्त्युक्तिरिति ज्ञेयम् । स्वतन्त्रावरादिशब्दे तु द्विधापि वृत्तिरिति कर्तृव्युत्पत्ति-समुच्चये च इत्यनुमतमेव ॥ **इति च शङ्का निरस्ता भवतीति** ॥ अव्यक्तत्वग्रहणे नेत्यनुवर्तते । तथा च पूर्वं नाल्पप्रवृत्तिनिमित्तमात्रं प्रधानस्य अव्यक्तशब्दमुख्यवाच्यत्वे हेतुत्वेनाभिप्रेतं किं त्वव्यक्तशब्दप्रवृत्तिनिमित्ताव्यक्तत्वस्य पराधीनत्वमपीति भावः । अभ्युपगम्य चेदमुदितम् । भृत्यादौ जयिप्रभृतिशब्दानां प्रवृत्तिनिमित्तान्याधीनत्वमात्रेण अल्पज्ञे विद्वदादिशब्दानां प्रवृत्ति-निमित्ताल्पतामात्रेण मुख्यत्वदर्शनादल्पपङ्कजादौ पङ्कजादिशब्दानां योगरूढित्वेन रूढिनिमित्त-पद्मत्वादिजातौ तारतम्याभावेन तदपेक्षया मुख्यत्वाभावेऽप्यवयवार्थाल्पत्व प्रयुक्तामुख्यत्व-स्याल्पज्ञान्यादौ विद्वदादीनामिव सत्त्वेन व्यभिचाराभावाच्च । प्रधानादेरव्यक्तशब्दमुख्यार्थत्वे प्रत्येकमपि हेतुत्वाविरोधात् । पङ्कजनौ तारतम्याभावेन प्रवृत्तिनिमित्ताल्पत्वाभावाद्वा न व्यभिचारः । न च सुजाताविव पद्मकोशावित्यादिप्रयोगात्पङ्कतारतम्येन जनावपि तारतम्यमिति वाच्यं कार्यात्मनाऽसतः सत्तालाभो हि जनिर्न च तत्र तारतम्यं वृद्धिविवक्षया सुजाता-वित्यादिप्रयोग इति ॥ **न चान्यगतेति** ॥ प्रवृत्तिनिमित्ताधिकरणापेक्षया । प्रेरकस्य व्यवहित-त्वात्तत्रामुख्यतेति न च वाच्यमित्यर्थः । कुतो न वाच्यमित्यतो–

न हि भृत्यस्य विजयिशब्दस्तावत्प्रयुज्यते ।
यावद्राज्ञोऽन्यगत्वेऽपि स्वातन्त्र्याभासमात्रतः ॥

इत्यनुव्याख्यानं मनसि निधायाह **राजनीति** ॥ मृत्युशब्दादिषु प्रसिद्धेश्च प्रसिद्धत्वाच्च कर्तृव्युत्पत्तेरिति न्यायविवरणोक्तमाह **यमादाविति** ॥ आदिपदेन मृत्युर्यमानुजः प्रोक्त इत्यादेः तेषां ग्रहणम् । तथात्वाद्बहुलप्रयोगात् ॥ **मुख्यत्वादिति** ॥ स्वातन्त्र्येण निमित्तेन

(वाक्यार्थमुक्तावली)

मुख्यत्वादित्यर्थः । अवरयतीत्यवरादिशब्देभ्यः पचाद्यचि कृतेऽवरयतीत्यवर इति व्युत्पत्ति-रित्यर्थः ॥ **श्रुतिरिति** ॥ माण्डूकभाष्योपात्ता श्रुतिरित्यर्थः । उपलक्षणमेतत् । तत्रैव मृत्युममृतं तात दैवं सर्वात्मना वै हि परं परायणमित्यादेश्चेति न्यायविवरणोक्तेर्भागवते कर्तृव्युत्पत्ति-विवक्षया प्रयोगाच्चेति द्रष्टव्यम् ॥ **सूत्रे तत्विति तस्मिन्नेवेति सप्तम्यन्तमन्वेति** ॥ योग्यतया-वरत्वाद्याक्षेपकावधित्वादिति वा पञ्चमीतिशब्दज्ञानमिति लभ्यते । अर्थवत्तत्र नियामकत्व-गुणसमर्पकतया अर्थवच्च व्यर्थं कुतस्तदधीनत्वादानुमानिकपदसन्निधापिताव्यक्तगतावरत्वादे-स्तदधीनत्वादित्यर्थः ॥

## तत्त्वसुबोधिनी

**अवरत्वादीति** ॥ अत्रादिपदेन न केवलं भाष्यगतादिपदगृहीतदुःखित्वादिग्रहणं साक्षा-न्महत्परत्वलिङ्गस्य सावकाशत्वज्ञापनाय यत्परावरत्वादिति परत्वमुक्तं तदपि ग्राह्यम् । भाष्ये परावरत्वादिति वाच्येन वाचकशब्दस्य उपलक्षणमभिप्रेत्यावरत्वादिवाचीत्युक्तम् । ननु प्रधानादिगतप्रवृत्तिनिमित्तस्य अवरत्वादेर्भगवदधीनत्वेऽपि तद्गत्वाभावात् न शब्दस्य तत्र मुख्यवृत्तिरित्यतः तद्गतावरत्वमात्रं शब्दवृत्तौ न हेतुः किन्तु स्वातन्त्र्यमपीत्याह ॥ **अन्य-गतेति** ॥ तदन्यथानुपपत्या दोषात्यसृष्टिनियमान्यथानुपपत्त्या ॥ **सर्वाणीत्यस्येति** ॥ उपलक्षणं चैतत् । निरनिष्ट इत्यस्यापि निरवकाशत्वादित्यपि द्रष्टव्यम् । ननु 'न हिंस्यात्सर्वाभूतानि' केवलो निर्गुणश्च इत्यादावपि सङ्कोचो न स्यात् इत्यत आह ॥ **बाधकाभावाच्चेति** ॥ तत्र गुणपूर्णत्वप्रतिपादकविशेषप्रमाणरूपबाधकवत् अग्नीषोमीयहिंसान्तरप्रतिपादकविशेषप्रमाणरूप-बाधकवच्च प्रकृते तादृशबाधकाभावादित्यर्थः । ननु भाष्ये अवरत्वादिकमेव वक्तव्यं किम-व्यक्तत्वग्रहणेनेत्यत आह ॥ **अत्रेति** ॥ **द्वेधापीति** ॥ प्रवृत्तिनिमित्तस्याव्यक्तत्वस्य तद्गतत्वेन च द्विधेत्यर्थः । अत्र ज्ञापकमाह ॥ **अत एवेति** ॥ यतोऽव्यक्तशब्दस्य द्विधा वृत्तिः अत एवेत्यर्थः ॥ **भाष्ये चशब्द इति** ॥ सूक्ष्मं त्वित्युक्ताव्यक्तशब्दप्रवृत्तिनिमित्ताधिकरणत्वसमुच्चयार्थं भाष्ये तदधीनत्वाच्चेति चशब्द इत्यर्थः । सूत्रे तु अवरत्वादिवाचिशब्दजातापेक्षया चशब्दाभाव इति ज्ञेयम् ॥ **इति शङ्का च निरस्ता भवतीति** ॥ अव्यक्तत्वादिग्रहणेनेत्यनुवर्तते । तथा च पूर्वं नाल्पप्रवृत्तिनिमित्तत्वमात्रं प्रधानस्य अव्यक्तशब्दामुख्यार्थत्वे हेतुत्वेनाभिप्रेतं किन्तु अव्यक्त-शब्दप्रवृत्तिनिमित्ताव्यक्तत्वस्य पराधीनत्वमपीति भावः । अभ्युपेत्येदमुदितम् । भृत्यादौ

(तत्त्वप्रबोधिनी)
जयिप्रभृतिशब्दानां मुख्यत्वे अन्याधीनप्रवृत्तिनिमित्तकत्वमात्रस्याल्पज्ञादौ विद्वदादिशब्दानाममुख्यप्रवृत्तिनिमित्तात्पमात्रस्य निमित्तत्वमात्रदर्शनात् । अल्पपङ्कजपद्मादौ पङ्कजादिशब्दानां योगरूढत्वेन रूढिनिमित्तपद्मजादिजातौ तारतम्याभावेन तदपेक्षया मुख्यत्वाभावेऽपि अवयवार्थाल्पत्वप्रयुक्तामुख्यत्वस्याल्पादौ विद्वदादिशब्दानामिव सत्त्वेन व्यभिचाराभावाच्च प्रधानादेरव्यक्तादिशब्दमुख्यार्थत्वे प्रत्येकमुभयोरपि हेतुत्वविरोधादिति ॥ **तथात्वाच्चेति** ॥ बहुलप्रयोगसिद्धत्वादित्यर्थः । अस्तु बहुलप्रयोगः । तथापि मुख्यत्वं कुतः इत्यत आह ॥ **बहुलेति** ॥ न केवलं बहुलप्रयोगः किं तु अवरत्वादिव्युत्पत्तिरप्यस्तीत्याह ॥ **अवरयतीत्यादीति** ॥ अन्यनिष्टदुःखादिकर्तृत्वाद्दुःखादिशब्दवृत्तिः ।

## वाक्यार्थविवरणम्

ननु यत्र शब्दतः अवरत्वं प्रतीयते तत्र कर्तृव्युत्पत्त्याऽस्त्ववरशब्दव्याख्यानम् । यत्र तु अर्थादवरत्वं प्रतीयते 'अव्यक्तात्पुरुषः परः' इत्यादौ तत्र कथम् । न हि शब्दवदुत्पत्तिव्याख्यातुमर्हतीति चेदुच्यते । अव्यक्तादिति पञ्चम्यैवावधित्वं प्रतीयत इति । तस्या एवावरत्ववाचकत्वात् । तथा च भगवत्पक्षेऽव्यक्तापेक्षया पुरुषः परः उत्तम इति न वाक्यार्थः । किं तु सूक्ष्मत्वेनाव्यक्तः । ङसीति पञ्चमीविभक्त्या देशभूतस्य अत् इत्यस्यावरत्वनियामकत्वमर्थः । तथाचाव्यक्तस्तन्निष्ठावरत्वनियामकः पुरुषः पूर्णषड्गुणः परः सर्वोत्तम इत्येव पदसमन्वयेनार्थोपपत्तेः । प्रसिद्धाव्यक्तस्य परममुख्यया वृत्त्या वाच्यत्वपक्ष एव यथास्थितार्थाङ्गीकार इति द्रष्टव्यम् । परावरत्वं महतः परस्य पुरुषापेक्षयाऽवरत्वं परावरत्वम् ।

## वाक्यार्थमञ्जरी

**परावरत्वेति** ॥ महत्परत्वपुरुषावरत्वप्रतिपादकोदाहृतश्रुतिवैयर्थ्यादिति भावः । ॐ तदधीनत्वादर्थवत् ॐ । अवरत्वादिवाचिशब्दजातं भगवत्यर्थवत्तद्वाचकमिति यावत् । कुतस्तदधीनत्वादवरादिशब्दप्रवृत्तिनिमित्तावरत्वादिधर्माणां भगवदधीनत्वादित्यर्थः । तथापि कुतोऽर्थवदित्यतोऽर्थापत्तेरेवेत्याह ॥ **अन्यगतेत्यादिति** ॥ अनिष्टस्यावद्यत्वेऽपि सामान्यविशेषभावेन पृथगुक्तिः ॥ **अस्पृष्टिनियमादिति** ॥ तथा च न तदधिकरणत्वं तत्र सम्भवतीति भावः । सङ्कोचः तदतिरिक्तनामपरत्वरूपः ॥ **निरवकाशत्वादिति** ॥ सर्वशब्देनैव सर्वनामता-

(वाक्यार्थमञ्जरी)
लाभे पुनर्बहुवचनप्रयोगेण तस्यासङ्कुचितत्वं सूचयति । अन्यथा तद्वैय्यर्थ्यमिति भावः । तर्हि न हिंस्यात्सर्वभूतानीत्यत्राप्यसङ्कोचः स्यादित्यत आह ।। **बाधकाभावाच्चेति** ।। तत्र चाग्निषोमीयं पशुमालभेतेत्यादिकं बाधकमस्तीति भावः । अवरत्वादिश्रुतिवैय्यर्थ्यस्यैव शङ्कितत्वेनाव्यक्त-ग्रहणमनर्थकमित्यत आह ।। **अत्रेति** ।। **च शब्द इति** ।। न केवलं सूक्ष्ममित्युक्ताव्यक्त-समुच्चायक इत्यर्थः । पङ्कजे पङ्कजन्ये ।। **इति शङ्का च निरस्तेति** ।। अव्यक्तग्रहणेनेत्यनुवर्तते । तथा च पूर्वं नाल्पप्रवृत्तिनिमित्तत्वमात्रप्रधानस्याव्यक्तशब्दमुख्यार्थत्वे हेतुत्वेनोक्तं किन्त्वव्यक्त-शब्दप्रवृत्तिनिमित्ताव्यक्तत्वस्य पराधीनत्वमपीति भावः । अभ्युपेत्य चेदमुदितं भृत्यादौ जय-प्रभृतिशब्दानाममुख्यत्वेऽन्याधीनप्रवृत्तिनिमित्तकत्वमात्रस्य तथाल्पज्ञानादिमति विद्वदादि-शब्दानाममुख्यत्वे प्रवृत्तिनिमित्ताल्पत्वमात्रस्य निमित्तत्वदर्शनात् । अल्पपङ्कजे पद्मे च पङ्कजशब्दस्य योगरूढत्वेन रूढिनिमित्तपद्मत्वादिजातौ तारतम्याभावेन तदपेक्षया मुख्यत्वाऽ-भावेऽप्यवयवार्थाल्पत्वप्रयुक्तमुख्यत्वस्याल्पज्ञानादिमति विद्वदादिशब्दानामिव सत्त्वेन व्यभिचाराभावाच्च प्रधानादेरव्यक्तादिशब्दमुख्यार्थत्वे प्रत्येकमुभयोरपि हेतुत्वविरोधादिति ध्येयम् । तथात्वात् बहुलप्रयोगसिद्धत्वात् ।। **व्युत्पत्तीति** ।। कर्तृव्युत्पत्तीत्यर्थः । प्रातिपदिका-द्धात्वर्थे बहुलमिष्टवच्चेति धातुसूत्रादवरादिशब्देभ्यस्तत्करणादिके धात्वर्थे चौणादिके णिचि सति तस्या 'अचोञ्णिति' इति प्राप्तवृद्ध्यपवादायेष्टवद्भावस्योक्तत्वेष्टे परतष्टेरिति टिलोपस्य विधानाट्टिलोपे च सति 'सनाद्यन्ता धातव' इति धातुसंज्ञायां पचाद्यचि कृते णेरनिटीति णिलोपे च सति अवरयतीत्यवर इत्यादि सिद्ध्यतीति भावः । बन्धयतीति कृत्वा बद्ध उच्यत इत्यादि योज्यम् ।

## सूत्रभाष्यम्

**।। ॐ ज्ञेयत्वावचनाच्च ॐ ।। ४ ।।**

**अन्यस्य न वाच्यत्वं युज्यते ।।**

## सत्तर्कदीपावली

**यो यं पुरुपार्थमिच्छति तस्य तदवाप्तये तदेवावश्यं विज्ञेयमित्युच्यते एतदेवाक्षरं ब्रह्मेत्यादौ । तदेवात्रोपनिपदि यथावद्वक्तव्यम् । जीवप्रधानादेस्तद्वचनात् । रूढमाह ।। ज्ञेयत्वेति ।।**

## तत्त्वप्रदीपिका

परमात्मनोऽन्यस्य न वाच्यत्वम् ॥

## तत्त्वप्रकाशिका

तदेव युक्त्यन्तरेणोपपादयत्सूत्रमुपन्यस्य तच्छेपं पूरयति ॥ **ज्ञेयत्वेति** ॥ विष्णोरव्या-व्यक्तादिश्रुतिवाच्यत्वम् । न प्रधानादेः । 'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ अमृतस्यैप सेतुः' इति विष्णोरेव मोक्षार्थं ज्ञेयत्ववचनात् । प्रधानादेस्तदभावात् यज्ज्ञानेन मोक्षः तज्ज्ञापन एव वेदस्य प्रवृत्तत्वादिति भावः । तथा च श्रावयति । 'न तादृशी प्रीतिरीड्यस्य विष्णोर्गुणोत्कर्षज्ञातरि यादृशी स्यात् । तत्प्रीणनान्मोक्षमाप्नोति सर्वस्ततो वेदास्तत्पराः सर्व एव' इति ॥

## भावबोधः

मोक्षार्थं ज्ञेयत्ववचनाभावाभावयोरप्रयोजकत्वपरिहारार्थमभिप्रायमाह— **यज्ज्ञानेनेति** ॥ 'अव्यक्तात् पुरुषः परः' इत्यादिवेदस्य विष्ण्वप्रतिपादकत्वेऽन्यप्रतिपादकत्वे वा मोक्षसाधन-ज्ञानजनकत्वं न स्यादिति भावः । विष्णोर्मोक्षहेतुज्ञानविषयत्वेन सकलवेदप्रतिपाद्यत्वे श्रुतिमाह **तथा चेति** ॥

## भावदीपः

आकाङ्क्षां पूरयन् भाष्यं व्याचष्टे ॥ **विष्णोरेवेति** ॥ अन्यार्थं तु जैमिनिरित्यादौ अन्यस्यापि ज्ञेयत्वोक्तेः सौत्रहेतोरसिद्धिनिरासाय उपलक्षणं मत्वा सूत्रार्थं शेषोक्तिपूर्वमाह ॥ **तमेवेति** ॥ इयं च द्युभ्वादिनये विष्णुपरत्वेन निर्णीता । अस्त्वेवं तावतान्यस्यावाच्यत्वं कुत इत्यतो भावमाह ॥ **यज्ज्ञानेनेति** ॥ यद्वा कुत इत्यत आह ॥ **तथा चेति** ॥ श्रावयति श्रुतिर्वक्ति । इयं तत्त्वनिर्णयादावुदाहृता । अनया श्रुत्या सर्वस्य ब्रह्मपरत्वे सिद्धे प्रतिवाक्यं च तत्परत्वस्यादावन्ते च मध्ये च विष्णुः सर्वत्र गीयत इत्यादिवचनसिद्धत्वात् स्वतः प्राप्तमुख्यवृत्तित्यागे च हेत्वाभावाद्विष्णोरेव अव्यक्तादिश्रुतिवाच्यत्वमिति भावः ॥

## वाक्यार्थमुक्तावली

अन्यार्थं तु जैमिनिरित्यादावन्यस्यापि ज्ञेयत्वोक्तेः सौत्रहेतोरसिद्धिनिरासायोपलक्षणं मत्वा सूत्रार्थं शेषोक्तिपूर्वमाह ।। **तमेवेति** ।। ज्ञेयत्ववचनावचनयोरप्रयोजकत्वनिरासायाह ।। **यद् ज्ञानेति** ।। अन्यथा महातात्पर्यविरोध इत्यर्थः । महातात्पर्यमेव कुत इत्यत आह– **तथा चेति** ।। तथा च तद्ब्रह्मैवाव्यक्तशब्दवाच्यं नान्यन्मोक्षार्थं ज्ञेयत्ववचनादानुमानिकस्य तु ज्ञेयत्वा-वचनात्प्रत्युताज्ञेयत्ववचनाद्यदज्ज्ञानेन मोक्षः तद्ज्ञापन एव वेदस्य प्रवृत्तत्वाद्यत्र कुत्रापि न अन्योत्कर्षेणाप्रतिपाद्यान्यप्रतिपादने स्वप्रवृत्तिव्याघातात्स एव सर्वसूत्रमुख्यार्थ इति सूत्रार्थ उक्तो भवति ।

## तत्त्वसुबोधिनी

परमात्मनीत्यत्र प्रमाणमाह ।। **यज्ज्ञानेनेति** ।। अव्यक्तात्पुरुषः परः इत्यादिवेदस्य विष्णु-मप्रति प्रतिपादकत्वे अन्यप्रतिपादकत्वे वा मोक्षज्ञापकज्ञानजनकत्वं न स्यात् । अन्यज्ञानस्य मोक्षजनकत्वाभावादिति भावः । विष्णोः मोक्षहेतुज्ञानविषयत्वेन सकलवेदप्रतिपाद्यत्वे श्रुतिमाह ।। **तथा चेति** ।। यतः परमात्मप्रीणनात् । मोक्षमाप्नोति ततः सर्वे एव वेदाः विष्णुपरा इत्यर्थः ।

## वाक्यार्थमञ्जरी

ब्रह्मैवाव्यक्तशब्दमुख्यार्थो न प्रधानादिः तमेवैकं जानथेति ब्रह्मण एव मुमुक्षुज्ञेयत्ववचनात् अन्या वाचो विमुञ्चथेति प्रधानादेर्ज्ञेयत्वावचनादज्ञेयत्ववचनाच्चेत्यर्थः । श्रुतिमुख्यार्थतदभावौ प्रति मुमुक्षुज्ञेयत्ववचनतदभावयोरप्रयोजकत्वपरिहारार्थमभिप्रायमाह ।। **यज्ज्ञानेनेति** ।। अव्यक्तात्पुरुषः पर इत्यादिवेदस्य ब्रह्माप्रतिपादकत्वेऽन्यप्रतिपादकत्वे वा मोक्षजनकत्वं न स्यादिति भावः । विष्णोर्मोक्षहेतुज्ञानविषयत्वेन सकलवेदप्रतिपाद्यत्वे श्रुतिमाह ।। **तथा चेति** ।। ईड्यस्य विष्णोर्गुणोत्कर्षज्ञातरि यादृशी प्रीतिः स्यात्तादृशी प्रीतिः कर्मादिकारिषु न स्यात् । यतः सर्वोऽपि जनस्तत्प्रीणनाद्विष्णुप्रीतेर्मोक्षमाप्नोति ततः सर्वे वेदा विष्णुपरा एवेत्यर्थः ।

## सूत्रभाष्यम्

**।। ॐ वदतीति चेन्न प्राज्ञो हि ॐ ।। ५ ।।**

(सूत्रभाष्यम्)

'महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यत' (क.उ.१-३-१५) इति ज्ञेयत्वं वदतीति चेन्न । प्राज्ञः परमात्मा हि तत्रोच्यते । 'अणोरणीयान्महतो महीयान्' (क.उ.१-२-२०) इति तस्यैव हि महतो महत्वम् । सर्वस्मात्परस्य महतोऽपि परत्वं युज्यते ॥

## सत्तर्कदीपावली

ननु महतः सुतरां परं जीवं परमात्र प्रधानं च उभयं च द्वयं निचाय्य मुच्यत इति ज्ञेयत्वोक्तेः । तयोरेवात्र वाच्यतया तदुभयविवेकज्ञानं मुक्तिसाधनमिति भावेन सूत्रपूर्वपक्षांशं व्याचष्टे ॥ **वदतीत्यादिना** ॥ महतः परं ध्रुवमित्यत्र परमात्मैवोच्यते परशब्देन । महतो महीयानात्मेत्यात्मनो महतो महत्वप्रसिद्धेः । न चायमात्मा जीवः तस्याणोर्महतो महत्वायोगादिति भावेन सिद्धान्तांशं व्याचष्टे । नन्वस्तु महतो महत्वं परमात्मनः प्रधानस्यापि तत्त्वान्तरपरत्वं तु ततोऽपि । अतो महतः परं प्रधानमेवेत्यत आह ॥ **सर्वस्मादिति** ॥

## तत्त्वप्रकाशिका

उक्तमाक्षिप्य समादधत् सूत्रमुपन्यस्याऽऽक्षेपांशं तावद् व्याचष्टे ॥ **वदतीति** ॥ न प्रधानस्य मोक्षार्थं ज्ञेयत्वे वचनाभावः । 'अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते' इति वचनस्य सद्भावात् । न च वाच्यमत्र प्रधानं प्रतिपाद्यं कुत इति । महत्परत्वलिङ्गादेव । 'महान्तं च समावृत्य प्रधानं समवस्थितम्' इत्यादेः । पूर्वोक्तरीत्या तदपि विष्णुपरतया नेतुं शक्यमिति चेत् । सत्यम् । अन्यस्यापि वाच्यत्वाभ्युपगमात् । (अतः) प्रधानस्यापि मोक्षार्थं ज्ञेयत्ववचनात्तस्यापि मुख्यतो वेदवेद्यतेति भावः । परिहारांशं व्याचष्टे ॥ **नेति** ॥ नैतद्वाक्यबलेन प्रधानस्य मोक्षार्थं ज्ञेयत्वं मन्तव्यम् । यतस्तत्र वाक्ये परमात्मैवोच्यते न प्रधानमित्यर्थः । महतः परत्वलिङ्गात् प्रधानमत्रोच्यत इति । तत्राह ॥ **अणोरिति** ॥ नन्वणोरणीयानिति श्रुतौ सर्वस्मात्स्थूलात् स्थूलत्वमेवोच्यते न महत्तत्वपरत्वम् । स्थूलस्यैवाणुप्रतियोगित्वात् । अतो न महत्परत्वलिङ्गं विष्णौ सावकाशमित्यत आह ॥ **सर्वस्मादिति** ॥ सत्यमत्र सर्वस्मात्स्थूलात् स्थूलत्वं विष्णोरुच्यत इति तथाप्यनेन महत्परत्वं च सिध्यति । यदा खलु सर्वस्मात् स्थूलात्परस्तदा महत्तत्वपरत्वस्य सुतरां युक्तत्वादिति भावः ॥

## भावबोधः

सूत्रभाष्यगत'हि' शब्दार्थः यत इति ॥

## भावदीपः

उक्तमित्येतद्व्यञ्जयन् महत इत्यादि भाष्यं व्याचष्टे ॥ **न प्रधानस्येति** ॥ भाष्ये महतः परमित्यंशोक्तेः उपयोगमाह ॥ **न च वाच्यमित्यादिना** ॥ **इत्यादेरिति** ॥ एकादशगीता-भाष्योक्तादित्यपुराणवाक्यम् ॥ **पूर्वोक्तेति** ॥ तदधीनत्वादर्थवदित्युक्तरीत्येत्यर्थः । तदपि महत्परत्वमपि । तर्हि किमनिष्टं सिद्धान्तेऽपि तस्यानिरासादित्यतो निचाय्येत्याद्यंशोक्ति-तात्पर्यमाह ॥ **अत इति** ॥ निरपवादोक्तलिङ्गादित्यर्थः । नेत्यत्र प्रतियोग्याकाङ्क्षायां पूर्वयोगोक्तं संयोजयति ॥ **नैतदिति** ॥ **हीत्यस्यार्थो यत इति** । तत्रेति भाष्यस्थानुवादः । ननु महत इति पदेन महत्तत्वमेवोच्यतामित्यत आह ॥ **स्थूलस्यैवेति** ॥ **प्रतियोगित्वादिति** ॥ अणोरित्युक्तस्य प्रतिद्वन्द्वित्वात् स्थूलवस्तुन एतत्प्रतिद्वन्द्वितायोग्यत्वादित्यर्थः ॥

## वाक्यार्थमुक्तावली

सर्वस्मात्परस्य महतोऽपि परत्वं युज्यत इति परकीयलिङ्गसावकाशत्वपरोत्तरभाष्यानुसारेण लिङ्गं वक्तुमाह ॥ **न च वाच्यमिति** ॥ **पूर्वोक्तरीत्येति** ॥ अन्यगतं साक्षान्महत्परत्वं प्रति नियामकत्वे पूर्वोक्तरीत्येत्यर्थः ॥ **अतः प्रधानस्येति** ॥ मुख्यार्थत्वेऽपि तीरस्य घोषाधारत्व-वन्मुख्यतो ज्ञेयत्वपरिहारादिति भावः ॥ सूत्रभाष्यगतहिशब्दार्थो **यत इति** ॥ ननु महत इति पदेन महत्वमेवोच्यतामित्यत आह– **स्थूलस्यैवाणुप्रतियोगित्वादिति** ॥ अणोरणीयानित्युक्त-प्रतिद्वन्द्वितया हि महतो महीयानित्युच्यते । स्थूलस्यैवाणुप्रतिद्वन्द्वित्वान्महत इति स्थूलादित्ये-वार्थ इति भावः । एतेन सूत्रे हिशब्दो लिङ्गसावकाशत्वद्योतकः अणोरणीयानिति प्रसिद्धि-सूचकतयापि व्याख्यातः । अत एव भाष्ये तस्य हि महतो महत्वमिति तस्य महतो महत्वं प्रसिद्धमिति व्याख्यातम् । सूत्रे आनुमानिकस्येत्यनुवर्तते ज्ञेयत्वमिति च । हिर्हेतौ । अणोरणीयानिति प्रसिद्धिसूचकश्च । तत्रोच्यत इति शेषः । एवेत्युत्तरसूत्रादाकृष्यते । अत एव टीकायां परमात्मैवेत्युक्तम् । तत्वित्यनुवृत्तिः सिद्धेति चेन्न । गुणसूत्रत्वेन प्रधानसूत्र एवानु-वृत्तिरिति भ्रमवारणाय स्मरणाय वा पुनर्ग्रहणोपपत्तेः । सूत्रान्वयस्तु स्फुटः ।

## तत्त्वसुबोधिनी

ननु महत्परत्वं प्रधानलिङ्गं कुतः इत्यत आह ॥ **महान्तश्चेति** ॥ **पूर्वोक्तरीत्येति** ॥ शब्दप्रवृत्तिनिमित्तस्य भगवदधीनत्वेन शब्दस्य तत्र मुख्यत्वमिति पूर्वोक्तरीत्येत्यर्थः ।

## वाक्यार्थविवरणम्

**अणुप्रतियोगित्वादिति** ॥ ततश्चाणुत्वाभाव एव स्थूलत्वमिति भावः । पृथग्जनः मूर्खजनः ।

## वाक्यार्थमञ्जरी

महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यत इति श्रुतिः प्रधानस्यापि मुमुक्षुज्ञेयत्वं वदतीति चेन्न, हि यस्मात्प्राज्ञो विष्णुरेव तत्रोच्यत इत्यर्थः । ध्रुवं नित्यं निचाय्य आचार्योपदेशेन निश्चित्य मृत्युः संसारः । तल्लिङ्गप्रधाने समर्थयति ॥ **महान्तमिति** ॥ अत्र समावृत्येत्यनेन प्रधानस्य महत्वापेक्षयाधिकपरिमाणोक्त्या तत्परत्वसिद्धिरितिभावः ॥ **अन्यस्यापीति** ॥ प्रयोगप्रवृत्तिनिमित्तावातिशयाभ्यां भगवति परममुख्यत्वेऽपि अन्यत्रापि मुख्यवृत्तिमात्राङ्गीकारेणात्र श्रुतौ महत्परशब्देन प्रधानं ग्राह्यमिति भावः ॥ **स्थूलस्येति** ॥ लोकविरुद्धतया प्रतीतधर्मवत्वेन भगवतोऽचिन्त्यशक्तिप्रतिपादनायैतच्छ्रुतिप्रवृत्तिरिति भावः ॥ **सुतरामिति** ॥ महत्तत्वस्य सापेक्षस्थूलत्वादिति भावः ॥

## सूत्रभाष्यम्

**॥ ॐ प्रकरणात् ॐ ॥ ६ ॥**

**'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्'** (क.उ. १-३-९) इति तस्य **ह्येतत्प्रकरणम्** ॥

## सत्तर्कदीपावली

**ननु प्रकृतिपुरुषयोरुभयोरपि महतः परत्वे महतः परं ध्रुवमित्यत्र पुरुषस्यैव ग्रहणे को**

(तत्त्वकंदीपावली)
हेतुरित्यत आह ॥ प्रकरणादिति ॥ पृथिव्यादिप्रकृत्यन्तनिकाये स्वकीयेऽस्यामुपनिषद्युक्त-वक्ष्यमाणप्रकारेण रथाख्ये पुरुषाख्ये वा श्रीविष्णोः परमस्थाने निष्ठत्ययं जीवराशिरतः सकलमिदम् अहं त्वं च तदायत्तमिति यो विजानाति संसाराध्वनः पारमाप्नोति तत्परं विष्णोः परमं स्थानं क्षीराब्ध्यादौ मुक्तप्राप्यमिति मोक्षदविष्णुप्रकरणत्वात् । महतः परं ध्रुवं निचाय्येति स एव ज्ञेयत्वेनोच्यत इत्यर्थः ।

## तत्त्वप्रकाशिका

ननु विशिष्य महत्परत्वस्य प्रधानलिङ्गस्यामुख्यार्थतां स्वीकृत्याऽनाद्यनन्तादिवाक्यस्य विष्णुपरत्वग्रहणे कारणाभावात् प्रधानमेवात्रोच्यत इत्याशङ्कां परिहरत् सूत्रमुपन्यस्य व्याचष्टे ॥ प्रकरणादिति ॥ नात्र विष्णुग्रहणे कारणाभावो येनान्यस्य वाच्यता शङ्क्येत । एतत्प्रकरणस्य वैष्णवत्वात् । एतत्प्रकरणोक्तार्थोपासकस्य विष्णुपदप्राप्त्युक्त्या तदवगमात् । अन्यप्रकरणत्वे तदयोगादिति भावः । न च लिङ्गात्प्रकरणस्य दौर्बल्येनासाधकत्वम् । लिङ्गस्योक्तरीत्या सावकाशत्वात् प्रकरणस्य निरवकाशत्वात् । निरवकाशप्रकरणस्यापि सावकाशलिङ्गबाधकत्वो-पपत्तेः । न च वाच्यं विशिष्य महत्परत्वलिङ्गं च प्रधानपरे परमात्मनि निरवकाशमिति । प्रधानपरस्यापि 'यो बुद्धेः परतस्तु सः' इत्यादाविव महत्परत्वोक्तिसम्भवात् । पूर्वं महत्परत्वेन परमात्मनोप्रकृतत्वात् प्रधानस्य तद्भावात् तमिति परामर्शेनैतत्सिद्धमित्युक्तार्थविस्मरण-विजृम्भितं साधकमस्माकं न परस्य । सत्यम् । तद्वदत्राप्युभयोक्तिः स्यादिति चेन्न । अविरोध एवोभयार्थताऽभ्युपगमात् । न च प्रकरणस्यापि प्रसङ्गादन्योक्तिसम्भवात्सावकाशत्वेन पुनर्लिङ्ग-मेव प्रबलमिति युक्तम् । प्रासङ्गिकोक्तेरत्र प्रयोजनादर्शनात् । 'अनाद्यनन्तं महतः परं ध्रुवम्' इति 'परो हि देवः पुरुहूतो महत्परः' (महत्तः) इति श्रुतेश्चेति ॥

## गुर्वर्थदीपिका

## भावबोधः

**पूर्वमिति** ॥ अनाद्यनन्तमित्यतः पूर्वस्मिन् 'महतः परमव्यक्तम्' इति वाक्य इत्यर्थः । **इत्युक्तार्थविस्मरणविजृम्भितमिति** ॥ इति चोद्यम् 'अनुमानिकम्' इत्यादिना 'महतः परमव्यक्तम्' इति वाक्यस्य विष्णुपरत्वरूपो योऽर्थ उक्तस्तद्विस्मरणविजृम्भितमित्यर्थः ।

## भावदीपः

प्रकरणादित्यत्र साध्याकाङ्क्षां पूरयति ॥ **नात्रेति** ॥ तस्यैव हि एतत् प्रकरणमिति अस्यार्थमाह ॥ **एतदिति** ॥ हिर्हेताविति सूचितम् । कुतो न शङ्क्येतेत्यतः स इत्यादि पूर्वभाष्यं व्याचष्टे ॥ **एतत्प्रकरणेति** ॥ उक्तशङ्कानिरासकतयाऽपि सर्वस्मात् परस्य महतोऽपि परत्वं युज्यत इति वाक्यमेवात्र योजयति ॥ **प्रधानेति** ॥ **इत्यादाविवेति** ॥ यथा गीतायां तृतीयेऽध्याये **बुद्धेः परान्महदादितोऽपि** परस्य बुद्धिपरत्वमुच्यते तथेत्यर्थः । उक्तं च गीताभाष्ये । न केवलं बुद्धेः परः श्रुत्युक्तप्रकारेणाव्यक्तादपीत्यादि । काठकभाष्ये तु स्वभार्यायाः परत्वं च सिद्धमिति महतः परमित्येवोक्तमित्युक्तम् । शङ्कते ॥ **पूर्वमिति** ॥ अनाद्यनन्तमिति वाक्यात्पूर्वं महतः परमव्यक्तमिति वाक्ये इत्यर्थः । इति चोद्यमिति शेषः ॥ **उक्तार्थेति** ॥ आनुमानिकसूत्र एवाव्यक्तशब्दवाच्यं ब्रह्मेत्युक्तार्थ इत्यर्थः । शङ्कते ॥ **सत्यमिति** ॥ प्रागव्यक्तं ब्रह्मेत्युक्तं सत्यमित्यर्थः ॥ **अविरोध एवेति** ॥ अविरोधे तु ब्रह्मर्थी एतन्मूलतया मता इत्यनुभाष्योक्तेः । इह तु मुक्तिहेतुज्ञानत्वविरोधादन्यवाचित्वमपोद्यत इति भावः । ननु षट्प्रश्ने यथा आत्मत एष प्राणो जायत इत्यादि प्राणप्रकरणे प्रसङ्गाद्धृदि ह्येष आत्मेति जीवोक्तिः तथा विष्णुप्रकरणेऽपि प्रसङ्गादस्तु प्रधानोक्तिरित्याशङ्क्य निरस्यति ॥ **न चेति** ॥ ज्ञानरूपस्य जीवस्यैव विभोर्विषयसम्बन्धोपपत्तौ किमिन्द्रियवृत्तिभिरिति शङ्कानिरासरूपप्रयोजनं हृदि हीतिवाक्येऽस्तीति भावः । स्पष्टां समाख्यां चाऽऽह ॥ **अनादीति** ॥ द्वादशे गीताभाष्योक्ताग्निवेश्यश्रुतेश्चेत्यर्थः । (महत्परः) महतः महत्तत्वात्परः ॥

## अभिनवचन्द्रिका

**पूर्वमिति** ॥ प्रधानस्यापि मोक्षार्थं ज्ञेयत्ववचनमस्तीत्यर्थस्य 'निचाय्य तम्' इति

(अभिनवचन्द्रिका)

वाक्यस्थतच्छब्दरूपं यत्साधकं तत् 'आनुमानिक'मित्येतस्मिन्सूत्रे उक्तो योऽर्थः 'महतः परमव्यक्तम्' इति वाक्यस्य परमात्मपरत्वरूपार्थः तस्य विस्मरणेन विजृंभितमिति हेतो-रस्माकमेव साधकं पूर्ववाक्यस्य परमात्मपरत्वेन तत्परामर्शसम्भवात् परस्य न साधकं पूर्ववाक्यं पूर्वमात्मवत् प्राधान्येन प्रधानस्याऽप्रकृतत्वेन तत्परामर्शासम्भवादिति भावः । **सत्यमिति** ॥ **तद्वदिति** ॥ 'महतःपरमव्यक्तम्' इत्यत्र परमात्मनः प्राधान्येन प्रधानस्याप्राधान्येनोक्तिवत्' निचाय्यतम् इत्यत्रापि उभयोक्तिः किं न स्यादित्यर्थः ॥ **अविरोध एवेति** ॥ विरोधा-भावात्तत्रोभयार्थत्वं 'नान्यः पन्था' इति मोक्षार्थं ज्ञेयत्वस्य भगवदन्यत्र निषेधात् अत्र नोभयार्थत्वमित्यर्थः ॥ **प्रयोजनादर्शनादिति** ॥ उपेक्षानर्हत्वप्रयोजकादर्शनादित्यर्थः । गीताभाष्योदाहृताऽग्निवेश्यश्रुति समाख्यानात् काठकस्थ 'निचाय्य तं मृत्युमुखात्प्रमुच्य त' इति वाक्यस्यापि भगवत्परत्वमेवेत्याह – **अनाद्यनन्तमिति** ॥ **महतः** महत्तत्वात्, परः, **पुरुहूतः** पुरुभिर्हूत इत्यर्थः ।

## वाक्यार्थमुक्तावली

सूत्रे प्राज्ञस्तत्रोच्यत इति साध्यानुवृत्तिमभिप्रेत्य व्याचष्टे ॥ **नात्रेति** ॥ हेत्वंशविवरणपरे तस्य ह्येतत्प्रकरणमिति भाष्ये हिशब्दो यस्मादित्यर्थ इत्यभिप्रेत्य व्याचष्टे– **एतत्प्रकरणस्येति** ॥ प्रकरणस्य वैष्णवत्वं कुत इत्यतः सोऽध्वन इत्यादिसमग्रभाष्यं व्याचष्टे– **एतत्प्रकरणेति** ॥ तेन तद्विष्णोः परमं पदमिति लिङ्गेनैतत्प्रकरणं तस्येति हि प्रसिद्धं खल्विति भाष्यं योजितं भवति ॥ एतेनैव प्रकरणनिरवकाशता नोक्तेति भावेन तद्व्यावर्त्यमाशङ्क्य परिहरति ॥ **न च लिङ्गादित्यादिना** ॥ **उक्तरीत्येति** ॥ सर्वस्मात्परस्येत्युक्तरीत्येर्थः ॥ **विशेषत इति** ॥ महतो महीयानित्यत्र यद्यत् स्थूलं तस्मात्सर्वस्माच्चेत्युक्तरीत्या सर्वस्थूलमध्यपतितं विना विशिष्य-महत्परत्वलिङ्गमित्यर्थः । यद्वा साक्षान्महत्परत्वलिङ्गमित्यर्थः । एतदाशङ्कापरिहारकतयापि सर्वस्मात्परस्येति भाष्यमेवात्र वाक्ये योजयति **प्रधानपरस्यापीति** ॥ ननु व्याख्यानान्तरं तत्रैव कार्यम् । सत्यम् । प्रकरणाद्वाक्यस्य वैष्णवत्वविध्यनन्तरं परकीयलिङ्गसावकाशत्वप्रतिपाद-नावसर इति अत्रैव तदुपपत्तेः ॥ **यो बुद्धेरिति** ॥ अत्र गीतावाक्ये बुद्धिपरमहत्परप्रकृतिपरोऽपि बुद्धेः पर इत्युक्तिवदित्यर्थः । तदुक्तं गीताभाष्ये । **न केवलं बुद्धेः परः श्रुत्युक्तप्रकारेणा-व्यक्तादपीति** ॥ काठकभाष्ये तु स्वभार्यायाः परत्वं सिद्धमिति महतः परः श्रुत्युक्तप्रकारेणा-

(वाक्यार्थमुक्तावली)

व्यक्तादपीति । काठकभाष्ये तु स्वभार्यायाः परत्वं सिद्धमिति महतः परमित्येवोक्तमित्युक्तम् ॥ **पूर्वमिति** ॥ अनाद्यनन्तमित्यतः पूर्वस्मिन् महतः परमिति वाक्ये इत्यर्थः ॥ **तमिति परामर्शेनेति** ॥ निचाय्य तमिति परामर्शेनेत्यर्थः ॥ **इत्युक्तार्थेति** ॥ इति चोद्यमानुमानिकसूत्र एवाव्यक्तशब्दवाच्यं ब्रह्मेत्युक्तार्थेत्यर्थः ॥ **साधकमिति** ॥ मुख्यतया तस्यैव प्रकृतत्वात्तत्परामर्शौचित्यात् । तमिति लिङ्गेन परामर्शगुणलाभाच्चेत्यर्थः ॥ **अविरोध एवेति** ॥ इह तु महतः परं महत्परतयाऽव्यक्तशब्देनोक्तमत एवातीन्द्रियं तद्विष्णोरिति च प्रकृतं तं विष्णुं निचाय्य तमपरोक्षीकृत्य मृत्युमुखात्प्रमुच्यते इति मुक्तिहेतुज्ञानविषयत्वविरोधान्नोभयार्थत्व-मित्यर्थः ॥ एतेन सोऽध्वन इति मोक्षाङ्गज्ञानविषयतयोक्तस्य विष्णोरेव ह्यनाद्यनन्तमहतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यत इत्येतत्प्रकरणम् । तत्रोक्तमोचकत्वास्यानुसन्धानात् अतस्त-च्छब्देन न प्रधानपरामर्शः किन्तु विष्णुरेवेति भाष्यतात्पर्यमुक्तां भवति ॥ **न च प्रकरण-स्यापीति** ॥ षट्प्रश्नोपनिषदि भगवन् कुत एष प्राणो जायते इति प्राणप्रापकतृतीयप्रश्ने हृदि ह्येष आत्मेत्यादेरिवान्योक्तिसम्भवात् इत्यर्थः । प्रयोजनेति षट्प्रश्ने तस्मादेतास्सप्तार्चिष इति समानवायुकृतान्नसमीकरणात्सप्तज्ञानेन्द्रियवृत्युक्तौ । ननु आत्मैव विषयसंसर्गेणताननुभवति किमिन्द्रियवृत्तिभिरिति शङ्कानिरासाय, हृदि ह्येष आत्मा जीवः तिष्ठतीत्येकदेशस्थितस्येन्द्रिय-वृत्तिमन्तरा विषयसंसर्गशक्तिर्नास्तीति शङ्का निरासप्रयोजनवत्प्रयोजनादर्शनादित्यर्थः ॥ **श्रुतेश्चेति** ॥ अनाद्यनन्तवाक्यव्याख्यापरगीताभाष्योपात्ताग्निवेश्यश्रुतेश्चेत्यर्थः ॥ तेनैतत्प्रकरणं तस्य विष्णोरेवेति व्याख्यातानुश्रुतिसिद्धं हीति भाष्यार्थ उक्तो भवति ॥

## तत्त्वसुबोधिनी

एतत्प्रकरणस्य वैष्णवत्वं कुतोऽवगम्यते इत्यत आह ॥ **एतदिति** ॥ **निरवकाशमिति** ॥ अवकाशाभाववदित्यर्थः ॥ **प्रधानपरस्यापीति** ॥ तथा च प्रधानपरस्यापि बुद्धितत्वापेक्षया परत्ववत् प्रधानपरस्य महत्परत्वमुपपद्यत इत्यर्थः ॥ **पूर्वमिति** ॥ अनाद्यनन्तमित्यतः पूर्वस्मिन्महतःपरमच्युतमिति वाक्ये इत्यर्थः ॥ **इत्युक्तार्थविस्मरणविजृम्भितमिति** ॥ इति चोद्यम् उक्तार्थविस्मरणविजृम्भितनिचाय्य वाक्यात् पूर्वस्मिन् महतःपरमिति वाक्ये ब्रह्मैवोच्यते इत्यानुमानिकसूत्र एवोक्तत्वादित्यर्थः ॥ **सत्यं तद्वदिति** ॥ अव्यक्तात्पुरुष इति वाक्यस्य विष्णुप्रधानपरत्ववत् अनाद्यनन्तमिति वाक्यस्यापि विष्णुप्रधानपरत्वमस्त्वित्यर्थः । एवं प्रधानस्यापि मोक्षसाधनं ज्ञानविषयत्वमस्तीति हृदयम् ।

## वाक्यार्थमञ्जरी

विशिष्य साक्षादमुख्यार्थतां परम्पराश्रयणलक्षणाम् ।। ॐ प्रकरणात् ॐ ।। सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इत्येतत्प्रकरणार्थोपासकस्य विष्णुपदप्राप्त्युक्त्या वैष्णवत्वेन निर्णीतात्प्रकरणात् प्राज्ञ एव तत्रोच्यत इत्यर्थः ।। **प्रधानपरस्यापीति** ।। बुध्यपेक्षया परम-महदव्यक्तपरत्वेऽपि यो बुद्धेः परतस्तु स इति गीतायां यो भगवान् बुद्धेः परतो वर्तते स इति विशिष्य बुद्धिपरत्वं यथोच्यते तथात्र प्रधानपरस्यापि विशिष्य महत्परत्वोक्तिरुपपन्नेत्यर्थः ।। **पूर्वमिति** ।। अनाद्यनन्तमित्यतः पूर्वं महतः परमव्यक्तमिति वाक्यादित्यर्थः । तद्भावात् प्रसक्तत्वात् एतत् एतद्वाक्यस्य प्रधानपरत्वमित्युक्तार्थविस्मरणविजृम्भितमिति चोद्यमानुमानिकमित्यादिनोक्तो योऽर्थः महतः परमव्यक्तमिति वाक्यस्य विष्णुपरत्वरूपस्तद्विस्मरणोत्थमित्यर्थः ।। **साधकमस्माकमिति** ।। उक्तरीत्या पूर्वं महत्परत्वेन परमात्मन एव मुख्यतः प्रकृतत्वेन तस्यैव परामर्शो युक्तो नामुख्यतया प्रकृतप्रधानस्येति भावः । शङ्कते । **सत्यमिति** ।। प्रकरणस्यापि सावकाशत्वेनेति सम्बन्धः । इतोऽपि इदं प्रकरणं वैष्णवमेवेत्याह ।। **अनाद्यनन्त इति** ।। इति शब्दान्तं प्रतीकं गृहीत्वा श्रुतिःस्वयमेव व्याख्यातीति ध्येयम् । पुरुषशरीरेषु प्राणादिरूपेण हूयत इति पुरुहूतः ।

## सूत्रभाष्यम्

**।। ॐ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॐ ।। ७ ।।**

त्रयाणामेव पितृसौमनस्यस्वर्ग्याग्निपरमात्मनां प्रश्न उपन्यासश्च ।

'अविज्ञातप्रार्थनं च प्रश्न इत्यभिधीयत' ।। इति वचनान्न विरोधः ।। ७ ।।

## सत्तर्कदीपावली

यथा प्रकरणं महतः परं ध्रुवमित्यादौ भगवतोऽन्यस्य ज्ञेयत्वानुक्तौ प्रमाणम् । एवं प्रश्नोपन्यासावपीत्याह ।। **त्रयाणामिति** ।। ननु पितृसौमनस्यं प्रार्थनीयमेव न प्रष्टव्यम् । अन्यथा तस्य भगवतः अन्यस्यैव प्रश्नोपन्यासविपयत्वेन ज्ञेयत्वापत्तेः पूर्वसूत्रविरोध इत्यत आह ।। **अविज्ञातेति** ।। पितृसौमनस्यस्य तदा तेनाज्ञातत्वात् तद्विषयप्रार्थनं च प्रश्नः । एतादृक्प्रश्नोपन्यासविपयत्वं न ज्ञेयत्वापादकमिति भावः ।।

## तत्त्वप्रदीपिका

इतश्च नान्यस्य वाच्यत्वम् । 'त्रयाणामेव चैवमुपन्यासः प्रश्नश्च' ।

'शान्तसङ्कल्पः सुमना यथा स्यात् वीतमन्युर्गौतमो माऽभि मृत्यो ।
त्वत्प्रसृष्टं माऽभिवदेत्प्रतीतः एतत्त्रयाणां प्रथमं वरं वृणे'

इति नचिकेतसः पितृसौमनस्यप्रार्थनात्मकः प्रश्नः ।

'यथा पुरस्ताद्भविता प्रतीतः औद्दालकिरारुणिर्मत्प्रसृष्टः ।
सुखं रात्रीः शयिता वीतमन्युस्त्वां ददृशिवान् मृत्युमुखात्प्रमुक्तम्'

इति मृत्योरुत्तरोपन्यासः ।

'स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि त्वं श्रद्दधानाय मह्यम्' इत्यादि स्वर्ग्याग्निप्रश्नः ।

'प्र ते ब्रवीमि तदु मे निबोध स्वर्ग्यमग्निं नचिकेतः प्रजानन्' इत्यादिरुपन्यासः ।

'येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके ।
एतद्विद्यामनुशिष्टस्त्वयाऽहम्' इत्यादि परमात्मप्रश्नः ॥

'देवैरत्रापि विचिकित्सितं पुरा न हि सुज्ञेयोऽणुरेष धर्मः' इत्यादिरुपन्यासप्रपञ्चः ।

अत्र मरणं मोक्षः, सर्वशरीरविरहात्मकत्वात्तस्य । एवं त्रयाणामेव प्रश्नोपन्यासौ चैवमेवोपपद्येते । नान्योपन्यासाङ्गीकारे । अथापि परादन्यस्य वाच्यत्वमापतितमिति चेन्न । त्रयाणामेव प्रश्न उपन्यासश्च एवमेव परमात्मन एव ज्ञेयत्वाङ्गीकार एव युज्यत इत्यभिप्रायात् । तथाहि–

'अविद्यायामन्तरे विद्यमानाः स्वयं धीराः पण्डितम्मन्यमाना' इत्यादिनाऽन्यत्सर्वं विनिन्द्य–

'श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः' इत्यादिना परमात्मानं तद्वक्तारं श्रोतारं ज्ञानं च पृथक्पृथक् प्रशस्य तत्स्वरूपमवर्णयत् । अत्रैव तात्पर्यप्रदिदर्शयिषयेवान्यदप्यभिधाय विनिनिन्द । निन्दनार्थमप्यन्यस्य वाच्यत्वमनुज्ञातमिति चेत्सत्यमधिकारिभेदापेक्षया । 'सर्वे वेदा यत्पदमामनंति' इतीहैव चान्यस्यावाच्यत्वं प्रतिज्ञायते ।

## तत्त्वप्रकाशिका

हेत्वन्तरेणानाद्यनन्तादिवाक्येऽन्यस्यापि प्रतिपाद्यतां पराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे ॥ **त्रयाणामेवेति** ॥ न केवलमेतत्प्रकरणस्य वैष्णवत्वेन प्रधानस्याप्रतिपाद्यता किं त्वेतदुपनिषद्यपि पितृसौमनस्यादित्रयस्यैवोपन्यासाच्च । तदेव कुतः । तत्त्रयविषय एव नचिकेतसः प्रश्नात् अपृष्टस्य चोपन्यासायोगादिति भावः । त्रयाणामेवोपन्यास इत्युक्ते त्रयेऽपि प्रधानं किं न स्यादिति शङ्कानिरासाय तत्प्रकारं दर्शयन्नेवमित्याह । तदेव व्याचख्यौ ॥ **पितृसौमनस्येत्यादिना** ॥ येयं प्रेते विचिकित्सेत्यादिना मृतजीवस्यास्तित्वादौ तृतीयप्रश्नस्य प्रवृत्तत्वात्कथं परमात्मप्रश्न इति शङ्का तद्भाष्य एव परिहृता । ननु पितृसौमनस्यं वरत्वेन प्रार्थ्यतेऽतः कथं प्रार्थनं प्रश्न इत्यत आह ॥ **अविज्ञातेति** ॥ यत्प्राप्स्यते न वेत्यविज्ञातं तत्प्रार्थनमपि प्रश्न इत्यधीयते इति वचनान्न प्रार्थनस्यापि प्रश्नत्वोक्तिर्विरुद्धेत्यर्थः ॥

## गुर्वर्थदीपिका

'प्रेते मुक्ते मनुष्ये नियामकत्वेन भगवानस्तीति ज्ञानिनो वदन्ति नास्तीत्यज्ञाः । तस्य नियामकस्य स्वरूपं यथावदहं विद्याम्' इत्यादिकाठकभाष्यवचनं तद्भाष्य इत्यनेन सङ्गृह्णाति । एवञ्च प्रेत इत्यधिकरणसप्तमी । न विषयसप्तमी । प्रकर्षेण इतः प्रेत इति च प्रेतो मुक्तः । ततश्च प्रेते मुक्ते जीवे परमात्मा अस्ति न वेति विचिकित्सेत्यर्थलाभेन परमात्मन एव तत्प्रकरणमिति भावः ।

## भावबोधः

**उपन्यासाच्चेति** ॥ अनेन सूत्रगताद्य 'च'शब्दस्य हेत्वर्थत्वम् । द्वितीयस्य प्रकरणरूपहेतुसमुच्चयार्थत्वं प्रश्नपदस्य हेतुसाधकहेतुपरत्वेन तत्र ''च''शब्दप्रयोजनाभावादित्युक्तं भवति । प्रश्नस्य हेतुसाधकहेतुत्वज्ञापनार्थमेव सूत्रे प्रश्नशब्दस्यान्ते प्रयोगः । भाष्ये च प्रश्ने सतीति निमित्तसप्तम्यन्तत्वमित्यभिप्रेत्य प्रश्नादित्युक्तम् । तद्भाष्य एव परिहृतेति । प्रेते मुक्ते मनुष्ये नियामकत्वेन भगवानस्तीत्यादिना 'येयं प्रेते' इत्यादिवाक्यं परमात्मविषयत्वेन व्याख्याय 'न च मृत्वा यमं प्राप्तस्य नचिकेतसोऽमृतोऽस्ति नास्ति वेति संशयोऽस्ति' इत्यादिना तस्य जीवपरत्व निराकरणादिति भावः ।

## भावदीपः

आद्यश्चो युक्तिसमुच्चय इति मत्वाऽर्थमाह ॥ **न केवलमिति** ॥ **पितृसौमनस्यादीति** ॥ 'वीतमन्युस्त्वां ददृशिवान्मृत्युमुखात् प्रमुक्तम्' इति । 'स्वर्ग्यमग्निं नचिकेतः प्रजानन्' इति । 'देवैरत्रापि विचिकित्सितं किल' इत्येवं रूपस्य पितृसौमनस्यस्वर्ग्याग्निपरमात्मरूपत्रयस्येत्यर्थः । उपन्यासोक्त्यैव प्रधानस्याप्रतिपाद्यतासिद्धौ प्रश्नोक्तिः किमर्थेत्यत आह ॥ **तदेव कुत इति** ॥ उपन्यासस्य त्रितयविषयकत्वसमर्थनं प्रश्नोक्तेः फलमिति दर्शितम् । पितृसौमनस्येत्यादिभाष्यस्य व्यावर्त्योक्तिपूर्वं व्याख्येयं दर्शयति ॥ **त्रयाणामिति** ॥ 'सुमना यथा स्याद्वीतमन्युः' इति 'स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि त्वं' इति 'येयं प्रेते विचिकित्सा मनुष्य' इति, त्रयविषय एवेत्यर्थः । तद्भाष्ये काठकभाष्ये । प्रेते मुक्ते मनुष्ये नियामकत्वेन भगवानस्तीत्यादिना येयं प्रेत इति वाक्यं मुक्तविषयं व्याख्याय न च मृत्वा यमं प्राप्तस्य नचिकेतसो मृतोऽस्ति न वेति संशयोऽस्तीत्यादिना परिहृतेत्यर्थः ॥ **अविज्ञातमिति** ॥ प्राप्स्यत इति वा न वेति वा यदनिर्णीतमित्यर्थः ॥

## अभिनवचन्द्रिका

**तद्भाष्य एव परिहृतेति** ॥ 'प्रेते मुक्ते मनुष्ये नियामकत्वेन भगवानस्ति' इत्यादिना 'येयं प्रेत' इत्यादिवाक्यं परमात्मविषयत्वेन व्याख्याय, 'न च मृत्वा यमं प्राप्तस्य नचिकेतसो मृतोऽस्ति नास्ति वा' इति 'संशयोस्ति' इत्यादिना तस्य जीवपरत्वनिराकरणादिति भावः ।

## वाक्यार्थमुक्तावली

**उपन्यासाच्चेति** ॥ अनेन सौत्राद्यश्चशब्दो हेत्वर्थे । द्वितीयस्तु युक्त्यन्तरसमुच्चयार्थ इत्युक्तं भवति । प्रश्नोपन्याससमुच्चयार्थश्चेति ज्ञेयम् । उपन्यासोक्त्यैव प्रधानस्याप्रतिपाद्यतासिद्धौ प्रश्नोक्तिः । किमर्था अन्ते निर्देशश्च प्रश्नस्यायुक्त इत्यतः प्रश्नस्य तृतीयविषयत्वसाधनाय प्रश्नोक्तिः अत एवाकाङ्क्षाक्रमेण तत्साधकतयान्ते निर्देश इति भावेनाकाङ्क्षामुपस्थापयति **तदेवेति** ॥ त्रितयविषयत्वमेव कुतः प्रधानविषयत्वमपि किं न स्यात् । महतः परत्वस्य तदुपन्यासत्वोपपत्तेरिति भावः । एतत् त्रयविषय एवेति । 'सुमना यथा स्याद्वीतमन्युः गौतमः,

(वाक्यार्थमुक्तावली)
सत्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि' । 'येयं प्रेते विचिकित्सा मनुष्ये, एतद्विद्यामनुशिष्टस्त्वयाहमिति, त्रयविषय एवेत्यर्थः । एवमित्याह सूत्रकारः ॥ **तद्भाष्य एवेति** ॥ न च मृत्वा यमं सम्प्राप्तस्य नचिकेतसो मृतिरस्ति न वेति सन्देहोऽस्तीत्यर्थः । सूत्रे चशब्दयोरर्थः प्रागेवोक्तः । प्राज्ञ इत्यस्ति । एतदुपनिषदीति प्रकरणाल्लभ्यते । एवं च यस्मादेतदुपनिषदि एवम् औद्दालकिरारुणिर्मत्प्रसृष्टः । सुखं रात्रीः शयिता वीतमन्युस्त्वां ददृशिवान् मृत्युमुखात्प्रमुक्तम् । 'प्रते ब्रवीमि तदु मे निबोध स्वर्ग्यमग्निम् । यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीम्योमित्येतत् इत्येवं प्रकारेण त्रयाणामेव, पितृसौमनस्यादीनामुपन्यासोऽस्ति । न तु प्रधानस्य । चतुर्थस्याप्युपन्यासः किं न स्यादिति चेत्प्रश्नोऽपि त्रयाणामेवास्त्यतः प्रश्नबलाच्च प्राज्ञ एवानाद्यनन्तवाक्ये उच्यत इति सूत्रार्थः ।

## तत्त्वसुबोधिनी

**उपन्यासाच्चेति** ॥ अनेन सूत्रगताद्यचशब्दस्य हेत्वर्थत्वं, द्वितीयप्रकरणरूपहेतुसमुच्चयार्थत्वं प्रश्नपदस्य हेतुसाधकहेतुपरत्वे न तत्र चशब्दप्रयोजनाभावात् प्रश्नस्य हेतुसाधकहेतुत्वज्ञापनार्थमेव सूत्रे प्रश्नशब्दस्यान्ते प्रयोगः । भाष्ये प्रश्ने सतीति निमित्तसप्तम्यन्तत्वमभिप्रेत्य प्रश्नादित्युक्तम् । **तद्भाष्य एव परिहृतेति** ॥ प्रेते मुक्ते मनुष्ये नियामकत्वेन भगवान् अस्तीत्यादि तस्य जीवपरत्वनिराकरणादिति भावः ।

## वाक्यार्थमञ्जरी

आद्यः च शब्दो हेतौ, द्वितीयो युक्तिसमुच्चये । एतदुपनिषदि त्रयाणां पितृसौमनस्य स्वर्ग्याग्निब्रह्मणामेवैवं वीतमन्युस्त्वां ददृशिवान्मृत्युमुखात्प्रमुक्त इति स्वर्ग्यमग्निं नचिकेतः प्रजानन्निति देवैरत्रापि विचिकित्सितं किलेत्येवं प्रकारेण क्रमेणोपन्यासो यतोऽतश्च प्राज्ञ एवात्रोच्यते न प्रधानमित्यर्थः । त्रयाणामेवोपन्यासः कुत इत्यत उक्तम् ॥ **प्रश्न इति** ॥ सुमना यथा स्याद्वीतमन्युरिति सत्वमग्निं स्वर्ग्यमध्येपि मृत्यो प्रब्रूहि त्वम्' इति 'येयं प्रेते विचिकित्सा मनुष्ये' इति क्रमेण त्रयविषय एव यतोऽत उपन्यासश्च तृतीयविषय एवेत्यर्थः ॥ **पितृसौमनस्येति** ॥ गौतममनःप्रसादेत्यर्थः । त्रये त्रयमध्ये तत्प्रकारं त्रितयप्रकारमाह सूत्रकारः । व्याचख्यौ व्याचष्टे ॥ **मृतजीवस्येति** ॥ प्रेते मृते मनुष्ये विषयसप्तमीयम् । येयं विचिकित्सा

(वाक्यार्थमञ्जरी)
संशय कुतः यतः एके यं मृतजीवोऽस्तीति वदन्त्येके तु नास्तीति अत इति पूर्वपक्षव्याख्यानं सिद्धान्ते तु प्रेते मुक्ते मनुष्ये भगवान्नियामकत्वेनास्ति न वेत्यादि व्याख्यानं ध्येयम् ॥ **तद्भाप्य एवेति** ॥ नायं संशयो नचिकेतसो युज्यते स्वयं मृत्वा यमं प्राप्तस्य मृतास्तित्वनिश्चया-दित्याशयेन । न च मृत्वा यमं प्राप्तस्य नचिकेतसोऽमृतोऽस्ति न वेति संशयोऽस्तीत्यादिना काठकभाष्ये तस्य जीवपरत्वनिराकरणादिति भावः ॥

## सूत्रभाष्यम्

**॥ ॐ महद्वच ॐ ॥ ८ ॥**

**यथा महच्छब्दो महत्तत्वे प्रसिद्धोऽपि परममहत्त्वात्परमात्मन एव मुख्यः एव-मितरेऽपि ॥**

## सत्तर्कदीपावली

शब्दप्रवृत्तिनिमित्तमुख्यत्वपर्यालोचनया 'महान्तं विभुमात्मानम्' इत्यादाविव महतः परं ध्रुवमित्यादावपि भगवानेव ज्ञेयत्वेनोच्यत इति सिद्ध्यतीत्याह **॥ महद्वचेत्यादिना ॥** यथा भगवन्महत्वमभिहितं तद्वत्तस्य परत्वध्रुवत्वाद्यनन्तत्वादयोऽपीत्यर्थः ॥

## तत्त्वप्रकाशिका

यदुक्तं विष्णोरेव मुख्यतोऽव्यक्तादिशब्दवाच्यत्वमिति तदयुक्तम् । अव्यक्तादिशब्दानां प्रधानादावेव प्रसिद्धत्वात् । न च वाच्यं शब्दप्रवृत्तिनिमित्तस्येश्वरे मुख्यत्वेन तत्र शब्दानां मुख्यत्वमु(यु)क्तमिति । न हि यत्र शब्दः प्रसिद्धस्तत्रामुख्यो मुख्यतः प्रवृत्तिनिमित्तवति मुख्य इति दृष्टचरमित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे **॥ महद्वचेति ॥** च शब्दो दार्ष्टान्तिक-समुच्चयार्थः । युक्तमेवाव्यक्तादिशब्दानां मुख्यतः परमात्मवाचित्वम् । तत्प्रवृत्तिनिमित्तस्य तत्र मुख्यत्वात् । न चान्यत्र प्रसिद्धत्वविरोधः । महान्तं विभुमित्यादौ श्रुतमहच्छब्दस्य महत्तत्वे प्रसिद्धत्वेऽपि तत्प्रवृत्तिनिमित्तस्य (परमात्मनि मुख्यत्वेन मुख्यतस्तद्वाचकत्ववदव्यक्तादि शब्दानामपि प्रधानादौ प्रसिद्धत्वेऽपि प्रवृत्तिनिमित्तमहत्त्वस्य) हरौ मुख्यत्वेन मुख्यत्वोपपत्तिरिति भावः । न च मन्तव्यं प्रवृत्तिनिमित्ताधिक्येन मुख्यतः शब्दवाच्यत्वाभावेऽपि दृष्टान्तोऽस्ति । अतिसहनवति पुरुषे सिंहशब्दस्यामुख्यत्वादिति । न ह्यस्माभिः प्रवृत्तिनिमित्ताधिक्यमात्रेण शब्दस्य मुख्यतः परमात्मवाचित्वमुच्यते किं तु सिद्धे परमात्मवाचित्वे मुख्यत्वमात्रस्य तेन साधनादिति ॥

## गुर्वर्थदीपिका

अतिसहनवति पुरुषे सिंहशब्दस्यामुख्यत्वादिति वदता 'तृतीयो अतिशये' इति वचनात्सहत इति धातोरकारस्य इकारे सति सिंह इति व्युत्पत्तिर्दर्शिता ।

## भावबोधः

**प्रवृत्तिनिमित्तस्य हरौ मुख्यत्वेनेति** ॥ प्रयोगो हि शक्तेर्ज्ञापक एव निमित्तं तु शक्तिविषयतावच्छेदकतया तन्नियामकम् । नियम्यस्य नियामकानुसारित्वादिति भावः । **मुख्यत्वमात्रस्य तेन साधनादिति** ॥ न चैवमपि अल्पपङ्कजादपि पद्मादधिकपङ्कजे पद्मे पङ्कजशब्दस्य मुख्यत्वं स्यादिति वाच्यम्; तस्य तत्र योगरूढत्वेन रूढिनिमित्तपद्मत्वजातावतिशयाभावेनापादकासिद्धेः । अवयवार्थातिशयप्रयुक्तमुख्यत्वापादनस्य बहुज्ञादौ केवलयौगिक विद्वदादिशब्दमुख्यत्वस्यैवेष्टत्वात् । अत एवोक्तं सुधायाम् अवयवार्थो यथा यथोत्कृष्यते तथा तथा योगवृत्तेरपि उत्कर्षेण भाव्यम् । निमित्तवैचित्र्येऽपि नैमित्तिकावैचित्र्यस्यानुपपत्तेरिति भावः ।

## भावदीपः

**प्रवृत्तिनिमित्तस्येति** ॥ सूक्ष्मं तु इत्यत्रोक्तस्येत्यर्थः । निमित्तस्य शब्दशक्तिनियामकत्वेन तस्य मुख्यत्वे शब्दस्यापि मुख्यत्वनियमादिति भावः । एवमितरेऽपीति भाष्यमुत्सूत्रमिति भ्रमं वारयति ॥ **च शब्द इति** ॥ इतरेऽपीति भाष्यं व्याचष्टे ॥ **युक्तमिति** ॥ एवमित्यस्यार्थमाह ॥ **तत्प्रवृत्तीति** ॥ यथेत्यादिभाष्यं व्याचष्टे ॥ **न चान्यत्रेति** ॥ महान्तं विभुमात्मानं मत्वा धीरो न शोचतीति काठक एवेत्यर्थः ॥ **न ह्यस्माभिरिति** ॥ यद्यपि सिंहशब्दो जातिनिमित्तको न यौगिकः तथापि तुष्यतु दुर्जन इति न्यायेनेदं समाधानम् । वस्तुतो निमित्ताधिक्येन मुख्यत्वोक्तौ न व्यभिचार इति ध्येयम् । तस्य शब्दशक्तिनियामकत्वेन तदाधिक्ये मुख्यत्वावश्यम्भावात् । अवयवार्थो यथायथोत्कृष्यते तथा तथा योग वृत्तेरप्युत्कर्षेण भाव्यमिति सुधोक्तेः उत्तरसूत्रावतारणायाभ्युपगमवाद इति ज्ञेयम् ॥

## अभिनवचन्द्रिका

**मुख्यतस्तद्वाचकत्ववदिति** ॥ ननु यथा अव्यक्तशब्दस्य प्रवृत्तिनिमित्तातिशयेऽपि न

(अभिनवचन्द्रिका)

मुख्यत्वमभिमतम्, तथा महच्छब्दस्यापि प्रवृत्तिनिमित्तातिशयेऽपि न परस्य मुख्यत्वमभिमतम् । न हि यत्र शब्दः प्रसिद्धः तत्राऽमुख्यः, मुख्यतः प्रवृत्तिनिमित्तवति मुख्य इति दृष्टचर-मित्यभिधानात् । ततश्च 'महद्वच्च' इति दृष्टान्तीकरणमयुक्तमिति चेत्, सत्यम् प्रवृत्ति-निमित्ताधिक्येन परमात्मनि महच्छब्दस्य मुख्यत्वमित्येतत् परस्य न संमतमिति, तथापि 'महद्वच्च' इति दृष्टान्तीकरणं युज्यते । तथाहि 'महान्तं विभुमात्मानम्' इत्यादिवाक्यं भगव-त्परमिति परस्यापि संमतम् । यदि यत्र शब्दः प्रसिद्धः, तत्र मुख्यः स्यात्, तर्हि अस्मिन्नपि वाक्ये प्रसिद्धार्थोपस्थितौ बाधकमालोच्य प्रसिद्धार्थपरित्यागेन भगवदुपस्थितिः स्यात् न चैवं किंनाम 'महान्तम्' इति श्रवणादेव झटिति महत्त्वगुणयोगितया भगवदुपस्थितिर्भवतीत्यका-मेनापि प्रवृत्तिनिमित्ताधिक्येन शब्दो मुख्य इति अवश्यमङ्गीकार्यत्वात् ॥ **न च मन्तव्यमिति** ॥ मुख्यतः शब्दवाच्यत्वाभावे प्रवृत्तिनिमित्ताधिक्येन यत्साहचर्यं तत्रापि पुरुषलक्षणो दृष्टान्तोऽ-स्तीति न वाच्यमिति भावः ॥ **न ह्यस्माभिरिति** ॥ मुख्यतः परमात्मवाचित्वं न साध्यम्, 'नामानि सर्वाणि' इति श्रुत्या परमात्मवाचित्वस्य सिद्धत्वेन तत्साधन वैयर्थ्यात्, किन्तु मुख्यत्वमात्रं साध्यम् । ततश्च अतिसहनवति पुरुषे सिंहशब्दप्रवृत्तिनिमित्ताऽसद्भावेऽपि वाच्यत्वविशिष्टस्य हेतुत्वेन विवक्षितस्य तस्याऽभावात् न व्यभिचार इति भावः ।

## वाक्यार्थमुक्तावली

महान्तं विभुमात्मानं (मत्वा धीरो न शोचति) इत्यादौ श्रुतमहच्छब्दस्य मुख्यत-स्तद्वाचित्ववदित्यन्वयः ॥ **हरौ मुख्यत्वेनेति** ॥ नियामकसत्वे नियम्यस्यावर्जनीयत्वात् इति भावः । तदुक्तं, सुधायाम् अवयवार्थो यथायथोत्कृष्यते तथा तथा योगवृत्तेरप्युत्कर्षेण भाव्यम् ॥ **निमित्तवैचित्र्ये नैमित्तिकावैचित्र्यस्यानुपपत्तेरिति** ॥ **अति सहनवतीति** ॥ सहनवान् सिंह ततोऽप्यतिशयित सहनवतीत्यर्थः । सहमर्षण इत्यस्य हीदंरूपम् । तृतीयो अतिशय इति सूत्रादस्येकारः । तदुक्तमैतरेयभाष्ये । अभिदस्यमानेऽभ्यस्यमानः तृतीयोऽतिशय इति सूत्रा-दकारस्येकारः । 'मथनाग्निथिलो जज्ञे' 'सहनात्सिंह उच्यते' ॥ **इत्यादिवचेति** ॥ यद्य-प्युणादिसूत्रे सिचेः संज्ञायां हनुमौकश्चेत्यत्र सिश्चतेः कप्रत्ययः । हकारादेशः नुम् च स्यादिति सिंहशब्दो रूढोऽङ्गीकृतः । वृत्तिकारमतरीत्या यौगिकत्वेऽपि 'हिंस हिंसन' इत्यस्माद्धातोः तद्धितमुत्पाद्य वर्णविपर्यय उक्तः ॥ **सिंहो वर्णविपर्ययादिति** ॥ तथापि भाष्यकारैः

(वाक्यार्थमुक्तावली)

प्रमाणानुसारेण सहमान इत्युपन्यस्योक्तत्वात्सह मर्षण इत्यस्य हीदं रूपमिति सुतन्त्रोक्तत्वाच्च टीकायामेवमुक्तम् । केचित्तु यद्यपि सिंहशब्दो जातिनिमित्तको न यौगिकः तथापि सहमर्षण इति धातुजत्वमभ्युपेत्यवादोऽयमित्याहुः ॥ **न ह्यस्माभिरिति** ॥ शब्दशक्तिज्ञापकप्रमाणं विना प्रवृत्तिनिमित्ताधिक्यमात्रेणेत्यर्थः ॥ **सिद्ध इति** ॥ शक्तिग्राहकप्रयोगादिप्रमाणेन परमात्मवाचित्वे प्रमिते तेन प्रवृत्तिनिमित्तेन मुख्यत्वं साध्यते । निमित्तस्य शक्तिविषयतावच्छेदकतया तन्नियामकत्वात् । नियम्यस्य नियामकानुसारित्वात् । तदुक्तं चन्द्रिकायाम् ॥

प्रयोगो ज्ञापकः शक्तेः निमित्तं तु नियामकम् ।
नियामकानुसारित्वं नियम्यस्य च शोभते ॥

इति प्रयोगज्ञापितशक्तिकस्य पङ्कजशब्दस्याल्पपङ्कजापेक्षया बहुपङ्कजे प्रश्ने प्रवृत्तिनिमित्तातिशयवत्यपि मुख्यत्वादर्शनाद्व्यभिचार इति तु प्रागेव निरस्तम् । सूत्रे चशब्दो दार्ष्टान्तिकाव्यक्तादिशब्दसमुच्चायकः । प्राज्ञ इति एवेति वर्तते । महच्छब्दवदितरे शब्दा अपि प्राज्ञे एव मुख्या इति यावत् ।

## तत्त्वसुबोधिनी

**प्रवृतिनिमित्तस्य हरौ मुख्यत्वेनेति** ॥ प्रयोगो हि शक्तेः ज्ञापक एव निमित्तन्तु शक्तिविषयतावच्छेदकतया तन्नियामकं नियम्यस्य नियामकानुसारित्वादिति भावः ।

## वाक्यार्थमञ्जरी

यथामहच्छब्दस्यान्यत्र प्रसिद्धत्वेऽपि महान्तं विभुमित्यत्र महच्छब्दवाच्यं ब्रह्म तथान्यत्र प्रसिद्धाव्यक्तादिशब्दवाच्यं ब्रह्मेत्यर्थः । दृष्टान्तान्तरानुक्तेराह ॥ **दार्ष्टान्तिकेति** ॥ तथा च महद्वदव्यक्तमिति लभ्यत इति भावः । प्रवृत्तिनिमित्तस्य हरौ मुख्यत्वेनेति प्रयोगो हि शक्तिज्ञापकः प्रवृत्तिनिमित्तं तु शक्तिविषयतावच्छेदकतया नियामकं नियम्यस्य तु नियामकानुसारित्वं प्रसिद्धमेवेति भावः ॥ **सहनवतीति** ॥ सहतीति सिंह इति निर्वचनादिति भावः ॥

## सूत्रभाष्यम्

**॥ ॐ चमसवदविशेषात् ॐ ॥ ९ ॥**

(सूत्रभाष्यम्)

यथा चमसशब्दोऽन्यत्र प्रसिद्धोऽपि 'इदं तच्छिर एप ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्न' (बृ.उ.४-२-३) इति श्रुतेः शिरोवाचकः एवमव्यक्तादिशब्दाः सर्वेऽन्यत्र प्रसिद्धा अपि 'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति' (भाल्लवेयश्रुतिः) इत्यादि श्रुतेः परमात्माभिधायका एव ॥ **अविशेषाच्छ्रुतेः** ॥

## सत्तर्कदीपावली

एवं भगवत एव ज्ञेयत्ववचनात् स एवाव्यक्तपुरुषपरावरदुःखिशब्दार्थः । इतोऽपि स एवैतच्छब्दार्थ इत्याह ॥ **चमसवदित्यादिना** ॥ यद्यपि त्रयाणामेवेति सूत्रे भगवतोऽन्यस्य ज्ञेयत्वानुक्तिप्रतिपादनपरे अग्निस्थस्य तस्यैव अग्निशब्दपरममुख्यार्थत्वमुक्तम् । तदन्वितार्थ-स्वार्थाभिधानेन अग्निकाण्डस्य तत्र वाक्यसमन्वयश्च । अनेनैव न्यायेन ज्योतिरादिकर्म-स्वपीन्द्रादिगतस्य भगवत एव तच्छब्दार्थपरममुख्यार्थत्वेन सर्वयज्ञेड्यत्वात् समग्रस्यापि कर्मकाण्डस्य तत्र वाक्यसमन्वयश्च ।

## तत्त्वप्रदीपिका

उपचारचमसत्वमेव शिरसो न मुख्यत इति चेन्न । श्रौतस्य चमसशब्दस्याबाधितविषयस्य मुख्यार्थपरित्यागे कारणाभावात् ।

## तत्त्वप्रकाशिका

ननु भवेदियमव्यक्तादिशब्दानां परमात्मनि मुख्यत्वचिन्ता । यदि तेषां तद्वाचित्वमेव भवेत् । न च तद्युक्तम् । तेषामन्यत्रैव प्रसिद्धत्वात् । न च वक्तव्यमव्यक्तमचलमित्यादिप्रयोगात् तद्वाचित्वावगम इति । वृत्त्यन्तरेणापि प्रयोगोपपत्तेः । न च योगयुक्तप्रयोगेण तन्निश्चयः । सहनवति पुंसि प्रयुक्तस्यापि सिंहशब्दस्य तदवाचकत्वेन दर्शनात् । अतः प्रसिद्धेरेव वाचक-ताध्यवसायकत्वात्तस्याश्च प्रधानादावेव सत्त्वान्नाव्यक्तादिशब्दा विष्णुवाचकाः किमु मुख्या इत्याकांक्षां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **चमसवदिति** ॥ अव्यक्तादिशब्दाः परमात्मवाचका भवन्त्येव । नामानि सर्वाणीति तस्याशेषशब्दवाच्यत्वश्रुतेः । न चान्यत्र प्रसिद्धिविरोधः । यथा खलु चमसशब्दो यज्ञपात्रे प्रसिद्धोऽपि श्रुतिबलेन शिरोवाचकः । तथाऽव्यक्तादिशब्दानां प्रधानादौ प्रसिद्धानामपि श्रुतिबलेन विष्णुवाचकत्वनिश्चयात् । न च वक्तव्यं प्रयोगमात्रस्य वृत्त्यन्तरेणापि सम्भवान्न चमसशब्दः **शिरोवाचक इति** ॥ अभिधानादाविवानुशासनरूपत्वात्

(तत्त्वप्रकाशिका)

न हि गौण्यादिवृत्तीनामनुशासनमस्ति । अन्यथा कलशकर्करादिशब्दानामनुशासनसिद्धानां घटाद्यवाचकत्वप्रसङ्गात् । अथापि स्यात् । अनुशासनरूपत्वाच्छ्रुतिबलेन चमसशब्दस्य शिरो-वाचकत्वेऽपि न तथाऽव्यक्तादिशब्दानां परमात्मवाचित्वम् । नामानीति प्रयोगस्य वृत्त्यन्तरे-णापि सम्भवादिति । मैवम् । नामानि सर्वाणीति श्रुतेरप्यनुशासनरूपत्वेन तत् श्रुतेरविशेषात् । तद्वदस्या अप्यनुशासनरूपत्वात् । न चात्राव्यक्तादिशब्दाश्रवणदोषः । सर्वशब्दसद्भावात् । सङ्कोचे कारणाभावादिति भावः । 'अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' इति व्याख्येयमन्त्रे यदुक्तं तदिदं प्रतीयमानं शिरः कृतः । एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्न इत्यर्थः । एष इति चमस-विवक्षया । 'दक्षिणान्नं वनुते यो न आत्मा' इतिवत् । बिलं मुखादि । तस्माद-व्यक्तादिशब्दवाच्यो हरिर्भवत्येवेति सर्वशब्दवाच्यत्वं तस्यैवोपपन्नमिति सिद्धम् ॥

## गुर्वर्थदीपिका

अनुशासनरूपत्वादित्युपलक्षणम् । शिरसि चमससम्बन्धाभावान्न लक्षणा । पार्श्वे सप्त-छिद्रसहितत्वेनातिविसदृशत्वान्न गौणी च । अतोऽपि मुख्यैव वृत्तिरित्यनुसन्धेयम् । 'दक्षिणान्नं वनुते यो न आत्मा' इति वदित्यत्र यः आत्मा नः अस्मान् वनुते 'वन सम्भजन' इति धातोः भजते अङ्गीकरोति सैव यज्ञे दीयमानदक्षिणा । तदेव यज्ञे दीयमानमन्नं चेति विशेष्य विवक्षया यथा पुल्लिङ्गपदवाच्ये आत्मनि स्त्रीलिङ्गं नपुंसकलिङ्गं च तथेत्यर्थः ॥

## भावबोधः

**दक्षिणान्नं वनुते यो न आत्मेत्यादिवदिति ॥** अत्र वाक्ये यदन्नं न आत्मा तदन्नं दक्षिणा वनुत इति वाक्ययोजनायां यच्छब्दस्यान्नपरत्वेऽपि विधेयात्मत्वविवक्षया य इति पुल्लिङ्गनिर्देशवदिहाप्येष इत्यस्य शिरःपरत्वेऽपि चमसविवक्षया पुँल्लिङ्गनिर्देश इत्यर्थः ।

अत्राद्ये– विष्णोरव्यक्तादिशब्दमुख्यार्थत्वप्रतिज्ञापूर्वकं तत्सम्भावकश्रौतस्मार्तप्रयोगरूप-हेतूक्तिः । द्वितीये– प्रवृत्तिनिमित्तातिशययोगरूपहेतूक्तिः । तृतीये– स्वपक्षे बाधकोद्धारः । चतुर्थे– परपक्षबाधकस्य तदर्थसिद्धस्य स्वपक्षसाधकस्य चोक्तिः । पञ्चमे– तदाक्षेपपरिहारः । षष्ठे– प्राज्ञो हीति पूर्वसूत्रोक्तविष्णुप्रकरणरूपहेतूक्तिः । सप्तमे– अनाद्यनन्तमिति वाक्यस्य प्रधानपरत्वाभावे परमात्मपरत्वे च प्रधानव्यतिरिक्तपरमात्मादीनामेव प्रश्नोपन्यासरूपहेतूक्तिः ।

(भावबोधः)
अष्टमे– पूर्वपक्षसाधकप्रसिद्धेर्मुख्यत्वं प्रत्यप्रयोजकत्वे महच्छब्दरूपदृष्टान्तोक्तिः । नवमे– मुख्यत्वसम्भावकशक्तिमत्त्वेऽनुशासनस्यैव प्रयोजकत्वं न प्रसिद्धेरित्यत्र चमसशब्दरूप-दृष्टान्तोक्तिपूर्वकमव्यक्तादिशब्दानां विष्णौ शक्तिसाधकश्रुतिरूपानुशासनोक्तिरिति सूत्रक्रमः ॥

## भावदीपः

दर्शयति च इत्याद्यसूत्रखण्डेन गतार्थत्वमाशङ्क्याऽऽह ॥ **न चाव्यक्तमिति** ॥ सूक्ष्मं तु इत्यादिना गतार्थत्वमाह ॥ **न च योगयुक्तेत्यादिना** ॥ **सहनवतीति** ॥ षहमर्षण इति धातुजत्वमभ्युपेत्यवादोऽयम् । जातिनिमित्तकत्वात्सिंहशब्दस्य । अविशेषात् श्रुतेरित्येतद्व्यावर्त्यं पूर्वं व्याचष्टे ॥ **अथापि स्यादिति** ॥ भाष्योक्तश्रुत्यर्थमाह ॥ **इति व्याख्येयमन्त्र** इति ॥ काण्वश्रुतौ चतुर्थेऽध्याये शिशुब्राह्मणे सप्ताक्षिविद्यायामुक्तेऽर्थे सम्मतित्वेन तदेष श्लोको भवति अर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन्यशो निहितं विश्वरूपमित्यादि मन्त्रमुदाहृत्य पादं पादमुपा-दाय स व्याक्रियते । तत्रार्वाग्बिलश्चमस ऊर्ध्वबुध्न इत्याद्यपादव्याख्यानपरे वाक्ये इत्यन्त-स्यार्थः । इति व्याख्येयमन्त्र इति । तच्छब्दार्थो यदुक्तं तदिति । इदं शब्दार्थः प्रतीयमानमिति । शिरःपरामर्शित्वे एतदित्येव स्यात् कथमेष इति पुल्लिङ्गमित्यतः एषः इतीति ॥ **दक्षिणेति** ॥ ऐतरेये यथाऽस्मिन्वाक्ये य इत्यस्यान्नपरत्वेऽपि विधेयात्मविवक्षया पुल्लिङ्गं तथेहापीत्यर्थः । सूत्रार्थोपसंहारपूर्वं भाष्यार्थमुपसंहरति ॥ **तस्मादिति** ॥ प्रयोगप्रवृत्तिनिमित्तादिसाधकाभावा-दवरत्वादिबाधकाभावाच्चेत्यर्थः ॥ तत्तु समन्वयादित्यादिभाष्योपसंहारः सर्वशब्देत्यादि ॥

## अभिनवचन्द्रिका

ननु परमात्मनि प्रवृत्तिनिमित्तस्यातिशयितत्वेऽपि नाऽव्यक्तादिशब्दानां तत्र परममुख्यता तत्र प्रसिद्धिवैधुर्येण वाच्यताया एवाभावात् किंनाम अतिसहनवति पुरुषे सिंहशब्दस्येव गौणता । ततश्च 'महद्वच्च' इत्युक्तं, महच्छब्दस्य स्वतःपरमात्मवाचित्वेन प्रवृत्तिनिमित्ताधि-क्यात्, परममुख्यत्वसम्भवेऽपि अव्यक्तादिशब्दानां भगवद्वाचित्वस्यैवाभावेन वैषम्यादिति भावेन शङ्कते – **ननु भवेदियमिति** ॥ **तेषामन्यत्रैव प्रसिद्धत्वादिति** ॥ शब्दस्य वाचकत्वे प्रसिद्धिरेव प्रमाणं, तदेकप्रमाणके तदभावाद्वाचकत्वाऽभावसाधनं युक्तमिति भावः । यद्यपि विष्णौ प्रसिध्द्यभाव एव विष्णुवाचकत्वाभावे हेतुः, तथापि तेषां काप्य(प्र)सिद्धत्वेऽवाचकत्वप्रसङ्ग-

(अभिनवचन्द्रिका)

शङ्काव्युदासायाऽन्यत्र प्रसिद्धिवचनं बोध्यम् ॥ **दक्षिणान्नं वनुत इति** ॥ दक्षिणाशब्दस्य स्त्रीलिङ्गत्वेऽपि आत्मशब्दविवक्षया य इति पुल्लिङ्गप्रयोगवत् शिरःशब्दस्य नपुंसकलिङ्गत्वेऽपि चमसशब्दविवक्षया एष इति पुलिङ्गप्रयोग इति भावः ।

**पूर्वपक्षस्तु** – प्रधानाद्येवाव्यक्तादिशब्दवाच्यम् । अव्यक्तादिशब्दानां प्रधानादावेव प्रसिद्धत्वात् । न च तेषां विष्णावपि सावकाशत्वम् । तत्राऽव्यक्तस्य पुरुषावरत्वश्रवणात्, विष्णोश्च न तत्समश्चाभ्यधिकश्च दृश्यत' इति प्रमाणविरोधेन तदयोगात् । किं च अव्यक्तस्य महतः परत्वश्रवणात् प्रधानमेवाव्यक्तशब्दवाच्यम् । दुःखिवद्धत्वादिप्रतीतेः क्षेत्रज्ञा एव जीवशब्दवाच्या न विष्णुः । यत एव केषांचिच्छाखासु अव्यक्तादिशब्दैः प्रधानाद्येवोच्यते । अतः 'तत्तु समन्वयात्' इति सर्वशब्दानां यत्परमेश्वराभिधायकत्वमुक्तं तन्न युज्यत इति ।

**सिद्धान्तस्तु** – परमात्मैव अव्यक्तादिशब्दवाच्यः । अव्यक्तादिप्रवृत्तिनिमित्तस्वामित्वात् । अतिशयेन प्रवृत्तिनिमित्ताधिकरणत्वाच्च । कथं तर्हि प्रधानादौ अव्यक्तादिशब्दप्रयोग इति चेत् ईश्वराधीनस्य प्रवृत्तिनिमित्तस्याधिकरणत्वेन तस्यापि तद्वाच्यत्वाङ्गीकारात् । इयांस्तु विशेषः – अव्यक्तादिशब्दाः प्रधानादौ मुख्याः, ईश्वरे तु परममुख्या इति । तदुक्तं गारुडे–

'एवमेव हि शब्दानां प्रसिद्धिरपि लौकिकी ।
वाचकत्वं प्रधानस्य त्वितरस्य तदन्वयात्' इति

यथा विष्णोर्ज्ञेयत्वावेदकं प्रमाणमस्ति न तथा प्रधानादेः । ततश्च वेदस्य प्राणिनां निःश्रेयसाय प्रवृत्तत्वात् यज्ज्ञानान्मोक्षः स एव प्रतिपाद्योऽभ्युपगन्तव्यः, न प्रधानादिः । ननु न प्रधानस्य मोक्षार्थं ज्ञेयत्वे वचनाभावः, 'अनाद्यनन्तं महतःपरं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यत' इति वचनसद्भावादिति चेत्, न प्राज्ञस्य परमात्मनः तत्प्रतिपाद्यत्वात् । ननु विशिष्य महत्परत्वस्य प्रधानलिङ्गस्यामुख्यार्थतामङ्गीकृत्य 'अनाद्यनन्तात्' इति वाक्यस्य विष्णुपरत्वग्रहणे कारणाभावात् प्रधानमेवात्रोच्यत इति चेत् न एतत्प्रकरणार्थोपासकस्य विष्णुपदप्राप्त्युक्त्या एतत्प्रकरणस्य वैष्णवत्वेन विष्णोरेवैतत्प्रकरणप्रतिपाद्यत्वौचित्यात् । अस्यामुपनिषदि पितृसौमनस्यस्वर्ग्याग्निपरमात्मनां त्रयाणामेवोपन्यासाच्च, न प्रधानादेस्त्वेतद्वाक्यप्रतिपाद्यत्वम् । ननु नाव्यक्तादिशब्दाः परमात्मनि मुख्याः, दृष्टान्ताभावेन प्रवृत्तिनिमित्तातिशयवत्त्वादित्यनु-

(अभिनवचन्द्रिका)

मानेन विष्णौ तत्साधनायोगादिति चेत्, न महच्छब्दस्यैव दृष्टान्तत्वात् । ननु परमात्मनि प्रवृत्तिनिमित्तस्यातिशयत्वेऽपि नाव्यक्तादिशब्दानां तत्र परममुख्यता, तत्र प्रसिद्धिवैधुर्येण वाच्यताया एव अभावात् किंनाम अतिसहनवति पुरुषे सिंहशब्दस्येव गौणता । ततश्च 'महद्वच्च' इत्ययुक्तम् । महच्छब्दस्य स्वतः परमात्मवाचित्वेन प्रवृत्तिनिमित्ताधिक्यात् परममुख्यत्वसम्भवेऽपि अव्यक्तादिशब्दानां भगवद्वाचित्वस्यैवाऽभावेन वैषम्यादिति चेत्, न चमसशब्दस्तावच्छिरोवाचकत्वेनाऽप्रसिद्धोऽपि 'इदन्तच्छिर' इति श्रुतिबलात् शिरोवाचक उपलब्धः । तद्दृष्टान्तेन परमात्मनि अप्रसिद्धा अव्यक्तादिशब्दाः 'नामानि सर्वाणि यमाविशन्ति' इत्यनुशासनरूपश्रुतिबलात् परमात्मवाचका एवेति निश्चयसम्भवात् । न च 'इदन्तच्छिरः, नामानि सर्वाणि' इति श्रुत्योरनुशासनत्वे विशेषोऽस्ति । तस्मादव्यक्तादिशब्दवाच्यो हरिर्भव-त्येवेति सर्वशब्दवाच्यत्वं तस्योपपन्नमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

दर्शयतीति सूत्रखण्डेन गतार्थतामाशङ्क्य परिहरति ॥ **न चाव्यक्तमिति** ॥ **वृत्यन्तरे-णेति** ॥ रूढलक्षणादिदर्शनादिति भावः । सूक्ष्मं त्वित्यनेन गतार्थतां निराह ॥ **योगयुक्त्ये-त्यादिना** ॥ सूत्रे पूर्वसूत्राद्दार्ष्टान्तिकसमुच्चायकचशब्दोऽनुवर्तते । प्राज्ञ इत्यप्यस्ति ॥ **एवेति च** ॥ अविशेषादिति सामान्यतः सर्वशब्दवाच्यत्वश्रुतेरित्यर्थमभिप्रेत्य चमसवदित्यंशं विहायेत-रांशं व्याकर्तुमव्यक्तादिशब्दाः सर्वे अन्यत्र प्रसिद्धा अपीत्यारभ्याभिधायका एवेत्यन्तभाष्यं प्रवृत्तमित्याशयेन व्याचष्टे ॥ **अव्यक्तादिशब्दा इति** ॥ इदानीं समग्रसूत्रं व्याकुर्वन् यथा चमसशब्द इत्यारभ्याभिधायका एवेत्यन्तभाष्यं व्याकर्तुमाह न च वक्तव्यमित्यादिना प्रसङ्गा-दित्यन्तेन । एतेन एष ह्यर्वाग्बिलश्चमस इति श्रुतेः प्रयोगादेरिवानुशासनरूपत्वाविशेषादित्यर्थ उक्तो भवति । अविशेषात् श्रुतेरिति सूत्रभाष्यं प्रकारान्तरेण व्याचष्टे ॥ **अथापि स्यादि-त्यादिना** ॥ तेन श्रुतेरिति भाष्ये षष्ठी पञ्चमी च । तथा च नामानीति श्रुतेरेष हीति श्रुत्यानु-शासनरूपत्वे विशेषाभावादित्यर्थ उक्तो भवति । श्रुत्यर्थमाह **अर्वाग्बिल इत्यादिना** ॥ काण्वोपनिषत्, अर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन् पशौ निहितं विश्वरूपम्, इति मन्त्रं स्वोक्तार्थं उदाहृत्य पादं पादमुपादाय व्याकरोति । तत्र आद्यपादव्याख्यापरे एष ह्यर्वाग्बिलश्च-मस ऊर्ध्वबुध्न इति तदन्तःस्थिर इत्यादिवाक्ये इत्यन्तस्यार्थमाह इति व्याख्येयमन्त्र इति ॥

(वाक्यार्थमुक्तावली)

तच्छब्दार्थो यदुक्तं तदिति इदं शब्दार्थः ॥ **प्रतीयमानमिति** ॥ तदुपपादकमेष हीत्यादि । शिरः परामर्शत्वे एतदिति स्यात् कथमेष इति पुल्लिङ्गमित्यत आह ॥ **दक्षिणेति** ॥ अत्र, यदन्नं न आत्मा तदन्नं दक्षिणां वनुते, इति वाक्ययोजनायां यच्छब्दस्यान्नपरत्वे विधेयात्मशब्दापेक्षया य इति पुल्लिङ्गनिर्देशवदिहाप्येष इत्यस्य शिरःपरत्वेऽपि विधेयत्तमसशब्दापेक्षया पुल्लिङ्ग निर्देश इति भावः ॥ **सूत्रार्थस्तूक्तप्रायः** ॥

अत्राद्येऽव्यक्तशब्दस्य ब्रह्मणि रूढिज्ञापकप्रयोगोक्तिव्यवहारविलोपबाधकपरिहारश्च । द्वितीये योगवृत्युत्कर्षे प्रवृत्तिनिमित्तेऽप्यतिशयोक्तिः । तृतीये सर्वमानबाधपरिहाराय पञ्चमी-विभक्त्यादिनिमित्तोक्तिः । व्यवहारविलोपस्यान्तरङ्गत्वादाद्यसूत्रे तत्परिहारोक्तिपूर्वकत्वाच्चानन्तर्यं ज्ञेयम् । चतुर्थे तु भावरूपान्तरङ्गप्रवृत्तिनिमित्तलक्षणहेतूक्त्यनन्तरं बहिरङ्गभावरूप-ज्ञेयत्वावचनतदनुबद्धज्ञेयत्ववचनरूपपरपक्षबाधकतात्पर्यलिङ्गोक्तिः । तत्सिद्धये लिङ्गोद्दलित-प्रकरणोक्तिः । नवमे वाच्यत्वनियामकप्रवृत्तिनिमित्तस्य शक्तिज्ञापकानुशासनेन सदृष्टान्तमुगो-द्दलनमिति सूत्रक्रम इति सर्वमनवद्यम् ।

## तत्त्वसुबोधिनी

**वृत्यन्तरेणापीति** ॥ गौण्यादिरूपवृत्त्यन्तरेत्यर्थः ॥ **न च योगेति** ॥ एवं च ब्रह्म अव्यक्तादिशब्दवाच्यं प्रयोगायुतयोगत्वात् यदेवं तदेवं यथा पङ्कजपदमित्यनुमानं फलितमिति भावः । व्यभिचारग्रस्तत्वान्नेदम् अनुमानं सम्भवतीत्याह सह भवतीति । अस्ति पुरुषे सिंहशब्दप्रयोगः सहतेऽसौ सिंह इति योगश्च । न च सिंहशब्दवाच्यत्वम् । तथा च व्यभिचार इत्यर्थः । अनेनैतत् षहमर्षण इति धातुरित्युक्तं भवति । षकारस्य सकारो नुमागमे सति सहत्यवर्णव्यत्ययेन अकारस्य इकारे जाते हिनस्तीति सिंह इतिवत् निर्वचनात् एतत्सेत्स्यतीति भावः । अस्त्वनुशासनरूपत्वं तथापि गौण्यादिरूपवृत्यन्तरेण प्रयोगः इत्यत किमायातमत आह ॥ **न हीति** ॥ **अन्यथेति** ॥ अनुशासनरूपस्यापि वृत्त्यन्तरेण प्रयोग इत्यर्थः । तर्हि नामानीति श्रुतिविरोध इत्यत आह ॥ **नामानीति** ॥ तच्छ्रुतेः अविशेषादिति । नामानीति श्रुतेः अनुशासनरूपत्वे इदं तच्छिर इति श्रुत्यपेक्षया विशेषाभावादित्यर्थः । कुतो न विशेष इत्यत आह ॥ **तद्वदिति** ॥ इदं तच्छिर इतिवदित्यर्थः । ननु सर्वशब्दः सङ्कोच्यत इत्यत आह ॥ **सङ्कोचेति** ॥ एवमेव सङ्कोचे अतिप्रसङ्गः स्यादिति भावः । एष इत्यस्य शिरःपरत्वे

(तत्त्वसुबोधिनी)

पुंलिङ्गायोग: इत्याह ॥ **एष इतीति** ॥ विधेयापेक्षया पुंलिङ्गः प्रयोग: क दृष्ट इत्यत आह **दक्षिणान्नमिति** ॥ अत्र वाक्ये यदन्नं तन्नात्मा तदन्नं दक्षिणावनुत इति योजनायां यच्छब्द-परस्याप्यत्र परत्वेऽपि विधेयात्मत्वविवक्षया च इति पुंलिङ्ग निर्देशवदिहाप्येष इत्यस्य शिर:-परत्वेऽपि विधेयचमसविवक्षायां पुल्लिङ्गनिर्देशः । अत्राद्ये सूत्रे ब्रह्मणोऽव्यक्तादौ विन्यस्तत्वेन अव्यक्तादेरपि ब्रह्मसम्बन्धत्वात् वाच्यतेति दर्शयितुं विन्यस्तपदम् । न च प्रधानादिसम्बन्धात् ब्रह्मणो वाच्यत्वमस्त्विति । तस्य ब्रह्मशरीरतुल्यत्वेन तत्तन्त्रत्वादि दर्शयितुं शरीररूपपदम् । शरीरस्य रूपमिव रूपं यस्येति विग्रहः । कप्रत्ययेन मुख्यतो नेश्वरशरीरं जडत्वादिना कुत्सितत्वादित्युक्तम् । दर्शयति च शब्दाभ्यां तु ब्रह्मग्रहणे हेतुत्वेन भाष्योक्तश्रौतस्मार्तप्रयोगोक्तिः । द्वितीये प्रवृत्तिनिमित्तातिशययोगरूपहेतूक्तिः । तृतीये स्वपक्षे बाधकोद्धारः । चतुर्थे परपक्ष-बाधकस्य अर्थसिद्धस्वपक्षसाधकत्वस्य चोक्तिः । अस्य च सूत्रस्य तमेवैकं जानथ इति ब्रह्मण एव मुमुक्षुज्ञेयत्ववचनात् अन्यस्य च तदवचनात् मोक्षपालकानां वेदानां ब्रह्मपरत्वसिद्धेः । प्रतिवाक्ये च तत्परत्वस्य आदावन्ते चेति वचनसिद्धत्वात् स्वतः प्राप्तमुख्यवृत्तित्यागे च हेत्वभावात् ब्रह्मैवाव्यक्तादिशब्दमुख्यार्थ इत्यर्थः । पञ्चमेत्वाक्षेपपरिहारः । षष्ठे प्राज्ञो हीति पूर्वसूत्रोक्ते विष्णुप्रकरणरूपहेतूक्तिः । सप्तमे अस्यामुपनिषद्येव मुमुक्षुज्ञेयत्वेनाप्रधानोक्तौ बाधकोक्तिः । तत्राद्यश्चशब्दः हेत्वर्थः । एवं च उपन्यासरूपहेतोरित्यर्थः । द्वितीयप्रकरण-समुच्चयार्थः । तत्र च त्रयाणां मध्ये प्रधानमेकमस्त्विति शङ्कां निरसितुं प्रथमे वरं वृणे । द्वितीयेन वृणे वरेण वराणामेष वृतः तृतीय इति श्रुत्युक्तपितृसौमनस्याग्निब्रह्मरूपप्रकारोक्त्यर्थं सूत्रे एवंशब्दः । प्रश्नस्य प्राथम्येऽपि प्रतिवचनस्य निचाय्यवाक्यस्य प्रधानपरतायाः शक्तित्वात् तन्निरासाय प्रतिवचनस्यादौ निर्देशः । अष्टमे प्रयोगप्राचुर्याभावेऽपि प्रवृत्तिनिमित्तातिशयेन मुख्यत्वे महत् शब्ददृष्टान्तोक्तिः । चशब्दो दार्ष्टान्तिकसमुच्चयार्थः । नवमे अव्यक्तादिशब्दानां विष्णौ शक्तिज्ञापकश्रुतिरूपशासनोक्तिरिति सूत्रक्रमः ।

## वाक्यार्थमञ्जरी

वृत्त्यन्तरेणाव्यक्तत्वगुणयोगाद्गौण्यादिरूपेणेत्यर्थः ॥ **किम्विति** ॥ न मुख्य इति किम्वित्यर्थः ॥ ॐ चमसवदविशेषात् ॐ ॥ चमसशब्दो यज्ञपात्रे प्रसिद्धोऽपि शिरसि मुख्यस्तथाव्यक्तादिशब्दोऽपि ब्रह्मणि मुख्य इत्यर्थः । नन्विदं तच्छिर इत्यनुशासनसत्वात्तस्य

(वाक्यार्थमञ्जरी)

तथात्वेऽप्यत्र कुत इत्यत उक्तम् ॥ **अविशेषादिति** ॥ नामानि सर्वाणीति श्रुतेरिदं तच्छिर इति श्रुत्या विशेषाभावात्तत्साम्यात्तद्वदनुशासनरूपत्वादिति यावत् । अन्यथानुशासनसिद्धस्यापि चमसशब्दस्यावाचकत्वे तत् श्रुतेः इदं तदिति श्रुतेः सकाशात् तात्पर्यमाह ॥ **तद्वदिति** ॥ **अर्वाग्बिल इति** ॥ योऽधश्छिद्रवान्यश्चोर्ध्वं घटवद्बुध्नाकारवान्स चमस इति मन्त्रे यच्चमस-शब्दाभिधेयं वस्त्वभिहितं तदिदं प्रत्यक्षसिद्धं मनुष्यादीनां शिर एव कुतः हि यस्मादयोऽ-र्वाग्बिलऊर्ध्वबुध्नश्च भवति तस्मादित्यर्थः । शिरो विवक्षयैष इति पुल्लिङ्गानुपपत्तिरित्यत आह ॥ **एष इतीति** ॥ **दक्षिणेति** ॥ अत्र वाक्ये यदन्नमात्मा न भवति तदन्नं दक्षिणात्वेन वनुत इति योजनायां यच्छब्दस्यान्नपरत्वेऽपि विधेयात्मत्वविवक्षया यमिति पुल्लिङ्गनिर्देशवदिहाप्येष इत्यस्य शिरःपरत्वेऽपि विधेयचमसविवक्षया पुल्लिङ्गनिर्देश इत्यर्थः ॥ **मुखादीति** ॥ आस्यकर्ण-घ्राणादिरूपछिद्रमेव शिरसो बिलमित्यर्थः ॥

॥ इति आनुमानिकाधिकरणम् ॥

## २. ज्योतिरुपक्रमाधिकरणम्

'वसन्ते वसन्ते ज्योतिषा यजेत' इत्यादि कर्माभिधायकस्य कर्मक्रमादिविरोधान्न युज्यत इत्यत आह–

**॥ ॐ ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ॐ ॥ १० ॥**

ज्योतिरादिकर्मवाचकत्वेन प्रसिद्धाभिधेयोऽपि स एव । 'एष इमं लोकमभ्यार्चत्' इत्युपक्रम्य 'ता वा एताः सर्वा ऋचः सर्वे वेदास्सर्वे घोषाः एकैव व्याहृतिः प्राण एव प्राण ऋच इत्येव विद्यात्' इति (ऐ.आ.२-२-२) ह्यधीयत एके ॥

## सत्तर्कदीपावली

तथापि तस्य प्रतिपादकत्वं भगवद्वाचकत्वे न युज्यते । कर्मक्रमकालायुक्त्या भगवद्वाचकत्वस्य विशेषेण विरोधात् । न च जातमोतमित्यादिव्युत्पत्त्या भगवद्वाचकत्वम् । तथा कर्मक्रमादिवाचकत्वस्य विशेषेण विरोधापत्तेः । जातादिशब्दानामपि भगवद्वाचकत्वेन व्युत्पत्तेरप्यशक्यत्वादिति भावेन पूर्वपक्षमाह । वसन्त इत्यादिना । ज्योतिष्टोमादिकर्मवाचकत्वेन प्रसिद्धशब्दार्थोऽपि भगवानेव यथा तदिज्येन्द्रवाय्वादिशब्दार्थोऽसौ । न च तद्वाचकत्वं कर्मक्रमाद्युक्तिं विरुणद्धि ज्ञातमोतमित्यादिव्युत्पत्तिसम्भवात् । व्युत्पत्त्यैव ह्यध्यायोपक्रमादारभ्य सूक्त ऋगर्धर्चपादाक्षरा तद्वृक्षमुनिवाचकत्वेन प्रसिद्धशब्दानां भगवद्वाचकत्वं विद्वद्रूढिं च तद्विषयां प्रदर्श्य तथैव सर्ववेदानां भगवदर्थत्वमभिधीयते । श्रीमन्महैतरेय इत्यर्थः ।

## तत्त्वप्रदीपिका

वसन्ते वसन्ते ज्योतिषा यजेतेत्यादिकर्माद्यभिधायकस्य पदकदम्बकस्य प्रत्येकं ब्रह्मवाचकत्वं न युज्यते । कर्तृकरणकर्मक्रमादिवचनविरोधात् । मुख्यत एकस्योभयार्थत्वासम्भवेन तद्वचनाभावे कृत्यनुष्ठानलोपप्रसङ्गादित्यत आह – 'ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके' । ज्योतिष्टोमादिकर्मकर्तृकरणादीनामशेषाणां पदार्थानां वाचकत्वेन प्रसिद्धशब्दानामभिधेयोऽपि स एव । यथा चायं सर्वशब्दवाच्यो भवति तथा ह्यधीयत एके शाखिनः प्रघट्टकोपक्रमादेवाऽरभ्य । अयं श्रुत्यर्थः – एष परमात्मा इमं देहं लोकं जीवान्तर्यामिरूपेणाभ्यार्चत् । य एष आदित्यस्तपति, "यश्चासावादित्ये" "अथ य एषोऽन्तर आदित्ये हिरण्यश्मश्रुः" 'येनाऽदित्यस्तपति तेजसा भ्राजसा च' 'यदादित्यगतं तेजः' इत्यादि श्रुतिस्मृतिभ्यो विष्णुरेव हि तत्रस्थस्तपति ।

(तत्त्वप्रदीपिका)

सर्वप्रणेता ह्येष यस्तपति । शतं वर्षाणि तं लोकमभ्यार्चदिति यत्तस्माच्छतर्चिन इत्याचक्षते विद्वांसः । एतमेव शतर्चिनः सन्तं शतर्चिन इत्याचक्षते न त्वन्यानिति । एवमन्यनामान्यपि परमात्मनि पृथक्पृथङ्निरुच्य पुनस्सर्ववेदप्रभृतयः समुद्रघोषान्ताः शब्दाः एकविषययैव व्याहृतिः । सा च सर्वप्रणेतृपरमात्मविषयैवेति विद्यादिति सतात्पर्यमधीयते । निखिलपदानां तद्वाचकत्वपदवी तु गुरुभिरेवोपसन्दर्शयितुं सुशकेति नास्माभिरत्र प्रयत्यते । दर्शिता च सा भङ्गी भगवतैवानुव्याख्याने–

'जातमोतं हरौ यस्माज्ज्योतिः षः प्राणरूपतः ।
आयजेतश्चायजेतो वसन्तिश्च वसंस्ततः' इत्यादिका ॥

## तत्त्वप्रकाशिका

अत्र कर्मक्रमादिलोपप्रसङ्गेन कर्मतदङ्गेष्वेव प्रसिद्धानां ज्योतिष्टोमादिसर्वशब्दानां भगवति समन्वयप्रतिपादनादस्ति शास्त्रादिसङ्गतिः । श्रुत्यादिसङ्गतिं विषयादिकं च सूचयति ॥ **वसन्त इति** ॥ तत्तु समन्वयादिति सर्वशब्दानां परमात्मवाचकत्वमुक्तम् । सर्वमध्यपतिता ज्योतिरादिशब्दाः श्रुतिषु पठ्यन्ते । तेषां चान्यपरत्वे नविष्णोः सर्वशब्दवाच्यता सिद्ध्येदित्यवश्यं निर्णेयता । तत् ज्योतिरादिशब्दवाच्यं विषयः । किं विष्णुरन्यद्वेति सन्देहः । समन्वयसूत्रमन्यत्रैव प्रसिद्धिश्च सन्देहबीजम् । तत्र ज्योतिरादिशब्दवाच्यो न विष्णुरिति पूर्वः पक्षः । तस्य ज्योतिष्टोमादिकर्मतदङ्गाभिधायकत्वेन प्रसिद्धत्वात् । तत्प्रसिद्धिं चापहाय परमात्मवाचित्वाङ्गीकारे कालकर्मक्रमाधिकारिनियोज्ययजमानफलऋत्विगद्याभिधायकाभावेन तदभावाख्यविरोधापातात् । न हि तत्प्रामाणान्तरेण सिध्यति । तथा च विहितानुष्ठानलोपप्रसङ्गः । किञ्च ज्योतिरादिसर्वशब्दवाच्यत्वं परमात्मनो योगेनैव वाच्यम् । रूढेरभावात् । ततो गुणपूर्त्यसिद्धेश्च । न च योगमात्रेण रूढार्थापहारो युज्यते । अभ्युपेत्यैव चेदमुदितम् । न योगोऽपि सम्भवति । ज्योतिषां स्तोम इत्यादिरूपा हि ज्योतिष्टोमादिशब्दव्युत्पत्तिः । कथमसौ स्तोमादिशब्दानामन्यपरत्वानभ्युपगमे सम्भवेत् । अन्यथा भगवन्नामावृत्तिमात्रत्वप्राप्तेः । स्तोमादिशब्दानामन्यपरत्वाभ्युपगमे किं ज्योतिष्टोमादिशब्दैरेव विशेषतोऽपराद्धम् । न च वाच्यं परमात्मसम्बन्धेनान्यत्रापि शब्दवृत्तिरभ्युपगतेति । यथा सति लोके लक्षणेतरवृत्त्यभावप्रसङ्गात् । अतो न ज्योतिरादिशब्दजातस्य परमात्मवाचित्वं युक्तमिति न समन्वयसूत्रं युक्तमिति भावः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ ज्योतिष्टोमादिकर्मतदङ्गवाचकत्वेन प्रसिद्धज्योतिरादिशब्दाभिधेयो हरिरेव । यस्मादेके शाखिनस्ता वा एता इति तथा सर्वशब्दाभिधेयत्वेन

(तत्त्वप्रकाशिका)

हरिमेवाधीयते । न च शब्दानां भगवत्परत्वे वृत्त्यभावः । 'एष इमं लोकमभ्यार्चत्' इत्यादिना शतर्च्यादिशब्दानां परमात्मनि योगस्योक्तत्वात् । न च शब्दानामन्यत्र रूढत्वेन योगाङ्गीकारायोगः । 'तस्माच्छतर्चिन इत्याचक्षत एतमेव सन्तम्' इति योगेन रूढेरपहारोक्तेः । एतमेव परमात्मानं मुख्यतो यौगिकार्थं सन्तं शतर्च्यादिनामभिराचक्षते न तु मुख्यतो रूढत्वेऽपि मुनीनिति प्रतीतेः । यद्यपि पङ्कजादिशब्दे योगापहारित्वं रूढेर्दृश्यते तथाप्यत्राचक्षत इति विद्वद्रूढिसहितत्वेनोक्तयोगस्य रूढ्यपहारित्वं युक्तमेव । अतो हरेः कर्माभिधायकशब्दवाच्यत्वायुक्तं समन्वयसूत्रमिति भावः । ज्योतिःशब्दस्याप्रथमपठितत्वेऽपि प्रधानकर्माभिधायकत्वात्तस्यैवान्योपलक्षकत्वसम्भवाच्च सङ्ग्रहः । तुशब्द एवार्थे । यास्ता एताः सर्वा ऋचस्तासामेकमेव व्याहर्तव्यं तच्च विष्णुरेव । किं च ये सर्वे वेदास्तेषामपीश्वर एव प्रतिपाद्य किमृचाम् । अपि च ये समुद्रादिघोषास्तेषामपि किमु वेदानां तत्र ऋचस्तु विशेषतः परमात्मप्रतिपादिका इति जानीयादित्यर्थः ॥

## गुर्वर्थदीपिका

अस्मिन् कर्मणि अयमिति नियोज्यो मन्त्रः । गुणपूर्त्यसिद्धेश्चेत्यत प्रबलरूढ्यभावादभिलषितयोगापहारे सति गुणपूर्त्यसिद्धिरिति भावः । अप्रथमपठितत्वेऽपीत्यस्य 'वसन्ते वसन्ते' इति श्रुतौ ज्योतिःशब्दस्य प्रथमपठितत्वाभावेऽपीत्यर्थः ।

## भावबोधः

**श्रुत्यादिसङ्गतिमिति** । अव्यवहितपूर्वाधिकरणसङ्गतिस्तु 'अविशेषात्' इति सूत्रतदुपात्त 'नामानि सर्वाणि' इति श्रुतिभ्यां सर्वशब्दवाच्यत्वेऽभिहिते सर्वमध्यपतितज्योतिरादिशब्दानां कर्मक्रमविरोधव्युत्पत्त्यभावप्रसङ्गेन च विष्णुवाचकत्वं न सम्भवतीति पूर्वपक्षोत्थानादिति ज्ञातव्यम् ॥ **किं विष्णुरिति** ॥ अत्र कर्मकाण्डगतज्योतिरादिशब्दवाच्यं किं कर्मादिकमुत विष्णुरिति चिन्ता । तदर्थं तस्य विष्णुत्वे कर्मक्रमादिविलोपः व्युत्पत्त्यभावश्च किं प्राप्नोत्युत न प्राप्नोतीति । तदर्थं कर्मादौ ज्योतिरादिशब्दानां वृत्तिरेव नास्ति उत रूढियोगादिमात्रसत्त्वेऽपि महायोगविद्वद्रूढी एव न स्त इति ॥ **अधिकारिनियोज्ययजमानेति** ॥ अधिकारित्वं फलस्वामित्वावस्था । नियोज्यत्वं विधिप्रेर्यत्वावस्था । यजमानत्वं कर्तृत्वावस्थेत्यवस्थाभेदमादायैवमुक्तम् । व्युत्पत्तेरप्यशक्यतेति पूर्वपक्षन्यायं घटयन् योजयति **किञ्चेत्यादिना** ॥

(भावबोधः)

**ज्योतिष्टोमादिशब्दव्युत्पत्तिरिति** ॥ यद्यपि सूत्रे ज्योतिःशब्द एवोपात्तः अनुव्याख्याने च ''जातम्'' इति तस्यैव व्युत्पत्तिर्दर्शिता तथापि 'ज्योतिष्टोमेन' इति उत्पत्तिवाक्यविहित-ज्योतिष्टोमयागस्य 'वसन्ते वसन्ते' इति वाक्येन कालाख्यगुणविधानादुत्पत्तिवाक्यस्थ-ज्योतिष्टोमशब्दस्य ग्रहणमिति ज्ञातव्यम् ॥ **भगवन्नामावृत्तीति** ॥ प्रातिपदिकप्रकृतिप्रत्ययादीनां सर्वेषां विष्णुनामत्वादित्यर्थः । **तुशब्द एवार्थ इति** ॥ उपक्रमादिति ल्यब्लोपनिमित्ता पञ्चमी । तथा चोपक्रम्यैवेत्यर्थः । तथा चाऽविद्धद्रूढिमात्रापहारकविद्वद्रूढिमहितमहायोगं दर्शयितुं 'एष इमं लोकमभ्यार्चत्' इत्युपक्रमवाक्यम् । अन्यथा 'ता वा एता' इत्येतावतैव पूर्णत्वे इदं व्यर्थं स्यादिति सूत्रतात्पर्यमिति भावः । अत एव सुधायाम् 'तदेवोक्तमुपक्रमात्' इत्यनुव्याख्यान-मेतत्परत्वेनापि व्याख्यायोपक्रमे सर्वस्यास्य दर्शनादित्युक्तम् ।

यद्वा अध्याहृतेन हरिमित्यनेन सम्बन्धः । अत एव टीकायां तथा सर्वशब्दाभिधेयत्वेन हरिमेवेति व्याख्यातम् ।

यद्वा 'ईक्षतिकर्म व्यपदेशात् सः' इत्यतोऽनुवृत्तेन 'सः' इत्यनेन सम्बन्धः । अत एव भाष्ये स एवेत्युक्तमिति भावः । रूढो रूढयोगो महायोगो महारूढयोगो रूढोपचारो रूढ-लक्षणोपचारो लक्षणेति च शब्दवृत्तिभेदात् रूढिपूर्वकत्वेन महायोगवृत्त्या परमेश्वरेऽखिलशब्द-व्युत्पत्त्युपपत्तेरिति न्यायविवरणे रूढिपूर्वकत्वेनेत्यतः पूर्वमन्यत्र ज्योतिरादिशब्दानामिति शेषः ।

## भावदीपः

एतदधिकरणोपाधिभूतशब्दानां भाष्योक्तबलवदुपपत्त्याऽन्यत्रैव प्रसिद्धत्वं वदन्नन्तर्भाव-सङ्गतिमाह ॥ **अत्र कर्मक्रमादीति** ॥ यद्यपि शरीररूपकविन्यस्तगृहीतेरित्युक्तन्यायेन तच्छब्द-वाच्येश्वरसम्बन्धादन्यत्रापि शब्दवृत्तेरङ्गीकारेण न कर्मादिलोपप्रसङ्गः । अन्यथा पूर्वत्रापि तारतम्यलोपप्रसङ्गः स्यात् । तथापीह पदवर्णस्वरादिरूपेणैव समन्वयस्याभिप्रेतत्वेन कर्म-क्रमादिप्रतीतेरेवाभावात् । तच्छब्दवाच्येशसम्बन्धात् अन्यत्र वृत्तिश्चेत् गङ्गासम्बन्धात्तीरे गङ्गा-पदस्येव सर्वशब्दानां लोके लक्षणाप्रसङ्गेन प्राक्तनन्यायस्यैव अयोगेन इहाप्याक्षेप्यत्वादिति भावः ॥ **सर्वशब्दानामिति** ॥ पूर्वनयेषु समन्वितानाम् अन्यत्रासमन्वितानां च वाक्यानां पदवर्णस्वरादिभेदेनेह समन्वीयमानत्वात्तद्रूपेणोदाहरणत्वमित्यर्थः । विरोधिसर्वबाहुल्येत्यनुभाष्ये सर्वेत्येतदधिकरणोपाधेरुक्तेरिति भावः ।

(भावदीपः)

तत्तु समन्वयादिति सर्वशब्दानां परमेश्वरे समन्वय उक्त इति पूर्वनयस्थभाष्यवाक्यमिहापि योज्यमिति भावेन तदर्थं वदन् सङ्गतिसूचकत्वेन तावद्भाष्यं व्याचष्टे ॥ **तत्त्विति** ॥ वसन्त इत्यादिभाष्यभावमाह ॥ **सर्वमध्येति** ॥ कर्मक्रमादित्यादिवाक्यतात्पर्यमाह ॥ **तेषां चान्यपरत्व इति** ॥ वक्ष्यमाणदिशेति भावः ॥ **तदिति** ॥ निर्णेतव्यत्वेन प्राप्तेत्यर्थः । पूर्वपक्षादिपरत्वेनापि भाष्यं व्याकुर्वन् कर्माभिधायकस्य इत्येतल्लब्धहेतुमाह ॥ **तस्य ज्योतिष्टोमादीति** ॥ प्रसिद्धाभिधेयोऽपीत्यग्रेतनभाष्यानुरोधात् प्रसिद्धत्वादित्युक्तम् । कर्मक्रमादिविरोधादित्येतद्वाक्यं व्यनक्ति ॥ **तत्प्रसिद्धिमिति** ॥ **अधिकारीति** ॥ फलस्वामित्वावस्थायुक्तोऽधिकारी । विधिप्रेर्यत्वावस्थावान् नियोज्यः । कर्मकर्तृत्वावस्थायुक्तो यजमान इत्येकस्यैवावस्थाभेदात् भेदेन व्यपदेशः ।

हरौ महायोगविद्वद्रूढियुक्तिपरस्योपक्रमादिति सूत्रांशस्य व्यावर्त्यं भाष्यस्थप्रसिद्धपदसूचितमाह ॥ **किं चेति** ॥ हरौ शब्दानां रूढ्यङ्गीकारे बाधकं चाह ॥ **तत इति** ॥ रूढेरेव इत्यर्थः । अतोऽनन्तगुणो विष्णुर्यच्छब्दा योगवृत्तय इति सङ्क्षेपभाष्योक्तदिशा समन्वीयमानशब्दानां हरौ यौगिकत्व एव जिज्ञासासूत्रस्थब्रह्मशब्दोक्तगुणपूर्णत्वसिद्धिरन्यथा तदसिद्धेरित्यर्थः । कल्पनासूत्रव्यावर्त्यं व्युत्पत्तेरप्यशक्यता इत्यनुभाष्योक्तमाह ॥ **न योगोऽपि सम्भवतीति** ॥ ज्योतिषां स्तोम इत्यादिरूपा हि इति ॥ सूत्रे ज्योतिःपदस्यैवोपात्तत्वेऽपि जातमोतं हरौ यस्मात् ज्योतिः इत्यनुभाष्ये च ज्योतिःपदस्यैव व्युत्पत्त्युक्तावपीह ज्योतिष्टोमशब्दोऽप्युदाहरणम् । ज्योतिश्शब्दो ज्योतिष्टोमवाचीति च दर्शयितुं ज्योतिष्टोमशब्दस्य व्युत्पत्तिप्रदर्शनमिति ध्येयम् ॥ **नामावृत्तिमात्रत्वेति** ॥ जगज्जनकत्वादिगुणपूर्तिसिद्धिर्न स्यादिति मात्रशब्दार्थः । शरीररूपकविन्यस्तगृहीतेरिति पूर्वोक्तेन परिहृतत्वमाशङ्क्य तदाक्षेपेणागतार्थत्वमाह ॥ **न च वाच्यमिति** ॥ **अत इति** ॥ कर्मक्रमादिविरोधायोगस्य च रूढितोऽपि दुर्बलत्वादीशे शब्दानां व्युत्पत्तेरशक्यत्वाच्चेत्यर्थः । न युज्यत इत्यस्य अर्थो न ज्योतिरादिति । पूर्वपक्षफलमाह ॥ **न समन्वयेति** ॥ ज्योतिरादीति भाष्यमाकाङ्क्षितपूर्त्या व्याचष्टे ॥ **ज्योतिष्टोमेति** ॥ तत्त्विनुवृत्तस्य स एवेति भाष्यम् । तस्यार्थो हरिरेवेति । कुत इत्यतो हिशब्दो हेत्वर्थ इत्युपेत्य ता वा एता इत्यंशं व्याचष्टे ॥ **यस्मादिति** ॥ इतीत्यनन्तरं सौत्रतथाशब्दमध्याहृत्य तस्यार्थमाह ॥ **सर्वशब्दाभिधेयत्वेनेति** ॥ ईडध्ययन इत्यस्य कर्तरि वहुवचनान्तं रूपम् । अतो हरिमित्युक्तम् । तेन सूत्रे तत्त्वित्यत्राप्यन्वेतीति सूचितम् ।

(भावदीपः)

उपक्रमादिति सूत्रांशस्य एप इममित्यादिभाष्यं तदवतार्य व्याचष्टे ॥ **न चेति** ॥ एप प्राणशब्देन प्रकृतपरमात्मा । इमं लोकं ब्रह्मादिदेहमभ्यार्चत् प्राविशदिति व्याख्यातेयं श्रुतिः पादान्त्य-प्राणनये । प्रागुक्तशङ्कामनूद्य निराह ॥ **न च शब्दानामन्यत्रेति** ॥ **तस्मादिति** ॥ तं देहं यस्माच्छतं वर्षाण्यभ्यार्चत् तस्मादित्यर्थः ॥ **योगापहारित्वमिति** ॥ अन्यथा पङ्कज-पदाद्भेकादिप्रतीतिप्रसङ्ग इति भावः ॥ **आचक्षत इति** ॥ प्रयोगबाहुल्यस्य रूढित्वादिति भावः। यद्यपि श्रौतस्य स्मार्तस्य वा केवलयोगस्यैव अङ्गरूढितः प्राबल्यमस्त्येव । अन्यथा श्रुत्यादौ योगोक्तेर्वैयर्थ्यापत्तेः उपपादितमेतन्निपुणतरं चन्द्रिकायां कम्पनादित्यत्र । तथाप्यभ्युपेत्यवादेन श्रौतयोगस्याङ्गरूढ्यपहारकत्वेऽपि विद्वद्रूढिसाहित्यमुक्तमिति ध्येयम् ॥ **अत इति** ॥ महायोगविद्वद्रूढिभ्यां सर्वशब्दवाच्यत्वस्य श्रौतत्वादित्यर्थः । वसन्ते वसन्ते ज्योतिषा यजेतेति श्रुतौ वसन्तपदस्यैवादौ श्रुतत्वेन सूत्रे वसन्त उपक्रमादिति वक्तव्ये कुतो ज्योतिष उक्तिरित्यत आह ॥ **ज्योतिश्शब्दस्येति तु शब्द इति** ॥ **सौत्र इत्यर्थः** । पञ्चमी ल्यब्लोपे उपक्रम्येत्यर्थो दर्शितः । न केवलमृष्यादीनां नाम भगवतः सर्वे वेदा अपि तस्यैव नाम किमु च वेदाः समुद्रघोपवृक्षपतनभेरीताडनादिसर्वघोपा अपि तस्यैव नामानि यथायोग्यं योजनीयानि इत्यैतरेय-भाष्यदिशा श्रुत्यर्थमाह ॥ **यास्ता इति** ॥ **व्याहर्तव्यं तच्च विष्णुरेवेति** ॥ यद्यप्यैतरेयभाष्ये एकमेव व्याहरणं एकमेव नाम निर्दोषगुणपूर्तिवाचित्वादेकप्रकारता । प्राणे नारायण एव नारायणविपय एव व्यवहार इति प्राणपदं सप्तम्यन्तं कृत्वा योजितम् । तथापि प्रथमान्तमुपेत्य व्याख्यानान्तरमेतदित्यदोषः । ऋचस्तु विशेषत इन्द्रादिनामवतो विष्णोर्गुणानल्पज्ञानामपि प्रकाशयन्तीति प्राणे नारायण एवेति विद्यादिति तद्भाष्यदिशैवार्थमाह ॥ **तत्रर्चस्त्विति** ॥

## अभिनवचन्द्रिका

**कर्मक्रमादिलोपप्रसङ्गेनेति** ॥ यद्यपि ज्योतिष्टोमादिशब्दाः लोकतोऽन्यत्र प्रसिद्धा इति प्रथमे पादे वक्तव्याः, तथापि नैतेषां शब्दानामन्यत्र प्रसिद्धौ लोकव्यवहार एव मूलं, किं नाम कर्मक्रमादिलोपप्रसङ्गरूपविपक्षबाधकतर्कोऽपीति बलवल्लिङ्गेनाऽन्यत्रैव प्रसिद्धत्वस्यापि भावात्, तद्विवक्षया चतुर्थपादे निवेश इति भावः ॥ **कर्मतदङ्गेष्वेव प्रसिद्धानामिति** ॥ उपलक्षणमेतत् । अप्रसिद्धानां स्वरवर्णपदात्मकानामित्यपि ग्राह्यम् । अत्र कण्ठतः अन्यत्रैव प्रसिद्धशब्द-समन्वयाभिधानस्य वादबहिर्भावः ॥ **सर्वमध्यपतितेति** ॥ अनेन अस्याधिकरणस्य

(अभिनवचन्द्रिका)

समन्वयाधिकरणप्रतिपाद्यशब्दराश्यन्तर्गतज्योतिरादिशब्दनिर्णायकत्वं समन्वयाधिकरणसङ्गतिरिति बोध्यम् ॥ **तेषाञ्चान्यपरत्व इति** ॥ तेषां शब्दानामन्यत्र महातात्पर्ये सर्वशब्दवाच्यता वचनवृत्तिद्वारा महातात्पर्यविषयता न सिध्येदित्यर्थः । एतेन अन्यत्र तात्पर्यस्य भगवतः शब्दवाच्यताविरोधित्वात् तेषां चान्यपरत्वेन विष्णोः शब्दवाच्यता सिध्येदित्ययुक्तमिति परास्तम् ॥ **अन्यत्रैव प्रसिद्धिः सन्देहबीजमिति** ॥ नन्वन्यत्रैव प्रसिद्धिः समन्वयसूत्रात् प्रबला न वा । नेतिपक्षे पूर्वपक्षहेतुत्वायोगः सिद्धान्तसाधकहेतूपन्यासवैयर्थ्यं च । प्रबलेन समन्वयसूत्रेणैव निर्णयसम्भवात् । आद्ये न सन्देहः प्रबलयाऽन्यत्रप्रसिध्याऽन्यपरत्वनिर्णयसम्भवात् । न हि सत्यपि निर्णायके सन्देहो युज्यते । तदनुच्छेदप्रसङ्गादिति चेत्, उक्तम्, किमुक्तम्, सर्वाणि हि सूत्राणि संशयविपर्ययनिरासाय प्रवृत्तानि 'इदमदो वेति सन्दिग्धे, अन्यदेवेति मिथ्यादृष्टिदृष्टे च भगवान्नारयणो व्यासत्वेनाऽवततार' इत्यभिधानात् । ततश्चैकस्यैकदा संशयविपर्यययोरयोगात् कस्यचित्संशयः, कस्यचिद्विपर्ययो वाच्य इति समन्वयसूत्राऽन्यत्रैवप्रसिध्योः समबलत्वं मन्यमानस्य संशयः अन्यत्रैव प्रसिद्धेः प्राबल्यं मन्यमानस्य पूर्वपक्षरूपो विपर्ययो भवति । **अधिकारीति** ॥ फलस्वामित्वावस्थायुक्तोऽधिकारी, विधिप्रेर्यत्वायुक्तो नियोज्यः । कर्मकर्तृत्वावस्था, युक्तो यजमान इत्येक एवाऽवस्थाभेदेन त्रेधा व्यपदिष्ट इति बोध्यम् ॥ **योगाङ्गीकारायोग इति** ॥ योगेन परमात्मपरत्वाङ्गीकारायोग इत्यर्थः ॥ **ननु मुख्यत इति** ॥ रूढत्वेऽपि मुख्यतो मुनीनाचक्षत इति प्रतीतेरित्यर्थः ॥ **यद्यपि पङ्कजादिशब्द इति** ॥ पङ्कजादिशब्दे रूढेर्योगापहारित्वं नाम योगसंकोचकत्वम्, अंशे बाधकत्वमिति यावत् । एतेन पङ्कजादिशब्दे योगरूढ्योः सहैव बोधजनकत्वेन रूढेर्योगापहारित्वं न युक्तमिति परास्तम् ॥ **तथापीति** ॥ अत्र योगस्यरूढ्यपहारित्वं नाम प्रकृतपदसमन्वयकाले रूढ्युपस्थितार्थपरित्यागहेतुत्वम् ।

## वाक्यार्थमुक्तावली

**श्रुत्यादिसङ्गतिमिति** ॥ **अविशेषादिति** ॥ सूत्रखण्डोपात्ताया: नामानीति श्रुतेः कर्मक्रमादिलोपेनावश्यं सङ्कोचे स्वीकार्ये प्रसिद्धिबाधेनाव्यक्तादिशब्दविषयेऽपि सङ्कोचोऽस्त्विति तदाक्षेपेणोत्थनादनन्तरसङ्गतिः । तत्तु समन्वयादिति सर्वशब्दानां समन्वयः । तदिति पूर्वभाष्यानुवृत्तिमभिप्रेत्य कर्मक्रमादिविरोधादित्यंशं परित्यज्य सङ्गतिपरत्वेन भाष्यं योजयति

(वाक्यार्थमुक्तावली)

॥ **सर्वशब्दानामिति** ॥ **किं विष्णुरिति** ॥ अत्र ज्योतिरादिशब्दवाच्यं किं धर्मादि, उत विष्णुरिति चिन्ता । तदर्थं तस्य विष्णुपरत्वे कर्मक्रमादिलोपो व्युत्पत्त्यभावश्च प्राप्नोत्युत नेति । पूर्वपक्षपरत्वेन वसन्त इत्यादिसमग्रभाष्यं योजयति तत्रेत्यादिना । प्रसिद्धाभिधेयोऽपि स एवेत्युत्तरभाष्यानुसारेणाह ॥ **ज्योतिष्टोमादीति** ॥ भाष्ये कर्मक्रमादिविरोधापादनस्थापादकसापेक्षत्वात् । आपादकमाह ॥ **तत्तु प्रसिद्धमिति** ॥ **कालेति** ॥ वसन्त इत्याद्युक्तकाललोपः ज्योतिषेत्याद्युक्तकर्मलोपः । वाजपेये नेत्याद्युक्तक्रमलोपः । स्वर्गकाम इत्याद्युक्ताधिकारलोपः । यजेतेत्याद्युक्तनियोज्यलोप इति द्रष्टव्यम् ॥ अधिकारित्वं फलकामत्वावस्थानियोज्यत्वं विधिप्रेर्यत्वसिद्धेरित्यर्थः । एवमाद्यसूत्रव्यावर्त्यं पूर्वपक्षं किं चेत्येदिनोक्त्वा द्वितीयसूत्रव्यावर्त्यं व्युत्पत्तेरप्यशक्यतेत्युक्तन्यायं विवृणोति ॥ **न च योगोऽपि सम्भवतीति** ॥ **इत्यादिरूपा हीति** ॥ इत्यादिरूपा हि सिद्धान्तिना भगवति व्युत्पत्तिरभिमतेत्यर्थः ।

एतेनैतदपि निरस्तम् । यत् केनचित्प्रलपितं तानि ह वा एतानि ज्योतींषि यदेतदस्य स्तोमा इति श्रुतौ ज्योतिंषि ऋग्जातानि स्तोमाः स्तुतिविशिष्टाः यस्येति विग्रहदर्शनात्तद्विरोध इति कर्मणि तथाव्युत्पत्तिमङ्गीकृत्य भगवत्येव निर्वचनाङ्गीकारात् । यद्वा श्रुतेरपि यदेतस्य हरेरेतानि ज्योतींषि स्तुतिरूपा इति व्याख्येयत्वेनेत्यादिरूपेत्यादिपदेन तदुपादानाच्चेति ॥ यद्यपि श्रुतौ ज्योतिश्शब्दः स एव सूत्रे, जातमेतं हरौ यस्माज्ज्योतिरित्यनुव्याख्याने चोपात्तः । तथापि यागान्तरपरज्योतिष्टोमशब्दोऽपीहोदाहरणमिति भावेन टीकायां तद्ग्रहणम् । चन्द्रिकाभावबोधयोस्तु पररीत्या ज्योतिष्टोमस्यैव वसन्तवाक्ये कालाख्यगुणविधानात् ज्योतिष्टोमेन स्वर्गकामो यजेतेत्युत्पत्तिवाक्यस्य ज्योतिष्टोमशब्दग्रहणमित्युक्तम् । नास्मद्रीत्या तदुक्तं प्रमेयदीपिकायाम् । किं च नित्यनैमित्तिकातिरिक्तस्य ज्योतिर्नामकयज्ञस्य कामनया विना विधानाज्ज्योतिष्टोमस्यैवायं गुणविधानायानुवाद इति तु न संमतमिति ॥ **अन्यपरत्वानभ्युपगम इति** ॥ अवयवानामपि भगवत्परत्वे समुदायस्य ब्रह्मपरत्वं न स्यात् । न हि पङ्कः पङ्कजशब्दार्थ इति भावः ॥ **अन्यथेति** ॥ समुदायस्य भगवत्परत्वमङ्गीकृत्यावयवांशेन भगवत्परत्वानङ्गीकारे जगत्कर्तृत्यादिगुणसमर्पणं विना घटः करीर इत्यादिवन्नाममात्रावृत्तित्वप्राप्तेरित्यर्थः । शरीररूपकविन्यस्तेत्यादिना गतार्थतामाशङ्क्य निराह– **न चेति** ॥ **लक्षणान्तरेति** ॥ गङ्गाशब्दस्य तत्सम्बन्धिनि लक्षणावृत्तिरिवान्यत्रापि लक्षणापत्तेरिति भावः । न च तदधीनत्वन्यायेन ब्रह्मणि

(वाक्यार्थमुक्तावली)

वृत्यङ्गीकारे न कर्मक्रमादिलोप इति वाच्यम् । तथात्वे सर्वैरपि शब्दैर्नियामकत्वातिरिक्त-गुणालाभप्रसङ्गात् । एष इमं लोकमभ्यार्चदित्युपक्रम्येत्यंशं परित्यज्येतरांशं व्याचष्टे **ज्योतिष्टोमादीति** ।। आदिपदेन ज्योतिरादिकर्म ज्योतिरादित्यादिपदेन ज्योतिष्टोमादिशब्दश्च गृह्यते । कर्मपदं साङ्गकर्मपरमिति भावेनोक्तं **तदङ्गेति** ।। भाष्येऽपि हिशब्दो यस्मादित्यर्थः इत्याशयेनोक्तम् ।। **यस्मादिति** ।। हरिमेवेत्यध्याहारः । वृत्यभावशङ्कापरिहाराय प्राप्तमुपक्रमा-दिति सूत्रांशं व्याकुर्वदेष इममिति भाष्यमवतार्य व्याचष्टे ।। **न चेति** ।। एतेनोपक्रम्य योगवृत्या हरिमधीयत इति सूत्रभाष्ययोरर्थ उक्तो भवति । न च योगमात्रेण रूढार्थापहारो युज्यते इति यच्चोदितं तदयुक्तम् । श्रौतयोगमात्रेण रूढ्यपहारस्य श्रुतावेव प्रतीतेरिति भावेनेष इममित्युप-क्रम्य तस्माच्छतर्चिन इत्याचक्षत एवमेव सन्तमित्यन्तं योगेन रूढ्यपहारमधीयत एक इति सूत्रार्थं मनसि निधायाह न चेत्यादिना ।। न तु मुख्यं तान्मुनीनित्यन्वयः ।। एवं श्रौतयोग-मात्रस्य रूढ्यपरिहारित्वं प्रमाणोक्तमसिद्धं च योगमात्रत्वं विद्वद्रूढेरपि सत्वादिति वदन् सुतरां रूढिसहितयोगस्य रूढ्यपरिहारित्वमित्याह ।। **यद्यपीत्यादिना** ।। एतेनैष इति योगमुपक्रम्या-चक्षत इति रूढि मप्यधीयत एक इति सूत्रार्थ उक्तो भवति । ननु श्रुतौ वसन्तशब्दस्य प्राथम्यात्तत्परित्यागे कारणाभावात् द्वितीयज्योतिशब्दः सूत्रे कथमुपात्त इत्यत आह ।। **ज्योतिरिति शब्देनेति** ।। वसन्तकालापेक्षया प्रधानकर्माभिधायकत्वादित्यर्थः । सौत्रतुशब्द एवार्थः सन्नीक्षति कर्मव्यपदेशात्स इत्यतोऽनुवृत्तेन स इत्यनेनान्वेति । तमिति विपरिणतेन च तमेव हरिमेवेति चान्वेति । उपक्रमादित्यनेन चान्वेतीत्युक्तं भवति । ल्यब्लोपनिमित्ता पञ्चमी । अत एव सुधायाम्, उपक्रमं विधायेत्युक्तम् । हिर्हेतौ । ततश्च ज्योतिः ज्योतिरादिसर्वस्वरवर्ण-पदघोषादिशब्दवाच्यः स हरिरेव हि यस्मादेके शाखिनो बह्वृचाः एष इमं लोकमभ्यार्चदित्युप-क्रम्यैवोपसंहारे सर्वशब्दाभिधेयत्वेन तं हरिमेवाभिधीयतेऽत इति सूत्रार्थः । कैमुत्यगर्भतया श्रुत्यर्थमाह– **यास्ता इति** ।। यद्यप्यैतरेयभाष्ये एकमेव व्याहरणमेकमेव नाम निर्दोषगुणपूर्ति-वाचकत्वादेकप्रकारता, प्राणो नारायण एव नारायणविषय एवेति व्याहृतशब्दस्य भावार्थकत्वं प्राणपदस्य सप्तम्यन्तत्वं चोक्तं इह व्याख्यानान्तरमित्यदोषः (विरोधः) ।

## तत्त्वसुबोधिनी

**श्रुतिसङ्गतिमिति** ।। अत्र विशेषादिति सूत्रतदुपात्तनामानि इति श्रुतिभ्यां सर्वशब्दवाच्यत्वे

(तत्त्वसुबोधिनी)

अभिहिते सर्वमध्येय इति तज्ज्योतिरादिशब्दानां कर्मक्रमविरोधव्युत्पत्त्यभावप्रसङ्गेन च विष्णुवाचकत्वं न सम्भवतीति पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति भावः । अधिकारिनियोज्ययजमानेति अधिकारित्वं फलस्वामित्वानियोज्यत्वं विधिप्रेर्यत्वावस्थायजमानत्वं कर्तृत्वावस्था इत्यवस्थाभेदमादायैव मुक्तं प्रमाणान्तरेणैव कर्मादिसिद्धिर्भविष्यतीत्याह ॥ **न हीति** ॥ प्रत्यक्षस्य वर्तमानमात्रग्राहित्वेन तत्राप्रवृत्तेः । अनुमानस्य च प्रत्यनुमानपरिहारत्वादिति भावः । अस्तु कर्माद्यभावः ततः किमित्यत आह ॥ **तथाचेति** ॥ परमात्मनि सर्वशब्दव्युत्पत्तेरेवाशक्यत्वान्न सर्वशब्दवाच्यत्वं धत्ते इत्यत आह ॥ **न चेति** ॥ रूढेः योगापेक्षया प्रबलत्वादिति भावः । योगमङ्गीकृत्य रूढ्यभावेन सर्वशब्दवाच्यत्वं न सम्भवतीत्यङ्गीकृत्योक्तम् । अधुना योगेऽपि न सम्भवतीत्यत आह– **अभ्युपेत्य चेति** ॥ **ज्योतिष्टोमादीति** ॥ यद्यपि सूत्रे ज्योतिःशब्द एवोपात्तः तथापि ज्योतिष्टोमे नेत्युत्पत्तिवाक्यविहितज्योतिष्टोमयागस्य वसन्तवाक्येन कालाख्यगुणविधानात् उत्पत्तिवाक्यस्य ज्योतिष्टोमशब्दस्य ग्रहणमिति ज्ञातव्यम् ॥ **भगवन्नामावृत्तित्वप्राप्तेरिति** ॥ प्रतिपादकप्रकृतिप्रत्ययादीनां सर्वेषां विष्णुनामत्वादित्यर्थः । योगस्य सत्त्वान्नवृत्त्यभाव इत्यत आह ॥ **एष इति** ॥ एषः नारायणः इमं लोकं ब्रह्मादिशरीरम् अभ्यार्चत् प्रविवेशेत्यर्थः । तस्मादित्यत्र कथं योगेन रूढ्यपरिहार उक्त इत्यतस्तदर्थमाह ॥ **एवमेवेति** ॥ तं ब्रह्मादिदेहं वर्षाणि अभ्यार्चत् यद्यस्मात् तस्मात् पुरुषायुषः शतं वर्षाणि भवन्ति तं शतं वर्षाण्यभ्यार्चत् । इति यद्यस्मात्तस्मादित्यर्थः । ननु वसन्तविषयवाक्ये वसन्तशब्दस्य प्रथमपठितत्वात् सूत्रे वसन्तशब्द एव ग्राह्यः ज्योतिःशब्दग्रहणं किमर्थमित्यत आह– **ज्योतिःशब्देति** ॥ तु शब्द एवार्थ इति । उपक्रमादिल्यबलोपनिमित्ता पञ्चमी तथा च उपक्रमस्यैवेत्यर्थः । तथा च रूढिनात्रापरिहारकविद्वद्रूढिसहितमहायोगं दर्शयितुम् एष इमं लोकमभ्यार्चत् इत्युपक्रमवाक्यम् । अन्यथा तावा एता इत्येतावतैव पूर्णत्वे इदं व्यर्थं स्यादिति सूत्रतात्पर्यमिति भावः ।

## वाक्यार्थविवरणम्

ननु 'वसन्ते ज्योतिषा यजेत' इत्यत्र वसन्तशब्दस्य प्रथमपठितत्वात् तस्यैव समन्वयो वक्तव्यः । ज्योतिश्शब्दसमन्वयकथनमसङ्गतमित्यत आह ॥ **ज्योतिश्शब्दस्येति** ॥ **प्रधानकर्मेति** ॥ ज्योतिष्टोमयागाख्यप्रधानकर्माभिधायकत्वादित्यर्थः । वसन्तादिपदानां तु कर्माङ्गाभिधायकत्वादिति भावः ।

## वाक्यार्थमञ्जरी

**कर्मक्रमेति** ।। कर्मतत्क्रमादित्यर्थः ।। **ज्योतिष्टोमादीति** ।। यद्यपि सूत्रादौ ज्योतिःशब्द एवोपात्तः तथापि ज्योतिष्टोमेन स्वर्गकामो यजेतेत्युत्पत्तिवाक्यविहितज्योतिष्टोमयागस्य वसन्ते वसन्त इति वाक्येन कालाख्यगुणविधानादुत्पत्तिवाक्यानुसारेणात्रत्यज्योतिःशब्दोऽपि ज्योतिष्टोमपर एवेत्याशयेन ज्योतिष्टोमशब्दग्रहणमिति ध्येयम् । कालो वसन्तादिः, कर्म यज्ञादि, क्रमो वेदकरणानन्तरं वेदिकरणादिः, अधिकारित्वं फलस्वामित्वावस्था, नियोज्यत्वं विधिप्रेर्यत्वावस्था, यजमानत्वं कर्तृत्वावस्थेत्यवस्थाभेदेनैकस्याधिकारित्वाद्युक्तिरुपपन्ना । फलं स्वर्गादि, ऋत्विजो होत्रादयः, प्रमाणान्तरेण प्रत्यक्षादिना येन तदभावाख्यविरोधो न स्यादिति भावः । व्युत्पत्त्ययोगाद्युक्तं चेत्तच्छब्दवाच्यत्वमित्याह ।। **किञ्चेति** ।। **गुणपूर्त्यसिद्धेरिति** ।। अवयवव्युत्पत्तावेव गुणलाभादिति भावः । किंज्योतिरादिपदानां प्रकाशादिवाचकत्वमुपेत्य ज्योतिष्टोमादिशब्दानां भगवति योगोऽङ्गीक्रियते उतान्यवाचकत्वं विना द्वितीयं दूषयति ।। **ज्योतिषामिति** ।। **भगवन्नामेति** ।। प्रातिपदिकप्रकृतिप्रत्ययादीनां सर्वेषां विष्णुनामत्वादिति भावः । आद्य आह ।। **स्तोमादीति** ।। **अन्यत्रापीति** ।। अतो न कालकर्माद्यभावापात इति भावः ।। **लक्षणेति** ।। मुख्यार्थप्रवाहसम्बन्धेन तीरे प्रवृत्तगङ्गादिशब्दस्य लाक्षणिकत्व-निश्चयादिति भावः ।। ॐ ज्योतिरूपक्रमात्तु तथा ह्यधीयत एके ॐ ।। ज्योतिरादिशब्दवाच्यं ब्रह्मैव न कर्मादिः कुतः हि यस्मादेके शाखिनः उपक्रमात् एष इमं लोकमभ्यार्चदितियोगेन शतर्च्यादिशब्दवाच्यत्वमुपक्रम्य तावा एता इति हरिमेव तथा सर्वशब्दवाच्यत्वेनाधीयन्ते पठन्ति तस्मादित्यर्थः । तथेति सौत्रपदानुवादः ।। **योगस्योक्तत्वादिति** ।। यस्माद् ब्रह्मादिदेहप्रविष्टं भगवन्तं शतं वर्षाण्यभ्यार्चत् तस्माच्छतर्चिन इति योगस्योक्तत्वादित्यर्थः । समग्रेतत् श्रुति-व्याख्यानं प्राणस्तथानुगमादित्यत्रास्माभिः कृतं द्रष्टव्यम् । कथमित्यत आह ।। **एतमेवेति** ।। प्रथमप्राप्तवसन्तपदत्यागेन ज्योतिर्ग्रहणे किं बीजमत आह ।। **ज्योतिःशब्दस्येति** ।। **तस्यैवेति** ।। राजा गच्छतीत्यादौ प्रधानपरराजशब्दस्यैव परिचारोपलक्षकत्वदर्शनादिति भावः ।। **तुशब्द एवार्थ इति** ।। तस्य प्रागेव हरिमेवाभिधीयत इत्यध्याहृतेन सम्बन्धो दर्शित इति ध्येयम् । प्रथमप्राणशब्दस्य सप्तम्यन्तत्वे तद्भाष्येऽभिहितत्वेऽपि प्रथमान्तत्वमभ्युपेत्याह– **विष्णुरिति** ।।

## सूत्रभाष्यम्

**॥ ॐ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॐ ॥ ११ ॥**

मधुविद्यादिवत्सर्वशब्दार्थत्वेन परस्य कल्पनोपदेशाच्च न कर्मक्रमादिविरोधः ॥

## सत्तर्कदीपावली

न केवलं व्युत्पत्तिसम्भवात् कर्मक्रमादिविरोधपरिहारः किं तर्हीत्यत आह ॥ **कल्पनेत्यादिना ॥** द्व्याख्यारमातिरोवंशाश्रितान्तरिक्षाख्यवायुमध्वरूपरथादित्यमण्डलान्तर्गतस्य भगवतः पञ्चमूर्तेरग्न्यादिप्रधानवस्वादिमधुकरमुखसंस्पर्शेन पञ्चधाविभिन्नऋगादिसर्ववेदाख्यपुष्पोत्थयशस्तेज इन्द्रियवीर्यान्नाद्यात्मकमधुरसत्वे कल्पनापि मधुविद्या । आदिशब्दादिदन्तच्छिर एष ह्यर्वाग्बिलश्चमस इत्यादि । तद्वदेव सर्वे वेदा यत्पदमामनन्ति यमिन्द्रमित्यादिवाक्यैरपि इन्द्रं मित्रमित्यादिवाक्यैरपि ज्योतिरादिकर्मक्रमकालादिप्रसिद्धसर्वशब्दार्थत्वेन सर्वस्मात्परत्वेन परस्य परमात्मनः कल्पनोपदेशात् । न कर्मक्रमकालाद्युक्त्या भगवद्वाचकत्वविरोधो भगवदुक्त्या वा कर्मक्रमादिवाचकत्वविरोध इत्यर्थः । न हि तिरोवंशादिशब्दानां द्व्याद्यवाचकत्वे द्यौरेव तिरश्चीनवंशा इत्याद्यौपदेशिककल्पना युज्यते । एवं च रूढरूढयोगादिशब्दवृत्तिभेदाज्ज्ञातादिशब्दानाम् अर्थान्तरेऽपि मुख्यमात्रवृत्तौ सत्यां तत्पूर्वकत्वेन महायोगवृत्त्या परमेश्वरे ज्योतिरादिसर्वशब्दव्युत्पत्तिः शक्यैव । यज्ञो वै विष्णुः 'अहम् क्रतुरहं यज्ञः' त्वं क्रतुस्त्वं हविस्त्वं हुताशः स्वयमित्यादि विद्वद्रूढिदर्शनेऽपि बालरूढ्यभावादेव कल्पनोपदेशः । अतः प्रतिपदं च भगवद्वाचकत्वं सर्ववेदानामिति सिद्धम् ॥

## तत्त्वप्रदीपिका

कर्मक्रमादिविरोधं परिहरति 'कल्पनोपदेशाच्च मध्वादिवदविरोधः' । 'असौ वा आदित्यो देवमधु' इत्याद्यायां मधुविद्याश्रुतौ यथा मधुशब्दार्थत्वेनाऽदित्यस्थो विष्णुः क्लृप्त उपदिश्यते । मधुगुणानां तत्राधिक्यात्तस्यैव च परममुख्यमधुत्वं भवति । न च तावता प्रसिद्धमधुनि व्यवहारलोपो लोकानां भवति । एवमेव सर्वशब्दानां परममुख्यार्थत्वेन क्लृप्तिर्विष्णौ वेदेनोपदिश्यते । सा च कल्पना प्रबलाऽनादित्वात्, विद्वत्सम्बन्धित्वाच्च । तथा च श्रुतिः 'कश्छन्दसां योगमावेद धीरः' इत्यादिका । अविद्वदपेक्षया कल्पनेत्युच्यते । मुख्यातिमुख्यवृत्तिभेदेन च वाच्यद्वयसम्भवो न दण्डवारितः । कृष्णादिशब्देषु तद्दर्शनात् । तस्मान्न व्यवहारलोपः ॥

## तत्त्वप्रकाशिका

ननु कथं ज्योतिरादिशब्दवाच्यत्वं परमात्मनः सम्भवति । कर्मक्रमादिविरोधात् । व्युत्पत्त्यसम्भवाच्चेत्याशङ्कामपनुदत्सूत्रमुपन्यस्य व्याचष्टे ॥ **कल्पनेति** ॥ सर्वशब्दानां परमात्मवाचित्वेऽपि न कर्मक्रमादिविरोधो व्युत्पत्त्ययोगो वा । यथा खलु मधुविद्यायामसौ वा आदित्यो देवमध्वित्यादिना मध्वादिपदार्थतया परमात्मोपासनोपदेशेऽपि न लौकिकमध्वादिवाचकाभावेन तदभावविरोधः । अन्यत्र रूढिमनिवार्यैव महायोगवृत्त्या मध्वादिशब्दानामीश्वरादौ वृत्त्यभ्युपगमात् । एवं सर्वशब्दवाच्यत्वे परमात्मनोऽभ्युपगतेऽपि न कर्मादिविरोधः । ज्योतिरादिशब्दानामन्यत्र रूढिर्योगो योगरूढी रूढोपचारो रूढलक्षणोपचारो लक्षणेति वृत्तीरभ्युपेत्य महायोगवृत्त्येश्वरवाचित्वाभ्युपगमात् । सर्वशब्दवाच्यत्वमीश्वरस्य चोपासनार्थमेव ह्युपदिश्यते 'प्राण ऋच इत्येव विद्यात्' इत्यादेः । उपासना च महायोगवृत्त्या सर्वशब्दार्थगुणवत्त्वेनैव न तु सङ्केतमात्रेणेति भावः । चशब्द एवार्थः (र्थे) । विरोधश्च नेति वा । प्रयोगमात्रबाहुल्यं रूढिः । यथा घटादिशब्दानां कुम्भादौ । प्रवृत्तिनिमित्तमात्रमपेक्ष्य वृत्तिर्योगः । यथा धूमध्वजादिशब्दानामग्न्यादौ । (यथापङ्कजादिशब्दानां भेकादौ) प्रवृत्तिनिमित्तं प्रयोगबाहुल्यं च योगरूढिः । यथा पङ्कजादिशब्दानां पद्मादौ । मुख्यार्थस्य शब्दप्रवृत्तिनिमित्तातिरिक्तगुणयोगेन वृत्तिरुपचारः । तत्र च प्रयोगबाहुल्यं रूढोपचारः । यथा लिखितसिंहादौ सिंहादिशब्दानाम् । वाच्यार्थानुपपत्त्या योग्येऽवाच्ये वृत्तिर्लक्षणा । तत्र च प्रयोगबाहुल्ये रूढलक्षणा । यथा ग्रामो गच्छतीत्यत्र ग्रामसम्बन्धिपुरुषे(पु)ग्रामशब्दस्य । उपचारमात्रं यथा पैङ्गल्यादियुते माणवकेऽग्निशब्दस्य । लक्षणामात्रं यथा नदीशब्दस्य तीरे । एताः वृत्तयो लोके । हरौ तु महायोगो महारूढियोगश्च । तत्र तदितरत्र प्रसिद्धशब्दानां महायोगः । निरतिशयप्रवृत्तिनिमित्तसद्भावात् । तदेकनिष्ठानां महारूढियोगः । नारायणादिशब्दानां तत्र बहु प्रयोगयुक्तत्वान्निरतिशयप्रवृत्तिनिमित्तसद्भावाच्च । स्तम्भादिशब्दानां हरौ विद्वद्रूढिसद्भावेऽपि सार्वजनीनताभावेनाऽमहत्त्वाद्भेदः । अतः कर्मतदङ्गवाचिशब्दवाच्यो हरिरिति सिद्धम् ॥

## गुर्वर्थदीपिका

प्रयोगमात्रबाहुल्यमित्यत्र मात्रपदेन योगोपचारादिनिमित्तान्तरं व्यवच्छिद्यते । न तु घटत्वादिकम् । अतो न कश्चित्क्षुद्रोपद्रवः । प्रवृत्तिनिमित्तमात्रमित्यत्रावयवविभागलभ्यं पाककर्तृत्वादिकं प्रवृत्तिनिमित्तम् । मात्रपदेन योगरूढिर्व्यवच्छिद्यते । उपचारलक्षणे मुख्यार्थस्येत्यं-

(गुर्वर्थदीपिका)

तद्गुणयोगेनेत्यनेन सम्बध्यतो शब्दप्रवृत्तिनिमित्तानिरिक्तेति विशेषणं घटत्वाख्यगुणयोगेन घटान्तरे प्रवर्तमानघटशब्दव्यवच्छेदार्थम् । प्रवृत्तिनिमित्तपदेन च मुख्यतः प्रवृत्तिनिमित्तं गृह्यते । तत्र तस्मिन्नुपचारे । एवं च लक्षणसांकर्यायोद्देशक्रमोल्लङ्घनमिति ज्ञेयम् । लिखितसिंहादाव-वयवस्थानसादृश्यमेव गुणः देवदत्तादौ शौर्याख्यगुणसादृश्येन सिंहशब्दः प्रयुज्यते । वाच्यार्थानुपपत्त्या योग्य इत्यत्र योग्ये शक्यसम्बन्धेन योग्ये इत्यर्थः । सार्वजनीनताऽभावेनेत्यत्र सार्वजनीनत्वं नाम विद्वदविद्वदाख्यसकलजनसम्बन्धित्वमित्यर्थः । तद्भेदः महायोगरूढि-शब्देभ्यो भेदः । स्तम्भेन्द्रादिशब्देषु महायोगवत् नारायणादिशब्देषु महायोगरूढिवच्च विद्व-द्रूढिमहायोगयोग्यशब्दानां स्तम्भेन्द्रादिशब्देभ्यः पृथगभावेनासङ्कीर्णोदाहरणाभावाच्च पृथगुक्तिः ॥

## भावबोधः

रूढिपदं तु योगादिवृत्त्यन्तरोपलक्षकमित्यभिप्रेत्य तद्याचष्टे– **ज्योतिरादिशब्दानामिति** ॥ **च शब्द एवार्थ इति** ॥ अनेन बुद्ध्या विवेकेन कल्पनायैवोपासनार्थमेवेति वा कल्पनोपदेशादेव महायोगवृत्तिः सिध्यति । न तु तदर्थं हेत्वन्तरमन्वेषणीयमिति वा एवकारसम्बन्ध इति भावः । अत एव टीकायामुपासनार्थमेवेत्याद्युक्तम् ॥ **विरोधश्च नेति चेति** ॥ न केवलं सर्वशब्द-वाच्यत्वाङ्गीकारे 'तथा ह्यधीयत' इत्युक्तसाधकसद्भावः, किन्तु कर्मक्रमादिविरोधोऽपि नेत्युक्तसमुच्चयार्थश्चेति भावः ॥

> 'प्रयोगमात्रबाहुल्यं रूढिरित्यभिधीयते ।
> प्रयोगयुक्तसादृश्यं सम्बन्धो वाप्यमुख्यतः ॥
> वृत्तिहेतुरिति ज्ञेयः ॥'

इत्यनुव्याख्यानं मनसि निधाय रूढ्यादिवृत्तिलक्षणान्याह– **प्रयोगमात्रबाहुल्यमित्या-दिना** ॥ मात्रेत्यवयवार्थसादृश्यसम्बन्धसापेक्षता व्युदासार्थम् । तेन महायोगरूढेर्योगरूढेः रूढोपचाररूढलक्षणाभ्यां च व्यवच्छेदः । एवञ्च बाहुल्यमिति स्वरूपसङ्कीर्तनं मात्रपदे-नैवेतरव्यवच्छेदसिद्धेः ॥ **प्रवृत्तिनिमित्तमात्रमिति** ॥ निर्वचनलभ्योऽर्थः प्रवृत्तिनिमित्तम् । तेनाताद्दशघटत्वादिप्रवृत्तिनिमित्तसापेक्षरूढिव्यवच्छेदः । प्रयोगबाहुल्यसापेक्षता व्युदासाय मात्रपदम् । तेन योगरूढिव्यवच्छेदः । न च महायोगेऽतिव्याप्तिः भुक्तमात्रमितिवन्मात्रशब्दस्य

(भावबोधः)

प्रवृत्तिनिमित्तात्पत्वार्थस्यापि विवक्षितत्वात् । प्रवृत्तिनिमित्तं प्रयोगबाहुल्यश्चेति । रूढिमात्रे योगमात्रे नातिप्रसङ्गवारणायोभयोपादानम् । अत्र प्रवृत्तिनिमित्ताल्पत्वस्य वाऽविद्धन्मात्रप्रयोग-बाहुल्यस्य विवक्षितत्वेन न महायोगरूढिवृत्तावतिप्रसङ्गः ॥ **मुख्यार्थस्येति** ॥ योगादि-व्यवच्छेदायातिरिक्तेत्यन्तम् ॥ **वाच्यार्थानुपपत्त्येति** ॥ पूर्वं प्रतीतार्थानुपपत्त्येत्यर्थः । तेन लक्षितलक्षणाद्यनुगमः । इदञ्चामुख्यार्थग्रहणे हेतुत्वेनोक्तम् । न तु लक्षणान्तर्गतत्वेन । अत एव 'पूर्वायोगे परग्रहः' इत्यनुव्याख्यानमेवमेव व्याख्यातम् । गौण्यामतिव्याप्तिवारणाय योग्य इति । शब्दप्रतिपाद्यसम्बन्धे इत्यर्थः । तेन लक्षितलक्षणासङ्ग्रहोऽपि गोशब्दशक्यपृथिव्यादि सम्बन्ध-गवादिविषयकगोशब्दरूढ्यादावतिव्याप्तिवारणायावाच्य इति । न चाजहत्स्वार्थलक्षणायामति-व्याप्तिः तत्र स्वार्थस्यापि लक्ष्यत्वेन तस्य स्वसम्बन्धाभावादिति वाच्यम्; काकत्वादिस्वमात्र-निष्ठधर्मावच्छेदेन स्वार्थस्य काकादेः स्वसम्बन्धाभावेऽपि अशक्यसाधारणदध्युपघातकत्वादि-रूपधर्मावच्छेदेन स्वसम्बन्धसम्भवात् ॥

यद्वा भेदानुमानेऽवस्थाभेदमादायैकस्यैव पक्षसपक्षत्ववदत्राप्यवस्थाभेदमादाय स्वस्यापि सम्बन्धसम्भवात् । अथ वा योग्य इत्यस्य शब्दप्रतिपाद्यसम्बन्धितावच्छेदकावच्छिन्न इत्यर्थः । तथा च काकस्यापि शब्दप्रतिपाद्यसम्बन्धितावच्छेदकदध्युपघातकत्वावच्छिन्नत्वान्न शङ्काव-काशः । महायोगो महारूढियोगश्चेति । अनेन न्यायविवरणे महायोगवृत्त्येत्यस्य महायोग-महारूढियोगवृत्त्येत्यर्थः उक्तो भवति ॥

अत्राद्ये– स्वपक्षसाधकोक्तिः । द्वितीये– बाधकोद्धार इति सूत्रक्रमः ।

> 'न जीवभेदसूत्राणां शङ्क्यात्र पुनरुक्तता ।
> वाक्यान्तरद्योतकत्वात् ॥'

इत्यनुव्याख्यानोक्तन्यायेन भेदसूत्राणामिव 'तथा चेतोऽर्पणनिगदादुपासात्रैविध्यात्, निचाय्यत्वादेवं तथा दृष्ट्युपदेशात्' इत्येतैस्तत्तत्प्रकरणगतशब्दार्थरूपत्वेनोपासनोक्ता । अत एव तत्र तत्रैवंशब्दप्रयोगः । ''कल्पनोपदेशात्'' इत्यत्र तु वैदिकसर्वशब्दार्थरूपत्वेनोपासना उच्यत इति न पूर्वपूर्वेणोत्तरोत्तरस्य गतार्थतेति ज्ञेयम् ॥

## भावदीपः

मध्वित्यादिभाष्यमाकाङ्क्षाक्रमेण व्याचष्टे ॥ **सर्वशब्दानामिति** ॥ न कर्मक्रमादिविरोध इति भाष्यं व्युत्पत्तेरप्यशक्यतेत्यनुभाष्योक्तस्य उपलक्षणमिति भावः ॥ **यथेति** ॥ छान्दोग्ये तृतीयाध्यायोक्तमधुविद्यायामित्यर्थः । कल्पनोपदेशादित्यत्र कल्पनं लोकतः क्लृप्तं तत्तद्वाचित्व-मनिवार्यैव लोकात्क्लृप्तमहायोगवृत्तेः कल्पनाया व्युत्पादनेन । उपदेशादिति अर्थद्वयमुपेत्य हेत्वंशं दृष्टान्तेऽपि योजयति ॥ **अन्यत्रेति** ॥ उक्तहेतुं परामृश्य दार्ष्टान्तिके योजयति ॥ **एवमिति** ॥ कथमित्याकाङ्क्षायां रूढी रूढियोगो महायोगो महारूढियोगो रूढोपचारो रूढलक्षणा उपचारे लक्षणेति शब्दवृत्तिभेदात् रूढिपूर्वकत्वेन महायोगवृत्त्या परमेश्वरेऽखिल-शब्दव्युत्पत्त्युपपत्तेरिति न्यायविवरणोक्तमुपलक्षणं मत्वा लोकविषयं वृत्तिसप्तकं दर्शयन्नेव तद्विवृण्वान एवमित्युक्तं व्यनक्ति ॥ **ज्योतिरादीति** ॥ **महायोगेति** ॥ प्रवृत्तिनिमित्ताधिक्यादिति भावः । भाष्ये प्राण ऋच इत्येव विद्यादिति वाक्यशेषोक्त्यनुरोधेन कल्पनोपदेशादित्यस्य सर्वशब्दवाच्यत्वेन कल्पनाया उपदेशादित्यर्थान्तरं चाह ॥ **सर्वशब्दवाच्यत्वमिति** ॥ वाच्यत्वं चेति चान्वयः ॥ चशब्द इति ॥ लोकसिद्धिवृत्तारनिवार्यैवेति सर्वशब्दार्थगुणत्वेनैवेति वाऽध्याहृतेनान्वय इति भावः ॥ **विरोधश्चेति** ॥ न केवलं तथा ह्यधीयत इत्युक्तसाधकमस्तीति समुच्चयार्थ इत्यर्थः । न्यायविवरणोक्तं वृत्त्यष्टकं योगवृत्तेरुपलक्षणमिति भावेन लक्षणो-दाहरणाभ्यां वृत्तिनवकं व्यनक्ति ॥ **प्रयोगमात्रेति** ॥ प्रयोगमात्रबाहुल्यं रूढिरित्यभिधीयत इत्याद्यनुभाष्योक्तेरिति भावः । मात्रेति अवयवार्थसादृश्यादिसापेक्षताव्युदासः । व्यक्तमेतत्सर्वं तर्कताण्डवे द्वितीयपरिच्छेदे ॥ **मुख्यार्थस्येति** ॥ गुणयोगेनेत्यन्वयः ॥ **तदितरत्रेति** ॥ स्तम्भेन्द्रादिशब्दानामित्यर्थः । महारूढिस्तु हरौ न सम्भवति विद्वद्रूढिर्वैदिका स्यात्सा योगादेव लभ्यत इत्यनुभाष्ये ब्रह्मणि योगं विना विद्वद्रूढेरभावोक्तेरिति भावः । हरावुक्तवृत्तिद्वयस्य साङ्कर्यमाशङ्क्य भेदमाह ॥ **स्तम्भादीति** ॥ तद्भेदः महारूढियोगाद्भेदः । महायोग इत्यर्थः ॥ **अत इति** ॥ साधकभावात् बाधकाभावाच्चेत्यर्थः ॥

## अभिनवचन्द्रिका

**अत्र गुणसूत्रम्** – 'ॐ कल्पनोपदेशाच्च मध्वादिवदविरोध ॐ' इति । ज्योतिरादि-शब्दानां भगवति समन्वयव्युत्पादनावसरे तदवयवानामन्यपरत्वकल्पनया अन्यपरत्वस्वीकारेण

(अभिनवचन्द्रिका)

ज्योतिरादिशब्दानामुपदेशात् व्युत्पत्त्ययोगः । एवं ज्योतिरादिशब्दानां कर्मक्रमादि-वाचकत्वाङ्गीकारात् कर्मक्रमादिलोपलक्षणो विरोधः । पदात्पराऽऽमन्त्रितत्वेन निघातप्रसङ्गश्च न भवति । यथा मध्वादिशब्दानां भगवद्वाचित्वेऽपि न लौकिकमध्वादिवाचकत्वाभावेन व्यवहारविलोपो न भवतीति सूत्रार्थः । **व्युत्पत्तिसम्भवाचेति** ॥ उपलक्षणमेतत् । अस्मिन्पक्षे सर्वपदानां सम्बुध्यन्तत्वात् 'आमन्त्रितस्य' इत्यनेन पदात्पराणां सर्वेषां पदानां निघातत्व-प्रसङ्गश्चेति द्रष्टव्यम् ॥ **व्युत्पत्त्ययोग इति** ॥ एतदप्युपलक्षणम् 'आमन्त्रितस्य' इत्यनेन सर्वेषां पदानां निघातत्वप्रसङ्गो न' इत्यपि ग्राह्यम् ॥ **मध्वादिवाचकाभावेनेति** ॥ मधुविद्याया भगवत्परत्वं स्पष्टमेवेति न मधुशब्दस्य पक्षसमत्वमिति द्रष्टव्यम् ॥ **न कर्मादिविरोध इति** ॥ 'वसन्ते वसन्त' इत्यादिवाक्येनैव कालकर्मादेर्विहितत्वात्, कालकर्माभावाख्यविरोधः, ज्योतिरादिपदानामन्यपरत्वाभ्युपगमेन व्युत्पत्त्यसम्भवः, सर्वेषां पदानां सम्बुध्यन्तत्वेऽपि वाक्यसमन्वयाय विभक्त्यन्तरस्याप्यङ्गीकारेण तद्विवक्षया 'सावेकाचस्तृतीयादिर्विभक्तिः' 'ङ्याश्छन्दसि बहुलम्' इत्यादिस्वरविधानबलेन श्रूयमाणस्वरस्योचितत्वात् सर्वेषां पदानां निघातत्वप्रसङ्गश्च नेत्यर्थः ॥ **प्रयोगमात्रबाहुल्यमिति** ॥ बहुलप्रयोगज्ञापिता वृत्तिरित्यर्थः ॥ **प्रवृत्तिनिमित्तं प्रयोगबाहुल्यं चेति** ॥ अपेक्ष्य वृत्तिरिति वर्तते । समाहारवृत्तिरियं, 'विद्या-शब्दस्य योगरूढिभ्यां प्रवृत्तत्वात्' इति सुधोक्तेः, पङ्कजशब्दात् पङ्कजनिकर्तृत्वमिव पद्मत्व-स्याप्युपस्थितेश्च । प्रयोगबाहुल्यमजानतः पङ्कजनिकर्तृत्वबोधात्, योगमजानतः पद्मत्वमात्र-बोधाच । अन्यथा योगाभावाद्रूढ्यभावाच्च योगरूढिमजानतः योगेन रूढ्या वा जातस्य बोधस्य घटशब्दस्य पटे शक्तिभ्रमेण जातबोधवत् भ्रमत्वप्रसङ्गः । न चैवं रूढोपचारस्यापि समाहारत्व-प्रसङ्ग इति वाच्यम् । लिखितसिंहे सिंहशब्दप्रयोगेण पङ्कजशब्दात्पद्मत्वबोधवत् सिंहत्वबोधा-जननात् । स न समाहारवृत्तिः, किन्तु उपचारवृत्तिरेव प्रयोगबाहुल्यादुपचारमात्रात् विशिष्यते । एवं रूढलक्षणापि न समाहारवृत्तिः, किन्तु लक्षणैव । अन्यथा 'उपचारो लक्षणा यथा' इत्येवाऽवक्ष्यत् ॥ **हरौ तु महायोग इति** ॥ यद्यपि हरौ लक्षणावृत्तिरप्यस्ति, तथापि यस्य शब्दस्य हरौ लक्षणा तत्र तस्य महायोगो वा महायोगरूढिर्वा नियमेनास्त्येव न तु तीरादे-र्गङ्गाशब्दलक्ष्यत्वमात्रमिव लक्षणादिमात्रमस्तीति द्योतनाय 'लोके एता वृत्तयः, हरौ तु महायोगो महायोगरूढिश्च' इत्युक्तमिति बोध्यम् । एतेन अङ्गुष्ठमात्रश्रुतेः, सुषिरश्रुते श्वरं लाक्षणिकत्वेनोक्तत्वात्, 'प्राज्ञव' इति 'सर्वं खल्विदं ब्रह्म' इति श्रुतेः गौणत्वेन स्वीकृतत्वा-दित्यलम्' इति कर्मनिर्णयदीपिकाविरोध इति परास्तम् ।

(अभिनवचन्द्रिका)

**पूर्वपक्षस्तु** – ज्योतिरादिशब्दा न विष्णुवाचकाः, किन्तु ज्योतिष्टोमादिकर्मतदङ्गवाचकाः। तत्रैव प्रसिद्धत्वात् तेषां परमात्मवाचित्वे कालकर्मक्रमाद्यभिधायकाभावेन तदभावाख्य-विरोधापातात्। न हि तदभिधायकं प्रमाणान्तरमस्ति। तथा च विहितानुष्ठानलोपप्रसङ्गः। किं च ज्योतिरादिशब्दा रूढ्या परमात्मवाचकाः उत योगेन। नाद्यः तदभावात्, गुणपूर्त्यसिद्धेश्च। न द्वितीयः तेन रूढार्थापहारायोगात्। नापि योगः सम्भवति, ज्योतिषां स्तोम इत्यादिरूपेण ज्योतिष्टोमादिशब्दानां योगो वाच्यः। न हि स्तोमादिशब्दानामन्यपरत्वानभ्युपगमे योगः सम्भवति। भगवन्नामावृत्तित्वप्राप्तेः स्तोमादिशब्दानामन्यपरत्वाङ्गीकारे किं ज्योतिष्टोमादि-शब्दैरेव विशेषतोऽपराद्धम्। एवञ्च ज्योतिरादिशब्दा न परमात्मवाचका इति न समन्वयसूत्रं युक्तमिति।

**सिद्धान्तस्तु** – हरिरेव ज्योतिरादिशब्दवाच्यः। 'एष इमं लोकमभ्यार्चत्' इत्युपक्रम्य 'ता वा एता' इति सर्वशब्दवाच्यताभिधानात्। न च – श्रुतौ लक्षणाऽभिप्रेतेति वाच्यम्। उप-लक्षणतया शतर्चादिशब्दानां योगस्योक्तत्वात्। न च शब्दानामन्यत्र रूढत्वेन महातात्पर्य-विषयत्वं रूढार्थस्यैव, विष्णोस्त्ववान्तरतात्पर्यविषयत्वम्, अमुख्यवृत्तिविषयत्वादिति वाच्यम्। 'तस्माच्छतर्चिनः तस्माच्छतर्चिन इत्याचक्षत' इत्यनेन योगेन रूढार्थापहारोक्तेः। तत्कुत इति चेत्, 'एतमेव परमात्मानं न मुख्यतो यौगिकार्थं सन्तं शतर्चादिनामभिराचक्षते, न तु रूढित्वेऽपि मुनीन् महातात्पर्यविषयतया आचक्षत' इति प्रतीतेः। ननु ज्योतिरादिशब्दवाच्यत्वं न परमात्मनः सम्भवति, कर्मक्रमाद्यभावापातात्। अस्मिन्पक्षे सर्वेषां पदानां सम्बुध्यन्तत्वेन 'आमन्त्रितस्य' इत्यनेन निघातत्वापातादिति चेत्, यथा खलु मधुविद्यायाम् 'असौ वा आदित्यो देवमधु' इत्यादिना मध्वादिपदार्थतया परमात्मोपासनोपदेशेऽपि न लौकिकमध्वादि-वाचकाभावेन तदभावविरोधः। अन्यत्र रूढिमनिवार्यैव महायोगवृत्त्या मध्वादिशब्दा-नामीश्वरादौ वृत्त्यभ्युपगमात्। एवं च सर्वशब्दवाच्यत्वे परमात्मनोऽभ्युपगतेऽपि अन्यस्यापि वाक्यप्रतिपाद्यत्वाङ्गीकारात्, तदर्थं विभक्त्यन्तरम्। विभक्त्यन्तराङ्गीकाराच्च न कर्माद्य-भावापातः। न च व्युत्पत्तिसम्भवो नापि सर्वेषां निघातत्वप्रसङ्गः। अतः कर्मतदङ्गवाचि-शब्दवाच्यो हरिरिति सिद्धम्।

## वाक्यार्थमुक्तावली

न कर्मक्रमादिविरोध इति भाष्यमुपलक्षणं मत्वा विरोधप्रसङ्गप्रदर्शनपूर्वकं व्याचष्टे ॥ **सर्वशब्दानामिति** ॥ तेन सूत्रे चशब्दोऽपि शब्दार्थे । सर्वशब्दानां परमात्मवाचित्वेऽपीति पूर्वसूत्रार्थाङ्गीकारसमुच्चायकः । न केवलं विरोधाभावो व्युत्पत्त्यभावश्च नेति समुच्चायको वेत्युक्तं भवति ॥ मध्वादिवदिति सप्तम्यर्थे वतिरिति भावेनाह यथा मध्वित्यादिना ॥ **उपदेशोऽपीति** ॥ एतेनोपदेशाच्चेति चशब्दो यथाश्रुतो योजितो बोध्यः ॥ प्रतिज्ञाया दृष्टान्तमुक्त्वा दार्ष्टान्तिकं विवृणोति **एवमिति** ॥ वृत्तीरभ्युपेत्यानेन कल्पनोपदेशादिति व्यस्तं समस्तं च कल्पनेति प्रथमा च द्वितीयार्थे वृत्तिक्लृप्तिमित्यर्थः ॥ अभ्युपेत्यध्याहार इत्युक्तं भवति ॥ समस्तपदत्वेऽपि कल्पनया चशब्दगतेन चतुर्थ्यन्तेन सम्बन्धमभिप्रेत्य व्याचष्टे । सर्वशब्दवाच्यत्वमित्यादिना ॥ अस्तूपसनार्थमेवोपदेशस्तावता योगवृत्तिः कथं लभ्यत इत्यत आह ॥ **उपासना चेति** ॥ भाष्ये चशब्दस्य स्पष्टमव्याख्यातत्वादाह ॥ **चशब्द एवार्थ इति** ॥ न केवलं व्युत्पत्त्यभावो विरोधश्च नेति वार्थ इति भावः ॥

ततश्चायं सूत्रार्थः ॥ यथा मध्वादिविद्यासु मध्वादिशब्दार्थतया परमात्मनः कल्पनोपदेशाच्चोपासनोपदेशोऽपि न लौकिकमध्वादिवाचका(पदा) भावेन तदभावविरोधः । कुतः कल्पनोपदेशात् अन्यत्र रूढिक्लृप्तिमनिवार्यैव ईश्वरे कल्पनया योगक्लृप्त्यैवासावादित्यो देवमध्वित्युपदेशात् । एवं परमात्मनः सर्वशब्दवाच्यत्वेऽभ्युपगतेऽपि ज्योतिरादिशब्दानामन्यत्र रूढ्यादिसत्यकल्पनामभ्युपेत्य कल्पनया महायोगवृत्तिक्लृप्त्यादिकल्पनाया एव उपासनार्थमेव परमात्मनः सर्वशब्दवाच्यस्योपदेशान्न कर्मक्रमादिविरोधो व्युत्पत्त्यशक्यता चेति ज्योतिष्टोमादिपदानामीशव्युत्पादनदशायमेव पदानामन्यत्र रूढ्यङ्गीकारात् । ज्योतिराद्यवयावानामप्यन्यपरत्वस्वीकारात् । अकाराद्येकवर्णपरिशेषेऽपि पदत्वविवक्षायामश्रुतेनापि योग्यतरेणान्वयोपपत्तेरिति दिक् ॥ **प्रयोगमात्रेति** ॥ मात्रेत्यवयवार्थसादृश्यसम्बन्धसापेक्षताव्युदासार्थम् ॥ तेन योगरूढ, रूढोपचार, रूढलक्षणा व्युदासः । प्रयोगमात्रं रूढिरित्युक्तेऽप्यतिव्याप्त्यभावाद्बाहुल्यपदं स्वरूपकथनम् ॥ **प्रवृत्तिनिमित्रमात्रमिति** ॥ निर्वचनलभ्योऽर्थः प्रवृत्तिनिमित्तम् । तेन तादृशघटत्वादिप्रवृत्तिनिमित्तसापेक्षताव्युदासाय मात्रपदम् ॥ तेन योगरूढिव्यवच्छेदः ॥ न च महायोगेऽतिव्याप्तिः । भुक्तमात्रमितिवन्मात्रशब्दस्य प्रवृत्तिनिमित्तालपत्वार्थस्यापि विवक्षितत्वात् ।

(वाक्यार्थमुक्तावली)

योगरूढिलक्षणे प्रवृत्तिनिमित्तात्पत्वस्य वाऽविद्वन्मात्रप्रयोगवाहुल्यस्य वा विवक्षितत्वेन न महायोगरूढिवृत्तावतिव्याप्तिः ॥ **मुख्यार्थस्येति** ॥ योगादावतिव्याप्तिवारणायानिरिक्तेत्यन्तम् ॥ **वाच्यार्थानुपपत्त्येति** ॥ पूर्वप्रतीतार्थानुपपत्त्येत्यर्थः । तेन लक्षितलक्षणाद्यनुगमः । ब्राह्मणा राजकुल एकीभवन्तीत्यादौ ब्राह्मणमुख्यार्थब्राह्मणां तल्लक्षिततन्मतीनां चैकीभावानुपपत्तौ ब्राह्मणपदेन तन्मतिलक्षणाद्वारा मतिविपयलक्षणाङ्गीकारात् । लक्षितलक्षणास्थले पूर्वप्रतीतार्था-नुपपत्तेरेव स्वीकार्यत्वात् ॥ **यत्प्रोक्तं पूर्वायोगे परग्रह इति** ॥ इदं च मुख्यार्थग्रहणं हेतुत्वेनोक्तम् । न तु लक्षणशरीरप्रविष्टत्वेनेति बोध्यम् । गौण्यामतिव्याप्तिवारणाय योग्य इति । शब्दप्रतिपाद्यसम्बन्ध इत्यर्थः । तेन लक्षितलक्षणासङ्ग्रहोऽपि गोशब्दशक्यपृथिव्यादिसम्बन्धेन गवादिविषयकगोशब्दरूढ्यादावतिव्याप्तिवारणायावाच्य इति । न चाजहत्स्वार्थ लक्षणाया-मतिव्याप्तिः । तत्र स्वार्थस्यापि लक्ष्यत्वेन तस्य स्वसम्बन्धाभावादिति वाच्यं काकस्यापि स्वमात्रनिष्ठधर्मावच्छेदेन स्वार्थस्य काकादेः स्वसम्बन्धसम्भवात् ।

यद्वा योग्यइत्यस्य शब्दप्रतिपाद्यसम्बन्धितावच्छेदकावच्छिन्न इत्यर्थः । तथा च काकस्यापि शब्दप्रतिपाद्यसम्बन्धितावच्छेदकावच्छिन्नत्वान्न शङ्कावकाश इति भावबोधे निरूपितम् । यद्वा अजहल्लक्षणा नाम न वाच्यार्थस्यापि लक्षणा । वाधकाभावात् । न च वृत्तिद्वययोगो वाधकम् । गङ्गायां मत्स्यघोषावित्यादौ वृत्तिद्वयदर्शनात् । न च तत्र वाक्यभेदकल्पकाभावात् बाधानु-सन्धानतः गङ्गायां घोष इति शब्दश्रवणे युगपदेव गङ्गातत्तीरोपस्थितेरनुभवसिद्धत्वात् । गङ्गा-शब्दश्रवणे तीरमात्रानुपस्थितेः । षट्प्रश्नभाष्यटीकायां वायुशब्दस्य वृत्तिद्वयाङ्गीकाराच्च । चन्द्रिकायामस्मिन्नेवाधिकरणे वृत्तिद्वयसम्भवस्य स्पष्टमुक्तत्वाच्च । किं नाम सत्वासमर्पणाय वाच्यार्थमपरित्यज्यान्यस्मिन् लक्षणा अजहल्लक्षणा । वाच्यार्थं परित्यज्य लक्ष्यार्थेनैवान्वय-पर्यवसानं यत्र साजहल्लक्षणेति तयोर्भेदः तथाचाजहल्लक्षणास्थले स्वार्थस्य लक्ष्यत्वाभावान्न काप्यनुपपत्तिरिति ॥ **पैङ्गिल्यादियुत इति** ॥ अग्निशब्दप्रवृत्तिनिमित्ततातिरिक्तपैङ्गिल्यगुण-योगादिति भावः ॥ सहनवति देवदत्ते सिंहशब्दस्तु यौगिको न गौणः तत्र क्रौर्यगुणयोगविवक्षा चेद्गौण इति बोध्यः । पूर्वाधिकरणे सहनवत्यपि पुरुषे सिंहशब्दस्य शक्तेरेवासिद्धत्वात् । योगरूढिवशेन सिंहशब्दशक्तिकसिंहापेक्षया मुख्यत्वाभिप्राया न तु गौणत्वाभिप्रायेति ॥ **महा-रूढियोग इति** ॥ नारायणादिशब्दानां हरौ विद्वद्रूढ्यज्ञरूढ्योः सत्वान्न महारूढिरित्यर्थः ॥ **सार्वजनीनताभावेनेति** ॥ पामरप्रसिध्यभावेनेत्यर्थः ॥

(वाक्यार्थमुक्तावली)

न जीवभेदसूत्राणां शङ्क्यात्र पुनरुक्तता ॥

वाक्यान्तरज्ञापकत्वादित्यनुव्याख्यानोक्तन्यायेन भेदसूत्राणामिव तथाचेतोर्पणनिगदात्, उपासात्रैविध्यात्, निचाय्यत्वादेवं, तथादृष्ट्युपदेशादिति सूत्रैः तत्प्रकरणगतशब्दार्थत्वेनोपासनोक्ता । अत एव च तथैवं शब्दप्रयोगः कल्पनेत्यत्र तु वैदिकसर्वशब्दार्थत्वेनोपासनोच्यत इति न गतार्थतेति ज्ञेयम् । अत्राद्ये, स्वपक्षसाधकोक्तिः, द्वितीये बाधकोद्धार इति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

ननु योगः किमर्थं स्वीकर्तव्यः सङ्केतमात्रेणोपासनोपपत्तेरित्यत आह ॥ **उपासना चेति** ॥ **चशब्द एवार्थ इति** ॥ अनेन बुद्ध्या विविक्तेन कल्पनायैव उपासनार्थमेवेति कल्पनोपदेशादेव महायोगवृत्तिः सिद्ध्यतीति भावः । विरोधश्च ॥ **नेति वेति** ॥ न केवलं सर्वशब्दवाच्यत्वाङ्गीकारे तथा ह्यधीयत इत्युक्तसाधकसद्भावः किन्तु कर्मक्रमादिविरोधोऽपि नेति उक्तसमुच्चयार्थश्च इति भावः । रूढ्यादिवृत्तिलक्षणान्याह ॥ **प्रयोगमात्रमित्यादिना** ॥ मात्रेत्यवयवार्थसादृश्यसम्बन्धसापेक्षता व्युदासार्थम् । तेन महायोगरूढेः योगरूढिरूढोपचाररूढलक्षणाभ्यां च व्यवच्छेदः । एवं च बाहुल्यमिति स्वरूपसङ्कीर्तनम् । मात्रपदेनैव इतरव्यवच्छेदसिद्धेः ॥ **प्रवृत्तिनिमित्तमात्रमिति** ॥ निर्वचनलभ्योऽर्थः । प्रवृत्तिनिमित्तम् । तेन तादृशघटत्वादिति प्रवृत्तिनिमित्तसापेक्षरूढिन्यवच्छेदः । न च महायोगेति व्याप्तिः भूतमात्रमितिवत् मात्रशब्दस्य प्रवृत्तिनिमित्ताल्पार्थत्वस्य विवक्षितत्वात् ॥ **प्रवृत्तिनिमित्तं प्रयोगवाहुल्यं चेति** ॥ रूढमात्रे योगमात्रे वा अतिप्रसङ्गवारणाय उभयोपादानम् । अत्र प्रवृत्तिनिमित्ताल्पत्वस्य वा अविद्वन्मात्रप्रयोगबाहुल्यस्य वा विवक्षितत्वेन न महायोगरूढावतिप्रसङ्गः । रूढोपचारज्ञानाय उपचारलक्षणमादावाह ॥ **मुख्यार्थस्येति** ॥ योगादिव्यवच्छेदायातिरिक्तेत्यन्तम् । रूढलक्षणज्ञानाय लक्षणालक्षणमादावाह ॥ **वाच्यार्थानुपपत्येति** ॥ पूर्वं प्रतीतार्थानुपपत्त्येत्यर्थः । तेन लक्षितलक्षणान्यनुगः । गौण्यामतिव्याप्तिवारणाय योग्य इति । शब्दप्रतिपाद्यसम्बद्ध इत्यर्थः । गोशब्दशक्यपृथिव्या सम्बद्धगवादिविषयकगोशब्दरूढ्यादावतिव्याप्तिवारणाय वाच्य इति ॥ न चाजहत्स्वार्थे लक्षणानामतिव्याप्तिः । तस्य स्वार्थस्यापि लक्ष्यत्वेन तस्य स्वसम्बन्धाभाव इति वाच्यम् । काकत्वादिस्वमात्रनिष्टधर्मावच्छेदेन स्वार्थस्य

(तत्त्वसुबोधिनी)

काकादेः स्वनिष्टसम्बन्धाभावेऽपि अशक्यसाधारणदध्युपघातकत्वादिरूपधर्मावच्छेदेन स्व-सम्बन्धसम्भवात् । उपचारलक्षणालक्षणयोः उक्तत्वात्तदुदाहरणे आह ॥ **उपचारमात्रमिति** ॥ तत्र महायोगः कुत्र महारूढियोगश्च कुत्रेत्यत आह ॥ **तदितरत्रेति** ॥ विष्णोरितरत्र प्रसिद्धा-नाम् आकाशादिशब्दानामित्यर्थः । ननु स्तम्भादिशब्दानामपि विद्वद्रूढिसद्भावात् महारूढि-योगः किं न स्यादित्यत आह ॥ **स्तम्भादीति** ॥ तत्राद्ये सूत्रे स्वपक्षसाधकोक्तिः । तत्रोप-क्रमादिति ल्यब्लोपनिमित्ता पञ्चमी तुशब्द एवार्थः । एवं च उपक्रमस्यैवेत्यर्थः । द्वितीये बाधकोद्धारः । तथा च कल्पनोपदेशादित्यस्य लोकतः क्लृप्ततत्तद्वाचित्वमबाधित्वैव लोकात् लुप्तयोगवृत्तेः कल्पनया व्युत्पादनेन ब्रह्मणः सर्वशब्दवाच्यत्वेन उपदेशादिना ब्रह्मणः सर्वशब्दवाच्यत्वेन उपदेशादिति वा ब्राह्मणः सर्वशब्दवाच्यत्वेन कल्पनायाः उपासनाया उपदेशादिति वार्थः ॥

## वाक्यार्थविवरणम्

**रूढार्थापहारो युज्यत इति** । तथात्वे पङ्कजादिशब्दानां भेकादावेव प्रयोगः स्यादिति न पद्मादावित्याशयः ॥ **तदितरप्रसिद्धेति** ॥ तत्र इतरत्र चेत्यर्थः । उभयत्र प्रसिद्धानामिति यावत् ॥ **सार्वजनीनेति** ॥ सर्वजनप्रयोगसिद्धत्वेत्यर्थः । तद्भेदः नारायणादिशब्दसाम्याभाव इत्यर्थः । अनेन भगवन्नामसु तारतम्यमस्तीति ज्ञायते । तथा ॐकाराथशब्दयोरितरशब्दापेक्षया स्वरूपाधिक्यस्य प्रथमाधिकरणभाष्ये स्पष्टमुक्तेश्चेति सम्प्रदायविदः ॥

## वाक्यार्थमञ्जरी

यथासावादित्यो देवमध्वित्यत्र मधुशब्दस्यादित्यस्थविष्णावुपासनार्थमुक्तत्वेऽपि न क्षौद्र-कादौ व्यवहारविरोधः तथा विष्णोर्महायोगवृत्त्या ज्योतिष्टोमादिसर्वशब्दवाच्यत्वेऽप्यन्यस्यापि वृत्त्यन्तरेण वाच्यत्वान्न कर्मादिविरोधः । महायोगवृत्त्यैव वाच्यत्वं कुत इत्यत उक्तम् ॥ **कल्पनोपदेशाच्चेति** ॥ कल्पनार्थं चगुणपूर्णत्वेनोपासनार्थमेव सर्वशब्दवाच्यत्वोपदेशाद्वृत्त्यन्तरे गुणालाभान्महायोगवृत्तिरेवाश्रयणीयेतिभावः ॥ **असाविति** ॥ असौ ज्ञानिप्रत्यक्षविषय आदित्यनामादित्यान्तर्गतो विष्णुः सुखपूर्णत्वान्मधु देवोपजीव्यत्वाद्देवमधुनामक इत्यर्थः ॥ **वृत्तिरिति** ॥ शब्दबोधानुकूलपदार्थोपस्थितिहेतुः पदपदार्थसम्बन्धो वृत्तिः तात्पर्यरूपेणार्थ-

(वाक्यार्थमञ्जरी)

प्रतिपादकत्वं वा ॥ **योगवृत्त्येति** ॥ प्रादुर्भावार्थकाञ्चनेरौणादिके डिप्रत्यये डित्वाट्टिलोपे जीति भवति प्रवेशार्थकस्य वतेः क्तिप्रत्यये जरत्वरेत्यादिना वकारस्योपधाकारस्य चोठि कृते सवर्णदीर्घे कित्यपि छान्दसे गुणे ओतिरिति भवति । तथा च जिर्जातं जगदोतं प्रविष्टं यस्मिन्नसौ जयोतिरित्यादियोगवृत्त्येत्यर्थः । वृत्त्यन्तरेण वाच्यत्वं किं न स्यादित्यत आह ॥ **सर्वशब्द-वाच्यत्वमिति** ॥ **च शब्द एवार्थ इति** ॥ तस्य च योग्यतया कल्पनपदेनान्वयप्रदर्शना-योपासनार्थमेवेति प्रागेवोक्तमिति ध्येयम् ॥ **विरोधश्च नेति चेति** ॥ न केवलं सर्वशब्दार्थ-त्वाङ्गीकारे तथाह्यधीयत एक इत्युक्तसाधकसद्भावः किन्तु कर्मक्रमादिविरोधोऽपि नेति समुच्चयार्थो वेत्यर्थः । शिष्यानुजिघृक्षयाह ॥ **प्रयोगमात्रमिति** ॥ मात्रेत्यवयवार्थसादृश्य-सम्बन्धसापेक्षता व्युदासार्थं तेन महायोगरूढियोगरूढोपचाररूढलक्षणाभ्यो व्यवच्छेदः । मात्रपदेनैवेतरव्यवच्छेदसिद्धेर्बाहुल्यमिति स्वरूपसङ्कीर्तनम् ॥ **प्रवृत्तिनिमित्तमात्रमिति** ॥ निर्वचनलभ्योऽर्थः प्रवृत्तिनिमित्तं तेन तादृशघटत्वादिप्रवृत्तिनिमित्तसापेक्षरूढिव्यवच्छेदः । प्रयोगसापेक्षताव्युदासाय मात्रपदं तेन योगरूढिव्यवच्छेदः न च महायोगेऽतिव्याप्तिः । भुक्तिमात्रमितिवत् मात्रपदस्य प्रवृत्तिनिमित्ताल्पत्वस्यापि विवक्षितत्वेन तदतिशयोपेतमहायोग-व्यावृत्तेः । प्रवृत्तिनिमित्तं प्रयोगबाहुल्यं चेति रूढिमात्रे योगमात्रे चातिप्रसङ्गवारणा-योभयोपादानम् अत्र प्रवृत्तिनिमित्ताल्पत्वस्य वा विद्वन्मात्रप्रयोगबाहुल्यस्य वा विवक्षितत्वेन न महायोग रूढवृत्तावतिप्रसङ्गः ॥ **मुख्यार्थस्येति** ॥ योगादिव्यवच्छेदायातिरिक्तेत्यन्तम् ॥ **वाच्यार्थानुपपत्त्येति** ॥ पूर्वप्रतीतार्थानुपपत्त्येत्यर्थः । तेन लक्षितलक्षणाद्यनुगमः इदं चामुख्यार्थग्रहणहेतुत्वेनोक्तं न तु लक्षणान्तर्गतत्वेन । अत एव 'पूर्वायोगे परग्रह' इत्यनु-व्याख्यानमेव सुधायां व्याख्यातम् । गौण्यामतिव्याप्तिवारणाय योग्य इति शब्दप्रतिपाद्यसम्बन्ध इत्यर्थः । तेन लक्षितलक्षणासङ्ग्रहः न चाजहत्स्वार्थलक्षणायामतिव्याप्तिः तत्र स्वार्थस्यापि लक्ष्यत्वेन तत्र स्वसम्बन्धाभावादिति वाच्यम् । भेदानुमाने अवस्थाभेदमादायैकस्यैव पक्षत्व-वदत्रापि व्यवस्थाभेदमादाय स्वस्यापि स्वसम्बन्धसद्भावात् । पैङ्गल्यं पिङ्गलत्वम् ॥ **तदितर-त्रेति** ॥ अन्यत्र प्रसिद्धस्तम्भादीनामित्यर्थः । ननु नारायणादिशब्दवत् स्तम्भादिशब्दानामपि हरौ विद्वद्रूढित्वेन प्रयोगबाहुल्यप्रवृत्तिनिमित्तातिशयाभ्यां तेषामपि महारूढियोगोपेतत्वेन कथमिदं वैषम्यमित्यत आह ॥ **स्तम्भादिशब्दानामिति** ॥ विद्वदविद्वत्सर्वजनसम्बन्धिप्रयोगोपेतत्वस्यैव महच्छब्दार्थत्वमिति भावः । तद्भेदः महारूढियोगोपेतनारायणादिशब्देभ्यो वैलक्षण्यम् ।

॥ इति ज्योतिरुपक्रमाधिकरणम् ॥

### ३. न सङ्ख्योपसङ्ग्रहाधिकरणम्

**॥ ॐ न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च ॐ ॥ १२ ॥**

'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठित' (बृ.उ.६-४-१७) इत्यादिषु बहुसङ्ख्योपसङ्ग्रहेऽपि न विरोधः । तस्यैवाकाशादिषु नानाभावात्तदतिरिक्तस्वरूपत्वाच्च ॥

## सत्तर्कदीपावली

नन्वेवमपि ये बहुसङ्ख्याभिधायिनः शब्दाः न ते विष्णुवाचकाः तस्य एकत्वात् । एकत्वबहुत्वयोः परस्परं विरोधादितीमं पूर्वपक्षं प्रतिक्षिपति **॥ न सङ्ख्येत्यादिना ॥** बहुसङ्ख्याभिधायित्वेऽपि पञ्चजनशब्दस्य न भगवद्वाचकत्वविरोधः । भगवत एव आकाशप्राणचक्षुःश्रोत्रान्नमनस्सुबहुरूपत्वेन प्रादुर्भूतत्वात् । तदाधारत्वेन तदतिरिक्तस्वरूपत्वात् । तथा चायं वाक्यार्थः । यस्मिन् सर्वदेहगते परमात्मनि प्रतिदेहं पञ्चपञ्चजना आकाशाख्या प्रकृतिश्च प्रतिष्ठिताः । स्वयं च षडन्तर्नियामको अतिमुख्यतः तन्नामा लीलया स्वस्मिन्नेव प्रतिष्ठितः । एवमुक्तप्रकारेण सर्वशब्दवाच्यं तं परमात्मानं परब्रह्मविद्वान् स पश्चाऽन्योऽमृतो भवतीति ।

## तत्त्वप्रदीपिका

'यस्मिन् पञ्च पञ्च जनाः' इत्यादिषु बहुसङ्ख्ययोपसङ्गृहीतत्वादन्य एवोच्यन्ते, न विष्णुः । तस्यैकस्य बहुत्वासम्भवात्, 'यस्मिन्' इति विष्णावुपसङ्ग्रहाच्च, तेषां बहुसङ्ख्यानां न विष्णुत्वमिति न मन्तव्यम् । तस्यैव विष्णोराकाशे जनेषु च स्थितानां बहुरूपाणां भावात् 'यस्मिन्' इति तेषामधिकरणत्वेन तदतिरिक्तस्वरूपवत्त्वाच्च । न चैकस्य बहुत्वविरोधः । विशेषादेवोपपत्तेः ।

## तत्त्वप्रकाशिका

अत्राधाराधेयत्वादिलिङ्गेनान्यत्रैव प्रसिद्धानां पञ्चजनादिशब्दानां हरौ समन्वयप्रतिपादनादस्ति शास्त्रादिसङ्गतिः । समन्वयसूत्रे सर्वशब्दानां परमात्मपरत्वमुक्तम् । सर्वान्तर्गताश्च पञ्चजनादिशब्दा वाजसनेयके श्रूयन्ते । 'यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः । तमेव मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम्' इति । सर्वशरीरेषु अनुवृत्त्यर्थं पञ्च पञ्चजनेति । तद्वाच्यं विष्णोरन्यचेत्तर्हि समन्वयसूत्रानुपपत्तिरित्यवश्यं निर्णेतव्यम् । तत्पञ्चजनादिशब्दवाच्यं

(तत्त्वप्रकाशिका)
विषयः । विष्णुरन्यद्वेति सन्देहः । समन्वयसूत्रमन्यत्रैव प्रसिद्धिश्च सन्देहबीजम् । न पञ्चजनादिशब्दवाच्यो विष्णुरिति पूर्वः पक्षः । तच्छब्दस्य बहुत्वसङ्ख्याविशिष्टवस्तुवाचित्वात् । बहुत्वस्य चेश्वरे विरुद्धत्वात् । 'एकमेवाद्वितीयम्' इत्यादिश्रुतेः । न च स्वस्य ईश्वरस्य बहुत्वाभावेऽप्यन्यगतबहुत्वस्य तदधीनत्वेन बहुत्वसङ्ख्यावाचिशब्दवृत्तिः । वशीकृतबहुजनेऽपि राजनि तददर्शनात् । अवरादिशब्दवदन्यत्रादृष्टत्वेऽपि वृत्तिः किं न स्यादिति चेन्न । तत्र हेत्वन्तरेण सिद्धायां वृत्तौ निमित्तमात्राश्रयणात् । न चात्रास्ति तादृशं नियामकम् । न च 'सर्वे वेदा' इति श्रुतिर्नियामिका । तस्याः सङ्कोचसम्भवात् । 'ऋतं पिबन्तौ' इत्यादाविव स्वगतभेद-शून्यस्यापि परमात्मनो बहुरूपत्वेन बहुत्वोक्तिः किं न स्यादिति चेन्न । प्रतिशरीर-मात्मान्तरात्मवद्बहुत्वे मानाभावात् । यस्मिन्निति सप्तम्या निर्दिष्टस्य वाक्यशेषबलेन परमात्मत्वाच्च न तदाधेयानां पञ्चजनाकाशानां परमात्मत्वम् । न ह्येकस्यैवाधाराधेयभावो युज्यते । हरेराधेयत्वं (एव) च नास्ति किमुत विरुद्धं स्वाधारत्वम् । अतस्तस्य पञ्चजनादि-शब्दवाच्यतासम्भवान्न युक्तं समन्वयसूत्रमिति । एवं प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **नेति** ॥ अपिपदेन पूर्वसूत्राद्विरोधपदाकर्षणम् । युक्तमेव पञ्चजनाऽऽकाशशब्दवाच्यत्वं भगवतः । स्वगतभेदशून्यस्यापि नानारूपत्वेन बहुत्वसङ्ख्योपसङ्ग्रहाविरोधात् । न च प्रतिशरीरं परमात्मनो बहुरूपत्वमप्रामाणिकम् । शरीरान्तर्गताकाशप्राणादिपञ्चजननियामकत्वेन तेषु नानाभावस्य न्यायप्राप्तत्वात् । न च यस्मिन्नित्याधारस्य विष्णुत्वात्पञ्चजनादीनामाधेयानां विष्णुत्वम् । आकाशादिगतरूपेभ्योऽतिरिक्तस्य शरीरनियामकरूपस्य तत्रोक्तेः । शरीरनियाम-केश्वराधाराकाशादिषु भगवतोऽवस्थानमात्रेण आधाराधेयभावोऽपि युज्यते । अतः परमात्मनः पञ्चजनादिशब्दवाच्यत्वाद्युक्तं समन्वयसूत्रमिति भावः ॥

## गुर्वर्थदीपिका

तत्र हेत्वन्तरेणेत्यत्र 'सोऽवरः सोऽनित्यः सोऽवरयति सोऽनित्ययति' इति विशेष-श्रुतिरूपहेतुर्हेत्वन्तरमित्युच्यते । वाक्यशेषबलेन 'तमेवमन्य आत्मानम्' इत्युत्तरवाक्यबलेन । पूर्वसूत्राद्विरोधपदाकर्षणमित्यत्र पूर्वसूत्रोक्ताविरोधपदं बुद्ध्या विभज्यात्राप्याकर्षणीयमित्यर्थः । शरीरान्तर्गताकाशप्राणादीत्यत्र प्राणादीनां प्रचारायावकाशप्रदातृत्वात् आकाशपदवाच्या-काशस्था मूर्तिरेका । अत एव तेजआदिभूनियामकमूर्तीरसङ्गृह्याकाशस्यैव ग्रहणं कृतम् । पञ्चपदोक्ताः प्राणादिपञ्च । नियमनाय तदन्तस्था अपराः । एतासां सर्वासामाधारभूता शरीरव्यापिनी काचनैका मूर्तिरिति विवेकः ।

## भावबोधः

**समन्वयसूत्र इति** ॥ यदि ज्योतिष्टोममित्यादिपदानां व्युत्पत्त्यनुपपत्तिपरिहाराय तदवयव-ज्योतिरादिपदानां कर्मादिपरत्वं तर्हि 'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठित' इति वाक्य-प्रतिपाद्याधाराधेयभावाद्यनुपपत्तिशान्तये तदवयवपञ्चजनादिशब्दानामप्यन्यपरत्वं स्यादिति पूर्वपक्षोत्थानसम्भवात् अव्यवहितपूर्वाधिकरणसङ्गतिरिति ज्ञेयम् ॥ **किं विष्णुरिति** ॥ अत्र 'यस्मिन् पञ्च पञ्चजना' इति वाक्यगतपञ्चजनादिशब्दावाच्यं किं विष्णोरन्यदुत विष्णुरिति चिन्ता । तदर्थं 'सर्वे वेदा' इत्यादिवाक्यगतः सर्वशब्दः किं सङ्कुचितार्थ उतासङ्कुचितार्थ इति । तदर्थं विष्णोः पञ्चजनादिशब्दवाच्यत्वाङ्गीकारे आधाराधेयभावादिविरोधः किं प्राप्नोत्युत नेति । तदर्थमाधाराधेयभावबहुत्वादिकं किं भेदेनैव निर्वाह्यमुत विशेषेणापीति । पञ्चजनानां विष्णुत्व-निश्चायकं नास्त्युत अस्तीति । तदर्थं प्राणस्य प्राणमिति वाक्यशेषः पञ्चजनविषयको न भवत्युत भवतीति । तदर्थं तस्मिन् वाक्ये किं चतुर्णामेकोक्तिरुत पञ्चानामपीति । बहुसङ्ख्योप-सङ्ग्रहेऽपीति भाष्यसूचितयुक्तिमाह– **तच्छब्दस्येति** । **बहुत्वस्य चेति** । अनेन परस्पर-विरोधश्चेत्युक्तन्यायो बहुत्वैकत्वयोरेकस्मिन् विरोध इति व्याख्यातो भवति । अत एव न्यायविवरणे आधाराधेयत्वादिकमित्यादिशब्दः । न्यायविवरणं सङ्गमयितुमाह– **यस्मिन्निति** । **वाक्यशेषबलेनेति** । यस्मिन्निति यच्छब्दोक्तम्–

'तमेवमन्यमात्मानं विद्वान् ब्रह्मामृतोऽमृतम्'

इति वाक्यशेषे तमिति तस्यात्मत्वादिप्रतिपादनादिति भावः ॥ **किमुत विरुद्धमिति** ॥ अनेन परस्परविरोधश्चेति न्यायविवरणम् आधाराधेयत्वयोरेकस्मिन् विरोध इति व्याख्यातो भवति ॥ **विरोधपदाकर्षणमिति** ॥ अविरोध इत्यतो बुद्ध्या विवेकेनेति भावः ॥ **स्वगत-भेदशून्यस्यापीति** ॥ अनेन भाष्यन्यायविवरणगतस्यैवेत्यर्थ उक्तो भवति । अनेन बहुरूपत्वा-दधिकरणाधेयत्वादि तस्यैव युज्यत इति न्यायविवरणमपि अधिकरणाधेयत्वेत्येतत्परित्यागेन व्याख्यातम् ॥ **न च यस्मिन्निति** ॥ अनेन सूत्रेऽतिरेकादिहेतुसाध्याविरोधप्रतियोगि-विरोधस्फोरकत्वेनाधाराधेयभावसङ्ग्रहोऽपि सङ्ख्योपसङ्ग्रहादित्यनेनोपलक्षणीय इत्युक्तं भवति ।

## भावदीपः

अधिकरणाधेयत्वादिकमिति न्यायविवरणसूचितलिङ्गेन अन्यत्रैव प्रसिद्धिमाह ॥ **अत्राधाराधेयत्वेति** ॥ बहुत्वमादिपदार्थः । अन्यत्रैव प्राणचक्षुःप्रभृतिषु । भाष्ये पञ्चजनशब्दो बहुत्ववाचिशब्दमात्रोपलक्षणम् । विरोधिसर्वबाहुल्येत्यनुभाष्योक्तेरिति भावेनाह ॥ **पञ्चजनादिशब्दानामिति** ॥ आनुमानिकनयभाष्येण तुल्यन्यायतया सूचिते श्रुत्यधिकरणसङ्गती स्वयमाह ॥ **समन्वयेति** ॥ **श्रूयन्त इति** ॥ षष्ठेऽध्याये । यस्मिन्निति सप्तम्यन्तस्य सर्वप्राणिशरीरवाचिनः शरीरनियामकतया सर्वशरीरेषु विन्यस्तभगवद्रूपपरत्वं द्योतयितुं तमेवेति श्रुतिलिङ्गोक्तिपरवाक्यशेषोद्धारः । स्युः पुमांसः पञ्चजना इत्युक्तेः समस्तपदमिति भ्रमं निरस्यन् पञ्चपञ्चेति वीप्सायाः कृत्यमाह ॥ **सर्वेति** ॥ 'सर्वमानैर्विरोधश्च व्युत्पत्तेरप्यशक्यता । परस्परविरोधश्च विरोधः कार्य तद्वतोः' इत्याद्यनुभाष्ये परस्परविरोध इत्युक्तं विवृण्वानः बहुसङ्ख्योपसङ्ग्रहेऽपीति भाष्यसूचितयुक्तिमाह ॥ **तच्छब्दस्येति** ॥ तदधीनत्वादर्थवदित्यनेन गतार्थत्वमाशङ्क्याह ॥ **न च स्वस्येति** ॥ **वशीकृतेति** ॥ ननु जनानां राजवशत्वेऽपि न तद्गतं बहुत्वं राजाधीनम् । अस्तु वा कथञ्चिद्बहुत्वं राजाधीनम् । तथापि भृत्यगतदुःखनिगडबन्धादेः राजाधीनत्वेऽपि राज्ञि दुःखिबद्धादिपदाप्रयोगवदुपपत्तेर्न व्यभिचार इति चेत् । अत्रोक्तं चन्द्रिकायाम् । तदधीनत्वन्याये सत्यपि हरौ बहुत्वाद्यस्ति न वेति विचारात्तदाच्छादन एव तात्पर्यमिति वा बहुत्ववाचिशब्देषु स्वातन्त्र्यस्य निमित्तत्वे 'अमङ्गलत्वाच्छब्दानां राज्ञो योगादमङ्गले । अप्रियत्वात्तु शब्दस्य स्यात्प्रयोगनिवर्तनम्' इत्यनुभाष्योक्तदिशा बद्धादिशब्दवदमङ्गलत्वाभावात् वशीकृतबहुजनेऽपि राज्ञि तत्प्रयोगोपपत्तेः न तन्निमित्तमित्यभिप्रायो वेति ॥ **हेत्वन्तरणेति** ॥ नामानि सर्वाणि । सोऽवरः सोऽनित्य इति प्रमाणान्तरेणेत्यर्थः ।

ननु गुहां प्रविष्टावित्यत्रोक्तन्यायेन हरौ द्वित्ववद्बहुत्वमपि सिद्धम् । एकत्वविरोधित्वे द्वित्वबहुत्वयोरविशेषादिति भावेन तेनास्य गतार्थत्वमाशङ्क्य निराह ॥ **ऋतं पिबन्तावित्यादाविवेति** ॥ द्वितीयसूत्रव्यावर्त्यं हेतुमाह ॥ **मानाभावादिति** ॥ तत्र तु 'घर्मा समन्ता त्रिवृतं व्यापतुः,' 'आत्मन्तरात्मा' इति हरिरिति मानमस्तीति भावः । एकस्यानेकत्वं विरुद्धमित्युत्सर्गस्य कचिन्मनेनाऽन्यथात्वेऽपि न सर्वत्रेति भावः । परस्परविरोधश्चेत्येतद्भाष्यदिशा एकस्यानेकत्वं विरुद्धमिति व्याख्यायेदानीं न्यायविवरणदिशा प्रकारान्तरेण व्याख्यातुमाह

(भावदीपः)

॥ **यस्मिन्निति** ॥ तमेवेति वाक्यशेषबलेनेत्यर्थः ॥ **हरेरिति** ॥ 'एको दधार' इत्यादिना हरेरेव सर्वाधारत्वादिति भावः ॥ **अत इति** ॥ वहुत्वादिविरोधादित्यर्थः । असूत्रितं विरोध इत्येतत्किमिति भापितमित्यत आह ॥ **अपिपदेनेति** ॥ वृद्धिविभागेनेति भावः । समन्वयपरत्वं स्फोरयन् शेषोक्त्या भाष्यं हेतुत्वेन व्याचष्टे ॥ **युक्तमिति** ॥ तस्यैव इत्येव इत्येवकारसूचितमाह ॥ **स्वगतभेदशून्यस्यापीति** ॥ नानाभावान्न विरोध इत्यंशस्यार्थो नानेत्यादि । आकाशादिष्विति भाष्योक्तेरुपयोगाय मानाभावादिति प्रागुक्तशङ्कामनूद्योत्तरसूत्रतात्पर्यलब्धमाह ॥ **न च प्रतिशरीरमिति** ॥ एतेन बहुरूपत्वादधिकरणाधेयत्वं तस्यैव युज्यत इत्यंशं विवृण्वानः तत्र हेत्वाकाङ्क्षायां तस्यैवातिरिक्तस्वरूपत्वाच्च इति भाष्योक्तं हेतुं योजयन्नुक्तशङ्कामनूद्य निराह ॥ **न च यस्मिन्निति** ॥ इदानीं न्यायविवरणं सङ्गमयति ॥ **शरीरेति** ॥ **अत इति** ॥ बाधकाभावादित्यर्थः ॥

## अभिनवचन्द्रिका

**वाजसनेयके श्रूयन्त इति** ॥ अस्याधिकरणस्य समन्वयाधिकरणप्रतिपाद्यशब्दराश्यन्तर्गतपञ्चजनादिशब्दनिर्णायकत्वं समन्वयाधिकरणेन सङ्गतिरिति बोध्यम् ॥ **यस्मिन्पञ्चपञ्चजना इति** ॥ यस्मिन्सर्वदेहगते परमात्मनि, प्रतिदेहं, पञ्च=पञ्चत्वसङ्ख्याविशिष्टाः, पञ्चजनाः, आकाशाख्यप्रकृतिश्च प्रतिष्ठिताः । स्वयं च षडन्तर्नियामकोऽतिमुख्यतः, तत्तन्नामा लीलया स्वस्मिन्नेव प्रतिष्ठितः । एवमुक्तप्रकारेण सर्वशब्दवाच्यं तं परमात्मानम् अमृतं ब्रह्म विद्वान्, स्वयं चान्योऽमृतो भवतीति श्रुत्यर्थः । अत्र टीकायां श्रूयमाणं 'सर्वशरीरेष्वनुवृत्त्यर्थं पञ्चपञ्च' इति वाक्यं प्रक्षिप्तम् । अवश्यं चैतदेवं विज्ञेयम् । पञ्चजनशब्दस्याखण्डत्वेन सर्वशरीरेष्वनुवृत्त्यर्थं पञ्चपञ्चेत्युक्तमित्युक्त्ययोगात् । अन्यथा जनशब्दस्यैव समन्वेतव्यत्वं स्यात् न तु पञ्चजनशब्दस्य । अत एव भाष्ये पञ्चत्वसङ्ख्याविशिष्टाः पञ्चजना इत्यभिप्रेत्य पञ्चजनानाहेत्युक्तम्, अन्यथा जनानाहेत्यवक्ष्यत् ॥ **तत्पञ्चजनादिशब्दवाच्यमिति** ॥ आदिशब्देनाकाशशब्दो ग्राह्यः ॥ **विष्णुरिति पूर्वःपक्ष इति** ॥ ननु अन्ये पञ्चजनादिशब्दवाच्या इति पूर्वःपक्षो वक्तव्यः, अन्यत्रैवप्रसिद्धत्वरूपपूर्वपक्षहेतोस्तत्रैव सम्भवात् । अन्यथा आनन्दमयाद्यधिकरणेष्वपि आनन्दमयो न विष्णुरित्येव पूर्वपक्षः स्यात् न तु ब्रह्मादिरिति 'यस्मिन्पञ्चजना' इत्यादिषु वहुसङ्ख्योपसङ्गृहीतत्वात्, 'अन्य एवोच्यते न विष्णुरिति तत्वप्रदीपोक्तेश्च' इति चेत्, सत्यम्

(अभिनवचन्द्रिका)

तथा वक्तव्यम्, तथापि आनन्दमयाद्यधिकरणेषु हिरण्यगर्भादीनां यथा आनन्दमयत्वं सिद्धान्तिनः सर्वथाऽनिष्टं न तथा पञ्चजनादीनां विष्ण्वन्यत्वं सर्वथानिष्टं विष्णुनियम्यानां प्राणादीनां मुख्यवृत्तिमात्रेण, भगवतस्तु परममुख्यवृत्त्या वाच्यत्वस्य प्रामाणिकत्वादिति विशेषद्योतनायैव 'न विष्णुः' इति पूर्वः पक्षः प्रदर्शित इति द्रष्टव्यम् । एवमन्यत्रापि बोध्यम् ॥ **तच्छब्दस्येति** ॥ पञ्चजनशब्दस्य पञ्चेति प्रथमपञ्चशब्दसामानाधिकरण्येन बहुत्वसङ्ख्याविशिष्ट-वस्तुवाचित्वादित्यर्थः ॥ **बहुत्वाभावेऽपीति** ॥ बहुत्वविश्रान्त्यधिकरणत्वाभावेऽपीत्यर्थः ॥ **वशीकृतबहुजनेऽपीति** ॥ ननु विषमोऽयमुपन्यासः । जनानां राजवशत्वेऽपि तद्बहुत्वस्य राजाधीनत्वाभावात् । एवं च राजनि वशीकृतबहुत्वाभावात् बहुत्ववाचिशब्दवृत्त्यदर्शनं न दोषायेति चेत्, न राजापेक्षाबुद्धिजन्यत्वेन बहुत्वस्यापि तदधीनत्वात् ॥ **हेत्वन्तरेणेति** ॥ 'सोऽवरः । सोऽवरयति सोऽनित्यः सोऽनित्ययति' इति श्रुतिरूपकारणान्तरेणेत्यर्थः । 'उप-सङ्ग्रहात्' इति सूत्रखण्डस्याऽऽवृत्त्या युक्त्यन्तरसूचकत्वमभिप्रेत्याह– **यस्मिन्निति** ॥ **सप्तम्येति** ॥ अनेन 'सङ्ख्योपसङ्ग्रहादपी'ति सूत्रखण्डः 'यस्मिन्पञ्चजना' इत्यादिषु बहुसङ्ख्ययोपसङ्गृहीतत्वात् यस्मिन्निति विष्णोराधारत्वेनोपसङ्ग्रहाच्च विष्णुत्वाङ्गीकारे विरोध इति व्याख्यातो भवति ॥ **वाक्यशेषबलेनेति** ॥ 'तमेवमन्य आत्मानम्' इति वाक्यशेषबलेनेत्यर्थः ॥ **अपिपदेन पूर्वसूत्रादिति** ॥ ननु न पूर्वसूत्रे विशकलितं विरोधपदमस्ति, किंत्वविरोधपदमेव, न च बुध्या विवेकेन विरोधपदाकर्षणमिति वाच्यम् । अविरोध पदस्यैवाकर्षणेऽस्मिन्सूत्रे नञोऽ-प्रयोक्तव्यत्वेन सूत्रस्याल्पाक्षरत्वसम्भवेन बुध्या विवेकेन विरोधपदाकर्षणवैयर्थ्यात् ।

अपि च भाष्यकारस्य नाऽपिपदेन विरोधपदाकर्षणमभिमतं, किन्तु अध्याहारः, बहुसङ्ख्योपसङ्ग्रहेऽपि न विरोध इत्यपिशब्दप्रयोगात् । अन्यथा बहुसङ्ख्योपसङ्ग्रहे न विरोध इत्यवक्ष्यत् इति चेत्, उच्यते यदि नञः प्रयोगमकृत्वा अपिपदेन विरोधपदाकर्षणमभिप्रेत्य सूत्रकारः 'सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च' इत्येवं सूत्रं विदध्यात्, तर्हि इदं सूत्रं पूर्वाधिकरणशेषतया कर्मक्रमादिविरोधपरिहाराय हेत्वन्तराभिधानपरमिति विज्ञायेत । तन्मा विज्ञायि । किन्तु पञ्चजनादिशब्दैरीश्वरग्रहणे सङ्ख्योपसङ्ग्रहादिविरोधपरिहारपरमिति ज्ञायता-मित्याशयेन सूत्राल्पाक्षरत्वमप्यपहाय अपिपदेन विरोधपदमात्रमाकृष्य सूत्रे नञः प्रयोगं कृतवान् । अत एव रज्ज्वा, अयसा वा, यावदेव काष्ठादिकं बद्धं तावदेव यथाऽनुकृष्यते, तद्वत्

(अभिनवचन्द्रिका)

अपिपदेन सम्बद्धतया यावद्विवक्षितं तावदेवाऽनुवर्तत इति सूचनाय अपिपदप्रयोगः कृतः । यदत्रोक्तं भाष्यकारस्य नाऽपिपदेन विरोध पदाकर्षणमभिमतमिति । तन्न भाष्यकारः अपि-शब्दस्य समुच्चयार्थकत्वभ्रमनिरासाय 'सङ्ग्रहादपि' इति यथावस्थितानुवादमपहाय 'सङ्ख्योप-सङ्ग्रहेऽपि' इत्यनूद्य नञन्वयपूर्वकमपिपदं 'न विरोध' इति व्याचख्यावित्यङ्गीकारात् ॥ **अतिरिक्तस्य शरीरनियामकरूपस्येति** ॥ नन्वतिरिक्तत्ववचनं व्यर्थं 'स भगवः कस्मिन् प्रतिष्ठित इति, स्वे महिम्नि' इति प्रमाणेन स्वाधारत्वस्य सिद्धत्वादिति चेत्, सत्यम् – अस्त्येव स्वाधारत्वमीश्वरस्य, तथापि इह आधारत्वेनोक्तरूपं वस्तुतो रूपविशेष एव । किं स्वाधार-त्वोपपादनाय प्रमाणगवेषणप्रयासेनेति भावेन सूत्रकृता 'अतिरेकाच्च' इत्युक्तम् । अत एव टीकाकृता तथैवोक्तमिति द्रष्टव्यम् ।

## वाक्यार्थमुक्तावली

आधाराधेयत्वादीत्यादिपदेन बहुत्वं गृह्यते ॥ **अन्यत्रैवेति** ॥ प्राणचक्षुरादिष्वित्यर्थः ॥ **पञ्चजनादीति** ॥ पञ्चजनादिशब्द इत्यर्थः । श्रुत्यादिसङ्गतिमाह **समन्वयसूत्र इति** ॥ अव्यवहितसङ्गतिस्तु यद्यतोऽत्र पञ्चजनादिशब्दवाच्यत्वमन्यस्य स्यात्तर्हि पूर्वाधिकरणीयं ज्योतिरन्यस्य स्यात् पञ्चजनेषु तदेवा ज्योतिषां ज्योतिरिति ज्योतिषा आम्नातत्वादिति पूर्वाक्षेपाद्वात्रसिद्धान्तसाधकतया पूर्वहेतूनां विवक्षितत्वात् कर्मक्रमादिविरोधाभावेऽपि बहुत्व-विरोध इत्यधिकाक्षेपेणोत्थानाद्वेति बोध्यम् । स्युः पुमांसः पञ्चजना इत्युक्तेः समस्तपदमिति भ्रमं निरस्यन् पञ्चपञ्चेति वीप्सायाः कृत्यमाह सर्वेति ॥ **विष्णुरन्यद्वेति** ॥ पञ्चजनादि-शब्दवाच्यमन्यदुत विष्णुर्वेति चिन्ता । बहुत्वसङ्ख्यादिकं किं भेदनिर्वाह्यमुतविशेषनिर्वाह्यमिति तदर्थं पञ्चजनानां विष्णुत्वनिश्चायकं नास्त्युतास्तीति । तदर्थं सिद्धान्तिना विष्णुत्वनिश्चयाक-लिङ्गाभिधायकतयाभिमतवाक्यशेषे चतुर्णामेवोक्त्या वाक्यशेषः पञ्चजनविषयो न भवत्युत ज्योतिषा सह पञ्चकपूरणेन पञ्चजनविषयो भवतीति । सङ्ख्योपसङ्ग्रहादपीति सूत्रसूचित-पूर्वपक्षमाह **तच्छब्दस्येति** ॥ तदधीनत्वादर्थवदित्यनेन गतार्थमाशङ्क्याह **न च स्वस्येति** ॥ **वशीकृतेति** ॥ ननु जनानां राजवशत्वेऽपि न तद्गतं बहुत्वं राजाधीनम् । अस्तु वा कथञ्चि-द्बहुत्वं राजाधीनं तथापि भृत्यगतबन्धादे राजाधीनत्वेऽपि राज्ञि दुखिवद्धादिशब्दप्रयोगवदु-पपत्तेः । न चामङ्गलत्वात् दुख्यादिशब्दस्य राजाप्रियकरत्वाच्छक्तिसद्भावेऽप्यप्रयोगो नैवं प्रकृत

(वाक्यार्थमुक्तावली)
इति वाक्यम् । प्रकृतेऽप्यस्मिन् राष्ट्रे राजाबहुरिति चेत् तत्रोक्तं चन्द्रिकायाम् । तदधीनत्वन्याये सत्यपि हरौ बहुत्वाद्यस्ति न वेति विचारात्तदाच्छादनेनेह पूर्वपक्ष इति ज्ञातव्यम् (बोध्यम्) ।

यद्वा राजा बहुः पुर्या इत्यर्थोपपत्त्या वद्धादिशब्दवदमङ्गलत्वाभावात् वशीकृतबहुजनेऽपि राज्ञि तत्प्रयोगोपपत्तेरिति भाव इति ॥ **हेत्वन्तरेणेति** ॥ सोऽवरः सोऽनित्य इति विशेष-श्रुत्येत्यर्थः । ननु गुहां प्रविष्टावित्यत्रोक्तन्यायेन हरौ द्वित्वमपि सिद्धम् । एकत्वविरोधित्वे द्वित्वबहुत्वयोरविशेषादिति भावेनास्य गतार्थत्वमाशङ्क्यापाकरोति ॥ **ऋतं पिबन्तावित्यादा-विवेति** ॥ **नानाभावादिति** ॥ एतच्च द्वितीयसूत्रनिरसनीयपूर्वपक्षप्रदर्शनपरम् । तत्र वाक्य-शेषलिङ्गोक्तेः । अतिरेकाच्चेतिसूत्रव्यावर्तनीयं पूर्वपक्षमाह यस्मिन्निति ॥ **वाक्यशेषेति** ॥ तमेवमन्य आत्मानमिति वाक्यशेषे आत्मब्रह्मश्रुत्या मोक्षाङ्गज्ञानविषयत्वामृतत्वलिङ्गयोश्च सत्त्वादिति भावः । एको दाधार भुवनानि, भर्ता सन् भ्रियमाणो बिभर्तीत्यादिना च तस्यैव सर्वमूलाधारत्वादिति भावः ॥ **अपिपदेनेति** ॥ सङ्ख्योपसङ्ग्रहेऽपि यस्मिन्नित्याधारत्वोक्ताव-पीत्यनेन लोकरीत्याङ्गीकारानर्हस्याङ्गीकारोऽपीति अनौचित्ये तथा अपिपदेन पूर्वसूत्राद्बुध्या विवेकेन विरोधपदाकर्षणं न सूचयतीत्यर्थः ॥ यद्वा न केवलं कर्मवाक्यगतपदवाच्यत्वे कर्मक्रमादिविरोधो न सङ्ख्योपसङ्ग्रहेऽपीति समुच्चायकापिपदेन समुच्चेयाविरोधप्रतियोगितया-विरोधपदाकर्षणभाष्यसूत्रे च समन्वेतव्यशब्दानुक्तेः समन्वयपरत्वं स्फोरयन् व्याचष्टे ॥ **युक्त-मेवेति** ॥ नामानि सर्वाणीत्यादिश्रुत्या तदधीनत्वादिप्रागुक्तनिचयेनोपपन्नमेवेत्यर्थः । एवं वहिरेव प्रतिज्ञाहेतूदर्शयन् बाधकपरिहारकत्वेन सूत्रभाष्ये प्रवृत्त इति हृदि निधायाकाशादि-ष्वित्यंशं विहाय भाष्यं योजयति ॥ **स्वगतभेदेति** ॥ तस्यैवेत्यस्य तस्यैकस्यैवेत्यर्थम् । मत्वोक्तं स्वगतभेदशून्यस्यापीति । एतेन सूत्रेऽपिपदेन स्वगतभेदशून्यस्यापीत्यर्थ उक्तो ज्ञेयः । नाना-भावादित्यस्यार्थो नानारूपत्वेनेति । बहुसङ्ख्योपसङ्ग्रहेऽपि न विरोध इत्यस्य तात्पर्यं बहुत्वे-नेति । आकाशादिषु नानाभावादित्येतद्व्याख्यातुमाह **न च यस्मिन्निति** ॥ सूत्रे तत्वित्यस्ति । पञ्चजन इति तत्वप्रदीपरीत्या व्युत्पत्युपपत्तेः न प्राणचक्षुः श्रोत्रमनांसि कुतः ता वा एता इत्यादिश्रुतेः । एवं तर्हि पञ्चेत्युक्तबहुत्वसङ्ख्याविरोधः । स्वगतभेदशून्यस्य तदयोगाद्यस्मि-न्नित्याधाराधेयभावविरोधश्चेत्यतः सूत्रम् अपिस्वगतभेदशून्यस्य कुण्डवदरवदाधाराधेयभाव-शून्यस्यापि तस्य नानाभावादचिन्त्यशक्तिघटितविशेषेण नानारूपत्वाच्छरीरान्तर्गताकाश-

(वाक्यार्थमुक्तावली)

प्राणादिनानाविधपदार्थेषु नियामकतया नानाभावस्य प्रमितत्वात् बहुसङ्ख्योपसङ्ग्रहेऽपि न विरोधः । जना इत्युक्त शरीरस्थाकाशादिगतरूपेभ्योऽपि यस्मिन्नित्युक्तशरीरस्थरूपस्य विशेषबलादतिरिक्तत्वाच्चाधाराधेयभावेऽपि सङ्ग्रहेऽपि न विरोध इति सूत्रार्थः ॥

## तत्त्वसुबोधिनी

अत्र ज्योतिष्टोमेत्यादिपदानां व्युत्पत्त्यनुपपत्तिपरिहाराय तदवयवज्योतिरादिपदानां कर्मपरत्वं तर्हि यस्मिन् पञ्चपञ्चजना आकाशश्च प्रतिष्ठित इति वाक्यप्रतिपाद्याधाराधेयभावाद्यनुपपत्तिशान्तये तदवयवपञ्चजनादिशब्दानामपि अन्यपरत्वं स्यादिति पूर्वपक्षोत्थानसम्भवादधिकरणसङ्गतिः ॥ **यस्मिन्निति** ॥ यस्मिन् आत्मनि पञ्चजनाः प्रतिष्ठिताः आत्मानं ब्रह्म पूर्णम् अमृतम् अन्यः पुमान् एवं विद्वान् अमृतः मुक्तो भवतीत्यर्थः । ननु पञ्चपञ्चेति द्विरुक्तिः किमर्थेत्यत आह ॥ **सर्वेति** ॥ अस्तु बहुत्वसङ्ख्या विशिष्टवस्तुवाचित्वं ततःकिमित्यत आह ॥ **बहुवचनस्येति** ॥ कुत इत्यत आह ॥ **एकमेवेति** ॥ **तत्र हेत्वन्तरेणेति** ॥ अवरादिशब्देषु सोऽवरयतीत्यादिश्रुतिरूपहेत्वन्तरेण भगवद्वाचित्वसिद्धौ सत्यां तदधीनत्वस्य निमित्तत्वाश्रयणादित्यर्थः । अत्रापि श्रुत्यन्तरं भविष्यतीत्यत आह ॥ **न चात्रेति** ॥ अत्र पञ्चजशब्दवाच्यत्वे अवरादिशब्देष्विव श्रुतिरूपं नियामकं नेत्यर्थः ॥ **प्रतिशरीरमिति** ॥ शरीरमात्रे आत्मान्तरात्मेति परमात्मरूपद्वयवत् पञ्चरूपसत्वेन किमपि प्रमाणमित्यर्थः । **वाक्यशेषबलेनेति** ॥ **यस्मिन्निति** ॥ यच्छब्दोक्तं तमेवेति वाक्यशेषे तत इति परामृश्य तस्यात्मत्वप्रतिपादनादिति भावः ॥ **विरोधपदाकर्षणमिति** ॥ अविरोध इत्यतो बुद्ध्या विवेकेनेति भावः । ननु बहुत्वसङ्ख्या परमात्मनि नोपपद्यते । तस्य स्वगतभेदशून्यत्वादित्यत आह ॥ **स्वगतेति** ॥ **न च यस्मिन्निति** ॥ आधाराधेयभावस्य भेदव्याप्तत्वादिति भावः ॥ **तत्रोक्तेरिति** ॥ यस्मिन्नित्यत्रोक्तिरित्यर्थः । शरीरस्य नियामको य ईश्वरः । स आधारो येषां तानि एवम्भूतानि यानि आकाशादीनि तेष्वित्यर्थः ।

## वाक्यार्थविवरणम्

**हेत्वन्तरेणेति** ॥ 'नामानि सर्वाणि' 'सोऽवर' इत्यादिश्रुतिरूपहेत्वन्तरेणेत्यर्थः । आधेयत्वं च नास्तीति । सर्वाधारत्वादिति भावः । ननु भवेदियमित्युक्तशङ्कां पञ्चजनलिङ्गोक्त्या परिहर्तुमित्यन्वयः ॥

## वाक्यार्थमञ्जरी

आधाराधेयत्वं चाग्रे यस्मिन्निति सप्तम्या निर्दिष्टेत्यादौ व्यक्तम् ।। **यस्मिन्निति** ।। यस्मिन्हरौ पञ्च पञ्चजनाः प्रतिपुरुषं प्राणादयः पञ्चजनाः आकाशो मूलप्रकृतिः तन्नियामक-भगवद्रूपविशेषाश्चेत्येते आश्रितास्तमेवात्मानं मन्ये जानीयाम् । किन्तज्ज्ञानेनेत्यत आह ।। **विद्वानिति** ।। अमृतं नित्यमुक्तं ब्रह्मविद्वानमृतो मुक्तो भवतीत्यर्थः । द्विवचनप्रयोजनमाह ।। **सर्वेति** ।। यो यो धूमवानित्यादाविव वीप्सायाः सर्वसङ्ग्राहकत्वादितिभावः । तच्छब्दस्य पञ्चजनादिशब्दस्यः ।। **अवरादिशब्दवदिति** ।। अवरत्वादिनियामकतया तच्छब्दवाच्यत्व-स्यान्यत्रादर्शनादिति भावः । हेत्वन्तरेण सोऽवरः । सोऽनित्यं इत्यादिना तादृशं निरवकाशम् ।। **वाक्यशेषबलेनेति** ।। यच्छब्दोक्तमेव तमेवेति परामृश्य तस्यात्मत्वविधानादिति भावः ।। **हरेराधेयत्वमिति** ।। पराधीनस्यैव घटादेर्भूतलाधेयत्वदर्शनादिति भावः । ॐ न सङ्ख्योप-सङ्ग्रहादपि नानाभावादतिरेकाच्च ॐ । पञ्चजनादिशब्दवाच्यत्वेन बहुत्वसङ्ख्यास्वीकारेऽपि न विरोधः कुतः नानाभावात् भगवतो नानारूपाणां सद्भावात् न चाधाराधेयभावानुपपत्तिः यच्छब्दोक्तरूपस्य रूपपञ्चकापेक्षयातिरिक्तत्वेन तत्सम्भवादित्यर्थः ।। **विरोधपदाकर्षणमिति** ।। अविरोध इत्यतो बुद्ध्या विवेकेनेति भावः । ईश्वराधारेत्यत्र बहुव्रीहिः ।। **अवस्थानमात्रेणेति** ।। पराधीनत्वाव्यावृत्त्यर्थं मात्रशब्दः ।।

## सूत्रभाष्यम्

**पञ्चजनानाह–**

**।। ॐ प्राणादयो वाक्यशेषात् ॐ ।। १३ ।।**

**'प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो मन'** इति वाक्य-शेषात् ।।

## सत्तर्कदीपावली

**के पञ्चपञ्च जनाः** येषां विष्णुत्वमेवाधेयत्वमित्यत आह । **पञ्चेति** । न हि **भगवतोऽन्यस्य प्राणप्रणेतृत्वादिकं युज्यते** । स्वाध्येयत्वं तु लीलयेति भावः ।

## तत्त्वप्रदीपिका

पञ्च पञ्चेति वीप्सा प्रतिशरीरं पृथक्पृथगवस्थितिसन्दर्शिका । जनानां जनयितृत्वाज्जनाः । 'प्राणादयो वाक्यशेषात्' । प्राणादिस्थानि प्राणादिप्रेरकाणि प्राणादिनामकानि तद्रूपाणि पञ्च पञ्च जना इत्युच्यन्ते ।

## तत्त्वप्रकाशिका

ननु भवेदियं बहुत्वादिसम्भवविषया चिन्ता यदि पञ्चजनादीनां विष्णुत्वे भवेद्विशेषहेतुः न चासावस्ति । श्रुत्यन्तराणां साधारणत्वात् । अतो बहुत्वादिसम्भवेऽपि न पञ्चजनादिशब्दवाच्यो हरिरित्याशङ्कां परिहरत्सूत्रमवतार्य व्याचष्टे ॥ **पञ्चेति** ॥ पञ्चजनलिङ्गोक्त्योक्तशङ्कां परिहर्तुं पञ्चजनस्वरूपमाह सूत्रकार इति सम्बन्धभाष्यार्थः । एते पञ्चजनाः तावत्प्राणादीनां प्राणत्वादिप्रदाः । प्राणस्य प्राणम्' इति वाक्यशेषात् । प्राणादीनां प्राणत्वादिप्रदत्वं भगवत एव सम्भवति । 'यच्छ्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणश्चक्षुषश्चक्षुः' इति श्रुतेः । अतो भगवल्लिङ्गसद्भावात् तस्यैव पञ्चजनत्वमिति भावः ॥

## गुर्वर्थदीपिका

पञ्चजनलिङ्गोक्त्येत्यत्र पञ्चजनेषु स्थिताऽधाराधेयत्वाख्यलिङ्गोक्त्येत्यर्थः । यच्छ्रोत्रस्य श्रोत्रमित्यत्र यत्परमात्मस्वरूपं 'श्रोत्रस्य श्रोत्रं मनसो मनो वाचो वाचं वदन्ति' । स उ स एव परमात्मा 'प्राणस्य प्राणश्चक्षुषश्चक्षुः' इति समाख्यावाक्यमत्रोक्तानां परमात्मत्वसाधना-योक्तमिति ज्ञेयम् ।

तत्रैवाकथिते सतीत्यनेन काण्वशाखायां 'प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमुत मनसो मनः' इत्येव वाक्यमिति सूचितम् । अस्मिन् समाख्यावाक्ये प्रस्तुतपरमात्मनो यत्तच्छब्दाभ्यां ग्रहणान्निर्णायकत्वम् । तत्रोक्तवाक्यशेषे यत्तच्छब्दाभावादनिर्णय इति भावः । यद्यपि समाख्यावाक्ये 'अन्नस्यान्नम्' इति न श्रूयते तथाऽपि तत्रोक्तवाक्यशेषे अत्र परमात्म-तया निर्णीतश्रोत्रादिचतुष्कप्रायपठितस्यान्नस्य परमात्मत्वनिर्णय इति ज्ञेयम् । यस्मादर्वागिति श्रुतौ यस्मात्सूर्यस्थात् ज्योतिषः अर्वागधस्तात् भूलोके विद्यमानानां मनुष्याणामहोभिः षष्ठ्युत्तरत्रिशताहोभिः संवत्सरः परिवर्तत इति योजना । काण्वानां पञ्चकमिति वदता

(गुर्वर्थदीपिका)

काण्वशाखायामपि 'यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः । तमेवमन्य आत्मानं विद्वा-नमृतोऽमृतं' इति विषयवाक्यमुक्त्वा वाक्यशेषे 'प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमुत मनसो मनः' इत्येव वाक्यमिति सूचितम् । ज्योतिरन्नशब्दयोरेकार्थत्वमिति वदता ज्यायसी ऊतिः शरीरपुष्टिर्यस्मादिति ज्योतिःशब्दार्थः सूचितः ॥

## भावबोधः

आकाशादिगतरूपेभ्य इत्यादिनोदाहृतन्यायविवरणमप्यादिपदपरित्यागेन व्याख्यातं भवतीति ज्ञेयम् । 'सर्वे वेदा यत्पदमामनन्ति' इत्यादिश्रुतिरेव विष्णुत्वनिश्चायिकेत्यत आह– **श्रुत्यन्तराणामिति** ॥ **पञ्चजनलिङ्गोक्त्येति** ॥ पञ्चजनानां विष्णुत्वनिश्चायकलिङ्गोक्त्येत्यर्थः ।

अत्राद्ये– "तथा ह्यधीयत" इति पूर्वोक्तयुक्त्यैव पञ्चजनादिशब्दानां हरौ समन्वयं सिद्ध-वत्कृत्य तत्राशङ्कितबहुत्वादिविरोधपरिहारोक्तिः । द्वितीये– पञ्चजनानां विष्णुत्वनिश्चायक-लिङ्गोक्त्या तत्स्वरूपोक्तिः । तृतीये– "यस्मिन् पञ्च पञ्चजना" इति वाक्यस्य वाक्यशेष-समानार्थत्वलाभाय वाक्यशेषस्य रूपपञ्चकप्रतिपादकत्वोक्त्या तत्स्वरूपोक्तिरिति सूत्रक्रमः ॥

## भावदीपः

विशेषहेतुरित्युक्तविशेषपदकृत्यं व्यनक्ति ॥ **श्रुत्यन्तराणामिति** ॥ नामानि सर्वाणि, सर्वे वेदास्सर्वे घोषा इत्यादीनामित्यर्थः ॥ **अत इति** ॥ विशेषहेत्वभावादित्यर्थः । सूत्रस्य न्याय-निबन्धनरूपत्वात् पञ्चजनस्वरूपोक्तिरयुक्तेत्यतो व्याचष्टे ॥ **पञ्चजनेति** ॥ द्वितीयान्त-प्राणादीनां शब्दतोऽर्थतश्च प्राधान्यात् तेषामेव पञ्चजनशब्देन ग्रहणं न षष्ठीनिर्दिष्टानामिति-भावेन पञ्चजनलिङ्गोक्त्येत्युक्तम् । वाक्यशेषोक्त्या किं लिङ्गमुक्तमित्यतो व्यनक्ति ॥ **एत इति** ॥ **इति श्रुतेरिति** ॥ तलवकारश्रुतेरित्यर्थः ॥

## अभिनवचन्द्रिका

**श्रुत्यन्तराणामिति** ॥ 'सर्वे वेदा यत्पदमामनन्ति' इत्यादि श्रुत्यन्तराणां सर्वशब्द-साधारण्येन पञ्चजनस्वरूपस्य निरूपितत्वात् 'वाक्यशेषात्' इति व्यर्थमिति परास्तम् ।

## वाक्यार्थमुक्तावली

**श्रुत्यन्तराणामिति** ॥ सर्वे वेदा इत्यादीनामित्यर्थः । विशेषहेत्वभावादित्यर्थः । **पञ्चजन-लिङ्गोक्त्येति** ॥ पञ्चजनेषु श्रूयमाणविष्णवलिङ्गोक्त्येत्यर्थः । सूत्रे पञ्चजना इत्यस्ति । प्राणस्य प्राणमुत चक्षुषश्चक्षुरित्यादिना षष्ठ्यन्तनिर्दिष्टानां प्राणादीनां प्राणत्वादिप्रदाः द्वितीयान्तनिर्दिष्टा एव प्राणादयः पञ्चजनाः न षष्ठीनिर्दिष्टाः प्राणस्य प्राणमित्यादिना श्रुतेरिति । अस्यां तलवकारश्रुतौ यच्छब्दस्य ब्रह्म ह देवेभ्य इति प्रकृतब्रह्मपरत्वादिति भावः ॥

## तत्त्वसुबोधिनी

सर्वे वेदा यत्पदमामनन्ति इत्यादिश्रुतिरेव विष्णुत्वनिश्चायिकेत्यत आह ॥ **श्रुत्यन्तराणा-मिति** ॥ **पञ्चजनलिङ्गोक्त्येति** ॥ पञ्चजनानां विष्णुत्वनिश्चायकलिङ्गोक्त्येत्यर्थः । कथमनेन पञ्चजनशब्दवाच्यत्वे विशेषहेतुरुक्त इत्यत आह ॥ **एते पञ्चेति** ॥

## वाक्यार्थविवरणम्

**वाक्यशेषादिति** ॥ माध्यन्दिनशाखायामित्यर्थः ।

## वाक्यार्थमञ्जरी

श्रुत्यन्तराणां नामानि सर्वाणीत्यादीनाम् ॥ ॐ प्राणादयो वाक्यशेषात् ॐ ॥ पञ्चजनाः प्राणादयः प्राणादिभगवद्रूपविशेषा एव प्राणस्य प्राणमित्यादिवाक्यशेषादित्यर्थः । उक्तशङ्का-निरासाय विशेषहेतोरेव वक्तव्यत्वात् किं पञ्चजनस्वरूपनिरूपणेनेत्यत आह ॥ **पञ्चजन-लिङ्गोक्त्येति** ॥ पञ्चजनानां विष्णुत्वनिश्चयायकलिङ्गोक्त्येत्यर्थः ॥ **प्राणस्य प्राणमितीति** ॥ प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो मनो विदुरिति वाक्यशेषादित्यर्थः । भाष्ये त्वेतत्समानार्थकमाध्यंदिनशाखास्थवाक्यमेवोदाहृतमिति ध्येयम् । श्रोत्रस्य श्रोत्रत्वप्रदमित्यादि योज्यम् ।

## सूत्रभाष्यम्

**॥ ॐ ज्योतिषैकेषामसत्यन्ने ॐ ॥ १४ ॥**

(सूत्रभाष्यम्)

'तद्देवा ज्योतिषां ज्योतिः'' (काण्वपाठः) इत्यनेन काण्वानां पञ्चकम् ॥

## सत्तर्कदीपावली

नन्वन्नाभावात्पञ्चेति निर्देशः काण्वानां कथमित्यत आह ॥ **ज्योतिषेत्यादिना** ॥

## तत्त्वप्रदीपिका

ज्योतिषां भासकेन तच्छब्दवाच्येन काण्वानां शाखिनां पञ्चत्वपूर्तिः । तत्रान्नाभावात् ॥

## तत्त्वप्रकाशिका

ननु वाक्यशेषोक्तानां प्राणादीनां विष्णुत्वेऽपि न पञ्चजनानां विष्णुत्वम् । वाक्यशेषे चतुर्णामेवोक्तत्वेन तस्य पूर्ववाक्यतो भिन्नार्थत्वादित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ **ज्योतिषेति** ॥ न वाक्यशेषे चतुर्णामेवोक्तिः । माध्यन्दिनशाखायां पञ्चजनानामप्युक्तेः । काण्वानां शाखायामन्नस्यान्नत्वप्रदातृरूपे तत्रैवाऽकथिते सत्यपि 'यस्मादर्वाक् संवत्सरोऽहोभिः परिवर्तते तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्' इति किञ्चिद्दूरोक्तेन ज्योतिषां ज्योतिषा पञ्चत्वसम्भवात् । अतो वाक्यशेषस्य भिन्नार्थत्वाभावात्तद्बलेन युक्तं पञ्चजनानां विष्णुत्वमिति भावः । अत्र ज्योतिरन्नशब्दयोरेकार्थत्वं पृथक् पञ्चकं वेत्युपपन्नम् । अतो बहुत्व-सङ्ख्याविशिष्टवाचिशब्दवाच्यो हरिरेवेति सिद्धम् ॥

## भावदीपः

**चतुर्णामेवेति** ॥ भाष्ये वाक्यशेषे पञ्चानामप्युक्तिर्माध्य- न्दिनशाखाशयेन । न तु वाजसनेयवाक्यशेषाभिप्रायेणेति भावः । पूर्ववाक्यतः यस्मिन्पञ्चपञ्चजना इति वाक्यतः । ननु अन्नेन कचित्पञ्चकं कचिज्ज्योतिषा सह । तथा च विरोध इत्यत आह ॥ **अत्रेति** ॥ एकार्थत्वम् एकरूपवाचित्वमित्यर्थः ॥ **पृथगिति** ॥ रूपभेदेऽपि अधिकारिभेदात् अन्नाख्यरूपेण सह भगवद्रूपपञ्चकं माध्यन्दिनादिभिरुपास्यम् । ज्योतिराख्यरूपेण सह रूपपञ्चकं काण्वादि-भिरुपास्यमिति वर्गद्वयमविरुद्धमित्यर्थः ॥ **अत इति** ॥ साधकभावाद्बाधकाभावाच्च इत्यर्थः ॥ **हरिरेवेति** ॥ परममुख्यवृत्त्येति योज्यम् । मुख्यवृत्त्याऽन्यदपि वाच्यम् । कल्पनोपदेशादिति न्यायादिति ध्येयम् ॥

## अभिनवचन्द्रिका

ननु 'ज्योतिषैकेषाम्' इति ज्योतिषा पञ्चत्ववचनमनुपपन्नं, काण्वमाध्यंदिनश्रुत्योर्विरोधापातादित्यत आह – **अत्र ज्योतिरन्नशब्दयोरेकार्थत्वमिति** ॥ अत्र ज्योतिरन्नशब्दयोरेकार्थत्वमिति ज्योतिषा पञ्चत्ववचनमनुपपन्नम् । अथवा माध्यंदिनश्रुत्युक्तात्पञ्चकादन्यदेव पञ्चकं काण्वशाखायां विवक्षितमिति ज्योतिषा पञ्चत्ववचनमुपपन्नमिति योजना द्रष्टव्या ।

**पूर्वपक्षस्तु** – पञ्चजनादिशब्दवाच्यो न विष्णुः किन्त्वन्ये । तस्य बहुत्वसङ्ख्याविशिष्टवस्तुवाचित्वात् । ईश्वरे चाऽसाधारणधर्मतया बहुत्वायोगात् । न च स्वस्य बहुत्वाभावेऽपि अन्यगतबहुत्वनियामकत्वात् बहुत्ववाचकशब्दवृत्तिः । तेन चेश्वरस्य बहुत्वनियामकत्वरूपाऽसाधरणधर्मलाभ इति वाच्यम् । वशीकृतबहुजनेऽपि राजनि बहुत्ववाचित्वशब्दादर्शनात् । न चादर्शनेऽपि अवरादिशब्दवद्वृत्तिः किं न स्यादिति वाच्यम् । 'सोऽवरः सोऽनित्य' इत्यादि श्रुतिबलेनाऽवरशब्दवाच्यत्वे सिद्धे अवरत्वनियामकत्वस्य निमित्तमात्रत्वाभ्युपगमात् । न च प्रकृते तथाविधं नियामकमस्ति । 'सर्वे वेदा यत्पदमामनन्ति' इत्यस्य सङ्कोचसम्भवेनाऽनियामकत्वात् । प्रतिशरीरमात्मान्तरात्मरूपरूपद्वयस्य प्रामाणिकत्वेन 'ऋतं पिबन्तौ' इत्यादिद्वित्वसम्भवेऽपि प्रतिशरीरं रूपबहुत्वे मानाभावेन बहुत्वायोगात् । यस्मिन्निति सप्तम्या निर्दिष्टस्य वाक्यशेषबलेन आत्मत्वेन तदाधेयानां पञ्चजनाकाशानां न परमात्मत्वम् । एकस्यैवाधाराधेयभावाभावात् । अतः पञ्चजनादिवाच्यताऽसम्भवात् न युक्तं समन्वयसूत्रमिति ।

**सिद्धान्तस्तु** – पञ्चजनादिशब्दवाच्यो भगवानेव । बाधकाभावात् । न च बहुत्वानुपपत्तिर्बाधिका । प्राणादिपञ्चजननियमनाय बहुरूपत्वेन बहुत्वोपपत्तेः । न च आधाराधेयभावानुपपत्तिः । 'स भगवः कस्मिन् प्रतिष्ठित' इति स्वे महिम्नि' इति स्वाधारत्वस्य प्रमाणसिद्धत्वात् । अस्तु वा स्वाधारत्वामनुपपन्नम् । यस्मिन्नित्याधारत्वेन विवक्षितं रूपस्याऽन्यत्वेन तद्गतप्राणादिषु भगवतः स्थितिमात्रेणाऽऽधाराधेयभावोपपत्तिः । नन्वस्तु बहुत्वादिकमुपपन्नम्, तथापि पञ्चजनस्य विष्णुत्वे को विशेषहेतुरिति चेत्, न एतेषु पञ्चजनेषु वाक्यशेषे प्राणादीनां प्राण(त्वादि)प्रदत्वोक्तेः, 'यच्छ्रोत्रस्य श्रोत्रम्' इत्यादिना तस्य च विष्णुलिङ्गत्वात् । ननु वाक्यशेषोक्तानां भगवल्लिङ्गेन विष्णुत्वेऽपि न पञ्चजनानां विष्णुत्वं वाक्यशेषे चतुर्णामेवोक्तत्वेन भिन्नविषयत्वादिति चेत्, न अस्मिन्वाक्यशेषे 'अन्नस्यान्नम्' इति रूपेऽकथिते सत्यपि

(अभिनवचन्द्रिका)
'तद्देवाज्योतिषां ज्योतिः' इति किंचिद्दूरोक्तेन पञ्चत्वसम्भवेन भिन्नविषयत्वाभावात् । अतो बहुत्वसङ्ख्याविशिष्टवाचिशब्दवाच्योऽपि हरिरेवेति युक्तं समन्वयसूत्रमिति सिद्धम् ॥

## वाक्यार्थमुक्तावली

काण्वशाखानुसारेण शङ्कते **नन्विति** ॥ सूत्रे पञ्चकमित्यध्याहारः । एकेषां काण्वानां शाखानाम् अन्ने अन्नस्यान्नत्वप्रदातरि रूपे असति तत्रैवाकथिते सत्यपि ज्योतिषां ज्योतिरिति प्रागुक्तेन ज्योतिषा पञ्चकमिति सूत्रार्थमाह **काण्वानामित्यादिना** ॥ सूत्रे ज्योतिषेत्येकवचनेन षष्ठ्यन्तज्योतिरादेः पञ्चजनत्वमिति सूचितम् । शाखाद्वयविरोधं परिहरति **अत्रेति** ॥ आयुर्होपासत इत्युपजीव्यत्वोक्त्यान्नशब्दार्थ युक्तत्वादेकरूपपरत्वं वाधिकारभेदेन पृथक् पञ्चकं वेत्यर्थः । अत्र यद्यपि द्वितीये स्वसाधकलिङ्गोक्तेः तदनन्तरमेव बाधकोद्धारेण भाव्यं तथापि बाधके परिहृते पूर्वोक्तहेतुभिरेव समन्वयसिद्धेः लिङ्गोक्तेरभ्युच्चयत्वात् । मुखतस्तत्र पञ्चजन-स्वरूपनिरूपणेन लिङ्गलाभस्यार्थिकत्वाच्च बाधकपरिहारानन्तर्यम् । वाक्यशेषस्य न पञ्चजन-निष्ठत्वं सङ्ख्याविसंवादादिति शङ्का परिहारकस्य ज्योतिषेत्यस्य तार्तीयत्वमिति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

इदं हि वाक्यम् अस्ति माध्यन्दिनशाखायां काण्वशाखायां च । तत्र माध्यन्दिनशाखायां पञ्चत्वोक्तिः स्पष्टेत्यत आह ॥ **माध्यन्दिनेति** ॥ व्यवधानेनोक्ते ज्योतिरादाय पञ्चत्वोक्तिः काण्वशाखायामपि सुसंपादेत्याह ॥ **काण्वेति** ॥ यस्मात् ज्योतिषः अर्वाक् संवत्सरः अहोभिः दिवसैः परिवर्तते तत् अमृतम् आयुः तत् ज्योतिषां ज्योतिः एवं भूतं देवा उपासत इत्यर्थः ॥ **अत्रेति** ॥ यस्मिन् पञ्चपञ्चजनाः इति वाक्यस्य एकार्थत्वाय ज्योतिरन्नशब्दयोः स्वीकर्तव्यं तत इदं शाखाद्वयेऽपि एकमेव पञ्चकं विवक्षितमित्यर्थः । अत्राद्ये सूत्रे बहुत्वादिविरोधपरिहारोक्तिः । तत्र च सङ्ख्योपसग्रहादित्यनेन उक्तायाः बहुत्वानुपपत्तेः नानाभावादित्यनेन परिहारः । अपि शब्दसमुचितायास्तु आधारत्वाद्यनुपत्तेरतिरेकाच्च इत्यनेन । द्वितीये पञ्चजनस्वरूपोक्तिः । तृतीये तु शाखान्तरेऽपि पञ्चत्वसंपादनमिति सूत्रक्रमः ॥

## वाक्यार्थविवरणम्

**वाक्यशेष इति** । बृहदारण्यकाख्यकाण्वोपनिषद्वाक्यशेषः इत्यर्थः । चतुर्णामिति अन्नस्य

(वाक्यार्थविवरणम्)

अन्नप्रदत्वरूपं विहायेत्यर्थः । पूर्ववाक्यतः यस्मिन्निति वाक्यतः । यदि पञ्चजनानां विष्णुत्वं तर्हि वाक्यशेषे पञ्चजनानामप्युक्तिः स्यादिति भावः ॥ **माध्यन्दिनेति** ॥ शाखाद्वयस्य समानत्वादिति भावः । काण्वशाखायां तदनुक्तिरेवेति चेत्तत्राह ॥ **काण्वानामिति** ॥ तर्हि माध्यन्दिनकाण्वश्रुत्योर्विसंवादः स्यादित्यत आह– **अत्रेति** ॥

## वाक्यार्थमञ्जरी

पूर्ववाक्यतः पञ्चपञ्चेत्यस्मात् । ॐ ज्योतिषैकेषामसत्यन्ने ॐ । एकेषां काण्वानां शाखायामन्ने अन्नाख्यरूपे असत्यपि ज्योतिषां ज्योतिरिति प्रागुक्तज्योतिषा सह पञ्चत्वं बोध्यमित्यर्थः ॥ **यस्मादर्वागिति** ॥ अहोभिः सह संवत्सरो यस्मादर्वाक् परिवर्तते तस्मिन्स्व-व्यापारं कर्तुं न समर्थ इति यावत् । तं ज्योतिषां ज्योतिष्ट्वप्रदम् आयुरचलं नित्यमुक्तं ब्रह्मदेवाः उपासत इत्यर्थः । श्रुत्योर्विसंवादं परिहरति ॥ **अत्रेति** ॥ प्रकारान्तरमाह ॥ **पृथगिति** ॥ यथा वासुदेवादिचतुर्व्यूहापेक्षया नारायणसहितवासुदेवादेः पृथग्व्यूहत्वं तथान्नेन सहितप्राणादेः सकाशाज्ज्योतिःसहितप्राणादेः पृथक्त्वमिति भावः ॥

॥ इति न सङ्ख्योपसङ्ग्रहाधिकरणम् ॥

## ४. आकाशाधिकरणम्

अवान्तरकारणत्वेनापि स एवोच्यत इति वक्ति–

**॥ ॐ कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॐ ॥ १५ ॥**

अकाशादिष्ववान्तरकारणत्वेन स एव स्थितः । यथा व्यपदिष्टस्यैव परस्य 'य आकाशे तिष्ठन्' (अथ यां जीवो जहाति पा.) इत्यादिना आकाशादिपूक्तेः ॥

## सत्तर्कदीपावली

ननु भवतु भगवतः प्रकृत्यादिषु तत्तच्छब्दपरममुख्यार्थत्वं नानात्वं तदतिरिक्तत्वं च यद्यप्याकाशाद्वायुरित्याद्यवान्तरकारणत्वेनोच्यमानानि भूतानीत्येव । तेषामेव 'आत्मन आकाशः सम्भूतः' इति कार्यत्वेनोच्यमानत्वात् । स्वतन्त्रस्य कार्यत्वविरोधादितीमं पूर्वपक्ष-मपाकरोति । अवान्तरकारणत्वेत्यादिना । यः प्रतिपुरुषं प्रकृतिप्राणचक्षुः श्रोत्रान्नमनस्सु नानाभावेन तदतिरेकेण च तदाश्रयत्वेन स्थितः स एवाकाशादिष्ववान्तरकारणत्वेन उच्यमानः स्थितः स्वतः सम्पूर्णशब्दप्रवृत्तिनिमित्तनियामकत्वेन च यथा व्यपदिष्टस्य व्यपदेशमात्रपरम-मुख्यार्थत्वस्य परमात्मनो य आकाशे तिष्ठन्नित्यादिना आकाशवाय्वादिभूततदभिमानिषु यः प्राणे तिष्ठन्नित्यादिना । अतः प्राणचक्षुरादिषु चोक्तेः । अनुक्तावपि मुख्यार्थसम्भवे स एव ग्राह्यः । किमुक्ताविति भावः सम्भूतत्वं तु भगवतः तत्तत्क्रियाप्रवर्तकत्वेन प्रादुर्भावा-दित्यनवद्यम् ।

## तत्त्वप्रदीपिका

'आत्मन आकाशः सम्भूतः । आकाशाद्वायुः' इत्यादाववान्तरकारणादीनामाकाशादीना-मुत्पत्तिरुच्यते । परस्य तदसम्भवात्तच्छब्दवाच्यत्वं न युक्तमित्यत आह– **अवान्तर-कारणत्वेनापीत्यादि ॥** आकाशादिषु वाय्वादीनामवान्तरकारणत्वेनाऽकाशादिशब्दवाच्यः स एव स्थितः । 'स योऽतोऽश्रुतः' 'एष आत्मेति होवाचैतदमृतम्' इत्यादौ यत्प्रकारः परो व्यपदिष्टः तत्प्रकारस्यैव परस्य य आकाशे तिष्ठन्नित्यादिवाक्यैराकाशादिषु स्थितत्वेनोक्तत्वात् । न चोत्पत्तिश्रुतिविरोधः । आकाशादिस्थरूपाद्वाय्वादिस्थरूपस्य व्यक्तेर्विवक्षितत्वात् ।

## तत्त्वप्रकाशिका

अत्रोत्पत्तिमत्त्वलिङ्गेनान्यत्रैव प्रसिद्धानामाकाशादिशब्दानां परमात्मनि समन्वयप्रतिपादनादस्ति शास्त्रादिसङ्गतिः । समन्वयसूत्रे सर्वशब्दानां परमात्मवाचित्वमुक्तम् । सर्वमध्यपतिताश्चाकाशादि शब्दास्तैत्तिरीयादिश्रुतौ पठ्यन्ते । 'आत्मन आकाशः सम्भूतः अकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी पृथिव्या ओषधयः ओषधीभ्योऽन्नम् अन्नात्पुरुषः' इति । तद्वाच्यस्य विष्णोरन्यत्वे न तस्याशेषशास्त्रयोनित्वं सम्भवतीत्यवश्यं निर्धार्यता । तदाकाशादिशब्दवाच्यं विषयः । विष्णुरन्यद्वेति सन्देहः । समन्वयसूत्रमन्यत्रैव प्रसिद्धिश्च सन्देहबीजम् । न विष्णुरिति पूर्वः पक्षः । आकाशादीनाम् आत्मादिकार्यत्वश्रवणात् । परमात्मनश्च कार्यत्वायोगात् । 'न जायते म्रियते' इत्यादेः । यदा तु भगवति कार्यत्वमेवायुक्तं तदा स्वस्यैव कार्यकारणभावो लोकेऽप्यसम्भावितो नितरां विरुद्धः स्यात् । न च आकाशादिसम्भवस्य तदधीनत्वेन सम्भूतशब्दोपपत्तिः । सुतोत्पत्तौ जनके जातशब्दप्रयोगादर्शनात् । निमित्तविशेषादर्शनाच्च वाक्ययोजनानुपपत्तेश्च । तस्मादात्मशब्दोदितस्य मुख्यकारणस्यैव विष्णुत्वं न त्ववान्तरकारणानामाकाशादीनामिति न समन्वयसूत्रं युक्तमिति । एवं प्राप्ते सिद्धान्तयत्सूत्रमवतारयति **॥ अवान्तरेति ॥** एतत्पूर्वपक्षनिरासायावान्तरकारणत्वेन विष्णुरेवाकाशादिशब्दैरुच्यत इति सूत्रकारो वक्तीत्यर्थः । सूत्रं व्याचष्टे **॥ आकाशादिष्विति ॥** न केवलं मूलकारणवाचकात्मशब्दवाच्यो हरिरपितु कार्यत्वे सति कारणमवान्तरकारणं तद्वाचकाकाशादिशब्दवाच्यश्च । न च कार्यकारणभावविरोधः । आकाशादिषु तस्य स्थितत्वात् । 'य आकाशे तिष्ठन्' 'यो वायौ तिष्ठन्' 'यस्तेजसि तिष्ठन्' 'योऽप्सु तिष्ठन्' 'यः पृथिव्यां तिष्ठन्' इत्यादिनाऽऽकाशादिषु स्थितत्वोक्तेः । न च तत्रापि विष्णुः कुतः इति वाच्यम् । यथा 'स योऽतोऽश्रुतः' इत्यादौ विष्णुरविदितत्वादिरूपेण व्यपदिष्टस्तादृशस्यैवाकाशादिषु 'यमाकाशो न वेद' इत्यादिनोक्तत्वात् । यथा चाऽऽकाशाद्युत्पत्तावाकाशाद्यन्तर्गतत्वेन भगवतोऽभिव्यक्त्या वाय्वादिगतस्वरूपाभिव्यक्तिहेतुत्वेन चावान्तरकारणत्वमुपपन्नम् । अतोऽवान्तरकारणाभिधायकशब्दवाच्यत्वाद्विष्णोर्युक्तं समन्वयसूत्रमिति भावः । स्थितस्तच्छब्दैरुच्यत इति शेषः । न च वक्तव्यमस्त्वेवमवान्तरकारणत्वं विष्णोर्युक्तम् । तथापि तच्छब्दवाच्यत्वे विशेषहेतुर्वाच्य इति । नामानि सर्वाणीत्याद्युक्तरीत्या परमात्मनि सिद्धेऽखिलशब्दसमन्वये तत्र प्रतीतविरोधाभासनिरासेनैव सूत्रकृतश्चरितार्थत्वात् । यत्तु (युक्ति) विशेषं च वक्ति स त्वधिको लाभः । (समाकर्षाधिकरणे भिन्नाधिकरणपक्षे पाठस्तु स त्वधिको लाभः) । अतोऽवान्तरकारणवाचिनामपि शब्दानां परमात्मपरत्वाद्युक्तं समन्वयसूत्रमिति सिद्धम् ॥

## गुर्वर्थदीपिका

निमित्तविशेषादर्शनाच्चेत्यत्र 'सोऽवरः सोऽनित्यः सोऽवरयति सोऽनित्ययति' इत्यादिवत्स आकाशयति, स सम्भूतयतीत्यादिश्रुतिविशेषादर्शनादित्यर्थः । आकाशाधिकरणन्यायेनाऽऽ-समन्तात् काशनादाकाशः सम्यग्विद्यमानत्वात्सम्भूत इति व्युत्पत्त्याऽत्रापि आकाशादि-शब्दवाच्यत्वं परमात्मनो भवतु किमधिकरणान्तरेणेति शङ्काया अपि इदमेवोत्तरम् । तद्व-दनन्तत्वपरोवरीयस्त्वादिविशेषहेत्वभावात् । एवं सति भूतपञ्चकसृष्टेरेवाभावप्रसङ्गेनावकाश-दानादिकार्यस्य घटादिकार्यविशेषस्य च हेत्वभावादित्यपि द्रष्टव्यम् । वाक्ययोजनानुपपत्तेरित्यस्य राजा जयीतिवत् आकाशः सम्भूत इत्येतावतैव वाक्यस्य परिपूर्तेः आत्मन इत्यादिहेतु-वाचकपदानामन्वयाभावादित्यर्थः । वाय्वादिगतस्वस्वरूपाभिव्यक्तेराकाशादित्यादिपञ्चम्यन्त-पदेन श्रौतत्वात् रामकृष्णादीनां मूलरूपभूतात्मन इवात्राप्यात्मन एव सर्वासामपि भगवन्मूर्ती-नामभिव्यक्तिरिति चोद्यस्याप्यनवकाश इति द्रष्टव्यम् । युक्तिविशेषमित्यत्र युक्तिविशेषं सामान्यतोऽनुपपत्तिपरिहारातिरिक्तं 'सोऽवर' इत्यादिरूपं साक्षात्साधकयुक्तिविशेषमित्यर्थः ।

## भावबोधः

**समन्वयसूत्र इति** । यस्मिन्निति वाक्यगतपञ्चजनाकाशादिशब्दानां विष्णुपरत्वेऽपि 'नाकाशाद्वायुः' इति वाक्यगताकाशादिशब्दानां विष्णुपरत्वं सम्भवति । एकस्मिन्नेव कालादौ विशेषबलादाधाराधेयभावदर्शनवदेकस्य विरोधात् पौर्वापर्यायोगेन कार्यकारणभावस्य क्वाप्य-दर्शनादिति पूर्वाधिकरणोपक्षिप्ताकाशादिशब्दविषयकाक्षेपोत्थानादव्यवहितपूर्वाधिकरणसङ्गति-रिति ज्ञेयम् । **किं विष्णुरिति ॥** अत्र 'आकाशाद्वायुः' इत्यादिवाक्यगताकाशादिपदवाच्यं किं भूताकाशादि किं वा विष्णुरिति चिन्ता । तदर्थं नामानि सर्वाणीति श्रुतिगतः सर्वशब्दः किं सङ्कुचितार्थ उतासङ्कुचितार्थ इति । तदर्थमाकाशादिशब्दवाच्यत्वाङ्गीकारे आकाशाद्वायुरिति वाक्यप्रतीतकार्यकारणभावविरोधः प्राप्नोति उत नेति । तदर्थमाकाशादिशब्दवाच्यानां कार्य-कारणभावः किं घटमृत्पिण्डादिसाधारण उत व्यक्त्यव्यक्तिरूपोऽपीति । तदर्थमाकाशादौ विष्णुरूपाणि सन्त्युत न सन्तीति । तदर्थं 'य आकाशे तिष्ठन्' इत्यादिवाक्येषु विष्णु-लिङ्गोक्तिर्नास्त्युतास्तीति । परमात्मनश्च कार्यत्वायोगादिति । अनेन 'विरोधः कार्यतद्वतोः'

(भावबोधः)

इत्यनुव्याख्याने बुद्ध्या विविक्तस्य कार्यस्य इत्यस्य भावप्रधानत्वमभ्युपेत्य परमात्मनः कार्यत्वस्य विरोध इति तदंशो व्याख्यातो भवति । इदानीं समग्रं तद्वाक्यं योजयति यदा त्विति । **निमित्तविशेषादर्शनाच्चेति** । परमात्मन अव्यक्तादिशब्दवाच्यत्वप्रतिपादकाव्यक्तमचलं-शान्तमित्यादिश्रुतिरूपनिमित्तविशेषवदत्र तदभावादित्यर्थः ॥ **वाक्ययोजनानुपपत्तेश्चेति** ॥ आत्मादेः स्वस्मादाकाशादिरूपः स्वयमन्यगतसम्भवनियामक इत्यर्थ उक्तः स्यात् । तत्र च स्वस्यान्यगतसम्भवकर्तृत्वे स्वस्यानुपयोगादात्मन इत्यादेरन्वयानुपपत्त्या वाक्ययोजनानुपपत्ति-रित्यर्थः । भाष्ये अवान्तरकारणत्वेनापि स एवेत्यनन्तरं तच्छब्दैरुच्यत इति शेष इत्यभिप्रेत्य तद्व्याचष्टे न केवलमित्यादिना । अनेन सौत्र 'श्च'शब्दः कार्यत्वसमुच्चायकः । तेन कार्यत्वे सति कारणत्वरूपावान्तरकारणत्वलाभः मूलकारणत्वसमुच्चयार्थश्च । यथा च न केवलं मूल-कारणत्वेन तद्वाचकात्मशब्देनोच्यते । किन्त्ववान्तरकारणत्वेनापि निमित्तेन तद्वाचकाकाशादि-शब्दवाच्यश्चेत्युक्तं भवति ॥ **आकाशादिषु स्थितत्वोक्तेरिति** ॥ अनेनाकाशादिषूक्तेरिति भाष्येण सौत्रस्याकाशादिष्वित्यस्योक्तेरित्यनेनापि सम्बन्ध इत्युक्तं भवति । आकाशादिषु तस्य स्थितत्वेऽपि कार्यकारणभावविरोधपरिहारः कथमित्यतो व्यक्त्यपेक्षया कार्यत्वं चेति न्यायविवरणाभिप्रायमाह **यथा चेति** ॥

ननु तर्हि 'विकारशब्दान्नेति चेत्' इत्याद्यनुपपत्तिपरिहारः कर्तव्यः । न त्वानन्द-मयोऽभ्यासात् इत्यादिकं वक्तव्यमित्यत आह– यत्तु **युक्तिविशेषं चेति** ॥

## भावदीपः

व्यक्त्यपेक्षया कार्यत्वं चेति न्यायविवरणेन अवान्तरेण इत्यादिभाष्येण वा सूचितलिङ्ग-नान्यत्रैव प्रसिद्धिमाह ॥ **अत्रोत्पत्तिं मत्त्वेति** ॥ यद्यपि द्युभ्वादिनय एव प्रादुर्भावरूपा हरेरुत्पत्तिर्निर्णीता । अन्यथा तत्र श्रुतजायमानशब्दस्योक्तरूपजन्मवति विष्णौ सावकाशत्वा-भावे अतच्छब्दात्प्राणभृच्च नेति जीवनिरासायोगात् । उक्तं च भाष्ये । 'अजायमानो बहुधा विजायत' इति तस्यैव बहुधा जन्मोक्तेरिति । तथाप्येकदेशोक्त्या कारणत्वे सत्युत्पत्तिमत्त्व-रूपावान्तरकारणत्वलिङ्गेन इत्यत्र तात्पर्यम् । कारणत्वांशस्तु अविरुद्ध इति नोक्तः । कार्यत्वायोगादित्याद्यग्रेतनटीकावाक्यं तु प्रादुर्भावरूपं जन्मेति पूर्वं भाष्ये स्पष्टमुक्तत्वाद्

(भावदीपः)

व्यक्त्यपेक्षया कार्यत्वमिति स्पष्टमत्र न्यायविवरणेऽभिहितत्वात् तद्व्यावर्त्योक्त्यर्थं न तु उत्पत्तिमत्त्वमेवायुक्तमिति भावेन । अत एवानुभाष्यविरोधः कार्यतद्वतोरित्येव पूर्वपक्षयुक्तिरुक्ता ॥ **न तु कार्यत्वविरोध इति** ॥ श्रुत्यादिसङ्गतिमाह ॥ **समन्वयेति** ॥ व्यक्त्यपेक्षया कार्यत्वमिति न्यायविवरणस्वारस्याय तद्व्यावर्त्यमाह ॥ **आकाशादीनामिति** ॥ विरोधः कार्यतद्वतोरित्यनुभाष्योक्तमाह ॥ **स्वस्यैवेति** ॥ तदधीनत्वादर्थवदित्यनेन गतार्थतामाशङ्क्य निराह ॥ **न चेति** ॥ सुतोत्पत्ताविति पूर्वोक्ताकाशयोरत्राप्यनुसन्धेयः । अवरादिशब्दवदन्यत्रादृष्टत्वेऽपि वृत्तिः किं न स्यादित्यत आह ॥ **निमित्तेति** ॥ विशेषकारणाभावाच्चेत्यर्थः । नामानि सर्वाणीत्यादिश्रुतीनां साधारण्येन सङ्कोचसम्भवादिति भावः ॥ **वाक्ययोजनेति** ॥ हरेरेवात्माकाशादिशब्दवाच्यत्वे तस्यैकत्वेन क्रमाभावादात्मन आकाश आकाशाद्वायुरित्यादिक्रमप्रतिपादकवाक्ययोजनानुपपत्तेश्चेत्यर्थः ॥ **तस्मादिति** ॥ विशेषहेत्वभावात् । बाधकभावाच्चेत्यर्थः ॥ **अवान्तरेति** ॥ कार्यत्वे सति कारणानामित्यर्थः । वायुकारणाकाशकारणस्य वायुकारणत्वं विरुद्धमिति चोद्यं तु आनुमानिकनयोक्तन्यायेन महतः परस्मात्परस्य महतः परत्ववत्परिहृतमिति नैवोद्घाटितम् । हरेरवान्तरकारणत्ववचनं सूत्रे न सङ्गतमिति भ्रमनिरासाय शेषपूर्त्या सम्भन्धभाष्यं व्याचष्टे ॥ **एतत्पूर्वपक्षेति** ॥ कारणत्वेन चेति सूत्रांशं सम्बन्धभाष्येण विवृतं मत्वा चशब्दसमुच्चेयं व्याचष्टे ॥ **न केवलमिति** ॥ सौत्रकारणत्वशब्देवावान्तरकारणत्वपर इति वा कार्यत्वेन चेत्यपि समुच्चीयत इति वा भावेन अवान्तरकारणत्वेनेत्युक्तं भाष्य इत्यभिप्रेत्यार्थमाह ॥ **कार्यत्वे सतीति** ॥ **वाच्यश्चेति** ॥ एतेन भाष्ये अपिशब्दो व्याख्यातः । आकाशादिष्वित्यादिभाष्यं व्याकुर्वन् सूत्रशेषमवतार्य व्याचष्टे ॥ **न चेति** ॥ भाष्ये स एव स्थित इत्येतत्तस्य स्थितत्वादिति व्याख्यातम् । सूत्रेऽध्याहृतहेतोरसिद्धिनिरासाय आकाशे तिष्ठन्नित्यादिभाष्यं व्याचष्टे ॥ **य इति** ॥ एतेनाकाशादिषूक्तेरित्यपि सूत्रेऽन्वयो दर्शितः ।

यथेत्यादिभाष्यं व्याचष्टे ॥ **न चेत्यादिना** ॥ तावता कथमुक्तविरोधनिरास इत्यतो व्यक्त्यपेक्षया कार्यत्वं चेति न्यायविवरणोक्तदिशा कार्यत्वविरोधं परिहरन् आकाशादिषु स्थित इत्यादिभाष्यतात्पर्योक्त्या कार्यकारणभावविरोधं च निराह ॥ **तथाचेति** ॥ **अत इति** ॥ विरोधाभावादित्यर्थः । सूत्रस्य समन्वयपरत्वस्फोरणाय भाष्ये शेषमाह ॥ **स्थित इति** ॥

(भावदीपः)

भाष्यस्थानुवादः तच्छब्दैराकाशादिशब्दैरित्यर्थः । अवान्तरं कारणं चेति सङ्क्षेपभाष्ये अवान्तर-कारणत्वलिङ्गसमन्वयोक्तावपीह नामसमन्वयपरत्वोक्तिः नामानि सर्वाणीति वक्ष्यमाण-समाधानाय समाकर्षाद्युक्त्युपयोगाय चेत्याहुः । निमित्तविशेषादर्शनाचेति प्रागुक्तचोद्यमनूद्य निराह ॥ **न च वक्तव्यमिति** ॥ **इत्याद्युक्तेति** ॥ आकाशनय आदिपदार्थः । नन्वेवं पूर्वत्र प्राणप्राणदत्वादिविशेषहेतुरग्रे प्रतिज्ञादृष्टान्तानुपरोधादिश्च न वाच्यः स्यादित्यत आह ॥ **यत्तु विशेषं च वक्तीति** ॥

## अभिनवचन्द्रिका

अत्र द्वे दर्शने कारणत्वेन चाकाशात्' इति एकं सूत्रमेकमधिकरणम् । 'समाकर्षात्' इत्यारभ्याऽष्टसूत्री अधिकरणान्तरमित्येकम् । कारणत्वेन' इत्यारभ्य नवसूत्री एकमधिकरण-मित्यपरम्' । तत्राद्यं सत्तर्कदीपावलीकृतो दर्शनम् । 'अथैवं प्रायः पारङ्गते महासमन्वये तिस्रः सर्वाधिकरणसाधारणाः शङ्काः । नैकाधिकरणे विशेषतः सङ्गताः । ताः निराकरोत्यष्टभिः सूत्रैः' इति सत्तर्कदीपावल्युक्तेः तत्र 'परमात्मनः सर्वशब्दवाच्यत्वं सम्भवति । तेष्वेव केषाश्चित् अर्थान्तरेष्वेव व्यवहाराऽन्यथाऽनुपपत्त्या तत्तच्छब्दवाच्यत्वावगतेः' इत्येका शङ्का । 'परमात्मनो मुख्यतः सर्वशब्दवाच्यत्वाङ्गीकारे तत्रैव प्रसिद्धिः स्यात् । जगति प्रसिद्धिर्न स्यात्' इत्यपरा । ननु भवतु यदधीनं सर्वं तत्रैव शब्दजातं मुख्यं तथापि मुख्यतः शब्दवाच्यो न विष्णुरेव अपि तु पृथिव्याद्यभिमानिजीवा मुख्यप्राणश्च । 'अस्य यदेकां शाखां जीवो जहाति अथ सा शुष्यति वायुना हि सर्वे लोका नेनीयन्त' इत्यादिश्रुतेरित्यन्या इति शङ्कात्रयं द्रष्टव्यम् । अष्टसूत्र्याः पृथगधिकरणत्वे तु 'सर्वशब्दानां परमात्मवाचकत्वे कथमन्यत्र व्यवहार इत्यतोऽब्रवीत्' इति भाष्यं लिङ्गम् । अन्यथा आकाशशब्दस्याऽन्यवाचित्वे कथमाकाश-शब्दस्याऽन्यत्र व्यवहार इत्यतोऽब्रवीत्' इत्येवाऽवक्ष्यत् ।

**अधिकरणशरीरन्तु** – विष्णोः सर्वशब्दवाच्यत्वे प्राप्तानुपपत्तित्रयपरिहारेण दृढीकरणा-दस्ति शास्त्रादिसङ्गतिः । मुख्यतः सर्वशब्दवाच्यत्वं परमात्मन एवेत्युक्तं, तद्युक्तमयुक्तं वेति सन्देहः । प्राचीनाधिकरणैरुपपादनं, अनुपपत्तिदर्शनं च, सन्देहबीजम् । न युक्तमिति पूर्वः पक्षः । परमात्मनः सर्वशब्दवाच्यत्वे केषाश्चिच्छब्दानामन्यत्र व्यवहारविलोपप्रसङ्गात् । जगति प्रसिद्धिश्च न स्यात्, परमात्मन इव पृथिव्याद्यभिमानिजीवानां मुख्यप्राणस्य च तत्त-

(अभिनवचन्द्रिका)
न्नियामकत्वेन तत्तच्छब्दमुख्यवाच्यत्वादिति । युक्तमेव सर्वशब्दवाच्यत्वमिति सिद्धान्तः । शब्दानां भगवद्वाचकत्वेऽपि समाकर्षणान्यत्र व्यवहारसम्भवात् । लोकानामन्यत्रैव व्युत्पन्नत्वेन भगवद्वाचकानामपि शब्दानां जगति प्रसिध्द्युपपत्तेः । वाय्वादिगततत्तन्नियामकत्वस्य तदन्तर्गत-भगवदधीनत्वाच्च न वाय्वादीनां तत्तच्छब्दवाच्यता, किंतु विष्णोरेवेति । द्वितीयन्तु टीकाकृतां दर्शनम् । अत्रानुव्याख्याने –

'विरोधिसर्वबाहुल्यकारणत्वानिषेधिनाम् ।
पृथक्समन्वयार्थानि स्थानान्येतानि सर्वशः' ॥

इति षडधिकरणोपाध्युक्तिर्लिङ्गम् ।

अणुभाष्ये च –

'अवान्तरं कारणं च प्रकृतिः शून्यमेव च' इत्यनेन

पूर्वोत्तराधिकरणप्रतिपाद्यमुक्त्वा एतदधिकरणप्रतिपाद्यानुक्तिश्च लिङ्गम् –

'इदं मतद्वयं सूत्रभाष्यकारविचिन्तितम् ।
एकैकं मन्दबोधाय स्वीकृत्यैवाहतुर्मुनी' ॥

अतो विरोधगन्धोऽपि नैव शङ्क्यो मनीषिभिः । **आकाशादिशब्दनामिति** ॥ अत्र यद्यपि आकाशशब्दसमन्वयप्रतिपादनादित्येवोक्ते वाय्वादिशब्दानामपि समन्वयः शक्यो विज्ञातुम्, आकाशग्रहणस्योदाहरणार्थत्वात् तथापि आकाशशब्दस्याधिभूतवाचकत्वेन अधिभूतवाय्वादि-शब्दानामेव ग्रहणं विज्ञायेत । तन्मा विज्ञायि किन्तु ओषध्यादिशब्दानामपि ग्रहणमिति ज्ञापनाय आदिशब्दप्रयोगः । अनेनैवाभिप्रायेण सूत्रे आदिशब्दः प्रयुक्तो द्रष्टव्यः ॥ **तैत्तरीय-कादिश्रुताविति** ॥ अनेन समन्वयाऽधिकरण प्रतिपाद्यशब्दराश्यन्तर्गताकाशादिशब्दनिर्णायकत्वं तेनाधिकरणेन अस्याधिकरणस्य सङ्गतिरित्युक्तं भवतीति बोध्यम् ॥ **लोकेऽप्यसम्भावित इति** ॥ ननु लोके सम्भावितः कार्यकारण भावोऽन्यः । 'आत्मन आकाशः सम्भूत' इत्यत्र श्रूयमाणकार्यकारणभावोऽन्य इति विषमोऽयमुपन्यासः । तथा हि लोके तावद्यस्य येन रूपेण कारणत्वं तस्य तेन रूपेण तत्कार्यत्वं विरुद्धं न तु स्वस्य स्वकारणत्वम् । इन्द्रादिभ्योऽ-र्जुनादीनामुत्पत्तिदर्शनात् । प्रकृते आत्मरूपादाकाशाख्यरूपस्योत्पत्तिः श्रूयते, न तु

(अभिनवचन्द्रिका)

आत्मरूपादात्मरूपस्य । येन विरुद्धः स्यादिति चेत्, उच्यते लोके तावद्भिन्नयोरेव कार्यकारणभाव उपलब्धः । इन्द्रार्जुनदेहयोः कार्यकारणयोर्भिन्नत्वात्, पित्राद्यचेतनमेव पुत्राद्यचेतनं प्रति कारणमित्येव सुप्रसिद्धम् । अतः स्वस्यैव कार्यकारणाभावो लोकेऽप्यसम्भावित इति ॥ **वाक्ययोजनाऽनुपपत्तेश्चेति** ॥ आत्मादेः स्वस्मादाकाशादिरूपः स्वयं अन्यगतसम्भवनियामक इत्यर्थ उक्तः स्यात् । तत्र चाकाशगतरूपस्यान्यगतसम्भवनियामकत्वे आत्मरूपस्याऽनुपयोगात् । 'आत्मन' इत्यादेरन्वयानुपपत्त्या वाक्ययोजनानुपपत्तेरित्यर्थः । भाष्यकृता विषयपूर्वपक्षाणामप्रदर्शितत्वात् ।

इदं सूत्रं नाधिकरणान्तरं किन्तु पूर्वाधिकरणशेष इति भ्रमनिरासायाह – **एतत्पूर्वपक्षनिरासायेति** ॥ **न च कार्यकारणभावविरोध इति** ॥ आकाशशब्देन भगवद्विवक्षायां वाय्वादिशब्देन स एव विवक्षणीय इति कार्यकारणभावविरोधः । तथाहि असतः सत्तासम्बन्धो हि कार्यत्वम् । परमात्मरूपाणामनादिनित्यत्वेन कार्यत्वाभावात् । आकाशान्तर्गतस्य रूपस्य आत्मकार्यत्वविरोधः । तथा कारणत्वस्य कार्यसापेक्षत्वात् वाय्वन्तर्गतरूपस्य कार्यत्वाभावेन आकाशरूपस्य तत्कारणविरोधश्चेति न वाच्यमित्यर्थः । उत्पत्स्यमानेषु आकाशादिषु अभिव्यक्तेः कार्यत्वं रूपान्तराभिव्यक्तिहेतुत्वात् कारणत्वं चोपपन्नमिति गूढाभिसन्धिः उत्तरमाह– **आकाशादिष्विति** ॥ आकाशादिषु स्थितत्वोक्त्या कथं कार्यकारणभावनिर्वाह इत्यतः स्वाभिसन्धिमुद्घाटयति– **तथा चेति** ॥

## वाक्यार्थमुक्तावली

**समन्वयसूत्र इति** ॥ अव्यवहितसङ्गतिस्तु अस्त्येकस्यैवाधाराधेयभावः कालः सदास्तीत्यादौ दर्शनात् । नतु कार्यकारणभावः कार्यदर्शनादधिकाक्षेपादिति ज्ञेयम् ॥ **विष्णुरन्यद्वेति** ॥ अत्राकाशादिशब्दवाच्यः किमन्य उत विष्णुरिति चिन्ता । तदर्थं नामानि सर्वाणीति श्रुतसर्वशब्दसङ्कोचे हेतुरस्ति उत नेति तदर्थं जन्यजनकभावः किमेकस्य न युक्त उत युक्त इति । विरोधकार्यतद्वतोरित्यनुव्याख्यानं मनसि निधाय पूर्वपक्षमाह न विष्णुरित्यादिना ॥ **स्वस्यैवेति** ॥ ननु द्युभ्वाद्यधिकरणे प्राणभृच्चेत्यत्र जीवलिङ्गानां सावकाशत्वोपपादनाय अजायमानो बहुधा विजायत इति तस्यैव बहुधा जन्मोक्तेरिति भाष्ये, प्रादुर्भावो हरेर्जनि' इति निर्णीतत्वाद्गतार्थमिदमधिकरणमिति चेन्न । तद्रीत्याकार्यत्वनिर्वाहेऽपि कार्यत्वे सति

(वाक्यार्थमुक्तावली)

कारणत्वस्यानिर्वाहात् । व्यञ्जकत्वं कारणत्वमिति चेन्न तस्यैतदधिकरणलभ्यत्वेनागतत्वात् । व्यंग्यव्यञ्जकभावस्याप्येकस्मिन्विरोधादिति तदधीनत्वेन गतार्थतामाशङ्क्य निराह– **न चेति** ।। नन्ववरादिशब्दवदन्यत्रादृष्टत्वेऽपि वृत्तिः किं न स्यादित्यत आह ।। **निमित्तेति** ।। सोऽवरः सोऽनित्य इत्यादिवत्प्रापकप्रमाणविशेषादर्शनादित्यर्थः ।

ननु बाधकाभावेन नामानीत्यादिसामान्यवाक्यमेवालमित्यतः कार्यकारणभावविरोध उक्तः ।। **बाधकान्तरमाह वाक्येति** ।। ब्रह्मण एवाकाशादिशब्दवाच्यत्वे तस्यैकत्वेन क्रमाभावादात्मन आकाशः आकाशाद्वायुरित्यादि क्रमप्रतिपादकवाक्ययोजनानुपपत्तेरित्यर्थः । अवान्तर-कारणत्वेन स एवेति भाष्ये अवान्तरकारणत्वेनापि स एवोच्यत इति सम्बन्धभाष्यानुसारेणापि शब्द उच्यत इतिपदं च संयोज्य व्याचष्टे ।। **न केवलमिति** ।। एतेन सूत्रे तत्वित्यनुवर्तते । चशब्दस्तु मूलकारणसमुच्चायकः । कार्यत्वसमुच्चायकश्च । तथाच ब्रह्मैव न केवलं मूलकारण-त्वेनात्मशब्देनोच्यते किं तु कारणत्वेन च शब्दात्कार्यत्वेन, कार्यत्वे सति कारणत्व-रूपावान्तरकारणत्वेनाप्याकाशादिशब्देनोच्यते इति प्रतिज्ञांशो व्याख्यातो भवति । आकाशा-दिषु स एव स्थित इति भाष्यं हेतुगर्भमिति तद्व्यावर्त्यमाशङ्क्य तत्परिहाराय योजयति ।। **न चेति** ।। एतेन सूत्रे न विरोध इत्यनुकृष्यते । आकाशादिष्वित्यधिकरणसप्तमीबलात् स्थित इति लभ्यत इति व्याख्यातं भवति ।। आकाशादिषु स्थितत्वमसिद्धमिति शङ्कापरिहाराय सूत्रे आकाशादिपूक्तेरिति बुध्या विवेकेन सम्बन्धोऽभिप्रेत इति भावेन परस्य य आकाशे तिष्ठन्नित्यादिनाकाशादिपूक्तेरित्ययमंशः प्रवृत्तस्तद्व्याचष्टे **य आकाशेति** ।। आकाशादिषु यथा व्यपदिष्टोक्तेरिति सूत्रांशव्याख्यापरं यथाव्यपदिष्टस्य परस्येत्यारभ्योक्तेरित्यन्तसमग्रभाष्यमवतार्य व्याचष्टे **न च तत्रापीत्यादिना** ।। स योऽतोऽश्रुत इत्यादौ विष्णुलिङ्गत्वेनाप्रमिताविदितत्वस्य आकाशगते यमाकाशो न वेदेति श्रवणादाकाशस्थो विष्णुरिति भावः । आकाशादिषु स्थित-त्वेऽपि तस्य कार्यकारणविरोधः कथमित्यतो व्यक्त्यपेक्षया कार्यत्वं चेति न्यायविवरणं मनसि निधाय परिहाराभिप्रायमाह ।। **तथा चेति** ।। न चैकस्यैव व्यङ्ग्यव्यञ्जकभावानुपपत्तिरिति वाच्यम् । रूपभेदेन तदुपपत्तेरिति चैकाचेत्युक्तम् । न्यायसाम्यात् । भाष्ये स एव स्थित इत्यनन्तरं समन्वयपरत्वलाभाय शेषमाह **स्थित इति** ।। विशेषयुक्तिमिति पूर्वमुत्तरत्र चेत्यर्थः । ततश्च तत्तु ब्रह्मैव न केवलं मूलकारणत्वेन अपि तु कारणत्वेन च शब्दात्कार्यत्वेनावान्तर-

(वाक्यार्थमुक्तावली)

कारणत्वे नाप्युच्यते । न च कार्यकारणभावविरोधः । आकाशादिषु स्थितत्वादेकस्यैव रूपभेदेन व्यङ्ग्यव्यञ्जकभावोपपत्तेः । तदपि कुतः आकाशादिषु य आकाशे तिष्ठन्नित्युक्तेः । य आकाशे तिष्ठन्नित्युक्तस्य विष्णुत्वं कुतः आकाशादिषु यथा व्यपदिष्टोक्तेः । यथा येन प्रकारेणाविदितत्वादिना स योऽत इत्यादौ व्यपदिष्टः तथैवाकाशादिषु यमाकाशो न वेदेत्याद्युक्तेरिति सूत्रार्थः ।

## तत्त्वसुबोधिनी

**समन्वयसूत्र इति** ॥ यस्मिन्निति वाक्यगतपञ्चजनादिशब्दानां विष्णुपरत्वसम्भवेऽपि नाकाशात् वायुरिति श्रुतिगताकाशादिशब्दानां विष्णुपरत्वं सम्भवति । एकस्मिन्नेव कालादौ विशेषबलात् आधाराधेयभावदर्शनवत् एकस्य विरोधात् पौर्वापर्यायोगेन कार्यकारणभावस्य काप्यदर्शनादिति पूर्वाधिकरणोपक्षिप्ताकाशादिशब्दविषयकाक्षेपोत्थानात् अव्यवहितपूर्वाधिकरण सङ्गतिरिति भावः । इदानीं समग्रं वाक्यं योजयति ॥ **यदात्विति** ॥ अवरादिशब्दवत् अन्यत्रादृष्टत्वेऽपि वृत्तिः किं न स्यादित्यत आह ॥ **निमित्तविशेषादर्शनाच्चेति** ॥ परमात्मनः अव्यक्तादिशब्दवाच्यत्वप्रतिपादकाव्यक्तमचलं शान्तमित्यादिश्रुतिरूपनिमित्तविशेषवत् अत्र तदभावादित्यर्थः ॥ **वाक्ययोजनानुपपत्तेश्चेति** ॥ आत्मादेः स्वस्मात् आकाशादिरूपः स्वयमन्यगतसम्भवः नियामक इत्यर्थ उक्तः स्यात् । तथा च स्वस्यान्यगतकर्तृत्वे स्वस्यानुपयोगात् आत्मन इत्यादेः अन्वयानुपपत्त्या वाक्ययोजनानुपपत्तेरित्यर्थः । यद्वा ब्रह्मण एव आत्माकाशादिशब्दार्थत्वे तस्य एकत्वेन क्रमाभावात् आत्मनः आकाशः, आकाशाद्वायुः इत्यादि क्रमप्रतिपादकवाक्ययोजनानुपपत्तेरित्यर्थः । भाष्ये अवान्तरकारणत्वेनापि स एव इत्यनन्तरं तच्छब्दैः उच्यत इति शेष इत्यभिप्रेत्य तत् व्याचष्टे ॥ **न केवलमित्यादिना** ॥ आकाशादिषु स्थितत्वे किं प्रमाणमित्यत आह ॥ **य इति** ॥ ननु तर्हि विकारशब्दान्नेति चेत् इत्याद्यनुपपत्तिपरिहार एव कर्तव्य न तु आनन्दमयोऽभ्यासादित्यादिकं वक्तव्यमित्यत आह ॥ **यत्तु युक्तिविशेषे चेति** ॥ अत्र सौत्रश्चशब्दः न केवलम् आत्मशब्दवाच्यो हरिः अपित्वाकाशादिशब्दवाच्यश्चेत्यर्थकः । यद्वा न केवलं कारणत्वेन किन्तु कार्यत्वेन चेत्यर्थः । एवं च कार्यत्वे सति कारणत्वरूपावान्तरकारणत्वं भाष्योक्तं सूत्रारूढं भवति । आकाशादिषु परमात्मनः स्थितत्वेनावान्तरकारणवाचकआकादिशब्दवाच्यो हरिरेव । न चाकाशादिषु

(तत्त्वसुबोधिनी)
स्थितत्वे किं प्रमाणमिति वाच्यम् । य आकाशे तिष्ठन् इति श्रुतेरेव प्रमाणत्वात् । ननु तत्रापि विष्णुः कुत इत्यत उक्तं यथा व्यपदिष्टोक्तेरिति सूत्राक्षरार्थः ॥

## वाक्यार्थमञ्जरी

**आत्मन आकाश इति** ॥ अत्र 'भूतं भूताभिमानी च तद्देहोऽन्तर्नियामकः । हरिश्चाकाश शब्दोक्त' इत्युक्तरीत्या चतुर्णामुत्पत्तिर्ज्ञेया । सर्वत्र काशमानत्वादाकाशः बलज्ञानस्वरूपत्वाद्वायुः स्वतो न गच्छतीत्यगं जगत्तं नयतीत्यग्निः । आपालनादापः बहुरूपत्वाद्बहुवचनम् । पृथितत्वात्पृथिवी, उष्टानां जाठराग्नि दह्यमानानाम् आश्रयत्वादोषधिः, अतृत्वादुपजीव्यतयाद्यत्वाच्चान्नम् । पुरि शेत इति पुरुष इत्यर्थः ॥ **निमित्तविशेषादर्शनाच्चेति** ॥ परमात्मनोऽव्यक्तादिशब्दवाच्यत्वप्रतिपादकाव्यक्तमचलं शान्तमित्यादिश्रुतिरूपनिमित्तविशेषवदत्र तदभावादित्यर्थः ॥ **वाक्ययोजनानुपपत्तेश्चेति** ॥ आत्मादेः स्वस्मादाकाशादिरूप स्वयं सम्भूतान्यगतसम्भवः नियामक इत्यर्थ उक्तः स्यात् । तत्र च स्वस्यान्यगतसम्भवकर्तृत्वे त्वस्यानुपयोगादात्मन इत्यादेरन्वयानुपपत्त्या वाक्ययोजनानुपपत्त्येत्यर्थः । ॐ कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः ॐ । न केवलं मूलकारणत्वेन तद्वाचकात्मशब्दवाच्यो हरिरपितु कारणत्वेन चावान्तरकारणत्वेनापि निमित्तेन तद्वाचकाकाशादिशब्दवाच्यश्च तर्हि कार्यकारणभावविरोध इत्यत उक्तम् ॥ **आकाशादिष्विति** ॥ स्थितत्वादिति शेषः । य आकाशे तिष्ठन्नित्यादिना तस्याकाशस्थत्वोक्त्या तस्याकाशाद्युत्पत्तौ तदवस्थत्वेन तस्याप्यभिव्यक्त्या कार्यत्वं वाय्वादिस्थरूपव्यक्तिहेतुत्वेन कारणत्वं च युक्तं च आकाश इत्युक्तो हरिः कुत इत्यत आह ॥ **यथा व्यपदिष्टोक्तेरिति** ॥ यथा येनाश्रुतत्वादिना प्रकारेण स योऽतोऽश्रुत इत्यादौ निर्दिष्टस्तेनैव प्रकारेणाकाशादौ यमाकाशो न वेदेत्यादिनोक्तेरित्यर्थः । आकाशादिषु स्थितत्वेऽपि कार्यकारणभावविरोधपरिहारः कथमित्यत आह ॥ **तथा चेति** ॥ ननु तर्हि विकारशब्दान्नेति चेदित्याद्यनुपपत्तिपरिहार एव कर्तव्यो न त्वानंदमयोऽभ्यासादिविशेषहेतुर्वक्तव्य इत्यत आह ॥ **यं त्विति** ॥

॥ इति आकाशाधिकरणम् ॥

## ५. समाकर्षाधिकरणम्

सर्वशब्दानां परमात्मवाचकत्वे कथमन्यत्र व्यवहार इत्यतो ब्रवीति–

**॥ ॐ समाकर्षात् ॐ ॥ १६ ॥**

परमात्मवाचिनः शब्दा अन्यत्र समाकृष्य व्यवह्रियन्ते ।

'परस्य वाचकाश्शब्दा समाकृष्येतरेष्वपि ।
व्यवह्रियन्ते सततं लोकवेदानुसारतः ॥' इति पाद्मे ॥

## सत्तर्कदीपावली

अथैवं प्रायः पारङ्गते महासमन्वये त्रये सर्वाधिकरणसाधारणाः शङ्काः नैकाधिकरणे विशेषतः सङ्गताः ताः निराकरोत्यष्टभिः सूत्रैः । ननु भवतूक्तैर्विशेषहेतुभिः भगवत्यपि प्रवृत्तिः सर्वशब्दानां, न तु भगवत्येव । तेषामेव केषाश्चिदर्थान्तरेष्वपि व्यवहारान्यथानुपपत्त्या तद्वाच-कत्वस्याप्यवगतेरित्याशङ्क्य व्यवहारस्य अन्यथैवोपपत्तिं सप्रमाणकं दर्शयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **सर्वेत्यादिना** ॥ न च परशब्दत्वाविशेषेण अग्न्यादिशब्दानाम् उदकादौ प्रयोगापत्तिरिति भावेनाह ॥ **लोकवेदानुसारत इति** ॥

## तत्त्वप्रदीपिका

ब्रह्मण एव वाचकैः सर्वशब्दैः कथमन्यत्रावाच्येषु व्यवहरन्ति । अवाचकैरेव व्यवहारे कुम्भादावपि स्तम्भादिशब्दव्यवहारयोगादव्यवस्था स्यात् । अतो न वाचकत्वमन्तरेण जगति व्यवहारः सार्वजनीनस्सम्भवतीतीत्यत आह– **'समाकर्षात्'** ॥ अनादिकालत एवाविच्छेदेन परमात्मवाचकत्वेन स्थितास्ततः समाकृष्येतरेष्वपि व्यवह्रियन्ते । न चाव्यवस्था । समाकर्ष-क्लृप्तेर्विद्यमानत्वात् ।

## तत्त्वप्रकाशिका

अत्र व्यवहारविलोपप्रसङ्गेनाऽन्यत्रैव प्रसिद्धानां सर्वशब्दानां परमात्मैकवाचित्वसमर्थना-दस्ति शास्त्रादिसङ्गतिः । समन्वयसूत्रे सर्वेषां शब्दानां भगवद्वाचित्वमुक्तम् । तच्चानुपपत्ति-ग्रस्तत्वेऽसत्स्यादित्यारम्भणीयमेतत् । लौकिका वैदिकाश्च शब्दा विषयाः । भगवदेकवाचिनो

(तत्त्वप्रकाशिका)

न वेति सन्देहः । पूर्वोक्तमेव सन्देहबीजम् । पूर्वपक्षयति ॥ **सर्वेति** ॥ यदुक्तं सर्वशब्दानां परमात्मैकवाचित्वं तदयुक्तम् । तथात्वेऽन्यत्र व्यवहाराभावापातात् । यदपि साक्षादप्य-विरोधमित्युक्तमस्य समाधानं तदयुक्तम् । अवाचकैर्व्यवहारेऽव्यवस्थापातात् । यदप्यत्रोक्तं शरीररूपकविन्यस्तेतीश्वरसम्भन्धादन्यत्र शब्दप्रवृत्तिरिति तदपि न साधु । तथा सति लोके लक्षणेतरवृत्त्यभावापत्तेः । यत्तु कल्पनोपदेशादित्यत्र रूढ्याद्यभ्युपेत्य समाधानं तदपि न शोभां बिभर्ति । तथा सत्यन्यस्यापि मुख्यवाच्यत्वप्रसङ्गेन परमात्मन एव मुख्यवाच्यत्वमिति प्रतिज्ञा-व्याघातात् । योगरूढ्योरेव मुख्यवृत्तित्वात् । न ह्यक्षादिशब्दानां रूढ्यादिनैवानेकवाचिनां क्वचिन्मुख्यता क्वचिन्नेत्यस्ति । अतः सर्वशब्दानां मुख्यवृत्त्या परमात्मैकवाचित्वेऽन्यत्र व्यवहारलोपापातात् । तस्य चानिष्टत्वान्न परमात्मैव मुख्यतः सर्वशब्दवाच्य इति (शङ्कार्थः) । सूत्रं व्याचष्टे ॥ **परमात्मेति** ॥ सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ न परमात्मनो मुख्यतः सर्वशब्दवाच्यत्वेऽन्यत्र व्यवहारलोपः । तत्र रूढ्यादेरभ्युपगमात् । तथा सत्युभयो-र्मुख्यवाच्यत्वं प्राप्तमिति चेन्नैवम् । भवेदेतद्यद्यक्षादिशब्दवदुभयत्रान्योन्य निरपेक्षा शब्दप्रवृत्तिः । न चैवम् । किन्तु स्वतो मुख्यवृत्त्या परमात्मैकवाचिनां शब्दानां व्यवहारसिद्ध्यर्थं ततः समाकृष्याऽन्यत्र रूढत्वेन सङ्केतितत्वात् । अल्पप्रवृत्तिनिमित्तानां च तदधीनत्वादिति भावः । अन्योन्यनिरपेक्षतयैव कुतो न शब्दवृत्तिरित्यतः स्मृतेरेवेत्याह ॥ **परस्येति** ॥ लोकवेदानुसारतः इति लौकिकवैदिकव्यवहारसिद्ध्यनुसारतः । न च प्राचीनसूत्रविरोधः । प्रथमसूत्रे स्वातन्त्र्येण वाच्यत्वाभावस्याभिप्रेतत्वात् । द्वितीये परमात्मसम्बन्धोक्त्याऽत्रोक्तस्यैवाभिसंहितत्वात् । तृतीये चाऽविवेचितरूढ्यादिमात्राभ्युपगतेः । अत्र पुनस्तस्यैव विवेचनादिति ॥

## गुर्वर्थदीपिका

नारायणादिभगवन्नामधारकेषु कृतनारायणादिनाम्नां सङ्केतात् घटादिनाम्नां सङ्केतं व्यावर्त-यितुं रूढत्वेन सङ्केतितत्त्वादित्युक्तम् । अत एव सूत्रे केवलसङ्केतेनाकर्षणं गङ्गादिशब्दानां सम्बन्धमात्रेण तीरादिष्वाकर्षणं च व्यावर्तयितुं संशब्दः । एवं च परममुख्या वृत्तिर्भगवति । ततः सम्यगाकर्षणात् अवान्तरमुख्या वृत्तिर्जगति लक्षणोपचारवृत्ती अमुख्ये । सङ्केतोऽपि रूढियोगयोरभावात् रूढोपचारादावन्तर्भवति । सङ्केतोपचारादेर्बीजं तु भगवन्नामधारणं कार्यमित्यादिरूपा स्मृतिः । एवं रूढियोगव्यतिरिक्तनिमित्तान्तरेण वृत्तिरमुख्या वृत्तिः । तच्च कचित्सादृश्यं, कचित्सम्बन्धः, कचिदुक्तविधया स्मृत्यादिकमिति न वृत्तीनां त्रित्वभङ्ग इति ज्ञेयम् । नारायणत्वं घटत्वादिकं वा तत्तदसाधारणधर्मं निमित्तीकृत्य नारायणघटादिशब्दा

(गुर्वर्थदीपिका)

नामनादिकालं नारायणघटादावेव प्रयोगबाहुल्यं रूढिः । स च नारायणादिपदानां नारायणेऽस्ति । घटादीनां च घटादिष्वप्यस्ति, नामधारके तु नास्त्येव । किंतु सङ्केतमात्रेण तस्मिन्व्यवहार एवेति भावः । लौकिकवैदिकव्यवहारसिद्ध्यनुसारत इत्यत्र पूर्वपूर्वलौकिक-वैदिकव्यवहारसिद्ध्यनुसारेणोत्तरोत्तरैर्व्यवह्रियन्त इत्यर्थः । सर्गादौ तु सर्वज्ञा ब्रह्मादयो वसिष्ठादयश्च पूर्वकल्पव्यवहारानुरोधेन व्यवहरन्ति तदनुसारेणान्येऽपि व्यवहरन्ति । एवं चानादित्वान्न व्यवहारपरम्परामादायानवस्था । इदं चोपलक्षणं गुरूपदिष्टसास्नादिमत्त्वादि-व्यञ्जकव्यङ्ग्याखण्डजात्याख्यतत्तच्छब्दप्रवृत्तिनिमित्तानुसारत इत्यपि द्रष्टव्यम् । अतोऽपि न कुचोद्यावकाशः । प्रथमसूत्र इत्यादौ, 'तत्तु समन्वयात्' इति प्रथमसूत्रम्, 'आनुमानिक-मप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च' इति द्वितीयं सूत्रम् । 'ज्योतिरुप-क्रमात्तथा ह्यधीयत एके' इति तृतीयं सूत्रममिति विवेकः । 'जगति व्यवहार' इति वदता लोकव्यवहाराय जगद्वाचित्वात् जगति प्रसिद्धिः भगवति च प्रायो न लोकानां व्यवहार इति न तत्र प्रसिद्धिरिति सूत्रार्थः सूचितः ।

## भावबोधः

**अथ पुनरिति ॥** नन्वेतत्सूत्राष्टकं 'कल्पनोपदेशात्' इत्यनन्तरमेव कर्तव्यम् । तेन सूत्रेण ज्योतिरादिसर्वशब्दानां कर्मादौ रूढियोगादिमुख्यामुख्यवृत्त्युक्तौ कर्मादीनामपि मुख्यार्थत्वं स्यादित्याशङ्कापरिहारायास्य प्रवृत्तत्वात् । 'विरोधि सर्वे' इत्यनुव्याख्यानानुसारेणास्मि-न्नधिकरणे सर्वशब्दानां समन्वेतव्यत्वेन सर्वशब्दानां विष्णुपरत्वेऽन्यत्र व्यवहारविलोपप्रसङ्ग इति बाधकपरिहारस्य तत्रैव कर्तव्यत्वाच्चेति चेत्, न 'कारणत्वेन' इति सूत्रेणाकाशाद्वायुरिति आकाशवाय्वादिशब्दानां विष्णौ समन्वयोक्तावाकाशादिशब्दैर्भूतादिव्यवहाराभावप्रसङ्गः स्यादिति शङ्काया अपि एतत्सूत्राष्टकेन परिहारादेतदानन्तर्यस्य युक्तत्वात् । एवं तर्हि अध्यायान्तेऽपि एतच्छङ्काप्राप्तिसम्भवे तत्परिहाराय तत्रैव तत्कर्तव्यं स्यादिति चेत्, न, आनुमानिकमित्याद्यधिकरणचतुष्टयविषयवाक्यानां प्रधानाद्यन्यपरत्वानङ्गीकारे तारतम्यकर्मक्रम-शरीरतदन्तर्गतभूतभौतिकोत्पत्तिविलोपप्रसङ्गवदुत्तरादिकरणविषयवाक्यस्यैषा ह्येव प्रकृतिरसदे-वेदमग्र आसीदित्यादेरन्यपरत्वानङ्गीकारे बाधकाभावेनाध्यायान्ते एतच्छङ्काप्राप्तेरेवाभावादिति ज्ञातव्यम् । अत्राव्यक्तज्योतिराकाशब्दानां प्रधानकर्मभूतादौ रूढ्यादिमुख्यवृत्त्यङ्गीकारे

(भावबोधः)

विष्णोरिव प्रधानादीनामपि तच्छब्दमुख्यार्थत्वं प्राप्नोत्युत नेति चिन्ता । तदर्थं तेषु नैरपेक्ष्येण तच्छब्दवृत्तिरुत मुख्यतो विष्णुवाचकानामेव शब्दानां विष्ण्वधीनेषु तेषु समाकर्ष इति । तदर्थं परमात्मन एव सर्वशब्दमुख्यार्थत्वे किं शब्दानां जगति प्रसिद्धिर्न युज्यते उत सा युज्यते इति । मुख्यार्थत्वप्रयोजकं सर्वनियामकत्वञ्च जीवमुख्यप्राणनिष्ठम् उत विष्णुमात्रनिष्ठमिति । तथा शब्दानामन्यत्र समाकर्षे प्रयोजनं नास्त्युतास्तीति । तदर्थं मोक्षसाधनब्रह्मज्ञानोपयोगितया प्रधानकर्मादिर्मुमुक्षुज्ञेयत्वे प्रमाणं नास्त्युतास्तीति ॥ **प्रकारान्तरेणेति** ॥ कार्यकारणभाव-विरोधापेक्षया प्रकारान्तरेणेत्युक्तम् स्वत इति । अन्यानपेक्षयेत्यर्थः ॥ **अन्योन्यनिरपेक्षतयेति** ॥ परमात्मनि शब्दवृत्तेः जगन्नैरपेक्ष्यवज्जगत्यपि परमात्मनैरपेक्ष्येऽन्योन्यनिरपेक्षत्वमित्यर्थः ॥ **प्रथमसूत्र इति** ॥ प्रथमत उदाहृते 'साक्षादप्यविरोधम्' इति सूत्र इत्यर्थः । एवमेव द्वितीय इत्यादि नेयम् । तथा च परमात्माधीनतया वाच्यत्वस्यानिरासान्नाव्यवस्थापात इति भावः ॥ **अत्रोक्तस्यैवेति** ॥ न तु लक्षणयेत्यर्थः ॥ **अविवेचितेति** ॥ परमात्मनि शब्दानां विद्वद्रूढि-रनन्याधीननिरवधिकप्रवृत्तिनिमित्तकत्वरूपमहायोगो जगत्यविद्वद्रूढिर्भगवदधीनाल्पप्रवृत्ति-निमित्तकत्वरूपयोगमात्रमिति विवेकरहितरूढ्यादिनेत्यर्थः ।

## भावदीपः

अत्रानुव्याख्याने विरोधिसर्वबाहुल्यकारणस्त्रीनिषेधिनामित्यादिना एतत्पादीयाधिकरणा-पाध्युक्तत्यनुरोधेन प्राचीनैस्समाकर्षादित्यादिसूत्राष्टकस्य पूर्वशेषत्वोक्तावप्यह पृथगधिकरणान्तर-त्वेन योजनं तु पृथक् न्यायसूचकत्वं दर्शयितुमित्युक्तं चन्द्रिकायाम् । एवं हरावन्यत्र च मुख्य-वृत्तौ सिद्धायामस्य विचारस्यावसरप्राप्तिमाह ॥ **अथेति** ॥ **प्रकारान्तरेणेति** ॥ सर्वमान-विरोधकर्मक्रमादिविरोधबहुत्वसङ्ख्यादिविरोधोत्पत्तिमत्त्वादिविरोधरूपप्रागुक्तप्रकारापेक्षया मुख्यवृत्तेर्हरौ तदन्यत्र च तुल्यतापत्तिरूपान्यप्रकारेणेत्यर्थः ॥ **सर्वशब्देति** ॥ ज्योतिरधिकरण-विषयोपाधिरेवास्यापि विषय इति सूचितम् । तेनैव गतार्थमिदमित्यतः प्रकारान्तरेणेत्याद्युक्तम् । अत्र शास्त्रसङ्गत्यादिकमूह्यम् । यदा तु अत्र व्यवहारविलोपप्रसङ्गेन अन्यत्रैव प्रसिद्धानां सर्वशब्दानां परमात्मैकवाचित्वसमर्थनादित्यादिना पूर्वोत्तराधिकरणेष्विव शास्त्रादिसङ्गत्याद्युप-पादनपरग्रन्थपाठोऽप्यत्र नये क्वचित्कोशेषूपलभ्यते तदा तु व्यक्तमेव । भाष्योक्तापादकस्या-सिद्धिनिरासाय प्राक्तनं स्मारयन्व्याचष्टे ॥ **यदुक्तमिति** ॥ पूर्वनयैरित्यर्थः । ननु भाष्ये

(भावदीपः)

कथमन्यत्र व्यवहार इति चोद्यमयुक्तम् । साक्षादपीत्यादिसूत्रैरेवास्य निरस्तत्वादित्यत आह ॥ **यदपीति** ॥ विष्णुवाचकैरेव अनन्यगत्या हानाद्यर्थमन्यत्र व्यवहार इति यदुक्तं लिङ्गपादान्त्यनय इत्यर्थः ॥ **अव्यवस्थेति** ॥ वह्निपदेन जलादिव्यवहारस्याप्यापातादित्यर्थः ॥ **यदप्यत्रेति** ॥ आनुमानिकसूत्रे तत्तच्छब्दवाच्येश्वरसम्बन्धात्तत्र तत्र तच्छब्दव्यवहारो गङ्गासम्बन्धाद् गङ्गापदस्य तीर इवेति यदुक्तमत्र चोद्य समाधानमित्यर्थः ॥ **रूढ्या(द्यभ्यु)द्युपेत्येति** ॥ अन्यत्रेत्यनुषङ्गः । एतेन प्रसङ्गात्सूत्राणामपौनरुक्त्यं दर्शितम् ॥ **प्रतिज्ञेति** ॥ समन्वयसूत्रोक्तप्रतिज्ञेत्यर्थः । तत्रोक्तसप्तवृत्तीनामपि मुख्यत्वाभावात्कथमेवमित्यतो व्यनक्ति ॥ **योगरूढ्योरेवेति** ॥ योगरूढिरप्यत्रोपलक्ष्या महायोगविद्वद्रूढ्योरीशे सिद्धान्त्यभिमतयोर्व्यवच्छेदायैवकारः । एवमभिप्रायं वर्णयित्वोपसंहाररूपेण भाष्यं योजयति ॥ **अत इति** ॥ योगरूढिव्यतिरिक्तमुख्यवृत्तेरभावादित्यर्थः । मुख्यवृत्त्येति शेषोक्तिः । योगरूढिरूपयेत्यर्थः । 'स्वातन्त्र्यं तद्गतत्वं च शब्दवृत्तेर्हि कारणम् । स्वातन्त्र्यं तत्र मुख्यं स्यात्' इति तदधीनत्वसूत्रानुव्याख्यानोक्तस्वातन्त्र्यनिमित्तकमुख्यवृत्त्या शब्दानामीश्वरवाचित्वे बाधकाभावेऽपि तद्गतत्वनिमित्तकमुख्यवृत्त्येश्वरवाचित्वेऽन्यत्र व्यवहारलोपः स्यादेव । लोके योगरूढिरूपमुख्यवृत्तेरभावस्य प्राप्तत्वादिति भावः । उक्ताशङ्कां निषेधयन् तत्र परम्पराहेतुत्वेन भाष्यं व्याचष्टे ॥ **न परमात्मन इति** ॥ मुख्यतः योगादिवृत्त्या तत्र लोके ॥ **उभयोरिति** ॥ ब्रह्मतदन्ययोरित्यर्थः । तथा च तत्त्वित्यवधारणायोगो 'नामानि विश्वाभि न सन्ति लोके' 'यो देवानां नामधा एक एव' इत्याद्ययोगश्चेति भावः ॥ **स्वत इति** ॥ अनन्यापेक्षयेत्यर्थः । मुख्यवृत्त्या महायोगाविद्वद्रूढिवृत्त्येत्यर्थः ॥ **व्यवहारेति** ॥ हानादिव्यवहारेत्यर्थः ॥ **अल्पेति** ॥ अन्यत्रेत्यनुषङ्गः । भाष्योक्तिरुपलक्षणमिति भावः ॥ **प्राचीनेति** ॥ पूर्वोदाहृतैः साक्षादपीत्यादिसूत्रैर्विरोध इत्यर्थः । द्वितीये आनुमानिकसूत्रे अत्रोक्तस्य मुख्यत्वमात्रस्य । तृतीये कल्पनेति सूत्रे ॥ **अविवेचितेति** ॥ भगवति महायोगविद्वद्रूढी । अन्यत्र तु रूढ्यादिमात्रमित्येवं रूपेणेत्यर्थः । एतेन पूर्वाधिकरणेषु तत्र तत्र विष्णौ शब्दानां महायोगविद्वद्रूढिभ्यां मुख्यत्वकीर्तनं त्वत्र त्वन्यायानुसन्धानेनेति दर्शितम् । इति शब्दः समाप्तौ ॥

## अभिनवचन्द्रिका

**सर्वशब्दसमन्वयासम्भवमाशङ्क्येति** ॥ पादचतुष्टयात्मकस्मृत्यनवकाशदोषप्रसङ्ग

(अभिनवचन्द्रिका)
इत्यधिकरणस्य द्वितीयस्य प्रथमपादे निवेशवत् समन्वयाध्यायगतसर्वाधिकरणसाधारणानुपपत्ति-परिहारकाणामप्येतेषां सूत्राणां क्वचिदन्तर्भावस्यावश्यकत्वात् अत्रान्तर्भाव इति भावः ॥ **लोके लक्षणेतरवृत्त्यभावापत्तेरिति** ॥ लोकगतवृत्तीनां लक्षणात्वं स्यात्, तथा च सर्वशब्दावाच्यस्य लक्षणायुक्तेः लक्षणापि न स्यादिति भावः । अस्त्वेवं निरूढशब्दानां गतिः, अन्यत्र यौगिकानान्तु का गतिरित्यत आह **अल्पेति** ॥ **अन्योन्यनिरपेक्षतयेति** ॥ यथा लौकिकनिरपेक्षतया शब्दानां भगवति वृत्तिः, एवं भगवन्निरपेक्षतया लोके शब्दवृत्तिः किं न स्यादित्यर्थः । अप्रतीतः लोकवेदानुसारत इति पदं प्रतीकतयोपादाय व्याचष्टे– **लोकवेदेति** ॥ 'अनुसारत' इत्यनन्तरम्, 'इत्यर्थ' इति शेषः ।

ततश्चैवं भाष्ययोजना परस्य वाचकाः शब्दाः लौकिकवैदिकव्यवहारसिध्द्यनुसारतः, इतरेषु समाकृष्य परमात्मना व्यवह्रियन्त उपदिश्यन्त' इति । **न च प्राचीनसूत्रविरोध इति** ॥ 'साक्षादप्यविरोधम्' इति सूत्रे भगवद्वाचकैः शब्दैः अन्यत्र व्यवहारस्याङ्गीकृतत्वेन रूढ्यादेरनभिमतत्वात् इह रूढ्याद्यङ्गीकारे तद्विरोधः । शरीर 'रूपकविन्यस्तगृहीतेर्दर्शयति च' इत्यत्र भगवत्सम्बन्धेनाऽन्यत्र शब्दवृत्त्यङ्गीकारेण लक्षणाया अभिमतत्वात्तद्विरोधः । 'कल्पनोपदेशात्' इत्यत्र अक्षादिशब्दवदुभयत्रापि वृत्त्योः साम्याङ्गीकारेण इह पुनस्तारतम्याङ्गीकारे तद्विरोध इति न च वाच्यमित्यर्थः ।

## वाक्यार्थमुक्तावली

अथ पुनः प्रकारान्तरेण परमात्मनि सर्वशब्दसमन्वयाभावमाशङ्क्य तत्परिहारकत्वेन सूत्रमवतारयतीति बहुटीकाकोशपाठानुसारात् अनुव्याख्याने कारणस्त्रीनिषेधिनामित्येतत्पादीयाधिकरणोपाध्युक्तिदशायां 'विरोधःकार्यतद्वतोः । स्त्रीलिङ्गत्वम्' इति पूर्वपक्षन्यायमालायाम् ॥ व्यक्त्यव्यक्तिविशेषता, उत्पादनं स्वदेहाच्चेति, सिद्धान्तन्यायमालायाम् अवान्तरं कारणं च प्रकृतिरिति सङ्ग्रहभाष्ये च न्यायविवरणे चाकाशप्रकृत्यधिकरणयोर्मध्येऽस्याधिकरणस्य स्पर्शात् । तत्त्वप्रदीपादिप्राचीनटीकायाम् अधिकरणान्तरत्वज्ञापकाभावाच्च साक्षादपीत्यादीनां वैश्वानराधिकरणत्वशेषं तावदाकाशादिशब्दानां भगवत्परत्वे भूतव्यवहारलोपो गगनादेरात्मन इति श्रुत्येश्वरादुत्पत्तिश्च न सिध्येदिति शङ्कापरिहारकतया सूत्राष्टकस्य पूर्वशेषत्वमेवोचितं न त्वधिकरणान्तरत्वम् । ननु सूत्राष्टकस्य शेषत्वविवक्षायां ज्योतिरधिकरणशेषत्वमुचितं

(वाक्यार्थमुक्तावली)

कल्पनासूत्रस्योभयत्र रूढ्या शब्दवृत्तिसाम्यस्य समाकर्षेण परिहरणीयत्वेनापि सङ्गतत्वात् यत्तु टीकायामन्यत्र व्यवहारविलोपप्रसङ्गेनेत्यादिना शास्त्रादिसङ्गतिप्रदर्शनपूर्वकमधिकरणान्तरत्वस्याप्युचितत्वात् । न च तर्हि समन्वय परसर्वाधिकरणशेषतयैतानि सूत्राण्यध्यायान्ते निवेशनीयानीति वाच्यम् । सत्यमत्रैव समन्वयस्य प्रायः पारङ्गतत्वेनास्यैवाध्यायान्तत्वात् । प्रकृत्यधिकरणोक्तसमाकर्षाक्षेपकत्वात् । एतेन सर्वे व्याख्याता इत्यस्यैतदधिकरणोक्तन्यायातिदेशकत्वात् । यदुक्तं सत्तर्कदीपावल्याम् अथैवं प्रायः पारंगते महासमन्वयेऽत्र सर्वाधिकरणसाधारणाशङ्का नैकाधिकरणेऽपि विशेषतः सङ्गता । निराकरोत्यष्टभिः सूत्रैरिति ॥ वक्ष्यति च परमपुरुषे स्त्रीवाचकशब्दासम्भवान्न ततः समाकर्षाक्षेपं न वाधिकरणान्तरत्वं पूर्वशेषत्वं च विरुद्धमन्तर्भेदाधिकरणत्वाङ्गीकारणाविरोधादिति ॥ अस्मिन्नन्तर्भेदाधिकरणे कल्पनोपदेशादित्युक्तन्यायेनान्यत्र सर्वशब्दानां मुख्यत्वे सिद्धेऽपि मुख्यता किं महदादिशब्दपरस्परनिरपेक्षतयोभयत्रापि तुल्या किं वा समाकर्षेण ब्रह्मण्यधिका अन्यत्र हीनेति । तदर्थमन्यत्र हीनत्वेऽन्यत्र प्रसिद्धिविरोधः । जीवमुख्यप्राणविरोधः समाकर्षप्रयोजनाभावविरोधश्च प्राप्नोत्युत नेति (न प्राप्नोतीति) ॥ **प्रकारान्तरेणेति** ॥ कार्यकारणविरोधापेक्षया प्रकारान्तरेणेत्यर्थः ।

ननु भाष्ये कथमन्यत्र व्यवहार इति चोद्यमयुक्तं साक्षादपीत्यादिसूत्रैरेवास्य निरस्तत्वादित्यत आह ॥ **यदपीति** ॥ विष्णुवाचकैरेवानन्यगत्या हानाद्यर्थमन्यत्र व्यवहार इत्युक्तं समाधानमित्यर्थः ॥ **अव्यवस्थेति** ॥ दहनशब्देन तुहिनव्यवहारस्याप्यापातादित्यर्थः ॥ **ईश्वरेति** ॥ यच्छब्दवाच्यईश्वरो यत्रास्ति तेन शब्देन तद्व्यवहार इति व्यवस्थानिमित्तोक्त्या यत्समाधानमुक्तं तदपि न साध्वित्यर्थः ॥ **प्रतिज्ञेति** ॥ समन्वय सूत्रकृतप्रतिज्ञेत्यर्थः ॥ **योगरूढ्याख्येति** ॥ सप्तवृत्तिषु लक्षणादेरमुख्यत्वेऽपि योगरूढ्योर्मुख्यत्वायोगादिति भावः । यद्वा महायोगविद्धद्रूढ्योरीशे सिद्धांत्यभिमतयोः व्यवच्छेदः । न च कल्पनासूत्रे महायोगविद्धद्रूढ्योरीशे सिद्धांत्यभिमतयोः व्यवच्छेदः । न च कल्पनासूत्रे महायोगरूढ्योर्मुख्यत्वायोगाभावादितोऽधिकमुख्यवृत्तिसद्भावेऽनयोर्मुख्यवृत्तित्वमेव न स्यात् ॥ अन्यथा लक्षणादेरपि मुख्यवृत्तिभेदः स्यादिति तदाक्षेपेणेह पूर्वपक्षोदयात् । तत्र समुग्धतयाऽन्यत्र रूढ्युक्त्या समाधानेऽपीह तद्विवेचनाद्वा गतार्थत्वात् । न्यायविवरणे त्विहाधिकरणटीकायां च रूढ्यादिविवेचनस्यैतदधिकरणमपि हृदि निधायोपपत्तेः । न च तदधीनत्वादिति शब्दानां भगवति

(वाक्यार्थमुक्तावली)
मुख्यत्वस्यान्यत्र तदायत्तयाऽमुख्यसमर्थितत्वाद्यर्थमिदमिति वाच्यम् । तदधीनत्वादिसूत्रोक्तं स्वातन्त्र्यस्य निमित्तत्वं तत्कृतशब्दमुख्यत्वं चास्तु रूढियोगकृतं तद्गत्वापेक्षया मुख्यत्वं त्वयुक्तं रूढियोगयोरविशेषादितीह प्रत्यवस्थानात् । स्वातन्त्र्यस्याप्यन्यगतत्वचोदनाच्चेत्यलम् ॥ **स्वतो मुख्यवृत्त्येति** ॥ अन्यगतशब्दस्य समाकर्षं प्रवृत्तिनिमित्तस्यान्यपरत्वं च विना महायोग-विद्वद्रूढिलक्षणमुख्यवृत्त्येत्यर्थः ।

इदमुक्तं भवति । योगरूढ्योर्मुख्यत्वेऽपि यथा रूढेर्योगात्प्राबल्यम् एवं रूढत्वेऽपि विद्वद-विद्रूढ्योर्योगत्वेऽपि योगमहायोगयोस्तारतम्यं युक्तम् ईश्वरे रूढेर्वैदिकत्वात् असङ्केतरूपत्वाच्च । योगस्य प्रवृत्तिनिमित्तस्य निरवधिकत्वेनान्यायत्तत्वेन च प्रबलत्वादन्यत्र रूढेरविद्वत्सम्बन्धि-त्वात् । वैदिकप्रयोगस्यापि समाकर्षेण सङ्केतप्रवृत्तिनिमित्तात्पत्वपारतन्त्र्याभ्यां योगस्यापि दुर्बलत्वात् । भगवतो मुख्यवाच्यत्वेऽपि अन्यत्र व्यवहारविलोप इति । सूत्रे तत्वित्यनुवर्ततेऽत इत्यन्वेति । जगद्वाचित्वादित्यतो बुध्या विवेकेन सप्तम्यन्ततया जगतीत्यनुकृष्यते । सर्व-शब्दानामिति शेषः । न विरोध इत्यस्ति ततश्च ततः परब्रह्मणः सर्वशब्दानां जगति समा-कर्षान्न व्यवहारविरोधस्तत्र न तत्वित्यवधारणसूत्रविरोधसूत्रार्थः । ननु साक्षादपीति सूत्रेऽ-वाचकत्वेऽप्यनभिज्ञानादन्यत्र व्यवहार इति ॥ शरीररूपकेत्यन्यत्र शक्यसम्बन्धप्रदर्शनेन लक्षणाया अभिप्रेतत्वादत्रोभयत्र मुख्यत्वाङ्गीकारे विरोधः कल्पनासूत्रेण गतार्थता चेत्यत आह– **न च प्राचीनेति** ॥ अन्यत्र व्यवहारविलोपसमाधयकत्वोपाधिनैक्यमित्यभिप्रेत्याद्य द्वितीय इत्याद्युक्तिः ॥ **प्रथमसूत्र इति** ॥ साक्षादपीत्यत्र स्वातन्त्र्येण वाच्यत्वं भगवत एव अन्येषां स्वातन्त्र्येण वाच्यत्वं नास्तीत्युक्तौ तर्हि शब्दानामन्यत्र प्रयोगः किमर्थ इति शङ्कायां हानादिव्यवहारार्थमित्युक्तमित्यर्थः ॥ **द्वितीय इति** ॥ शरीररूपकेत्यत्रान्यवाचकानामन्यत्र प्रयोगेऽव्यवस्था स्यान्निमित्ताभावादित्याशङ्कायाः परमात्मसम्बन्धस्य निमित्तत्वोक्त्या यन्नामको भगवान्यत्र विशिष्टः तत्र समाकर्षेण व्यवहारे नाव्यवस्थेति अत्रोक्तस्यैवाभिसंहितत्वादित्यर्थः ॥ **तृतीये चेति** ॥ कल्पनोपदेशादित्यत्रास्मदभिसन्धिमज्ञात्वा लक्षणाबीजसम्बन्ध उक्त इति भ्रान्त्या तर्ह्ययसि दग्धशब्दस्येवान्यत्र लक्षणादिरेव स्यान्न च मुख्यवृत्तिरिति शङ्कायाः प्राबल्य-दौर्बल्याभ्यां अविवेचितरूढ्यादिमात्रोक्त्या परिहारादित्यर्थः ॥ **अत्र पुनरिति** ॥

उभयत्र रूढ्यादिसाम्येऽक्षादिशब्दवत्तुल्यवृत्तित्वमिति शङ्कायां रूढियोगापेक्षया विद्वद्रूढिमहायोगयोः प्राबल्योक्त्या विवेचनादित्यर्थः ॥

## तत्त्वसुबोधिनी

**प्रकारान्तरेणेति** । कार्यकारणभावाविरोधापेक्षया प्रकारान्तरेणेत्युक्तम् ॥ **स्वत इति** ॥ अन्यानपेक्षयेत्यर्थः । अल्पप्रवृत्तिनिमित्तस्यापि अन्यत्र सत्वात् शब्दमुख्यत्वं स्यादित्यत आह ॥ **अल्पेति** ॥ **अन्योन्यनिरपेक्षतयेति** ॥ परमात्मनि शब्दवृत्तेः जगन्नैरपेक्ष्यवत् जगत्यपि परमात्मनैरपेक्ष्ये अन्योन्यनिरपेक्षत्वमित्यर्थः । नन्वेवं साक्षादप्यीत्यादिसूत्रविरोधः । तथा वाच्यत्वाभावस्य उक्तत्वादित्याशङ्क्य निषेधति ॥ **न चेति** ॥ **प्रथमसूत्र इति** ॥ प्रथमतः उदाहृते साक्षादप्यविरोधमिति सूत्रे इत्यर्थः । तथा च परमात्माधीनतया वाच्यस्यानिरासान्ना-व्यवस्थापात इति भावः ॥ **द्वितीयेऽपीति** ॥ शरीररूपकविन्यस्तेत्यत्रेति शेषः ॥ **अत्रोक्त-स्यैवेति** ॥ ननु लक्षणाया इत्यर्थः ॥ **तृतीयेऽपीति** ॥ कल्पनोपदेशादित्यत्रेत्यर्थः ॥ **अविवेचितेति** ॥ परमात्मनि शब्दानां विद्वद्रूढिः अन्याधीननिरवधिकप्रवृत्तिनिमित्तकत्वरूप महायोगः जगति अविद्वद्रूढिर्भगवदधीनाल्पप्रवृत्तिनिमित्तकत्वरूपयोगमात्रमिति विवेकरहित-रूढ्यादिनेत्यर्थः ।

## वाक्यार्थविवरणम्

**अव्यवस्थेति** ॥ घटशब्देन पटव्यवहारः स्यादित्येवं रूपः । यथा सतीति अन्यत्र रूढ्या-द्यङ्गीकारे । कुतोऽन्यस्यापि मुख्यवाच्यत्वप्रसङ्ग इत्यत आह ॥ **योगरूढ्योरेवेति** ॥ तयोश्च परमात्मनि तदन्यत्र च साम्यादिति शेषः । उभयत्र योगरूढ्योः साम्येऽपि परमात्मनि शब्दानां मुख्यत्वमन्यत्रामुख्यत्वमिति किं न स्यादित्यत आह ॥ **न हीति** ॥ स्वातन्त्र्येणेत्यनन्तरम् अन्यस्येति शेषः । द्वितीये साक्षादित्यनन्तरमुदाहृतशरीरकेति सूत्रे । अत्रोक्तस्यैव रूढ्यादि-मुख्यवृत्त्या वाच्यत्वस्यैव । तृतीये कल्पनेति सूत्रे । तस्यैव रूढ्यादेः ।

## वाक्यार्थमञ्जरी

एवं हरावन्यत्र च मुख्यवृत्तौ सिद्धायामस्य विचारस्यावसरप्राप्तिमाह ॥ **अथ पुनः प्रकारान्तरेण परमात्मनि सर्वशब्दसमन्वयासम्भवमाशङ्क्य तत्परिहारत्वेन सूत्रमवतार-यतीति** ॥ पूर्वाधिकरणचतुष्टयेन गतार्थत्वनिरासायोक्तम् ॥ **प्रकारान्तरेणेति** ॥

(वाक्यार्थमञ्जरी)

सर्वमानविरोधकर्मक्रमादिविरोधबहुलसङ्ख्याविरोधोत्पत्तिमत्त्वादिविरोधरूपप्रागुक्तप्रकारापेक्षया मुख्यवृत्तेर्हरौ तदन्यत्र च तुल्यतापत्तिरूपान्यप्रकारेणेत्यर्थः । अत्र शास्त्रसङ्गत्यादिकमूह्यम् । यदा तु अत्र व्यवहारलोपप्रसङ्गेनान्यत्रैव प्रसिद्धानां सर्वशब्दानां परमात्मैकवाचिता-समर्थनादस्तिशास्त्रादिसङ्गतिः । समन्वयसूत्रे सर्वशब्दानां भगवदेकवाचित्वमुक्तम् । तच्चानु-पपत्तिग्रस्तत्वे असत्स्यादित्यारम्भणीयमेतत् लौकिका वैदिकाश्च शब्दाः विषयाः भगवदेक-वाचिनो न वेति सन्देहः पूर्वोक्तमेव सन्देहबीजं पूर्वपक्षमाहेति पाठे दृश्यते तदातु व्यक्तमेव । एवमग्रेऽपि शङ्कार्थः । सूत्रं व्याचष्टे सिद्धान्तयत्सूत्रमवतार्य व्याचष्ट इति पाठद्वयम् । यद्यपि तत्त्वप्रदीपे समाकर्षादित्यादिसूत्राष्टकस्य पूर्वाधिकरणशेषत्वमुक्तं युक्तं नैतत् अनुव्याख्याने विरोधिसर्वबाहुल्यकारणस्त्रीनिषेधिनामित्येतत्पादीयाधिकरणोपाध्युक्तिदशायां पृथगुपाध्यनुक्ते-स्तथा पूर्वपक्षसिद्धान्तयुक्तिग्रहदशायामपि पृथगुक्त्यनुक्तेः । भाष्ये समन्वेतव्यशब्दविशेषानुक्तेश्च यथापि पूर्वतन्त्रे हेतुदर्शनाच्चेति सूत्रस्य विरोधाधिकरणविशेषत्वेऽपि पृथङ्न्यायसूचकत्व-मिवास्यापि तदस्तीति दर्शयितुमत्र टीकायामधिकरणान्तरं कृतमिति चन्द्रिकायां पाठद्वयेऽपि सर्वशब्देत्यनेन ज्योतिरधिकरणोपाधिरेवात्राप्युपाधिरिति सूचितम् ॥ **अत्रोक्तमिति** ॥ अवाचकानेकशब्दान् ज्ञातिनो व्यवहारार्थमज्ञानिनोऽज्ञानादेवान्यत्र प्रयुंजत इत्युक्तमित्यर्थः । अव्यवस्था घटादौ पटप्रयोगलक्षणा ॥ **ईश्वर सम्बन्धादिति** ॥ वाच्येश्वरसम्बन्धतदभावाभ्यां व्यवस्थेति भावः ॥ ॐ समाकर्षात् ॐ ॥ सर्वशब्दानां ब्रह्मणः सकाशाज्जगति सम्यगाकृष्य रूढत्वेन सङ्केतितत्वात्र व्यवहारलोपो न वाचकत्वसाम्यमित्यर्थः ॥ **अन्योन्यनिरपेक्षेति** ॥ परमात्मनि शब्दवृत्तेः जगन्नैरपेक्ष्यवत् जगत्यपि परमात्मनिरपेक्षेत्यर्थः । स्वत इति अनन्या-पेक्षयेत्यर्थः । ततः ब्रह्मणः तर्हि यौगिकानां साम्यमस्त्वित्यत आह ॥ **अल्पेति** ॥ समाकृष्य व्यवहारस्य लोकवेदप्रयोजनकत्वाभावादाह ॥ **लौकिकेति** ॥ सिध्यर्थमित्यर्थः ॥ **प्रथमसूत्र इति** ॥ प्रथममुदाहृते साक्षादप्यविरोधमित्यत्रेत्यर्थः एवमेव द्वितीय इत्यादिनेयं तथा च पराधीनतया वाच्यत्वस्य तत्र निरासात्रानवस्थापात इति भावः ॥ **अत्रोक्तस्यैवेति** ॥ न तु लक्षणयेत्यर्थः ॥ **अविवेचितेति** ॥ परमात्मनि शब्दानां विद्वद्रूढिरन्याधीननिरवधिकप्रवृत्ति-निमित्तकत्वरूपमहायोगो जगत्यविद्वद्रूढिर्भगवदधीनाल्पप्रवृत्तिनिमित्तकत्वरूपयोगमात्रमिति विवेकरहितरूढ्यादिनेत्यर्थः ।

## सूत्राभाष्यम्

तर्हि कथं तेषां शब्दानां जगति प्रसिद्धिः?

**॥ ॐ जगद्वाचित्वात् ॐ ॥ १७ ॥**

जगति व्यवहारो लोकस्य । न तु परमात्मनि तथा । अतो जगति प्रसिद्धिः शब्दानाम् ॥

## सत्तर्कदीपावली

ननु यदि परमात्मवाचिनां शब्दानां समाकर्षादेव जगति व्यवहारः । न तु तद्वाचकत्वम् । तर्हि तेषां जगति प्रसिद्धिः न स्यात् । अन्यथानुपपत्त्या जगतोऽपि वाचकास्त इत्याशङ्क्याह । **तर्हीति ॥** यः सर्वस्यान्तर्नियामकः तत्तच्छब्दवद्धमुख्यार्थः । यतश्च समाकृष्टाः शब्दाः तस्य स्वव्यवहारागोचरत्वात् । तदनभिज्ञोऽयं जनः तत्तच्छब्दैर्जगद्वाचकैरपि स्वव्यवहारगोचर-जगद्वक्ति । अतस्तेषां जगति प्रसिद्धिरित्यर्थः ।

## तत्त्वप्रदीपिका

कथं तर्हि तेषां जगति वाचकत्वप्रसिद्धिरित्यत आह – **'जगद्वाचित्वात्'** ॥

## तत्त्वप्रकाशिका

यदि शब्दाः परमात्मन्येव मुख्याः अन्यत्र तु ततः समाकृष्य सङ्केतितत्वेनाऽमुख्यास्तर्हि तेषां मुख्यार्थे परमात्मन्येव प्रसिद्धिः स्यान्न त्वमुख्यार्थे जगति । अग्निशब्दस्य माणवके प्रसिद्ध्यदर्शनात् । अस्ति चासौ जगति । अतस्तदन्यथानुपपत्त्याऽन्यस्यैव मुख्यवाच्यत्वमिति भावेनाऽऽशङ्कते ॥ **तर्हीति ॥** तत्परिहारत्वेन सूत्रं पठित्वा व्याचष्टे ॥ **जगदिति ॥** न प्रसिद्ध्यन्यथानुपपत्त्याऽन्यस्यैव मुख्यवाच्यत्वं कल्प्यम् । लोकस्य जगत्येव शब्दव्यवहारेण तत्रैव तत् श्रोतॄणां व्युत्पत्तेः । परमात्मनि यथा बहुलव्यवहाराभावेन व्युत्पत्त्यभावाच्च जगति प्रसिद्धेरन्यथोपपत्तेः । अग्निर्माणवक इति व्यवहारादनवगताग्निशब्दमुख्यार्थस्य माणवकेऽग्नि-शब्दव्युत्पत्तिसम्भवादिति भावः ॥

## भावदीपः

**मुख्या इति** ।। परममुख्या इत्यर्थः ।। **अमुख्या इति** ।। अपरममुख्या इत्यर्थः । एवमग्रेऽपि ।। **अग्नीति** ।। हीनवृत्तिमात्रे दृष्टान्तः । असौ प्रसिद्धिरित्यर्थः । पूर्वशङ्कां निषेधं-स्तत्र हेतुत्वेन भाष्यं योजयति ।। **न प्रसिद्धीति** ।। भाष्यस्थव्यवहारपदस्यावृत्तिमभ्युपेत्य द्वितीयस्य वाच्यवाचकभावज्ञानरूपव्युत्पत्तिपरत्वं चाभ्युपेत्यार्थमाह ।। **लोकस्येति** ।। एतेन सूत्रमप्यावृत्य योज्यमिति दर्शितम् । तथापदस्य प्रागुक्तव्यवहारपरामर्शित्वमुपेत्य तदनूद्य व्याचष्टे ।। **परमात्मनि तथेति** ।। अत इत्यस्यार्थः पञ्चम्यन्तैर्दर्शितः ।। **अन्यथेति** ।। हरौ मुख्यत्वा-ज्ञानमूलकत्वेनेत्यर्थः । तत्र प्रसिध्यर्थकहिशब्दसूचितं दृष्टान्तमाह ।। **अग्निरिति** ।।

## अभिनवचन्द्रिका

**लोकस्य जगत्येवेति** ।। अनेन लोकस्य बहिर्मुखत्वेन जगद्वाचित्वात् जगद्व्यवहर्तृत्वात् तत्र प्रसिद्धिः, न तु विष्णौ । तत्र व्यवहाराभावादिति सूत्रयोजनोक्ता भवति ।। **माणवके अग्निशब्दव्युत्पत्तिसम्भवादिति** ।। इयांस्तु विशेषः माणवकाग्निशब्दयोर्वाच्यवाचकसम्बन्धा-भावात्तज्ज्ञानं भ्रमः । अत्र तु तद्भावात्तज्ज्ञानं प्रमेति ।

## वाक्यार्थमुक्तावली

जगति व्यवहार इति भाष्ये हिशब्दो हेतौ व्यवहारपदं चावर्तते । आद्यस्य शब्दाभि-लपनपरत्वं द्वितीयस्य वाच्यवाचकभावसम्बन्धज्ञानरूपव्युत्पत्तिलक्षणाभिज्ञापरत्वमितिभावेन व्याचष्टे– **लोकस्येति** ।। अत इत्यस्य शब्दव्यवहारेणेति तृतीयया व्युत्पत्तेरिति पञ्चम्यर्थो विवृतः । सूत्रे जगद्वाचित्वादिति त्रिरावर्तते । शब्दानामित्यस्ति । न विरोध इति च वर्तते । तत्राद्यं व्यवहारपरं द्वितीयं ज्ञानपरं तृतीयं प्रसिद्धिपरं, ततश्च जगतो लोकस्य शब्दैर्जगद्वाचि-त्वात् जगद्व्यवहर्तृत्वात् जगत्येव प्रयोजकवृद्धानां शब्दव्यवहारादिति यावत् । जगद्वाचित्वात् जगता व्युत्पाद्यस्य श्रोतृलोकस्य वृद्धव्यवहारानुसारेण शब्दानां जगद्वाचित्वज्ञानात् ततश्चायं शब्दोऽस्य वाचक इति शब्दानां जगद्वाचित्वप्रसिध्युपपत्तेः न प्रसिद्धिविरोध इत्यर्थः ।। **अयं शब्दो वाचक इति** ।। सार्वजनीनव्यवहाररूपप्रसिद्धेरयं शब्दोऽस्य वाचक इति ज्ञानलक्षण-

(वाक्यार्थमुक्तावली)

व्युत्पत्तिपूर्वत्वाद्व्युत्पत्तेश्च वृद्धव्यवहारनिबन्धनत्वाल्लौकिकव्यवहारप्राचुर्यानुसारेण प्रसिद्धिरिति भावः ॥ **अनवगतेति** ॥ अनवगतोऽग्निशब्दमुख्यार्थो येन स तथोक्तः ।

## वाक्यार्थमञ्जरी

शब्दानां बहुलव्यवहारेण जगद्वाचित्वज्ञानात्तत्र प्रसिद्धिरुपपन्नेत्यर्थः । अवाचकशब्दानां व्यवहारमात्रेण कथं जगति व्युत्पत्तिरित्यत आह ॥ **अग्निर्माणवक इति** ॥

## सूत्रभाष्यम्

**॥ ॐ जीवमुख्यप्राणलिङ्गादिति चेत्त(न्न त) द्व्याख्यातम् ॐ ॥ १८ ॥**

तदधीनत्वात्तच्छब्दवाच्यत्वमित्युक्तम् । तज्जीवमुख्यप्राणयोर्लिङ्गम् । 'अस्य यदेकां शाखां जीवो जहात्यथ (अथ यां जीवो जहाति.पा) सा सुप्यति' (छां.उ.६-११-२) 'वायुना हि लोका नेनीयन्त' इत्यादि श्रुतिभ्य इति चेन्न । उपसात्रैविध्यादिति व्याख्यातत्वात् ॥

## सत्तर्कदीपावली

ननु भवतु यदधीनमिदं सर्वं तत्रैव शब्दजातं मुख्यं तच्छब्दसमाकर्षश्चास्मिन् । ते तु पृथिव्याद्यभिमानिजीवाः तन्मुख्यप्राणो वा । तदधीनत्वश्रुतेः अस्य सर्वस्येत्याशङ्क्य परिहर-तीत्याह ॥ **जीवेत्यादिना** ॥ य आत्मानमन्तरो यमयतीत्यादिश्रुते. जीववायुशब्दौ तदन्तर्गतभगवद्विषयाविति भावः ।

## तत्त्वप्रदीपिका

जीवमुख्यप्राणलिङ्गादिति चेत्तद्व्याख्यातम् । तदधीनत्वादव्यक्तादीनामव्यक्तत्वादेः स्वभावस्याव्यक्तादिशब्दवाच्यत्वं मुख्यतस्तस्यैव विष्णोरित्युक्तम् । एवं च तत्तत्स्वातन्त्र्यं तत्तच्छब्दवाच्यत्वे लिङ्गं भवति । तल्लिङ्गं जीवमुख्यप्राणयोरस्ति । 'अथ यां जीवो जहाति सा शुष्यति', 'वायुना हि' इत्यादिश्रुतिभ्य इति चेन्न । तल्लिङ्गस्य तद्भगवदधीनत्वेन व्याख्या-तत्वात् ।

## तत्त्वप्रकाशिका

विष्णोरेव मुख्यतः शब्दार्थत्वमाक्षिप्य समादधत्सूत्रमुपन्यस्याऽऽक्षेपांशं तावद् व्याचष्टे ॥ **जीवेति** ॥ यदुक्तं विष्णोरेव सर्वशब्दमुख्यार्थत्वमिति तदयुक्तम् । सर्वपदार्थानां परमात्माधीनत्वादेव हि सर्वशब्दमुख्यार्थत्वं तस्योक्तम् । तच्च सर्वस्य तदधीनत्वाख्यं लिङ्गं जीवमुख्यप्राणयोरप्यस्ति । 'अस्य यदेकां शाखाम्' इति श्रुतौ वृक्षादीनां जीवाधीनत्वावगमात् । वायुना इति श्रुतौ च सर्वस्य मुख्यप्राणाधीनत्वावगतेः । अतस्तयोरपि मुख्यवाच्यत्वम् । न च वक्तव्यं प्रयोगे सत्येव निमित्तानुसरणं न तु निमित्तमात्रेण वाच्यत्वकल्पनमिति । निमित्तसद्भावेन व्यवहारापादनस्यैव न्यायत्वेन वाच्यत्वकल्पने बाधकाभावादिति भावः । परिहारांशं व्याचष्टे ॥ **नेति** ॥ न सर्वस्य जीवमुख्यप्राणाधीनत्वलिङ्गेन तयोर्मुख्यवाच्यत्वं कल्प्यम् । तल्लिङ्गाभिधायकश्रुतीनां तदन्तर्यामिभगवत्सम्बन्धितया व्याख्यातत्वात् । 'यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम्' इत्यादेश्च । तथा च तल्लिङ्गवतोऽन्तर्यामिण एव मुख्यवाच्यत्वं भवेदिति भावः ॥

## गुर्वर्थदीपिका

तल्लिङ्गवतोऽन्तर्यामिण इत्यत्र 'मुख्यप्राणवशे सर्वम्' इति वचनात् परमात्मदत्तावान्तरस्वातन्त्र्यं वायोरपि वर्तत इति चेत्सत्यम् । प्रयोगे सत्येव निमित्तानुसरणम्, न तु यत्र यत्र निमित्तं तत्र तत्र प्रयोग इत्यनेन दत्तोत्तरत्वात् ।

## भावबोधः

भाष्ये 'उपासा त्रैविध्यात्' इति सूत्रप्रतीकग्रहणमित्यभिप्रेत्य तदभिप्रेतयुक्तिमाह– **तदन्तर्यामिभगवत्सम्बन्धितयेति** ॥

ननु कथं तत्त्वनिर्णये स एष जीवेनात्मनानुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति इति पूर्ववाक्यस्थस्य जीवोपेतं वाव किलेदं म्रियत इत्युत्तरवाक्यस्थजीवशब्दस्य संसारिपरत्वे न हि चेतनादन्यस्य मोदभोगादिकं युज्यत इत्यादिना बाधकमुक्त्वा परमात्मपरत्वस्योपपादितत्वेन तन्मध्यपतितस्य यदेकां शाखां जीवो जहातीति वाक्यगतजीवशब्दस्यापि संसारिमात्रपरत्वेन शङ्का अन्तर्यामिपरत्वेन परिहारश्चेति चेत्, न तद्वाक्यगतजीवशब्दस्य संसारिपरत्वे

(भावबोधः)

बाधकसद्भाववदेतद्वाक्यगतजीवशब्दस्य संसारिपरत्वे बाधकाऽभावात् संसारिपरत्वशङ्कायाः संसारितदन्तर्याम्युभयपरत्वेन परिहारस्य चोपपत्तेः । वक्ष्यति च भाष्ये यत्रान्यवाचकत्वेऽप्य-विरोधस्तत्रान्यमुख्यतयोच्यत इति । जीवमुख्यप्राणयोरपि स्वावरस्वामित्वसत्त्वेन शब्द-मुख्यार्थत्वापत्तिरित्यत आह– **यद्यद्विभूतिमदिति** ॥ तथा च तत्स्वामित्वमपि तत्सन्निहित-भगवन्निष्ठमेवेति भावः ।

## भावदीपः

आक्षेपस्य फलं दर्शयन् भाष्यं व्याचष्टे ॥ **यदुक्तमिति** ॥ **परमात्माधीनत्वादेवेति** ॥ यद्यपि तद्गतत्वादपि मुख्यार्थत्वमुक्तम् । तथापि 'स्वातन्त्र्यं तद्गतत्वं च शब्दवृत्तेर्हि कारणम् । स्वातन्त्र्यं तत्र मुख्यं स्यात्' इत्यनुभाष्योक्तमुख्यत्वमुपेत्याऽवधारणप्रयोगः । तच्चेत्यादि व्याचष्टे ॥ **तच्चेत्यादिना** ॥ लिङ्गं प्रवृत्तिनिमित्तमित्यर्थः । सर्वस्य तदधीनत्वाख्यमित्यत्र प्रयुक्तसर्वपदं जीवे सम्भावितसर्वपरम् । वायौ त्वसङ्कुचितसर्वपरमिति भावेन व्यनक्ति ॥ **वृक्षादीनामिति** ॥ **सर्वस्येति च** ॥ **अत इति** ॥ स्वातन्त्र्यरूपनिमित्तसद्भावादित्यर्थः । ननु भृत्यबन्धादिकं राज्ञि राज्ञो बन्धादियोग्यतः । कारणं संशयस्य स्यादिति नैव प्रयुज्यते । अमङ्गलत्वाच्छब्दानां राज्ञो योगादमङ्गले । अप्रियत्वात्तु शब्दस्य स्यात्प्रयोगनिवर्तनमित्यनु-भाष्योक्तदिशा सत्यपि निमित्ते राज्ञि निगडबद्धादिपदावाच्यत्वमिव जीवादावप्यस्तु सर्वशब्द-मुख्यावाच्यत्वमिति भावेनोक्तहेतोरप्रयोजकत्वमाशङ्क्य लिङ्गपदभावोक्त्या निराह ॥ **न च वक्तव्यमिति** ॥ **न त्विति** ॥ बद्धादिपदानां राज्ञि व्यभिचारादिति भावः ॥ **न्यायत्वेनेति** ॥ मुख्यप्रयोगे तु निमित्तमेव सामग्रीत्यानुमानिकनयसुधोक्त्या तस्य व्यवहारेषु पुष्कलकारण-त्वादिति भावः ॥ **बाधकेति** ॥ उत्सर्गतः प्राप्तस्य बाधकैकापोद्यत्वादिह चामङ्गलत्वादिरूपस्य वाच्यत्वकल्पनबाधकस्याभावात् स्यादेव वाच्यत्वं तदधीनत्वहेतुः प्रयोजक इत्यर्थः । प्रयोगे सतीति न्यायस्तु अमुख्यविषयः । तथैवानुमानिकनयसुधोक्तेरिति भावः । यद्यपि जीवशब्द-स्यानुमानिकसूत्रे श्रौतस्मार्तप्रयोगेण प्राणधारकत्वरूपप्रवृत्तिनिमित्तेन च हरौ मुख्यत्वमुक्तम् । वायुशब्दस्यान्तर्नयन्यायेन वैष्णवत्वं सिद्धम् । तथापि शरीररूपकविन्यस्तगृहीतेरिति न्यायेन जीवो जहातीत्याद्युदाहृतश्रुतिष्वन्यपरत्वस्यापि सत्त्वेनेयमाशङ्का युक्ता । अत एव तयोर-पीत्युक्तिः । अत एव च द्युभ्वादिनये वायुसमाख्यातत्वेनेयं श्रुतिरुदाहृतेति भावः । वक्ष्यति च

(भावदीपः)

द्वितीये भाष्यकारोऽन्यस्यापि वाच्यत्वादसतः प्राप्तिरिति लिङ्गेनैव नञोऽन्वयभ्रान्तिनिरासाय लिङ्गसाध्येनाऽन्वयमाह ॥ **न सर्वस्येति** ॥ उपासात्रैविध्यादिति भाष्योपात्तसूत्रखण्डाभिमत-युक्तिमाह ॥ **तल्लिङ्गेत** ॥ तथा व्याख्यानं निर्बीजमित्यत आह ॥ **यद्यदिति** ॥ गीतायां दशमे यद्यपि भाष्ये यद्यद्विभूतिमदिति विस्तारः विष्ण्वादीनि स्वरूपाण्येवेत्युक्त्या यद्यद्विभूत्यादि-मत्सत्त्वं विष्णुकपिलरामकृष्णादिकं तत्तन्मम तेजोंऽशसम्भवं प्रादुर्भावात्मकमित्यर्थः उक्तः । तथापि तत्रैवान्यानि तु तेजोयुक्तानीत्यप्युक्त्या मम तेजोंऽशेन संयुक्तं भवतीति गीता-तात्पर्योक्त्या चार्थान्तरमुपेत्यात्रैतदुक्तिः ॥

## अभिनवचन्द्रिका

**न च वक्तव्यमिति** ॥ तद्यथा धूमसाधनाय न वह्निमात्रानुसरणम्, अपि तु आर्द्रेन्धन-संयोगविशिष्टवन्ह्यनुसरणमेव । इहापि प्रयोगे सत्येव वाच्यत्वसाधनाय निमित्तानुसरणं न तु निमित्तमात्रेण वाच्यत्वकल्पनं युक्तमिति न वक्तव्यमित्यर्थः ।

## वाक्यार्थमुक्तावली

**परमात्माधीनत्वादेवेति** ॥ यद्यपि तद्गतत्वादपि मुख्यार्थत्वमुक्तं तथापि स्वातन्त्र्यस्य मुख्यत्वादवधारणम् । तदुक्तं स्वातन्त्र्यं तद्गतत्वं च शब्दवृत्तेर्हि कारणम् ।

स्वातन्त्र्यं तत्र मुख्यं स्यादिति ॥

**तदधीनत्वाख्यं लिङ्गमिति** ॥ प्रवृत्तिनिमित्तमित्यर्थः । अनुमापकं वा । ननु सर्वस्य कथं जीवाधीनत्वमित्यतः जीवे स्वप्रयुक्तं सर्वपदं सङ्कोचेन व्याचष्टे **वृक्षादीनामिति** ॥

ननु सत्यपि निमित्ते राज्ञो बद्धादिशब्दवाच्यत्वादर्शनात् न निमित्तमात्रेण वाच्यत्वं कल्पयितुमुक्तम् अप्रयोजकत्वाद्धेतोरित्याशङ्कां निषेधति ॥ **न च वक्तव्यमिति** ॥ **निमित्त-सद्भाव इति** ॥ निमित्तसद्भावे व्यवहारापादनमन्याय्यम् । सति पुष्कलकारणे कार्यानुदयात् । यथोक्तमानुमानिकनयसुधायां प्रयोगे तु निमित्तमेव सामग्रीति । भृत्यगतबन्धस्य राजाधीनत्वेऽपि राज्ञि बहुशब्दप्रयोगस्तु भृत्यबन्धादिका राज्ञि राज्ञो बन्धादियोग्यतः ।

(वाक्यार्थमुक्तावली)

कारणं संशयस्य स्यादितिनैव प्रयुज्यते ।
अमङ्गलत्वाच्छब्दस्य राज्ञो योगादमङ्गले ।

अप्रियत्वात्तु शब्दस्य स्यात्प्रयोगनिवर्तनम् । इत्यनुव्याख्यानोक्तन्यायेन प्रतिबन्ध-निबन्धनः । यदेवं निमित्ते सति व्यवहार एवापादयितुं शक्यते उत्सर्गतः प्राप्तस्य बाधकैका-पेक्षत्वात् । प्रकृते च बाधकाभावात् तदा निमित्ते सति सुतरां वाच्यत्वकल्पनं न्याय्यम् । अपवादप्रसक्तेरेवाभावादित्यर्थः । राज्यपि निमित्तसद्भावेन प्रतिबन्धवशाद्व्यवहाराभावेऽप्यस्त्येव वद्धादिशब्दशक्तिरिति भावः । उपासा त्रैविध्यादिति प्रतीकग्रहणमितिभावेन तदभिप्रेतयुक्तिमाह तदन्तर्यामीति । जीवमुख्यप्राणयोरपि स्वावरस्वामित्वसत्वेन शब्दमुख्यार्थत्वोपपत्तिरित्यत आह– **यद्यदिति** ॥ तेजोंशसम्भवमित्यस्य मम तेजोंशेन युक्तं भवतीति गीताभाष्यानुसारेण तात्पर्योक्त्या अनागततत्स्वामित्वमपि तत्सन्निहितभगवन्निष्ठमेवेति भावः । यद्यपि विष्णु-तत्त्वनिर्णये अनेन जीवेनानुप्रभूत इति पूर्ववाक्यस्थस्य जीवापेतं वावकिलेदं म्रियत इत्युत्तर-वाक्यस्थस्य जीवशब्दस्य न हि चेतनादन्यस्य मोदभोगादिकं युज्यत इति जीवपरत्वे बाधक-मुक्त्वा परमात्ममात्रपरत्वमुक्तम् अतस्तन्मध्यपतितं, सौम्य यदेका(शाखा)मिति वाक्यं नेश्वर-परमेव युक्तं तथाप्यस्य यदेकां शाखां जीवो जहातीति मध्यवाक्ये जीवग्रहणे बाधकाभावात् । यत्रान्यवाचकत्वेऽप्यविरोध इत्युक्तन्यायेनान्यपरत्वमप्यस्तीति भावेन शङ्कापरिहारौ युक्तौ । न च भगवद्वाक्यं सन्दर्श एव बाधकमिति वाच्यम् । भगवत्परत्वस्याप्यनिवारणम् । अत एवान्ययो-रपीत्युक्तिरिति ज्ञेयम् । सूत्रे तदधीनत्वादर्थवदिति नेति च मण्डूकप्लुत्याऽनुवर्तते । शब्दजातं सर्वस्य तदधीनत्वात्तत्रार्थवदिति । न युक्तं मुख्यतो वाच्यत्वं यल्लिङ्गं तदधीनत्वरूपनिमित्तं तस्य जीवे कचिन्मुख्यप्राणे सर्वत्र श्रवणात् । तथा च जीवमुख्यप्राणसम्बन्धितया श्रुतिलिङ्गात्तयोरपि शब्दजातमर्थवदिति चेन्न । यतस्तल्लिङ्गं व्याख्यातमन्तर्यामिसम्बन्धितयेति सूत्रार्थः ॥

## तत्त्वसुबोधिनी

**निमित्तेति** ॥ तथा च व्यवहारो न कल्प्यते किं त्वापाद्यत एवेति न दोषः । भाष्ये उपासा त्रैविध्यादिति सूत्रप्रतीकग्रहणमात्रमित्यभिप्रेत्य तदभिप्रेतयुक्तिमाह ॥ **तदन्तर्यामीति** ॥ ननु तत्त्वनिर्णये स एष जीवेनात्मना प्रभूतः पेपीयमानो मोदमानः तिष्ठतीति पूर्ववाक्यस्थस्य जीवापेतं वाव किलेदं म्रियते इत्युत्तरवाक्यस्थस्य च जीवशब्दस्य संसारिपरत्वेन न हि

(तत्त्वप्रबोधिनी)
चेतनादन्यस्य मोदभोगादिकं युज्यते इत्यादिना बाधकमुक्त्वा परमात्ममात्रपरत्वस्य उपपादितत्वेन तन्मध्यपतितस्य यदेकां शाखां जीवो जहातीति वाक्यगतजीवशब्दस्यापि परमात्ममात्रपरत्वात् कथं संसारिमात्रपरत्वेन शङ्का । अन्तर्यामित्वेन परिहारश्चेति चेत् । न । तद्वाक्यद्वयगतजीवशब्दस्य संसारिपरत्वे बाधकसद्भाववत् एतद्वाक्यगतजीवशब्दसंसारिपरत्वे बाधकाभावेन संसारिपरत्वेन शङ्कायाः संसारितदन्तर्याम्युभयपरत्वेन परिहारस्य चोपपत्तेः । वक्ष्यति च भाष्ये । यत्र न वाचकत्वेऽप्यविरोधः तत्रान्यदमुख्यतया उच्यत इति जीवमुख्यप्राणयोः अपि स्वावरस्वामित्वसत्वेन शब्दमुख्यार्थत्वापत्तिरित्यत आह ॥ **यद्यद्विभूतिमदिति** ॥ तथा च तत्स्वामित्वमपि तत्सन्निहितभगवन्निष्टमेवेति भावः ।

## वाक्यार्थविवरणम्

**प्रयोग इति** ॥ नामानि सर्वाणीति भगवति वर्तते प्रयोगो न जीवादावित्यर्थः । व्यवहारापादनस्यैव न्याय्यत्वेनेति । प्रयोगे सत्येव निमित्तानुसरणं निमित्तमस्तीति प्रयोगो व्यवहाररूपो न भवति । अतिसहनवत्युष्ट्रे सिंहशब्दव्यवहारभावादित्येवं निमित्तसद्भावे न व्यवहारः स्यादिति व्यवहारापादनमेवान्याय्यं न तु वाच्यत्वकल्पनमित्यर्थः । ननु तर्हि उष्ट्रेऽपि निमित्तसद्भावात् सिंहशब्दवाच्यत्वं कल्प्येतेति चेन्न । अनवगतसिंहशब्दमुख्यार्थस्य उष्ट्रे सिंहशब्दव्युत्पत्तिसम्भवादिति पूर्वोक्तरीत्या अनुसन्धेयम् । न मुख्यतो वाचकत्वमिति । कल्पनोपदेशादित्यत्र उक्तरीत्या रूढ्यादिरूपमुख्यवृत्त्या वाचकत्वं न युक्तमित्यर्थः ।

## वाक्यार्थमञ्जरी

सर्वस्य भगवदधीनत्वाच्छब्दजातं तत्रार्थवदिति न युक्तम् । अस्य यदेकामिति वायुनैवेति च सर्वस्य जीवमुख्यप्राणाधीनत्वस्यापि श्रुतत्वेन तयोरपि मुख्यवाच्यत्वप्रसङ्गादिति चेन्न । यतस्तल्लिङ्गमन्तर्यामिसम्बन्धितया व्याख्यातमित्यर्थः । तच्चेत्यनुवादः । अस्य महतो वृक्षस्य नेनीयन्ते पुनङः पुनः भृशं वा नियम्यन्ते ॥ **बाधकाभावादिति** ॥ व्यवहाराभावेऽपि भेकस्य पङ्कजपदवाच्यत्वादिति भावः । जीवमुख्यप्राणयोरपि स्वावरस्वामित्वसत्वेन शब्दमुख्यार्थत्वापत्तिरित्यत आह ॥ **यद्यद्विभूतिमदिति** ॥ श्रीमत् कान्तिम् तेजसोंऽशेन सम्भवः सम्बन्धो यस्य तत्तथोक्तम् । तथा च तत्स्वामित्वमपि तत्सन्निहितभगवन्निष्ठमेवेति भावः ।

## सूत्रभाष्यम्

**॥ ॐ अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॐ ॥ १९ ॥**

परमात्मज्ञानार्थं कर्मादिकमपि वदतीति जैमिनिः । 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति । तस्मै स होवाच द्वे विद्ये वेदितव्ये' (मु.उ.१-१३-४) 'कथं नु भगवः स आदेशो भवतीति । यथा सौम्यैकेन मृत्पिण्डेन' (छां.उ.६-१-३-४) इत्यादि-प्रश्नव्याख्यानाभ्याम् । एवमपि चैके पठन्ति 'यस्तन्न वेद किमृचा करिष्यति' इति (ऋ.सं. १-१६४-३९) ॥

## सत्तर्कदीपावली

ननु जीवमोक्षार्थमेव सर्ववेदप्रवृत्तेः तस्य च तदुक्तानन्तगुणवद्भगवत्सर्वोत्कर्षज्ञानादेव सिद्धेः किमर्थः तद्वाचकवेदशब्दसमाकर्षः कर्मादिष्वित्याशङ्कां परिहरतीत्याह **॥ अन्येत्यादिना ॥** न वयं फलान्तराय मुक्तये वा ज्योतिष्टोमादिकर्मज्ञानमादिशब्दात् अजशङ्करादि-लोकेशज्ञानं च मत्वा भगवद्वाचकवेदशब्दसमाकर्षं ब्रूमो येनोक्तदोषः स्यात् । किं तु परमार्थज्ञानार्थं कुतः विज्ञायमानमेव सर्वमिदं कर्मादिकं यस्मिन् विज्ञाते विज्ञातं भवति अन्यथा न स क इति । महाशालपदोक्तसर्वकर्मप्रवीणशौनकप्रश्नोत्तरत्वेन ऋगादिसर्ववेदप्रतिपाद्य-कर्मादिकं परमतः परमाक्षरे नारायणे विज्ञात एव ज्ञातं भवति । अत एव अपरमपि इदं वेदितव्यमित्यङ्गीकारो व्याख्यानात् । अनेन यदविज्ञाने विज्ञातमप्यविज्ञातं भवति । फलाभावादिति भावेनोक्तं यद्विज्ञानेऽविज्ञातमपि विज्ञातं भवति । तत्फलावाप्तेरिति भावेनाह **॥ कथं न्विति ॥** सर्वान्वेदानधीतवानेव केवलं न तु तन्मुख्योद्देश्यं सकलकल्याणगुणकरं पृष्टवान्प्रायः । यतः स्तब्धोऽसि । यस्मिन् श्रुते मते विज्ञाते अन्यदश्रुतमतमविज्ञातमपि तदधीनत्वेन श्रुतं मतं विज्ञातम् अतिनीचत्वेन विवज्ञायमानं त्वदादिकमित्युक्तः श्वेतकेतुः पितरं पृच्छति । कर्मादिष्वपि वेदैकदेशैरुच्यमानेष्वासमन्तात्स एव सर्ववेदादेशो भवतीति कथं केन प्रकारेण जानीयामिति । तदुत्तरत्वेन यथा घटादिव्युत्पन्नमृदादिशब्दैः पुम्भिः दृश्यमान-मृत्पिण्डादौ मृदादिशब्दार्थत्वेन विज्ञाते पुनर्घटादिसर्वमृण्मयादिमृत्पिण्डादिसदृशत्वेनाविशेषेण ज्ञातं स्यात् । एवं जडजीवव्युत्पन्नसच्चिदादिशब्दैः पुम्भिः ब्रह्मणि सच्चिदादिशब्दार्थत्वेन ज्ञाते पुनर्जडजीवात्मकं जगद् ब्रह्मात्यल्पसदृशत्वेन विशेषेण ज्ञायते । नत्वतिसदृशत्वेन । यतो यथा विज्ञाते तथा विशेषैः पुम्भिस्तदन्याधिकम् । तयोर्ज्ञातवद्भिः । विज्ञायमानसुवर्णामरभाषयोः

(सत्तर्कदीपावली)

तत्प्रधानत्वेन विज्ञायमानयोः सर्वं लोहमयं प्राकृतवाङ्मयं वाऽप्रधानत्वेन विशेषेण ज्ञातं स्यात् । एवं विज्ञातजडजीवैः पुम्भिः तेषु विचित्रानेकगुणान् ज्ञातवद्भिः विज्ञायमाने स्वतन्त्रशक्ति-सकलकल्याणगुणाकरे ब्रह्मण्यतिप्रधानत्वेन विज्ञाते पुनरिदं जीवजडात्मकं विश्वं विज्ञातमविज्ञातं च केवलं तदायत्तत्वेन विशेषेण ज्ञायते । एवमुक्तप्रकारेण सोम्य मासोर्ह लोकतो वेदतश्च विज्ञायमानस्यैव सर्वस्यापि तज्ज्ञानार्थत्वात् वेदैरादिश्यत इत्यादेशो भवतीत्यर्थः । एवं सर्वविज्ञानस्य एकविज्ञानहेतुत्वेऽपि एकविज्ञानेन सर्वं विशेषतो विज्ञायन्त इति अविरोधश्च । न केवलमेतत्प्रश्नव्याख्यानार्थिकार्थोऽयं किन्तु साक्षादेव एके पठन्तीत्याह ॥ **अपि चेति** ॥ ब्रह्मयज्ञफलं महदुक्त्वोच्यते ऋच इत्यादि । परमे व्योम्नि अव्याकृताकाशे । यद्वा परमे परेण नीयमाने शोभने च व्योम्नि विविधविद्याश्रये प्रकृतौ ब्रह्माधिहृदये च यत्परमं देशतः कालतो गुणतः सर्वतः परमत्वेन नीयमानं शोभनं च महाप्रलयेऽप्यक्षयकल्याणगुणशक्तिक्रियादेहम् । 'अक्षयो भगवान्विष्णुः लक्ष्म्यावासो लये स्थितः । मुक्तैः सदा चिन्त्यमानो ब्रह्माद्यैः तारतम्यगैः' इत्यादेः ततः उपलक्षणमेतत् । यद्दचोऽधीत इत्यादिप्रकृताः चत्वारो वेदाः ब्राह्मणेतिहासादिसहिताश्च तद्विषयाः । नन्वेषामपि देवा न तत्सूक्तप्रतिपाद्यत्वात् कथमक्षरैक-विषया सर्ववेदा इत्यत उच्यते । यस्मिन्निति यस्मिन्नन्येभ्य आधिक्येन निषण्णाः सर्वे देवाः अतस्ते ईषत् श्रूयन्ते । न तु तन्निषण्णमात्रम् । यतस्तद्विष्ण्वाख्यमक्षरदेहमिदमतो गुणतः सर्वाभ्यधिकमित्येवमपि न वेद किं त्वितरामरसाधारणं मन्यते । स तैः युक्तं कर्म कुर्वन्नपि न त्रैविध्यो भवतीति किं त्रिवेदादिभिरधिगतैः ब्रह्मयज्ञादिरूपेणाधीतैश्च करिष्यति । न किमपि वेदोक्तफलं लभते । यस्त्वक्षरः विष्ण्वाख्यं स्वत एव अक्षरदेहमिदमतः सर्वोत्तममिति जानन्नपि सर्ववेदार्थभूतं तन्न वेद स तु त्रैविध्यो भवति । तथापि क्षयिष्णुफलत्वेन पुनः कर्तृत्वापरिहारात् ब्रह्मयज्ञादिरूपऋगध्ययनादिकर्मभिरक्षराख्यभगवदन्यार्थज्ञानेन किं करिष्यतीत्युच्यते । ये तु तेन ज्ञानेन तैः कर्मभिश्च इत्थमुक्तप्रकारेण तदक्षरं मनआद्यक्षरेषु रममाणं प्रलयेऽप्यक्षयशक्तिक्रियादेहं सर्ववेदार्थभूतं तां न वेद स त्रैविद्यो भवति । तथापि इमे प्रकृत देवादयः कर्तृत्वं हित्वा सङ्कल्पमात्रसिद्धये यथेष्टभोगाय अक्षराख्यहरिणा सहोपविशन्ति सम्यगुपविशन्तीत्यर्थः ।

## तत्त्वप्रदीपिका

परमात्मज्ञानार्थमेव कर्मसृष्ट्यादिकमपि वदति श्रुतिरिति जैमिनिर्वक्ति । यस्य ज्ञाना-दन्यज्ज्ञातं भवति तत्किमिति शौनकप्रश्नार्थ एकविज्ञानस्य प्राधान्यावगमात्तदर्थमन्यदुच्यत इति गम्यते । अङ्गिरसो व्याख्यानेऽपि 'द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा

(तत्त्वप्रदीपिका)

चैवापरा च' इत्यादौ ब्रह्मज्ञानस्य परविद्यात्वोक्तेस्तस्य च परत्वोपपादनार्थमन्यदुच्यत इति गम्यते । 'कथं नु भगवः स आदेशो भवति' इति श्वेतकेतुप्रश्नेऽपि 'उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति' इति प्राधान्येनोक्तआदेशः परामृश्यते । आदिश्यत इत्यादेशः परमात्मा । 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इत्यादावुद्दालकव्याख्यानेऽपि सादृश्यात्प्राधान्याच्चैकविज्ञानेन सर्वविज्ञानं निर्दिश्य 'एवं सोम्य स आदेशः' इति तस्यैव सर्वतः प्राधान्यावधारणात्तद्बोधनार्थमन्यदुपन्यस्यत इति गम्यते। न केवलं प्रश्नव्याख्यानाभ्यां लिङ्गाभ्यामेतदवगम्यते । एवं मुख्यतोऽप्येके शाखिनः पठन्ति 'यस्तन्न वेद किमृचा करिष्यति' इति । यस्तद्विष्ण्वाख्यमक्षरं न वेद स ऋचाऽधीतयाऽध्यापितयाऽधिगमितार्थयाऽनुष्ठितार्थयाऽनुष्ठापितार्थया वा किं करिष्यति । तद्वेदनेनैव हि तत्प्रयोजनम्, उत्कृष्टफलत्वादित्यर्थः । चकारादेतदुपसंहर्तव्यं, एतदर्थं सृष्ट्यादिकमप्यधीयते 'सप्तार्द्धगर्भा' इत्यादीति ॥

## तत्त्वप्रकाशिका

यदुक्तं सर्वशब्दा अन्यत्र समाकृष्य व्यवह्रियन्त इति न तद्युक्तम् । वैदिकानां शब्दानां कर्मादौ समाकर्षे प्रयोजनाभावात् । न च कर्मसिद्धिरेव प्रयोजनम् । भगवज्ज्ञानमात्रेणैव पुरुषार्थसिद्धौ तद्वैयर्थ्यात् । वेदानां च काम्यफलार्थमप्रवृत्तेः । अतो वैदिकानां शब्दानामन्यत्र समाकर्षे प्रयोजनाभावान्मुख्यत एवाऽन्यवाचकत्वमित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **अन्यार्थमिति** ॥ समाकर्षेण वेदः कर्मदेवतादिकमपि वदतीति युक्तमेव । कर्मादिज्ञानस्यापि परमात्मज्ञानार्थत्वादिति जैमिनिराचार्यो मन्यत इत्यर्थः । अन्यज्ञानस्य परमात्मज्ञानार्थत्वं कुत इत्यत आह ॥ **कस्मिन्निति** ॥ सर्वमिदं कर्मादिकं **कस्मिन् विज्ञाते** विज्ञातं भवति । विज्ञातस्याप्यस्य फलं कस्मिन् ज्ञाते भवति । एतज्ज्ञानमात्रस्याऽफलत्वादिति शौनकप्रश्ने सर्वमपरविद्यया विज्ञातं भवति विज्ञातं च परविद्याविषयपरमात्मज्ञानेन सफलं भवत्यतो द्वे विद्ये वेदितव्ये इत्यङ्गिरसो व्याख्यानात् । तथा यस्मिन्परमात्मनि ज्ञाते सर्वं कर्मादिकं ज्ञातमपि सफलं स्यात्तद्विषय उपदेशः कथं स्यात्, तं प्रकारं कथमहं जानीयामिति श्वेतकेतुप्रश्ने, यथैकेन मृत्पिण्डेन ज्ञातेन ज्ञातमपि घटादिकं ज्ञातफलं भवति विशेषज्ञानात् । एवं परमात्मनि ज्ञाते सर्वं ज्ञातफलं भवतीत्युद्दालकव्याख्यानात्, अन्यज्ञानस्य परमात्मज्ञानार्थत्वं ज्ञायत इति भावः । अपि च न केवलमर्थादेवमन्यज्ञानस्य परमात्मज्ञानार्थत्वसिद्धिः किं तु स्पष्टं चैवमेके शाखिनः पठन्तीत्याह ॥ **एवमिति** ॥ तदक्षरं यो न वेद स कर्मादिविषयर्चा किं करिष्यति । यतः सर्वा

(तत्त्वप्रकाशिका)
**ऋचः परमे व्याप्ते अक्षरे तज्ज्ञानार्थमेव कर्मादिकं वदन्ति । तस्यैव सर्वदेवाधारत्वात् । ये पुनस्तदक्षरं विदुस्ते सम्यगासत इत्यर्थः ॥ १९ ॥**

## गुर्वर्थदीपिका

यदुक्तमित्यारभ्य मुख्यत एवान्यवाचकत्वमित्यन्तपूर्वपक्षवाक्यानामयमभिसन्धिः । लौकिका हि न वाक्यं भगवतः समाकृष्य शब्दानां व्यवहर्तारः, तैरन्यत्रैव मुख्यतो व्यवहारात् । भगवद्गोष्ठीविधुरत्वाच्च । किन्तु भगवदेकनिष्ठा ब्रह्माद्या एव ततः शब्दान्समाकृष्य व्यवहरन्ति । अन्ये तु तद्धृदयमजानानाः वृद्धव्यवहारादिना घटादिशब्दानां तत्र तत्र वाचकतामेव कल्पयन्ति । ब्रह्मादीनां च भगवदपरोक्षज्ञानादेव सिद्धसकलपुरुषार्थानां भगवतोऽन्यत्र परमविरक्तानां 'तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तते' इत्यादिवाक्यहृदयज्ञानां काम्यादिकर्मसु भगवद्वाचकशब्दापकर्षे कारणाभावात् । अतो न कर्मवाचकशब्दानां समाकर्षमूलत्वम् । किन्तु मुख्यत एव तच्छब्द-वाच्यत्वमिति । 'द्वे विद्ये वेदितव्ये' इति कस्याश्चिच्छाखायाम् उक्तपरापरविद्ययोः परविद्यायाः अङ्गित्वम् उत्तमार्थकपरशब्देनैव सूचितम् । अपरविद्यायाश्च अङ्गताऽनुत्तमत्वार्थकापरशब्देनैव सूचिता । सहोक्तावपि प्रधानाप्रधानयोः साम्यायोगादिति विवेको ज्ञेयः । विशेषज्ञाना-दित्यादिनाऽज्ञातमूलवृक्षज्ञानवत् मृदमविज्ञाय केवलं घटशरावादिज्ञानस्य किंमूलकमिदमिति प्रश्ने उत्तरानुपयोगित्वाद्वैफल्यम् । मृज्ज्ञाने तु मूलस्यापि ज्ञातत्वेन मृदुपादानकमिति विशेष-ज्ञानस्यापि सम्भवात् साफल्यम् । एवं शुष्ककर्म कृत्वा भगवदज्ञाने कर्मणां भगवत्कर्तृकत्व-रूपविशेषज्ञानात् शुष्ककर्मादिज्ञानस्य वैफल्यम् । भगवन्महिमज्ञानानुपयोगित्वात् । श्रौतमिदं कर्म भगवत्कर्तृकमिति ज्ञाने तु भगवन्महिम्नो विज्ञानात् कर्मणोऽपि मोक्षोपयोगित्वात् कर्मकाण्डस्यापि भगवज्ज्ञानमेवोद्देश्यम् । अतो भगवतः कर्मादिकर्तृत्वमहिमज्ञापनेन कर्मणोऽपि भगवत्प्रीतिजनकत्वात् कर्मस्वपि स्वयोग्यतत्तच्छब्दापकर्षणम् । किं बहुना जगदीश्वरत्वज्ञापनाय सर्वस्मिन्नपि जगति तत्तद्योग्यशब्दानपकृष्य ब्रह्माद्या एव व्यवहरन्तीति सूचितम् ।

## भावबोधः

'ऋचो अक्षरे परमे व्योमन्, यस्मिन् देवा अधिविश्वे निषेदुः यस्तन्न वेद, किमृचा करिष्यति, य इत्तद्विदुस्त इमे समासते' इति समग्रामृचं प्रकृताभिप्रायेण व्याचष्टे तदक्षर-

(भावबोधः)

मित्यादिना ॥ अक्षर इति विषयेण विषयज्ञानोपलक्षणं तादर्थ्ये च सप्तमीत्यभिप्रेत्योक्तं **तज्ज्ञानार्थमिति** ॥

## भावदीपः

लौकिकानामन्यत्र व्यवहारार्थं समाकर्षमुपेत्याह ॥ **वैदिकानामिति** ॥ मुमुक्षुं प्रतीतिशेषः । ननु तमेवं विद्वानमृत इत्यादेः ज्ञानान्मोक्षसिद्धावपि पशुपुत्रस्वर्गादिफलप्राप्त्यर्थं कर्मसिद्धिर्न स्यादित्यत आह ॥ **वेदानां चेति** ॥ मुमुक्षुं प्रतीति शेषः । रोचनार्थं फलश्रुतिरित्येकादशस्कन्धोक्तेः । 'न तादृशी प्रीतिरीड्यस्य विष्णोर्गुणोत्कर्षज्ञातरि यादृशी स्यात् । तत्प्रीणनान्मोक्षमाप्नोति सर्वस्ततो वेदास्तत्परास्सर्व एव' इत्यादि श्रुतेश्चेति भावः । यद्यपि सर्वपुरुषार्थनये ज्ञानादेवाशेषपुरुषार्थप्राप्तिर्वक्ष्यते । तथाप्यभ्युपेत्यवादेन वाऽनुत्तमाधिकारिणामुत्तमानामपि प्रबलप्रतिबन्धकवतां कर्मसापेक्षत्वाद्वा एवमुक्तमिति ध्येयम् ॥ **अत इति** ॥ ज्ञानमात्रेण पुरुषार्थासिद्धेरित्यर्थः । कर्मादिकमपि वदतीति भाष्यमादिपदार्थं वदन् शेषपूर्त्या व्याचष्टे ॥ **समाकर्षेणेति** ॥ सूत्रेऽन्यपदेन प्रस्तुतजीवाद्यन्यपरमात्मवानिना तज्ज्ञानं लक्ष्यत इति भावेन भाष्ये परमात्मज्ञानार्थमित्युक्तं हेतुगर्भं मत्त्वा व्याचष्टे ॥ **कर्मादीति** ॥ भाष्ये वदतीत्युक्तावपि ज्ञानस्येत्युक्तिः दृष्टान्तानुसारात् । अन्यज्ञानेनान्यज्ञानाऽयोगात् फललक्षणामुपेत्य प्रकृतोपयोगितया तात्पर्यमाह ॥ **विज्ञातस्यापीति** ॥ फलप्रश्ने बीजमाह ॥ **एतदिति** ॥ शौनको ह वै महाशालोंऽगिरसं विधिवदुपसन्नः पप्रच्छेति पूर्वत्र श्रवणादाह ॥ **शौनकेति** ॥ द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति । परा चैवापरा च । तत्रापरा । ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः, शिक्षा, कल्पो, व्याकरणं, निरुक्तं, छन्दो, ज्योतिषमिति ।

अथ परा यया तदक्षरमधिगम्यत इत्यस्य वाक्यस्य भावमाह ॥ **सर्वमिति** ॥ **सफलमिति** ॥ परीक्ष्य लोकानिति श्रुत्युक्तदिशा परमात्मज्ञानाङ्गवैराग्योत्पादनेन विविदिषन्ति यज्ञेन दानेनेत्युक्तदिशाऽन्तःकरणशुद्ध्युत्पादनेन वा एष सेतुरित्याद्युक्तदिशा ब्रह्मज्ञाने प्रकाररूपविषयार्पणेन वा सफलमित्यर्थः । एवमग्रेऽपि ॥ **स आदेश इति** ॥ तच्छब्दपरामर्शं विवृण्वन् येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं भवतीति छान्दोग्यषष्ठस्थपूर्ववाक्यैकदेशं व्याकुर्वन्नेव भाष्योपात्तवाक्यार्थमाह ॥ **तथा यस्मिन्निति** ॥ **ज्ञातफलमिति** ॥ घटादिकारणत्वेन मृत्पिण्डज्ञाने एतावन्मृण्मयं भवतीति विशेषज्ञानादपेक्षितमृण्मयसम्पादनसम्भवादित्यर्थः

(भावदीपः)

॥ **एवमिति** ॥ वैराग्याद्युत्पादनद्वारा सर्वकारणत्वसर्वाधारत्वसर्वसंहर्तृत्वसर्वनियन्तृत्वादिना परमात्मज्ञाने तज्जन्यत्वपरतन्त्रत्वादिविशेषज्ञानादीश्वरप्रीत्या पुरुषार्थप्राप्तेरिति भावः । सूत्रभाष्ययोरपि चेत्यखण्डनिपात इति भावेनानूद्यार्थं वदन्नेवावतारयत ॥ **अपि चेति** ॥ एव-मित्यनुवादः । अन्येत्यादिव्याख्या ॥ **स्पष्टं चेति** ॥ तथा च प्रश्नाद्युक्त्यैव पूर्तेरेतदुक्तिर्व्यर्थेति न शङ्क्यमिति भावः । ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे निषेदुः । यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते इति समग्रमन्त्रार्थमाह ॥ **तदक्षरमिति** ॥ **विषयर्चेति** ॥ समासान्तोऽनित्यत्वान्नाश्रितः । व्योमन्नित्यस्य व्याप्त इत्यर्थः ॥ **अक्षर इति** ॥ ज्ञानलक्षणया निमित्तसप्तमीति मत्त्वा फलितमाह ॥ **तज्ज्ञानार्थमेवेति** ॥ यस्मिन् देवा इति वाक्यशेषानुरोधादाह ॥ **कर्मादिकमिति** ॥ तत्र हेतुत्वेन वाक्यशेषार्थमाह ॥ **तस्यैवेति** ॥

## अभिनवचन्द्रिका

**मुख्यत एवान्यवाच्यत्वमिति** ॥ परमात्मनो मुख्यतः शब्दवाच्यत्वमेवाङ्गीकर्तव्यम्, न तु समाकर्षेण कर्मादीनां मुख्यवाच्यत्वमभ्युपेत्य भगवतः परममुख्यवाच्यत्वं न वाच्यमिति भावः । एतेन कर्मादिप्रतिपादने प्रयोजनाभावात् वेदस्य काम्यफलार्थमप्रवृत्तेः समाकर्षानङ्गीकारवत् अन्येषां वाच्यत्वमपि नाङ्गीकार्यमिति परास्तम् । 'अन्यार्थम्' इति सूत्रे 'प्रश्नव्याख्यानाभ्याम्' इत्यत्र प्रश्नं व्याख्यानं चेति न द्वन्द्वः किं तर्हि प्रश्नस्य व्याख्यानं प्रश्नव्याख्यानं, प्रश्न-व्याख्यानं च प्रश्नव्याख्यानेताभ्यां प्रश्नव्याख्यानाभ्यामिति विवक्षितमिति भावेन भाष्ये व्याख्यानद्वयमुदाहृतं तद्व्यञ्जन्व्याचष्टे – **सर्वमिदं कर्मादिकमित्यादिना** ॥ एतेन व्याख्यानस्यैव समाकर्षसाधकत्वात् प्रश्नस्याऽसाधकत्वात्, 'प्रश्नव्याख्यानाभ्याम्' इति द्विवचनमनुपपन्नमिति परास्तम् । व्याख्यानाभिप्रायेणैव द्विवचनप्रयोगाङ्गीकारात् । अत एव टीकाकृता प्रश्नस्य साधकत्वभ्रमनिरासाय 'शौनकप्रश्ने, श्वेतकेतुप्रश्न' इति सप्तमीप्रयोगं कृत्वा 'अङ्गीरसो व्याख्यानात्, उद्दालव्याख्यानात्' इति पञ्चम्यंतप्रयोगः कृतः । किमर्थं तर्हि सूत्रे प्रश्नग्रहणं 'व्याख्यानाभ्याम्' इत्येव किं नोक्तमिति चेत्, उच्यते श्रोतुरादरयोग्यतादिज्ञापनाय प्रश्न-ग्रहणम् । तेन नेदं व्याख्यानं व्यामोहाय प्रवृत्तम् । येनासाधकं स्यात् । किंतु आदरादिविशिष्टेन प्रश्ने कृते प्रवृत्तत्वात् तत्वज्ञानसाधनमिदं भवत्येवार्थसाधकमिति सूचनात्सार्थकं प्रश्नग्रहणमिति ॥ **यथैकेनेति** ॥ घटादिकारणज्ञानार्थिनः यथा घटशरावादिकार्यज्ञानं कारणानुमितिजनकत्वेन

(अभिनवचन्द्रिका)

सफलं, तथा भगवज्ज्ञानार्थिनो जगज्ज्ञानं कारणीभूतभगवज्ज्ञानेन सफलमित्यर्थः ॥ **विशेषज्ञानादिति** ॥ मृत्पिण्डे घटादिकारणत्वरूपविशेषज्ञानादित्यर्थः ।

**'ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधिविश्वे निषेदुः ।**
**यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासत'** (ऋ.सं. २-३-२१)

इति ऋचं व्याचष्टे – **तदक्षरं यो न वेदेति** ॥

## वाक्यार्थमुक्तावली

लौकिकानां शब्दानां हानादिव्यवहारार्थं समाकर्षमभ्युपेत्याह वैदिकानामिति ॥ **पुरुषार्थेति** ॥ मोक्षसिद्धावित्यर्थः ॥ यद्वा पुरुषार्थाधिकरणन्यायेन, ज्ञानादेव स्वर्गो ज्ञानादेवापवर्ग इत्युक्तरीत्या सर्वपुरुषार्थसिद्धावित्यर्थः । ननु जल्पकानां काम्यस्वर्गप्राप्त्यर्थं कर्मेत्यत आह ॥ **वेदानामिति** ॥ कामीभूत्वा यजेतेति विध्यभावात् । स्वर्गापेक्षास्ति चेत् कुरु करणे भवत्येव स्वर्ग इति कार्यकारणभावमात्रप्रतिपादकत्वेन बन्धककाम्यफलार्थं मोचकवेदाप्रवृत्तेरित्यर्थः । भाष्ये कर्मादिकमित्यादिपदार्थं वदन् समाकर्षेणेति शेषपूर्वं व्याचष्टे ॥ **समाकर्षेणेति** ॥ प्रश्नपूर्वार्थाथर्वणवाक्यं प्रकृतोपयोगाय द्वेधा व्याचष्टे सर्वमिदं कर्मादिकं विज्ञातं विज्ञातफलमिति लक्षणया वाविज्ञातं सर्वमिदं कर्मादिकं कस्मिन् विज्ञाते सफलं भवतीति विशेषोक्त्या वा द्वितीययोजनोक्ता भवति । सर्वमपरविद्यया विज्ञातं भवतीत्यनेनाद्यप्रश्नोत्तरं विज्ञातं चेत्यादिद्वितीयप्रश्नोत्तरं परमात्मज्ञानेन सफलमिति तद्ज्ञानमेवास्य फलमिति भावः ॥ **अङ्गिरस इति द्वेविये वेदितव्य इति** ॥ ब्रह्मविदो वदन्ति । परा चैवापरा च । तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वणवेदः शिक्षा, कल्पो, व्याकरणं, छन्दो, निरुक्तं ज्योतिषमिति । अथ परा यया तदक्षरमधिगम्यत इत्यङ्गिरसो व्याख्यानादित्यर्थः । कथं नु भगव इति छन्दोगप्रश्नार्थमाह– **तथा यस्मिन्निति** ॥ **ज्ञातमपीति** ॥ कथमनूद्यत इति वाच्यं विज्ञातमपि फलाभावेनाविज्ञातप्रायं कर्मादिकं येन परमात्मना ज्ञातेन फलवत्तया विज्ञातं भवतीति तदर्थस्याभिप्रेतत्वात् । यथैकेन मृत्पिण्डेनेति यथानेकमृण्मयज्ञानं तत्कारणमृत्पिण्डस्य ज्ञानार्थं चेत्सफलम् एतेषां मृण्मयानां कारणेन, इयत्ता मृत्पिण्डेन भाव्यमिति ज्ञानेन पुनस्तावन्मृत्पिण्डसम्पादने नापेक्षितमृत्कार्यसम्पादनसम्भवात् । न तु स्वकारणज्ञानार्थत्वं विना स्वरूपेण

(वाक्यार्थमुक्तावली)
बहुमृण्मयज्ञानकारणज्ञानार्थिनः सफलम् एवं कर्मदेवतादिविचित्रप्रपञ्चज्ञानं बहुचित्रजगद्बहुधा करणात्पर शक्तिरनन्तगुणः परम इत्याचार्यवर्योक्तरीत्या तदाश्रयत्वकर्तृत्वादिना, भगवद्गुण-विस्तरज्ञानार्थं चेत्सफलम् अन्यथा गङ्गावालुककीटसङ्ख्याज्ञानवन्निष्फलमिति ।

सूत्रे अपि चेति निपातसमुदायः किं चेति तदेकार्थक इत्यभिप्रेत्य व्याचष्टे, **तदक्षर-मित्यादिना** ॥ **अक्षर इति** ॥ विषयेण विषयिणो ज्ञानस्योपलक्षणम् । तादर्थ्ये सप्तमीत्याद्युक्तं तद्ज्ञापनार्थमिति । देवताप्रतिपादकऋचां कथं तद्ध्यानार्थमित्यतः तदाश्रयतया तज्ज्ञानार्थमाश्रित-निरूपणमितिभावेन प्रवृत्तस्य यस्मिन् देवा इत्यस्यार्थमाह ॥ **तस्यैवेति** ॥ **ये पुनरिति** ॥ एतदन्य इत्यर्थः । अज्ञानिन एव गुरूपदेशेन पुनर्विदुरिति वा । सूत्रे समाकर्षेण शब्दानां जगद्वाचित्वमित्यस्ति । तुशब्दोऽवधारणे । वैदिकशब्दानां समाकर्षेण जगद्वाचित्वमन्यार्थमेव प्रकृततदन्यब्रह्मज्ञानार्थमेव कुतः । शौनकाङ्गिरःश्वेतकेतूद्दालकप्रश्नव्याख्यानाभ्याम् । अपि च न केवलमिदं प्रश्नव्याख्यानपर्यालोचनयाऽर्थादेव तत्सिध्यति अपितु स्पष्टं चैके शाखिनः बह्वृचाः यस्तन्नवेदेति पठन्ति इति सूत्रार्थः ॥

## तत्त्वसुबोधिनी

ननु स्वर्गादिकर्मफलार्थं वेदस्य प्रवृत्तत्वात् कर्मासिद्धिरावश्यकीत्यत आह ॥ **वेदाना-मिति** ॥ नित्यमोक्षफलोद्देश्येनैव वेदस्य प्रवृत्तत्वात् इति भावः । 'ऋचो अक्षरे परमे व्योमन् यस्मिन्देवा अधिविश्वे निषेदुः । यस्तन्नवेदकिमृचाकरिष्यति य इत्येतद्विदुस्त इमे समासते' इति समग्रम् ऋचं प्रकृताभिप्रायेण व्याचष्टे ॥ **तदक्षरमित्यादिना** ॥ अक्षर इति विषयेण विषयिज्ञानोपलक्षणम् । तादर्थ्यञ्च सह्यमित्यभिप्रेत्य उक्तम् ॥ **तज्ज्ञानार्थमिति** ॥

## वाक्यार्थविवरणम्

**कस्मिन्निति** ॥ शास्त्र इत्यर्थः । करणप्रश्नोऽयम् । विज्ञातमिदं सर्वं कस्मिन् विज्ञाते विज्ञातफलं भवतीति विषयप्रश्नपरतामभिप्रेत्य तत्तात्पर्यमाह ॥ **ज्ञानस्यापीति** ॥ कस्मिन् विज्ञात इति । कस्मिन् विषय इत्यर्थः ॥ **एकेन मृत्पिण्डेनेत्यादि** ॥ मृण्मयत्वादिसामान्याकारेण पूर्वं ज्ञातमपि घटादिकं ज्ञातफलं भवति । केन ज्ञातेनेत्यत उक्तम् । एकेन मृत्पिण्डेन व्यक्तिविशेषेण ज्ञातेनेति । सामान्यतो ज्ञाते सति यत्फलं विशेषज्ञानं तत्फलकं भवति ।

(वाक्यार्थविवरणम्)

कुतः । सामान्यज्ञानस्य विशेषज्ञानं फलमित्यस्य प्रसिद्धत्वादित्याह ।। **विशेषज्ञानादिति** । मृत्पिण्डरूपव्यक्तिविशेषज्ञानादित्यर्थः ।।

## वाक्यार्थमञ्जरी

लौकिकशब्दानामन्यपरत्वमुपेत्याह ।। **वैदिकानामिति** ।। मुमुक्षुं प्रतीति शेषः । कर्मणः स्वयं प्रयोजनत्वाभावेन तस्य मोक्षसाधनत्वं स्वर्गादिसाधनत्वं वा स्वीकार्यम् । तदुभयं क्रमेण दूषयति ।। **भगवज्ज्ञानेत्यादिना** ।। ॐ अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॐ ।। शब्दानां जगद्वाचित्वमन्यज्ञानार्थं तु भगवज्ज्ञानार्थमेव । कस्मिन्नु भगव इति कथं नु भगव इति च क्रमेण शौनकश्वेतकेतुप्रश्नाभ्यां तस्मै सहोवाचेति यथा सौम्येति चाङ्गिरोद्दालक-व्याख्यानाभ्यामपि चैवमेव यस्तं न वेदेत्येके शाखिनः पठन्तीत्यर्थः ।। **एतज्ज्ञानमात्रस्येति** ।। तथा च फलान्तरप्रश्नो युक्त एवेति भावः । तात्पर्यमाह ।। **तं प्रकारमिति** ।। **सफलमिति** ।। परीक्ष्य लोकानित्युक्तदिशा ब्रह्मज्ञानाङ्गवैराग्योत्पादनेन वा विविदिषन्ति यज्ञेन दानेनेत्युक्तदिशा अन्तःकरणशुद्ध्युत्पादनेन वा एष सेतुरिति परमात्मनः सर्वाधारतया ज्ञातव्यत्वोक्त्या आधेय-निरूपकत्वेन वा सफलमित्यर्थः ।। **एवमग्रेऽपि** ।। **ज्ञातफलमिति** ।। घटादिकारणत्वेन मृत्पिण्डज्ञाने एतावत्तन्मयं भवतीति विशेषज्ञानादपेक्षितमृन्मयसम्पादनसम्भवादित्यर्थः ।। **एवमिति** ।। वैराग्यव्युत्पादनद्वारा सर्वकारणत्वसर्वाधारत्वसर्वसंहर्तृत्वसर्वनियन्तृत्वादिना परमात्मज्ञाने तज्जन्यत्वपरतन्त्रत्वादिविशेषज्ञानादीश्वरप्रीत्या पुरुषार्थप्राप्तेरिति भावः ।। **अर्थादिति** ।। कण्ठतोऽनुक्तेरिति भावः । ऋचो अक्षरे परमे व्योमन् यस्मिन्देवा अधिविश्वे निषेदुः । यस्तन्नवेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासत इति समस्ताम् ऋचं प्रकृताभिप्रायेण व्याचष्टे ।। **तदक्षरमित्यादिना** ।। अक्षर इत्यनुवादः ।।

## सूत्रभाष्यम्

**।। ॐ वाक्यान्वयात् ॐ ।। २० ।।**

**वाक्यस्याप्येवमन्वयो युज्यते पृथक्पृथक्स्थितस्यापि परमात्मना ।।**

## सत्तर्कदीपावली

एवं परमात्मन्येव परममुख्यया वृत्या स्वरवर्णपदात्मना सर्ववेदान्वयेऽप्यंशतः ततः समाकृष्य चित्प्रकृतिप्राकृतेपु मुख्यमात्रवृत्तौ साधितायां परमात्मनि मुख्यरूपेणाप्यन्वयो युज्यते वेदस्य । अन्यथा केवलैरर्थवाचिनः पदकदम्बकस्य अक्षरसमूहस्य वाक्यरूपेणाप्यन्वयो युज्यत इति भावेन उत्तरसूत्रार्थमाह ॥ **वाक्यान्वयादित्यादिना** ॥ ईळ आयाहीत्यादीनां अर्थान्तरत्वेऽपि अग्निवाय्वादिशब्दानां यदा भगवद्वाचित्वं तदा अग्निमीळे वायवायाहीत्यादिवाक्यान्यपृथक्स्थितान्येव । यदा त्वग्निवाय्वादिवाचित्वं तदा पृथक् स्थितानीत्यर्थः ।

## तत्त्वप्रदीपिका

एवमङ्गीकारे यद्यपि पदानामेकैकशो नान्वयः परमात्मना । तथाऽपि वाक्यस्यान्वयो युज्यते स्वं स्वमवान्तरार्थमुक्त्वा स्थितस्यापि यस्मादपूर्णफलत्वान्मिश्रफलत्वाच्च अवरं कर्म, उत्पत्त्यादिना पारतन्त्र्याद्देवादिकः प्रपञ्चोऽप्यप्रधानः, तस्मात्सर्वतः परमत्वेनाऽत्मनि ज्ञानं कर्तव्यमिति वाक्यान्वयस्तत्तत्प्रकारेण वक्ष्यमाणेष्वपि मतेपु योजनीयः । प्रधानाधिकारिविवक्षया सकलपदस्वरादिसमन्वयं समभिवदन्वेदपतिरन्याधिकारिविशेपविवक्षया स्वमतान्यपि जैमिन्यादिभिरिदमादीन्यवादयत् । तदेव चाऽवेदयिष्यति''कृष्णद्वैपायनमतादेकदेशविदः पर'' इत्यादि ॥

## तत्त्वप्रकाशिका

न परमात्मज्ञानार्थं कर्मादिकं वेदेन वक्तव्यम् । अन्यदनुक्त्वा परमात्ममात्रकथनेऽपि तज्ज्ञानसम्भवात् । न च व्युत्पत्त्यनुपपत्तिः । खण्डपदानामन्यवाचकत्वेन तदुपपत्तेः । ततोऽन्यकथने प्रयोजनाभावान्न तत्र समाकर्ष इत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **वाक्येति** ॥ सत्यमन्यावचनेऽपि भगवज्ज्ञानं भवतीति । तथाप्यन्यावचने पदान्वयं एव युज्यते न वाक्यान्वयः । एवमन्यस्यापि वाच्यस्याभ्युपगमे तु वाक्यस्यापि परमात्मनाऽन्वयो युज्यते । वाक्यान्वयो नाम पृथक् पृथगर्थेपु वाचकतया स्थितवाक्यस्याऽन्ततो भगवत्परत्वम् । अतो वाक्यान्वयसिद्ध्यर्थमन्यवचनं युक्तमेव । न च वाच्यं परमात्मज्ञानस्यैव प्रयोजनत्वात् किं वाक्यान्वयेनापीति । विना वाक्यान्वयमुत्तमाधिकारिव्यतिरिक्तानां ज्ञानस्यैवासम्भवेन जिज्ञासायां वैमुख्यप्रसङ्गात् । 'कश्चन्दसां योगमावेद धीरः' इति श्रुतेरिति भावः ॥

## गुर्वर्थदीपिका

न च व्युत्पत्त्यनुपपत्तिरित्यस्य ज्योतिरधिकरणोक्तरीत्या ज्योतिष्टोमपदयोरपि भगवद्वाचकत्वे तत्समुदायात्मकज्योतिष्टोमपदे भगवन्नामावृत्तिमात्रत्वेन पृथग्व्युत्पत्त्यनुपपत्तिरित्यर्थः । खण्डपदानामित्यत्र भगवन्नामत्वेनाङ्गीकृतज्योतिष्टोमादिसमस्यमानपदस्थज्योतिरादिखण्डपदानामित्यर्थः । नन्वस्यापि तत्रैव किं ज्योतिष्टोमादिशब्दैरेव विशेषतोऽपराद्धमित्युत्तरमुक्तमिति चेत् सत्यम् । अखण्डपदसमन्वये तेषामपि भगवद्वाचित्वम् । वाक्यरूपसमस्तपदसमन्वये समाकर्षन्यायेन खण्डपदानाम् अन्यवाचित्वमङ्गीकृत्य समस्तपदानामपि भगवद्वाचित्वमिति विवेकसम्भवात् न कश्चित् क्षुद्रोपद्रवः । उत्तमाधिकारिव्यतिरिक्तानामित्यनेनानेकवैदिकपदकदम्बैरेव वेदोक्तभगवद्गुणानुसन्धातॄणां ब्रह्मादीनां वाक्यान्वयं विना भगवज्ज्ञानसम्भवेऽपि तत्रासमर्थैर्मन्दाधिकारिभिर्वाक्यान्वयोऽप्यनुसर्तव्य इति सूचितम् ।

## भावबोधः

**खण्डपदानामिति** ।। ज्योतिष्टोमेत्यादिकर्मवाचकसमस्तपदावयवानामित्यर्थः । प्रकृतिप्रत्ययानां चैतदुपलक्षकम् ।। **पृथक् पृथगर्थेष्विति** ।। सन्ध्याकर्तव्यत्वादिषु प्रतिपादकतया स्थितस्य 'सन्धामुपासीत' इत्यादिवाक्यस्येत्यर्थः ।।

'अन्वयः सर्वशब्दानामशक्यो ज्ञातुमञ्जसा ।
इति यल्लोकवैमुख्यं जैमिन्यादिमतं वदन् ।।
विद्याधिनाथो भगवानपाचक्रे'

इत्यनुव्याख्यानं मनसि निधायाह **विना वाक्यान्वयमिति** ।।

## भावदीपः

**परमात्ममात्रेति** ।। पदसमन्वयविधयेत्यर्थः ।। **खण्डेति** ।। समुदायावयवपदानामित्यर्थः । परिष्कारपूर्वं वाक्यस्येति भाष्यं व्याचष्टे ।। **सत्यमिति** ।। एवमित्यनुवादः । अन्यस्यापीत्यादिव्याख्या ।। **पृथक्पृथगिति** ।। विस्तृतश्चाऽयं तत्त्वनिर्णयटीकायां कार्यान्विते व्युत्पत्तिरिति प्राभाकरमतखण्डनप्रस्तावे इयं माता अयं पिता सुरूपोऽसीत्येतद्वाक्यव्याख्यावसरे ।

(भावदीपः)

वाक्यान्वयादिति सूत्रे निमित्तपञ्चमी जगद्धानित्वेऽपीति वर्तते इति मत्वा सूत्रार्थं निगमयति ॥ **अत इति** ॥ अन्यवचन एव वाक्यान्वयसम्भवादित्यर्थः । ज्योतिर्नये अत्र चोक्तयोः पदवाक्य-समन्वययोरधिकारिभेदेन सार्थक्यं विवक्षुः । अन्वयः सर्वशब्दानामशक्यो ज्ञातुमञ्जसा । इति यल्लोकवैमुख्यं जैमिन्यादिमतं वदन् । विद्याधि (राजो) नाथो भगवानपाचक्रे स्वयं प्रभुरित्यनु-भाष्योक्तमत्र संयोजयितुं शङ्कामाह ॥ **न चेति** ॥ हरेर्जगद्धेतुत्वसर्वशब्दवाच्यत्वादेः तथा श्रवणादिविधेरुत्तमाधिकारिस्वरूपादेश्च असिद्धिप्रसङ्गादित्यपि ध्येयम् । पदसमन्वयोऽसर्वाधि-कारिक इत्यत्र श्रुतिमाह ॥ **क इति** ॥ अङ्गीकृतेऽपि नैवास्ति दोषो वाक्यसमन्वये । तदर्थत्वेन कर्मादेः सम्भवादल्पबुद्धये कश्छन्दसां योगमिति श्रुतेर्योगार्थतत्त्ववित् । ब्रह्मैको नैव चान्योऽस्ति क इत्यस्योभयार्थत इत्यनुभाष्योक्तेरिति भावः ।

## अभिनवचन्द्रिका

**न तत्र समाकर्ष इति** ॥ ज्योतिष्टोमादिशब्दानां कर्मादौ न समाकर्ष इत्यर्थः ।

## वाक्यार्थमुक्तावली

**अन्यदनुक्त्वेति** ॥ संसर्गमर्यादया वाक्येन प्रतिपदं वान्यदनुक्त्वा प्रतिपदं परमात्ममात्र-कथनेऽपीत्यर्थः ॥ **खण्डेति** ॥ ज्योतिष्टोमेत्यादिसमस्तपदावयवानामित्यर्थः ॥ प्रकृतिप्रत्ययानां चैतदुपलक्षकम् ॥ **अन्यावचन इति** ॥ संसर्गमर्यादया वाक्येन, पदैर्वान्यावचने पदान्वय एवमुच्यते ॥ न त्ववान्तरवाक्ये महावाक्यान्वय इत्यर्थः । एवमित्यनूद्यार्थमाह एवमन्य-स्यापीति । वाक्यस्यावान्तरवाक्यस्य महावाक्यस्य च ॥ **वाक्यान्वयो नामेति** । पदाः पृथक् पृथगर्थेषु वाचकतयाऽवस्थितस्य वाक्यस्यान्ततः संसर्गमर्यादया भगवत्परत्वमवान्तरवाक्यान्वय इत्यर्थः । यथा यतो वा इमानि भूतानीति वाक्ये पदानामन्यवाचकत्वाभ्युपगम एव वाक्य-संसर्गमर्यादया जगत्कारणत्वगुणसमर्पकतया भगवत्यन्वयो युज्यतेऽन्यथा स न स्यात् । ततश्च यतो वेत्यादितो जगद्धेतुत्वादेः नामानीत्यादितो सर्वशब्दवाच्यत्वादेः आत्मा वा अर इत्यादेः श्रवणादिविधिश्च न सिध्येदिति भावः । यद्वा पृथक् पृथक्स्थितस्य पृथक् धर्मदेवतादौ स्थितस्य वाक्यस्यान्ततः प्रतिज्ञासिद्धेरिति वक्ष्यमाणप्रकारत्रयेण पर्यवसानगत्या ब्रह्मपरमहावाक्यैक-वाक्यतया भगवत्परत्वं महावाक्यान्वय इत्यर्थः । यथा 'ज्योतिष्टोमेन' 'अग्निमीळ' इत्यादि-

(वाक्यार्थमुक्तावली)
वाक्यानां कर्मदेवतादिपरत्वाभ्युपगम एव कर्मदेवतादिसिध्या तदाश्रयत्वादिना पर्यवसानगत्या ब्रह्मपरमहावाक्यैकवाक्यतया कर्मादिपरवाक्यान्वयः सिध्येदन्यथा न सिध्येदिति भावः ॥ **न वक्तव्यमिति** ॥ परमात्मज्ञानस्यैव प्रयोजनत्वात्तस्य च जगत्कर्ता सर्वनामा सर्वोपास्य इत्यादि पदसमन्वयेनाप्युपत्तेरिति भावः । अन्वयः सर्वशब्दानामशक्यो ज्ञातुमञ्जसा ।

इति यल्लोकवैमुख्यं जैमिन्यादिमतं वदन् । इत्यनुव्याख्यां मनसि निधाय परिहारमाह **विनेति** ॥ छन्दसां वेदवाक्यानां योगं प्रतिपदसमन्वयं को वा धीर आसम्यग्वेद न कोऽपि किन्तु ब्रह्मैव वेदेति श्रुत्यर्थः । सूत्रे वाक्यान्वयादिति निमित्तपञ्चमी शब्दानामन्यार्थं जगद्वाचित्वमित्यस्ति ॥ ततश्च वाक्यान्वयलाभलक्षणप्रयोजनान्निमित्ताच्छब्दानामन्यार्थं जगद्वाचित्वमिति सूत्रार्थः ।

## तत्त्वसुबोधिनी

ननु सर्वस्यापि वेदस्य परमात्मपरत्वे ज्योतिषां स्तोम इत्यादि व्युत्पत्तिः नोपपद्यत इत्याशङ्क्य निषेधति ॥ **न चेति** ॥ खं उपादानमिति । ज्योतिष्टोमेत्यादिकर्मवाचकसमस्तपदावयवनामामित्यर्थः । प्रकृतिप्रत्ययानां च एतदुपलक्षकम् ॥ **पृथक्पृथगर्थेष्विति** ॥ सन्ध्याकर्तव्यादिषु प्रतिपादकतया स्थितस्य सन्ध्यामुपासीत इत्यादिवाक्यस्येत्यर्थः । अधमाधिकारिणां जिज्ञासायां वैमुख्यं कुत इत्यत आह ॥ **कश्छन्दसामिति** ॥

## वाक्यार्थमञ्जरी

**न चेति** ॥ ज्योतिष्टोमादिशब्दानां कर्मादावेव व्युत्पन्नत्वादिति भावः ॥ **खण्डपदानामिति** ॥ ज्योतिष्टोमेत्यादिकर्मवाचकसमस्तपदावयवानां ज्योतिरादिपदानामित्यर्थः ॥ ॐ वाक्यान्वयात् ॐ ॥ वाक्यान्वयान्निमित्तात् ज्योतिष्टोमादिसमस्तशब्दानामन्यवाचित्वमङ्गीकार्यमित्यर्थः ॥ **पृथक् पृथगिति** ॥ कर्माद्यनेकार्थेषु वाचकतया स्थितस्येत्यर्थः ॥ **अन्तत इति** ॥ मां प्रति प्रसन्नः परमेश्वर एवोपाय इति तत्स्वरूपे सत्यं ज्ञानमित्यादिना निरूपिते कथमसौ प्रसीदति इत्यपेक्षायां तत्साधनत्वेन न तदपरोक्षज्ञानं तदर्थं श्रवणादिकं तदङ्गतया कर्माणि विधीयन्त इत्येवं समस्तस्यापि कर्मादिप्रतिपादकवेदस्येश्वरस्वरूप एव पर्यवसानमित्यर्थः । अतःकर्मादिप्रतिपादकवाक्यस्यान्यवचनसापेक्षत्वात् ॥ **ज्ञानस्यैवासम्भवेनेति** ॥ मन्दानां

प्रतिपदान्वयायोग्यत्वादिति भावः ॥ क इति ॥ छन्दसां वैदिकपदानां भगवति योग-मुत्तमाधिकारिव्यतिरिक्तः को वेद न कोऽपीत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॐ ॥ २१ ॥**

'नान्यः पन्था अयनाय विद्यत' (तै.आ.३-१२-७) इति प्रतिज्ञासिद्धेर्लिङ्गत्वेन कर्मादिकमुच्यत इत्याश्मरथ्यः । यस्मादेवमनित्यफलमन्यत्तस्मान्नान्यः पन्था इति ॥

## सत्तर्कदीपावली

ननु कथं कर्मदेवतादिवचनस्य परमात्मार्थता । येन पृथक्स्थितानामपि वाक्यानां परमात्मनान्वय इत्याकाङ्क्षायाः त्रिधोत्तरं शिष्यत्रयमतेन दर्शयतीत्याह ॥ **प्रतिज्ञेत्यादिना ॥** यद्यमृतत्वावाप्तये परमपुरुषज्ञानतोऽन्यः पन्था न विद्यत इति प्रतिज्ञा सिध्येत् तर्हि तदज्ञानाय प्रयतेत पुमान् । अतस्तत्सिध्यर्थं लिङ्गत्वेन मायामहदादिशब्दैः श्रीब्रह्मादिशब्दैश्च वेदतन्त्रोक्त-मार्गतो रमाम् अजशङ्करादिलोकेशादीन् यजन्तो विजानन्तश्च पुत्रवित्ताद्यैहिकं पाताळाद्यामुष्मिकं च अनित्यमेव फलं लभन्त इति कर्मदेवतादिकमुच्यत इति आश्मरथ्यो मन्यत इत्यर्थः ।

## तत्त्वप्रदीपिका

'एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापियन्ति । इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः । नाकस्य पृष्ठे सुकृते तेऽनुभूत्वा इमं लोकं हीनतरं वा विशन्ति' ''परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायात्'' इत्याद्युक्तप्रकारेणान्यदनित्यफलमिति यत्तस्मान्नान्य उपायो भगवत्प्राप्तिरूपायामृतत्वायेति ॥

## तत्त्वप्रकाशिका

यदन्यवचनस्यापि परमात्मज्ञानार्थत्वमुक्तं तत्केन प्रकारेणेत्याकांक्षायां तत्प्रदर्शनाय सूत्र-मुपन्यस्य व्याचष्टे ॥ **प्रतिज्ञेति** ॥ ज्ञानमेव मोक्षसाधनं नान्यदिति प्रतिज्ञाते कुतो ज्ञानमेव मुक्तिहेतुरित्याकांक्षायां तत्प्रतिज्ञासिद्ध्यर्थं हेतुत्वेन सविस्तरं श्रुत्या सपरिकरं कर्माद्युच्यते । अतो ज्ञानमवश्यमापाद्यमित्येवमाकारेण कर्मादिवचनस्य ज्ञानोपयोगित्वमित्याश्मरथ्याचार्यो

(तत्त्वप्रकाशिका)

मन्यत इति भावः । कर्मादिवचनं कथमुक्तप्रतिज्ञायां हेतुरित्यत आह ॥ **यस्मादिति** ॥ विस्तरेण सपरिकरं कर्माद्युक्त्वा 'अमृतो वाव सोमपो भवति यावदिन्द्रः' इत्यादिना तस्य दुःखसम्भिन्नं विनाशिफलमुच्यते । तत् परामृश्य यस्मादेवं कर्माद्यनित्यफलं तस्मान्न तन्मोक्ष-साधनम् । तस्य दुःखासम्भिन्ननित्यसुखरूपत्वात् । अतो ज्ञानान्नान्यः पन्था मोक्षायेति प्रतिज्ञा युक्तैवेत्येवं रूपेण कर्मादिवचनस्य हेतुत्वमिति भावः । तथा च श्रुतिः 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणः' इत्यादि ॥

## भावदीपः

**सपरिकरमिति** ॥ फलेतिकर्तव्यतासहितमित्यर्थः । कर्मादिवचनस्य ज्ञानमेव मुक्तिहेतु-रित्यस्य च हेतुहेतुमद्भावं सामान्यतो व्यनक्ति ॥ **अत इति** ॥ एतच्चाग्रे व्यक्तम् ॥ **इत्यादि-नेति** ॥ भाक्तं वानात्मवित्त्वादित्यत्र तृतीयाद्यपादे भाष्योक्तवचनेनेत्यर्थः । आदिपदेन एतत् श्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं पुनरेवापियन्ति । इष्टापूर्तं मन्यमाना वरिष्ठमित्यादिग्रहः । तत्परामृश्य तदालोच्येत्यर्थः । एवं परिष्कृत्य यस्मादित्यादिभाष्यं योजयति ॥ **यस्मादिति** ॥ एवमित्यनुवादः कर्मादीति व्याख्या ॥ **अत इति** ॥ कर्मणोऽनित्यफलकत्वादित्यर्थः । युक्त्यै-वेतीत्यनन्तरं प्रत्येतीति शेषः । तेन परामृश्येति साधु । उक्तं वैराग्यजननद्वारा ब्रह्मज्ञानार्थत्वं श्रुत्या संवादयति ॥ **तथा चेति** ॥ व्याख्यातैषा श्रुतिराद्यनये ॥

## वाक्यार्थमुक्तावली

**ज्ञानमेवेति** ॥ नान्यः पन्था अयनायेति वाक्येन प्रतिज्ञातेत्यर्थः ॥ **सपरिकरमिति** ॥ फलेति कर्तव्यतासहितमित्यर्थः ॥ **ज्ञानोपयोगित्वमिति** ॥ विरक्तानामेव च ज्ञानमित्या-चार्योक्तरीत्या वैराग्यद्वारा ज्ञानोपयोगित्वमित्यर्थः ॥ **कर्मादिवचनमिति** ॥ अपामसोमममृता अभूमेति अमृतफलं प्रतिज्ञायोक्तं कर्मादिवचनमित्यर्थः ॥ **दुःखसम्भिन्नेति** ॥ एष्यत्या तदा-शङ्कया वा, गतागतेन वा, ईषद्दुःखसमानाधिकरणानीत्युक्तफलमुच्यत इत्यर्थः । सूत्रे जगद्वाचित्वमन्यार्थमित्यस्ति शब्दानामिति च । नान्यः पन्था अयनायेति ज्ञानमेव मुक्तिसाधन-मिति प्रतिज्ञार्थनिश्चयस्य शब्दानां जगद्वाचित्वं लिङ्गं हेतुभूतं सदन्यार्थे भवतीति सूत्रार्थः ॥

## तत्त्वसुबोधिनी

**यदन्यवचनस्यापीति** । अन्यज्ञानजनकवचनस्येत्यर्थः । सपरिकरम् । साङ्गम् । साधिकारिकमित्यर्थः ।

## वाक्यार्थमञ्जरी

नान्यः पन्था इति प्रतिज्ञातो योऽर्थः ज्ञानमेव मुक्तिहेतुरिति तत्सिद्धेर्निश्चयस्य लिङ्गं कर्मादिवचनं जनकं सज्ज्ञानार्थं भवतीत्याश्मरथ्याचार्यो मन्यत इत्यर्थः ॥ **सपरिकरमिति** ॥ फलेति कर्तव्यतासहितमित्यर्थः । अमृतो भवतीति सम्बन्धः सभिन्नं सहितं परामृश्य आलोच्य तस्य मोक्षस्य ॥ **तथाचेति** ॥ तत्राकृतो नित्यपुमर्थस्य मोक्षस्य कृतेन कर्मणा सिद्धिर्नेत्युक्तेरिति भावः ।

## सूत्रभाष्यम्

**॥ ॐ उत्क्रमिष्यत एवं भावादित्यौडुलोमिः ॐ ॥ २२ ॥**

उत्क्रमिष्यतो मुमुक्षोः कर्मादिना भाव्यं (साधन) साधनत्वेन अतस्तद्वक्तीत्यौडुलोमिर्मन्यते ॥

## सत्तर्कदीपावली

एवं तर्हि मुमुक्षुणानुष्ठेयं कर्म न विज्ञातव्यं भगवतोऽन्यदित्यत आह ॥ **उत्क्रमिष्यत इत्यादिना ॥**

## तत्त्वप्रदीपिका

संसारादुत्क्रमणेच्छोस्तत्साधनभूतज्ञानसाधनत्वेन कर्मादिना भाव्यम् । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति श्रुतेः ।

## तत्त्वप्रकाशिका

प्रकारान्तरेणाऽन्यवचनस्य ज्ञानोपयोगित्वं दर्शयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **उत्क्रमिष्यत इति** ॥ मोक्षार्थं ज्ञानमेवावश्यमपेक्षितमिति सिद्धे तत्केन साधनेन सिद्ध्यतीत्यपेक्षायां

(तत्त्वप्रकाशिका)

**कर्मादिकमुच्यते । ज्ञानेन मोक्षमिच्छतो ज्ञानसाधनतया कर्मादेरपि भाव्यत्वात् । न च फलोक्ति-विरोधः । तस्या रुचिमात्रार्थत्वात् । 'रोचनार्थं फलश्रुतिः' इत्यादेः । अत एवं ज्ञानोत्पत्तौ कर्मादेरुपयोगित्वेन वेदस्तद्वक्तीत्यौडुलोमिराचार्यो मन्यत इति भावः ॥**

## गुर्वर्थदीपिका

कर्मादिकमुच्यत इत्यत्रान्तःकरणशुद्धिद्वारा ज्ञानसाधनमिति विवेकः ।

## भावदीपः

**प्रकारान्तरेणेति** ॥ कर्मादेर्ज्ञानसाधनत्वेन प्रकारेणेत्यर्थः मुमुक्षोरित्यादिभाष्यं शेषपूर्त्या व्याचष्टे ॥ **ज्ञानेनेति** ॥ अत इति भाष्यस्थानुवादः । एवमित्यादिव्याख्यानम् । कर्मणो ज्ञानोपयोगित्वं च भाक्तं वेत्यत्र सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदित्यत्र जिज्ञासासूत्रे च भाष्योक्तदिशाऽन्तःकरणशुद्धिद्वारेति व्यक्तमिति भावः ॥

## अभिनवचन्द्रिका

**न च फलोक्तिविरोध इति** ॥ ज्योतिष्टोमादेर्ज्ञानफलकत्वे प्रधानफलं ज्ञानमपहाय, अप्रधानस्वर्गाद्युक्तौ कारणाभावात्, स्वर्गादिफलकत्वोक्तिविरोध इत्यर्थः । एतेन– ज्योतिष्टोमादीनां स्वर्गफलमित्येवोच्यते न तु ब्रह्मज्ञानं फलं नेत्युच्यते, अतः कथं विरोधः, उभयफलत्वसम्भवादिति निरस्तम् ॥ **रुचिमात्रार्थत्वादिति** ॥ रुच्युत्पादनरूपकारणसद्भावेन तदुक्तिसम्भवादिति भावः ।

## वाक्यार्थमुक्तावली

**प्रकारान्तरेणेति** ॥ कर्मादेः ज्ञानसाधनत्वेन प्रकारेणेत्यर्थः । ननु उत्क्रमिष्यतः साधन-त्वेनैव कर्माद्युपदिश्यतां किं साधनसाधनत्वेनेत्यत आह **मोक्षार्थमिति** ॥ तर्हि जिज्ञासो-रेवेयमिति वक्तव्यम् उत्क्रमिष्यत इति कथमित्यतः शेषपूर्वं भाष्यं योजयति **न च फलोक्तीति** ॥ फलान्तरार्थं क्लृप्त्यै स्वर्गकामः पुत्रकाम इत्यादिफलोक्तिवैय्यर्थ्यमित्यर्थः । अत इति भाष्य-मनूद्यैवमिति व्याख्यानम् । सूत्रे शब्दानां जगद्वाचित्वमन्यार्थं, भगवद्भानार्थमित्यस्ति । कुतः

उत्क्रमिष्यतो ज्ञानेन मोक्षमिच्छत एवं ज्ञानहेतुतया कर्मादिर्भावादवश्यम्भाव्यत्वादित्यौडुलोमिराचार्यो मन्यते इति सूत्रार्थः ।

## वाक्यार्थमञ्जरी

ज्ञानेन बन्धादुत्क्रमणमिच्छतः पुंसः एवं ज्ञानं हेतुतया कर्मादिर्भावादवश्यम्भावात्तद्वचनं ज्ञानार्थं भवतीत्यौडुलोमिराचार्यो मन्यत इत्यर्थः ॥ **फलोक्तीति** ॥ कर्मणां स्वर्गादिफलकत्वोक्तीत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ अवस्थितेरिति काशकृत्स्नः ॐ ॥ २३ ॥**

सर्वं परमात्मन्यवस्थितमिति वक्तुं तद्वचनमिति काशकृत्स्नः ।

'कृष्णद्वैपायनमतादेकदेशविदः परे ।
वदन्ति ते यथाप्रज्ञं न विरोधः कथञ्चन ॥' इति पाद्मे ॥

## सत्तर्कदीपावली

न केवलमधिकारिणां ब्रह्मज्ञानप्रवृत्तये तदपेक्षया अत्यल्पफलत्वेन अतिनीचत्वेन कर्म तदाराध्यादिरमाशङ्कराद्युच्यते । नापि केवलान्तःकरणशुद्धिद्वारा तत् ज्ञानोपपत्तये च किन्तु सर्वस्य यथायोग्यं ब्रह्मण उत्पत्तिस्थितिसंहारनियमनज्ञानाज्ञानवन्धमोक्षवत्वेन तच्छक्त्यंशावस्थितत्वेन सर्वाश्रयत्वेन ब्रह्मविज्ञानार्थं चेति भावेनाह ॥ **अवस्थितेरित्यादिना** ॥ न चैवम् ऋषीणां परस्परं विरोध इत्याह ॥ **कृष्णद्वैपायनेति** ॥

## तत्त्वप्रदीपिका

अवस्थितेरिति नैक्यमुच्यते । न ह्यवस्थितिशब्दस्तद्वाचकः ॥

## तत्त्वप्रकाशिका

रीत्यन्तरेण कर्मादिवचनस्य भगवज्ज्ञानोपयोगं प्रदर्शयत्सूत्रमुपन्यस्य व्याचष्टे

(तत्त्वप्रकाशिका)

॥ **अवस्थितेरिति** ॥ मोक्षार्थं सर्वथा ज्ञानमपेक्षितं तच्च कर्मादिनाऽन्तःकरणशुद्ध्या भवतीति सिद्धे कथं ज्ञातव्यो हरिरित्याकाङ्क्षायां सर्वं कर्मादिकं तस्मिन्परमात्मनि स्थितं स सर्वाधारत्वादि रूपेण ज्ञातव्य इति 'एष सेतुर्विध(धा)रणः' इत्यादौ वक्तुमाधेयादिरूपं कर्मादिर्वेदेनोच्यत इति वा साक्षात्परमात्मज्ञानोपयोगित्वमन्यवचनस्येति काशकृत्स्नाचार्यो मन्यत इति भावः । एवं जैमिन्यादिमतान्युपन्यस्य स्वमतं किं नोच्यते सूत्रकारेण । एतेषामेव स्वमतत्वे जैमिन्यादि-ग्रहणवैयर्थ्यम् । विरुद्धानां च नैकमतत्वम् । एकस्यैव वेदस्यानेकाभिप्रायताऽयोगादित्यत आह ॥ **कृष्णेति** ॥ मुनिमतानां भगवन्मतत्वमेव । तथापि तत्तद्विदितात्ममतैकदेशाभिप्रायेण शिष्य-प्रसिद्ध्यर्थं जैमिन्यादिग्रहणं युज्यते । अनेकाधिकारिविषयत्वान्न विरोधोऽपीति भावः । अतो भगवज्ज्ञानाद्यर्थं वैदिकादिशब्दानामन्यत्र समाकर्षेण व्यवहारोपपत्तेर्युक्तं हरेः सकलशब्दपरम-मुख्यार्थत्वमिति सिद्धम् ॥

## भावबोधः

**यदन्यवचनस्यापीति** ॥ अन्यज्ञानजनकवचनस्येत्यर्थः ॥ **विरुद्धानामिति** ॥ अविरोधे मतभेदो न स्यादिति भावः । विरुद्धत्वमेव कुत इत्यत आह **एकस्यैवेति** ॥ 'स्वशिष्याणां प्रसिद्ध्यर्थम्' इत्यनुव्याख्यानं मनसि निधायाह **शिष्यप्रसिद्ध्यर्थमिति** ॥ 'तारतम्यं नृणां वदन्' इत्यनुव्याख्यानं मनसि निधायाऽऽह **अनेकाधिकारिविषयत्वादिति** ॥ ब्रह्मज्ञानार्थित्वा-भावेन स्वर्गाद्यर्थित्वावस्थाविशिष्टाल्पाधिकारिविवक्षया आश्मरथ्यमतम् । ब्रह्मजिज्ञासुत्वावस्था-विशिष्टाल्पाधिकारिविवक्षया औडुलोमिमतम् । ज्ञानित्वावस्थाविशिष्टाल्पाधिकारिविवक्षया काशकृत्स्नमतम् इत्यनेकाधिकारिविषयत्वान्मतभेदेनैकस्यैव वेदस्यानेकाभिप्रायत्वोपपत्तेर्न विरोध इति भावः । अत एवोक्तं सुधायां नृणामल्पाधिकारिणामवस्थातारतम्यं वदन्नित्यनेनावस्था-तारतम्यव्यवस्थया मतभेदो न विरोधेनेत्युक्तं भवतीति ।

अथ प्रथमे आकाशादिसर्वशब्दानाम् अन्यत्र रूढ्यादिमुख्यवृत्त्यङ्गीकारे परमात्म-वदन्येषामपि तत्तच्छब्दमुख्यार्थत्वं स्यादित्याशङ्कापरिहाराय परमात्मापेक्षयान्येषां तत्तच्छब्द-वाच्यत्वोक्तिः । द्वितीये परमात्मजगतोरेव शब्दमुख्याऽमुख्यार्थत्वे शब्दप्रसिद्धिः परमात्मन्येव स्यान्न जगतीति शङ्कापरिहाराय जगति शब्दप्रसिद्धेरन्यथासिद्ध्युक्तिः । तृतीये परमात्मनः शब्दमुख्यार्थत्वे निमित्तत्वेनाभिप्रेतस्य तत्तच्छब्दवाच्यार्थनियामकत्वस्यान्यनिष्ठत्वमाशङ्क्य

(भावबोधः)
तत्परिहारोक्तिः । एवं ब्रह्मजगतोः शब्दमुख्यामुख्यार्थत्वव्यवस्थितौ चतुर्थे अमुख्यार्थत्व-विवक्षया वैदिकशब्दानां कर्माद्यन्यपरत्वस्य ब्रह्मज्ञानरूपप्रयोजनोक्तिः ।

पञ्चमे प्रतिपदसमन्वयेनैव ब्रह्मज्ञानसिद्धेः कर्माद्युक्तिर्व्यर्थेत्याशङ्कापरिहाराय मन्दाधिकारिणां ब्रह्मज्ञानाय तदुक्तेरावश्यकत्वे वाक्यान्वयरूपहेतूक्तिः । वाक्यान्वयो हि पृथक्पृथगर्थेषु प्रतिपादकतया स्थितस्यान्ततो भगवत्परत्वम् । तच्च केन प्रकारेणेत्याकाङ्क्षायां षष्ठे मोक्षस्य ब्रह्मज्ञानैकसाध्यत्वप्रतिज्ञायां क्षयिष्णुफलकर्मादिलिङ्गत्वोक्त्या कर्मादिवचनस्य ब्रह्मज्ञानार्थत्वोक्तिः । मोक्षार्थं ज्ञानमवश्यमपेक्षितम् । तच्च कर्मादिनान्तःकरणशुद्ध्या भवतीति सिद्धे कर्मणा जायमानं ज्ञानं किम्प्रकारकमित्यपेक्षायां कर्मादिसर्वाधारत्वप्रकारकमित्यभिप्रेत्य वेदे आधेयकर्माद्युक्तिरिति । अष्टमे प्रकारान्तरेण कर्माद्युक्तेर्ब्रह्मज्ञानार्थत्वोक्तिरिति सूत्रक्रमः ॥

## भावदीपः

**रीत्यन्तरेणेति** ॥ भगवज्ज्ञाने विशेषणरूपविषयार्पकतयेत्यर्थः । इति सिद्धौ पूर्वसूत्रेणेत्यर्थः । सर्वमित्यादिभाष्यानुवादः स सर्वेत्यादिव्याख्या । एष इत्यादि शेषोऽक्तिः । जैमिन्यादिग्रहणस्य प्रसिध्यर्थत्वेन सावकाशत्वं मन्वान आह ॥ **विरुद्धानां चेति** ॥ स्वशिष्याणां प्रसिध्यर्थं मतमात्मीयमंशतः । विज्ञातं तैर्जगादात्र तारतम्यं नृणां वदन्नित्यनुभाष्यदिशा स्मृतितात्पर्यमाह ॥ **मुनिमतानामिति** ॥ **अनेकेति** ॥ जैमिनिमतस्य पदसमन्वयायोग्यमन्दाधिकारिकवाक्यसमन्वयार्थत्वात् । तथाप्याश्मरथ्यमतस्य वैराग्यसम्पत्तिप्रागवस्थापि शिष्टाधिकारिकत्वात् । औडुलोमिमतस्य ज्ञानसम्पत्तिप्रागवस्थाविशिष्टाधिकारिकत्वात् । काशकृत्स्नस्य ज्ञानसम्पत्त्यवस्थाविशिष्टाधिकारिकत्वादित्यर्थः । उक्तं च सुधायाम् । नृणामल्पाधिकारिणामवस्थातारतम्यं वदन्निति ॥ **अत इति** ॥ भगवतः सर्वशब्दमुख्यार्थत्वे बाधकाभावादित्यर्थः ॥

## अभिनवचन्द्रिका

**विरुद्धानां त्विति** ॥ प्रतिज्ञासिध्यर्थं कर्मादिप्रतिपादकत्वम्, अन्तःकरणशुध्यर्थं तत्, तथा ध्येयस्वरूपनिरूपणार्थं तदिति मतानां परस्परं विरोधः । एकस्य वास्तवत्वे अन्ययोस्तदयोगादिति भावः ॥ **अनेकाधिकारीति** ॥ यस्य ज्ञानमिवाऽन्यदपि मोक्षसाधनमिति भ्रमः तं

(अभिनवचन्द्रिका)

प्रत्याद्यं समाधानम्, यस्य तु ज्ञानतुल्यतया तन्मोक्षसाधनमिति भ्रमः, तं प्रति द्वितीयम् । यस्य तु न भगवज्ज्ञानं मोक्षसाधनं दैत्यानां तद्भावेऽपि मोक्षादर्शनादिति भ्रमः, तं प्रति तृतीयम् । तथा च अधिकारिभेदेन त्रिविधस्यापि प्रयोजनस्य सिद्धये वेदानां प्रवृत्तत्वेन, प्रयोजनत्रयस्यापि वास्तवत्वान्न मतानां विरोध इति भावः ।

**पूर्वपक्षस्तु** – आकाशादिशब्दवाच्यो न विष्णुः आकाशादीनामात्मादिकार्यत्वश्रवणात् । न च परमात्मनः तत्सम्भवति । 'न जायते म्रियते' इत्यादिश्रुतेः । किं च लोके तावद्भिन्नयोरेव कार्यकारणभाव उपलब्धः, न त्वभिन्नयोरिति आत्माकाशयोरभिन्नत्वात् कार्यकारणभावो विरुद्धः । न चाकाशादिसम्भवस्य तदधीनत्वेन सम्भूतशब्दोपपत्तिरिति वाच्यम् । सुतोत्पत्तौ जनके जातशब्दप्रयोगादर्शनात् । अपि च आकाशादिगतरूपस्य अन्यगतसम्भवनियामकत्वे आत्मरूपस्याऽनुपयोगात् आत्मन इत्यस्यानन्वयः स्यात् । तस्मादात्मशब्दोदितस्यैव मुख्य-कारणस्य विष्णुत्वं न त्ववान्तरकारणानामाकाशादीनामिति न समन्वयसूत्रं युक्तमिति ।

**सिद्धान्तस्तु** – कार्यत्वे सति कारणत्वाभिधायकाऽऽकाशस्सम्भूत' इत्यादि श्रुतिभाग-गताकाशादिशब्दोदितो हरिरेव । 'नामानि सर्वाणि यमविशन्ति' इति श्रुतेः । न च कार्यकारणभाव विरोधः आकाशाद्युत्पत्तावाकाशान्तर्गतत्वेन भगवतोऽभिव्यक्त्या कार्यत्वस्य वाय्वादिरूपाभिव्यक्तिहेतुत्वेन कारणत्वस्य चोपपत्तेः । नन्वथापि परमात्मनः सर्वशब्दवाच्यत्वं न सम्भवति, तथात्वे लोकव्यवहाराभावापातादिति चेत्, न मुख्यतः परमात्मवाचकानां शब्दा-नाम्, अन्यत्र व्यवहारार्थं समाकृष्य परमेश्वरेण सङ्केतितत्वेन व्यवहारोपपत्तेः । ननु यदि परमात्मनि शब्दाः मुख्याः अन्यत्रामुख्याः तर्हि परमात्मन्येव प्रसिध्या भाव्यम् । कथमन्यत्र-प्रसिद्धिरिति चेत्, न लोकस्य बहिर्मुखत्वेन जगत्येव व्यवहारात् । तच्छ्रोतृणां तत्र व्युत्पत्त्या प्रसिद्धिः । परमात्मनि तु व्युत्पत्त्यभावेन प्रसिध्यभावोपपत्तेः । ननु अस्तु प्रवृत्तिनिमित्त-स्वामित्वात्परमात्मनः मुख्यतः शब्दवाच्यत्वं, तथापि न तस्यैव, किन्तु जीवमुख्यप्राणयोरपि । तयोः सर्वस्वामित्वस्य 'अस्य यदैकां शाखां जीवो जहाति, वायुना वै (हि) सर्वे लोका नेनीयन्ते' इत्यादिश्रुतिसिद्धत्वादिति चेत्, न श्रुतीनां तदन्तर्गतभगवद्विषयतया 'उपासात्रै-विध्यात्' इति व्याख्यानात् । ननु यत्तावदुक्तं समाकर्षेण वाच्यत्वादेकस्य मुख्यवाच्यत्वम्, अन्यस्य तु स्वतो वाच्यत्वात् परममुख्यवाच्यत्वमिति । तदयुक्तम् । वेदस्य काम्यफलार्थम-

(अभिनवचन्द्रिका)
प्रवृत्तत्वेन समाकर्षप्रयोजनाभावात्, एकस्य वाच्यत्वमेव नेति अन्यस्य विष्णोः मुख्यत एव न तु परममुख्यतो वाच्यत्वमिति चेत्, न युक्तमेव समाकर्षेण वेदः कर्मादिकं वदतीति । कर्मादिज्ञानस्य भगवज्ज्ञानरूपप्रयोजनसद्भावादिति जैमिनिराचार्यो मन्यते । कुतः कर्मादिज्ञानस्य भगवज्ज्ञानार्थमिति चेत्, सर्वमिदं कर्मादिकं 'कस्मिन्विज्ञाते विज्ञातं भवति, इति विज्ञातस्याप्यस्य फलं कस्मिन्श्चिज्ज्ञाते भवति, तज्ज्ञानमात्रस्याफलत्वादिति शौनकप्रश्ने सर्वमपरविद्यया विज्ञातं भवति । विज्ञातं च परविद्याविषयपरमात्मज्ञानेन सफलं भवतीत्यङ्गीरसो व्याख्यानात् । तथा 'कथं नु भगवः स आदेशो भवति' इति श्वेतकेतुप्रश्ने 'यथा सोम्यैकेन' इत्युद्दालकव्यख्यानात् । न केवलमर्थत एव कर्मादिज्ञानस्य भगवज्ज्ञानार्थत्वं गम्यते, अपि च एवमेके शाखिनः पठन्ति । 'यस्तं न वेद किमृचा करिष्यति' इति । ननु परमात्मज्ञानाय कर्मादिप्रतिपादनस्यावश्यकत्वात्समाकर्ष इत्ययुक्तम् । अन्यवचनेऽपि परमात्मप्रतिपादनमात्रेण तज्ज्ञानसम्भवादिति चेत्, उच्यते न केवलं परमात्मनि श्रुतेः पदसमन्वयो विवक्षितः, किन्तर्हि वाक्यसमन्वयोऽपि । न चासावन्यत्र समाकर्षाभावे सिध्यतीति समाकर्षो वक्तव्य इति । ननु परमात्मज्ञानार्थं कर्मादिकमुच्यत इति उक्तं, तत्केन प्रकारेणेति चेत्, इत्थम् – 'नान्यः पन्था अयनाय' इति ब्रह्मज्ञानेन मोक्षः प्रतिज्ञातः तत्सिध्यर्थं कर्मादिकं सपरिकरं निरूप्य तस्यानित्य दुःखशिरस्कफलकत्वमुच्यते । यत एवं कर्मादिकमनित्यफलकम्, अतः 'नान्यः पन्था अयनाय विद्यत' इति सिद्धमित्येवंरूपेण कर्मवचनस्योपयोग इति आश्मरथ्याचार्यो मन्यते । उत्क्रमिष्यतो मुमुक्षोः ज्ञानसाधनतया कर्मादिकं भाव्यमिति कर्मादिवचनमावश्यकमित्यौडुलोमिराचार्यो मन्यते । सर्वं परमात्मन्यवस्थितमिति वक्तुं तद्वचनमिति काशकृत्स्नायाचार्यो मन्यते । अतो भगवज्ज्ञानार्थं वैदिकशब्दानामन्यत्र समाकर्षेण व्यवहारोपपत्तेर्युक्तं हरेः सकलशब्दपरममुख्यार्थत्वमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**रीत्यन्तरेणेति** ।। सर्वाश्रयत्वादिप्रकारकभगवद्ज्ञानं प्रकारतया भासमानसर्वाश्रयत्वस्याधेयसर्वज्ञानसापेक्षत्वात्प्रतिपादकतयेत्यर्थः । कर्मादिकम् आधेयतया व्यवच्छेदेन स्थितम् । स्वसाधारणोत्पत्यादौ तदायत्तमिति यावत् ।। सर्वमित्यादिव्याख्या एष सेतुरित्यादिशेषोक्तिः । आश्रयादिरूपमित्यादिपदेनोत्पाद्य नियम्यविनाश्यादीनां ग्रहणम् । तदुक्तं सत्तर्कदीपावल्याम् ।

(वाक्यार्थमुक्तावली)
किन्तु तत्सर्वं यथायोग्यं ब्रह्मण्युत्पत्तिस्थितिसंहारनियमनज्ञानाज्ञानबन्धमोक्षवत्त्वेन तच्छक्त्यंशावस्थितमिति सर्वाश्रयत्वेन ब्रह्मविज्ञानार्थश्रेति भावेन भावात् स्थितेरित्यादिनेति । मतान्तरापेक्षया वाशब्दः । सूत्रे शब्दानामन्यार्थजगद्वाचित्वमित्यस्ति । अवस्थितेरिति तद्वचनं लभ्यते । तादर्थ्ये च षष्ठी । सर्वं कर्मादिकं ब्रह्मण्यवस्थितं तच्छक्त्यंशावच्छेदेनावस्थितम् । अतः सर्वाधारत्वादिरूपेण ज्ञातव्य इत्येष सेतुरित्यादौ वक्तुं वेदानामाधेयादिरूपकर्मादिजगद्वाचित्वमतः साक्षात्परमात्मज्ञाने प्रकारार्थतयोपयोगित्वमिति काशकृत्स्नाचार्यो मन्यत इत्यर्थः ॥ **विरुद्धानामिति** ॥ अविरोधे मतभेदो न स्यादिति भावः । 'स्वशिष्याणां प्रसिध्यर्थं मतमात्मीयमंशतः । विज्ञातं तैर्जगादात्र तारतम्यं नृणां वदन् । इत्यनुभाष्यं मनसि निधाय स्मृतितात्पर्यमाह ॥ **मुनिमतानामिति** ॥ **अनेकेनेति** ॥ जैमिनिमतस्य पदस्थविषयत्वात् औडुलोमिमतस्य जिज्ञासुत्वावस्थाविशिष्टाल्पाधिकारिविषयत्वात् काशकृत्स्नमतस्य ज्ञानित्वावस्थाविशिष्टाल्पाधिकारिविषयत्वादित्यर्थः । तदुक्तं सुधायाम् नृणाम् अल्पाधिकारिणाम् अवस्थातारतम्यं वदन्निति । स्मृतौ कृष्णद्वैपायनेन मतात् ज्ञातात् प्रमेयाद्विभक्तैकदेशविद इत्यर्थः । यथा प्रज्ञमित्यस्य तत्कालीनप्रज्ञानुसारेणेत्यर्थः ।

अथवा आद्ये शब्दानां कल्पनासूत्रन्यायेन विष्णोरितरत्र च वृत्तिसाम्यप्रसक्तौ समाकर्षोक्त्या तन्निरासः । समाकर्षेणान्यत्रामुख्यत्वेऽन्यत्र रूढिज्ञापकप्रसिद्धिविरोधः । भगवति योगसाधकत्वेनोक्तस्वातन्त्र्यस्यान्यनिष्ठत्वप्रापकप्रमाणविरोधः । समाकर्षप्रयोजनाभावविरोध इति शङ्कायां तत्परिहाराय शङ्कादौर्बल्यक्रमेण सूत्रत्रयम् । पश्चमे भगवद्ज्ञानार्थम् अन्यवचनमिति जैमिनिनोक्तौ अन्वचनं विना प्रतिपदसमन्वयेन भगवद्ज्ञानस्यान्यथासिद्धिशङ्कायां मन्दाधिकारिणां ज्ञानस्य वाक्यान्वयं विनासिद्धेः वाक्यान्वयसिध्यर्थमन्यवचनमित्युक्तिः । कर्मवाक्यानां केन प्रकारेण भगवद्ज्ञानपर्यवसानमिति शङ्कायां कर्माद्यसारतानिरूपणेन वैराग्योत्पादनद्वारा ज्ञानाभिमुख्यसम्पादकतया वा ज्ञानोपादानान्तःकरणशोधककर्मस्वरूपनिरूपकतया वा साक्षात् ज्ञानापेक्षितप्रकारसमर्पकतया वेति ज्ञानोपयोगाधिक्यक्रमेण त्रैविध्यजिज्ञासुत्वज्ञानित्वरूपाधिकार्यवस्थाक्रमेण वा ज्ञानोपयोगसमर्थकसूत्रक्रमः ।

## तत्त्वसुबोधिनी

ननु जैमिन्यादिमतमेव स्वमतमित्यत आह ॥ **एतेषामेवेति** ॥ किञ्चैषाम् एकमतत्वं न

(तत्त्वसुबोधिनी)
सम्भवतीत्याह ॥ **विरुद्धानामिति** ॥ अविरोधे मतभेदो न स्यादिति भावः । एकमतत्वं कुतो नेत्यत आह ॥ **एकस्येति** ॥ ननु विरुद्धप्रकाराणां कथमेकाधिकारिनिष्ठत्वम् अत आह ॥ **अनेकाधिकारिविषयत्वादिति** ॥ ब्रह्मज्ञानार्थित्वाभावेन स्वर्गाद्यर्थित्वावस्थाविशिष्टाल्पाधिकारिविवक्षया अश्मरथ्यमतम् । ब्रह्मजिज्ञासुत्वावस्थाविशिष्टाल्पाधिकारित्वविवक्षया औडुलोमि मतम् । ज्ञानित्वावस्थाविशिष्टाल्पाधिकारिणत्वाविवक्षया काशकृत्स्नमतभेदोपपत्तेः न विरोध इति भावः । अत्राद्ये सूत्रे परमात्मापेक्षया अन्येषां तत्तच्छब्दवाच्यत्वोक्तिः । द्वितीये जगति शब्दप्रसिद्धेरन्यथासिध्युक्तिः । तृतीये तत्तच्छब्दवाच्यत्वे नियामकस्य तदधीनत्वस्यान्यनिष्टत्वपरिहारः । चतुर्थे वैदिकशब्दानां कर्माद्यन्यपरत्वस्य ब्रह्मज्ञानरूपप्रयोजनोक्तिः । पञ्चमे मन्दाधिकारिणां ब्रह्मज्ञानाय तदुक्तिरावश्यकत्वे वाक्यान्वयरूपहेतूक्तिः । षष्ठे कर्मादिवचनस्याब्रह्मज्ञानार्थत्वोक्तिः । सप्तमे प्रकारान्तरेण कर्माद्युक्तेः ब्रह्मज्ञानार्थत्वोक्तिः । अष्टमे सर्वाधारत्वादिप्रकारकज्ञानार्थं कर्माद्युक्तिरिति सूत्रक्रमः ।

## वाक्यार्थमञ्जरी

कर्मादिर्ब्रह्मण्यनवस्थानात्तदाधारत्वेन ब्रह्मज्ञानार्थमाभेयं कर्मादि वेदेनोच्यत इति काशकृत्स्नाचार्यो मन्यत इत्यर्थः । अयुक्तं चेत्याह ॥ **विरुद्धानामिति** ॥ **अनेकाधिकारिविषयत्वादिति** ॥ ब्रह्मज्ञानार्थित्वाभावेन स्वर्गाद्यर्थित्वावस्थाविशिष्टाल्पाधिकारिविवक्षया आश्मरथ्यमतम् । ब्रह्मजिज्ञासुत्वावस्थाविशिष्टाल्पाधिकारिविवक्षयौडुलोमिमतम् । ज्ञानित्वावस्थाविशिष्टाल्पाधिकारिविवक्षया काशकृत्स्नमतमित्यनेकाधिकारिविषयत्वान्मतभेदोपपत्तेर्न विरोध इत्यर्थः ।

॥ इति **समाकर्पाधिकरणम्** ॥

## ६. प्रकृत्यधिकरणम्

स्त्रीशब्दा अपि तस्मिन्नेवेत्याह–

**॥ ॐ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॐ ॥ २४ ॥**

'हन्तैतमेव पुरुषं सर्वाणि नामान्यभिवदन्ति यथा नद्यस्स्यन्दमानाः समुद्रायणाः समुद्रमभिविशन्त्येवमेवैतानि नामानि सर्वाणि पुरुषमभिविशन्ति' इति प्रतिज्ञादृष्टान्तानुपरोधात्प्रकृतिशब्दवाच्योऽपि स एव ॥

## सत्तर्कदीपावली

ननु परमपुरुषे स्त्रीवाचकशब्दासम्भवात् । न ततः समाकर्षः स्त्रीषु तेषां किन्तु तास्वेव मुख्यास्ते इति पूर्वपक्षं प्रतिक्षिपतीत्याह **॥ स्त्रीत्यादिना ॥** प्रकृतं परमपुरुषमेव सर्वाणि नामानि सर्वतो मुख्यतश्च वदन्तीति प्रतिज्ञाय नदीवन्मध्ये स्थिरचरव्यवहारान् घटयन्त्यपि परमपुरुषैकायनस्वप्रवृत्तिनिमित्तधर्माण्यतः तमेव सर्वतो मुख्यतश्च वदन्तीति दृष्टान्ताभिधानात् । प्रकृतिशब्दमुक्यार्थोऽपि स एव । एवं सति तयोरनुपरोधात् । अन्यथोपरोधादित्यर्थः ।

## तत्त्वप्रदीपिका

यद्यपि परत्वावरत्वादिकमपेक्षाभेदादेकत्र युगपदुपलभ्यते । एकबहुभावः कार्यकारणभावश्च कथञ्चियुज्यते । न तथा स्त्रीपुम्भावो युगपदेकत्र दृष्टः । तस्मान्न स्त्रीशब्दाभिधेयः परमपुमानित्यत आह 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' । स्त्रीशब्दा अपीत्यादिभाष्योदितः प्रकृतिश्चेति चकारार्थः । न केवलं प्रकृतिशब्देनैव वाच्य इत्युच्यते । स्त्रीशब्दानां सर्वेषामपि वाच्य एवेति । 'पुरुषमभिविशान्ति' इति । मुख्यवाचकत्वेन विशन्तीत्यर्थः । अभिवदन्तीति प्रतिज्ञातत्वात् ॥

## तत्त्वप्रकाशिका

अत्र स्त्रीलिङ्गत्वलिङ्गेनान्यत्रैव प्रसिद्धानां स्त्रीशब्दानां परमात्मनि समन्वयप्रतिपादनादस्ति शास्त्रादिसङ्गतिः । समन्वयसूत्रे सर्वशब्दानां भगवत्परत्वमुक्तम् । सर्वान्तर्गताः प्रकृत्यादिशब्दाः श्रूयन्ते 'एषा ह्येव प्रकृतिरविकृतिर्या प्राणेन संविशत्यदितिर्देवतामयी' इत्यादौ । तेषां चान्यपरत्वे न सर्वशब्दाभिधेयत्वं परमात्मनः सिद्ध्यतीत्यवश्यं निर्णेयता । तत्प्रकृत्यादिशब्दवाच्यं विषयः । किं विष्णुरन्यद्वेति सन्देहः । समन्वयसूत्रमन्यत्रैव प्रसिद्धिश्च सन्देहबीजम् । न

(तत्त्वप्रकाशिका)

**प्रकृत्यादिशब्दवाच्यो हरिरिति पूर्वः पक्षः । प्रकृत्यादिशब्दानां स्त्रीलिङ्गत्वात् । परमपुरुषे च तदयोगात् । न च रूपविशेषापेक्षयोपपत्तिः । 'नैनं वाचा स्त्रियं ब्रुवन्' इति तस्य स्त्रीत्व-निषेधात् । न च नपुंसकशब्दप्रवृत्तिवत्परमात्मनि स्त्रीशब्दप्रवृत्तिः । नियामकविशेषाभावेन कल्पनाऽयोगात् । न चाऽस्त्यस्त्रीभूतस्यापि स्त्रीनियामकत्वेन तच्छब्दवाच्यत्वोपपत्तिः । वशीकृतभार्येऽपि भर्तरि तत्प्रयोगादर्शनात् । न च नामानि सर्वाणीत्यादिविरोधः । उक्त-न्यायविरोधेन तत्सङ्कोचोपपत्तेः । अतः प्रकृत्यादिशब्दानां परमात्मवाचित्वाभावान्न समन्वय-सूत्रमुपपन्नमिति । सिद्धान्तयत्सूत्रमवतारयति ॥ स्त्रीशब्दा इति ॥ एवं प्राप्तं पूर्वपक्षं प्रतिक्षेप्तुं स्त्रीशब्दा अपि परमात्मनि प्रवर्तन्त इति साधयत्यत्र सूत्रकारः इत्यर्थः । सूत्रं व्याचष्टे ॥ हन्तेति ॥ प्रकृत्यादिस्त्रीशब्दवाच्यश्चेश्वरो भवति । 'हन्तैतमेव पुरुषम्' इति श्रुतौ (परम)-पुरुषस्याशेषनामवाच्यतां प्रतिज्ञाय तत्रैव नदीसमुद्रदृष्टान्तस्योक्तत्वात् । प्रकृत्यादिस्त्रीशब्द-वाच्यताभ्युपगमे प्रतिज्ञादृष्टान्तानुपरोधादन्यथा तदुपरोधादिति भावः । हन्तेत्यास्वादने । प्रकृतिपदमन्योपलक्षकम् । प्रधानस्त्रीनामत्वात्तद्ग्रहणम् ॥**

## गुर्वर्थदीपिका

वशीकृतभार्येऽपीत्यत्र भार्यायाः स्वगृहकृत्यादौ वशीकरणेऽपि तन्निष्ठस्त्रीत्वस्य भर्त्र-धीनत्वाभावात् नास्मत्प्रतिबन्धीति ज्ञेयम् । क्षुद्रनदीनामपि स्थूलनदीद्वारा वर्षासु समुद्रं प्रत्येव गमनेन नदीनां समुद्रगमने सङ्कोचाभावात् दार्ष्टान्तिके केषाञ्चित् पदानां सङ्कोचे दृष्टान्त-दार्ष्टान्तिकभावोपरोधः स्यादिति भावेनोक्तं अन्यथा तदुपरोधादिति ।

## भावबोधः

**समन्वयसूत्र इति** ॥ अव्यवहितपूर्वाधिकरणसङ्गतिस्तु कारणत्वेनेत्युक्तकारणत्वस्यात्र 'योनिश्च हि गीयत' इति स्त्रीलिङ्गशब्दप्रवृत्तिहेतुत्वेनोपादानादिति ज्ञातव्यम् । **किं विष्णु-रिति** । 'अत्रैषा ह्येव प्रकृतिः' इत्यादिश्रुतिगतप्रकृतिशब्दवाच्यत्वं विष्णोरस्ति न वेति चिन्ता । तदर्थं विष्णोः प्रकृत्यादिस्त्रीलिङ्गशब्दवाच्यत्वे विशेषप्रमाणं तस्य प्रवृत्तिनिमित्तत्वञ्च नास्त्युता-स्तीति तदर्थं तस्य स्त्रीलिङ्गशब्दवाच्यत्वे स्त्रीलिङ्गत्वविरोधः प्राप्नोत्युत नेति । तदर्थं स्त्रीलिङ्ग-शब्दप्रवृत्तौ किं स्त्रीत्वमेव निमित्तमुत स्वदेहादेवापत्योत्पादकत्वं वेति । 'स्त्रीलिङ्गत्वम्' इत्यनु-व्याख्यानोक्तपूर्वपक्षयुक्तिमाह प्रकृत्यादिशब्दानां स्त्रीलिङ्गत्वादिति । स्त्रीलिङ्गशब्दानां च

(भावबोधः)

स्त्रीत्वनिमित्तकत्वादिति भावः ॥ **तदयोगादिति** ॥ स्त्रीत्वायोगादित्यर्थः ॥ **स्त्रीत्वनिषेधादिति** ॥ न च तत्केवलस्य लौकिकस्य वा स्त्रीत्वस्य निषेधो नाज्ञेयत्वपरम् । अन्यथा नैनमस्त्री पुमान् ब्रुवन्नित्युत्तरवाक्यविरोधादिति वाच्यम्; तथात्वे पुरुषे स्त्रीशब्दप्रयोगापातादिति भावः ॥ **नियामकविशेषाभावेनेति** ॥ नपुंसकलिङ्गब्रह्मशब्दवाच्यत्वे 'तदेव ब्रह्म परमं कवीनाम्' इति श्रुतिवत् स्त्रीलिङ्गशब्दवाच्यत्वे विशेषमानाभावादित्यर्थः ॥ **प्रकृत्यादिशब्दवाच्यश्चेति** ॥ एतेन न केवलमाकाशादिशब्दवाच्यः किन्तु प्रकृत्यादिशब्दवाच्यश्चेति सौत्रशब्दः प्रकृत्यादिशब्दवाच्योऽपीति भाष्येण व्याख्यात इत्युक्तं भवति ॥ **दृष्टान्तस्योक्तत्वादिति** ॥ तथा च नामानि सर्वाणीत्येतदपेक्षयास्य विशेषश्रुतित्वमिति भावः । सूत्रे प्रकृतिशब्दस्यैवोपादानात् कथं स्त्रीशब्दा अपीति भाष्ये उक्तमित्यत आह **प्रकृतिपदमिति** ॥

## भावदीपः

स्त्रीलिङ्गत्वमित्यनुभाष्यसूचितलिङ्गेनाऽन्यत्रैव प्रसिद्धिमाह ॥ **स्त्रीलिङ्गत्वेति** ॥ अत्र अधिकरणे । स्त्रीशब्दानां स्त्रीलिङ्गशब्दानामित्यर्थः । तत्तु समन्वयादिति सर्वशब्दानां परमेश्वरे समन्वय उक्त इत्यानुमानिकसूत्रभाष्येणोक्तप्रायत्वादत्र भाष्येऽनुक्तां पूर्वसङ्गतिं स्वयमाह ॥ **समन्वयसूत्र इति** ॥ श्रूयते श्रुतौ प्रतीयते ॥ **एषेति** ॥ यद्यपीयं श्रुतिः तृतीये कामादितरत्र तत्र चायतनादिभ्य इत्यत्र भाष्ये श्रीतत्वपरत्वेनोदाहृता तथाप्येतत्पादीयोदाहरणानां मुख्यवृत्त्याऽन्यपराणामपि सतां परममुख्यवृत्त्या ब्रह्मपरत्वस्याभिमतत्वादियमत्रोदाहृता । अत एव द्वितीये तेजोऽतस्तथाह्याहेत्यादौ भूतपरत्वेनोदाहृतैव कारणत्वेन च इत्यत्राप्युदाहृतेति ध्येयम् । या प्राणेनेति काठके अदितिशब्दः । न केवलं सिद्धान्तेऽप्यन्यपरा एवाऽत्रोदाहरणं किन्तु अन्यपरत्वरहिता उपनिषदादिगता भगवन्मात्रपराऽपि स्त्रीलिङ्गशब्दयुक्ताः श्रुतय इति सूचयितुमेतत् श्रुत्युक्तिः । तेन छन्दोनयाद्युक्तगायत्र्यादिश्रुतिरप्यनेन रूपेणात्रोदाहरणमिति सूचितम् । अन्यपरत्वे अन्यमात्रपरत्वे । औपनिषदशब्दाभिप्राये तु यथा श्रुतमेव योज्यम् । यद्वाऽन्यपरत्वेऽपि विष्णुपरत्वाभाव इत्येवार्थः । विष्णुरन्यद्वेति संशयेऽपि विष्णुर्भवति न वेत्येवार्थः । अत एव न प्रकृत्यादिशब्दवाच्यो हरिरित्येव पूर्वपक्षकोटिरग्रे वक्ष्यते । तथाऽन्यपरभगवन्मात्रपरद्विविधवाक्यसाधारणमेतदिति ध्येयम् । अनुभाष्योक्तां युक्तिमाह ॥ **स्त्रीलिङ्गत्वादिति** ॥ स्त्रीलिङ्गवाचित्वादित्यर्थः । नारायण्यादिरूपविशेषे स्त्रीलिङ्गत्वं युज्यत इत्याशङ्क्य तत्र श्रुतिविरोधमाह

(भावदीपः)

॥ **न च रूपेति** ॥ ननु 'नैनं वाचा स्त्रियं ब्रुवन्नैतमस्त्री पुमान्ब्रुवन् । पुमांसं न ब्रुवन्नेनं वदन्वदति कश्चन' इति मन्त्रे पुमांसं स्त्रियं च वदन्नेव न वदतीत्युक्तत्वादुभयात्मकं स्वरूपं प्रतीयते । अस्त्रीपुमानिति ब्रुवन्नपि न वदतीत्युक्तत्वात् स्त्रीत्वं पुंस्त्वं च प्रतीयते । विष्णो- लौकिकस्त्रीपुंविलक्षणत्वादस्त्रीपुमानित्यपि वदन्नपि वदतीत्याद्यैतरेयभाष्योक्त्या केवलस्य लौकिकस्य वाऽस्त्रीत्वस्य निषेधपरं तद्वाक्यम् । अन्यथा नैनमस्त्री पुमान् ब्रुवन्नित्युत्तरवाक्य- विरोधात् । तथा च रूपविशेषस्य स्त्रीत्वे श्रुतिविरोधाभावात्तदपेक्षया प्रकृत्यादिशब्दोपपत्तिरिति चेन्न पुंरूपे स्त्रीशब्दाप्रयोगापातात् । तथा च त्रिपादस्यामृतं दिवीत्युक्तश्वेतद्वीपादिस्थ- नारायणादिपुंरूपे छन्दोनयोक्तगायत्र्यादिशब्दोक्तिर्न स्यादिति तात्पर्यात् । ननु देवतादि- खट्वादिशब्दवाच्येषु स्त्रीलिङ्गाभावेऽपि स्त्रीलिङ्गशब्दवाच्यत्वं शब्दसाधुत्वमात्रेण युक्तं तद्वदिह स्यादिति चोद्यं सदृष्टान्तमुक्त्वा प्रतिज्ञादृष्टान्तेत्यादिसूत्रत्रयोक्तहेतुव्यावर्त्यहेतुना निराह ॥ **न च नपुंसकेति** ॥ ननु चमसवदविशेषादित्यादावुक्तस्य नामानि सर्वाणि इत्यादेरेव नियमाकत्वा- दित्यतो विशेषेत्युक्तम् । तत्तु सामान्यं वक्ष्यमाणदिशा सङ्कुचितसर्वनामपरमिति भावः ।

यद्वा बृहन्तो ह्यस्मिन्गुणा इत्यादेर्गुणपूर्णत्वरूपब्रह्मपदवाच्यत्वनियामकस्येवेह प्रकृत्यादि- स्त्रीलिङ्गशब्दप्रवृत्तिनिमित्तरूपनियामकविशेषस्याभावादित्यात्मकृतेरित्यादिसूत्रद्वयव्यावर्त्योक्तिः । तदधीनत्वसूत्रेण गतार्थत्वमाशङ्क्य निराह ॥ **न चाऽस्त्रीभूतस्यापीति** ॥ एतद्वाक्यं पूर्ववद्द्वेधा व्याख्येयम् ॥ **उक्तेति** ॥ स्त्रीलिङ्गायोगरूपन्यायेनेत्यर्थः ॥ **अत इति** ॥ साधकाभावादित्यर्थः । पूर्वपक्षफलमाह ॥ **नेति** ॥ हरौ स्त्रीशब्दप्रवृत्त्युक्तेरसाङ्गत्यनिरासाय भाष्यार्थमाह ॥ **एवमिति** ॥ आकाङ्क्षाक्रमेण भाष्यं व्याचष्टे ॥ **प्रकृत्यादीति** ॥ सूत्रभाष्ययोः प्रकृतिशब्दस्तदादिस्त्रीलिङ्ग- शब्दमात्रोपलक्षणमित्यग्रे व्यक्तत्वादादिपदम् ॥ **वाच्यश्चेति** ॥ न केवलं प्रागुक्तलिङ्गशब्द- वाच्यश्चेति सौत्रचशब्दार्थोक्तिपरभाष्यस्थापिशब्दार्थो दर्शितः । ननु सर्वस्त्रीशब्दसमुच्चायक- श्चशब्द इति तत्वप्रदीपोक्तेरत्र पुनः सर्वपुल्लिङ्गशब्दसमुच्चायकत्वोक्तौ कथं सर्वस्त्रीशब्दलाभ इत्यतोऽस्मिन् व्याख्याने तल्लाभप्रकारमाह ॥ **प्रकृतिपदमिति** ॥ एतेन स्त्रीशब्दा अपीति सम्बन्धभाष्यमुपपादितमिति ध्येयम् ॥

## अभिनवचन्द्रिका

**स्त्रीशब्दानामिति** ॥ यद्यप्यत्र प्रकृत्यादिशब्दानामिति वक्तव्यं तथापि स्त्रीवाचकशब्दत्व-

(अभिनवचन्द्रिका)

मधिकरणोपाधिरिति द्योतनाय भाष्ये 'स्त्रीशब्दा' इत्युक्तमिति अत्रापि स्त्रीशब्दानामित्युक्तम् ॥ **प्रकृत्यादिशब्दाः श्रूयन्त इति** ॥ अनेन समन्वयसूत्रप्रतिपाद्यशब्दराश्यन्तर्गतप्रकृत्यादिशब्द-निर्णायकत्वमस्याधिकरणस्य तेन सङ्गतिरित्युक्तं भवति ॥ **प्रकृत्यादिशब्दानां स्त्रीलिङ्ग-त्वादिति** ॥ तेषां च उत्सर्गतः स्त्रीत्वाधिकरणवाचित्वादिति भावः । **नियामकविशेषाभावेति** ॥ 'तदेव ब्रह्म परमं कवीनाम्' इति नपुंसकशब्दवाच्यत्वे नियामकविशेषवत् अत्र नियामक-विशेषाभावादित्यर्थः ॥ **न चास्त्रीभूतस्यापीति** ॥ अप्रकृत्यादिरूपस्येत्यर्थः ॥ **उक्त-न्यायविरोधेनेति** ॥ परमात्मा 'एषा ह्येव प्रकृतिः' इत्यादिश्रुतिगतप्रकृत्यादिशब्दवाच्यो न स्त्रीलिङ्गशब्दवाच्यताव्यापकस्त्रीत्वशून्यत्वादित्युक्तन्यायविरोधेनेत्यर्थः ॥ **प्रकृतिपदमन्योपलक्षक-मिति** ॥ उपलक्षकमिवोपलक्षकम् । यथोपलक्षकं काकपदं दध्युपघातकानामुपस्थापकं, तथा प्रकृतिपदमुदाहरणत्वात् न्यायविषयशब्दान्तरस्मारकमिति भावः । एतेन प्रकृतिपदस्य शब्दान्तरोपलक्षकत्वे प्रकृतिः परमात्मेत्युक्ते स्त्रीवाचकः शब्दः परमात्मेति वाक्यार्थः स्यादिति परास्तम् ।

## वाक्यार्थमुक्तावली

**समन्वयसूत्र इति** ॥ परमपुरुषे स्त्रीवाचकशब्दायोगान्न ततः समाकर्ष इत्याक्षेपा-दनन्तरसङ्गतिः ॥ **या प्राणेनेति** ॥ एष ह्येव प्रकृतिरिति श्रुतेः । कामादितरत्रेति सूत्रे श्रीतत्त्व-परत्वेनोदाहरणेऽपि एतत्पादीयविषयवाक्यानामन्यपरत्वमविज्ञाय मुख्यवृत्या भगवत्परत्वा-त्समन्वयो न युज्यते ॥ या प्राणेनेति काठकवाक्यस्य भगवदेकपरत्वनिर्णयादमुख्यतोऽप्यन्य-परत्वादेतत्पादे समन्वयो न घटत इति चेन्न । उपक्रमादिबलादिति प्रातिपदिकस्य भगवत्परत्व-सम्भवेऽप्यन्तरङ्गस्त्रीप्रत्ययबलान्न भगवत्परत्वमिति स्त्रीलिङ्गत्वेन रूपेण भगवत्परत्वाभावचोदने स्त्रीत्वघटनेन निर्णयोपपत्तेः । अस्मिन्पादेऽन्यपरत्वमभ्युपेत्यैव भगवति समन्वय इत्यस्या-प्रायिकत्वात् । अस्मिंश्चाधिकरणे प्रकृत्यादिशब्दे विनियमस्याबाधाच्चेति ॥ **विष्णुरन्यद्वेति** । अत्र नामानि सर्वाणीति श्रुतिसङ्कोचेन प्रकृत्यादिशब्दवाच्यमुत रूढियोगज्ञापकसद्भावासङ्कोचेन विष्णुरिति । तदर्थं स्त्रीलिङ्गस्य ब्रह्मणि किमसाधुत्वमयुक्तमुतयुक्तमिति ॥ **न प्रकृत्यादीति** ॥ ननु संशयानुसारेणान्यदिति पूर्वपक्षयितव्यम् । सत्यं किं त्वन्य इत्याध्याहारोपपत्तेः । यद्वा सिद्धान्तिनाप्यन्यपरतयाङ्गीकृतप्रकृत्यादिविवक्षया संशयकोट्युत्थानम् ।

(वाक्यार्थमुक्तावली)

भगवन्मात्रपरतयाभ्युगतादित्यादिशब्दे पूर्वपक्षिणस्तन्निषेधमात्रेण चरितार्थ्यादेव पूर्वपक्ष इति बोध्यम् । स्त्रिशब्दा अपीति भाष्यानुसारेण स्त्रीलिङ्गत्वमिति विवृणोति **प्रकृत्यादीति ॥ तदयोगादिति ॥** स्त्रीलिङ्गशब्दानां सस्त्रीत्वनिमित्तकत्वात्परमपुरुषे स्त्रीत्वायोगादित्यर्थः । रूपविशेषात् कार्यत्वकारणत्ववदत्रापि रूपविशेषात्पुरुषत्वस्त्रीत्वे किं न स्यातामिति कारणत्वाधिकरणेन गतार्थतामाशङ्क्य निराह **न च रूपविशेषापेक्षया इति ॥** ननु केवलस्य लौकिकस्य वा स्त्रीत्वस्य निषेधपरं तद्वाक्यमन्यथा नैनमस्त्री पुमान् ब्रुवन् इत्युत्तरवाक्यविरोधात् तथा च त्रिपादस्यामृतं दिवीत्युक्तश्चेतद्वीपादिस्थे पुंरूपे छन्दोनये गायत्र्यादिशब्दोक्तिर्न स्यादिति तात्पर्यात् **॥ न च नपुंसकेति ॥** नपुंसकलिङ्गब्रह्मादिशब्दस्य विष्णोर्नपुंसकत्वाभावेऽपि कलत्रादिशब्देष्विव प्रयोगसाधुत्वात्प्रयोगवत् स्त्रीशब्दवृत्तिरिति न च वाच्यमित्यर्थः ॥ **नियामकेति ॥** तदेव ब्रह्म एष एव ब्रह्मेत्यादिविशेषप्रमाणवदत्र प्रमाणाभावादित्यर्थः ॥ **उक्तेति ॥** स्त्रीलिङ्गायोगरूपन्यायेनेत्यर्थः ॥ **प्रकृत्यादिस्त्रीशब्दवाच्यश्चेति ॥** परमपुरुषे स्त्रीशब्दोऽनुचित इति चोदिते स्त्रीशब्दा अपि तस्मिन्नेवेति लोकरीत्यानौचित्यद्योतको वा न केवलं पुल्लिङ्गशब्दवाच्य इति समुच्चायको वा । सौत्रश्चशब्दो भाष्येऽपिशब्दश्चेति भावः । प्रकृतिपदमिति तेन स्त्रीशब्दा अपीति भाष्ये सामान्येन ग्रहणमिति भावः । सूत्रार्थस्तु स्पष्टः ।

## तत्त्वसुबोधिनी

**समन्वयसूत्र इति ॥** कारणत्वेऽप्युक्त कारणत्वस्यात्र योनिश्च हि गीयते इति स्त्रीलिङ्गशब्दप्रवृत्तिहेतुत्वेन उपादानात् अनन्तरसङ्गतिः ॥ **प्रकृत्यादिशब्दानामिति ॥** स्त्रीलिङ्गशब्दानां च स्त्रीत्वनिमित्तकत्वादिति भावः । तदयोगादिति स्त्रीत्वायोगादित्यर्थः ॥ **नैनमिति ।** एवं च वाचा वचनेन स्त्रियमिति नाब्रुवन्नित्यर्थः ॥ **स्त्रीत्वनिषेधादिति ॥** न च तत्केवलस्य लोकस्य वा स्त्रीत्वस्य निषेधेनाहेयत्वपरम् अन्यथा नैनमस्त्री पुमान् ब्रुवन्निति उत्तरवाक्यविरोधादिति वाच्यम् । तथात्वे पुरुषे स्त्रीशब्दप्रयोगापातादिति भावः । नियामकविशेषे मानाभावादित्यर्थः ॥ **प्रवृत्यादिस्त्रीशब्दवाच्यश्चेति ॥** सौत्रश्चशब्दः । प्रकृत्यादिशब्दवाच्येऽपीति भाष्ये व्याख्यात इत्युक्तं भवति ॥ **दृष्टान्तस्योक्तत्वादिति ॥** तथा च नामानि सर्वाणीत्येतदपेक्षयास्य विशेषश्रुतित्वमिति भावः । सूत्रे प्रकृतिशब्दस्यैवोपादानात् कथं स्त्रीशब्दस्यापीति भाष्ये उक्तमित्यत आह ॥ **प्रकृतिपदमिति ॥** स्त्रीवाचिशब्दानामनेकत्वात् प्रकृतिशब्दग्रहणमेव कुतः कृतमित्यत आह ॥ **प्रधानेति ॥**

## वाक्यार्थविवरणम्

**स्त्रीशब्दानामिति** ।। स्त्रीत्वप्रवृत्तिनिमित्तकशब्दानामिति व्याख्येयम् । तेन पुल्लिङ्गान्तरादि शब्दसङ्ग्रह इति ध्येयम् ।। **स्त्रीलिङ्गत्वात्** ।। स्त्रीत्वप्रवृत्तिनिमित्तकत्वादित्यर्थः ।। **तदयोगादिति** ।। प्रवृत्तिनिमित्तभूतस्त्रीत्वायोगादित्यर्थः ।। **तत्प्रयोगेति** ।। भार्याशब्दप्रयोगेत्यर्थः ।। **उक्त-न्यायेति** ।। प्रकृत्यादिशब्दानां स्त्रीलिङ्गत्वात् परमपुरुषे तदयोगादित्युक्तन्यायेनेत्यर्थः ।। **स्त्रीशब्दाः** ।। स्त्रीत्वप्रवृत्तिनिमित्तकाः शब्दा इत्यर्थः । एवमुत्तरत्रापि व्याख्येयम् ।

## वाक्यार्थमञ्जरी

स्त्रीशब्दानां स्त्रीलिङ्गवाचकशब्दानाम् ।। **एपेति** ।। स्त्रीरूपा भगवति प्रकर्षेण करोतीति प्रकृतिः विकाररहितत्वादविकृतिरित्यर्थः ।। **या प्राणेनेति** ।। या देवोत्तमाऽदनाददिति-शब्दवाच्या भगवति मुख्यप्राणेन सह देहादौ प्रविशतीत्यर्थः ।। **स्त्रीलिङ्गत्वादिति** ।। साक्षा-दपत्योत्पादकत्वरूपस्त्रीलिङ्गवाचकत्वादित्यर्थः । तदयोगात् स्त्रीलिङ्गायोगात् । नारायणादिरूप विशेषे तत्सम्भवमाशङ्क्याह ।। **न चेति** ।। **नियामकविशेषाभावेनेति** ।। नपुंसकलिङ्ग-ब्रह्मशब्दवाच्यत्वे अथ कस्मादुच्यते ब्रह्मेतिवत् स्त्रीलिङ्गशब्दवाच्यत्वे विशेषमानाभावादित्यर्थः । ॐ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॐ ।। न केवलं पुँल्लिङ्गशब्दवाच्यो हरिरपि तु स्त्रीलिङ्ग-प्रकृत्यादिशब्दवाच्यश्च हन्तैतमेवेति प्रतिज्ञा यथा नद्य इति दृष्टान्तस्तयोरनुपरोधादनुसारा-दित्यर्थः ।। **दृष्टान्तस्योक्तत्वादिति** ।। तथा च नामानि सर्वाणीत्येतदपेक्षया अस्याविशेष-श्रुतित्वमिति भावः ।। **आस्वादन इति** ।। अयमर्थः आस्वादनीय एव नोदासितव्य इत्यर्थे वर्तत इत्यर्थः ।। सूत्रे प्रकृतिशब्दस्यैवोपादानात् स्त्रीशब्दा इति कथं भाष्ये बहुवचनमित्यत आह ।। **प्रकृतिपदमिति** ।। प्रधानस्त्री रमा ।।

## सूत्रभाष्यम्

**।। ॐ अभिध्योपदेशाच्च ॐ ।। २५ ।।**

'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' (श्वे.उ. ४-१०) ।

(सूत्रभाष्यम्)

'महामायेत्यविद्येति नियतिर्मोहिनीति च ।
प्रकृतिर्वासनेत्येवं तवेच्छाऽनन्त कथ्यत' ॥ इति

वचनात्तदभिध्यैव (च) प्रकृतिशब्देनोच्यते । 'सोऽभिध्या स जूतिः स प्रज्ञा स आनन्द' इति श्रुतेरभिध्या च स्वरूपमेव ।

'ध्यायति ध्यानरूपोऽसौ सुखी सुखमतीव च ।
परमैश्वर्ययोगेन विरुद्धार्थतयेष्यत' ॥ इति ब्रह्माण्डे ॥

## सत्तर्कदीपावली

प्रकृतिशब्देन मायाभिधानात् । मायाशब्देन तदिच्छाभिधानात् स एव प्रकृतिशब्दार्थ इत्याह । अभिध्येत्यादिना । तदिच्छाभिधाने तस्य किमायातमित्यत आह ॥ **सोऽभिध्येति** ॥ न चैतदत्र विरुद्धम् ऐश्वर्ययेगादित्याह ॥ **ध्यायतीति** ॥

## तत्त्वप्रदीपिका

अभिध्यायाः प्रकृतित्वोपदेशात्स्वरूपत्वोपदेशाच्च प्रकृतिशब्दवाच्यत्वं विष्णोर्युक्तम् । जूतिः प्रेरणा । युज्यते च सुखसुख्यादिभाव ईश्वरस्य, स्वरूपस्वरूपिभाववत्प्रदेशप्रदेशिभाववच्च । यथाहीश्वरः परमाणुना सम्बध्यमानस्तादृशेनैव प्रदेशेन सम्बध्यते, नभसा सम्बध्यमानस्तु तादृशेनैव स्वरूपेण । न च तयोः प्रदेशप्रदेशिनोः परस्परभेदः । तत्स्वरूपस्याव्याप्तिप्रसक्तेः । अत एकस्यैवोभयात्मकत्वमिति । एतेनैतदपास्तम् । यदास्माकीनमीश्वरमनीश्वराः सेश्वराश्च समयिनः सावयवत्वादनित्यमव्यापिनमुपपादयन्ति । सप्रदेशस्येव सावयवस्यापि तस्य नित्यत्वव्यापित्वोपपत्तेः । कथं नु खल्विमे प्रदेशविशेषाननन्तानात्मनस्संवदमाना नावयवान् संवदेरन् । न हि वयमपि भिन्नावयवानीश्वरस्य ब्रूमः । प्रदेशविशेपवत् स्वरूपभूतानेवेति ॥

## तत्त्वप्रकाशिका

युक्त्यन्तरेण हरेः प्रकृतिशब्दवाच्यतां प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **अभिध्येति** ॥ 'मायां तु प्रकृतिं विद्यात्' इति श्रुतौ 'प्रकृतिर्वासनेत्येवं तवेच्छाऽनन्त कथ्यते' इति स्मृतौ च परमेश्वरेच्छायाः प्रकृतिशब्दवाच्यत्वोपदेशाच्चासौ प्रकृतिशब्दवाच्यो भवति । न च वाच्यं श्रुतौ मायाया एव प्रकृतिशब्दवाच्यत्वं ज्ञायते नेच्छाया इति । महामायेति स्मृतौ मायाशब्दस्यापी-

(तत्त्वप्रकाशिका)

च्छावाचकत्वोक्तेः । न चात्रोपचारः शङ्कनीयः । श्रुतिस्मृत्योरनुशासनरूपत्वादिति भावः । इच्छायाः प्रकृतिशब्दवाच्यत्वेऽपि कुतः परमात्मनस्तदित्यत आह ॥ **स इति** ॥ जूतिः प्रेरणा । नेच्छा भगवत्स्वरूपम् । मायिनं तवेच्छेति तत्सम्बन्धोपदेशादित्यत आह ॥ **ध्यायतीति** ॥

## भावबोधः

परमेश्वरेच्छायाः प्रकृतिशब्दवाच्यत्वोपदेशादिति । अनेन 'अभिध्यायाः प्रकृतित्वोपदेशात्' इति सूत्रयोजना भवति । इति श्रुतेरभिध्या च स्वरूपमेवेति, भाष्येण सूत्रं परमात्मनोऽभिध्योपदेशादिति प्रकारान्तरेण व्याख्यातमिति ज्ञेयम् ।

## भावदीपः

**युक्त्यन्तरेणेति** ॥ न केवलं प्रतिज्ञादृष्टान्तोक्तिरूपयुक्त्येत्यर्थः । तथाच नियामकविशेषाभावेनेति प्रागुक्तं प्रत्युक्तमिति भावः ॥ **प्रकृतिशब्देति** ॥ तदुपलक्षितस्त्रीशब्दमात्रवाचितायां तु प्रागुक्तं सामान्यरूपमेकं साक्षाच्चेत्यत्र वक्ष्यमाण(णा)साधारणश्रुतिश्च नियामकप्रमाणमिति भावः । भाष्ये इति वचनादित्युक्त्या सर्वमेकमिति प्रतीयते । तदपि किं श्रुतिरूपमुत स्मृतिरूपमिति न ज्ञायतेऽतस्तद्विवेचयन्नभिध्यैव चेत्यादिभाष्यवाक्येन च सूत्रे अभिध्यायाः प्रकृतित्वोपदेशाच्चेत्यर्थो विवृत इति भावेन सूत्रार्थमाह ॥ **मायां त्विति** ॥ स्मृतौ महामायेति पूर्वार्धोक्तेरुपयोगं शङ्कापूर्वं व्यनक्ति ॥ **न चेति** ॥ स्पष्टत्वाय स्मृतेरपि भाषणमिति भावः । उच्यत इत्युक्तेर्भावमाह ॥ **न चेत्यादिना** ॥ कुतः परमात्मनस्तदिति । एतेन परमात्मनोऽभिध्यात्वोपदेशात् प्रकृतिशब्दवाच्यत्वमित्यपि सूत्रार्थो दर्शितः ॥ **तत्सम्बन्धेति** ॥ मायिनमित्यत्र 'तदस्यास्त्यस्मिन्निति' मतुबर्थे 'अत इनिठनौ' 'व्रीह्यादिभ्यश्च' इति षष्ठ्याद्यर्थकेन्प्रत्ययान्तस्य सम्बन्धवाचित्वात् । तवेति षष्ठ्याः 'षष्ठी शेष' इति सम्बन्धे विधानादिति भावः ॥ **अत आहेति** ॥ एतच्चोभयव्यपदेशात्त्वहिकुण्डलवदित्यत्र तृतीये स्पष्टयिष्यत इति भावः ॥

## अभिनवचन्द्रिका

**महामायेति** ॥ **स्मृताविति** ॥ स्मृतिसमाख्यानादत्रापि स एवार्थो ग्राह्य इति भावः ।

## वाक्यार्थमुक्तावली

**युक्त्यन्तरेणेति** ॥ नामानीति श्रुतसर्वशब्दसङ्कोचेन प्रकृतिशब्दवाच्यत्वाभावे प्रतिज्ञा-दृष्टान्तविरोधो अन्यथा तदविरोध इत्युक्तयुक्त्यपेक्षयेत्यर्थः । स्मृतौ महामायेति पूर्वार्धोक्तेरुपयोगं वक्तुमाह– **न च वाच्यमिति** ॥ **न चात्रेति** ॥ कारणत्वसाम्येन गौणी न शङ्कनीयेत्यर्थः ॥ **अनुशासनेति** ॥ विद्यात्कथात इति वचनादिति भावः ॥ **इत्यत आहेति** ॥ इत्यत सूत्र-स्यार्थान्तरमाहेत्यर्थः । तथा चायं सूत्रार्थः । अभिध्यायाः प्रकृतप्रकृतिशब्दवाच्यत्वोपदेशात् परमात्मनोऽभिध्यात्वोपदेशाच्च तत्तु ब्रह्मैव प्रकृतिरिति ।

## तत्त्वसुबोधिनी

ननु देवदत्ते सिंहशब्दवत् इच्छायां मायाशब्दप्रयोगः औपचारिकः किं न स्यादित्याशङ्क्य निषेधति ॥ **न चात्रेति** ॥ **श्रुतिस्मृत्योरिति** । अन्यथा कलशादिशब्दानामपि औपचारिकत्वं स्यादिति भावः ।

## वाक्यार्थविवरणम्

उपचारः मायाशब्दस्येच्छायाम् ।

## वाक्यार्थमञ्जरी

मायामिति श्रुतावभिध्यायाः ईश्वरेच्छायाः प्रकृतित्वोपदेशाच्चेच्छास्वरूपो हरिःप्रकृति-शब्दवाच्य इत्यर्थः ॥ **उपचार इति** ॥ विद्यादित्यादेः साधारणत्वादिति भावः ॥ **तत्सम्बन्धेति** ॥ इन्प्रत्ययस्य सम्बन्धवाचित्वात्तवेति षष्ठ्याश्च सम्बन्धे विधानादिति भावः ।

## सूत्रभाष्यम्

**॥ ॐ साक्षाच्चोभयाम्नानात् ॐ ॥ २६ ॥**

'एष स्त्र्येष पुरुष एष प्रकृतिरेष आत्मैष ब्रह्मैष लोक एष आलोको योऽसौ हरिरादि-रनादिरनन्तोऽन्तः परमः पराद्विश्वरूप' इति पैङ्गिश्रुतौ साक्षादेव प्रकृतिपुरुषत्वाम्नानात् ॥

## सत्तर्कदीपावली

न च केवलमिच्छाद्वारैव प्रकृतित्वमाहागमो भगवतः किं तर्हीत्यत आह ।। **साक्षाच्चेति** ।। स्त्र्यादौ विश्वस्मिन् रूपाण्यस्येति स्त्र्यादेः विश्वस्य रूपमिव रूपमस्येति वा विश्वरूपः ।

## तत्त्वप्रकाशिका

तथापि नेश्वरस्य प्रकृतिशब्दवाच्यत्वम् । सर्वाणि नामानीत्येवं रूपेण विना साक्षात्प्रकृतिशब्दवाच्यत्वे श्रुत्याद्यभावात् । सर्वशब्दस्य तु सङ्कोचसम्भवात् । न चातीतसूत्रे तदप्युक्तमिति वाच्यम् । इच्छाद्वारैव प्रकृतिशब्दवाच्यतां विना साक्षादीश्वरस्यैव तदभावादित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ।। **साक्षाच्चेति** ।। नेश्वरस्योक्तरीत्या प्रकृतिशब्दवाच्यताऽभावः शङ्कनीयः । 'एष स्त्र्येष पुरुषः' इति श्रुतौ साधारण्येन विना साक्षादेवेच्छाद्वारमन्तराऽपि प्रकृतिपुरुषशब्दवाच्यताम्नानादिति भावः । **लोक** आधारः । **आलोकः** प्रकाशरूपः ।।

## भावबोधः

**साक्षादेवेति** ।। अनेन सौत्रश्चब्द अवधारणार्थत्वेन भाष्ये व्याख्यात इत्युक्तं भवति ।

## भावदीपः

**एवं रूपेणेति** ।। प्रकृतिश्चेत्यत्रोक्तसामान्यरूपेण विना साक्षाद्विशिष्येत्यर्थः ।। **इच्छाद्वारैवेति** ।। प्रकृतिशब्दवाच्येच्छास्वरूपत्वात् प्रकृतिशब्दवाच्य इत्येवंरूपेणेत्यर्थः । साक्षात्पदेन प्रागुक्तं सामान्यपारम्पर्यरूपद्वयमपि व्यावर्त्यमिति व्यनक्ति ।। **साधारण्येन विनेति** ।। चशब्द एवार्थ इति भावेन भाष्योक्तमनुवदति ।। **साक्षादेवेति** ।। **प्रकृतीति** ।। स्त्रीशब्दमात्रोपलक्षणमेतत् ।। **पुरुषशब्देति** ।। पुल्लिङ्गशब्देत्यर्थः ।।

## अभिनवचन्द्रिका

**इति श्रुताविति** ।। इच्छाद्वारमन्तरापीत्यतः परम्, 'अर्थात्' इति शेषः । यद्यप्यत्र सूत्रे 'साक्षादाम्नानाच्च' इति वक्तव्यम् । तावतैवेष्टसिद्धेः तथाप्युभयग्रहणं यद्याम्नातं स्त्रीत्वं

(अभिनवचन्द्रिका)
नाङ्गीक्रियते, ततश्च प्रकृत्यादिशब्दवाच्यत्वं नेत्युच्यते, तर्हि तत्रैवाम्नातं पुरुषत्वं तच्छब्द-वाच्यत्वं न स्यादित्यनिष्टसूचनार्थम् ।

## वाक्यार्थमुक्तावली

साक्षादिति विशिष्येत्यर्थः ॥ **श्रुत्याद्यभावादिति** ॥ आदिपदेन प्रतिज्ञादृष्टान्तग्रहणम् । **साक्षादीश्वरस्येति** । ईश्वरः प्रकृतिरित्येवं रूपेणेत्यर्थः । सूत्रे तत्तु प्रकृतिरित्यस्ति । चोऽवधारण इत्यभिप्रेत्य साक्षादित्येतद्द्वेधा विवृण्वन् सूत्रार्थमाह– **एष इति** ॥ श्रुतावेषस्त्र्येष पुरुष इति स्त्रीपुल्लिङ्गशब्दवाच्यत्वं प्रतिज्ञायोदाहरणत्वेन प्रकृतिरेष आत्मैष इति वचनात्प्रकृत्युपलक्षित-स्त्रीलिङ्गवाच्यत्वमात्मोपलक्षितपुल्लिङ्गवाच्यताम्नानादित्यर्थः ।

## तत्त्वसुबोधिनी

नन्वियमेव तत्र मानमित्यत आह ॥ **सर्वेति** ॥ **न चातीतसूत्रे इति** ॥ अभिध्येति सूत्रे इत्यर्थः ॥ **तदप्युक्तमिति** ॥ सोऽभिध्येतिप्रमाणेन प्रकृत्यादिशब्दवाच्यत्वमुक्तमित्यर्थः ॥ **तदभावादिति** । प्रकृत्यादिशब्दवाच्यत्वोक्त्यभावादित्यर्थः । लोक आलोक इत्यनयोरर्था-प्रतीतेराह ॥ **लोक इत्यादिना** ॥

## वाक्यार्थमञ्जरी

एवं **रूपेण** सामान्यरूपेण **साक्षात्** विशिष्य । ॐ साक्षाच्चोभयाम्नानात् ॐ । साक्षाच्च सामान्यपारम्पर्ये विनैव स्त्रीशब्दवाच्यत्वपुरुषशब्दवाच्यत्वरूपोभयस्यैव श्रुतावुक्तत्वात्प्रकृत्यादि-शब्दवाच्यो हरिरेवेत्यर्थः ॥ न हीति ॥ तथात्वे गुणपूर्त्यसिद्धेरिति भावः ॥

## सूत्रभाष्यम्

**॥ ॐ आत्मकृतेः परिणामात् ॐ ॥ २७ ॥**

**प्रकर्षेण करोतीति प्रकृतिरिति योगाच्च । प्रकृतावनुप्रविश्य तां परिणाम्य (तत्परिणाम-नियामकतया तत्र) तत्परिणामेषु स्थित्वाऽऽत्मनो बहुधाकरणात् । 'अथ हैष आत्मा प्रकृतिमनुप्रविश्याऽऽत्मानं बहुधा चकार । तस्मात्प्रकृतिस्तस्मात्प्रकृतिरित्याचक्षत' इति भाल्लवेयश्रुतिः ।**

(सूत्रभाष्यम्)

'अविकारोऽपि परमः प्रकृतिं तु विकारिणीम् ।
अनुप्रविश्य गोविन्दः प्रकृतिश्चाभिधीयते' ॥ इति नारदीये ।

न चान्यत्कल्प्यम्, अप्रमाणिकत्वात् ॥

## सत्तर्कदीपावली

एवं प्रकृतिशब्दस्य प्रयोगबाहुल्यं दर्शयित्वा महायोगं च तत्र दर्शयतीत्याह ॥ **आत्मकृतेरित्यादिना** ॥ प्रकृतावनुप्रविश्य तां महदादिबहुविकारिणीं कुर्वन् कृत्वा अर्थेष्वविकारेणैवात्मानं प्रकर्षेण बहुधा च कारयन् तस्मात्स प्रकृतिः तस्मात्तं प्रकृतिरित्याचक्षत इति पुनः विद्वद्रूढिरपि तत्र दर्शिता । अनेनाभिध्योपदेशादितीच्छयैव कांश्चित्प्रकर्षेण करोतीति सूचितम् । साक्षाच्चेतीच्छापूर्वकम् । स्वदेहादिरपि कांश्चित् । एवमविकारमेव ब्रह्म स्वेच्छया स्वयं जगत्करोतीति श्रुतिरुक्ता । यत्तदेव परिणमते विश्वात्मना मृषा वा प्रतीयत इति कल्पनं तदयुक्तमित्याह ॥ **न चेति** ॥ प्रपञ्चितं चैतदनुव्याख्याने भाष्यकारैरेव ।

## तत्त्वप्रदीपिका

प्रकृतावनुप्रविश्येत्यादेरयमर्थः । आत्मीयायाः प्रकृतेः परिणामात् तत्परिणामेषु नियन्तृत्वेन स्थित्वाऽत्मनो, बहुधाकरणात्प्रकृतिरित्युच्यते । 'बहुधाकरणं' बहुधाव्यञ्जनम् । तस्माच्च विष्णुरेव प्रकृतिशब्दवाच्यः ।

अत्राऽहुः प्रकृतिशब्देनोपादानकारणं ब्रह्मात्र प्रतिपाद्यते । 'उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति' 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति प्रतिज्ञादृष्टान्तानुपरोधादिति । अत आह न चान्यत्कल्प्यमप्रमाणत्वादिति ॥ नोपादानत्वं कल्प्यं, ब्रह्मणो जगदुपादानत्वे प्रमाणाभावात् । न च 'बहु स्यां प्रजायेय' इति श्रुतौ जगदात्मतया बहुभावाभिध्यानमभिधीयते । 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति 'इमास्तिस्रो देवता अनेन जीवेनाऽत्मनाऽनुप्रविश्य' इति च वक्ष्यमाणस्य तत्र तत्र प्रवेशस्यैवाभिध्यातत्वात् । 'प्रजायेय' इति प्रजनयेयेत्यर्थः । अपरथा पौनरुक्त्यप्रसङ्गात् । 'तदनुप्रविश्य सच्च त्यच्चाभवत' इत्यादिवाक्यादपि न ब्रह्मणो जगद्भाव आशङ्कनीयः । पूर्वसृष्टे पश्चात्प्रविष्टस्य तद्भावायोगात् । 'अविकारस्सदा शुद्धो नित्य आत्मा सदा हरिः' इति चाविकारित्वे श्रुतिः । ब्रह्मोपादानत्वे च जगतश्चेतनत्वप्रसङ्गः । मृदुपादानको हि घटो

(तत्त्वप्रदीपिका)
मृदात्मको लक्ष्यते । अतो नात्र प्रमाणम् । सूत्रमत्र प्रमाणमिति चेत्, नैतदुपादानत्वं सूत्रार्थतया कल्प्यम् । प्रमाणाभावात् । न ह्यस्मिन्नध्याये सति सम्भवे समन्वयादन्यत्कल्प्यम् । समन्वयसूत्राणामन्यत्राप्रमाणत्वात् ।

अन्यस्तु मन्यते, न मृदादिवदुपादानत्वमिष्यते, किन्तु शुक्त्यादिवद्रजतादेरपरिणामेनैव । न च तावता तदुपादानभापाङ्गःप्रसङ्गी । यथा हि शुक्त्यविद्याविजृम्भितत्वाद्रजतस्य शुक्त्युपादानता कल्प्यते तथा ब्रह्माविद्याविजृम्भितत्वाज्जगतस्तदुपादानतेति । अत्रापि तदुत्तरं न चान्यदुपादानं कल्प्यम् । प्रमाणरहितत्वात् । न हि शुक्ते रजतोपादानत्वम् । न हि रजतार्थी शुक्तिकां विदन्नुपादत्ते, मृदमिव मणिकार्थी । नैतावन्तं कालमपि रजतमिहाऽसीत्, असदेव सदिति प्रत्यभादिति चोत्तरकालीनस्सार्वलौकिकः प्रत्ययस्तस्योत्पत्तिं निवारयति । कथं च पुनस्तदनव-बोधजं तज्ज्ञमभिनिविशसि । तस्य ततो भेदरहितत्वादिति चेत्तर्हि कथं तिष्ठति तस्मिन्नितर-स्यापगमः ? अनिर्वाच्यत्वादिति चेन्मैवम् । ब्रह्मणोऽप्यनिर्वाच्यत्वप्रसङ्गात् । न हि स्वतो भेदविरहिणः स्वयं भेदि स्यात् । नाप्यभेदविरहितादभेदि स्यात् । परिशेषादनिर्वाच्यं ब्रह्म स्यात् । विद्यया च विपद्येत । प्रथमं ब्रह्मणः प्रकृतित्वं कल्पयित्वा ततस्तदज्ञानस्य कल्प्यत इति च कष्टेयं कल्पना । न च तदपि कल्प्यम्, अप्रमाणत्वात्' । प्रतिज्ञादृष्टान्तानुपरोधादेवमाश्रीयत इति चेत्, तदप्ययुक्तम् । यदि हि श्रुतौ जगदुपादानत्वमभिप्रैष्यत दृष्टान्तोऽपि तर्हि तादृगुदाहरिष्यत ।

न हि निखिलमृण्मयं कार्यजातं घटकरकमणिकमल्लकशरावोदश्चनादिकमेकमृत्पिण्डविकारो भवति । विकारविवक्षायां तु मृदा विज्ञातयेत्येवावक्ष्यत, एकशब्दः पिण्डशब्दश्च व्यर्थः स्यात् । 'वाचाऽऽरम्भणं विकार' इति विकारस्य मिथ्यात्वमुक्त्वा मृत्तिकायाः सत्यत्ववचनात्प्रकृति-विकारभावविवक्षेति चेन्न । नहि वाचारम्भणशब्दो मिथ्यार्थे प्रसिद्धः । वाचाऽस्तीत्यारभ्यत एव केवलं न तथा युक्तितो वक्तुं शक्यते । अतो वाचारम्भणमिति चेन्न । परमार्थापेक्षया निर्वाच्य-मित्यपि वक्तुमशक्यत्वात् । शक्यत्वे मोक्षे च तदनुवृत्तिप्रसक्तेः । वाचारम्भणमात्रमिति चाश्रुतकल्पना । नामधेयमात्रमिति च पुनरुक्तिः । अस्मिन्पक्षे 'मृत्तिकैव सत्या' इति वक्तव्य इति शब्दो लिङ्गव्यत्यासश्च व्यर्थः स्यात् । न च सत्यज्ञानान्मिथ्या ज्ञातं भवति । अधिष्ठान-ज्ञानादध्यस्तस्य निवृत्तेरेवेष्टत्वात् । कथं च विकारभावादेव मिथ्यात्वं सम्प्रतिपद्येत ? विनाशि-त्वेनेति चेन्मैवम् । बाधादेव मिथ्यात्वप्रतिपत्तेः । अत एव हि रजतादिदृष्टान्त उपादित्सितः । न च घटादेर्बाधः । तस्मान्नायं मिथ्यात्वे दृष्टान्तः । किन्तु 'यथा सोम्यैकेन' इति सादृश्यादेक-विज्ञानेन सर्वविज्ञानं निदर्शयति । 'वाचारम्भणम्' इत्यादिना प्राधान्यात् । वाचारम्भण-

(तत्त्वप्रदीपिका)
विकारात्मकं तस्मादनित्यम् । सारम्भा वात्र इत्यर्थः । धर्मधर्म्यभेदात्, साङ्केतिकनामानीत्युक्तं भवति, तान्यनित्यानि । मृत्तिकेति नामधेयमेव सत्यं सततप्राप्तं सदातनं वा, नित्यमित्यर्थः । साधुगुणं प्रधानगुणं प्रधानमिति चोक्तं भवति । प्रधानज्ञानादप्रधानमपि ज्ञातं भवतीति च लोकव्यवहारः । तस्मान्नात्र प्रकृतिविकारभावो विवक्षित इति न ब्रह्मणो जगदुपादानत्वम् । तस्मात्सुष्ठूक्तं न चान्यत्कल्प्यमप्रमाणत्वादिति ॥

## तत्त्वप्रकाशिका

नन्वेवं प्रकृतिशब्दवाच्यत्वे हरेः श्रुत्युक्तेऽपि कथं तद्युज्यते निमित्ताभावात् । न हि सङ्केतमात्रमभ्युपगम्यत इत्याशङ्कां परिहरन्सूत्रं पठित्वा फलितं तावदाह ॥ **आत्मेति** ॥ न परमात्मनि प्रकृतिशब्दवृत्तौ निमित्ताभावः । प्रकृष्टा कृतिर्यस्येति योगस्यैव भावादित्यर्थः । कथं प्रकृष्टेश्वरस्य कृतिरित्यतः सूत्रं व्याचष्टे ॥ **प्रकृताविति** ॥ प्रकृतेः स्वतः परिणामसामर्थ्याभावात्तदनुकूलतया तां प्रविश्य महदादिरूपेण परिणामयतीति प्रकृतिपरिणामादनन्तरम् आत्मानं च महदादिप्रेरणाय बहुधा करोतीति प्रकर्षेण कृतिर्विष्णोरित्यर्थः । सूत्रार्थे श्रुतिस्मृती चाऽऽह ॥ **अथेति** ॥ प्रकृतिमनुप्रविश्य तां परिणाम्य तत्परिणामप्रेरकत्वेन आत्मानं बहुधा चकार तस्मात्प्रकृतिशब्दवाच्यः । यस्मात् प्रकृतिशब्दवाच्यः तस्मात् प्रकृतिरित्याचक्षत इत्यर्थः । स्मृतिरप्येवं व्याख्येया । अपव्याख्यां दूषयति ॥ **न चेति** ॥ ब्रह्मण एव जगदुपादानत्वं प्रकृतिश्चेत्यादिसूत्रैरुच्यत इति यद् ब्रह्मणः परिणामित्वं सूत्रार्थतया कल्प्यते । न तद्युक्तम् । ब्रह्मणो जगदुपादानत्वे प्रमाणाभावादित्यर्थः । न चैकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय मृत्पिण्डादिदृष्टान्तोक्त्यैव तत्सिद्धिः । तस्यान्यार्थमिति सूत्रव्याख्याने सम्यग्व्याख्यातत्वात् । किं चात्र ब्रह्मणः परिणामित्वोक्तिरसङ्गतैव भवति । एतदध्यायस्याशेषशास्त्रस्य ब्रह्मणि समन्वयप्रतिपादनाय प्रवृत्तत्वात् । स्यादेतत् । श्रुतीनां प्रधानपरत्वं वदति सांख्ये निरस्ते कथं प्रधानाभावे जगदुत्पत्तिरिति शङ्का भवत्येव तन्निरासाय ब्रह्मणो जगदुपादानत्वोक्तिः सङ्गतेति । मैवम् । किं प्रधानस्य शास्त्रप्रतिपाद्यतामात्रं प्राङ् निषिद्धं तत्स्वरूपमेव वा । आद्ये का ब्रह्मणो जगदुपादानत्वोक्तेः सङ्गतिः । न ह्याकाशादिशब्दानाम् औपनिषदानां ब्रह्मणि समन्वयेऽभिहिते कथं तर्हि जगदवकाश इति शङ्कोत्पन्ना नापि सूत्रकृता पराकृता । न द्वितीयः । तदुक्तेरेवाऽत्राऽसङ्गतत्वात् । ब्रह्मणो जगत्कारणत्वसिध्यर्थं तदुक्तिरिति चेन्न । निमित्तत्वेन तदुपपत्तेः । अथापि स्यात् प्रधानप्रतिपादकवाक्यस्य ब्रह्मणि समन्वयेऽभिहिते तत्प्रमाणाभावेनाऽभावः प्राप्त इति । मैवम् । तथाऽऽकाशाद्यभावप्राप्तेरपि प्रसङ्गात् । प्रमाणान्तरेण तत्सिद्धिरिति चेत्सममत्रापीत्यलम् ॥

## गुर्वर्थदीपिका

यस्मात्प्रकृतिशब्दवाच्य इत्यत्र प्रकृतिविकारेषु बहुधाकरणाख्यप्रवृत्तिनिमित्तेन प्रकृतिशब्द-वाच्य इत्यर्थः । अलमित्यनेन साङ्ख्यनिराकरणस्य समयपादे करिष्यमाणत्वेन पुनरत्रापि तत्करणवैयर्थ्यात् कृत्स्नस्याप्यस्य पादस्य समन्वयाध्याये अन्तर्भावलक्षणसङ्गत्यभावश्चेत्यादि दूषणानि सूचयति ।

## भावबोधः

अन्वित्यस्यार्थो **अनुकूलतयेति** ॥ सूत्रे परिणामादिति ल्यब्लोपनिमित्ता पञ्चमीत्यभिप्रेत्य तां परिणाम्येत्युक्तम् । ल्यप् च क्त्वादेशः । क्त्वाचात्मकारणापेक्षया प्रकृतिपरिणामस्य पूर्वकालिकत्वे इत्यभिप्रेत्याह **परिणामादनन्तरमिति** ॥

## भावदीपः

प्रवेशावैयर्थ्यं वदन् शब्दार्थमाह ॥ **प्रकृतेरिति** ॥ सूत्रे परिणामादिति पञ्चमी ल्यब्लोप-निमित्तेति भावेन भाष्ये परिणाम्येत्युक्तम् । तत्र ल्यबादेशस्थानिनः पूर्वकालार्थक्त्वाप्रत्यय-स्यार्थमाह ॥ **प्रकृतिपरिणामादनन्तरमिति** ॥ आत्मकृतिर्व्यर्थेत्यतः तत्र परिणामेषु स्थित्वेति भाष्यम् । तदर्थमाह ॥ **महदादीति** ॥ श्रुतौ शेषमाह ॥ **तामित्यादिना** ॥ द्विरुक्तेरपौन-रुक्त्याऽर्थभेदमाह ॥ **तस्मादिति** ॥ **एवमिति** ॥ अनुप्रविश्येत्यनन्तरं तामित्यादिशेषो ध्येय इत्यर्थः । अप्रतीतेराह ॥ **अपव्याख्यामिति** ॥ अप्रामाणिकत्वमसङ्गतेरुपलक्षणमिति भावेनाह ॥ **किं चेति** ॥ न चाऽव्यक्तस्वरूपं भगवता निषिद्धम् । भारतादौ साधितत्वादिति द्वादश-गीताभाष्योक्तमिह सङ्गमयितुं शङ्कामाह ॥ **स्यादेतदिति** ॥ वदतीति सप्तम्यन्तम् ॥ **निरस्त इति** ॥ आनुमानिकाद्यधिकरणत्रयेण परभाष्योक्तदिशा निरस्त इत्यर्थः । पराकृता अवकाशा-भावशङ्केत्यनुकर्षः । तदुक्तेरेव प्रधानस्वरूपनिषेधोक्तेरेव इत्यर्थः ॥ **जगत्कारणत्वेति** ॥ जगदुपादानत्वेनेति योज्यम् ॥ **तदिति** ॥ ब्रह्मणो जगत्कारणत्वोपपत्तेः इत्यर्थः । एतेन न चेत्यादिभाष्यं ब्रह्मणो जगत्कारणत्वसिद्ध्यर्थं प्रधानस्वरूमेव प्राक्प्रकृतं सूत्रकृता निषिध्यत इति यत्कल्प्यते तन्न युक्तम् । जगत्कारणत्वस्य अन्यथोपपत्त्या प्रधानस्वरूपनिरासस्याऽ-

(अत्रोक्तवाक्यद्वयं भावदीपस्य आदौ संयोज्यम् : **न हीति** ॥ गुणपूर्त्यर्थत्वात् समन्वयस्येति भावः ।
भाष्ये चशब्दोऽवधारण इति भावेन पञ्चम्या योग्यसाध्येनान्वयमाह ॥ **नेत्यादिना** ॥)

(भावदीपः)

प्रामाणिकत्वादित्यपि व्याख्यातं भवति । तथा प्रधानस्याऽप्रामाणिकत्वाद्ब्रह्मैवोपादानमित्येतत्सूत्रार्थतया यत्कल्प्यते न तद्युक्तम् । प्रधानाभावस्याऽप्रामाणिकत्वादित्यपि भाष्यार्थं मत्त्वा शङ्कान्तरं निराह ॥ **अथापि स्यादिति** ॥

## अभिनवचन्द्रिका

**सङ्केतमात्रमिति** ॥ रूढिमात्रमित्यर्थः ॥ **प्रकृष्टाकृतिर्यस्येति** ॥ स्वरूपमिति शेषः । एतेन प्रकृतिशब्दस्य स्त्रीलिङ्गत्वेन यस्येति पुल्लिङ्गेन विग्रहप्रदर्शनमयुक्तमिति परास्तम् । प्रकृष्टा कृतिरित्येव विवक्षितत्वात् । यस्य स्वरूपमित्युक्तिस्तु कृतित्वाभावात् प्रकृष्टा कृतिरिति योगो न युक्त इति शङ्कानिरासार्थम् ॥ **सम्यग्व्याख्यातत्वादिति** ॥ एकेन मृत्पिण्डेन ज्ञातेन ज्ञातमपि घटादिकं ज्ञातफलं भवति विशेषज्ञानात् । एवं परमात्मनि ज्ञाते सर्वं ज्ञातफलं भवतीति व्याख्यातत्वादित्यर्थः । इदमेव व्याख्यानं सम्यक्, न परव्याख्यानम् । एकमृत्पिण्डोपादानकत्वाभावात्सर्वस्येति भावः ।

## वाक्यार्थमुक्तावली

**फलितमिति** ॥ प्रकृष्टाकृतिरिति, क्तिनोभावे विहितत्वात् करोतीति फलितप्रदर्शनमिति भावः । योगाच्चेति चशब्दोऽवधारणार्थतया व्याख्यातो योगस्यैवेति । अन्वित्यस्यार्थोऽनुकूलेति । सूत्रे परिणामादिति ल्यब्लोपनिमित्ता पञ्चमीत्यभिप्रायेण भाष्ये अनुप्रविश्य परिणाम्यस्थित्वेत्युक्तमिति भावेन ल्यबादेशस्थानिनः पूर्वकालार्थकत्वाप्रत्ययस्यार्थमाह **प्रकृतिपरिणामादनन्तरमिति** ॥ **स्मृतिरप्येवमिति** ॥ अनुप्रविश्येत्येतदनन्तरं तामित्यादिशेषपूर्त्या व्याख्यायेत्यर्थः । ततश्च परिणामात् परिणामकारणं प्रकृतिमनुप्रविश्य तां महदादिरूपेण परिणाम्य तत्परिणामं महदादिकं नियमनायाधिष्ठाय तन्नियामकतयाऽत्मनो वहुधाकरणात्प्रवृत्तिनिमित्तात् प्रकृतिर्विष्णुरेवेति सूत्रार्थः ॥ **प्रकृतिश्चेत्यादिसूत्रैरिति** ॥ न केवलं ब्रह्म जगत्कर्तृ किन्तु उपादानमपि येनाश्रुतं श्रुतं भवति, यथासौम्यैकेन मृत्पिण्डेनेति प्रतिज्ञादृष्टान्तानुपरोधात् । 'सोऽकामयत' 'बहुस्याम्' इति बहुभवनसङ्कल्पोपदेशाच्चोपादानं ब्रह्म सर्वाणि हवा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्तीति साक्षाद्ब्रह्मण्येवोभयोर्जगदुत्पत्तिलययोरभिधानाच्च । न ह्यनुपादाने कार्यस्य लयः तदात्मानं स्वयमकुरुतेत्यात्मकृतेरात्मन एव

(वाक्यार्थमुक्तावली)
कर्मत्वोक्तेः । सच्च त्यच्चाभवदिति, परिणामोक्तेश्च ॥ **यद्भूतयोनिमिति** ॥ योनिशब्दाच्चोपादानं ब्रह्मेति प्रकृतिश्चेत्यादिसूत्रैरुच्यत इत्यर्थः ॥ **भाष्ये अप्रामाणिकत्वाच्चेति** ॥ चशब्दान्वयं मत्वा तत्समुच्चये बाधकमाह **किं चेति** ॥ ननु न त्रिपाद्यां साक्षात्समन्वयः किन्तु समन्वयविरोधिनः प्रधानाद्यवरत्वस्य निरासः अतः समन्वयः कुतः सङ्गतत्वादन्तर्भावः । न चास्मिन्नधिकरणे प्रधानशाब्दत्वस्यापि निरासान्न पादान्तर्भाव इति वाच्यम् ।

आनुमानिकनये महतः परमव्यक्तमिति प्रधानपरत्वं वदति सांख्ये अर्वाग्बिलइत्यादेः सर्वत्र वक्तुं शक्यत्वादयं चमस इति यथा न निर्णय एवमविशेषादजाप्रधानमिति निर्णय इति निरस्ते न सङ्ख्योपसङ्ग्रहादित्यत्र यस्मिन् पञ्चपञ्चजना इति श्रुतेः पञ्चविंशतित्वात्मकप्रधानपरत्वं वदति सांख्ये पञ्चविंशतितत्वानां नानाभावात् पञ्चशः अवच्छेदकधर्माभावादात्माकाशयोरतिरेकाच्च न तदत्र विवक्षितमिति निरस्ते कारणत्वेत्यधिकरणे तद्धेदं तर्ह्यव्याकृतमासीदित्यादिश्रुतेः प्रधान-परत्वं वदति सांख्ये आत्मन आकाश इत्यत्राकाशादिषु कारणतया व्यपदिष्टस्यैवाव्याकृत-कृताकाशे कारणत्वेनोक्तेरिति निरस्ते प्रधानाभावे जगदुत्पत्तिर्न स्यादिति शङ्कायां तन्निरासाव ब्रह्मणो जगदुपादानत्वोक्तिरिति सङ्गतिरिति भावेन शङ्कते स्यादित्यादिना ॥ **तदुक्तेरेवेति** ॥ प्रधानस्वरूपनिषेधोक्तेरेवेत्यर्थः ॥ **जगत्कारणत्वेति** ॥ तदुपादानतयेति योज्यम् ॥ एतेन न चेत्यादिभाष्यं ब्रह्मणो जगत्कारणत्वसिध्यर्थं प्रधानस्वरूपमेव प्राक् सूत्रकृता निषिध्यतामिति प्रधानस्वरूपनिषेधं विना जगत्कारणत्वस्यान्यथोपपत्या कल्पकाभावेनाप्रामाणिकत्वात्सूत्रकृता प्रधानस्वरूपं प्राङ्निषिध्य तथा योगादिति भाष्यं प्रकारान्तरेण व्याख्यातं भवति ॥ तथा प्रधानस्याप्रामाणिकत्वात् ब्रह्मैवोपादानमित्येतत्सूत्रार्थतया यत्कल्प्यते न तद्युक्तम् ॥ प्रधानस्य प्रमितत्वेन तदभावस्याप्रामाणिकत्वादित्यपि भाष्यार्थं मत्वा शङ्कान्तरं निराह– **अथापीति** ॥

## तत्त्वसुबोधिनी

**निमित्ताभावादिति** ॥ प्रवृत्तिनिमित्तवत्येव शब्दस्य मुख्यत्वादिति भावः । ननु प्रकृतिशब्द प्रवृत्तिनिमित्तस्य भगवत्यभावेऽपि श्रुतिबलात् वाच्यत्वं सेत्स्यतीत्यत आह ॥ **न हीति** ॥ तथात्वे प्रकृतिशब्दस्य सङ्केतमात्रं स्यात् । एवं च गुणपूर्तिसिद्धिः न स्यादिति भावः । प्रकृतौ भगवदनुवेशः किमर्थमित्यत आह ॥ **प्रकृतेरिति** ॥ तस्या अचेतनत्वेन समर्थत्वादिति भावः । तदनुकूलतया परिणाम्यनुकूलतया । अनु इत्यस्यार्थोऽनुकूलतयेति । परिमाणादिति ल्यब्लोप-

(तत्त्वसुबोधिनी)
निमित्तपञ्चमीत्यतः परिणाम्येत्युक्तम् । ल्यप्चक्त्वादेशः क्त्वाचात्मकरणापेक्षया प्रकृतिपरिणामस्य पूर्वकालिकत्वमित्यभिप्रेत्याह ॥ **परिणामादनन्तरमिति** ॥ अप्रतीतार्थत्वात् श्रुतिं व्याचष्टे ॥ **प्रकृतिमिति** ॥ उक्तव्याख्यां स्मृतावतिदिशति ॥ **एवमिति** ॥ निर्विकारः परमः । विकारिणीं प्रकृतिं प्रविश्य तां परिणाम्य तत्परिणामप्रेरकतया अनुमानं बहुधा चकार । यस्मात्तस्मात् प्रकृतिशब्दवाच्यः । यस्मात्प्रकृतिशब्दवाच्यः अतः प्रकृत इत्यभिधीयत इत्यर्थः । ब्रह्मणः उपादानत्वकथनम् अध्यायासङ्गतं चेत्याह ॥ **किं चेति** ॥ प्रकृतेः उपादानत्वे निषिद्धे उपादानाभावात् कथं जगदुत्पत्तिरत आह ॥ **न हीति** ॥ **तदुक्तेरेवेति** ॥ प्रधानाभावोक्तेरित्यर्थः ॥ **निमित्तत्वेन तदुपपत्तेरिति** ॥ प्रधानस्वरूपानिषेधेऽपि ब्रह्मणो निमित्तत्वेन जगत्कारणत्वोपपत्तेरित्यर्थः ।

## वाक्यार्थविवरणम्

**निमित्तेति** ॥ योगरूढ्यादिनिमित्तेनेत्यर्थः ॥ **स्मृतिरपीति** ॥ अनुप्रविश्य तां परिणाम्य तत्परिणामप्रेरकत्वेनात्मानं बहुधा चकार । तस्मात् प्रकृतिशब्दवाच्यः तस्मात्प्रकृतिरित्यभिधीयत इति व्याख्येयमित्यर्थः ॥ **निरस्त इति** ॥ आनुमानिकमित्याद्यधिकरणेषु इत्यर्थः । प्रधानस्य शास्त्रप्रतिपाद्यत्वाभावे कथं जगदुत्पत्तिरित्याशङ्कानिवर्तकत्वेन तदुक्तिः सङ्गतेत्यत आह ॥ **न हीति** ॥ **तदुक्तेरेवेति** ॥ प्रधानस्वरूपनिषेधोक्तेरेवात्र चतुर्थपादेऽसङ्गतत्वात् । तथात्वे हि कथं जगदुत्पत्तिरित्याशङ्कायां ब्रह्मणस्तदुक्तिः सङ्गता स्यादित्याशयः ॥ तदुक्तिः प्रधानस्वरूपनिषेधोक्तिः । तदभावे तस्यैव जगत्कारणत्वप्राप्त्या न ब्रह्मणस्तत्सिद्धिरिति भावः ॥ **तदुपपत्तेरिति** ॥ जगत्कारणत्वोपपत्तेरित्यर्थः । एवं च प्रधानस्वरूपं मा निषिध्यताम् । तथापि ब्रह्मणो जगत्कारणत्वं निमित्तत्वेन भविष्यति । प्रधानस्य तूपादानत्वेनेति विरोधाभावादिति भावः । वाक्यस्य 'महतः परमव्यक्तम्' इति वाक्यस्य । तत्तत्र प्रधानसद्भाव इत्यर्थः । प्राप्तो भवन्मत इति शेषः । तथेत्यनन्तरम् आकाशादिप्रतिपादकवाक्यस्य ब्रह्मणि समन्वयेऽभिहिते तत्प्रमाणाभावेनेत्येतावान् वाक्यशेषः ॥

## वाक्यार्थमञ्जरी

परिणामात् प्रकृतेः परिणामं विधाय तत्रात्मनो बहुधाकरणात्प्रकृतिशब्दवाच्यं ब्रह्मेत्यर्थः ।

(वाक्यार्थमञ्जरी)

अन्वित्यस्यार्थोऽनुकूलतयेति । स्मृतावनुप्रवेशस्य प्रकृतित्वप्रयोजकत्वमुच्यत इति प्रतीति-निरासायाह ॥ **स्मृतिरपीति** ॥ अनुप्रविश्येत्यनन्तरं तां परिणाम्येत्यादि द्रष्टव्यमिति भावः । प्रतिज्ञाय येनाश्रुतं श्रुतं भवतीत्यादिना युक्त्या यथासोम्येत्यादिना ॥ **तत्सिद्धिरिति** ॥ घटादेर्मृदुपादानकत्वेन तज्ज्ञाने ज्ञातत्ववज्जगतोऽपि ब्रह्मोपादानकत्वेन तज्ज्ञाने ज्ञातत्व-मित्युक्तावुपादानत्वं सिध्यतीत्यर्थः । व्याख्यातत्वात् । यथैकेन मृत्पिण्डेनेत्यादिना निरस्ते आनुमानिकमित्यादिना असङ्गतिमेव दृष्टान्तोक्त्योपपादयति ॥ **तदुक्तेरिति** ॥ प्रधानस्वरूप-निषेधोक्तेरित्यर्थः ॥ **जगत्कारणत्वेति** ॥ उपादानत्वेनेति शेषः ॥ **सममिति** ॥ प्रकृतेरपि साक्षिवेद्यत्वादिति भावः । अत एवोक्तं पद्धतौ प्रकृतिः कालोऽव्याकृताकाशश्चेति ब्रह्मणो जगदुपादानत्वे निर्विकारोऽक्षरः शुद्ध इत्यादि बहुमानविरोध इत्याशयेनाह ॥ **अलमिति** ॥

## सूत्रभाष्यम्

### ॥ ॐ योनिश्च हि गीयते ॐ ॥ २८ ॥

अव्यवधानेनोत्पत्तिद्वारत्वं (च) प्रकृतित्वम् । तच्चास्यैव हि गीयते 'यद्भूतयोनिं परिपश्यन्ति धीरा' (मुं.उ. १-१-६) इति ।

'व्यवधानेन सूतिस्तु पुंस्त्वं विद्वद्भिरुच्यते ।
सूतिरव्यवधानेन प्रकृतित्वमिति स्थितिः ॥
उभयात्मकसूतित्वाद्वासुदेवः परः पुमान् ।
प्रकृतिः पुरुषश्चेति शब्दैरेकोऽभिधीयत' ॥ इति ब्रह्माण्डे ॥

## सत्तर्कदीपावली

न केवलं रमावाण्यादिस्त्रीस्थत्वात् तदाकारत्वाद्वा तत्तन्नामनिरुक्तेर्वा स्त्रीशब्दवाच्यः किं तर्हीत्यत आह ॥ **योनिश्चेत्यादिना** ॥ भूतानामाकाशादीनां ब्रह्मादीनां च केषाञ्चित् स्त्र्यव्यव-धानेन उत्पादनात् भूतयोनिरित्यर्थः ।

## तत्त्वप्रदीपिका

सततरमणात्स्त्री ॥

## तत्त्वप्रकाशिका

तथापि न प्रकृतिशब्दवाच्यत्वं परमात्मनो युज्यते । तस्य स्त्रीलिङ्गत्वादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **योनिश्चेति** ॥ स्वदेहादेवापत्योत्पादकत्वं हि प्रकृत्यादिस्त्रीलिङ्गप्रयोगे निमित्तम् । स्वदेहादेवोत्पादकश्च परमात्मा 'यद्भूतयोनिम्' इति श्रुतौ गीयते । योनिशब्दस्य तदर्थत्वात् । अतः स्त्रीलिङ्गप्रयोगोऽपीश्वरे युज्यत इति भावः । अव्यवधानेनोत्पत्तिकर्तृत्वं प्रकृत्यादिस्त्रीलिङ्गप्रयोगनिमित्तं कुत इत्याशङ्कां परिहर्तुं सूत्रार्थे स्मृतिं चाऽऽह ॥ **व्यवधानेनेति** ॥ सूतिः सूतिकर्तृत्वं भगवतः । स्त्रीरूपत्वाच्च तच्छब्दोपपत्तिः । निषेधस्त्वज्ञेयतामात्रार्थः । तस्माद्विष्णुरेवाशेषशब्दवाच्य इति युक्तमेव तत्समन्वयसूत्रमिति सिद्धम् ॥

## गुर्वर्थदीपिका

यद्यपि नारायणीरूपस्य लक्ष्म्यादिस्त्रीषु स्थितबिम्बरूपाणां च साक्षात् स्त्रीत्वमप्यस्ति । तथाऽपि 'एष स्त्री एष पुरुषः' 'स्त्रियः सतीस्ताम् उ मे पुंस आहुः' इति साक्षात्पुरुषेष्वेवोक्तस्त्रीत्वमप्युपपादयितुं यौक्तिकशिरोमणेः सूत्रकारस्य प्रवृत्तिः । न च 'यद्भूतयोनिं परिपश्यन्ति' इत्यत्र योनिशब्दः कारणत्वापरपर्याय एवेति वाच्यम् । अस्ति हि सूत्रोक्तमव्यवधानेन प्रसूतिकर्तृत्वं च 'सहस्रशीर्षा पुरुषः' इत्युक्तभगवतः पुरुषरूप एव 'मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत, चक्षोः सूर्यो अजायत बाहू राजन्यः कृतः' इत्यादिरूपेण श्रुतिष्वेवेति सूत्रकृतोऽभिसन्धिः । उक्तविधया योनिशब्दगूढार्थविषयस्यैव सम्भवे कारणत्वरूपसामान्ये सङ्कोचकारणाभावादिति ज्ञेयम् ॥

## भावबोधः

अत्राद्ये'हन्तैतम्' इति श्रुतेर्यथा न घट इति दृष्टान्तेनोपादानान्नामानि सर्वाणीत्यतो विशेषश्रुतित्वाद्विष्णोः स्त्रीलिङ्गशब्दवाच्यत्वे तद्रूपविशेषप्रमाणोक्तिः । द्वितीये इच्छाद्वारा प्रकृतिशब्दवाच्यत्वे 'मायां तु प्रकृतिम्' इत्यादिप्रमाणोक्तिः । तृतीये विष्णोः प्रकृत्यादिशब्दवाच्यत्वे साक्षाद्धन्तैतमितिवत् साधारण्यं विना मायां त्वितिवदिच्छाद्वारकत्वं विना 'एष स्त्र्येष पुरुष' इति स्पष्टप्रमाणोक्तिः । चतुर्थे विष्णोः सर्वस्त्रीलिङ्गशब्दोपलक्षकप्रधानस्त्रीवाचकप्रकृतिशब्दवाच्यत्वे तत्तन्निर्वचनलभ्यप्रवृत्तिनिमित्तोक्तिः । पञ्चमे विष्णौ सर्वस्त्रीलिङ्गशब्दप्रवृत्तिनिमित्तस्योक्त्या बाधकोद्धार इति सूत्रक्रमः ॥

## भावदीपः

अव्यवधानेनेत्यादिभाष्यम् उत्पादनं स्वदेहाच्चेत्यनुभाष्यदिशा व्याचष्टे ॥ **स्वदेहादेवेति** ॥ प्रलये स्वोदरे निवेशितस्य ब्रह्मादिप्राणिजातस्य स्थूलदेहविशिष्टतया जनकत्वमित्यर्थः । प्रकृतित्वमित्येतदुपलक्षणमिति भावेनाह ॥ **प्रकृत्यादीति** ॥ नैनं वाचेति श्रुतिविरोधं निराह ॥ **निषेधस्त्विति** ॥ **तस्मादिति** ॥ साधकभावाद्बाधकाभावाच्चेत्यर्थः । युक्तमेवेति फलोक्तिः ॥

## अभिनवचन्द्रिका

**तथापि न प्रकृतिशब्दवाच्यत्वमिति** ॥ तथापि परमात्मनः स्त्रीत्वेऽपि प्रकृतिशब्दवाच्यत्वे स्पष्टप्रमाणसद्भावेऽपि प्रकृष्टं करोतीति योगसद्भावेऽपि न प्रकृतिशब्दवाच्यत्वं युज्यते । स्त्रीलिङ्गस्य शब्दस्याऽव्यवधानेन सूतिकर्तृवाचकत्वनियमात् । परमात्मनश्च तदभावादित्यर्थः । कथं तर्हि कुमार्यादौ खट्वादौ स्त्रीलिङ्गशब्दप्रयोग इति चेत्, वृषलभार्यायां पत्नीशब्दवदुपमानादिति गृहाण ॥ **निषेधस्त्वज्ञेयतामात्रार्थ इति** ॥ केवलस्त्रीत्वेनाऽज्ञेयत्वसूचनार्थं निषेधः, न तु अभावाभिप्रायेणेत्यर्थः । 'वदन्वदति कश्चन' इति स्त्रीपुंसभावाभिधानात्, स्त्रीरूपश्चैव पुंरूपो भगवान्न नपुंसक' इत्यादिवचनाच्च । स्त्रीरूपस्य सर्वथाऽज्ञेयत्वे स्त्रीरूपाभिधायकागमवैयर्थ्यं, तस्य ज्ञानार्थत्वादिति परास्तम् ।

**पूर्वपक्षस्तु** – न प्रकृत्यादिशब्दवाच्यो हरिः । स्त्रीलिङ्गशब्दवाच्यताव्यापकस्त्रीत्वाभावात् । नैनं वाचा स्त्रियं ब्रुवन्' इति स्त्रीत्वनिषेधात् । न च नपुंसकशब्दवृत्तिवत् स्त्रीशब्दवृत्तिः किं न स्यादिति वाच्यम् । निरवकाशनियामकाभावेन तत्कल्पनायोगात् । अथ अस्त्रीभूतस्यापि स्त्रीनियामकत्वात् तच्छब्दवाच्यतेति चेत्, न वशीकृतभार्ये भर्तरि तच्छब्दवाच्यत्वप्रसङ्गात् । अतः प्रकृत्यादिशब्दानां परमात्मवाचित्वाभावात् न समन्वयसूत्रमुपपन्नमिति ।

**सिद्धान्तस्तु** – हरिरेव प्रकृत्यादिशब्दवाच्यः 'हन्तैतमेव पुरुषम्' इति श्रुतौ विष्णौ सर्वशब्दवाच्यत्वं प्रतिज्ञाय, तत्रैव नदीसमुद्रदृष्टान्ताभिधानात् । अन्यथा प्रतिज्ञादृष्टान्तोपरोधः स्यात् । भगवदभिन्नेच्छायाः, 'मायान्तु प्रकृतिं विद्यात्' इति श्रुतौ 'प्रकृतिर्वासनेत्येवम्' इति स्मृतौ च प्रकृतिशब्दवाच्यत्वाभिधानाच्च । नन्वथापि विष्णोरिच्छाद्वारा प्रकृतिशब्दवाच्यत्वेऽपि न साक्षात्तच्छब्दवाच्यत्वम् । प्रमाणाभावात्, 'नामानि' इति श्रुतेः सङ्कोचसम्भवादिति चेत्,

(अभिनवचन्द्रिका)

मैवम् । 'एष स्त्री एष प्रकृतिः' इति श्रुतौ परमात्मनः प्रकृतिपुरुषत्वाभिधानेन एतच्छ्रुत्यैव, अर्थादिच्छाद्वारमन्तरापि प्रकृतिशब्दवाच्यत्वलाभात् । अन्यथा पुरुषशब्दवाच्यत्वमपि न स्यादविशेषात् । ननु यद्यपि परमात्मनः प्रकृतिशब्दवाच्यत्वं श्रुत्यादावुक्तम्, तथापि न तद्युक्तं निमित्ताभावादिति चेत्, न – प्रकृष्टा कृतिरिति योगसम्भवेन निमित्ताभावासिद्धेः । कथमीश्वरकृतिः प्रकृष्टेति चेत्, प्रकृतेः स्वतः परिणामसामर्थ्याभावात्, तत्र स्थित्वा तां परिणाम्य महदादिनियामकत्वेन आत्मनो बहुधाकरणात् । ननु परमात्मनः स्त्रीत्वेऽपि प्रकृतिशब्दवाच्यताऽभिधायकप्रमाणसद्भावेऽपि न स्त्रीशब्दवाच्यत्वं युज्यते । तस्याव्यवधानेन सूतिकर्तृवाचित्वनियमात् । न च परमात्मनः तदस्ति । व्यापकाभावे च व्याप्यायोगात् । प्रकृतिशब्दवाच्यताभिधायकवाक्यं 'मृदब्रवीत्' इत्यादिवाक्य वत्कथं चिन्नेयमिति चेत्, न 'यद्भूतयोनिं परिपश्यन्ति धीरा' इति योनित्वस्यापि श्रुतिसिद्धत्वेन व्यापकाभावसिद्धेः । तस्माद्विष्णुरेवाशेषस्त्रीशब्दवाच्य इति उपपन्नं समन्वयसूत्रमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**तथापीति** ॥ एष पुरुषः प्रकृतिरिति प्रयोगेऽपि प्रकृष्टा कृतिर्यस्येति प्रवृत्तिनिमित्तसद्भावेऽपि स्त्रीप्रत्ययस्य स्त्रीत्वनिमित्तकत्वेन परमपुरुषे तदयोगात् । ब्राह्मणत्वस्य ब्राह्मणप्रातिपादिकार्थत्वात् स्त्रीत्वस्य स्त्रीयोषित्यादिप्रातिपदिकार्थत्वात्तस्यापि हरावनवकाश इति भावः । अव्यवधानेत्यस्यार्थः **स्वदेहादेवेति** ॥ द्वारत्वमित्यस्य कारणत्वमिति च कृतित्वमित्यस्य **प्रकृत्यादीति** ॥ यद्भूतयोनिमिति श्रुतेस्तु भूतानां केषाञ्चिदाकाशादीनां केषाञ्चिदस्त्रीव्यवधानेनोत्पादनाद्भूतयोनिरित्यर्थः । सत्तर्कदीपावल्यामुक्तो यः योनिशब्दस्य **तदर्थत्वादिति** ॥

स्वदेहादिच्छया विश्वं भुक्तपूर्वं जनार्दनः ।
ससर्जमातापितृवदुर्णनाभिवदेव वा ॥

इत्यनुव्याख्यानादिति भावः ॥ **स्त्रीरूपत्वाचेति** ॥ एतेन तच्चास्यैवेति चशब्दार्थ उक्तो भवति ॥ **निषेध इति** ॥ नैनं वाचा स्त्रियं ब्रुवन्, इति निषेध इत्यर्थः । हि यस्माद्योनिः स्वदेहोत्पादकं ब्रह्म यद्भूतयोनिमिति गीयते । च शब्दादव्यवधानेन सूतिकर्तृत्वं च स्त्रीलिङ्गप्रवृत्तिनिमित्ततया सूतिरव्यवधानेनेति स्मर्यते । स्त्रीरूपत्वं च तत्र तत्र गीयते । तेन केवल-

(वाक्यार्थमुक्तावली)
प्रकृत्यादिशब्दप्रयोगप्रवृत्तिनिमित्तभावात्तच्छब्दवाच्यः । किन्तु तदुपलक्षितस्त्रीलिङ्गशब्दमात्र-प्रवृत्तिनिमित्तभावात्तद्वाच्यश्चेति सूत्रार्थः । अत्र सूत्रचतुष्टयं स्वपक्षसाधकं पञ्चमं बाधकोद्धारकत्वादन्ते निवेशितम् । योगरूढ्यो रूढेःप्राबल्याद्गुणसमर्पकशास्त्रे दुर्बलत्वाद्वा प्राबल्यं क्रमेण रूढेः सूत्रत्रयं चतुर्थे योगोक्तिः । त्रये चाद्यस्य शब्दविषयत्वेन साधारणत्वात् द्वितीयस्यासाधारणत्वेऽपीच्छाद्वारा प्रयोगप्रदर्शकत्वात् तृतीयस्य साक्षात्प्रकृतिशब्दप्रयोगप्रदर्शकत्वात् क्रम इति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

ननु यद्भूतयोनिम् इति श्रुतौ स्वदेहात् उत्पादकत्वं केन शब्देन उच्यत इत्यत आह ॥ **योनिशब्दस्य तदर्थत्वादिति** ॥ स्वदेहात् उत्पादकत्वरूपार्थत्वादित्यर्थः । सूतिः प्रसवः । तस्य पुंस्त्वमसम्भवतीत्यत आह ॥ **सूतिकर्तृत्वमिति** ॥ न केवलं स्त्रीशब्दप्रवृत्तिनिमित्तवत्त्वात् स्त्री शब्दवाच्यः किं तु स्त्र्याकाररूपवत्वाचेत्याह ॥ **स्त्रीरूपत्वाचेति** ॥ ननु तर्हि नैनं वाचा स्त्रियमिति निषेधस्य का गतिरित्यत आह ॥ **निषेधस्त्विति** ॥ स्त्रीरूप एवमपरमात्मेति न ज्ञेयमित्यर्थः । अत्र चाद्ये सूत्रे विष्णोः प्रकृत्यादिशब्दवाच्यत्वे विशेषप्रमाणोक्तिः । चशब्दस्तु स्त्रीत्वं चेत् पुंस्त्वं न स्यात् विरोधादिति न शङ्क्यम् । भाष्योक्तरीत्या द्वयोरपि उपपत्तेरिति प्रदर्शनार्थः । द्वितीये स्त्रीशब्दोपलक्षकप्रकृत्यादिशब्द वाच्यत्वे विशेषप्रमाणोक्तिः । अस्य च अभिध्यायः प्रकृतत्वोपदेशात् ब्रह्मणाभिध्योपदेशादित्यर्थः । तृतीये स्त्रीशब्दैश्च साक्षादेववाच्यत्वे प्रमाणोक्तिः । चतुर्थे प्रवृत्तिनिमित्तोभयरूपबाधकोद्धारः । अत्र परिणामादिति ल्यप् निमित्ता पञ्चमी । एवं च प्रकृतेः महदादिरूपेण परिणामं विधाय तत्प्रेरणायात्मनो बहुधा कृतेरित्यर्थः । पञ्चमे उपलक्षितस्त्रीशब्दमात्रे तदुद्धारः । इति सूत्रक्रमः ॥

## वाक्यार्थविवरणम्

**तस्येति** ॥ प्रकृतिशब्दस्य स्त्रीत्वप्रवृत्ति निमित्तकत्वात् परमात्मनि च तदभावादिति भावः। तदर्थत्वात् । अव्यवधानेन स्वदेहादेव उत्पादकत्वार्थकत्वात् । ऐतरेयभाष्योक्तं समाधानमप्यत्र स्वयमाह ॥ **भगवत इति** । तच्छब्दोपपत्तिः स्त्रीत्वप्रवृत्तिनिमित्तकशब्दोपपत्तिरित्यर्थः । 'स्त्रियः सतीस्ताँ उभे पुंस आहुः' इति श्रुतेरिति भावः । ननु तर्हि 'नैनं वाचा स्त्रियं ब्रुवन्' इति भगवतः स्त्रीरूपनिषेधात् कथमेतदित्यत आह ॥ **निषेधस्त्विति** ॥ तथा च भगवतोऽस्ति

स्त्रीरूपम् । निषेधस्तु स्त्रीत्वेन उपासनानिषेधपरः । तदुपासनेन मनश्चाञ्चल्येनानर्थ-प्राप्तेरित्याशयः ॥

## वाक्यार्थमञ्जरी

हि यस्माद्योनिश्च स्वदेहादुत्पादकं ब्रह्म यद्भूतयोनिमित्यत्र गीयते अतः प्रकृत्यादि-शब्दवाच्य इत्यर्थः ॥ **स्वदेहादेवेति** ॥ प्रलये स्वोदरनिवेशितस्य ब्रह्मादि प्राणिजातस्य स्थूलदेहविशिष्टतया जनक इत्यर्थः । ऐतरेयभाष्यदिशा स्वयं समाधानान्तरमाह ॥ **भगवत इति** ॥ स्त्रियः सतीस्ताँ उभे पुंस आहुरिति श्रुतेरिति भावः ।

इति प्रकृत्यधिकरणम् ॥

## ७. एतेन सर्वव्याख्याताधिकरणम्

## सूत्रभाष्यम्

**॥ ॐ एतेन सर्वे व्याख्याता व्याख्याताः ॐ ॥ २९ ॥**

एतेन सर्वे शून्यादिशब्दा अपि व्याख्याताः । 'एष ह्येव शून्य एष ह्येव तुच्छ एष ह्येवाभाव एष ह्येवाव्यक्तोऽदृश्योऽचिन्त्यो निर्गुणश्च' इति महोपनिषदि ।

'शमूनं कुरुते विष्णुरदृश्यः सन्परः स्वयम् ।
तस्माच्छून्य इति प्रोक्तस्तोदनात्तुच्छ उच्यते ॥
नैष भावयितुं योग्यः केनचित्पुरुषोत्तमः ।
अतोऽभावं वदन्त्येनं नाशयत्वान्नाश इत्यपि ॥
सर्वस्य तदधीनत्वात्तत्तच्छब्दाभिधेयता ।
अन्येषां व्यवहारार्थमिष्यते व्यवहर्तृभिः' ॥ इति महाकौर्मे ।

एतेन तदधीनत्वाद्युक्तयुक्तिसमुदायेन ।

'अवधारणार्थं सर्वस्याऽप्युक्तस्याऽध्यायमूलतः ।
द्विरुक्तिं कुर्वते प्राज्ञा अध्यायान्ते विनिर्णये' ॥ इति वाराहसंहितायाम् ॥

एतेन सर्वेव्याख्याताधिकरणम् (सर्वव्याख्यानाधिकरणं पा.) ॥

॥ श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये प्रथमाध्यायस्य चतुर्थः पादः ॥

॥ प्रथमाध्यायः समाप्तः ॥

## सत्तर्कदीपावली

ननु युक्तं परात्परमस्य पुरुषस्यापि प्रकृत्यादिविश्वगतस्य तद्भिन्नस्यापि तदाकारत्वादिहेतुना तत्तन्नाममुख्यार्थत्वं तथा शून्यादिशब्दार्थत्वं न सच्चिदानन्दाद्याकारस्येतीमं पूर्वपक्षमपाकरोतीत्याह **एतेनेत्यादिना** । एतेन तदधीनत्वाद्युक्तिसमुदायेन एष ह्येवेति महोपनिषदि श्रूयमाणशून्यादिशब्दाः शमूनमित्यादिना महाकौर्मे व्याख्याताः । यथाभीष्टवस्तु नष्टमदृश्यं वा

(सत्तर्कदीपावली)

तद्वतः शमूनं करोति तुदते च तं शमनुभवन्तम् । न च तद्भावयितुं योग्यं सुखाय नापि तेनोपभोग्यम् । भगवांस्तु सर्वदा सर्वत्र सर्वोत्तमत्वेन सन्नेव दुर्जनादस्य एव न शमूनं करोतीति तुदते च तं भवितुमयोग्यश्च नैतेनानुभोग्यश्च । एवं सर्वस्य शब्दप्रवृत्तिनिमित्तस्य स्वगतस्य परगतस्य वा तदधीनत्वात् तस्यैव शून्यतुच्छाभावनाशादिशब्दानां परममुख्यार्थता । अन्येषां तदधीनेपत्प्रवृत्तिनिमित्तवत्वेन व्यवहारार्थं तत्तच्छब्दार्थतेष्यत इत्यर्थः । सूत्राल्पाक्षरत्वविरोधिनी द्विरुक्तिः किमर्थेत्यत आह ॥ **अवधारणार्थमिति** ॥ द्विरुक्तिरवधारणाय, त्रिनिर्णयाय ॥ श्रीप्रभञ्जनवरददिग्विजयरामार्पणमस्तु ।

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यकृतब्रह्मसूत्रभाष्यटीकायां सत्तर्कदीपावल्यां श्रीपद्मनाभतीर्थभट्टारकविरचितायां प्रथमाध्यायस्य चतुर्थःपादः ।

## तत्त्वप्रदीपिका

एतेनावशिष्टाः सर्वे शब्दा ब्रह्मवाचकत्वेन व्याख्याता वेदितव्याः । तुदति च्छन्न इति तुच्छः । न आश्यत इति नाशः । तदधीनत्वादीत्यादिशब्दात् ‘महद्वच’ ‘चमसवदविशेषात्’ ‘ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके’ इत्यादि द्रष्टव्यम् । तस्मादेवमुक्तन्यायैरनन्तवेदवाक्य-पदवर्णस्वराभिधेयत्वादनन्तगुणगणपरिपूर्णो नारायण इति सिद्धम् । तथा च ब्रह्माण्डे-

‘अनन्तनामकत्वाच्च सोऽनन्तगुण ईरितः ।
पृथङ्नामानि यस्मात्तद्गुणानेव प्रचक्षते’ इति ॥

श्रीत्रिविक्रमपण्डिताचार्यविरचितायां ब्रह्मसूत्रभाष्यटीकायां तत्त्वप्रदीपिकायां प्रथमाध्याये चतुर्थः पादः ।

## तत्त्वप्रकाशिका

अत्र निषेधमुखवेद्यत्वादिनाऽन्यत्रैव प्रसिद्धानामसदादिशब्दानां भगवति समन्वयप्रतिपाद-नादस्ति शास्त्रादिसङ्गतिः । समन्वयसूत्रे सर्वशब्दानां परमात्मवाचित्वमुक्तम् । सर्वमध्यपतिता असदादिशब्दाः श्रुतिषु श्रूयन्ते । ‘असद्वा इदमग्र आसीत्’ इत्यादौ । तेषां चान्यपरत्वे समन्वयसूत्रमयुक्तं स्यादित्यत्रश्यनिर्णेयता । तदसदादिशब्दवाच्यं विषयः । किं विष्णुरन्यद्वेति सन्देहः । समन्वयसूत्रमन्यत्रैव प्रसिद्धिश्च सन्देहबीजम् । न विष्णुरसदादिशब्दवाच्य इति पूर्वः पक्षः । तेषां निषेधमुखवेद्यवस्तुवाचित्वात् । परमात्मनश्च भावरूपत्वेन तदयोगात् । न च

(तत्त्वप्रकाशिका)

स्वयं निषेधमुखवेद्यताभावेऽपि तद्वतोऽसतः परमात्माधीनत्वेन तस्यासदादिशब्दवाच्यतेति वाच्यम् । स्वरूपशून्यस्य नियम्यताऽभावेन पराधीनताऽयोगात् । अभावे तत्सम्भवेऽपि प्रयोगादर्शनात् । अतः शून्यादिशब्दानां परमात्मवाचित्वाभावात्समन्वयसूत्रं न युक्तमिति । सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **एतेनेति** ॥ पूर्वोक्तहेतुनैव सर्वे शून्यादिशब्दा भगवद्विषया एवेति प्रतिपादिता इत्यर्थः । नन्वसदादिशब्दानां निषेधमुखवेद्यवस्तुवाचित्वात् कथं परमात्मनस्तद्वाच्यत्वमित्यत आह ॥ **एष ह्येवेति** ॥ दुर्जनानामव्यक्तत्वादिना शमूनं कुरुत इत्यादि योगेन चेश्वरे निषेधमुखवेद्यवस्तुवाचिशब्दप्रवृत्त्युपपत्तिरिति भावः । शमूनं कुरुते स्वसुखादन्यसुखमल्पं करोति । तोदनात्तुत् । अदृश्यः छः छन्नत्वात् । भावयितुमुत्पादयितुम् । नाश्यत्वादभक्ष्यत्वात् । सर्वस्य तदधीनत्वादित्युभयत्र सम्बध्यते । एतेनेति परामृष्टमेव हेतुं दर्शयति ॥ **एतेनेति** ॥ आदिपदेन 'ज्योतिरुपक्रमात्' 'तथा ह्यधीयत एके' 'प्रतिज्ञादृष्टान्तानुपरोधात्' इत्यादेः सङ्ग्रहः । न चासतोऽन्याधीनत्वायोगः । सर्वस्य तदधीनत्वादिति स्मृतेः । निषेधमुखवेद्यत्वादीनामपि भगवत्प्रेरणामन्तरेणानुपपत्तेः । न हि कारणमन्तरेण तत्रैव तदुपपद्यते । ईश्वरस्य स्वातन्त्र्याददोषः । ननु किमर्थेयं सूत्रपदस्य द्विरुक्तिः । अध्यायसमाप्तेरर्थभेदेनैव ज्ञातुं शक्यत्वात् । अन्यथा पादान्तेऽपि तत्प्रसङ्गादित्यत आह ॥ **अवधारणार्थमिति** ॥ विनिर्णये निर्णयग्रन्थे । अतोऽसदादिशब्दवाच्यत्वस्य हरेरुपपन्नत्वाद्युक्तमशेषस्वरवर्णपदवाक्यात्मकशास्त्रयोनित्वम् । ततो जगज्जन्मादिकर्तृत्वप्रमुख्या(खा)नन्तगुणत्वं च सिद्धमिति ॥

॥ इति श्री आनन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रभाष्यस्य टीकायां
श्रीमज्जयतीर्थमुनिविरचितायां तत्त्वप्रकाशिकायां प्रथमाध्यायस्य चतुर्थः पादः ॥

## गुर्वर्थदीपिका

'तस्माच्छून्यः' इत्यत्र तस्मात् शून्यवददृश्यत्वात् 'शमूनं कुरुते' इति व्युत्पत्तेश्च । तुच्छ इत्यत्रापि अदृश्य इत्यनुवर्तते । 'तुद व्यथने' इति धातोः तुदति परान् व्यथयतीति तुत् छन्नत्वाददृश्यत्वात् छः । तुत् चासौ छश्चेति तुच्छः इति भावः । सर्वस्य तदधीनत्वादित्युभयत्र सम्बध्यत इत्यस्य तुच्छशून्यादिबोध्ये निषेधमुखवेद्ये असति नाशाभावादिपदवाच्ये निषेधमुखवेद्ये सति चेत्युभयत्र सम्बध्यत इत्यर्थः । असत् शशशृङ्गादिकं कालत्रयेऽप्युत्पत्तुं न मुञ्चतीत्यादिरूपेण तेषामपि तदधीनत्वे सर्वत्रापि तत्सम्बध्यत इति टीकाकृतो हृदयम् । न हि

(गुर्वर्थदीपिका)
कारणमन्तरेण तत्रैव तदुपपद्यत इत्यत्र गोशिरसीव शशशिरस्यपि शृङ्गमुत्पाद्यतां शिरोरूप-कारणस्योभयत्र सत्त्वात् । शशशिरस्येवानुत्पत्तौ कारणविशेषाभावाच्च । अतस्तत्रैव निषेध-मुखवेद्यत्वं कुत इति शङ्कितुरभिप्रायः । ईश्वरस्य स्वतन्त्रत्वाददोष इत्यस्य ईश्वरस्तु स्वतन्त्रत्वा-दनुत्पत्तौ कारणविशेषाभावेऽपि शशशिरसि शृङ्गं नोत्पादयति तत्रैव निषेधमुखवेद्यत्वं च सम्पादयति स्वतन्त्रपुरुषस्य नियोगानर्हत्वात् । अतो न दोष इत्यर्थः । विनिर्णयग्रन्थ इत्यनेन मीमांसारूपतया निर्णायकसूत्रादिग्रन्थमभिप्रैति ॥

इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थविरचितायां
तत्त्वप्रकाशिकाव्याख्यायां प्रथमाध्यायस्य चतुर्थः पादः ॥

## भावबोधः

**समन्वयसूत्र इति** ॥ अव्यवहितपूर्वाधिकरणसङ्गतिस्तु 'हन्तैतमेव पुरुषं सर्वाणि नामानि' इति श्रुतिगतसर्वशब्दस्य दृष्टान्तबलेनासङ्कुचितार्थत्वमङ्गीकृत्य न विष्णोः प्रकृत्यादिस्त्रीलिङ्ग-शब्दवाच्यत्वं वक्तुं युक्तम् । विष्णोः निःस्वरूपत्वाद्ययोगेन 'असदेवेदमग्र आसीत्' इत्यादि-वाक्यगतासच्छब्दवाच्यत्वासम्भवेन तत्सङ्कोचस्यावश्यकत्वादिति पूर्वपक्षोत्थानादिति ज्ञातव्यम् ॥ **किं विष्णुरिति** ॥ अत्रासद्वेत्यादिश्रुतिगतासदादिशब्दवाच्यं किं शशविषाणादिकं किं वा विष्णुरिति चिन्ता । तदर्थं नामानि सर्वाणीति श्रुतिगतः सर्वशब्दः सङ्कुचितार्थ उतासङ्कुचितार्थ इति । तदर्थं विष्णोरसदादिशब्दवाच्यत्वाङ्गीकारे निषेधरूपत्वं प्राप्नोत्युत नेति । तदर्थमसदादि-शब्दप्रवृत्तिनिमित्तकं किं निःस्वरूपत्वमेवोत केनाप्यसाध्यत्वादिकमिति । तदर्थं विष्णो-रसदादिशब्दवाच्यत्वाङ्गीकारे विशेषप्रमाणं नास्त्युतास्तीति । 'निषेधश्च' इत्यनुव्याख्यानोक्त-युक्तिमाह तेषामिति ॥ 'दुर्जनाव्यक्तता' इत्यनुव्याख्यानं मनसि निधायोक्तम् दुर्जनानाम-व्यक्तत्वादिनेति । अनेन 'एष ह्येवाव्यक्त' इत्यादिश्रुतिशेषस्य हरौ शून्यादिशब्दप्रवृत्तौ निमित्तप्रतिपादकत्वमित्युक्तं भवति । अन्यसुखमल्पं करोतीति । पृषोदरादित्वेन शकार-नकारगताकारनाशे शमूनं यापयतीति व्युत्पत्तौ 'आतोऽनुपसर्गे कः' इति कप्रत्यये 'आतो लोप इटि च' इत्यकारलोपे शून्यमिति रूपसिद्धिरिति भावः । 'तोदनात्तुच्छ उच्यते' इत्यत्र तोदनस्य तुच्छशब्दप्रवृत्तिनिमित्तत्वमुच्यत इति भ्रान्तिं वारयति तोदनात्तुदिति दुःखहेतुत्वा-

(भावबोधः)

दित्यर्थः । 'छ' इत्यस्य निमित्तानुक्तिशङ्कां परिहरति अदृश्य 'छ' इति । दुर्जनैरिति शेषः ॥ छन्नत्वादिति ॥ 'छय आच्छादने इत्यस्मात् डप्रत्यये टिलोपे च 'छ' इति रूपसिद्धिरिति भावः । अनेन स्वयं परो विष्णुर्यस्माच्छमूनं कुरुते तस्माच्छून्य इति प्रोक्तः । अदृश्यः सन् तोदनात्तुच्छ इति स्मृतावन्वय उक्तो भवति । सर्वस्य तदधीनत्वादित्युभयत्र सम्बध्यत इति । स्वसुखादन्यसुखस्याल्पत्वकरणे तोदने दुर्जनैरदृश्यत्वे केनाप्युत्पादयितुमयोग्यत्वे अभक्ष्यत्वे च सर्वस्य स्वव्यतिरिक्तचेतनस्य दुःखसम्बन्धयोग्यचेतनस्य द्रष्टृत्वेनोत्पादकत्वेन भक्षकत्वेन च सम्भाव्यमानस्य भगवदधीनत्वस्य हेतुत्वेन शमूनं कुरुत इत्यादौ पूर्वत्र शून्यादिशब्द-प्रवृत्तिनिमित्तस्वामित्वस्य विष्णौ शून्यादिशब्दप्रवृत्तौ निमित्तत्वेन तत्तच्छब्दाभिधेयतेत्युत्तरत्र च सम्बध्यत इत्यर्थः । एवं तर्हि ईश्वरगतसर्वशक्त्यादीनामप्यन्यप्रेरणालक्षणकारणसापेक्षत्वं स्यादित्यत आह **ईश्वरस्येति** । अत्र पादे इत्यनुव्याख्याने–

'विरोधिसर्वबाहुल्यकारणस्त्रीनिषेधिनाम् ।
पृथक् समन्वयार्थानि स्थानान्येतानि सर्वशः'

'अव्यक्तः कर्मवाक्यैश्च वाच्य एकोऽमितात्मकः ।
अवान्तरं कारणं च प्रकृतिः शून्यमेव च ॥'

इति सङ्ग्रहे चोक्तन्यायेन प्रत्येकमेकैकमधिकरणमेकैका पेटिकेति ज्ञेयम् ॥

इति श्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यरघूत्तमयतिकृते
श्रीमज्जयतीर्थपूज्यचरणविरचिततत्त्वप्रकाशिकाभावबोधे प्रथमाध्यायस्य चतुर्थः पादः ॥ ४ ॥

## भावदीपः

स्त्रीनिषेधिनामित्यनुभाष्योक्तलिङ्गेन अन्यत्रैव प्रसिद्धिमाह ॥ **अत्र निषेधमुखेति** ॥ निस्स्वरूपत्वमादिपदार्थः ॥ **श्रूयन्त इति** ॥ तैत्तिरीयादावित्यर्थः । निषेधश्चेत्यनुभाष्योक्त-युक्तिमाह ॥ **तेषामिति** ॥ प्रथमप्रतीताविति योज्यम् ॥ **तदयोगादिति** ॥ यद्यपि भावस्याऽप्य-भावो नेत्यादिद्वितीयप्रतिपत्तौ निषेधमुखवेद्यवस्तुत्वमस्ति । तथापि प्रथमप्रतीतावयोगादिति भावः ॥ **स्वयमिति** ॥ षष्ठ्यर्थेऽव्ययम् । अत इति हरेर्निषेधमुखवेद्यवस्तुत्वायोगात् तेषां च

(भावदीपः)

तादृशवस्तुवाचित्वादित्यर्थः । प्रसिद्धश्रुत्यनुरोधेन असदादिशब्दा इत्युपक्रमेऽपि भाष्यानुरोधाच्छून्यादिशब्दानामित्युपसंहारः । समन्वयेत्यादिफलोक्तिः । भाष्येऽनूदितसौत्रैतच्छब्दार्थं वदन् भाष्यसूत्रयोरर्थमाह ॥ **पूर्वोक्तेति** ॥ भाष्यस्थस्मृत्युक्तो योगो दुर्जनाव्यक्तता तथेत्यनुभाष्योक्तनिमित्तस्याप्युपलक्षणमिति मत्वाऽऽह **दुर्जनेति** ॥ प्रसिद्धनिमित्तस्य हरावयोगेऽपि स्मृत्यादिप्रसिद्धं लोकतोऽप्रसिद्धं तु निमित्तं हरौ युज्यत इति तच्छब्दवाच्यत्वं स्यादेवेत्याकूतम् । स्मृत्युक्तयोग एव श्रुतौ ग्राह्य इत्यस्य कम्पनादित्यत्र निर्णीतत्वादिति भावः । तुच्छशब्दे तुदित्यस्यार्थमाह ॥ **तोदनात्तुदिति** ॥ छ इत्यस्यार्थमाह ॥ **अद्दश्यः छ इति** ॥ अश भोजन इत्यतोऽश्यत्वादिति रूपं तस्य नञाऽन्वय इति अभक्ष्यत्वादित्यर्थमाह ॥ **नाश्यत्वादिति** ॥ **उभयत्रेति** ॥ असद्वाचिशब्देषु अभाववाचिशब्देषु च इत्यर्थः । युक्तिं चाऽऽह ॥ **निषेधेति** ॥ ईश्वरो वा कथं तत्रैव तत्करोतीत्यत आह ॥ **ईश्वरस्येति** ॥ फलोक्त्या सूत्रार्थमुपसंहरति ॥ **अत इति** ॥ साधकभावात् बाधकाभावाच्चेत्यर्थः । समन्वयसूत्रे तत्तु शास्त्रयोनीति प्रतिज्ञांशं विवृण्वन्नेव तत्समर्थनमस्य फलमिति दर्शयति ॥ **युक्तमिति** तस्याऽपि जन्मादिसूत्रार्थसिद्धिद्वारा जिज्ञासासूत्रस्थब्रह्मशब्दार्थसिद्धिः फलमित्युपेत्याह ॥ **तत इति** ॥ **अनन्तगुणत्वं चेति** ॥ हरेरित्यनुकर्षः । एतच्च समन्वयाधिकरणान्त एव विवृतम् ॥

**इति श्रीमद्भाष्यटीकाभावदीपे राघवेन्द्रयतिकृते प्रथमाध्याये चतुर्थः पादः ।**

## अभिनवचन्द्रिका

**निषेधमुखवेद्यत्वादिनेति** ॥ संक्षेपा पूर्वाचार्यस्य 'प्रथमप्रतीतौ नास्तीति प्रतीतिविषयत्वस्य निषेधमुखवेद्यत्वम्' इति । तथाचाऽसदभावादिशब्दानामन्यत्र प्रसिद्धौ निषेधमुखवेद्यत्वं निमित्तम् । शून्यतुच्छादिशब्दानामन्यत्रैव प्रसिद्धौ निःस्वरूपत्वमपि निमित्तमिति द्योतनाय आदिशब्दः । एतेन निषेधघटितशब्दवेद्यत्वरूपनिषेधमुखवेद्यत्वस्य असदादाविव 'अदोषपरमेश्वर' इत्यादि प्रयोगबलेन परमेश्वरेऽप्यवगमात्, न तस्यान्यत्रैव प्रसिद्धिहेतुत्वमिति परास्तम् । **श्रुतिषु श्रूयन्त इति** ॥ एतेनाऽस्याधिकरणस्य समन्वयाधिकरणप्रतिपाद्यत्वशब्दराश्यन्तर्गताऽसदादिशब्दनिर्णायकत्वं, तेनाधिकरणेन सङ्गतिरित्युक्तमिति बोध्यम् । एवमुत्तरत्रापि यथासम्भवं सङ्गतिग्रन्थार्थो बोध्यः । **वस्तुवाचित्वादिति** ॥ यद्यपि न शून्यादिशब्दानां

(अभिनवचन्द्रिका)
वस्तुवाचित्वं तथापि समन्वेतव्यशब्देषु केषाञ्चिदभावादिशब्दानां वस्तुवाचित्वाच्छत्रिन्यायेन सर्वेषां वस्तुवाचित्वमुक्तम् । एतेन वस्तुत्वाङ्गीकारे 'स्वरूपशून्यस्य नियम्यताभावेन' इत्युक्त-टीकाविरोधः । स्वरूपशून्यस्य वस्तुत्वायोगात् इति परास्तम् ॥ **स्वरूपशून्यस्येति** ॥ यद्यपि अभावादिशब्दवाच्यस्य न स्वरूपशून्यता, तथापि शून्यादिशब्दवाच्यस्य स्वरूपशून्यत्वात् छत्रिन्यायेन तथोक्तम् । **अन्यसुखमल्पङ्करोतीति** ॥ 'शमूनम्' इत्यत्र 'पृषोदरा'दित्वेन शकार-नकारगताकारलोपे शमूनं यापयतीति व्युत्पत्तौ 'आतोऽनुपसर्गे कः' इति कप्रत्यये आतो लोप इटि च' इत्याकारलोपे शून्यमिति रूपसिद्धिरिति भावः । **छन्नत्वादिति** ॥ 'छदिः आच्छादने' इत्यस्मात् उप्रत्यये टिलोपे च सति 'छ' इति रूपम् । ततश्च तु त् चासौ छश्चेति तुच्छ इति बोध्यम् ॥ **उभयत्र सम्बध्यत इति** ॥ 'शमूनं कुरुत' इत्यादिपूर्वत्र 'तत्तच्छब्दाभिधेयतेत्युत्तरत्र च सम्बध्यत इत्यर्थः । नन्वीश्वरस्य गुणवाचकशब्दाभिधेयत्वेन गुणवत्, दोषवाचकशब्दाभि-धेयत्वेन दोषोऽपि स्यादित्यत आह – **ईश्वरस्येति** ॥ बाधकाभावाद्गुणवाचकेन शब्देन गुणसिद्धिः, दोषवाचकशब्देन न दोषसिद्धिः, बाधकसद्भावादिति भावः । **विनिर्णयग्रन्थ इति** ॥ यथाल्पाक्षरत्वादिकं सूत्रलक्षणं तथा अध्यायान्ते निर्णयार्थं द्विरुक्तिरपि विनिर्णयग्रन्थ-लक्षणमिति भावः । एतेनाध्यायान्ते यदि निर्णयार्थं द्विरुक्तिः, तर्हि पादान्तेऽपि तदर्थमेव द्विरुक्तिः स्यात् । यदि अध्यायान्ते तद्विरुक्त्यैव पादार्थावधारणस्यापि जातत्वात् पादान्ते द्विरुक्त्यभावः तर्हि शास्त्रान्त एव द्विरुक्तिरस्तु तथैव सर्वावधारणसम्भवादिति परास्तम् ।

**पूर्वपक्षस्तु** – न विष्णुरसदादिशब्दवाच्यः । केषाञ्चिदभाववाचित्वात्, केषाञ्चिन्निःस्वरूप-वाचित्वात् । न च परमात्मनोऽभावत्वादिकं युज्यते । भावरूपत्वात् । न च स्वस्य निःस्वरूपत्वाभावेऽपि असतः तदधीनत्वेन तच्छब्दवृत्तिरिति वाच्यम् । नियम्यस्वरूपशून्यस्य नियम्यत्वायोगात् । अतोऽसदादिशब्दानां परमात्मवचित्वाभावात्, न युक्तं समन्वयसूत्रमिति ।

**सिद्धान्तस्तु** – परमात्मैव असदादिशब्दवाच्यः । तदधीनत्वादियुक्तिसमुदायात् । न च निषेधमुखवेद्यत्वाद्यभावात्तदभावः । निषेधमुखवेद्यत्वाभावेऽपि दुर्जनाऽव्यक्तत्वादिना 'शमूनं कुरुत' इत्यादि योगे न च शून्यादिशब्दवाच्यत्वोपपत्तेः । न च नियम्यस्वरूपविधुरत्वात् तदधीनत्वमयुक्तमिति वाच्यम् । स्वरूपवैधुर्येऽपि निषेधमुखवेद्यत्वादिधर्माणां तदधीनत्वात् । अतः असदादिशब्दवाच्यत्वस्य हरेरुपपन्नत्वात् युक्तमशेषस्वरवर्णपदवाक्यात्मकशास्त्रयोनित्वम् । ततो जगज्जन्मादिकर्तृत्वं, मुख्यानन्तगुणवत्त्वं च सिद्धम् ।

(अभिनवचन्द्रिका)

हृदम्बरे सत्यनाथयतेर्व्यक्तस्य सङ्गता ।
तत्वप्रकाशिकाध्याये रामचन्द्रस्य चन्द्रिका ॥ १ ॥

तत्प्रसादाऽभिलब्धत्वाल्लोके साऽभिनवा मता ।
तया प्रीतो गुरोरस्तु सर्वदा भगवान्हरिः ॥ २ ॥

व्यक्तस्य रामचन्द्रस्य सत्यनाथहृदम्बरे ।
सङ्गता प्रथमाध्याये शुद्धाऽभिनवचन्द्रिका ॥ १ ॥

**इति श्रीमत्सत्यनिधितीर्थश्रीचरणाराधकश्रीमत्सत्यनाथयतिविरचितायां तत्वप्रकाशिकाऽभिनवचन्द्रिकायां प्रथमाध्यायस्य चतुर्थः पादः ॥**

## वाक्यार्थमुक्तावली

निषेधमुखवेद्यत्वादिनेत्यादिपदेन विषयत्वग्रहणम् । **समन्वय इति** । अत्र समन्वयसूत्रस्थाने प्रकृतिश्चेति पदप्रयोगेऽव्यवहितसङ्गतिः सुलभैव ॥ **विष्णुरन्यद्वेति** ॥ अत्र असदादिशब्दवाच्यं किं शशविषाणादिकम् उत विष्णुरिति चिन्ता । तदर्थं तत्प्रवृत्तिनिमित्तं किं निषेध्यत्वादिकं उत असत्प्रतिस्वातन्त्र्यदुर्जनाव्यक्तादिकमिति । तदर्थं विष्णोरसदादिशब्दवाच्यत्वे विशेषप्रमाणं नास्त्युतास्तीति । अभावो नेति द्वितीयप्रतिपत्तौ निषेधमुखप्रतीतिवेद्यत्वमस्ति तथापि प्रतीताव-योगादिति भावमाहुः । तद्वत इत्यन्ताभावप्रतियोगित्वरूपनिषेध्यत्ववत इत्यर्थः ॥ **प्रयोगेति** । प्रयोगे सत्येव निमित्तस्यानुसरणीयत्वात् निमित्तमस्तीत्येतावता प्रयोगं विना शक्तिकल्पना-योगात् । गजादौ बद्धशब्दस्येव प्रयोगप्रतिबन्धाभावाच्चेति भावः । सूत्रे तत्वित्यस्य तस्मिन् ब्रह्मणो वेत्यनुवर्तते ॥ सूत्रार्थमाह ॥ **पूर्वोक्तेति** ॥ **प्रतिपादिता इति** ॥ प्रतिपादितप्राया इत्यर्थः । इत्यत आहेति । इत्यतः प्रकारान्तरेण सर्वे व्याख्याता इति सूत्रखण्डार्थमाहेत्यर्थः । तेन सर्वे शून्यादिशब्दाः महोपनिषदि कौर्मे च दुर्जनाव्यक्तत्वादिना शमूनं कुरुत इत्यादियोगेन च व्याख्याता इति सूत्रार्थ उक्तो भवति । श्रुतावव्यक्तशब्दस्यानासाद्ययोगेनासच्छब्दस्यादृश्य-इतृशब्दार्थैकदेशस्य निर्गुणश्चेत्युत्पत्तिविनाशाभावसूचनेनाभावा नाशशब्दार्थस्य सूचनात्स्मृतेः स्पष्टत्वादिति ज्ञेयम् । श्रुताव॰॰कइत्यनुसारेणपद्धेवासदित्यनुसन्धेयम् । अत एव नन्वसदादि-शब्दानामित्यवतारितम् ॥ **शमूनमिति** ॥ पृषोदरादित्वेन शकारनकारलोपे शमूनं प्रापयतीति

(वाक्यार्थमुक्तावली)

व्युत्पत्तावातोऽनुपसर्गे क इति कप्रत्यये शून्यमिति रूपसिद्धिरिति भावः । तोदनात्तुच्छ उच्यत इत्यत्र तोदनस्य तुच्छशब्दप्रवृत्तिनिमित्तत्वमुच्यत इति प्रतीतिं वारयति ॥ **तोदनात्तुदिति** ॥ दुःखहेतुत्वादित्यर्थः । छशब्दस्यार्थमाह । अदृश्यः छन्नत्वादिति । एवं मूले अदृश्यः सन् तोदनात्तुच्छ उच्यत इत्यन्वय उक्तो भवति ॥ **नाशयत्वादिति** ॥ अशुभोजने असमासः ॥ **उभयत्रेति** ॥ सर्वस्य तदधीनत्वादर्थवदिति न्यायेन तत्तच्छब्दाभिधेयतेत्युत्तरत्रेत्यर्थः ॥ **भगवत्प्रेरणमिति** ॥ तदिच्छामित्यर्थः । उक्तं च चन्द्रिकायाम् । उत्पिपादयिषेदीशो शृङ्गं न हि शशादिके । गवादाविव जायेत तदभावादभूदसदिति ॥ कारणमन्तरेणेश्वरं पूर्णानन्दत्वादिवदत्र किं न स्यादित्यत आह ॥ **ईश्वरस्येति** ॥ यद्वा ईश्वरो वा कथं तत्रैव तत्करोतीत्यत आह **ईश्वरस्येति** ॥ अभ्यासोऽध्यायसमाप्तिप्रदर्शनार्थपर इति भाष्योक्तं दूषयति **अध्यायसमाप्तेरिति** ॥ पुराणादावदर्शनादुक्तं विनिर्णय इति निर्णायकग्रन्थ इत्यर्थः । अधिकरणार्थमुपसंहरन् समन्वयफलमाह **अत इति** ॥ अधिकरणक्रमस्त्वनन्तरसङ्गत्यैव ज्ञेयः ।

अनन्तवेदसंवेद्यः पूर्णानन्तगुणार्णवः ।
इन्दिरारमणः प्रीतः पातु दीनदयापरः ।

**इति श्रीमद्विठ्ठलाचार्यतनूजेन श्रीमत्तीर्थाचार्यचरणसेविना श्रीनिवासेन विरचितायां श्रीमत्तत्त्वप्रकाशिकावाक्यार्थमुक्तावल्यां प्रथमाध्यायस्य चतुर्थः पादः ।**

## तत्त्वसुबोधिनी

समन्वयसूत्र इति हन्तैतमेव पुरुषं सर्वाणि नामानि इति । श्रुतिगतसर्वशब्दस्य दृष्टान्तबलेनासङ्कुचितार्थत्वम् अङ्गीकृत्य न विष्णोः प्रकृत्यादिस्त्रीशब्दवाच्यत्वं वक्तुं युक्तम् विष्णोः निःस्वरूपत्वोपयोगेनासदेवेदमग्र आसीदित्यादिवाक्यगतसत्शब्दवाच्यत्वासम्भवेन तत्सङ्कोचस्यावश्यकत्वादिति पूर्वपक्षोत्थानात् अनन्तरसङ्गतिरिति भावः ॥ **तदयोगादिति** ॥ असदादिशब्दवाच्यत्वायोगादित्यर्थः । न चाभावस्य सस्वरूपत्वेन पराधीनत्वसम्भवात् अभाववाचिशब्दप्रवृत्तिः परमात्मनि सम्भवतीत्यत आह ॥ **अभावे तत्सम्भवेऽपीति** ॥ पराधीनत्वसम्भवेऽपीत्यर्थः । असदादिशब्दप्रवृत्तिनिमित्तस्य भगवद्गतत्वेन योगेन च असदादिशब्दप्रवृत्तिः सम्भवतीत्याह ॥ **दुर्जनाव्यक्तत्वादिनेति** ॥ स्वसुखादन्यसुखम् अल्पं करोतीति पृषोदरादित्वेन शकारनकारगताकारनाशे शम् ऊनं यापयतीति व्युत्पत्तौ 'आतोऽनुपसर्गेऽकः' इति कप्रत्यये

(तत्त्वसुबोधिनी)
'आतो लोप इटि च' इत्यकारलोपे शून्यमिति रूपसिद्धिरिति भावः । तोदनात् तुच्छ उच्यत इत्यत्र तोदनस्य तुच्छशब्दप्रवृत्तिनिमित्तत्वमुच्यत इति भ्रान्तिं निवारयति ॥ **तोदनात्तुदिति** ॥ दुःखहेतुत्वादित्यर्थः । उ इत्यस्य प्रवृत्तिनिमित्तानुशङ्कां परिहरति ॥ **अदृश्यः छ इति** ॥ दुर्जनैरिति शेषः । छशब्द इत्यस्य अदृश्यत्वं निमित्तं कुत इत्यत आह ॥ **छन्नत्वादिति** ॥ छआच्छादने इत्यस्मात् डुप्रत्यये टिलोपे च उ इति रूपसिद्धिरिति भावः ॥ **भावयितुमिति** ॥ न भाव्यते उत्पाद्यते इत्यभावः ॥ **नाश्यत्वादिति** ॥ न अश्यते भक्ष्यते इति नाशः ।

अनेन स्वयं पुरा विष्णुः स्वं यस्माच्छमूनं कुरुते तस्मात् शून्य इति प्रोक्तः अदृश्यः सन् तोदनात् तुच्छः उच्यते इति स्मृतावन्वय उक्तो भवति । सर्वस्य तदधीनत्वादित्युभयत्र सम्बध्यत इति । स्वसुखादन्यसुख्याल्पत्वकरणे तोदनैः दुर्जनैः अदृश्यत्वोक्तेनाप्युत्पादयितुम् अन्योन्यत्वे अभक्ष्यत्वे च सर्वस्य स्वातिरिक्तस्य चेतनस्य दुःखसम्बन्धयोग्यचेतनस्य द्रष्टृत्वेन उत्पादकत्वेन भक्ष्यकत्वेन च सम्भाव्यमानस्य भगवदधीनत्वस्य हेतुत्वेन शमूनं कुरुते इत्यादौ पूर्वत्र शून्यादिशब्दप्रवृत्तिनिमित्तस्वामित्वस्य विष्णौ शून्यादिशब्दप्रवृत्तौ निमित्तत्वेन तच्छब्दाभिधेयता इत्युत्तरत्र च सम्बध्यत इत्यर्थः । निषेध्यत्वं भगवदधीनत्वं कथमिति तत्राह । **निषेध्यत्वादीना-मिति** ॥ भगवत्प्रेरणामन्तरेणैव तत्र च निषेध्यत्वम् अस्त्वित्यत आह ॥ **न हीति** ॥ तत्रैव असत्येव । एवं तर्हि ईश्वरगतसर्वशक्त्यादीनाम् अन्यप्रेरण लक्षणकारणसापेक्षत्वं स्यादित्यत आह ॥ **ईश्वरस्येति** ॥ ननु अध्यायसमाप्तिज्ञापनार्थं द्विरुक्तिः इत्यत आह । **अध्याय-समाप्तेरिति** ॥ **अन्यथेति** ॥ अध्यायसमाप्तेः अर्थभेदेन ज्ञातुं शक्यत्वेऽपि तदर्थद्विरुक्तिश्चेदित्यर्थः । अध्यायार्थमुपसंहरति ॥ **अत इत्यादिना** ॥

**इति पाण्डुरङ्गि आनन्दाचार्यसूनुश्रीनिवासाचार्येण विरचितायां श्रीमत्तत्त्वप्रकाशिकाविवृतौ तत्त्वसुबोधिन्यां प्रथमाध्यायस्य चतुर्थः पादः समाप्तः ।**

## वाक्यार्थविवरणम्

॥ **तदयोगात्** ॥ निषेधमुखवेद्यवस्तुत्वायोगेन तद्वाच्यसदादिशब्दवाच्यतायोगात् । दुर्जनानामव्यक्तत्वादसच्छब्दवाच्यत्वम् । 'सदिति व्यक्तमुद्दिष्टमसदव्यक्तमुच्यते'' इति प्रमाणादिति भावः ॥ **तोदनादिति** ॥ 'तुद व्यथन' इति धातोर्दुर्जनानां व्यथाहेतुत्वादित्यर्थः । **तत्रैवेति** । असत्येवेत्यर्थः । तत् निषेधमुखवेद्यत्वम् । अतो भगवत्प्रेरणैव तत्र कारणमिति

(वाक्यार्थविवरणम्)

भाव: । इतरत्र निषेधमुखवेद्यत्वेन नियमनमकृत्वाऽसत्येव कस्मात्तथा नियमनं करोतीश्वर: । कारणविशेषादर्शनादित्यत आह ॥ ईश्वरस्येति ॥ भाष्ये उक्तस्याध्यायमूलत इत्यर्थ 'आ' अध्यायमूलत इति पदच्छेद: । अध्यायमूलमारभ्येत्यर्थ: ॥

इति श्री विदरहळ्ळी श्रीनिवासतीर्थकृते तत्त्वप्रकाशिकावाक्यार्थविवरणे प्रथमाध्यायस्य चतुर्थः पादः ।

## वाक्यार्थमञ्जरी

निषेधो नैनमित्यादिना ॥ निषेधमुखवेद्यत्वेति ॥ प्रथमप्रतीतौ नास्तीत्युपलभ्यमानत्वेत्यर्थ: । नि:स्वरूपत्वमादिपदार्थ: ॥ ॐ एतेन सर्वे व्याख्याता व्याख्याता: ॐ ॥ एतेन तदधीनत्वादि प्रागुक्तहेतुसमुदायेन सर्वे शून्या सदादिशब्दा ब्रह्मवाचकत्वेन प्रतिपादिता इत्यर्थ: । अव्यक्तत्वादित्यनेन श्रुताव्यक्तत्वादिकं शून्यादिशब्दप्रवृत्तिनिमित्तोपपादनायोक्तमिति सूचयति ॥ अन्यसुखमल्पं करोतीति ॥ शमूनं यापयतीति व्युत्पत्तेरिति भाव: । तोदनात्तुच्छ उच्यत इत्यत्र तोदनशब्दस्य तुच्छशब्दप्रवृत्तिनिमित्तत्वमुच्यत इति भ्रान्तिं वारयति ॥ तोदनात्तुद इति ॥ दु:खहेतुत्वादित्यर्थ: तुदव्यथन इति धातो: । तर्हि छप्रत्ययस्य निमित्तानुक्तिरित्यत आह ॥ अदृश्य: छ इति ॥ दुर्जनैरिति शेष: । कुत इत्यत आह ॥ छन्नत्वादिति ॥ छआच्छादन इत्यस्माड्डप्रत्यये टिलोपे च छ इति रूपसिद्धिरिति भाव: । अनेन स्वयं परो विष्णुर्यस्माच्छमूनं कुरुते तस्माच्छून्य इति प्रोक्त: अदृश्य: सन् तोदनात्तुच्छ उच्यत इति स्मृतावन्वय उक्तो भवति ॥ अभक्ष्यत्वादिति ॥ अशभोजन इति धातोरिति भाव: ॥ सर्वस्य तदधीनत्वादित्युभयत्र सम्बध्यत इति ॥ स्वसुखादन्यसुखस्याल्पत्वकरणे तोदने दुर्जनैरदृश्यत्वे केनाप्युत्पादयितुमयोग्यत्वेऽभक्ष्यत्वे च सम्भाव्यमानस्य भगवदधीनत्वस्य हेतुत्वेन शमूनं कुरुत इत्यादौ पूर्वत्र शून्यादिशब्दप्रवृत्तिनिमित्तस्वामित्वस्य विष्णौ शून्यादिशब्दप्रवृत्तौ निमित्तत्वेन तत्तच्छब्दाभिधेयतेत्युत्तरत्र च सम्बध्यत इत्यर्थ: । उक्तबाधकवशात्सर्वशब्दसङ्कोच इत्यत आह ॥ निषेधेति ॥ तत्रैव असत्येव ईश्वरोऽपि तत्रैव कथं तत्करोतीत्यत आह ॥ ईश्वरस्येति ॥

इति श्रीमत्तत्वप्रकाशिकावाक्यार्थमञ्जर्यां शर्कराश्रीनिवासविरचितायां
प्रथमाध्यायस्य चतुर्थः पादः समाप्तः ॥

प्रथमाध्यायः सम्पूर्णः ॥

श्रीविजयीन्द्रतीर्थविरचितः

# ब्रह्मसूत्रन्यायसङ्ग्रहः

## प्रथमाध्यायस्य तृतीयचतुर्थपादौ

द्युभ्वादेराश्रयोऽप्यतः ।
भूमा पूर्णसुखादेरक्षरमम्बरपूर्वधृत् ॥ ७ ॥

सदीक्षितृत्वाद्दहरस्थो हत पाप्मत्वपूर्वकैः ।
कथं चित्त्वानुकूल्येन ग्राह्यं सर्वप्रकाशनात् ॥ ८ ॥

ईशानो वामनश्रुत्या देवा विद्याधिकारिणः ।
नासंस्कारादितः शूद्राः कम्पनाद्ब्रह्मीश्वरः ॥ ९ ॥

ज्योतिस्सावधृतिश्रुत्याऽऽकाशो नामाद्यभावतः ।
स्वप्नादिद्विगसङ्गत्वात् ब्राह्मणः पतिपूर्वतः ॥ १० ॥

ॐ नयाश्चतुर्दशाऽऽद्यस्य तृतीये षट् तदुत्तरे ।
अव्यक्तं तत्स्वतन्त्रत्वाज्ज्योतिस्तावा इति श्रुतेः ॥११॥

रूपनानात्वतः पश्चाऽवान्तरं कारणं च सः ।
प्रकृतिश्च प्रतिज्ञादेः शून्यादिश्चोक्तहेतुतः ॥ १२ ॥

जिज्ञास्ये जीवभेदायाऽनन्तसद्गुणलक्षणम् ॥ १३ ॥

ब्रह्मेत्युक्तं तत्प्रसिध्यै जन्माद्यस्येति सूत्रितम् ।
अनतिव्याप्तये तस्य शास्त्रयोनित्वमीरितम् ॥ १४ ॥

तल्लक्षणद्वयोपेते मुख्याऽशेषागमार्थता ।
समोक्तोपक्रमादिस्तद्धेतुस्तुर्ये प्रतिश्रुतः ॥ १५ ॥

समर्थसिध्यै वाच्यत्वगतिसाम्ये निरूपिते ।
पश्चमेऽथ प्रतिज्ञातसमन्वयसमर्थनम् ॥ १६ ॥

शब्दाश्चतुर्विधास्तत्रान्यत्रान्यत्रैव चोभयोः ।
प्रसिद्धा इति ते सर्वे नामलिङ्गात्मना द्विधा ॥ १७ ॥

तत्र प्रसिद्धो विष्ण्वैकनिष्ठो विष्ण्वादिगीर्यथा ।
तदेकनिष्ठता सिद्धेर्न कार्यस्तत्समन्वयः ॥ १८ ॥

यत्राऽन्यवृत्तिरेकैव समन्वयविरोधिनी ।
उभयत्र प्रसिद्धं तदक्षरादिवचो यथा ॥ १९ ॥

ब्रह्मावृत्त्यन्यवृत्ती द्वे विरोधिन्यौ समन्वये ।
यत्राऽन्यत्र प्रसिद्धं तदिन्द्राकाशादिगीर्यथा ॥ २० ॥

उक्तद्वयं ब्रह्मवृत्तौ बाधकं च त्रयं यदा ।
अन्यत्रैव प्रसिद्धं तदुःखिवद्धादिगीर्यथा ॥ २१ ॥

आपातरूढिरहितधर्मद्वारा च धर्मिगम् ।
लिङ्गमन्यत्ततो नामान्तर्यामीन्द्रादिगीर्यथा ॥ २२ ॥

अन्यत्रैव प्रसिद्धानां दुःशकावगतित्त्वतः ।
सर्वाधिकारवैधुर्याच्चान्त्याङ्घ्रौ तत्समन्वयः ॥ २३ ॥

अन्येष्वपि महामल्लभीरुभञ्जनयात्कृतः ।
आद्येऽन्यत्र प्रसिद्धानां नाम्नां तत्रापि मुख्यतः ॥२४॥

अमुख्यत्वादन्यगतलिङ्गानां तु द्वितीयगः ।
उभयत्र प्रसिद्धानां नामलिङ्गात्मनामपि ॥ २५ ॥

समन्वयस्तृतीयेऽङ्घ्रौ कृतोऽत्रैव प्रसङ्गतः ।
देवशूद्राधिकारैतदभावौ तु विचारितौ ॥ २६ ॥

छन्दोऽभिधसमाकर्षौ द्वावन्तर्ग(र्गु)णकौ नयौ ॥२७॥

इति श्रीब्रह्मसूत्रन्यायसङ्ग्रहे विजयीन्द्रयतिविरचिते
प्रथमोऽध्यायः ॥ १ ॥

## ॥ श्रीधीरेन्द्रयतिविरचितः विषयवाक्यसङ्ग्रहः ॥

### प्रथमाध्याये तृतीयः पादः

यस्मिन् द्यौः पृथिवीत्येतद् द्युभ्वाद्यायतने नये ।
यो वै भूमेति यद्वाक्यं भूमाधिकरणस्य तु ॥ १ ॥

एतद्वैतदक्षरं गार्गीत्यन्तरनयस्य च ।
सदेव सौम्येति यद्वाक्यं सन्नये विषयार्पकम् ॥ २ ॥

दहरं पुण्डरीकं वेश्मेत्याद्यं दहरे नये ।
तदेतदिति मन्यन्त इत्याद्यनुकृतौ नये ॥ ३ ॥

अङ्गुष्ठमात्रमित्यादि शब्दादेवेति सन्नये ।
विश्वे देवा इति वचो देवतानयगं मतम् ॥ ४ ॥

पठेद्वेदानिति वचो ह्यपि शूद्रनये मतम् ।
महद्भयं वज्रमिति वाक्यं कम्पनसन्नये ॥ ५ ॥

प्राणे हृद्यन्तरिति ज्योतिर्दर्शनके नये ।
आकाशोऽर्थान्तरत्वादि ह्याकाशे च प्रसिद्धवाक् ॥ ६ ॥

स यत्तत्रेत्यादि वाक्यमसङ्गत्वनयस्य हि ।
महिमा ब्राह्मणस्येति वचः प्रत्यादिशब्दके ॥ ७ ॥

### अथ चतुर्थः पादः

महतः परमव्यक्तमिति वागानुमानिके ।
वसन्ते ज्योतिषेत्यादिनये ज्योतिरुपक्रमे ॥ १ ॥

सङ्ख्योपसङ्ग्रहनये पञ्च पञ्चजना इति ।
आकाशाद्वायुरित्येतत्कार्यकारणसन्नये ॥ २ ॥

सर्वे वेदा इति वचो समाकर्ष नयस्य तु ।
सैषा प्रकृतिरित्याद्यं वाक्यं तु प्रकृतौ नये ॥ ३ ॥

एतेन सर्वे व्याख्याता इत्यध्यायान्तिमे नये ।
असदेवेति तुच्छेनेत्याद्यं विषयदर्शकम् ॥ ४ ॥

॥ इति श्रीधीरेन्द्रयतिकृते विषयवाक्यसङ्ग्रहे प्रथमाध्यायस्य चतुर्थः पादः ॥

## ब्रह्मसूत्रभाष्ये प्रथमाध्यायस्य तृतीयचतुर्थपादयोः उदाहृतप्रमाणवचनानि

अजायमानो वहुधा व्यजायत (तै.आ.३.१३.१)
अणोरणीयान् महतो क.उ. (१.२.२०)
अथ यदिदमस्मिन्ब्रह्मपुरे (छां.उ.८.१.२)
अदृष्टं दृष्टृ श्रुतम् (बृहदारण्ये ५.८.११)
अमृतत्वस्येशानः (तै.आ.३.१२)
अमृतस्यैष सेतुः (मुण्डक.२.२.५)
अव्यक्तोऽक्षर उच्यते (भ.गी.८.२१)
अस्थूलमनणु (बृ.उ.५.८.८)
अस्य यदेकां शखां (छां.उ.६.११.२)
अहरहर्गच्छन्त्यः (छां.उ.८.३.२)
अह हारे त्वा शूद्र (छां.उ.४.२.३)
अहं सोम मा हनसम् (ऋ.सं.१०.१२५.२)
अक्षरं ब्रह्म परमं (भ.गी.८.३)
आकाशो वै नाम (छां.उ.८.४.१)
इदं तच्छिर एषः (बृ.उ.४.२.३)
उत्क्रान्त प्राणान् (छान्दोग्य ७.१५.३)
उभौ लोकौ (बृ.उ.६.३.७)
ऊर्ध्वं प्राणमुन्नमयति (कठ.उ.५.३)
एतमानन्दमयमात्मानम् (तैत्तरी.२.८)
एतस्मिन्खल्वक्षरे गार्गि (बृ.उ.५.८.११)
एतस्य वा अक्षरस्य (बृ.उ.५.८.९)
एष भूताधिपतिः (बृ.उ.६.४.२१)
एवं नानाविधैः शब्दैः (वामने)
एष आत्मेति होवाच (छां.उ.४.१५.१)
एष आत्मेति होवाच (छां.उ.४.१५.१)
एष नित्यो महिमा (बृ.उ.६.४.२२)
एष म आत्मा अन्तरहृदये (छां.उ.३.१४.३)
एष सेतुः विधृतिः (छां.उ.८.४.१)
कथं नु भगवः (छां.उ.६.१.३)
कस्मिन्नु भगवो (मुं.उ.१.१३.९)
को ह्येवान्यात्कः (तै.उ.२.७)
कं वर येन मे तत् (छां.उ.४.१.३)
चतुर्भिस्साकं नवतिं (ऋ.सं.१.१५५.६)
जुष्टं यदा पश्यति (मुण्डके.३.१.२)
तत्रापि दहं गगनं विशोकः (मह.ना.उ.१०)
तमुत्क्रान्तं प्राणो (बृहदारण्ये ६.४.२)
तमेव भान्तमनुभाति सर्वम् (कठ.उ.५.१५)
तमेवैकं जानथ आत्मनं (मुण्डक.२.२.५)
तस्यान्ते सुषिरं सूक्ष्मम् (म.नारा.उ.११)
ता वा एताः सर्वाः (ऐ.आ.२.२.२)
तुच्छेनाभ्वपिहितम् (ऋ.सं.१०.१२९.३)
ते यदन्तरा (छां.उ.८.१४.१)
तेषां सुखं शाश्वतम् (कठ.उ.५.१२.१४)
ते ह नाकं महिमानः स चन्त (तै.आ.३.१२)
द्वासुपर्णा सयुजा (मुण्डके ३.१.१)
द्वे विद्ये वेदितव्ये (मुण्डके.आ.१.१.४)
न तद्भासयते सूर्यः (भा.गी.१५.६)
नान्योऽतोऽस्ति द्रष्टा (बृ.उ.५.७.२३)
नान्यः पन्था अयनाय (तै.आ.३.१२.७)
नारायणं महाज्ञेयम् (महा.नारा.उ.११)
नाहमेतद्वेद (छां.उ.४.४)
नैतद्ब्राह्मणो विवक्तुमर्हति (छां.उ.४.५)
पतिं विश्वस्यात्मेश्वरम् (महा.ना.उ.११)
परं ज्योतिरूपसम्पद्य (छां.उ.८.१२.३)
प्राणानां ग्रन्थिरसि (महा.नारा.उप.३५)
प्राणस्य प्राणमुत (बृ.उ.६.४.७८)
प्राणो वा आशाया भूयान् (छान्दोग्य ७.२३)
प्राज्ञेनात्मना (बृ.उ.६.३.३५)
प्राज्ञेनात्मना (बृ.उ.६.३.२१)
प्राज्ञेनात्मनाऽन्वारूढः (बृ.उ.६.३.३५)
ब्रह्मविदाप्नोति परम् (तैत्तरीय २.७)
भर्ता सन् भ्रियमाणो (तैत्तरीय.आ.३.१४)
महतः परमं ध्रुवम् (क.उ.१.३.१५)
महामायेत्यविद्येति (क.उ.१.३.१५)
य आत्मा अपहतपाप्मा (छां.उ.८.७.३)
य उ त्रिधातु पृथिवीं (ऋ.सं.१.१५४.४)
यतोऽव्यक्तात् पुरुषः (कठोप.१.३.११)
यदादित्यगतं तेजः (भ.गी.१५.१२)
यदिदं किञ्च जगत्सर्वम् (कठ.उ.२.३.२)
यद्भूतयोनिं (मुं.उ.१.१.६)
यस्तं न वेद (ऋ.सं.१.१६४.३९)
यस्मिन् द्यौः पृथिवी च (मुण्ड.२.२.५)

—